

# गीता-व्याख्यान-सङ्ग्रहः

(पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## चतुर्थ सम्पुटम्

त्रयोदशाध्यायतः अष्टादशाध्यायपर्यन्तम्







॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीगुरुराजो विजयते ॥

# गीता-व्याख्यान-सङ्ग्रहः

## (पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## चतुर्थ सम्पुटम्

त्रयोदशाध्यायतः अष्टादशाध्यायपर्यन्तम्

*प्रधानसम्पादकाः*

राष्ट्रपतिप्रशस्तिपुरस्कृताः पण्डितकेसरी
श्री राजा एस्. गिरि आचार्याः

*सम्पादकाः*

विद्वान् कडप राघवेन्द्राचार्यः
विद्वान् डॉ. एन्. वादिराजाचार्यः
विद्वान् पुराणिक सुब्रह्मण्याचार्यः



*प्रकाशकः*

**श्रीगुरुसार्वभौमसंशोधनमन्दिरम्**
**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**
जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानम्
श्रीराघवेन्द्रस्वामिनां मठः, मन्त्रालयः

# Gīiā-Vyākhyāna-Saṅgraha

**A Collection of Fifteen Commentaries on**

## Srīmad Bhagavad Gītā

Valume : IV - Adhyāyas 13 to 18

Printed Pages : xvi + 560

*Chief Editor :*

***President Awardī, Paṇḍitakesari,***
***Śrī Rājā S. Giri Ācārya***

*Edited By :*

**Vidwān Kaḍapa Rāghavendrāchārya**

**Vidwān Dr. N. Vādirājāchārya**

**Vidwān Purāṇik Subrahmaṇyāchārya**


*Published By :*

**Śrī Gurusārvabhouma Samśodhna Mandira**
**Śrī Gurusārvabhoum Sanskrit Vidyāpīṭha**
Jagadguru Śrīman Madhvācharya Mūla Mahāsamsthānam
Śrī Rāghavendra Swāmi Muṭha, Mantrālayam (A.P)

*Printed By :*
**Dhananjay Warkhedkar**
at : **Sudhā Mudraṇa**
Śankarpuram, Bangalore - 560 004.
*Phone* : 080-65602836 *Mobile* : 9243074414

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारङ्गत-सर्वतन्त्रस्वतन्त्र-
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य-श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-
**जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वराणां**
श्रीराघवेन्द्रस्वामिमठीयवेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
**श्रीमत्सुशमीन्द्रतीर्थश्रीचरणकरकमलसञ्जात-**
**श्रीमत्सुयतीन्द्रतीर्थवरकुमारकाणां**

# श्रीमत्सुबुधेन्द्रतीर्थश्रीपादानां

## अनुग्रहसन्देशः

**"गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते ।**
**तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥"**

इत्यनेन पुराणवचनेन गीतायाः महत्त्वं अवगमयितुं शक्यते । जगतिविद्यमान-बहुभाषासु अनुवादितग्रन्थेति अस्य प्रत्येकप्रसिद्धिरपि वर्तते । इयं गीता न केवलं आध्यात्मिकचिन्तकानां अपितु सर्वेषां जनानां उत्तमजीवनाय मार्गदर्शिका । कर्तव्य-विमुखानां कर्तव्यांशं बोधयति । क्रियमाणमपि कर्म कर्तृत्वस्वातन्त्र्यभ्रान्त्या न कर-णीयमित्यपि बोधयति । ग्रन्थस्यास्य अस्मन्मठीयप्राक्तनपीठाधिपतयः, गृहस्थाश्रमिणः उत्तमव्याख्यानकरणेन महत्त्वमप्रकटयन् । अस्मद्गुरवः "गीताव्याख्यानसङ्ग्रह" इति नाम्ना उपलभ्यमानगीताव्याख्यानानि एकत्र सङ्गृह्य मुद्रापनीयमिति विचिन्त्य अस्मत्पूर्वाश्रम एव उपक्रमोऽकुर्वन् । तदा द्वौ सम्पुटौ मुद्रणं सम्प्राप्तौ । इदानीं अवशिष्टसम्पुटद्वयं अस्म-न्मठीयविदुषां निरन्तरपरिश्रमेण अधुना प्रकाशनमर्हतीति अतीव प्रमोदः समजनि ।

अस्य सम्पुटस्य संशोधनमुद्रणादिकार्ये सहकृतवतां सर्वेषां अस्मद्गुर्वन्तर्गत-श्रीमद्राघवेन्द्रतीर्थगुर्वन्तर्गत-भारतीरमणमुख्यप्राणान्तर्गत-श्रीमन्मूलरघुपति-वेदव्यासदेवः सकलसन्मङ्गलानि विदधात्विति प्रार्थयामः ।

*इति नारायणस्मरणानि ।*

# गीता-व्याख्यान-सङ्ग्रहः

## प्रस्तुतग्रन्थे समाविष्टानि व्याख्यानानि

| क्र. | लेखकनाम | ग्रन्थनाम | ग्रन्थे सङ्क्षिप्तनाम |
|---|---|---|---|
| **मूलगीताविभागः—** | | | |
| १. | श्रीविद्याधिराजतीर्थाः | गीताविवृतिः | वि०वि०— |
| २. | श्रीवादिराजतीर्थाः | गीतालक्षालङ्कारः | वा०ल०— |
| ३. | श्रीराघवेन्द्रतीर्थाः | गीतासारसङ्ग्रहः | सा०सं०— |
| ४. | श्रीराघवेन्द्रयतिः | गीताअन्वयप्रकाशिका | अ०प्र०— |
| ५. | पांगरी श्रीनिवासाचार्यः | त्रिविधार्थविवृतिः | त्रि०वि०— |
| **गीताभाष्यविभागः—** | | | |
| ६. | श्रीमन्मध्वाचार्याः | गीताभाष्यम् | भाष्यम् |
| ७. | श्रीपद्मनाभतीर्थाः | गीताभावप्रकाशिका | प०टी०— |
| ८. | श्रीनरहरितीर्थाः | गीताभाष्यभावप्रकाशिका | न०टी०— |
| ९. | श्रीमज्जयतीर्थाः | गीताभाष्यप्रमेयदीपिका | प्र०दी०— |
| १०. | श्रीराघवेन्द्रतीर्थाः | प्रमेयदीपिकाभावदीपः | भा०दी०— |
| ११. | श्रीसुमतीन्द्रतीर्थाः | भावरत्नकोशः | भा०र०— |
| **गीतातात्पर्यविभागः—** | | | |
| १२. | श्रीमन्मध्वाचार्याः | गीतातात्पर्यनिर्णयः | गीतातात्पर्यनिर्णयः |
| १३. | श्रीपद्मनाभतीर्थाः | भावप्रदीपिका | प्रका०— |
| १४. | श्रीमज्जयतीर्थाः | गीतातात्पर्यन्यायदीपिका | न्या०दी०— |
| १५. | श्रीराघवेन्द्रतीर्थाः | न्यायदीपिकाभावदीपः | भा०दी०— |

॥ श्रीः ॥

# प्रस्तावना

ज्ञाने तिरोहिते उत्तमज्ञानमार्गात् भ्रष्टे सज्जने सर्वोत्तमः भगवान् नारायणः श्रीवेदव्यासत्वेन अवतीर्य वेदार्थनिर्णायकानि ब्रह्मसूत्राणि अष्टादशपुराणानि उपपुराणानि महाभारतं च अरचयत् । अत एव "व्यासोच्छिष्टं जगत्सर्वं" इति वाक् सुप्रसिद्धा । व्यासः साक्षात् विष्णुरेव । तथा च श्रीमन्महाभारते—

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत् ॥ इति ।

## महाभारतम्

महाभारतं गात्रेण अर्थेन च श्रेष्ठः ग्रन्थः । अस्य च भावं विशेषं च यो जानाति सः सर्वपापविमुक्तो भवतीति महाभारतवचनम् ।

महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

सर्वशास्त्रेषु श्रीमन्महाभारतग्रन्थः अत्यन्तश्रेष्ठः इति प्रतिपादितः । भारतं पञ्चमो वेदः इत्युक्तदिशा महाभारतस्य पञ्चमवेदत्वं प्रसिद्धम् । एतादृशे श्रीमन्महाभारते अष्टादश पर्वाणि सन्ति, लक्षाधिकश्लोकाश्च विद्यन्ते ।

## भगवद्गीता

"भारतपारिजातमधुभूताम्" इत्यनया वाचा भगवद्गीतायाः महत्त्वं अवगम्यते । "भारते गीतिका वरा", "विष्णोः सहस्रनामाऽपि ज्ञेयं पाठ्यं च तद् द्वयम्" पौरुषेयनिर्णयशास्त्रेषु यदा महाभारतग्रन्थः श्रेष्ठः तदा भगवद्गीता विष्णुसहस्रनामस्तोत्रं च । अन्यत्र एवं वर्णितम्—

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

सर्वा उपनिषदः गोस्थानीयाः । श्रीकृष्णपरमात्मा दोग्धृस्थानीयः । अर्जुनश्च वत्सस्थानीयः । क्षीरस्थानीयं च गीतामृतम् । इदं अमृतं सर्वे सज्जनाः पिबन्तु ।

श्रीमद्भगवद्गीता सर्वेषामपि जनानां उत्तमजीवनाय मार्गदर्शिका । एतस्याः अर्थविवरणाय न केवलं अस्मद्देशीयव्याख्यानानि अपि तु पाश्चात्यदेशीयानि व्याख्यानानि च उपक्रान्तानि ।

पुराणेष्वपि गीतायाः महात्त्वं वर्णितमस्ति—

गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते ।
तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥ इति वराहपुराणे ।

गीतायाः पुस्तकं यत्र विद्यते, यत्र च गीतापाठः प्रवर्तते, तत्र सर्वदा निश्चयेन अहं वसामि इति साक्षात् भगवतः वचनं विश्रुतम् । गीता गङ्गा गायत्री गोविन्दः इति चतुर्भिः गकारैः यः युक्तो भवति सः न पुनर्भवति – संसारात् मुच्यते इति यावत् । गीतायां च अस्याम् अर्जुनविषाद-साङ्ख्य-कर्म-ज्ञान-संन्यास-आत्मसंयमन-ज्ञान-विज्ञान-अक्षरब्रह्म-राजविद्याराजगुह्य-विभूति-भक्ति-क्षेत्रक्षेत्रज्ञ-गुणत्रयविभाग-पुरुषोत्तम-दैवासुरसम्पद्विभाग-श्रद्धात्रयविभाग-मोक्षसंन्यासयोग-नाम्ना अष्टादश अध्यायाः वर्तन्ते ।

कर्तव्यविमुखानां कर्तव्यांशं बोधयति, क्रियमाणमपि कर्म स्वतन्त्रकर्तृत्वभ्रान्तिरहितेन फला-पेक्षारहितेन च कर्तव्यमिति गीता बोधयति ।

**श्रीमन्मध्वाचार्याः – गीताव्याख्यानम्**

भगवतः आज्ञां शिरसि धृत्वा भुवमवतीर्णः मुख्यप्राण एव श्रीमन्मध्वाचार्यः । तत्त्वप्रसाराय 'सप्तत्रिंशदमन्दधीः' इत्युक्तदिशा सप्तत्रिंशत्सङ्ख्याकान् ग्रन्थान् आरचय्य, एकविंशतिकुभाष्यान् अवखण्ड्य, सिद्धान्तं स्थापितवान् । ज्ञानिसिंहोऽयं "गीताभाष्यं चकारोऽसौ प्रथमं तुष्टिदं हरेः" इति व्यासार्यकृत ग्रन्थमालिकास्तोत्रोक्तदिशा भगवतः प्रीत्यै प्रथमं गीताभाष्यं ग्रथयित्वा हरये समार्पयत् ।

गीताभाष्यस्य मङ्गलाचरणम्—

देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरुंश्चान् गीतार्थं वक्ष्यामि शक्तितः ॥

इति 'शक्तितः' इति पदयोजनेनाचार्यैः प्रथमं विहितिम् । अथापि श्रीवेदव्यासः श्रीमदाचार्यं प्रति भवतः अगाधज्ञानसागरे लवमात्रांशोपयोगेन लिखितमेतद्भाष्यमतः 'शक्तितः' इति पदं त्यक्त्वा 'लेशतः' इति पदसंयोजनमुचितमिति आचार्यस्य सर्वज्ञतां संसूचयामास ।

श्रीमदाचार्याः प्रारम्भे गीतायाः महत्वबोधनमपहाय महाभारतस्य तदन्तर्गतायाः सहस्रनाम-स्तोत्रस्य च महत्त्वमुक्त्वा वेदानधिकारिणां कृते विरचितं महाभारतं सर्वविदसारभूतमिति सूचयन् द्वितीयाध्यायस्य एकादशश्लोकादारभ्य (अशोच्यानन्वशोचस्त्वं) भाष्यं व्यरचयन् । तथा तत्र तत्र इतरमतीयानां व्याख्यानान्यपि निराकृत्य श्रीवेदव्यासानां सम्मतं गीतायाः विवरणमकुर्वन् ।

अत्र भाष्ये 'अकर्म', 'प्रज्ञावादः', 'सर्वधर्मान्', 'विज्ञानम्' इत्यादिशब्दानां विशिष्टां व्याख्यां वयं पश्यामः । एवं जगद्वृक्षः, ज्ञानिनां कर्तव्याचरणं, दानं इत्यादि शब्दानामर्थविषयेऽपि प्रमाणबद्धं विवरणमाचार्या अदुः ।

## गीतातात्पर्यम्

श्रीमदाचार्याः गीताविषये गीतातात्पर्यमिति व्याख्यानान्तरं व्यलिखन् । गीताभाष्ये अप्रद-र्शितानाम् अनेकविषयाणां विवेचनं गीतातात्पर्ये वयं पश्यामः । एवम् अनेकहेतुभिः गीतातात्पर्ये वैशिष्ट्यं वर्तते इति विदुषां मतम् । अत एव 'एकान्ते' कथयन्नपि व्यासरूपेण तदेव लोके प्रकाश-यिष्यति हि इति वचनं प्रवृत्तमासीत् ।

## गीताभाष्यटीकाः

अस्य भाष्यस्य पद्मनाभतीर्थैः विरचिता भावदीपिका, नरहरितीर्थानां भावप्रकाशिका तथा श्रीजयतीर्थानां प्रमेयदीपिका इति तिस्रः टीकाः विलसन्ति ।

## श्रीपद्मनाभतीर्थानां गीताभाष्यतात्पर्यटीका

श्रीमदाचार्याणां प्रथमशिष्याः श्रीपद्मनाभतीर्थाः ज्ञानिश्रेष्ठाः । एते पूर्वम् अद्वैतमतस्थाः । आचार्यैः साकं वादं कृत्वा तेषां युक्तिभिः पराजिताः । द्वैतसिद्धान्ते सञ्जातविश्वासः श्रीमदाचार्याणां शिष्यत्वं स्वीकृत्य जगति मध्वतत्त्वप्रसारे दीक्षिता अभूवन् । द्वादशसङ्ख्याकादधिकग्रन्थनिर्मातारः एते श्रीपद्मनाभतीर्थाः गीताभाष्यस्य गीतातात्पर्यस्य च भावदीपिका, प्रकाशिका इति व्याख्याने कृत्वा आचार्याणां हृदयप्रकाशकाः आसन् । अत्र गीताभाष्यस्य पद्मानाभतीर्थानां टीकाद्वयमपि अस्म-त्पुस्तके संयोजितमस्ति ।

## श्रीनरहरितीर्थाः

श्रीमदाचार्याणां साक्षाच्छिष्याः एते गजपतिभण्डारात् श्रीमूलरामदेवस्य प्रतिमाम् आनीय विशिष्टसेवां कृत्वा गीताभाष्यभावप्रकाशिका इति व्याख्यानं निर्माय सारस्वतप्रपञ्चस्यापि सेवाम्

अकुर्वन् । श्रीमद्गीताभाष्यस्य अत्युपयुक्तविवरणपूर्वकं गीतायाः अपि केषुचित्स्थलेषु व्याख्यानम् अकुर्वन् । एतत् व्याख्यानमपि अत्र प्रकाश्यमानमस्ति ।

**श्रीजयतीर्थानां टीका**

श्रीमट्टीकाकृत्पादाः श्रीमदाचार्याणां पाठप्रवचनसमये वृषभरूपेण पुरत उपविश्य, तैः सर्वमूल-ग्रन्थानाम् आशयं विज्ञाय जन्मान्तरे अक्षोभ्यतीर्थैः तुर्याश्रमं स्वीकृत्य श्रीजयतीर्थ इति नाम्ना प्रख्याताः आसन् । आचार्यविरचितानां बहूनां ग्रन्थानां टीका विलिख्य टीकाचार्याः इत्येव प्रसिद्धिं प्रापुः । एते गीताभाष्यस्य प्रमेयदीपिका इति तथा गीतातात्पर्यस्य न्यायदीपिका इति टीकां व्यलिखन् ।

एतेषां ग्रन्थशैली गभीरा, भाष्यार्थबोधने अत्यन्तोपयुक्ता च वर्तते । एते आचार्याणां वाक्यानां व्याख्यानं कुर्वन्तः तत्र तत्र अन्यमताचार्याणामुक्तीः विमृशन्तः तन्मतं खण्डयन्तः नितरामुपकुर्वन्ति । गीतायाम् अस्पष्टं विचारं श्रीमदाचार्याः स्वभाष्ये सूक्ष्मतया प्रकटयन्ति । तं विचारं श्रीटीकाकृत्पादाः विशेषतः स्पष्टीकृत्य अध्येतॄणां महानन्दमुत्पादयन्ति । एतादृशानां टीकाकृत्पादानां गीताभाष्यतात्पर्ययोः वाक्ये अत्र मुद्रापिते ।

**श्रीविद्याधिराजानां गीताव्याख्यानम्**

टीकाचार्याणां अनन्तरं गीतायाः साक्षाद्व्याख्यातारः यतिश्रेष्ठाः श्रीजयतीर्थानां शिष्याः श्रीविद्याधिराजतीर्थाः एव । एते श्रीजयतीर्थेभ्यः तुर्याश्रमं आप्त्वा महासंस्थानस्य आधिपत्यञ्च स्वीकृत्य आचार्याणां मतप्रसारे बद्धकङ्कणास्सन्तः सर्वत्र सञ्चरितवन्तः आसन् । एते विष्णुसहस्र-नामस्तोत्रस्य विष्णुसहस्रनामविवृतिः इति व्याख्यानम् अकुर्वन् । गीतायाः एतेषां व्याख्याने भाष्य-तात्पर्यटीकासूक्तविषयाः सङ्गृहीताः । अतिगाम्भीर्येण तत्र तत्र प्रमाणानि उदाहरन्ती तेषां शैली सर्वैः मानिता । एतादृशी तेषां कृतिरपि अस्माभिः मुद्रितपुस्तकेऽस्मिन् संयोजिता वर्तते ।

**श्रीवादिराजतीर्थानां महाभारतलक्षालङ्कारान्तर्गतं गीताव्याख्यानम्**

श्रीभाविसमीराः श्रीवादिराजगुरुसार्वभौमाः श्रीमदानन्दतीर्थानां अनुजैः श्रीविष्णुतीर्थैः प्रवर्तिते भव्यपीठे मण्डितानां श्रीवागीशतीर्थानां शिष्याः । श्रीव्यासराजानां शास्त्रपरम्परायां समागताः एते तत्त्वशास्त्रप्रचारस्य भारमूढ्वा ग्रन्थरचन-वादिनिग्रहादिभिः स्वीयैरसाधारणैः कार्यैः, द्वैतसिद्धान्तप्रपञ्चं श्रीमन्तमकुर्वन् । शताधिकग्रन्थप्रणेतारः एते माध्वानां काव्यरसाभिज्ञता नास्तीति अपवादं तिर-स्कुर्वन्तः श्रेष्ठानि रसमयकाव्यानि विरचय्य, सुजनानन्वगृह्णन् ।

एते भगवद्गीतायाः व्याख्यानं चिकीर्षवः महाभारतलक्षालङ्काराववयवत्वेन गीताव्याख्यानं व्यरचयन् । साक्षात् गीतायाः व्याख्यानं कृत्वा, गीतार्थस्य अनायासेन बोधनं एषां वैशिष्ट्यम् । अनेकेषु स्थलेषु केषाञ्चित् पदानां विशिष्टार्थलेखनं एतद्व्याख्याने दृश्यते । तत्र तत्र परमत-व्याख्यानक्रमं निराकृत्य श्रीमदाचार्याणां व्याख्यानपद्धतिसमर्थनम् एतेषां अपरं वैशिष्ट्यम् ।

प्रकृते, एतद्ग्रन्थोऽपि अस्माकं एतत्प्रकटने संयोजितः ।

**श्रीगुरुसार्वभौमानां गीताव्याख्यानानि**

वाय्वावेशसम्भूताः श्रीप्रह्लादा एव बाह्लीकरूपेण, व्यासराजरूपेण, श्रीराघवेन्द्रतीर्थरूपेण अवतारं कृतवन्तः । श्रीसुधीन्द्रतीर्थश्रीमच्चरणैः चतुर्थाश्रमं स्वीकृतवन्तः श्रीराघवेन्द्रतीर्थाः जातिमत-मविगणय्य सर्वान् उद्धृत्य सर्वेष्वपि धर्मजागृतिमुत्पाद्य, अनेकमहिम्नः प्रदर्श्य, अष्टचत्वारिंश-दधिकग्रन्थान् विरचय्य, आबालगोपालं सर्वेभ्यः प्रियगुरवः भूत्वा, समस्तभारते सञ्चार्य, अवसाने सशरीरमेव मन्त्रालये वृन्दावनप्रवेशं कृतवन्तः । एषां सान्निध्येन अल्पग्रामतयी स्थिता 'मञ्चाला' मन्त्रालयक्षेत्रमिति नाम्ना प्रथिता सती सर्वसज्जनान् आकर्षति । श्रीराघवेन्द्रतीर्थाः स्ववाङ्मयद्वारा समस्तविद्वद्भ्यः अनुग्राहका अभूवन् । एते गीतायाः आहत्य त्रीणि व्याख्यानानि रचितवन्तः ।

**गीताविवृतिः अथवा गीतार्थसङ्ग्रहः**

एतत् गुरुराजैः कृतं साक्षात् गीताव्याख्यानम् । एते भाष्यटीकादिग्रन्थेषु अभिहितविचारान् सङ्गृह्य, विशिष्टशैल्या ग्रन्थमिमं लिखितवन्तः । प्रतिश्लोकं अर्थं वदन्तः तत्र तत्र आचार्याणां सिद्धान्तस्य वैशिष्ट्यं बोधितवन्तः । मध्ये क्वचिच्छ्लोकेषु पदानां शास्त्रोक्तं निर्वचनं दत्त्वा, व्याक-रणविचारान् बोधयित्वा अध्येतॄणां उत्तममार्गदर्शनं कृतवन्तः । श्रीजयतीर्थाणां गीताभाष्यतात्पर्य-टीकयोरपि टिप्पण्यौ कृतवन्तः । अन्वपि साक्षात् गीतायाः व्याख्यानावश्यकतां वर्णयन्तः 'गुरुगुणस्तवन'काराः श्रीवादीन्द्रतीर्थाः

गीतामत्यर्थधूतश्रितजनदुरितामिन्दुवंशप्रसूतौ
व्याचक्षाणे मुरद्विष्यभिजनमभजद्भद्रमिन्दोरनिद्रम् ।
धीर श्रीराघवेन्द्र त्वयि पुनरनघे हंसवंशोदिते तां
व्याकुर्वत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायः ॥

इति श्लोके अतिसुन्दरतया वर्णितवन्तः ।

टीकायाः व्याख्यानसमये श्रीगुरुसार्वभौमाः श्रीजयतीर्थकृतटीकास्थपदानां उत्तमव्याख्यानं कृत्वा टीकाया अभिप्रायं सहृदयहृदयाह्लादकत्वेन अभिव्यक्तीकृतवन्तः । एतद्ग्रन्थद्वयं अस्मत्प्रकाशने संयोजितम् । तयोरपि टिप्पण्योः ''गीताभाष्यप्रमेयदीपिकाटिप्पणीभावदीपं'' इदंप्रथमतया मुद्राप्य अध्येतृभ्यः उपायनीकुर्मः इत्यमुं विषयं ससन्तोषं उद्घोषयामः ।

**श्रीसुमतीन्द्रतीर्थानां गीताभावरत्नकोशः**

श्रीमन्मध्वाचार्याणां मूलमहासंस्थाने श्रीगुरुराजानन्तरं प्रसिद्धाः यतिश्रेष्ठाः श्रीसुमतीन्द्रतीर्थाः । श्रीसूरीन्द्रतीर्थैः एतत्पीठं लब्ध्वा श्रीमदाचार्यसिद्धान्तप्रकाशने दक्षाः आसन् । एते श्रीगुरुसार्वभौमानां अत्यन्तं प्रीत्यास्पदाः आसन् । श्रीराघवेन्द्रतीर्थविरचितग्रन्थाः श्रीसुमतीन्द्रतीर्थानां कृते इत्येव इति उक्तवन्तः । श्रीसुमतीन्द्रतीर्थाः स्वलिखितानामनेकग्रन्थानां 'भावरत्नकोश' इति नामकरणं अकुर्वन् इत्ययं विषयः प्रथितः । गीतायाः अतिविस्तरं व्याख्यानमेतद्, स्वतः तैरेव उक्तरीत्या श्रीराघवेन्द्र-तीर्थटिप्पण्याः अनुरूपम् अस्तीत्यवगम्यते ।

एतादृशभावरत्नकोशाख्यग्रन्थोऽपि अस्माकं प्रकाशने अन्तर्गतो भवति ।

**पांगरी श्रीनिवासाचार्यविरचिता त्रिविधार्थविवृतिः**

''पांगरी श्रीनिवासाचार्य'' इति एते उत्तमतत्त्वज्ञानिनः । अनेकग्रन्थान् अरचयन् इति प्रसिद्धिरस्ति । एते गीतायाः 'त्रिविधार्थविवृति'नाम्ना आध्यात्मिक-आधिभौतिक-आधिदैविक इति क्रमे त्रिविधमर्थं वर्णितम् । एषां व्याख्यानमपि अत्र मुद्रणं क्रियते ।

**श्रीमद्भगवद्गीतायाः सम्बन्धिनः माध्ववाङ्मयग्रन्थाः**

(१) श्रीमन्मध्वाचार्यकृतं – गीताभाष्यम् ।

(२) श्रीमन्मध्वाचार्यकृतं – गीतातात्पर्यम् ।

(३) श्रीपद्मनाभतीर्थकृता – गीताभाष्यप्रकाशिका ।

(४) श्रीपद्मनाभतीर्थकृता – गीतातात्पर्यप्रकाशिका ।

(५) श्रीनरहरितीर्थकृता – गीताभाष्यभावदीपिका ।

(६) श्रीजयतीर्थकृता – गीताभाष्यप्रमेयदीपिका ।

(७) श्रीजयतीर्थकृता – गीतातात्पर्यन्यायदीपिका ।

(८) श्रीविद्याधिराजतीर्थकृता – गीताविवृतिः ।

(९) श्रीविजयीन्द्रतीर्थकृता – गीताविवृतिः ।

(१०) श्रीविजयीन्द्रतीर्थकृता – गीताभाष्यप्रमेयदीपिकाग्प्पणी ।

(११) श्रीविजयीन्द्रतीर्थकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(१२) श्रीराघवेन्द्रतीर्थकृता – गीताभाष्यप्रमेयदीपिकाव्याख्याभावदीपः ।

(१३) श्रीराघवेन्द्रतीर्थकृता – गीताविवृतिः ।

(१४) श्रीराघवेन्द्रतीर्थकृता – गीतातात्पर्यन्यायदीपिकाभावदीपः ।

(१५) श्रीसमुतीन्द्रतीर्थकृत – गीताक्षरार्थः

(१६) श्रीसुमतीन्द्रतीर्थकृत – गीताभाष्यप्रमेयदीपिकाभावरत्नकोशः ।

(१७) सातारीराघवेन्द्राचार्यकृता – गीताभाष्यविवृतिः ।

(१८) श्रीसत्यसन्धतीर्थकृतं – गीताव्याख्यानम् ।

(१९) श्रीरघोत्तमतीर्थकृतः – गीताभाष्यप्रमेयदीपिकाव्याख्या भावबोधः ।

(२०) श्रीसत्याभिनवतीर्थकृता – गीताभाष्यप्रमेयदीपिका टिप्पणी ।

(२१) वंशपल्लिआचार्यकृता – गीताभाष्यभावप्रदीपिका ।

(२२) केशवाचार्यपाण्डुरङ्गिकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२३) उमर्जीप्रह्लादकृष्णाचार्यकृतटिप्पणी – प्रमेयदीपिकाभावप्रकाशः ।

(२४) श्रीताम्रपर्णी श्रीनिवासाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी किरणावली ।

(२५) कट्टे तिम्मणणाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२६) वरदाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२७) वासुदेवाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२८) नृसिंहमूर्तिकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२९) गूढकर्तृक – गीताभाष्यबृहद्भावबोधि ।

(३०) श्रीसत्यनाथतीर्थकृतः – गीतातात्पर्यन्यायदीपिकावाक्यविवेकः ।

(३१) श्रीसत्यप्रज्ञतीर्थकृतः – गीतातात्पर्यन्यायदीपिकाटिप्पणी भावप्रकाशः ।

(३२) यदुपत्याचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३३) ताम्रपर्णीविठलाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३४) ताम्रपर्णीश्रीनिवासाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी किरणावलिः ।

(३५) वंशपल्लि आचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३६) वेदगर्भपुट्टाचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३७) हुलिगि नरसप्पाचार्यकृतः – गीताभाष्यार्थानुवादः ।

(३८) वरखेडि तिम्मण्णाचार्यकृतः – गीतापञ्चानन ।

(३९) पांगरी आचार्यकृतम् – त्रिविधार्थविवृतिः ।

(४०) आयी नरहरि आचार्यकृतम् – गीताविवृतिव्याख्यानम् ।

(४१) करवीर अनन्ताचार्यकृतम् – गीताव्याख्यानम् ।

(४२) वनमालिमिश्रकृतम् – गीताव्याख्यानम् ।

(४३) गूढकर्तृक – गीताविवृतिः

(४४) शतावधानि लक्ष्मणाचार्यकृतं – भगवद्गीतोपन्यासदर्पणम् ।

(४५) सि. एम्. पद्मनाभाचार्यकृता – गीताभावचन्द्रिका ।

(४६) गूढकर्तृक – मध्वमतानुसारि गीताविवरणम् ।

(४७) गूढकर्तृकः – गीताभाष्य-गीतातात्पर्य-विरोधोद्धारः ।

(४८) गूढकर्तृका – गीताभाष्यविरोधोद्धारः ।

(४९) रत्नगर्भवडेय – गीताव्याख्यानम् ।

इत्याद्यनेकमुद्रितव्याख्यानानि अमुद्रितानि च उपलब्धानि सन्ति ॥

## कृतज्ञताऽऽविष्कारः

एतादृशमहत्तरग्रन्थं सम्यक् शोधयित्वा प्रकाशनार्थं गुरुतरभारं अस्माकमुपरि स्थापयित्वा परमानुग्रहं कृतवतां परमपूज्य श्री श्री सुबुधेन्द्रतीर्थश्रीपादानां चरणपङ्कजयोः साष्टाङ्गपूर्वकान् अनेकानेकान् नमस्सुमाञ्जलीन् समर्पयामः ।

अस्मदीय एतत्संशोधनकार्ये उत्तममार्गदर्शनं आचरितवतां अस्मद् विद्यागुरूणां श्री विद्वान् राजा. एस्. गिरियाचार्याणां कृते अनेकप्रणामान् कार्तज्ञ्यं अर्पयामः ।

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीयकुलपतिस्थानं अलङ्कृताः डॉ. वा. रा. पञ्चमुखि आचार्याः अस्मिन् संशोधनकार्ये प्रोत्साहितवन्तः । तेषां कृतेऽपि अस्माकं कृतज्ञतां आविष्कुर्मः ।

एतादृशमहत्तरसम्पुटस्य संशोधनाकार्ये विशेषतया सहकृतवतां (श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयाध्यापकानां) तत्रापि सर्वश्री एन्. राघवेन्द्राचार्याणां, तथा डॉ. डि. आर्. माधवाचार्याणां विशिष्टसेवां स्मृत्वा अभिनन्दयामः ।

एतत्संशोधनकार्ये अस्माभिः अनेकहस्तप्रतीन् तथा अनेकमुद्रितपुस्तकानि च सहायत्वेन स्वीकृतानि ।

श्रीमठीय श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीय समग्रहस्तप्रतयः तथा श्रीगुरुसार्वभौमानां पूर्वा-श्रमवंशस्थानां विद्वत्तल्लजानां श्रीराजा. एस्. गिरियाचार्याणां आध्यात्मिककेन्द्रीयसमग्रहस्तप्रतयः एवं डॉ. वा. रा. पञ्चमुखीमहोदयानां श्रीसुमतीन्द्रतीर्थीय भावरत्नकोशहस्तप्रतिः । पांगरीव्याख्यानं मुद्रितपुस्तकं, अखिलभारतमाध्वमहामण्डलतः प्रकाशितं डि. प्रह्लादाचार्यैः सम्पादितं मुद्रितगीता-भाष्यतात्पर्यपुस्तकं तथा विद्वान् व्यासनकेरि प्रभञ्जनाचार्यैः दत्ता श्रीसुमतीन्द्रतीर्थीय भावरत्नकोश-हस्तप्रतिः तथा तैः प्रकाशिताः पुस्तकाश्च, पण्ढरपुरस्थ वरखेडी भीमसेनाचार्यैः दत्ता गीताअन्वय-प्रकाशिकायाः हस्तप्रतिश्च ।

उपरिनिर्दिष्टसमग्रग्रन्थान् प्रदत्तवतः महात्मानः स्मारं स्मारं स्मरणपूर्वकं तेषां धन्यवादान् समर्पयामः ॥

एतद्ग्रन्थमुद्रणकाले त्वरितगत्या मुद्रायितानां 'सुधामुद्रण' अधिकारिणां श्री धनंजय वरखेडकर महोदयानां कार्यम् अभिनन्द्य ग्रन्थमिमं लोकार्पणं कुर्मः ।

इति शम् ।

*प्रधानसम्पादकाः*

*विद्वान् राजा. एस्. गिरि आचार्याः*

*22.11.2016*

*श्रीरघुनन्दनतीर्थनामाराधना*

*मन्त्रालयः*

*राष्ट्रपतिप्रशस्तिभाजः*

*विद्वान् कडप राघवेन्द्राचार्यः*

*विद्वान् डॉ. एन्. वादिराजाचार्यः*

*विद्वान् पुराणिक सुब्रह्मण्याचार्यः*





श्रीमन्मध्वकरार्चित-श्रीदिग्विजयरामदेवः    चतुर्युगमूर्तिब्रह्मकरार्चित-श्रीमन्मूलरामदेवः    श्रीजयतीर्थकरार्चित-श्रीजयरामदेवः

# ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्याः ॥



व्याप्तिर्यस्य निजे निजेन महसा पक्षे सपक्षे स्थिति-
व्यावृत्तिश्च विपक्षतोऽथ विषये सक्तिर्न वै बाधिते।
नैवास्ति प्रतिपक्षयुक्तिरतुलं शुद्धं प्रमाणं स मे
भूयात्तत्त्वविनिर्णयाय भगवानानन्दतीर्थो मुनिः ॥

# ॥ श्रीमज्जयतीर्थाः ॥



सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥

# ॥ श्रीविजयीन्द्रतीर्थाः ॥



धर्मः सत्ये च धीमानहिरिव वचसा भूसुराणां सभायां
जेता भीमैव वादे पवन इव गतौ सम्पदि श्रीरिवाढ्यः ।
धाता ज्ञाता च सर्वानहिपतिशयनं पूजयंस्तोषयंश्च
लोकैः सर्वैश्च पूज्यो भुवि मनुजवरैर्मानितोऽभून्मुनीन्द्रः ॥

## ॥ श्रीराघवेन्द्रतीर्थाः ॥



चित्ते चेन्मृदुता शिरीषसदृशो हय्यङ्गवीनं शिला
गाम्भीर्यं यदि यस्य सोऽन्धुरुदधिः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरात्
औदार्यं यदि कल्पपादपमुखाः सम्भावयन्तेऽर्थिताम् ॥



प्राक्तनपीठाधिपतयः

**परमपूज्याः श्री श्री १००८ श्रीसुजयीन्द्रतीर्थश्रीपादाः**



प्राक्तनपीठाधिपतयः

**परमपूज्याः श्री श्री १००८ सुयतीन्द्रतीर्थाः**



प्रस्तुतपीठाधिपतयः
**परमपूज्याः श्री श्री १००८ श्री सुबुधेन्द्रतीर्थाः**

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ त्रयोदशोऽध्यायः

**गीता**

**अर्जुन उवाच—**

**प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥**

*वि०वि०*— यत् प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तम्, यच्च द्वितीये भगवत्स्वरूपं निरूपितम्, 'न त्वेवाहम्' इत्यादौ यज्जीवस्वरूपं प्रदर्शितम्, 'भूमिरापः' इत्यादौ यत् क्षेत्रस्वरूपमभिहितम्, तद्विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रदर्श्यते ॥ १ ॥

*वा०ल०*— 'पुरुषं प्रकृतिं चैव' इत्यत्र प्रकृतिं मूलक्षेत्रम् । पुरुषं जीवम् । क्षेत्रवत् लिङ्गदेहात्मना प्रकृतेर्विकाररूपं देह्यात्मना पुरुषस्य विकारजनकं क्षेत्रम् । क्षेत्रज्ञम्, पुरुषपदेन जीवस्य पृथग्गृहीतत्वात् जीवस्य हृदयकमले स्थित्वा क्षेत्रसञ्ज्ञितयोस्तयोरुभयोरपि विकारान् साक्षितया पश्यन्तं क्षेत्रज्ञम् । ज्ञानम् । ज्ञेयं तस्य ज्ञानस्य विषयभूतं मोक्षदायकं परमात्मानम् । एतद्वेदितुमिच्छामीति सर्वत्र सम्बन्धः ॥ १ ॥

*सा०सं०*— पूर्वषट्कद्वयोक्तार्थसङ्ग्रहपरोऽयमध्यायः । तथाहि । यत्प्रथमषट्के 'त्रैगुण्यविषया वेदाः' (२-४६) इत्यादिना प्राचुर्येण ज्ञानसाधनमाषष्ठसमाप्तेरुक्तम्, यच्च तत्र द्वितीयेऽध्याये 'न त्वेवाहम्' इत्यादिनाऽनादिनित्यत्वादिना जीवस्वरूपमुक्तम्, यच्च द्वितीयषट्के भगवत्स्वरूपमुक्तम्, यदपि सप्तमे 'भूमिरापः' (७-४) इत्यादिना क्षेत्रशब्दितं भगवदावासस्थानमुक्तम्, तद्विकीर्णतयोक्तं



प्रस्तुतपीठाधिपतयः
**परमपूज्याः श्री श्री १००८ श्री सुबुधेन्द्रतीर्थाः**

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ त्रयोदशोऽध्यायः

**गीता**

**अर्जुन उवाच—**

**प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥**

*वि०वि०*— यत् प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तम्, यच्च द्वितीये भगवत्स्वरूपं निरूपितम्, 'न त्वेवाहम्' इत्यादौ यज्जीवस्वरूपं प्रदर्शितम्, 'भूमिरापः' इत्यादौ यत् क्षेत्रस्वरूपमभिहितम्, तद्विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रदर्श्यते ॥ १ ॥

*वा०ल०*— 'पुरुषं प्रकृतिं चैव' इत्यत्र प्रकृतिं मूलक्षेत्रम् । पुरुषं जीवम् । क्षेत्रवत् लिङ्गदेहात्मना प्रकृतेर्विकाररूपं देह्यात्मना पुरुषस्य विकारजनकं क्षेत्रम् । क्षेत्रज्ञम्, पुरुषपदेन जीवस्य पृथग्गृहीतत्वात् जीवस्य हृदयकमले स्थित्वा क्षेत्रसञ्ज्ञितयोस्तयोरुभयोरपि विकारान् साक्षितया पश्यन्तं क्षेत्रज्ञम् । ज्ञानम् । ज्ञेयं तस्य ज्ञानस्य विषयभूतं मोक्षदायकं परमात्मानम् । एतद्वेदितुमिच्छामीति सर्वत्र सम्बन्धः ॥ १ ॥

*सा०सं०*— पूर्वषट्कद्वयोक्तार्थसङ्ग्रहपरोऽयमध्यायः । तथाहि । यत्प्रथमषट्के 'त्रैगुण्यविषया वेदाः' (२-४६) इत्यादिना प्राचुर्येण ज्ञानसाधनमाषष्ठसमाप्तेरुक्तम्, यच्च तत्र द्वितीयेऽध्याये 'न त्वेवाहम्' इत्यादिनाऽनादिनित्यत्वादिना जीवस्वरूपमुक्तम्, यच्च द्वितीयषट्के भगवत्स्वरूपमुक्तम्, यदपि सप्तमे 'भूमिरापः' (७-४) इत्यादिना क्षेत्रशब्दितं भगवदावासस्थानमुक्तम्, तद्विकीर्णतयोक्तं

सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रश्नपूर्वकं प्रदर्श्यते **प्रकृतिमित्यादिना** । **पुरुषं** जीवम् । **ज्ञानं** ज्ञानसाधनम् ॥ १ ॥

***अ०प्र०***— यत्प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तम्, यच्च द्वितीयषट्के भगवत्स्वरूपं प्रतिपादितम्, न त्वेवाहमित्यादौ यजीवस्वरूपमुक्तम्, भूमिरापो इत्यादौ च यत्क्षेत्रमभिहितम्, एवं प्रकीर्णतयोक्तं तत्सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यैकत्रास्मिन् त्रयोदशाध्याये निरूप्यते ॥ तत्र क्षरादिस्वरूपं वक्तुं भगवज्ज्ञानस्यैव मोक्षहेतुत्वात्किं क्षेत्रादिस्वरूपनिरूपणेनेत्याशङ्कां तावत् परिहरति । यद्वा, 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामी'ति पूर्वं प्रतिज्ञातम् । न च परमात्मभक्तिं विना संसारादुद्धरणं सम्भवतीति तदर्थमेव प्रकृतिपुरुषविवेकाध्याय आरभ्यते ।

**गीता**

**श्रीभगवानुवाच—**

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ २ ॥**

***वि०वि०***— तत्र क्षेत्रादिस्वरूपं वक्तुं भगवज्ज्ञानस्यैव मोक्षहेतुत्वात् किं क्षेत्रादिस्वरूपनिरूपणेनेत्याशङ्कां तावत्परिहरति **इदमिति** । इदं देहेन्द्रियादिरूपेण परिणतमुपहतं सज्जीवहिंसाव्यवहारहेतुः भगवता प्रेर्यते चेति शरीरम्, अव्यक्तादि, क्षीयते भगवता स्थीयते अस्मिन्निति क्षेत्रम् उच्यते । 'हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् । अव्यक्तादिशरीरं तु तत्क्षेत्रं क्षीयतेऽत्र यत् ॥' इति वचनात् । एतत्क्षेत्रं यो वेत्ति तं तद्विदः क्षेत्रविदः क्षेत्रज्ञ इति प्राहुः ॥ २ ॥

***वा०ल०***— क्षेत्रं मूलकारणत्वेन जीवरूपतया च प्रागुक्तयोरेव प्रकृतिपुरुषयोर्विक्रियमाणतया विकाराभिमानितया च क्षेत्रेऽपि प्रवेशेन क्षेत्रनिरूपणस्यापि तन्निरूपणरूपत्वात्, प्रकृतिपुरुषविकाररूपक्षेत्रस्य महासंसारहेतुतया ज्ञानिनामत्यन्तरिपुत्वाच्च, तत्रैव वैराग्योत्पादनाय जडाजडात्मकसकलजगत्सङ्ग्राहकं क्षेत्रमेव पाठक्रमादर्थक्रमो ज्यायानिति न्यायेनादौ निरूपयति **इदं शरीरमिति** । वक्ष्यति च पुरुषं प्रकृतिं च इत्यत्र तयोरपि स्वरूपम् । इदं क्षेत्रमत इत्यादि येन शरीरेण मां प्रति पृच्छसि, इदं शरीरम् ॥ २ ॥

***सा०सं०***— ननु भगवत्स्वरूपज्ञानस्यैव पूर्वोक्तदिशा मुक्तिहेतुत्वात् तत्स्वरूपोक्तिर्युक्ता । क्षेत्रस्वरूपं 'महाभूतानि' (३-६) इत्यादिना किमर्थमत्रोच्यत इति चेन्न । क्षेत्रज्ञत्वविशिष्टभगव-

ज्ञानोपयोगित्वात्, क्षेत्रोक्तिरिति क्षेत्रोद्देशपूर्वं भगवतः क्षेत्रज्ञत्वमाह **इदमिति** । **कौन्तेय** । **इदं शरीरम्** अव्यक्तमहदहङ्कारादिकम् । भगवदावासस्थानत्वात् क्षीयते स्थीयतेऽत्र भगवतेति व्युत्पत्त्या **क्षेत्रमित्यभिधीयते** । एतत् अव्यक्तादिकं क्षेत्रशब्दितम् । यो वेत्ति जानाति । तम् । तद्विदः क्षेत्रविदः । क्षेत्रज्ञमिति प्राहुरित्यर्थः । शरीरशब्दस्याव्यक्तादिपरत्वं च स्वपरिणामदेहादिवियोगद्वारा जीवस्य हिंसादिहेतुत्वात् । 'शर् शॄ हिंसायाम्' इति धातोः भगवता प्रेर्यत्वादीरं च । 'ईर प्रेरणे' इति धातोः । शर् च तदीरं चेति शरीरमिति व्युत्पत्तेरिति ज्ञेयम् । तेन 'सङ्घातश्चेतना' इति सङ्घातपदेन क्षेत्रविकारेष्वेकदेशत्वेनोक्तशरीरस्य कथं समस्तक्षेत्रत्वमुच्यत इति शङ्का निरस्ता ॥२॥

***अ०प्र०***— तत्र यत्सप्तमाध्याये 'परापरा चे'ति प्रकृतिद्वयमुक्तं तयोरविवेकात् जीवस्यायं संसारः । तदेव प्रकृतिद्वयं क्षेत्रज्ञशब्दवाच्यं परस्परं विविक्तं तत्त्वतो निरूपयिष्यन् श्रीभगवानाह **इदमिति** ।

अथान्वयः— हे कौन्तेय ![१], इदं[२], शरीरं[३], क्षेत्रं[४], इति[५], अभिधीयते[६], यः[७], एतत्[८], वेत्ति[९], तं[१०] क्षेत्रज्ञः[११] इति[१२], तद्विदः[१३], प्राहुः[१४] इत्यन्वयः ।

हे कौन्तेय ![१], इदं = प्रमाणसिद्धं[२], शरीरं = शीर्यत इति शरीरं शीर्यते ईश्वरेण नाश्यते इति शरं तेनेर्यत इति ईरं शरं च इरं चेति शरीरं, यद्वा, जीवस्य हिंसाव्यवहारहेतुर्भवतीति शरम् । हरिणेर्यत इति ईरम् । तच्च तच्चेति वा शरीरम् । भोगायतनम् । शॄ हिंसायां ईर प्रेरणे इदमेवाव्यक्तादि देहादिरूपेण परिणतं शृणोति[३], क्षेत्रं = क्षेत्रवत् पाञ्चभौतिके पुण्यपापात्मककर्मफलोद्भवस्य कारण-त्वात्क्षेत्रं, क्षिनिवासगत्योः क्षीयते स्थीयतेऽत्रेति क्षेत्रम् । तदुक्तम्— हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् । अव्यक्तादि शरीरं तु तत्क्षेत्रं क्षीयतेऽत्र यत् ॥

संसारस्य प्ररोहबीजत्वात् क्षेत्रं[४], इति[५], अभिधीयते = उच्यते[६], यः = पुरुषः[७], एतत् = क्षेत्रं[८], वेत्ति = अहं ममेति मन्यते[९], तं = पुरुषं[१०] क्षेत्रज्ञः[११] इति[१२], तद्विदः = क्षेत्रक्षेत्रज्ञयो-विविकज्ञाः[१३], प्राहुः = ऊचुः[१४] ॥ २ ॥

**गीता**

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥**

*वि०वि०*— 'एतद्यो वेत्ति' इत्युक्ते जीवस्यापि किञ्चित् ज्ञानात् क्षेत्रज्ञत्वप्राप्तेस्तन्निराकरणार्थमुक्तं **क्षेत्रज्ञं चेति** । क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धीत्यर्थः । उक्तं च— 'क्षेत्रज्ञो भगवान् विष्णुर्न ह्यन्यः क्षेत्रमञ्जसा । वेत्त्यसौ भगवान् ज्ञेयो व्यक्ताव्यक्तविलक्षणः ॥' इति । अतः क्षेत्रादिज्ञानस्य क्षेत्रज्ञत्वादिविशिष्टभगवज्ज्ञानोपयोगित्वादुभयोः क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तदेव सम्यग्ज्ञानमिति मे मतम् ॥ ३ ॥

*बा०ल०*— पुरुषपदेन जीवस्य पृथगुक्तत्वात्, क्षेत्रज्ञः कः ? इति शङ्कां परिहरति **क्षेत्रज्ञं चाँपि इति** । स्वमुखं स्वपृष्ठं स्वदेहान्तश्च या स्थितिः, तामजानन् स्वोदरमात्रदर्शी जीवः, अत्र न क्षेत्रज्ञः । किन्तु देहिनां हृत्कमलमध्ये स्थित्वा अन्तर्बहिः सर्वं च पश्यन् स्वयमेव क्षेत्रज्ञः । अन्यथा सुषुप्तिदशायां क्षेत्रज्ञाभावात् देहनिपातप्रसङ्गः । किञ्च जीवस्यैव क्षेत्रज्ञत्वे इन्द्रावतारितया जीवश्रेष्ठस्यार्जुनस्य सुतरां क्षेत्रज्ञानावश्यम्भावेन एतद्वेदितुमिच्छामि इति प्रश्नायोगाच्चेति भावः ॥३॥

*सा०सं०*— जीवस्यापि किञ्चित् क्षेत्रज्ञानात् स किं क्षेत्रज्ञः, इत्यत आह **क्षेत्रज्ञं चेति** । **सर्वक्षेत्रेषु** अव्यक्तादिषु । **क्षेत्रज्ञं** तु **मां विद्धि** । न जीवम् । क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं **तज्ज्ञानम्** । **मम** सम्यग्ज्ञानं **मतमित्यर्थः** । अत्र 'सर्वक्षेत्रेषु' इत्युक्तिरिदं शरीरमित्यत्र शरीरपदोक्ताव्यक्तादेः क्षीयतेऽत्रेश्वरेणेति व्युत्पत्त्या क्षेत्रपदवाच्यत्वमिति सूचनाय ॥ ३ ॥

*अ०प्र०*— क्षेत्रं जानातीति क्षेत्रज्ञः इति व्युत्पत्तिश्चेत् जीवस्यापि किञ्चिज्ज्ञानसद्भावात् क्षेत्रज्ञत्वप्राप्तेः तन्निरासायाह **क्षेत्रज्ञं चापीति** ।

हे भारत ![१], सर्वक्षेत्रेषु स्थितत्वेन[२], मां[३], चापि[४], क्षेत्रज्ञं[५], विद्धि[६], अतः क्षेत्रक्षेत्रज्ञयोः[७], यत्[८], ज्ञानं[९], तत्[१०] ज्ञानं ज्ञानमिति[११] मम[१२], मतं[१३] इत्यन्वयः ।

हे भारत ![१], सर्वक्षेत्रेषु = ब्रह्मादि स्थावरान्तेषु सर्वक्षेत्रेषु स्थितत्वेन[२], मां[३], चापि[४], क्षेत्रज्ञं = क्षेत्रवेत्तारं[५], विद्धीत्यर्थः[६], अतः = कारणात् क्षेत्रक्षेत्रज्ञयोः[७], यत् = वैलक्षण्येन[८], ज्ञानं[९], मोक्षहेतुत्वात् । तदुक्तम्— क्षेत्रज्ञो भगवान् विष्णुः न ह्यन्यत्क्षेत्रमञ्जसा । वेत्त्यसौ भगवान् ज्ञेयोऽव्यक्ताव्यक्तविलक्षणः ॥ अतः सर्वक्षेत्रज्ञत्वादिविशिष्टभगवज्ज्ञानोपयोगित्वात् क्षेत्रक्षेत्रज्ञयोः उभयोः वैलक्ष्यण्येन यज्ज्ञानं तत् मोक्षहेतुत्वात् मम ज्ञानं क्षेत्रक्षेत्रज्ञयोर्यत् यज्ज्ञानं इदं क्षेत्रं एषः क्षेत्रज्ञ इति विभागतो येन ज्ञानेन तावुभौ ज्ञायन्ते तत्साङ्ख्यज्ञानं[९], तज्ज्ञानं = ज्ञानमिति तदेव सम्यक् ज्ञानमिति[१०-११] मम[१२], मतं = सम्मतम्[१३], यद्वा, क्षेत्रक्षेत्रज्ञयोर्यत् ज्ञानं तदेव मम मतं सम्मतं मोक्षहेतुत्वात् । मम ज्ञानं सम्मतम् । अन्यत्तु वृथा पाण्डित्यं बन्धहेतुत्वात् इत्यर्थः ।

तदुक्तम्— यत्कर्म यत्त्वबन्धाय सा विद्या या विमुक्तये । आयासाय परं कर्म विद्यान्या यन्त्र नैपुणम् ॥ ३ ॥

**भाष्यम्**

**पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयति अनेन अध्यायेन ॥ ॥ १-३ ॥**

***प०टी०***— एतदध्यायप्रतिपाद्यं दर्शयति **पूर्वोक्तेति** । **ज्ञानं** ज्ञानसाधनं प्रथमषट्कोक्तम् । **ज्ञेयं** भगवत्स्वरूपं तत्र तत्रोक्तम् । **क्षेत्रं** 'भूमिरापोऽनलः' इत्याद्युक्तम् । **पुरुषौ** 'न त्वेवाहम्' इत्यादिना ॥ १-३ ॥

***प्र०दी०***— पूर्वसङ्गतत्वेन अध्यायप्रतिपाद्यं दर्शयति **पूर्वोक्तेति** । पूर्वमाषष्ठसमाप्तेः यज्ज्ञानं ज्ञानसाधनमुक्तम्, यच्च सप्तमादिभिः षड्भिर्ज्ञेयं ब्रह्मस्वरूपमुक्तम्, यदपि 'भूमिः आपः' इत्यादिना क्षेत्रमुक्तम्, यश्च 'न त्वेवाहं' इत्यादिना पुरुषतत्त्वमुक्तम्, तत्सर्वं **अनेनाध्यायेन दर्शयति** भगवान्। किमर्थम् ? **पिण्डीकृत्य** विक्षिप्तमेकीकृत्य । गौणोऽत्र क्त्वाप्रत्ययः । पिण्डीकरणार्थमित्यर्थः । पिण्डीकरणे मिश्रत्वादप्रतिपत्तिरेवेत्यत उक्तम् **विविच्येति** । प्रकरणशुद्ध्येत्यर्थः ॥ १-३ ॥

***भा०दी०***— **पुरुषतत्त्वमिति** । जीवेश्वरस्वरूपमित्यर्थः । पिण्डीकरणेति । विविच्य प्रदर्शन-कार्यतया ततः पूर्वभावित्वायोगादाह । गौणोऽत्र क्त्वाप्रत्ययः । क्त्वाऽऽदेशस्थानीभूत इति ज्ञेयम् । पिण्डीकरणपरिज्ञानबुद्ध्यपेक्षया पूर्वकालीनत्वाभिप्राय इत्यर्थः ॥ १-३ ॥

***भा०र०***— **पूर्वसङ्गतत्वेन** पर्वषट्कद्वयसङ्गतत्वेन इत्यनन्तरम् 'एतम्' इत्युपस्कर्तव्यम् । 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' इति सप्तमे भाषणाद् अत्र ज्ञानशब्देन लक्षणया, 'ज्ञायतेऽनेन' इति योगेन वा ज्ञानसाधनमेव ग्राह्यमिति भावेन तदनूद्य व्याचष्टे **ज्ञानं ज्ञानसाधनमिति** । **उक्तं** प्राचुर्येण । **पुरुषतत्त्वं** चेतनस्वरूपं स्थितिः । 'दर्शयति' इत्यत्र आख्यातोपात्तकर्त्रुक्तिः **भगवानिति** । उक्तस्य पुनः प्रदर्शनं किमर्थमिति कृतचोद्यस्य कथमनेन परिहारः ? इत्यतः तं भाष्यारूढं वक्तुमाह **गौण इति** । 'पिण्डीकृत्य' इत्यत्र क्त्वाप्रत्ययादेशेन ल्यपा पिण्डीकरणं विविच्य (प्र)दर्शनात् पूर्वकालीनम् इति प्रतीयते । अत्र च क्त्वाप्रत्ययः यथा पूर्वकालीनम् उत्तरकालीनेन प्रत्यासन्नं तथा उत्तरकालीनमपि । तथा पिण्डीकरणं (विविच्य) प्रदर्शनलक्षणकारणेन प्रत्यासन्न-मिति प्रत्यासत्तिलक्षणगुणयोगेन प्रवृत्त इति व्याख्यातव्य इत्यविवक्षितार्थ इत्यर्थः ।

तर्हि कोऽयमर्थो विवक्षितः ? इत्यतः तं दर्शयति **पिण्डीकरणार्थमित्यर्थ इति** । विप्रकीर्ण-स्यैकीकरणार्थमित्यर्थः । अभ्युपगता च मीमांसकैः 'अग्निहोत्रं जुहोति', 'यवागूं पचति' इत्यत्र श्रुतक्रमम् अविवक्षित्वा, तिप्रत्ययस्य त्तवाप्रत्ययार्थमङ्गीकृत्य 'यवागूं पक्त्वा अग्निहोत्रं जुहुयात्' इति वचनव्यक्तिः । तथा च कृतचोद्यपरिहारो भाष्यारूढ इति भावः । एतेन "विविच्यदर्शनपश्चात्तनस्य पिण्डीकरणस्य तत्पूर्वकालत्वायोगात् कथं भाष्ये 'समानकर्तृकयोः पूर्वकाले' इति सूत्रविहित-त्तवाप्रत्ययादेशल्यबुक्तिः" इति शङ्का परिहृता । पिण्डीकरण-विविच्यदर्शनयोः आकाङ्क्षाक्रमेण फलफलिभावो ज्ञातव्य इत्यभिप्रायावेदनात् । **अन्ये तु** 'गौणः' इति पदं यथा 'सिंहश्चैत्रः' इत्यत्र सिंहपदं मृगेन्द्रगतक्रौर्यादिगुणयोगेन चैत्रे वर्तत इत्यविवक्षितार्थः, एवम् अविवक्षितार्थत्वगुणयोगेन त्तवाप्रत्यये वर्तयितव्यम् इत्यविवक्षितार्थक इति व्याख्येयम् । तथा च' पिण्डीकरणार्थम्' इत्यर्थलाभ इत्याहुः । गौणः = तुमर्थलक्षक इत्यर्थ इति **अपरे** ।

यद्यपि 'श्रोतृशेमुषीमारोहयितुम्' इत्यध्याहारे भाष्ये त्तवाप्रत्ययादेशल्यबपि विवक्षितार्थः सम्पत्स्यते, न सम्पत्स्यते चाविवक्षितोऽर्थः । तथापि सहश्रुतनिखिलपदानां सम्भूयकारित्वस्य व्युत्पत्तिसिद्धत्वात् अर्थविशेषलाभाच्च अध्याहारापेक्षया प्रत्ययमात्रस्य विवक्षितार्थ(त्व)वर्णनमेव उचितमिति भावेनैवमुक्तम् । 'विविच्य' इत्यस्य तात्पर्यम् **प्रकरणशुद्ध्येति** । 'एतज्ज्ञानमिति प्रोक्तम्' इति, 'एतत्क्षेत्रं समासेन सविकारमुदाहृतम्' इति, 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वा' इत्यादिरूपया च तत्तत्प्रकरणपरिशुद्ध्येत्यर्थः ॥ १-३ ॥

**गीतातात्पर्यनिर्णयः**

## सर्वार्थसङ्क्षेपोऽयम् ।

*प्रका०*— सर्वान् सङ्क्षिपति सङ्क्षिप्य प्रतिपादयति इति सर्वार्थसङ्क्षेपोऽयमध्यायः इत्यर्थः ।

***न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति सर्वेति ॥ यत् प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तं, यच्च द्वितीये भगवत्स्वरूपं निरूपितं, "न त्वेवाहम्" इत्यादौ यज्जीव-स्वरूपं प्रदर्शितं, "भूमिरापोऽनल" इत्यादौ यत् क्षेत्रमभिहितं तद्विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्य अस्मिन्नध्याये प्रदर्शयतीत्यर्थः । सर्वेषामध्यायानामर्थान् सङ्क्षिपति सङ्क्षिप्य दर्शयतीति सर्वार्थसङ्क्षेपः ।**

***भा०दी०*—** पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् इत्यादिभाष्योक्तदिशा तात्पर्यवाक्यं विवृणोति **यत्प्रथमेत्यादिना** । "बहूनि मे व्यतीतानि जन्मानी"त्यादेरपि कथनादुक्तं **प्राचुर्येणेति** ॥ **द्वितीय**

**इति** । षट्क इत्यनुषज्यते । "न त्वेवाहमि"त्यादौ **यज्जीवस्वरूपमिति** । द्वितीयाध्यायादाविति योज्यम् । तत्र जीवस्वरूपोक्तेरेव प्राधान्यं भगवत्स्वरूपं तु तादर्थ्येनेति भावः ॥ **क्षेत्रमिति** । क्षीयते हरिरत्रेति भगवदावासस्थानमुक्तमित्यर्थः । सङ्क्षेपशब्दस्य भावार्थत्वेऽध्याहृताध्यायपदेन सामानाधिकरण्यायोगात् कर्तरि निष्पन्नः सन् प्रदर्शनलक्षक इति भावेनाह **सङ्क्षिपति सङ्क्षिप्य प्रदर्शयतीति सर्वार्थसङ्क्षेप इति** । सङ्क्षिप्य प्रदर्शक इत्यर्थः । करणे कर्तृत्वोपचार इति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।**
**अव्यक्तादि शरीरं तु तत्क्षेत्रं क्षीयतेऽत्र यत् ॥**
**इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिस्तु चेतसः ।**
**तद्विकारा इति ज्ञेयाश्चिद्रूपेच्छादिमिश्रिताः ॥**

***प्रका०*—** "इदं शरीरमि"त्येतद्व्याचष्टे **हिंसेत्यादिना** । महाभूतानीत्यादिना इन्द्रियगोचरा इत्यन्तेन वक्ष्यमाणं "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" शृ हिंसायामिति धातुमभिप्रेत्य हिंसाहेतुरित्युक्तम् । क्षीयते अवस्थीयते परेशेनात्रेत्यव्यक्तादि **क्षेत्र**मित्यर्थः । "इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्" इति । यदिच्छादीनां क्षेत्रविकारत्ववचनं तद्विकारेच्छादिविषयमित्याह **इच्छेत्यादिना** ।

***न्या०दी०*— तत्र "तत् क्षेत्रं यच्च" इति प्रतिज्ञातम् । भगवज्ज्ञानस्यैव मोक्षहेतुत्वात् क्षेत्रं भगवत्स्वरूपं चोभयं किमर्थमुच्यत इत्याशङ्का तावत्परिहियते 'इदं' इति । तत्र 'सङ्घातश्चेतना' इति क्षेत्रविकारत्वेनोक्तशरीरस्य कथं समस्तक्षेत्रत्वमुच्यत इत्याशङ्कापरिहाराय श्रुत्यैतद्व्याचष्टे हिंसेति ॥ जीवस्य स्वतो नित्यत्वात् देहादितया परिणतैतदुपघातादेव जीवो हिंसित इत्युच्यते । अव्यक्तादिकं हिंसाहेतुर्जीवस्य भवति । शृ हिंसायामिति धातोर्हिंसाहेतुत्वात् शर् । परेणेर्यत्वादीरमिति शरीरमित्यर्थः । क्षीयतेऽत्रेत्यस्मिन् अव्यक्तादिशरीरे भगवता स्थीयत इत्यर्थः । क्षि निवासगत्योरिति धातोः । अव्यक्तादि इत्यनेन महाभूतानीत्यस्यार्थ उक्तो भवति । तद्विकाराः क्षेत्रविकाराः । अनेन "इच्छाद्वेष" इत्युक्तार्थं भवति । विकारित्वं च न चिद्रूपेच्छादीनामिति भावेनाह चिद्रूपेति ॥ अनेन स्वयमचिद्रूपा इति लभ्यते । वर्तन्त इति शेषः ।**

तर्हि कोऽयमर्थो विवक्षितः ? इत्यतः तं दर्शयति **पिण्डीकरणार्थमित्यर्थ इति** । विप्रकीर्ण-स्यैकीकरणार्थमित्यर्थः । अभ्युपगता च मीमांसकैः 'अग्निहोत्रं जुहोति', 'यवागूं पचति' इत्यत्र श्रुतक्रमम् अविवक्षित्वा, तिप्रत्ययस्य क्त्वाप्रत्ययार्थमङ्गीकृत्य 'यवागूं पक्त्वा अग्निहोत्रं जुहुयात्' इति वचनव्यक्तिः । तथा च कृतचोद्यपरिहारो भाष्यारूढ इति भावः । एतेन ''विविच्यदर्शनपश्चात्तनस्य पिण्डीकरणस्य तत्पूर्वकालत्वायोगात् कथं भाष्ये 'समानकर्तृकयोः पूर्वकाले' इति सूत्रविहित-क्त्वाप्रत्ययादेशल्यबुक्तिः'' इति शङ्का परिहृता । पिण्डीकरण-विविच्यदर्शनयोः आकाङ्क्षाक्रमेण फलफलिभावो ज्ञातव्य इत्यभिप्रायावेदनात् । **अन्ये तु** 'गौणः' इति पदं यथा 'सिंहश्चैत्रः' इत्यत्र सिंहपदं मृगेन्द्रगतक्रौर्यादिगुणयोगेन चैत्रे वर्तत इत्यविवक्षितार्थः, एवम् अविवक्षितार्थत्वगुणयोगेन क्त्वाप्रत्यये वर्तयितव्यम् इत्यविवक्षितार्थक इति व्याख्येयम् । तथा च' पिण्डीकरणार्थम्' इत्यर्थलाभ इत्याहुः । गौणः = तुमर्थलक्षक इत्यर्थ इति **अपरे** ।

यद्यपि 'श्रोतृशेमुषीमारोहयितुम्' इत्यध्याहारे भाष्ये क्त्वाप्रत्ययादेशल्यबपि विवक्षितार्थः सम्पत्स्यते, न सम्पत्स्यते चाविवक्षितोऽर्थः । तथापि सहश्रुतनिखिलपदानां सम्भूयकारित्वस्य व्युत्पत्तिसिद्धत्वात् अर्थविशेषलाभाच्च अध्याहारापेक्षया प्रत्ययमात्रस्य विवक्षितार्थ(त्व)वर्णनमेव उचितमिति भावेनैवमुक्तम् । 'विविच्य' इत्यस्य तात्पर्यम् **प्रकरणशुद्ध्येति** । 'एतज्ज्ञानमिति प्रोक्तम्' इति, 'एतत्क्षेत्रं समासेन सविकारमुदाहृतम्' इति, 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वा' इत्यादिरूपया च तत्तत्प्रकरणपरिशुद्ध्येत्यर्थः ॥ १-३ ॥

**गीतातात्पर्यनिर्णयः**

## सर्वार्थसङ्क्षेपोऽयम् ।

*प्रका०*— सर्वान् सङ्क्षिपति सङ्क्षिप्य प्रतिपादयति इति सर्वार्थसङ्क्षेपोऽयमध्यायः इत्यर्थः ।

***न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति सर्वेति ॥ यत् प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तं, यच्च द्वितीये भगवत्स्वरूपं निरूपितं, "न त्वेवाहम्" इत्यादौ यज्जीव-स्वरूपं प्रदर्शितं, "भूमिरापोऽनल" इत्यादौ यत् क्षेत्रमभिहितं तद्विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्य अस्मिन्नध्याये प्रदर्शयतीत्यर्थः । सर्वेषामध्यायानामर्थान् सङ्क्षिपति सङ्क्षिप्य दर्शयतीति सर्वार्थसङ्क्षेपः ।**

*भा०दी०*— पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् इत्यादिभाष्योक्तदिशा तात्पर्यवाक्यं विवृणोति **यत्प्रथमेत्यादिना** । ''बहूनि मे व्यतीतानि जन्मानी''त्यादेरपि कथनादुक्तं **प्राचुर्येणेति** ॥ **द्वितीय**

**इति** । षट्क इत्यनुषज्यते । ''न त्वेवाहमि''त्यादौ **यज्जीवस्वरूपमिति** । द्वितीयाध्यायादाविति योज्यम् । तत्र जीवस्वरूपोक्तेरेव प्राधान्यं भगवत्स्वरूपं तु तादर्थ्येनेति भावः ॥ **क्षेत्रमिति** । क्षीयते हरिरत्रेति भगवदावासस्थानमुक्तमित्यर्थः । सङ्क्षेपशब्दस्य भावार्थत्वेऽध्याहृताध्यायपदेन सामानाधिकरण्यायोगात् कर्तरि निष्पन्नः सन् प्रदर्शनलक्षक इति भावेनाह **सङ्क्षिपति सङ्क्षिप्य प्रदर्शयतीति सर्वार्थसङ्क्षेप इति** । सङ्क्षिप्य प्रदर्शक इत्यर्थः । करणे कर्तृत्वोपचार इति भावः ॥

**गीतातात्पर्यनिर्णयः**

**''हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।**
**अव्यक्तादि शरीरं तु तत्क्षेत्रं क्षीयतेऽत्र यत् ॥**
**इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिस्तु चेतसः ।**
**तद्विकारा इति ज्ञेयाश्चिद्रूपेच्छादिमिश्रिताः ॥**

*प्रका०*— ''इदं शरीरमि''त्येतद्व्याचष्टे **हिंसेत्यादिना** । महाभूतानीत्यादिना इन्द्रियगोचरा इत्यन्तेन वक्ष्यमाणं ''इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते'' शृ हिंसायामिति धातुमभिप्रेत्य हिंसाहेतुरित्युक्तम् । क्षीयते अवस्थीयते परेशेनात्रेत्यव्यक्तादि क्षेत्रमित्यर्थः । ''इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्'' इति । यदिच्छादीनां क्षेत्रविकारत्ववचनं तद्विकारेच्छादिविषयमित्याह **इच्छेत्यादिना** ।

***न्या०दी०*— तत्र ''तत् क्षेत्रं यच्च'' इति प्रतिज्ञातम् । भगवज्ज्ञानस्यैव मोक्षहेतुत्वात् क्षेत्रं भगवत्स्वरूपं चोभयं किमर्थमुच्यत इत्याशङ्का तावत्परिहियते 'इदं' इति । तत्र 'सङ्घातश्चेतना' इति क्षेत्रविकारत्वेनोक्तशरीरस्य कथं समस्तक्षेत्रत्वमुच्यत इत्याशङ्कापरिहाराय श्रुत्यैतद्व्याचष्टे हिंसेति ॥ जीवस्य स्वतो नित्यत्वात् देहादितया परिणतैतदुपघातादेव जीवो हिंसित इत्युच्यते । अव्यक्तादिकं हिंसाहेतुर्जीवस्य भवति । शृ हिंसायामिति धातोर्हिंसाहेतुत्वात् शर् । परेणेर्यत्वादीरमिति शरीरमित्यर्थः । क्षीयतेऽत्रेत्यस्मिन् अव्यक्तादिशरीरे भगवता स्थीयत इत्यर्थः । क्षि निवासगत्योरिति धातोः । अव्यक्तादि इत्यनेन महाभूतानीत्यस्यार्थ उक्तो भवति । तद्विकाराः क्षेत्रविकाराः । अनेन ''इच्छाद्वेष'' इत्युक्तार्थं भवति । विकारित्वं च न चिद्रूपेच्छादीनामिति भावेनाह चिद्रूपेति ॥ अनेन स्वयमचिद्रूपा इति लभ्यते । वर्तन्त इति शेषः ।**

*भा०दी०*— **परिहियत इति** । क्षेत्रज्ञत्वप्रकारकभगवज्ज्ञानोपयोगित्वात् क्षेत्रत्वोक्तेरिति भावेन इति योज्यम् । सङ्घातश्चेतनेतीत्यनन्तरं वक्ष्यमाणेति योज्यम् । क्षेत्रविकारेषु एकदेशत्वेन सङ्घात-पदेनोक्तेत्यर्थः ॥ **इति धातोरिति** । विच्प्रत्यये सार्वधातुकेति गुणे च शरिति रूपमिति भावः ॥ **ईर्यत्वादीरमिति** । ईर प्रेरण इति धातोः कर्मणि घञि ईरमिति रूपमिति भावः ॥ **इति धातोः इति** । अधिकरणे औणादिकत्रप्रत्यये गुणे च क्षेत्रमिति सिद्धमिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**विकारेच्छादिनिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः ।**
**मुक्त इत्युच्यते जीवो मुक्तिश्च द्विविधा मता ॥**
**चिन्मात्रद्वेषदुःखे च देहो मिथ्यादृगात्मकः ।**
**निषिद्धेच्छा च यत्र स्युर्नित्या स मुक्तिरासुरी ॥**
**चिन्मात्रा वैष्णवी भक्तिर्देहः सम्यग् दृगात्मकः ।**
**सुखमिच्छाऽनुकूला च मुक्तिर्दैवीति सा मता ॥"**

**—इति नारायणश्रुतिः ।**

*न्या०दी०*— **किमेतेषां सदा मिश्रतयाऽवस्थानमित्यतः संसार एव न सर्वदेति भावेनाह विकारेति ॥ मुक्तौ द्वेषदुःखाभावात् कथं चिन्मात्रेच्छादिसंयुतो मुक्तः स्यादित्यत आह मुक्तिश्चेति ॥ आसुरी दैवी चेति शेषः । तर्हि दैवमुक्तौ द्वेषाद्ययोगादासुरमुक्तौ च सुखाद्ययोगादधिकं सङ्कटमेवेत्यतः प्रत्येकमिच्छाद्यशेषासम्भवेऽपि विभागेन तत्सम्भवा-दविरोध इति भावेनाऽह चिन्मात्रेति ॥ यत्र स्युरित्युत्तरत्रापि सम्बद्ध्यते । इच्छादि-ष्वपठिताऽपि विष्णुभक्तिर्द्वेषस्य पठितत्वेन तत्प्रतियोगितया गृह्यते ।**

*भा०दी०*— उत्तरत्रापि सम्बद्ध्यत इति । "दैवी तु सा मते"त्यतःपूर्वमित्यर्थः ॥ **तत्प्रतियोगितयेति** । तद्विरोधितयेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"क्षेत्रज्ञो भगवान् विष्णुर्न ह्यन्यः क्षेत्रमञ्जसा ।**
**वेत्त्यसौ भगवान् ज्ञेयो व्यक्ताव्यक्तविलक्षणः ॥**

स तु जीवेषु सर्वेषु बहिश्चैव व्यवस्थितः ।
विलक्षणश्च जीवेभ्यः सर्वेभ्योऽपि सदैव च ॥

*प्रका०*— "एतद्यो वेत्ति" इत्यादेरर्थमाह **क्षेत्रज्ञ इत्यादिना** ।

*न्या०दी०*— "एतद्यो वेत्ति" इत्येतज्जीवविषयतया प्रतीतिनिरासाय वचनान्तरेण व्याचष्टे **क्षेत्रज्ञ इति** । यः क्षेत्रं जानाति स सर्वोऽपि क्षेत्रज्ञः, अतो विष्णुरिति किं विशिष्योच्यत इत्यत आह **न हीति** ॥ किमयं स्वयं क्षेत्रान्तर्भूतः सन् तज्जानातीत्यपेक्षायामाह **असाविति** ॥ अनेन "न सत्तत्" इति व्याख्यातं भवति । सर्वासन्निहितत्वात् कथं सर्वज्ञानं हरेरित्यत आह **स इति** ॥ एतेन "बहिरन्तश्च" इति व्याख्यातं भवति । विष्णोः सर्वजीवाभिन्नत्वात् कथं तेषु स्थितिरित्यत आह **विलक्षणश्चेति** ॥

*भा०दी०*— **न सत्तदिति** । "न सत्तन्नासदुच्यत" इति गीतावाक्यं व्याख्यातमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ॥
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद् वा सर्वतः पाणिपादवान् ॥

*प्रका०*— सर्वतः पाणिपादादिः इत्यादिना "सर्वतः पाणिपादम् । तत्" इत्यादेः अर्थ उच्यते ।

*न्या०दी०*— कथं वैलक्षण्यमित्यत आह **सर्वत इति** ॥ केशादिषु पाण्यादिशक्तिमत्त्वं युक्तिविरुद्धमित्यतः प्रतीतत्वान्न युक्तिविरुद्धमिति भावेनाह **कृष्णेति** ॥ अनेन 'सर्वतः' इत्युक्तार्थं भवति ।

**गीतातात्पर्यनिर्णयः**

सर्वेन्द्रियाणां विषयान् वेत्ति सोऽप्राकृतेन्द्रियः ।
यतोऽतोऽनिन्द्रियः प्रोक्तो यन्न भिन्नेन्द्रियोऽथवा ।
गुणैः सत्त्वादिभिर्हीनः सर्वकल्याणमूर्तिमान् ॥

***न्या०दी०***— का नाम भगवत्पाण्यादिशक्तिरित्यत आह **सर्वेति** ॥ वेत्तीत्येतत् कर्मणोऽप्युपलक्षणम् । अनेन 'सर्वेन्द्रियगुण' इति व्याख्यातं भवति । सर्वेन्द्रियगुणा आभास्यन्तेऽनु यन्तेऽनेनेति । भगवतः पाण्यादिमत्त्वे श्रुत्यादावनिन्द्रियत्वोक्तिः कथमित्यत आह **स इति** ॥ अनेन ''सर्वेन्द्रियविवर्जितं'' इत्युक्तार्थं भवति । ज्ञानादिगुणसद्भावे कथं तस्य निर्गुणत्वोक्तिरित्यत आह **गुणैरिति** ॥ कुत एवं निर्गुणत्वश्रुतेरर्थान्तरं कल्प्यते ? सर्वथा गुणराहित्यमेव किं न स्यादित्यतः तस्य सर्वकल्याणगुणमूर्तिमत्त्वेन प्रमाणसिद्धत्वादित्याह **सर्वेति** ॥ अनेन 'निर्गुणं' इत्युक्तार्थं भवति ।

***भा०दी०***— **कर्मणोऽप्युपलक्षणमिति** । सर्वकर्मेन्द्रियकर्माणि करोति चेत्यपि ज्ञेयमित्यर्थः ॥ **अनेनेतीति** । इति व्याख्यातमितीति पूर्वेणान्वयः ।

**गीतातात्पर्यनिर्णयः**

अन्यथाभावराहित्यादचरश्चर एव च ।
''चरमात् सर्वदेशेषु व्याप्तोऽणुर्मध्यमस्तथा ॥

***न्या०दी०***— हरेः पाणिपादादिमत्त्वेऽचरत्वोक्तिः कथमित्यत आह **अन्यथेति** ॥ क्वचिच्चरत्वोक्तेः कथं विकारित्वाभाव इत्यत आह **चर इति** ॥ अनेन ''अचरं चरमेव च'' इति व्याख्यातं भवति । कथं सर्वगतस्य चरणमित्यतो न तस्य सर्वगतत्वमेव किन्त्वणुत्वं मध्यमत्वं चास्तीत्याह **व्याप्त इति** ॥ अनेन ''सर्वमावृत्य तिष्ठति'', ''हृदि सर्वस्य विष्ठितम्'' इत्याद्युक्ततात्पर्यं भवति ।

***भा०दी०***— **इत्याद्युक्ततात्पर्यं भवतीति** । महत्त्वाणुत्वपरिमाणरूपेण हृदि विष्ठितमित्युक्तं भवतीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

सर्वगत्वात् समीपे च दूरे चैवान्तरे च सः ॥

***न्या०दी०***— 'तद्दूरे तद्वन्तिक' इत्यादौ विरुद्धधर्मोक्तयेश्वरस्य निःस्वभावत्वोक्तेः कथमुक्तं युक्तं स्यादित्यतस्तद्घटयति **सर्वगत्वादिति** ॥ अनेन 'दूरस्थम्' इति व्याख्यातं भवति ।

**गीतातात्पर्यनिर्णयः**

**अनन्ताव्ययशक्तित्वात् तदन्यत्र विरोधिनः ।**
**सन्ति सर्वे गुणास्तत्र न च तत्र निरोधिनः ॥" इति च ।**

***न्या०दी०*— व्याप्तत्वाणुत्वादीनां वस्त्वन्तरे सहानवस्थानात् कथं हरौ सह स्थितिरित्यत आह अनन्तेति ॥ अनन्ताव्ययशक्तित्वेऽपि विरोधिनः कथं तेऽत्र सन्तीत्यत आह न चेति ॥**

**गीतातात्पर्यनिर्णयः**

**न च जीवस्य क्षेत्रज्ञनाम ।**

**"क्षेत्रज्ञ एता मनसो विभूती-**
**र्जीवस्य मायारचिता अनित्याः ।**
**आविर्हिताश्चापि तिरोहिताश्च**
**शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥" —इति भागवते ।**

*प्रका०*— अत्र जीवादिभिन्नः क्षेत्रज्ञः प्रतिपाद्यते । सर्वतः पाणिपादादिप्रभाववत्यात् । एतदर्थं प्रमाणेनोपपादयति **क्षेत्रज्ञ एता इति** ।

***न्या०दी०*— क्षेत्रज्ञनाम्नो जीवे प्रसिद्ध्यभावाच्च नात्रासावुच्यत इत्याह न चेति ॥ क्वचित् सद्भावेऽपि तदमुख्यमिति भावः । न च विष्णावपि क्षेत्रज्ञनाम्नो न प्रसिद्धिरिति वाच्यम् । उक्तवचन एव प्रसिद्धत्वात् । वचनान्तरेऽपि तत्प्रसिद्धिं दर्शयति क्षेत्रज्ञ इति ॥ मनसो विभूतीर्मनसो विकारान् । मायारचिताः निमित्तभूतस्वेच्छारचिताः ।**

*भा०दी०*— **उक्तवचन एवेति** । "क्षेत्रज्ञो भगवान्विष्णुरि"ति प्रागुक्तवचन एव प्रसिद्ध-त्वादित्यर्थः । मनोविकारान् ज्ञानेच्छादीनित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अतः "एतद् यो वेत्ति" इत्युक्ते जीवस्यापि किञ्चिज्ज्ञानात् तत्प्राप्तेः तन्निरा-करणार्थं "क्षेत्रज्ञं चापि मां विद्धि" इत्याह ।**

*प्रका०*— अत एवोक्तं भगवता क्षेत्रज्ञं चापि मां विद्धीति । वैयर्थ्यात् तदाह **अत एतदित्यादिना** ।

***न्या०दी०*— इतश्च "एतद्यो वेत्ति" इत्येतन्न जीवपरमित्याह अत इति ॥ यतोऽत्र न जीवो विवक्षितोऽत एव एतद्यो वेत्तीति भगवदभिप्रायेण । सामान्यतः क्षेत्रज्ञशब्दस्य व्युत्पादितत्वात् जीवस्यापि किञ्चित्क्षेत्रज्ञानसद्भावात् तस्य क्षेत्रज्ञत्वप्राप्तेस्तन्निराकरणाय क्षेत्रज्ञं मामित्युक्तमित्यर्थः ।**

**गीतातात्पर्यनिर्णयः**

अन्यथा "एतद् यो वेत्ति" इत्युक्तेनैव सिद्धत्वात् "क्षेत्रज्ञं चापि" इति व्यर्थम् ।

*प्रका०*— एतद्यो वेत्ति इत्येतत् स्वपक्षे घटयति **भेदेत्यादिना** ।

***न्या०दी०*— जीवस्य क्षेत्रज्ञत्वनिराकरणाय क्षेत्रज्ञं मामित्युक्तमिति कुत इति चेत् ? किम् "एतद्यो वेत्ति" इत्यस्येश्वरपरत्वमभ्युपगम्येदमुच्यते उत जीवविषयत्वम् ? पक्षद्वयं दूषयति अन्यथेति ॥ "एतद्यो वेत्ति" इत्यस्येश्वरपरत्वमङ्गीकृत्य "क्षेत्रज्ञं माम्" इत्यस्य जीवव्यावर्तकत्वानङ्गीकारे परमेश्वरस्य "एतद्यो वेत्ति" इत्यनेनैव क्षेत्रज्ञत्वसिद्धेः क्षेत्रज्ञं मामिति पुनस्तद्वचनस्य वैय्यर्थ्यं स्यात् । एतद्यो वेत्तीत्यस्य जीवपरत्वमङ्गीकृत्य क्षेत्रज्ञं मामित्यस्य जीवव्यावर्तकत्वानङ्गीकारे वक्तव्यस्य जीवक्षेत्रज्ञत्वस्य एतद्यो वेत्तीत्युक्तेनैव पूर्णत्वात् क्षेत्रज्ञं मामिति निरर्थकं विरुद्धार्थं च स्यादिति भावः ।**

*भा०दी०*— व्यर्थपदस्यार्थद्वयमाह **निरर्थकं विरुद्धार्थं च स्यादिति** । जीवस्य क्षेत्रज्ञत्वपक्षे भगवतः क्षेत्रज्ञत्वोक्तेर्विरोधादिति भावः ।

**गीतातात्पर्यनिर्णयः**

भेदपक्षे तु नामनिरुक्त्यर्थं "एतद् यो वेत्ति" इति ।

***न्या०दी०*— एतद्यो वेत्तीत्यस्य जीवपरत्वेऽपि नोत्तरवाक्यवैय्यर्थ्यम् । जीवस्य क्षेत्रज्ञत्वमुक्त्वा ईश्वरस्याप्युच्यत इति क्षेत्रज्ञत्वेनोक्तजीवस्य क्षेत्रस्य चेश्वरैक्यमुच्यत इति सार्थक्योपपत्तेः । प्रत्युतैवमनभ्युपगम्येश्वरस्यैव क्षेत्रज्ञत्वाङ्गीकृतावेतद्यो वेत्तीति व्यर्थं**

**स्यात् । क्षेत्रज्ञं चापीत्यनेनैवेश्वरस्य क्षेत्रज्ञत्वसिद्धेरित्यत आह भेदेति ॥ जीवस्य क्षेत्रज्ञत्वमुक्त्वा तस्येश्वराभेद उच्यत इत्यादियोजनामनङ्गीकृत्येश्वरस्य क्षेत्रज्ञत्वाङ्गीकारेऽप्येतद्यो वेत्तीति सार्थकमेव । क्षेत्रज्ञनामनिरुक्त्यर्थत्वादित्यर्थः ।**

*भा०दी०*— शङ्कते **एतदित्यादिना** । उच्यत इतीत्यनन्तरं वाशब्दो योज्यः । क्वचित्तथैव पाठः । क्षेत्रज्ञं चापि मामित्यत्र क्षेत्रं चासौ तज्ज्ञानश्चेति व्युत्पत्तिमुपेत्य ज्ञशब्दार्थोक्तिर्जीवस्य क्षेत्रज्ञस्येति । यद्वा क्षेत्रज्ञजीवं सर्वक्षेत्रं च मामिति सर्वक्षेत्रपदं द्वितीयान्ततया विपरिणाम्यानुवदति **क्षेत्रस्य चेति** । शङ्कामनुवदति **जीवस्येत्यादिना** ॥ **इत्यादियोजनामिति** । प्रागुक्तव्युत्पत्त्या क्षेत्राभेदश्चोच्यत इति योजनामित्यादिपदार्थः ।

**गीतातात्पर्यनिर्णयः**

## सर्वाभेदमपि केचिद् वदन्तीति क्षेत्रं च ज्ञश्चेति व्युत्पत्तिं निवारयति ।

***न्या०दी०*— क्षेत्रं जानातीति क्षेत्रज्ञनामनिरुक्तेः प्रसिद्धत्वात् क्षेत्रज्ञं चापि मामित्येतावतैवालं किं निरुक्त्येत्यत आह सर्वेति ॥ "क्षेत्रज्ञं चापि मां विद्धि" इत्येवोक्ते क्षेत्रं च ज्ञश्चेति क्षेत्रज्ञ इति व्युत्पत्त्या जडजीवात्मकत्वमीश्वरस्यैवोच्यत इति प्रतीतिः स्यात् । तन्निराकरणाय प्रसिद्धाऽपि व्युत्पत्तिरुच्यते । न च प्रसिद्धव्युत्पत्तिं परित्यज्यैवं व्युत्पत्त्या शङ्काप्राप्तिरेव नास्तीति वाच्यम् । जडजीवात्मकस्य सर्वस्यापीश्वरेणाभेदमङ्गीकुर्वतां तथा प्रतीतिसम्भवादिति भावः ।**

*भा०दी०*— शङ्कते **क्षेत्रं जानातीति** ॥

**गीतातात्पर्यनिर्णयः**

## क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धीत्यर्थः ।

*प्रका०*— क्षेत्रज्ञं चापीत्येतद्व्याचष्टे **क्षेत्रज्ञमिति** । एतद्यो वेत्तीत्यनेन ईश्वरस्यापि क्षेत्रज्ञत्वसिद्धेः क्षेत्रज्ञं मामित्यनूद्य सर्वक्षेत्रेषु स्थितत्वेन (मेव) विधीयते इत्यर्थः ।

***न्या०दी०*— ईश्वरस्य क्षेत्रज्ञनामनिरुक्तिः, जीवस्य तदभाव इत्येतत्सर्वस्य एतद्यो वेत्ति ईश्वरः तं क्षेत्रज्ञं प्राहुरित्यादिवाक्य एव ईश्वरवाचिपदप्रक्षेपेण वक्तुं शक्यत्वात् तदर्थं पृथग् वाक्यकल्पने गौरवमित्यत आह क्षेत्रज्ञमिति ॥ नोत्तरवाक्ये जीवव्यावृत्त्यर्थमेव स्वस्य क्षेत्रज्ञत्वमात्रमुच्यते । येन गौरवं स्यात् । किन्तु जीवव्यावृत्त्यर्थमीश्वरस्यास्फुट-**

**मुक्तं क्षेत्रज्ञत्वं स्फुटमनूद्य अव्यक्तादिशरीरस्य कथं क्षेत्रशब्दवाच्यत्वमित्यतः क्षीयतेऽत्र ईश्वरेणेति क्षेत्रमित्यर्थसूचनाय स्वस्य क्षेत्रे स्थितिश्चोच्यत इति भावः ।**

*भा०दी०*— **इत्येतत्सर्वस्येति** । इत्यभिमतार्थस्य सर्वस्येत्यर्थः । आदिवाक्य एव प्रश्न-वाक्य एवेत्यर्थः । इतीश्वरवाचिपदप्रक्षेपेणेत्यन्वयः ॥ **पृथग्वाक्येति** । एतद्यो वेत्तीति क्षेत्रज्ञं चापि मामिति पृथग्वाक्येत्यर्थः ॥ **अव्यक्तादिशरीरस्येति** । इदं शरीरं कौन्तेयेत्यत्रोक्तस्याव्यक्तादि-रूपशरीरस्येत्यर्थः । योगव्युत्पत्त्या शरीरशब्दनिर्दिष्टाव्यक्तादेरिति यावत् ॥ **क्षीयत इति** । स्थीयत इत्यर्थः । क्षि निवासगत्योरिति धातोः ॥

**गीतातात्पर्यनिर्णयः**

तत्पक्षे तु "यो वेत्ति" इत्युक्त ईश्वरस्यापि क्षेत्रज्ञत्वं सिद्धमेव ।

*न्या०दी०*— **यदुक्तमेतद्यो वेत्तीति जीवस्य क्षेत्रज्ञत्वमुक्त्वा क्षेत्रज्ञं चापीति ईश्वर-स्यापि तदुच्यतेऽतो न वैय्यर्थ्यमिति तन्निराचष्टे तत्पक्ष इति ॥ एतद्यो वेत्तीत्यस्य जीव-विषयत्वपक्षे क्षेत्रं जानातीति क्षेत्रज्ञ इति व्युत्पत्तेर्जीव इव ईश्वरेऽपि साम्येन एतद्यो वेत्तीत्युक्त्यैवेश्वरस्यापि क्षेत्रज्ञत्वं सिद्ध्यत्येव । अतः क्षेत्रज्ञं चापीति वाक्यं व्यर्थमेवेति भावः ।**

**गीतातात्पर्यनिर्णयः**

सर्वाभेदविवक्षायां च सर्वं क्षेत्रमिति वक्तव्यम् । 'क्षेत्रेषु' इति व्यर्थम् ।

*प्रका०*— जीवादिनेश्वरस्यैक्यविधाने दूषणमाह **सर्वेत्यादिना** ॥

*न्या०दी०*— **क्षेत्रज्ञतयोक्तजीवस्य क्षेत्रस्य चेश्वराभेदकथनाय क्षेत्रज्ञं चापि मां विद्धीति सार्थकमित्युक्तं दूषयति सर्वेति ॥ यदि क्षेत्रज्ञं चापि मामित्यत्र क्षेत्रक्षेत्रज्ञरूपस्य सर्वस्याभेदो विवक्षितः स्यात् तर्हि सर्वक्षेत्रं क्षेत्रज्ञं चापि मां विद्धीति वक्तव्यम् । सर्वक्षेत्रेष्विति सप्तमीप्रयोगोऽनुपपन्नः स्यादिति भावः ।**

*भा०दी०*— **अनुपपन्नः स्यादिति** । विपरिणामरस्त्वगतिकागतिरिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**न च तत्पक्षे मामित्यस्य कश्चिद् विशेषः । किन्त्वेक एव क्षेत्र इति वक्तव्यम् ॥ ३ ॥**

***न्या०दी०***— तर्हि क्षेत्रज्ञस्यैवेश्वराभेदोऽत्रोच्यताम् । तथात्वे बाधकाभावादित्यत आह **न चेति** ॥ यदि क्षेत्रज्ञतयोक्तजीवस्येश्वरस्य चैक्यमत्र विवक्षितं स्यात् तर्हि क्षेत्रज्ञोऽहं चैक एवेति वक्तव्यम् । न तु क्षेत्रज्ञमनूद्येश्वरत्वविधानं युज्यते । जीवमनूद्य मां विद्धीति विधातुमस्येश्वरस्यापि जीववत् कल्पितत्वेन विशेषाभावादिति भावः ॥

**गीता**

## तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
## स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥

***वि०वि०***— क्षेत्रादिस्वरूपं वक्तुं प्रतिजानीते **तत्क्षेत्रमिति** । यद्यत्स्वरूपं यादृक् यत्प्रकारकम्, यद्विकारि येन विकारेण युक्तम्, यतो यादृशप्रवृत्त्यनुकूलधर्मवतः पुरुषात्, यत् गच्छत् प्रवर्तत इत्यर्थः । स च प्रवर्तको यः यत्स्वरूपः यत्प्रभावः यादृशप्रवृत्त्यनुकूलेतरसामर्थ्यवान् । तत् सर्वम् । समासेन सङ्क्षेपतः । मे सकाशात् शृणु ॥ ४ ॥

***वा०ल०***— क्षेत्रस्वरूपपर्यालोचनायामपि जीवानां क्षेत्रज्ञत्वमसम्भावितमिति भावेन आह **तत्क्षेत्रमिति** । तत्क्षेत्रं यत् यैर्विशेषैर्भरितम्, पाञ्चभौतिककरचरणादिमात्रं वा, क्षेत्रम् इन्द्रियैः इन्द्रियार्थैः पञ्चभूतादिभिश्च सह वा इत्येतच्छृणु । यादृक् बहिर्यादृक् अन्तर्यादृक् तच्छृणु । यद्विकारि यैर्विकारैर्भरितं तच्च श्रुणु । यत् क्षेत्रे यदुत्पन्नम्, यद्यद्वस्तु भागशो विद्यते तत्, यत उत्पन्नम्, तच्च श्रुणु । स च क्षेत्रज्ञः परमात्मा, यः स्थूलरूपेण यः, यत्प्रभावश्च यादृशसामर्थ्यवान् तच्च शृणु । 'यत्' इत्यस्य 'महाभूतानि' इत्यारभ्य, 'सङ्घातश्चेतना धृतिः' इत्यन्तं सकलमप्युत्तरम् ॥ ४ ॥

***सा०सं०***— क्षेत्रादिस्वरूपं वक्तुं प्रतिजानीते **तत्क्षेत्रमिति** । **तत्क्षेत्रं** यद्भगवन्निवासस्थानतया क्षेत्रपदोक्तम् । देहद्वारा जीवहिंसाहेतुतया ईश्वरप्रेर्यत्वहेतुना च शरीरपदेन प्रकृतम् अव्यक्तादि, **यच्च** यत्स्वरूपं **यादृक्** यत्प्रकारं **यद्विकारि** कर्मधारयात् मतुप् येन विकारेण युक्तम् । **यतः** यादृशप्रवृत्त्यनुकूलधर्मयुक्तात् पुरुषात् । **यत्** इणः शत्रन्तं रूपम् । गतिमत् । प्रवर्तत इति यावत् । **स च** प्रवर्तकः । **यः** यत्स्वरूपः । **यत्प्रभावः** यादृशप्रवृत्त्यनुकूलधर्मेतरसामर्थ्यवान् । **तत्** सर्वम् । **समासेन** सङ्क्षेपेण । **मे** सकाशात् । **शृणु** श्रुत्वा निष्ठां कुरु ॥ ४ ॥

***अ०प्र०***— अत्र चतुर्विंशतिभेदैः भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतम् । तथापि देहरूपेण परिणतायां एव तस्यामहंभावेन अविवेकः स्फुरति । तद्विवेकार्थं इदं शरीरं क्षेत्रमित्याद्युक्तं तदेतत्प्रपञ्चयिष्यन् प्रतिजानीते **तत्क्षेत्रमिति** ।

तत् = पूर्वोक्तं[१], क्षेत्रं = अव्यक्तादिरूपं[२], यच्च = यत्स्वरूपं च[३], यादृक् च यत् = प्रकारश्च[४], यद्विकारि = विकारा यस्मिन् तत् यद्विकारि यद्वा, यतश्चासौ विकारश्च यद्विकारः सोऽस्यास्तीति यद्विकारि, येन विकारेण युक्तमित्यर्थः ।[५], यतश्च यत् = यस्माच्च यदुत्पद्यते । यद्वा, यतः यादृशप्रवृत्त्यनुकूलधर्मवतः पुरुषात् यत् एति गच्छति प्रवर्तत इति यत् । 'इण् गतौ' इत्यस्य शत्रन्तस्य रूपम् ।'[६], स च = प्रवर्तकोऽपि क्षेत्रज्ञः[७], यः = यत्स्वरूपः ज्ञेयत्वेन प्रतिपाद्यः[८], यत्प्रभावश्च = प्रवृत्त्यनुकूलसामर्थ्यस्य प्रतिज्ञातत्वात्तदितरं यादृशसामर्थ्यवानित्यर्थः ।[८], तत् सर्वं समासेन = सङ्क्षेपेण[९], मे = मत्सकाशात्[१०] शृणु ॥ ४ ॥

**भाष्यम्**

## यद्विकारि येन विकारेण युक्तम् । यतश्च यत् यतो याति प्रवर्तते ।

***प०टी०***— 'यद्विकारि' इति भिन्नपदत्वशङ्कानिरासाय व्याचष्टे **यदिति** । तत्र 'क्षेत्रं यच्च' इत्यनेनागतार्थतया 'यतश्च यत्' इति व्याचष्टे **यतश्चेति** ।

***प्र०दी०***— 'यो विकारी यस्य तत् यद्विकारि' इति कश्चित् । तदसत् । बहुव्रीहितायामिनेः वैयर्थ्यात् । किं तु यश्चासौ विकारश्चेति यद्विकारः । सोऽस्यास्तीति यद्विकारीति भावेनाह **यदिति**। अत्र 'येन विकारेण' इत्यनेन कर्मधारयं सूचयति । 'युक्तम्' इति इनेरर्थम् ।

'यतश्च यत्' इत्येतत् 'यस्माच्च यत् कार्यमुत्पद्यते' इति कश्चित् व्याख्यातवान् । तदयुक्तम् । 'यद् विकारि' इत्यनेन गतार्थत्वात् । साध्याहारत्वाच्च । 'विकारांश्च गुणांश्च' इत्यस्यान्यथोपपत्तेः। अपरस्तु 'यतश्च अमानित्वादिभ्यो यज्ज्ञेयं प्राप्यते' इति । तदप्यसत् । अध्याहारादेव । 'अमानित्वम्' इत्यादेः 'अनादिमत्' इत्यादेश्च अन्यथासिद्धेः इति भावेन अन्यथा व्याचष्टे **यतश्चेति** । **यतः** यस्य प्रेरणया । 'यत्' इति इणः लडादेशशत्रन्तस्य रूपम् । इणो यातेश्च अनतिभिन्नार्थत्वात् 'याति' इत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावात् गौणीं वृत्तिमाश्रित्य विवृणोति **प्रवर्तत इति** ।

***भा०दी०***— **इनेरिति** । 'अत इनिठनौ' इति मत्त्वर्थेविहितइनिप्रत्ययस्य वैयर्थ्यादिति भावः। **इत्यनेन गतार्थत्वादिति** । विकारशब्दितकार्यवत्त्वस्य यद्विकारिपदेन प्राप्तत्वात् 'तत् क्षेत्रम्'

इत्यनूद्य 'अनुत्पद्यते' इत्यनेनापि कार्यवत्त्वस्यैव प्राप्त्या 'उत्पद्यते' इति क्रियाध्याहाराच्चेत्यर्थः । ननु विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् इत्यग्रे सत्त्वादिगुणानां कार्यत्वे पुंविकाराणां पृथगुक्तेरिहापि उक्तव्यत्यासेन पौनरुक्त्यमित्यत आह **इत्यस्यान्यथोपपत्तेरिति** । 'तेषांमत्यल्पोऽपि विशेषो लयात्सर्ग' इति विशेषोक्तिः ।

ननु एवं प्रतिज्ञावाक्यानुक्तामानित्वादिसाधनोक्तिः, 'अनादिमत्परं ब्रह्म' इति ज्ञेयोक्तिः 'यज्ज्ञात्वा अमृतमश्नुते' इति प्राप्त्युक्तिश्च अग्रेतना कथं स्यात् ? इत्यत आह अमानित्वमिति । न च 'यो यत्प्रभावश्च' इति वक्तुं इत्यादि भाष्यदिशेति भावः ।

ननु ज्ञानमेव भगवद्विषयकं संसारनाशकं च, न तु 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भवति। **इणो लडादेशशत्रन्तस्येति** । 'इणो यण्' इति यणादेशे 'यत्' इति रूपम् । यातेरेव रूपत्वे 'यात्' इति स्यादिति भावः । **गत्यभावादिति** । प्रकृत्यादेः गतिशून्यत्वेऽपि परिमाणोन्मुखत्वादिरूपप्रवृत्तिरस्तु सम्भवतीति भावः ।

*भा०र०*— **कश्चित्** शङ्करः । रामानुजोऽपि 'यद्विकारि' इत्यनूद्य 'ये चास्य विकाराः' इति भाषमाणः तदनुयाय्येव । **इन इति** । 'अत इनिठनौ' इति शास्त्रप्राप्तस्येनिप्रत्ययस्येत्यर्थः । बहुव्रीहिणैव विकारसम्बन्धावगमसम्भवादिति भावः । 'एकदेशिनैकाधिकरणे' इति निर्देशात्, 'लोहितशालिग्रामः' इत्यादिनिदर्शनाच्च 'न कर्मधारयात् मत्त्वर्थीयः प्रत्ययः' इति वचनमनादरणीयमिति भावेनाह **यश्चासौ विकारश्चेति** । स्वोक्तविग्रहादिकं भाष्याभिमतमित्याह **अत्रेति** । परमभाष्यमनुवदति **यस्माच्चेति** ॥ **गतार्थत्वादिति** । विकारस्यैव कार्यशब्दार्थत्वादिति भावः । **साध्याहारत्वात्** 'यतश्च यत्' इत्यत्र 'यस्माच्च यत् कार्यमुत्पद्यते' इति व्याख्यानाभ्युपगमे 'उत्पद्यते' इति शङ्करेण, 'उत्पन्नम्' इति *रामानुजेन* अश्रुतपदस्य संयोजनाच्चायुक्तमित्यन्वयः । ननु 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' इत्युपरितनवाक्यं पूर्वप्रतिज्ञातोक्तिरूपं वक्तव्यम् । तत्र च सम्भवश्रवणाद् इहापि 'उत्पद्यते' इति पदमध्याहर्तव्यमेव । अन्यथा अप्रतिज्ञातोक्तित्वं स्यात् ? इत्यत आह **विकारांश्च गुणांश्चेत्यस्येति** । 'यतश्च यत्' इति प्रतिज्ञातं प्रेरकस्वरूपं वक्तुं प्रेर्यं यत् सप्रकारं क्षेत्रं तन्निरूपकत्वेन, 'यादृक्' इति प्रतिज्ञातवचनत्वेन च प्रवृत्तं तद्वाक्यम् इत्यन्यथोपपत्तेर्न तस्याध्याहारकल्पकत्वमिति भावः ।

**अध्याहारादेवेति** । 'प्राप्यते' इति पदाध्याहारादेवेत्यर्थः । ननु 'यतश्चामानित्वादिभ्यो यद् ज्ञेयं प्राप्यते' इति प्रतिज्ञावाक्यव्याख्यानानभ्युपगमे 'अमानित्वम्' इत्यादिसाधनोक्तिः, 'अनादिमत्परं

***अ०प्र०***— अत्र चतुर्विंशतिभेदैः भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतम् । तथापि देहरूपेण परिणतायां एव तस्यामहंभावेन अविवेकः स्फुरति । तद्विवेकार्थं इदं शरीरं क्षेत्रमित्याद्युक्तं तदेतत्प्रपञ्चयिष्यन् प्रतिजानीते **तत्क्षेत्रमिति** ।

तत् = पूर्वोक्तं[१], क्षेत्रं = अव्यक्तादिरूपं[२], यच्च = यत्स्वरूपं च[३], यादृक् च यत् = प्रकारश्च[४], यद्विकारि = विकारा यस्मिन् तत् यद्विकारि यद्वा, यतश्चासौ विकारश्च यद्विकारः सोऽस्यास्तीति यद्विकारि, येन विकारेण युक्तमित्यर्थः ।[५], यतश्च यत् = यस्माच्च यदुत्पद्यते । यद्वा, यतः यादृशप्रवृत्त्यनुकूलधर्मवतः पुरुषात् यत् एति गच्छति प्रवर्तत इति यत् । 'इण् गतौ' इत्यस्य शत्रन्तस्य रूपम् ।'[६], स च = प्रवर्तकोऽपि क्षेत्रज्ञः[७], यः = यत्स्वरूपः ज्ञेयत्वेन प्रतिपाद्यः[८], यत्प्रभावश्च = प्रवृत्त्यनुकूलसामर्थ्यस्य प्रतिज्ञातत्वात्तदितरं यादृशसामर्थ्यवानित्यर्थः ।[८], तत् सर्वं समासेन = सङ्क्षेपेण[९], मे = मत्सकाशात्[१०] शृणु ॥ ४ ॥

**भाष्यम्**

## यद्विकारि येन विकारेण युक्तम् । यतश्च यत् यतो याति प्रवर्तते ।

***प०टी०***— 'यद्विकारि' इति भिन्नपदत्वशङ्कानिरासाय व्याचष्टे **यदिति** । तत्र 'क्षेत्रं यच्च' इत्यनेनागतार्थतया 'यतश्च यत्' इति व्याचष्टे **यतश्चेति** ।

***प्र०दी०***— 'यो विकारी यस्य तत् यद्विकारि' इति कश्चित् । तदसत् । बहुव्रीहितायामिनेः वैयर्थ्यात् । किं तु यश्चासौ विकारश्चेति यद्विकारः । सोऽस्यास्तीति यद्विकारीति भावेनाह **यदिति**। अत्र 'येन विकारेण' इत्यनेन कर्मधारयं सूचयति । 'युक्तम्' इति इनेरर्थम् ।

'यतश्च यत्' इत्येतत् 'यस्माच्च यत् कार्यमुत्पद्यते' इति कश्चित् व्याख्यातवान् । तदयुक्तम् । 'यद् विकारि' इत्यनेन गतार्थत्वात् । साध्याहारत्वाच्च । 'विकारांश्च गुणांश्च' इत्यस्यान्यथोपपत्तेः। अपरस्तु 'यतश्च अमानित्वादिभ्यो यज्ज्ञेयं प्राप्यते' इति । तदप्यसत् । अध्याहारादेव । 'अमानित्वम्' इत्यादेः 'अनादिमत्' इत्यादेश्च अन्यथासिद्धेः इति भावेन अन्यथा व्याचष्टे **यतश्चेति** । **यतः** यस्य प्रेरणया । 'यत्' इति इणः लडादेशशत्रन्तस्य रूपम् । इणो यातेश्च अनतिभिन्नार्थत्वात् 'याति' इत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावात् गौणीं वृत्तिमाश्रित्य विवृणोति **प्रवर्तत इति** ।

***भा०दी०***— **इनेरिति** । 'अत इनिठनौ' इति मत्वर्थेविहितइनिप्रत्ययस्य वैयर्थ्यादिति भावः। **इत्यनेन गतार्थत्वादिति** । विकारशब्दितकार्यवत्त्वस्य यद्विकारिपदेन प्राप्तत्वात् 'तत् क्षेत्रम्'

इत्यनूद्य 'अनुत्पद्यते' इत्यनेनापि कार्यवत्त्वस्यैव प्राप्त्या 'उत्पद्यते' इति क्रियाध्याहाराच्चेत्यर्थः । ननु विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् इत्यग्रे सत्त्वादिगुणानां कार्यत्वे पुंविकाराणां पृथगुक्ते-रिहापि उक्तव्यत्यासेन पौनरुक्त्यमित्यत आह **इत्यस्यान्यथोपपत्तेरिति** । 'तेषामत्यल्पोऽपि विशेषो लयात्सर्ग' इति विशेषोक्तिः ।

ननु एवं प्रतिज्ञावाक्यानुक्तामानित्वादिसाधनोक्तिः, 'अनादिमत्परं ब्रह्म' इति ज्ञेयोक्तिः 'यज्ज्ञात्वा अमृतमश्नुते' इति प्राप्त्युक्तिश्च अग्रेतना कथं स्यात् ? इत्यत आह अमानित्वमिति । **न च 'यो यत्प्रभावश्च'** इति वक्तुं इत्यादि भाष्यदिशेति भावः ।

ननु ज्ञानमेव भगवद्विषयकं संसारनाशकं च, न तु 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भवति। **इणो लडादेशशत्रन्तस्येति** । 'इणो यण्' इति यणादेशे 'यत्' इति रूपम् । यातेरेव रूपत्वे 'यात्' इति स्यादिति भावः । **गत्यभावादिति** । प्रकृत्यादेः गतिशून्यत्वेऽपि परिमाणोन्मुखत्वादिरूप-प्रवृत्तिरस्तु सम्भवतीति भावः ।

*भा०र०*— **कश्चित्** शङ्करः । रामानुजोऽपि 'यद्विकारि' इत्यनूद्य 'ये चास्य विकाराः' इति भाषमाणः तदनुयाय्येव । **इन इति** । 'अत इनिठनौ' इति शास्त्रप्राप्तस्येनिप्रत्ययस्येत्यर्थः । बहुव्रीहिणैव विकारसम्बन्धावगमसम्भवादिति भावः । 'एकदेशिनैकाधिकरणे' इति निर्देशात्, 'लोहितशालिग्रामः' इत्यादिनिदर्शनाच्च 'न कर्मधारयात् मत्त्वर्थीयः प्रत्ययः' इति वचनमनादर-णीयमिति भावेनाह **यश्चासौ विकारश्चेति** । स्वोक्तविग्रहादिकं भाष्याभिमतमित्याह **अत्रेति** । परमभाष्यमनुवदति **यस्माच्चेति** ॥ **गतार्थत्वादिति** । विकारस्यैव कार्यशब्दार्थत्वादिति भावः । **साध्याहारत्वात्** 'यतश्च यत्' इत्यत्र 'यस्माच्च यत् कार्यमुत्पद्यते' इति व्याख्यानाभ्युपगमे 'उत्पद्यते' इति शङ्करेण, 'उत्पन्नम्' इति *रामानुजेन* अश्रुतपदस्य संयोजनाच्चायुक्तमित्यन्वयः । ननु 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' इत्युपरितनवाक्यं पूर्वप्रतिज्ञातोक्तिरूपं वक्तव्यम् । तत्र च सम्भवश्रवणाद् इहापि 'उत्पद्यते' इति पदमध्याहर्तव्यमेव । अन्यथा अप्रतिज्ञातोक्तित्वं स्यात् ? इत्यत आह **विकारांश्च गुणांश्चेत्यस्येति** । 'यतश्च यत्' इति प्रतिज्ञातं प्रेरकस्वरूपं वक्तुं प्रेर्यं यत् सप्रकारं क्षेत्रं तन्निरूपकत्वेन, 'यादृक्' इति प्रतिज्ञातवचनत्वेन च प्रवृत्तं तद्वाक्यम् इत्यन्यथोपपत्तेर्न तस्याध्याहारकल्पकत्वमिति भावः ।

**अध्याहारादेवेति** । 'प्राप्यते' इति पदाध्याहारादेवेत्यर्थः । ननु 'यतश्चामानित्वादिभ्यो यद् ज्ञेयं प्राप्यते' इति प्रतिज्ञावाक्यव्याख्यानानभ्युपगमे 'अमानित्वम्' इत्यादिसाधनोक्तिः, 'अनादिमत्परं

***अ०प्र०***— अत्र चतुर्विंशतिभेदैः भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतम् । तथापि देहरूपेण परिणतायां एव तस्यामहंभावेन अविवेकः स्फुरति । तद्विवेकार्थं इदं शरीरं क्षेत्रमित्याद्युक्तं तदेतत्प्रपञ्चयिष्यन् प्रतिजानीते **तत्क्षेत्रमिति** ।

तत् = पूर्वोक्तं[१], क्षेत्रं = अव्यक्तादिरूपं[२], यच्च = यत्स्वरूपं च[३], यादृक् च यत् = प्रकारञ्च[४], यद्विकारि = विकारा यस्मिन् तत् यद्विकारि यद्वा, यतश्चासौ विकारश्च यद्विकारः सोऽस्यास्तीति यद्विकारि, येन विकारेण युक्तमित्यर्थः ।[५], यतश्च यत् = यस्माच्च यदुत्पद्यते । यद्वा, यतः यादृशप्रवृत्त्यनुकूलधर्मवतः पुरुषात् यत् एति गच्छति प्रवर्तत इति यत् । 'इण् गतौ' इत्यस्य शत्रन्तस्य रूपम् ।'[६], स च = प्रवर्तकोऽपि क्षेत्रज्ञः[७], यः = यत्स्वरूपः ज्ञेयत्वेन प्रतिपाद्यः[८], यत्प्रभावश्च = प्रवृत्त्यनुकूलसामर्थ्यस्य प्रतिज्ञातत्वात्तदितरं यादृशसामर्थ्यवानित्यर्थः ।[८], तत् सर्वं समासेन = सङ्क्षेपेण[९], मे = मत्सकाशात्[१०] शृणु ॥ ४ ॥

**भाष्यम्**

## यद्विकारि येन विकारेण युक्तम् । यतश्च यत् यतो याति प्रवर्तते ।

***प०टी०***— 'यद्विकारि' इति भिन्नपदत्वशङ्कानिरासाय व्याचष्टे **यदिति** । तत्र 'क्षेत्रं यच्च' इत्यनेनागतार्थतया 'यतश्च यत्' इति व्याचष्टे **यतश्चेति** ।

***प्र०दी०***— 'यो विकारी यस्य तत् यद्विकारि' इति कश्चित् । तदसत् । बहुव्रीहितायामिनेः वैयर्थ्यात् । किं तु यश्चासौ विकारश्चेति यद्विकारः । सोऽस्यास्तीति यद्विकारीति भावेनाह **यदिति**। अत्र 'येन विकारेण' इत्यनेन कर्मधारयं सूचयति । 'युक्तम्' इति इनेरर्थम् ।

'यतश्च यत्' इत्येतत् 'यस्माच्च यत् कार्यमुत्पद्यते' इति कश्चित् व्याख्यातवान् । तद्युक्तम् । 'यद् विकारि' इत्यनेन गतार्थत्वात् । साध्याहारत्वाच्च । 'विकारांश्च गुणांश्च' इत्यस्यान्यथोपपत्तेः। अपरस्तु 'यतश्च अमानित्वादिभ्यो यज्ज्ञेयं प्राप्यते' इति । तदप्यसत् । अध्याहारादेव । 'अमानित्वम्' इत्यादेः 'अनादिमत्' इत्यादेश्च अन्यथासिद्धेः इति भावेन अन्यथा व्याचष्टे **यतश्चेति** । **यतः** यस्य प्रेरणया । 'यत्' इति इणः लडादेशशत्रन्तस्य रूपम् । इणो यातेश्च अनतिभिन्नार्थत्वात् 'याति' इत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावात् गौणीं वृत्तिमाश्रित्य विवृणोति **प्रवर्तत इति** ।

***भा०दी०***— **इनेरिति** । 'अत इनिठनौ' इति मत्वर्थेविहितइनिप्रत्ययस्य वैयर्थ्यादिति भावः। **इत्यनेन गतार्थत्वादिति** । विकारशब्दितकार्यवत्त्वस्य यद्विकारिपदेन प्राप्तत्वात् 'तत् क्षेत्रम्'

इत्यनूद्य 'अनुत्पद्यते' इत्यनेनापि कार्यवत्त्वस्यैव प्राप्त्या 'उत्पद्यते' इति क्रियाध्याहाराच्चेत्यर्थः । ननु विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् इत्यग्रे सत्त्वादिगुणानां कार्यत्वे पुंविकाराणां पृथगुक्तेरिहापि उक्तव्यत्यासेन पौनरुक्त्यमित्यत आह **इत्यस्यान्यथोपपत्तेरिति** । 'तेषामत्यल्पोऽपि विशेषो लयात्सर्ग' इति विशेषोक्तिः ।

ननु एवं प्रतिज्ञावाक्यानुक्तामानित्वादिसाधनोक्तिः, 'अनादिमत्परं ब्रह्म' इति ज्ञेयोक्तिः 'यज्ज्ञात्वा अमृतमश्नुते' इति प्राप्युक्तिश्च अग्रेतना कथं स्यात् ? इत्यत आह अमानित्वमिति । न च 'यो यत्प्रभावश्च' इति वक्तुं इत्यादि भाष्यदिशेति भावः ।

ननु ज्ञानमेव भगवद्विषयकं संसारनाशकं च, न तु 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भवति। **इणो लडादेशशत्रन्तस्येति** । 'इणो यण्' इति यणादेशे 'यत्' इति रूपम् । यातेरेव रूपत्वे 'यात्' इति स्यादिति भावः । **गत्यभावादिति** । प्रकृत्यादेः गतिशून्यत्वेऽपि परिमाणोन्मुखत्वादिरूपप्रवृत्तिरस्तु सम्भवतीति भावः ।

*भा०र०*— **कश्चित्** शङ्करः । रामानुजोऽपि 'यद्विकारि' इत्यनूद्य 'ये चास्य विकाराः' इति भाषमाणः तदनुयाय्येव । **इन इति** । 'अत इनिठनौ' इति शास्त्रप्राप्तस्येनिप्रत्ययस्येत्यर्थः । बहुव्रीहिणैव विकारसम्बन्धावगमसम्भवादिति भावः । 'एकदेशिनैकाधिकरणे' इति निर्देशात्, 'लोहितशालिग्रामः' इत्यादिनिदर्शनाच्च 'न कर्मधारयात् मत्त्वर्थीयः प्रत्ययः' इति वचनमनादरणीयमिति भावेनाह **यश्चासौ विकारश्चेति** । स्वोक्तविग्रहादिकं भाष्याभिमतमित्याह **अत्रेति** । परमभाष्यमनुवदति **यस्माच्चेति** ॥ **गतार्थत्वादिति** । विकारस्यैव कार्यशब्दार्थत्वादिति भावः । **साध्याहारत्वात्** 'यतश्च यत्' इत्यत्र 'यस्माच्च यत् कार्यमुत्पद्यते' इति व्याख्यानाभ्युपगमे 'उत्पद्यते' इति शङ्करेण, 'उत्पन्नम्' इति *रामानुजेन* अश्रुतपदस्य संयोजनाच्चायुक्तमित्यन्वयः । ननु 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' इत्युपरितनवाक्यं पूर्वप्रतिज्ञातोक्तिरूपं वक्तव्यम् । तत्र च सम्भवश्रवणाद् इहापि 'उत्पद्यते' इति पदमध्याहर्तव्यमेव । अन्यथा अप्रतिज्ञातोक्तित्वं स्यात् ? इत्यत आह **विकारांश्च गुणांश्चेत्यस्येति** । 'यतश्च यत्' इति प्रतिज्ञातं प्रेरकस्वरूपं वक्तुं प्रेर्यं यत् सप्रकारं क्षेत्रं तन्निरूपकत्वेन, 'यादृक्' इति प्रतिज्ञातवचनत्वेन च प्रवृत्तं तद्वाक्यम् इत्यन्यथोपपत्तेर्न तस्याध्याहारकल्पकत्वमिति भावः ।

**अध्याहारादेवेति** । 'प्राप्यते' इति पदाध्याहारादेवेत्यर्थः । ननु 'यतश्चामानित्वादिभ्यो यद् ज्ञेयं प्राप्यते' इति प्रतिज्ञावाक्यव्याख्यानानभ्युपगमे 'अमानित्वम्' इत्यादिसाधनोक्तिः, 'अनादिमत्परं

ब्रह्म' इति ज्ञेयोक्तिः, 'यज्ज्ञात्वाऽमृतमश्नुते' इति प्राप्त्युक्तिश्चाप्रतिज्ञातोक्तिः स्यात् ? इत्यत आह **अमानित्वमित्यादेरिति** । 'अमानित्वमदम्भित्वम्' इत्यादिवाक्यस्य साक्षात् परब्रह्मज्ञानं प्रत्यावश्यकसाधनप्रतिपादकतया प्रतिज्ञातोपयुक्तवचनत्वस्य, 'अनादिमत्परं ब्रह्म' इत्यादेः 'स च यः' इति साक्षात्प्रतिज्ञावचनत्वस्य च, 'परं ब्रह्म' इति 'स च यः' इति प्रतिज्ञातम् उच्यत इति, 'अनादिमत्' इत्यादिकं 'यत्प्रभावः' इति प्रतिज्ञातस्य प्रतिपादकमिति च वक्ष्यमाणभाष्यरीत्या अवगमेन प्रकारान्तरेण प्रतिज्ञातोक्तित्वस्योपपत्तेः, न तद्वचनस्य अपरव्याख्यानप्रत्यायकत्वमिति भावः । 'यतः' इति भाष्यानुवादः, 'यस्य प्रेरणया' इति व्याख्या । लडादेशशत्रन्तस्य 'लटः शतृशानचौ' इति शास्त्रप्राप्तो लट आदेशो यः शता, तदन्तस्य । ननु 'त्यजि-यजि-तनिभ्यो डित्' (उ.सू.) इति शास्त्रविहित-अप्रत्ययान्ततया यजेर्निष्पन्नस्य 'यत्' इति सर्वनाम्नोऽर्थान्तरत्वात् कथं भाष्ये 'यति' इति तद्व्याख्यानम् ? इत्यत आह **यदितीण इति** । 'इण् = गतौ' इत्यस्माल्लटि तस्य 'लटः शतृशानचौ' इति शत्रादेशे, शतुः अपित्त्वात् 'सार्वधातुकमपित्' इति ङित्त्वात्, 'क्ङिति च' इति गुणनिषेधे इयङ्बाधेन 'इणो यण्' इति यणादेशे च 'यत्' इति रूपमित्यर्थः ।

ननु 'यत्' इत्यत्र इणो रूपत्वे 'एति' इति भाषणीयम्, 'याति' इति तु कथम् ? इत्यत आह **इणो यातेश्चेति** । 'या = प्रापणे' इति पाठेऽपि प्रापणस्य गतिविशेषत्वविवक्षया ऐक्यार्थमभिसन्धायोक्तम् **अनतिभिन्नार्थत्वादिति** । **सर्वस्य** सर्वान्तर्गतस्याव्याकृताकाशादेः । **गौणीं वृत्तिमिति** । अव्याकृताकाशभूताकाशादेः पूर्वदेशवियोग-उत्तरदेशसंयोगसमापादनीयपरिस्पन्दलक्षणगमनस्य अभावेऽपि, गमने तदितरव्यापारे च साधारणस्य कार्योन्मुखत्व-प्राणिमार्गदत्वादिरूपप्रवृत्तिलक्षणस्य गुणस्य योगेन 'यत्' इति शब्दस्य क्षेत्रमात्रे प्रयोगो युक्त इति भावेन 'भाष्यकृताऽस्य गौणीवृत्तिमाश्रित्य 'प्रवर्तते' इति 'याति' इत्यनेन विवक्षितं गमनं विवृणोतीत्यर्थः । भगवत्प्रेरणाय तत्प्रकृतिशालित्वं क्षेत्रस्य सर्वसुबोधमिति ज्ञापनाय गौणशब्दोपादानमिति हृदयम् ।

**भाष्यम्**

**स च प्रवर्तकः । यतश्च यत् इत्यस्मात् प्रवर्तते क्षेत्रमिति वचनम् । स च यः इति स्वरूपमात्रम् ॥ ४ ॥**

*प०टी०*— 'स च यः' इत्यस्य न भिन्नान्वय इत्याह **स चेति** । ननु प्रवर्तकमात्रप्रतिज्ञाने यः प्रवर्तक इत्येव वक्तव्यम् । न तु 'यतश्च यत्' इतीत्यत आह **यतश्चेति** । अस्मात् प्रवर्तते

क्षेत्रमिति प्रवर्तककथनार्थं 'यतश्च यत्' इति वचनम् । तल्लक्षणमात्रकथनार्थं 'स च यः' इति वचनमित्यर्थः ॥ ४ ॥

*प्र०दी०*— 'स च यः' इति जीवप्रतिज्ञा इति व्याख्यानमसत् । तस्य अप्रकृतत्वात् । क्षेत्रज्ञशब्दस्य अतद्विषयत्वादिति भावेन आह **स चेति** । 'यतः क्षेत्रं प्रवर्तते' इति प्रवर्तकस्य प्रकृतत्वादित्याशयः । नन्वेवं चेदेतद्वक्तव्यम् । किं 'यतश्च यत् स च यः' इत्येकैव प्रतिज्ञा ? उत द्वे । नाद्यः । चशब्दद्वयानुपपत्तेः । 'तत्समासेन' इत्यनेनान्वयात् । 'स च यः' इत्यस्य वैयर्थ्याच्च । न द्वितीयः । अर्थभेदाभावादित्यतो द्वितीयमङ्गीकृत्याह **यतश्चेति** । **'यतश्च यत्'** इति वचनं **अस्मात्** एवंधर्मविशिष्टात् **क्षेत्रं प्रवर्तते** इति वक्तुं प्रतिज्ञारूपम् । 'स च यः' इति **वचनं** प्रवर्तकस्य **स्वरूपमात्रं** वक्तुं प्रतिज्ञारूपमित्यर्थभेद इत्यर्थः ॥ ४ ॥

*भा०दी०*— **यतः** इत्यस्य यतः प्रवर्तकादित्यर्थः । 'यत्' इत्यस्यार्थानुवादः **क्षेत्रं प्रवर्तत इतीति** । **इत्यनेनान्वयादिति** । 'यतः प्रवर्तकात् यत् प्रवृत्तिमत् स च प्रवर्तको यः यत्स्वरूपः' इति तच्छब्देनैव 'यतः' इत्यस्यान्वितत्वेन तत्समासेन इत्यत्र तच्छब्देन अन्वयात् 'स च यः' इति व्यर्थमित्यर्थः । **अस्मात्** इति भाष्यानुवादः। **एवं धर्मे**त्यादि व्याख्या । उपद्रष्टृत्वादिवक्ष्यमाण-गुणविशिष्टादित्यर्थः ॥ ४ ॥

*भा०र०*— **इति व्याख्यानमिति** । तथा च शङ्करः 'क्षेत्रज्ञं चापि यः क्षेत्रज्ञो निर्दिष्टः सः' इति । ननु क्षेत्रज्ञशब्देनैव प्रकृतः ? इत्यत आह **क्षेत्रज्ञशब्दस्येति** । 'क्षेत्रज्ञो भगवान् विष्णुर्न ह्यन्यः क्षेत्रमञ्जसा, वेत्ति' इति । 'क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य' इत्यादिवचनैस्तस्य भगवद्विषयत्वावगमेन जीवविषयत्वाभावादित्यर्थः । तच्छब्दस्य प्रकृतवचनत्वात् तस्य प्रकृतत्वं दर्शयति **यतः क्षेत्रमिति** । 'यत् इत्यस्य तात्पर्यं **प्रवर्तत इति** । **एवं चेत्** 'स च यः' इति वचनं भगवत्परं चेत् । **द्वे** 'इति वक्तव्यम्' इत्यन्वयः । **तत् समासेनेत्यनेनान्वयादिति** । 'यतश्च' इत्यत्र विद्यमानयच्छब्दस्य 'तत् समासेन' इत्यत्र तच्छब्देनान्वयात्, 'स च यः' तच्छब्दयच्छब्दयो-रुभयोरप्याकाङ्क्षितत्वेन अन्वयप्रतियोगिसमर्पकत्वानुपपत्त्या 'स च यः' इत्यस्य व्यर्थत्वाच्च नाद्य इत्यर्थः । **अर्थभेदाभावादिति** । 'यतश्च यत्' इति प्रवर्तकत्वम्, 'स च यः' इति च प्रवर्तकत्व-मेवाभिसंहितम् इत्युभयोरपि प्रवर्तकविषयकत्वादिति भावः । **द्वितीयं द्वे** इति पक्षम् । व्यवहितान्वयं भाष्यं अन्वयं दर्शयन् योजयति **यतश्च यदिति वचनमिति** । 'उपद्रष्टृत्वादिधर्मविशिष्टं यत् । 'वचनम्' इत्यनन्तरं 'वक्तुं प्रतिज्ञारूपम्' इति शेषः । तथा च अर्थभेदाभावादिति हेतुरसिद्ध इति

भावः । *भावप्रदीपिकायां तु* ननु प्रवर्तकमात्रप्रतिज्ञाने 'यः प्रवर्तकः' इत्येवं वक्तव्यम्, न तु 'यतश्च यत्' 'स च यः' इति ? इत्यत आह 'यतश्चे'ति । 'अस्मात् प्रवर्तते क्षेत्रम्' इति प्रवर्तककथनार्थं 'यतश्च यत्' इति वचनम्, तल्लक्षणकथनार्थं 'स च यः' इति वचनमित्यर्थ इति व्याख्यातम् ॥४॥

**गीतातात्पर्यनिर्णयः**

**"तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ॥"**

***प्रका०***— "यतश्च यत् । स च यो यत्प्रभावश्च तत्समासेन मे शृणु" इत्यर्थमाह **यत इत्यादिना** । तत् क्षेत्रं यद्गच्छेदित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**यतः परमेश्वरानुमतेरिदं याति प्रवर्तते स चानुमन्ता यः । अनुसारिणी मतिः अनुमतिः प्रेरणरूपा ।**

***न्या०दी०***— "तत्क्षेत्रं यत्" इत्युक्तत्वात् "यतश्च यत्" इति पुनरुक्तिरित्यत आह **यतश्चेति** ॥ तर्हि "सा च या" इति वक्तव्यमित्यतस्तत्प्रतिज्ञान्तरमिति भावेनाह **स च** इति ॥ केयमनुमतिरित्यत आह **अनुसारिणीति** ॥ कार्योत्पादस्येति शेषः । **अनेनानुमन्तृ-शब्दार्थोऽप्युक्तो भवति** ।

**गीतातात्पर्यनिर्णयः**

**"प्रेरणाऽनुमतिः प्रोक्ता क्वचित् संवाद उच्यते ।**
**प्रेरकत्वात्तु भगवाननुमन्ता प्रकीर्तितः ॥" इति च ।**

**उपद्रष्टाऽनुमन्ता चेत्यनेनैव अनुमतिः अनुमन्ता चोक्तः । ज्ञेयं यत् तत् इत्यादिना यत्प्रभाव इत्यपि ॥ ४ ॥**

***प्रका०***— "स च यो यत्प्रभाव" इत्यनेन प्रतिपादयितुमुपक्रान्तयोरनुमन्तृतत्प्रभावयोः प्रति-पादनस्थलं दर्शयति **उपद्रष्टेत्यादिना** ॥

***न्या०दी०***— अत्र प्रमाणमाह **प्रेरणेति** ॥ "यतश्च यत्", "स च यः" इति प्रतिज्ञा-द्वयं चेत् तर्हि तदुभयमुत्तरत्रोच्यते । न चोभयोक्तिः श्रूयत इत्यत आह **उपद्रष्टेति** ॥

''उपद्रष्टाऽनुमन्ता'' इत्यादिना अनुमन्तुरुक्तत्वात् तद्धर्मतया अनुमतिरप्युक्तैवेति भावः । ''यत्प्रभावश्च'' इति प्रतिज्ञातं कुत्रोच्यत इत्यत आह **ज्ञेयमिति** ॥

**गीता**

## ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
## ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ५ ॥

***वि०वि०—*** तव विश्वासोत्पादनार्थं प्रामाणिकमेवाहं वद इत्याह **ऋषिभिरिति** । गीतमिति सर्वत्र सम्बन्धः । ऋषिसम्प्रदायप्राप्तं नानावेदैर्विविच्योक्तम् । ज्ञानानुकूलन्यायवद्भिः 'अथातो ब्रह्म-जिज्ञासा' इत्यादिभिर्ब्रह्मसूत्रपदैश्च निर्णीतम् ॥ ५ ॥

***सा०सं०—*** श्रोतृविश्वासजननायोच्यमानं प्रामाणिकमित्याह **ऋषिभिरिति** । तदित्यनु-षज्यते । यत् 'शृणु' इत्युक्तं क्षेत्रादिस्वरूपं **तत् ऋषिभिर्बहुधा गीतम्** । गै शब्दे । उक्तमित्यर्थः। **विविधैः छन्दोभिर्वेदैः** । प्रत्येकं गीतमिति सर्वत्रानुपज्यते । **हेतुमद्भिः** न्यायोपेतैः । **ब्रह्मसूत्र-पदैश्च** । **विनिश्चित**मेव **शृणु** इत्यन्वयः ॥ ५ ॥

***अ०प्र०—*** तत्र विश्वासोत्पादनाय प्रामाणिकमेवाहं ब्रवीमि । यद्वा, कैर्विस्तरेणोक्तस्यायं सङ्क्षेप इत्यपेक्षायामाह **ऋषिभिरिति** ।

ऋषिभिः = एतत् क्षेत्रं नैमिषे वसिष्ठादिभिः[१], बहुधा = बहुविधैः[२], गीतं = पुनःपुनरभ्यस्तं[३], 'क्षेत्रं जीवस्यैवेति केचित् वदन्ति, अपरे प्रकृतेः सकाशादुत्पन्नमिति, अनेकसङ्कल्पाज्जातमिति इतरे, केनापि न कृतं स्वभावतो निष्पन्नमिति एके, कालसत्तयोद्भूतमिति, एवमनेकप्रकारेण क्षेत्रं कथितं गीतम् । यद्वा, योगशास्त्रेषु ध्यानधारणां विषयत्वेन वैराजादिरूपेण विविच्य गीतं उक्तम्[३], विविधैः छन्दोभिः पृथक् पृथक् गीतं = विविधैः नित्य-नैमित्तिककाम्यकर्मादिविषयैः[४], छन्दोभिः = वेदैः[५], पृथक् = नानायजनीयदेवतादिस्वरूपेण विविच्य गीतं उक्तम्[६], हेतुमद्भिः = निर्णयानुकूलन्याय-वद्भिः 'सदेव सौम्येदमग्रमासीत्', 'कथमसतः सज्जायते', तथा 'को ह्येवान्यात् कः प्राण्यात्', 'यदेष आकाशो आनन्दो न स्यात्', 'एष ह्येवानन्दयति' इत्यादि युक्तिमद्भिः अन्यात् अपानचेष्टां कः कुर्यात् प्राणानां व्यापारं को वा कुर्यात् इति श्रुतिपदयोरर्थः[७], विनिश्चितैः = इदमदो वेति सन्देहं परिहृत्य निश्चयज्ञानजनकैः । यद्वा, उपक्रमोपसंहारैकवाक्यतया असन्दिग्धार्थप्रतिपादकैः । यद्वा, हेतुमद्भिर्विनिश्चितैः स्वस्वबुद्ध्या विशेषेण निश्चितोऽर्थो यैः तैः कविभिः हेतुर्युक्तिः येषामस्ति ते

हेतुमन्तः । तैस्तथा[८], ब्रह्मसूत्रपदैश्च = ब्रह्मणो वेदस्य सूत्रं बृहत्सामसूत्रं तत्पदैः सुबन्ततिङन्तपदैश्च यद्वा, अथातो ब्रह्मजिज्ञासेति शारीरकसूत्राणां पदैश्च निर्णीतम् । यद्वा, ब्रह्मणः पदैश्च सूत्रैश्च ब्रह्मसूत्रेण सूच्यते एभिरिति ब्रह्मसूत्राणि 'यतो वा इमानि भूतानि जायन्ते' इत्यादि तटस्थलक्षण-पराण्युपनिषद्वाक्यानि तथा ब्रह्म पद्यते गम्यते साक्षात् ज्ञायते एभिरिति पदानि स्वरूपलक्षण-पराणि । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनि तैश्च बहुधा गीतं[९], यत्तत्समासेन मे शृणु इति पूर्वेणान्वयः। यत्तदेवमेतैः विस्तरेणोक्तं दुःसङ्ग्रहं सङ्क्षेपतस्तुभ्यं कथयिष्यामि शृण्वित्यर्थः । यद्वा, 'अथातो ब्रह्म-जिज्ञासा' इत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते तान्येव ब्रह्म पद्यते निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिः। 'ईक्षतेर्नाशब्दं', 'आनन्दमयोऽभ्यासात्' इत्यादिभिः युक्तिमद्भिः विनिश्चितार्थः । शेषं समम् । एवं ऋष्यादिभिः बहुधा गीतमपि इदमित्थमिति केनापि निर्धारयितुं अशक्यम् । तत्र प्रमाणं भागवते एकादशे चतुर्दशाध्याये श्रीभगवद्वचनम्—

बह्व्यस्तेषां प्रकृतयो रजस्सत्त्वतमोभुवः ।
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ॥ १ ॥
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ।
एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ॥ २ ॥
पारम्पर्येण केषाञ्चित् पाषण्डमतयोऽपरे ।
मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ ३ ॥
श्रेयो वदन्त्यनेकान्तं यथा कर्म यथारुचिः ॥ इति ॥ ४ ॥ ५ ॥

**भाष्यम्**

## ब्रह्मसूत्राणि शारीरकसूत्राणि ॥ ५ ॥

*प०टी०*— एवं ब्रह्मसूत्राणां ब्रह्ममीमांसात्वात् कथं क्षेत्राख्यशरीरपरता ? इत्यत आह **ब्रह्मेति** ॥ ५ ॥

*प्र०दी०*— ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि । ततश्च छन्दसां ऋषिवाक्यानां च तथात्वात् 'ऋषिभिः' इत्यादिकं वृथा स्यादित्यतो रूढिमाश्रित्याह **ब्रह्मेति** ॥ ५ ॥

*भा०र०*— **छन्दसां** वेदानाम्, **ऋषिवाक्यानां** व्यासादिवचनानां **तथात्वात्** ब्रह्मसूचक-वाक्यत्वात् । **रूढिमपीति** । न केवलं उक्तयोगम्, रूढिमपि । तथा च योगरूढोऽयं ब्रह्मसूत्रशब्द इति 'ऋषिभिः' इत्यादिकमप्यर्थवदिति भावः ॥ ५ ॥

**गीता**

# महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
# इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥

*वि०वि०*— प्रतिज्ञातमाह **महाभूतानीत्यादिना** । पञ्चमहाभूतानि महत्तत्वमप्यहङ्कारशब्देन गृह्यते । बुद्धिरन्तःकरणवृत्तिविशेषः । अव्यक्तं त्रिगुणात्मकं प्रधानम् । श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणाख्यानि ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि पञ्च, मनश्चैकं इत्येकादशेन्द्रियाणि । इन्द्रियगोचरा विषयाः शब्दस्पर्शरूपरसगन्धाः पञ्च ॥ ६ ॥

*वा०ल०*— एतत् क्षेत्रम् इति सर्वस्यापि क्षेत्रत्वकथनात्, एतावद्विशेषभरितं क्षेत्रं जीवः कथं जानाति ? इति भावः । यतश्च यत् इत्यस्योत्तरम् **अव्यक्तं, महाभूतानि, इति** । अव्यक्तात् पञ्चमहाभूतानि, पञ्चमहाभूतेभ्यः देहस्थपार्थिवजलादिभागा इत्यर्थः । अहङ्कारः बुद्धिरेकं मनश्च अन्तः, दशेन्द्रियाणि । इन्द्रियगोचराः पञ्च बहिः इति यादृक् च इत्यस्योत्तरम् ॥ ६ ॥

*सा०सं०*— क्षेत्रं यच्च यादृक् च तच्छ्णिवति प्रतिज्ञातमाह **महाभूतानीति** । **पञ्च महाभूतानि** । महत्तत्त्वमप्यहङ्कारशब्देन गृह्यते । **बुद्धिरन्तःकरणविशेषः** । **अव्यक्तं** त्रिगुणात्मकं प्रधानम् । '**इन्द्रियाणि दशैकं च**' इति ज्ञानेन्द्रियमनोभेदेनैकादशेन्द्रियाणि । **इन्द्रियगोचराः** श्रोत्रादिविषयाः शब्दाद्याः **पञ्च च** । **एतत्क्षेत्रम्** । **समासेन** सङ्क्षेपेण । महाभूतत्वादिप्रकारोपेतमुदाहृतमित्यन्वयः ॥ ६ ॥

*अ०प्र०*— प्रतिज्ञातं तत्क्षेत्रस्वरूपमाह **महाभूतानीति** द्वाभ्याम् ।

महाभूतानि = वियदादि भूम्यां पञ्च महाभूतानि[१], अहङ्कारः = तत्कारणभूतः अहङ्कारशब्देन महत्तत्त्वमुपलक्ष्यते[२], बुद्धिः = अन्तःकरणविशेषः विज्ञानात्मकं महत्तत्त्वमिति केचित्[३], अव्यक्तं = त्रिगुणात्मकं प्रधानं मूलप्रकृतिरिति केचित्[४], इन्द्रियाणि = दश बाह्यानि ज्ञानकर्मसाधनेन्द्रियाणि पञ्चपञ्चेति दश । एकं च मनः, एवं च इन्द्रियगोचराः पञ्च च = ज्ञानेन्द्रियविषयाः पञ्चशब्दाद्याः पञ्चतन्मात्राः आकाशादि विशेषे गुणतया व्यक्ताः सन्तः पञ्च च । यद्वा, पञ्च चेन्द्रियगोचराः = विषयाः तत्र ज्ञानेन्द्रियविषयाः शब्दादयः पञ्च । चकारात् कर्मेन्द्रियविषयाः वचनादयः पञ्च । एवं विषयाः दश एवं चतुर्विंशतिकं तत्त्वं क्षेत्रमुच्यते ॥ ६ ॥

हेतुमन्तः । तैस्तथा[८], ब्रह्मसूत्रपदैश्च = ब्रह्मणो वेदस्य सूत्रं बृहत्सामसूत्रं तत्पदैः सुबन्ततिङन्तपदैश्च यद्वा, अथातो ब्रह्मजिज्ञासेति शारीरकसूत्राणां पदैश्च निर्णीतम् । यद्वा, ब्रह्मणः पदैश्च सूत्रैश्च ब्रह्मसूत्रेण सूच्यते एभिरिति ब्रह्मसूत्राणि 'यतो वा इमानि भूतानि जायन्ते' इत्यादि तटस्थलक्षण-पराण्युपनिषद्वाक्यानि तथा ब्रह्म पद्यते गम्यते साक्षात् ज्ञायते एभिरिति पदानि स्वरूपलक्षण-पराणि । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनि तैश्च बहुधा गीतं[९], यत्तत्समासेन मे शृणु इति पूर्वेणान्वयः। यत्तदेवमेतैः विस्तरेणोक्तं दुःसङ्ग्रहं सङ्क्षेपतस्तुभ्यं कथयिष्यामि शृण्वित्यर्थः । यद्वा, 'अथातो ब्रह्म-जिज्ञासा' इत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते तान्येव ब्रह्म पद्यते निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिः। 'ईक्षतेर्नाशब्दं', 'आनन्दमयोऽभ्यासात्' इत्यादिभिः युक्तिमद्भिः विनिश्चितार्थः । शेषं समम् । एवं ऋष्यादिभिः बहुधा गीतमपि इदमित्थमिति केनापि निर्धारयितुं अशक्यम् । तत्र प्रमाणं भागवते एकादशे चतुर्दशाध्याये श्रीभगवद्वचनम्—

बह्व्यस्तेषां प्रकृतयो रजस्सत्त्वतमोभुवः ।
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ॥ १ ॥
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ।
एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ॥ २ ॥
पारम्पर्येण केषाञ्चित् पाषण्डमतयोऽपरे ।
मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ ३ ॥
श्रेयो वदन्त्यनेकान्तं यथा कर्म यथारुचिः ॥ इति ॥ ४ ॥ ५ ॥

**भाष्यम्**

## ब्रह्मसूत्राणि शारीरकसूत्राणि ॥ ५ ॥

*प०टी०*— एवं ब्रह्मसूत्राणां ब्रह्ममीमांसात्वात् कथं क्षेत्राख्यशरीरपरता ? इत्यत आह **ब्रह्मेति** ॥ ५ ॥

*प्र०दी०*— ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि । ततश्च छन्दसां ऋषिवाक्यानां च तथात्वात् 'ऋषिभिः' इत्यादिकं वृथा स्यादित्यतो रूढिमाश्रित्याह **ब्रह्मेति** ॥ ५ ॥

*भा०र०*— **छन्दसां** वेदानाम्, **ऋषिवाक्यानां** व्यासादिवचनानां **तथात्वात्** ब्रह्मसूचक-वाक्यत्वात् । **रूढिमपीति** । न केवलं उक्तयोगम्, रूढिमपि । तथा च योगरूढोऽयं ब्रह्मसूत्रशब्द इति 'ऋषिभिः' इत्यादिकमप्यर्थवदिति भावः ॥ ५ ॥

गीता

## महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
## इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥

*वि०वि०*— प्रतिज्ञातमाह **महाभूतानीत्यादिना** । पञ्चमहाभूतानि महत्तत्वमप्यहङ्कारशब्देन गृह्यते । बुद्धिरन्तःकरणवृत्तिविशेषः । अव्यक्तं त्रिगुणात्मकं प्रधानम् । श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणाख्यानि ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि पञ्च, मनश्चैकं इत्येकादशेन्द्रियाणि । इन्द्रियगोचरा विषयाः शब्दस्पर्शरूपरसगन्धाः पञ्च ॥ ६ ॥

*वा०ल०*— एतत् क्षेत्रम् इति सर्वस्यापि क्षेत्रत्वकथनात्, एतावद्विशेषभरितं क्षेत्रं जीवः कथं जानाति ? इति भावः । यतश्च यत् इत्यस्योत्तरम् **अव्यक्तं, महाभूतानि, इति** । अव्यक्तात् पञ्चमहाभूतानि, पञ्चमहाभूतेभ्यः देहस्थपार्थिवजलादिभागा इत्यर्थः । अहङ्कारः बुद्धिरेकं मनश्च अन्तः, दशेन्द्रियाणि । इन्द्रियगोचराः पञ्च बहिः इति यादृक् च इत्यस्योत्तरम् ॥ ६ ॥

*सा०सं०*— क्षेत्रं यच्च यादृक् च तच्छृणिवति प्रतिज्ञातमाह **महाभूतानीति** । **पञ्च महाभूतानि** । महत्तत्त्वमप्यहङ्कारशब्देन गृह्यते । **बुद्धिरन्तःकरणविशेषः** । **अव्यक्तं** त्रिगुणात्मकं प्रधानम् । **'इन्द्रियाणि दशैकं च'** इति ज्ञानेन्द्रियमनोभेदेनैकादशेन्द्रियाणि । **इन्द्रियगोचराः** श्रोत्रादिविषयाः शब्दाद्याः **पञ्च च** । **एतत्क्षेत्रम्** । **समासेन** सङ्क्षेपेण । महाभूतत्वादिप्रकारोपेतमुदाहृतमित्यन्वयः ॥ ६ ॥

*अ०प्र०*— प्रतिज्ञातं तत्क्षेत्रस्वरूपमाह **महाभूतानीति** द्वाभ्याम् ।

महाभूतानि = वियदादि भूम्यां पञ्च महाभूतानि[1], अहङ्कारः = तत्कारणभूतः अहङ्कारशब्देन महत्तत्त्वमुपलक्ष्यते[2], बुद्धिः = अन्तःकरणविशेषः विज्ञानात्मकं महत्तत्त्वमिति केचित्[3], अव्यक्तं = त्रिगुणात्मकं प्रधानं मूलप्रकृतिरिति केचित्[4], इन्द्रियाणि = दश बाह्यानि ज्ञानकर्मसाधनेन्द्रियाणि पञ्चपञ्चेति दश । एकं च मनः, एवं च इन्द्रियगोचराः पञ्च च = ज्ञानेन्द्रियविषयाः पञ्चशब्दाद्याः पञ्चतन्मात्राः आकाशादि विशेषे गुणतया व्यक्ताः सन्तः पञ्च च । यद्वा, पञ्च चेन्द्रियगोचराः = विषयाः तत्र ज्ञानेन्द्रियविषयाः शब्दादयः पञ्च । चकारात् कर्मेन्द्रियविषयाः वचनादयः पञ्च । एवं विषयाः दश एवं चतुर्विंशतिकं तत्त्वं क्षेत्रमुच्यते ॥ ६ ॥

**गीता**

# इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
# एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥

***वि०वि०***— इच्छादयः प्रसिद्धाः, सङ्घातो देहः, चेतना चित्तव्याप्तिः, धृतिः धैर्यम्, इच्छादयो विकाराः— 'इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिश्च चेतसः । तद्विकारा इति ज्ञेयाश्चिद्रूपेच्छादिमिश्रिता ॥' इति वचनात् । अव्यक्तादीनामभिमानिन्यो देवतास्तात्पर्यनिर्णयादावुक्ताः । तत्रैव द्रष्टव्याः । उक्तमुपसंहरति **एतदिति** ॥ ७ ॥

***वा०ल०***— यद्विकारि इत्यस्योत्तरम् **इच्छा द्वेषः इति** । सङ्घातः अभिमानितया जीवस्य देहेन सह सम्बन्धः । चेतना ज्ञानम् । धृतिः देहधारणम् ॥ ७ ॥

***सा०सं०***— 'क्षेत्रं यद्विकारि' इति प्रतिज्ञातक्षेत्रविकारान् आह **इच्छेति** । **सङ्घातो** देहः । **चेतना** चेतसो व्याप्तिः । **धृतिर्धैर्यम्** । **एतत्** प्रागुक्तं **क्षेत्रम्** इच्छादिविकारोपेतं सङ्क्षेपेणोक्तमित्यर्थः । महाभूतादिक्षेत्राभिमानिनः । तद्विकारेच्छाद्यभिमानिनश्चावश्यं ज्ञेयत्वादुच्यन्ते ।

आकाशाभिमानी **विघ्नेशः** । वायुमानी मुख्यवायुजो अभिमानी **मरीचि**नामा । अग्निमानी **वह्निः** । अवभिमानी **वरुणः** । भूमिमानिनी **धरादेवी** । अहङ्कारः **शिवः** । महान् **ब्रह्मा** । बुद्धिः **उमा** । अव्यक्तम् **श्रीदेवी** । इन्द्रियेषु मनोऽभिमानिनः **स्कन्देन्द्रानिरुद्धाः** । श्रोत्रं **चन्द्रः** । त्वक् वायुसुतो **मरुत्** । चक्षुः **सूर्यः** । जिह्वा **वरुण**स्य रूपान्तरम् । घ्राणम् **अश्विनौ** । वाक् **अग्निः**। हस्तौ वायुसुतौ **मरुतौ** । पादौ तु विष्णुनाऽऽविष्टौ शचीसुतौ **यज्ञशम्भु**नामकौ । **पायुर्यमः** । उपस्थः **शिवः**, **मनुश्च** । इन्द्रियगोचरेषु शब्दस्पर्शरूपरसगन्धाभिमानिनः **शिवपुत्राः** पञ्च ज्ञेयाः । विकारेषु इच्छा **श्रीर्भारती** च । द्वेषदुःखाभिमानिनौ **कलिद्वापरौ** । सुखं **मुख्यवायुः** । धृतिः **सरस्वती भारती** च । चेतना **श्रीः** । सङ्घातमानिनोऽन्ये चेतनाः ज्ञेयाः । अभिमानिनां प्रागुक्तव्युत्पत्त्या भगवन्निवासत्वादेव क्षेत्रनामत्वम् । क्षेत्रविकारित्वमपि महदादिभ्योऽतिशयेन विकारितया स्थितत्वादिति ज्ञेयम् ॥ ७ ॥

***अ०प्र०***— किञ्च, **इच्छाद्वेष इति** ।

इच्छा = दृष्टेषु श्रुतेषु वा रुचिर्यस्याः सा[१], द्वेषः = इच्छानुरूपाः विषयाः अप्राप्ताश्चेत् द्वेषः[२], सुखं = अनुकूलवेदनीयं यद्वा, सुषुप्तौ यद्भवति तत्सुखं[३], दुःखं = प्रतिकूलवेदनीयं

सुषुप्तिसुखाभावे तदेव दुःखं[४], सङ्घातः = देहः[५], चेतना = ज्ञानात्मिका मनोवृत्तिः चित्तव्याप्तिर्वा। यद्वा, चेतना देहचैतन्यस्य या सत्ता सर्वत्र शरीरे व्यापकत्वेन या तिष्ठति मनोबुद्धीन्द्रियाणि यया प्रचलन्ति सा चेतना[६], धृतिः = पृथिव्यादि भूतानि स्वभावतः परस्परविरोधीनि तथापि येन धैर्येण देह एकत्वं प्राप्य निर्वैरेणेतरेतरपोषकाणि भवन्ति सा धृतिः[७], एते इच्छादयः सप्तविकाराः प्रसिद्धाः तदुक्तम्— 'सङ्घातो देहमुद्दिष्टः चित्तव्याप्तिस्तु चेतना' इति वचनात् ।

सविकारं = षट्त्रिंशत्-विकारेण सहितं[८], यद्वा, एवमादि सप्तविकारसहितं यद्वा, इन्द्रियादि-विकारसहितं वा[८], एतत् = अव्यक्तादि चतुर्विंशतिकं[९], क्षेत्रं[१०] समासेन ते = तुभ्यं सङ्क्षेपेण[११] उदाहृतं = मयोक्तं[१२], तदुक्तम्— इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिश्च चेतना । तद्विकारा इति च ज्ञेया चिद्रूपेच्छादिमिश्रिताः ॥ मुक्त इत्युच्यते जीवो मुक्तिश्च द्विविधा मता ॥ एते इच्छादयो दृश्यत्वान्नात्मधर्माः । अपि तु मनोधर्माः । अतः क्षेत्रान्तःपातिन एव । उपलक्षणं चैतत् सङ्कल्पा-दीनाम् । तथा च श्रुतिः— 'कामसङ्कल्पो विचिकित्सा श्रद्धा श्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'ति अनेन च यादृगिति प्रतिज्ञाताः क्षेत्रधर्मा दर्शिताः ॥ ७ ॥

**भाष्यम्**

**इच्छादयो विकाराः ॥ ७ ॥**

***प०टी०***— 'महाभूतानि' इत्यारभ्य धृत्यन्त्यान्युक्त्वा क्षेत्रं सविकारमित्युच्यते । तत्र क्षेत्रे के विकाराः ? किं क्षेत्रम् ? इत्यत आह **इच्छादय इति** । आद्यं क्षेत्रमित्यर्थः ॥ ७ ॥

***प्र०दी०***— 'महाभूतानि' इत्यनुक्रम्य 'एतत् क्षेत्रं समासेन सविकारमुदाहृतम्' इत्युक्तम् । तत्र न ज्ञायते किं क्षेत्रम्? के च तद्विकाराः ? इत्यत आह **इच्छादय इति** । पूर्वं क्षेत्रमिति भावः ॥ ७ ॥

***भा०र०***— 'किं क्षेत्रम्' इत्यस्याप्युत्तरं भाष्यभावोक्त्या आह **पूर्वमिति** ॥ 'महाभूता-न्यहङ्कारः' इति पूर्वश्लोकोक्तमित्यर्थः ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**चेतना चित्तव्याप्तिः ।**

**"सङ्घातो देह उद्दिष्टः चित्तव्याप्तिस्तु चेतना ॥"**

**—इति च ॥ ५-७ ॥**

***न्या०दी०***— **ननु चैतन्यस्याऽविकारित्वात् कथं विकारेषु चेतना पठ्यत इत्यत आह चेतनेति ॥ ननु महाभूतानीत्यादिनोक्तानां सङ्घातस्य क्षेत्रत्वात् कार्यत्वं कथमुच्यत इत्याशङ्कां परिहरन् उक्तार्थे प्रमाणमाह सङ्घात इति ॥**

**गीता**

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥**

***वि०वि०***— ज्ञेयं वक्तुं ज्ञानसाधनानि ज्ञानं च विकारान्तर्भावेनादावाह **अमानित्वमित्यादिना** । अमानित्वमात्मश्लाघाराहित्यम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्वप्रदर्शनं दम्भः । 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यभावनमित्यभिधानात्, तद्राहित्यमदम्भित्वम् । क्षान्तिः सहिष्णुत्वम् । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् । आचार्योपासनं ज्ञानिसेवा । शौचं बाह्यान्तरशुद्धिः— 'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥' इति स्मरणात् । स्थैर्यं भयादिना स्वधर्मादचलनम् । आत्मविनिग्रहो विशेषेण मनोनियमनम् ॥ ८ ॥

***वा०ल०***— क्षेत्रज्ञस्यैव मुमुक्षुभिर्ज्ञेयत्वात् स च यो यत्प्रभावश्चेत्यस्य ज्ञेयकथनेनैवोत्तरं भविष्यतीति मत्वा ज्ञानविस्तारमाह **अमानित्वमदम्भित्वमित्यादिना** । यावन्ति ज्ञानस्य कारणानि यावन्ति च ज्ञानस्य कार्याणि तत्सर्वं ज्ञानपदेनैवोच्यते इति भावः । अत एव एतद्वेदितुमिच्छामि इति ज्ञानस्यापि ज्ञानप्रश्नः ॥ ८ ॥

***सा०सं०***— एवं प्रतिज्ञातार्थषट्कमध्ये यच्च यादृक् च यद्विकारीति त्रयमुक्त्वा यतश्च यदिति (अग्रे) वक्ष्यन् ततः प्राक् स च यो यत्प्रभावश्चेति प्रतिज्ञातार्थद्वयं 'ज्ञेयं यत्तत्' इत्यादिना वक्तुम्, न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीति भावेन वक्ष्यमाणज्ञेयद्वयभूतभगवज्ज्ञानस्य साधनान्याह **अमानित्वमित्यादि पञ्चकेन** । **अमानित्वम्** आत्मनः श्लाघनराहित्यम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं **दम्भः** । तद्राहित्यम**दम्भित्वम्** । **क्षान्तिः** सहिष्णुत्वम् । **आर्जवं** सन्मार्गे मनोवाक्कायकर्मणामवैपरीत्यम् । **आचार्योपासनं** ज्ञानिनां सेवा । **शौचं** बाह्यान्तरशुद्धिः । 'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्' इति स्मृतेः । **स्थैर्यं** भयादिना स्वधर्मादचलनम् । **आत्मविनिग्रहः** विशेषेण मनसो नियमनम् ॥ ८ ॥

***अ०प्र०***— इदानीं उक्तलक्षणात्क्षेत्रात् विविक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यन् ज्ञेयं वक्तुं विकारान्तर्भूतत्वादादौ ज्ञानसाधनमाह **अमानित्वमिति** पञ्चभिः ।

अमानित्वं = मानी न भवतीत्यमानी । तस्य भावो अमानित्वं स्वगुणश्लाघ्यताभावः[१], अदम्भित्वं = दम्भत्वं न भवतीत्यदम्भित्वं दम्भराहित्यं आत्माल्पत्वं ज्ञात्वापि महत्त्वदर्शनं दम्भः। तदुक्तम्— 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं डम्भो माहात्म्यभावनम्' इति डम्भाभावोऽदम्भित्वं[३], अहिंसा = परपीडाऽभावः, हिंसा न भवतीत्यहिंसेति शब्दार्थः । वस्तुतः सर्वभूतानां सुखं यथा भवति तथा सर्वेन्द्रियप्रवर्तनमहिंसेति भावः[४], शान्तिः = सहिष्णुत्वं सर्वसहनगरिम्णा या गर्वं नायाति सा क्षान्तिः क्षमा[५], आर्जवं = अवक्रता विहिते मनोवाक्कायकर्मणां अवैपरीत्यम् । यद्वा, सर्वभूतेषु मनआदीन्द्रियैः रुजुतया प्रवर्तनमार्जवं[६], आचार्योपासनं = स्वस्य सम्यक् ज्ञानोपदेष्टृ गुरुसेवा श्रीगुरुभक्तिर्वा[७], शौचं = बाह्याभ्यन्तरं च । तत्र बाह्यं मृज्जलादिना मलक्षालनम् । अभ्यन्तरं च मनोरागादिमलक्षालनम् । स्मृतिः— शौचं च द्विविधं प्रोक्तं बाह्यमभ्यन्तरं तथा । मृज्जलाभ्यां कृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥

यद्वा, कर्मणा बहिःशुद्धिः ज्ञानेनान्तःशुद्धिः, एवमन्तर्बहिःशुद्धिः शुचित्वम्[८], ज्ञानकर्मणोः समुच्चयत्वात्[८], स्थैर्यं = देहप्रारब्धवशात् पूर्वसंस्कारेण सञ्चरत्यपि मनसः श्रीविष्णुभक्तेरचलनम् । यद्वा, सन्मार्गे प्रवृत्तस्य तदेकनिष्ठता[८], आत्मविनिग्रहः = आत्मनोऽन्तःकरणस्येन्द्रियेभ्यस्सकाशाद्विशेषेण निग्रहो नियमोऽन्तःकरणविनिग्रहः । यद्वा, विशेषेण देहात्मनो नियमनं आत्मविनिग्रहः[९], एतत् ज्ञानमिति प्रोक्तं इति पञ्चमेनान्वयः ॥ ८ ॥

**गीता**

## इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
## जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥

***सा०सं०***— **इन्द्रियार्थेषु वैराग्यं** शब्दादिषु रागाभावः । **अनहङ्कारः** अविद्यमानात्मगुणाभिमानमोहाभावः । जन्मादिषु दुःखदोषयोरनुदर्शनमिति वा, दुःखस्वरूपस्य दोषस्यानुदर्शनमिति वा, अनुक्षणमनुसन्धानमित्यर्थः ॥ ९ ॥

***अ०प्र०***— किञ्च **इन्द्रियार्थेष्विति** ।

इन्द्रियार्थेषु वैराग्यं = इन्द्रियाणां श्रोत्रादीनां अर्थाः शब्दाद्याः तेषु विषयेषु वैराग्यं मनसः सकाशादेव इहपरलोकयोर्विषयेषु अत्यन्तहेयबुद्ध्या तत्परित्यागो वैराग्यं[१], अनहङ्कार एव च = वर्णाश्रमोचितकर्माणि यथावत् कृत्वा ममेदं कर्म कृतं, मत्तो जातं इति कर्तृत्वाभिमानो मनसि न

*न्या०दी०*— ननु चैतन्यस्याऽविकारित्वात् कथं विकारेषु चेतना पठ्यत इत्यत आह **चेतनेति** ॥ ननु महाभूतानीत्यादिनोक्तानां सङ्घातस्य क्षेत्रत्वात् कार्यत्वं कथमुच्यत इत्याशङ्क्यां परिहरन् उक्तार्थे प्रमाणमाह **सङ्घात इति** ॥

**गीता**

## अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
## आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥

*वि०वि०*— ज्ञेयं वक्तुं ज्ञानसाधनानि ज्ञानं च विकारान्तर्भावेनादावाह **अमानित्वमित्यादिना** । अमानित्वमात्मश्लाघाराहित्यम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्वप्रदर्शनं दम्भः । 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यभावनमित्यभिधानात्, तद्राहित्यमदम्भित्वम् । क्षान्तिः सहिष्णुत्वम् । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् । आचार्योपासनं ज्ञानिसेवा । शौचं बाह्यान्तरशुद्धिः— 'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥' इति स्मरणात् । स्थैर्यं भयादिना स्वधर्मादचलनम् । आत्मविनिग्रहो विशेषेण मनोनियमनम् ॥ ८ ॥

*वा०ल०*— क्षेत्रज्ञस्यैव मुमुक्षुभिर्ज्ञेयत्वात् स च यो यत्प्रभावश्चेत्यस्य ज्ञेयकथनेनैवोत्तरं भविष्यतीति मत्वा ज्ञानविस्तारमाह **अमानित्वमदम्भित्वमित्यादिना** । यावन्ति ज्ञानस्य कारणानि यावन्ति च ज्ञानस्य कार्याणि तत्सर्वं ज्ञानपदेनैवोच्यते इति भावः । अत एव एतद्वेदितुमिच्छामि इति ज्ञानस्यापि ज्ञानप्रश्नः ॥ ८ ॥

*सा०सं०*— एवं प्रतिज्ञातार्थषट्कमध्ये यच्च यादृक् च यद्विकारीति त्रयमुक्त्वा यतश्च यदिति (अग्रे) वक्ष्यन् ततः प्राक् स च यो यत्प्रभावश्चेति प्रतिज्ञातार्थद्वयं 'ज्ञेयं यत्तत्' इत्यादिना वक्तुम्, न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीति भावेन वक्ष्यमाणज्ञेयद्वयभूतभगवज्ज्ञानस्य साधनान्याह **अमानित्वमित्यादि पञ्चकेन** । **अमानित्वम्** आत्मनः श्लाघनराहित्यम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं **दम्भः** । तद्राहित्यम**दम्भित्वम्** । **क्षान्तिः** सहिष्णुत्वम् । **आर्जवं** सन्मार्गे मनोवाक्कायकर्मणामवैपरीत्यम् । **आचार्योपासनं** ज्ञानिनां सेवा । **शौचं** बाह्यान्तरशुद्धिः । 'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्' इति स्मृतेः । **स्थैर्यं** भयादिना स्वधर्मादचलनम् । **आत्मविनिग्रहः** विशेषेण मनसो नियमनम् ॥ ८ ॥

*अ०प्र०*— इदानीं उक्तलक्षणात्क्षेत्रात् विविक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यन् ज्ञेयं वक्तुं विकारान्तर्भूतत्वादादौ ज्ञानसाधनमाह **अमानित्वमिति** पञ्चभिः ।

अमानित्वं = मानी न भवतीत्यमानी । तस्य भावो अमानित्वं स्वगुणश्लाघ्यताभावः[१], अदम्भित्वं = दम्भत्वं न भवतीत्यदम्भित्वं दम्भराहित्यं आत्माल्पत्वं ज्ञात्वापि महत्त्वदर्शनं दम्भः। तदुक्तम्— 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं डम्भो माहात्म्यप्रकाशनम्' इति डम्भाभावोऽदम्भित्वं[३], अहिंसा = परपीडाऽभावः, हिंसा न भवतीत्यहिंसेति शब्दार्थः । वस्तुतः सर्वभूतानां सुखं यथा भवति तथा सर्वेन्द्रियप्रवर्तनमहिंसेति भावः[४], शान्तिः = सहिष्णुत्वं सर्वसहनगरिम्णा या गर्वं नायाति सा क्षान्तिः क्षमा[५], आर्जवं = अवक्रता विहिते मनोवाक्कायकर्मणां अवैपरीत्यम् । यद्वा, सर्वभूतेषु मनआदीन्द्रियैः रुजुतया प्रवर्तनमार्जवं[६], आचार्योपासनं = स्वस्य सम्यक् ज्ञानोपदेष्टृ गुरुसेवा श्रीगुरुभक्तिर्वा[७], शौचं = बाह्याभ्यन्तरं च । तत्र बाह्यं मृज्जलादिना मलक्षालनम् । अभ्यन्तरं च मनोरागादिमलक्षालनम् । स्मृतिः— शौचं च द्विविधं प्रोक्तं बाह्यमभ्यन्तरं तथा । मृज्जलाभ्यां कृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥

यद्वा, कर्मणा बहिःशुद्धिः ज्ञानेनान्तःशुद्धिः, एवमन्तर्बहिःशुद्धिः शुचित्वम्[८], ज्ञानकर्मणोः समुच्चयत्वात्[८], स्थैर्यं = देहप्रारब्धवशात् पूर्वसंस्कारेण सञ्चरत्यपि मनसः श्रीविष्णुभक्तेरचलनम् । यद्वा, सन्मार्गे प्रवृत्तस्य तदेकनिष्ठता[८], आत्मविनिग्रहः = आत्मनोऽन्तःकरणस्येन्द्रियेभ्यस्सकाशाद्विशेषेण निग्रहो नियमोऽन्तःकरणविनिग्रहः । यद्वा, विशेषेण देहात्मनो नियमनं आत्मविनिग्रहः[९], एतत् ज्ञानमिति प्रोक्तं इति पञ्चमेनान्वयः ॥ ८ ॥

**गीता**

## इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
## जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥

***सा०सं०***— **इन्द्रियार्थेषु वैराग्यं** शब्दादिषु रागाभावः । **अनहङ्कारः** अविद्यमानात्मगुणाभिमानमोहाभावः । जन्मादिषु दुःखदोषयोरनुदर्शनमिति वा, दुःखस्वरूपस्य दोषस्यानुदर्शनमिति वा, अनुक्षणमनुसन्धानमित्यर्थः ॥ ९ ॥

***अ०प्र०***— किञ्च **इन्द्रियार्थेष्विति** ।

इन्द्रियार्थेषु वैराग्यं = इन्द्रियाणां श्रोत्रादीनां अर्थाः शब्दाद्याः तेषु विषयेषु वैराग्यं मनसः सकाशादेव इहपरलोकयोर्विषयेषु अत्यन्तहेयबुद्ध्या तत्परित्यागो वैराग्यं[१], अनहङ्कार एव च = वर्णाश्रमोचितकर्माणि यथावत् कृत्वा ममेदं कर्म कृतं, मत्तो जातं इति कर्तृत्वाभिमानो मनसि न

विद्यते किं बहुनोक्तेन देहादिषु असङ्गत्वं निरहङ्कारः[2], जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् = जन्म च मृत्युश्च जरा च व्याधिश्च दुःखं च दोषाश्च जन्ममृत्युजराव्याधिदुःखदोषाः । यद्वा जन्ममृत्युजराव्याधिभिः जन्ययोः दुःखदोषयोः अनुदर्शनं पुनःपुनरालोचनं अवलोकनं दुःखरूपस्य दोषस्य अनुदर्शनमिति वा[3], । एतत् ज्ञानमिति प्रोक्तं इति चतुर्थेनान्वयः ॥ ९ ॥

**भाष्यम्**

**'स च यो यत्प्रभावश्च' इति वक्तुं तज्ज्ञानसाधनान्याह अमानित्वमित्यादिना । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः । 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यदर्शनम्' इति ह्यभिधानम् । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् ॥ ८-९ ॥**

***प०टी०*—** उत्तरप्रघट्टकमवतारयति **स चेति** । लक्षणं प्रभावं च 'अनादिमत्परं ब्रह्म' इत्यनेन वक्तुमित्यर्थः । 'मान-अहङ्कार'-वैलक्षण्येन 'दम्भं' सप्रमाणकं दर्शयति **आत्मेति** । 'आर्जव'पदमप्रतीतिनिरासाय व्याचष्टे **आर्जवमिति** ॥ ८-९ ॥

***प्र०दी०*—** ननु षट्स्वर्थेषु प्रतिज्ञातेष्वमानित्वादिकमनन्तर्भूतं किमित्युच्यत इत्यत आह **स च इति** । इति प्रतिज्ञातमर्थद्वयं वक्तुं 'ज्ञेयं यत्तत्' इत्यादिना । 'न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवति इत्याशयेन' इति शेषः । मानाहङ्काराभ्यां दम्भं पृथग्दर्शयति **आत्मेति** । आर्जवं ज्ञानसाधनं यथा स्यात् तथा व्याचष्टे **आर्जवमिति** । एतच्च सन्मार्ग इति ज्ञातव्यम् ॥ ८-९ ॥

***भा०दी०*—** 'वक्तुम्' इति भाष्ये केनेत्याकाङ्क्षां पूरयति **ज्ञेयं यत्तदित्यादिनेति** । 'तज्ज्ञान' इत्यतःपूर्वं शेषमाह **न यादृशेत्यादि** । **सन्मार्ग इतीति** । अन्यस्य ज्ञानानुपायत्वादिति भावः ॥ ॥ ८-९ ॥

***भा०र०*—** **षट्स्वर्थेष्विति** । 'तत्क्षेत्रं यत्' इत्येकः, 'यादृक्' इति द्वितीयः, 'यद्विकारि' इति तृतीयः, 'यतश्च यत्' इति तुरीयः, 'स च यः' इति पञ्चमः, 'यत्प्रभावः' इति षष्ठः, इति प्रतिज्ञातोऽर्थ इत्येवं षट्स्वर्थेष्वित्यर्थः । इतिशब्दमनूद्य अध्याहरति **इति प्रतिज्ञातमर्थद्वयमिति** । 'वक्तुम्' इत्यनूद्य तत्र शेषमाह **वक्तुं ज्ञेयमिति** । **यादृशतादृशेन** अमानित्वादिधर्मं विना कृतेन । 'तत्समासेन मे शृणु' इति गीतत्वादाह **श्रवणेनेति** । **तद्** ज्ञेयं वस्तु । 'भवति' इत्यनन्तरम् 'किन्तु, अमानित्वादिसहायसम्पत्तिसहितेन' इति शेषः । **मानेति** ॥ "आत्मगुणश्लाघनं **मानः**,

अविद्यमानात्मगुणाभिमानोऽहङ्कार इति मानाहङ्कारशब्दार्थः, एवं डम्भ इति; कथं गीतायाम् 'अमानित्वम्' 'अनहङ्कार एव च' इत्युक्त्वा, 'अडम्भित्वम्' इत्युच्यते ?'' इत्याशङ्कायाम् इति शेषः । भावनम् = विभावनम्, 'प्रदर्शनम्' इति यावत् इत्यभिधानपदार्थः । आर्जवम् = अवक्रिमा, भूम्ना प्राणिषु दृश्यत इति कथमिदं ज्ञानसाधनेषु पठ्यते ? इत्यत आह **आर्जवं ज्ञानसाधनं यथा स्यादिति** ॥ दुर्मार्गे मनोवाक्कायकर्मणाम् अवैपरीत्यं ज्ञानप्रतिरूपमेव । अत आह **एतच्चेति** ॥ ८-९ ॥

**गीता**

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १० ॥**

***वि०वि०***— असक्तिः स्नेहाभावः । अनभिष्वङ्गोऽतिपक्वस्नेहाभावः— 'स्नेहः सक्तिः स एवातिपक्वोभिष्वङ्ग उच्यते ।' इत्यभिधानात् । दाराः स्त्रियः । **इष्टानिष्टप्राप्तिषु समचित्तत्वं** हर्ष-विषादाभावः ॥ १० ॥

***सा०सं०***— पुत्रदारगृहादिषु **असक्तिः** स्नेहाभावः । **अनभिष्वङ्गः** अतिपक्वस्नेहाभावः । **इष्टानिष्टोपपत्तिषु** । उपपत्तिः प्राप्तिः, तत्र **नित्यं समचित्तत्वं** हर्षविषादयोरभावः ॥ १० ॥

***अ०प्र०***— किञ्च, **असक्तिरिति** ।

पुत्रदारगृहादिषु असक्तिः = पुत्रादि पदार्थेषु प्रीतित्यागः । यद्वा, पुत्रादीनां सुखे दुःखे चाहमेव सुखी चेत्यद्ध्यासातिरेकाभावः । तदुक्तम्— 'स्नेहो सक्तिः स एवातिपक्वोऽभिष्वङ्ग उच्यते' इत्यभिधानात्[२], अनभिष्वङ्गश्च = पुत्रादिषु सक्तिः स्नेहः स एवातिपक्वोऽभिष्वङ्गः तद्रहितः । यद्वा, अनुष्वङ्गो नाम आसक्तिविशेष एव । अत उभयपदयोरेक एवार्थः[३], इष्टानिष्टोपपत्तिषु नित्यं समचित्तत्वं = इष्टानिष्टोपपत्तिषु इष्टानिष्टयोः सुखदुःखयोः प्राप्तिषु नित्यं सर्वदा समचित्तत्वं समं चित्तं यस्य सः समचित्तः तस्य भावः समचित्तत्वं हर्षविषादाभावः[१], एतत् ज्ञानमिति प्रोक्तं इति तृतीयेनान्वयः ॥ ९ ॥

**गीता**

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११ ॥**

***वि०वि०***— विविक्तदेशसेवित्वं शुद्धस्थानस्थितिः ॥ ११ ॥

***सा०सं०***— **अनन्ययोगेन** रमाब्रह्मादिस्वातन्त्र्यासम्बन्धेन, तदविषयिणीति यावत् । अत एव **अव्यभिचारिणी । मयि भक्तिः । विविक्तदेशसेवित्वम्**, जनसम्मर्दहीनशुद्धस्थानस्थितिः ॥११॥

***अ०प्र०***— किञ्च, **मयि चेति** ।

मयि[1], अनन्ययोगेन[2], अव्यभिचारिणी[3], भक्तिः[4], विविक्तदेशसेवित्वं च[5], जनसंसदि[6], अरतिः[7] इत्यन्वयः ।

मयि = परमेश्वरे[1], अनन्ययोगेन = अनन्यसम्बन्धेन प्राधान्येन । यद्वा, मद्भजनं विना न विद्यते अन्यः योग उपायः यस्य स तथा । तेनोपायेन सर्वान्तर्यामित्वदृष्ट्या[2], अव्यभिचारिणी = निश्चला एकान्तभक्तिः । यद्वा, मत्तोऽन्यत्प्रियतरं नास्तीति त्रिकरणैः कृता निश्चयात्मिका वृत्ति-रव्यभिचारिणी[3], भक्तिः = सेवनं[4], विविक्तदेशसेवित्वं = विविक्तः चित्तप्रसादकरः परिशुद्धतीर्थ-तपोवनादिः देशः स्थानं तत् सेवितुं शीलं अस्येति विविक्तदेशसेवी । तस्य भावः विविक्तदेश-सेवित्वं[5], जनसंसदि = प्राकृतजनानां सभासु[6], अरतिः = रत्यभावश्च । यद्वा, व्यावहारिकजनानां संसत् समुदायः तस्यां ग्रामे नगरे वा अरतिः रतिः (उपरतिः?) मरणं तदभावः अरतिः ॥११॥

भाष्यम्

**सक्तिः** स्नेहः । स एवातिपक्वः **अभिष्वङ्गः** । "स्नेहः सक्तिः स एवाति-पक्वोऽभिष्वङ्ग उच्यते" इत्यभिधानम् ॥ १०-११ ॥

***प०टी०***— 'सक्ति-अभिष्वङ्ग'पदयोरर्थभेदं सप्रमाणकमाह **सक्तिरिति** ॥ १० ॥

***प्र०दी०***— सक्त्यभिष्वङ्गशब्दयोः अर्थभेदमाह **सक्तिरिति** ॥ १०-११ ॥

***भा०र०***— 'षञ्ज = सङ्गे' इति धातोर्भावे क्तिनि, घञि च निष्पन्नयोः शब्दयोरेकार्थत्वात् पुनरुक्तिः ? इति शङ्कां भाष्यात् परिहरतीत्याह **सक्त्यभिष्वङ्गेति** । उभयत्र सङ्ग एव धात्वर्थः । स चात्र मनसो विवक्षित इति, स्नेहोऽतिपक्वस्नेहश्च ग्राह्य इति, न पुनरुक्तिरिति भाष्यभावः स्फुटत्वान्नोक्तः ॥ १०-११ ॥

गीता

## अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
## एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १२ ॥

*वि०वि०*— अध्यात्मज्ञाने नित्यत्वं नियतत्वम् । तत्वज्ञानार्थे अपरोक्षज्ञानार्थे दर्शनं शास्त्रदर्शनम् ।

अथवा, तत्वज्ञानविषयस्य विष्णोरपरोक्षदर्शनं एतज्ज्ञानमिति निगमनम् । ज्ञायतेऽनेनेति ज्ञानम् । ज्ञानं ज्ञप्तिरिति च व्युत्पत्त्या ज्ञानशब्देन ज्ञानसाधनं ज्ञानं चोच्यते । अतोऽन्यथा तद्विपरीतं यत् तदज्ञानं ज्ञानं तत्साधनं च न भवतीत्यर्थः ॥ १२ ॥

*सा०सं०*— **अध्यात्मज्ञाननित्यत्वम्** परमात्मानमधिकृत्य स्थिते ज्ञाने नियतत्वम् । **तत्त्वज्ञानार्थदर्शनम्** । अपरोक्षज्ञानार्थं शास्त्रपर्यालोचनम् । **एतत्** 'अमानित्वम्' इत्यादिनोक्तं विंशतिधर्मजातम् । **ज्ञानमिति** ज्ञायतेऽनेनेति करणव्युत्पत्त्या ज्ञानसाधनं प्रोक्तम् । **अतोऽन्यथा यत्** अस्ति **तदज्ञानं** ज्ञानसाधनं नेत्यर्थः ।

यद्वा, ज्ञानशब्दः भावव्युत्पत्त्या संवित्परश्च । तत्त्वज्ञानार्थस्य तत्त्वज्ञानविषयस्य विष्णोर्दर्शनम्, अपरोक्षज्ञानमित्यर्थः । एतद्भगवद्विषयापरोक्षज्ञानं ज्ञानमिति प्रोक्तम् । **अतोऽन्यथा यत् तज्ज्ञानं न** भवतीति । इह ज्ञानशब्दो ज्ञानतत्साधनोभयपरः । तत्त्वज्ञानार्थदर्शनमित्ययमप्युक्तदिशा शास्त्रपर्यालोचनरूपज्ञान्साधनपरः, अपरोक्षज्ञानपरश्च । ततश्चैतच्छब्देनोभयं परामृश्य ज्ञानशब्देन भावकरणोभयव्युत्पत्त्या ज्ञानसाधनत्वज्ञानत्वयोर्विधानं युक्तमिति ज्ञेयम् ॥ १२ ॥

*अ०प्र०*— किञ्च, **अध्यात्मेति** ।

अन्वयः— प्रोक्तमित्यतं क्रमेण पदानि षट्[६], अतः[७], अन्यथा[८], यत्तत्[९], अज्ञानमिति वसिष्ठादिभिः प्रोक्तम् ।

अध्यात्मज्ञाननित्यत्वं = परमात्मादिज्ञाने नियतत्वम् । यद्वा, आत्मानमधिकृत्य वर्तमानं ज्ञानं अध्यात्मज्ञानं तस्मिन्नित्यत्वभावो नित्यत्वं[१], तत्त्वज्ञानार्थदर्शनं = तत्त्वज्ञानार्थे अपरोक्षज्ञानार्थे दर्शनं शास्त्रालोचनम् । यद्वा, तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षः । तस्य दर्शनं मोक्षस्य सर्वोत्कृष्टतालोचनमित्यर्थः । यद्वा, तत्त्वज्ञानं यथार्थज्ञानं तस्यार्थो विषयः श्रीविष्णुभक्तिः तद्दर्शनमपरोक्षज्ञानमित्यर्थः[२], एतत् = अमानित्वादि तत्त्व-ज्ञानार्थदर्शनात् अष्टादशलक्षणात्मकं एतावत्पर्यन्तं[३], ज्ञानं इति प्रोक्तं = ज्ञानसाधनमिति प्रोक्तं अपि तु ज्ञानमेव[६], अतः = कारणात्[७], अन्यथा =

अस्माद्विपरीतं मानित्वादिकं[८], यत्[९], तत् = अज्ञानं[१०] इति[११] प्रोक्तम् = तत् वसिष्ठादिभिः ज्ञानविरोधित्वात् अज्ञानमिति प्रोक्तं[१२], बुद्धेः ज्ञानविरोधित्वात् मानडम्भहिंसाक्रोधाऽसत्त्यभक्त्य-भावादयो दोषाः सर्वथा त्याज्या इति भावः ॥ १२ ॥

**भाष्यम्**

**तत्त्वज्ञानार्थदर्शनं अपरोक्षज्ञानार्थं शास्त्रदर्शनम् ॥ १२ ॥**

***प०टी०***— 'तत्त्वज्ञान...' इत्याद्यप्रतीतिनिरासाय व्याचष्टे **तत्त्वेति** ॥ १२ ॥

***प्र०दी०***— ननु तत्त्वज्ञानार्थदर्शनं नाम ज्ञानमेव । तत्कथं ज्ञानसाधनेषूच्यत इत्यत आह **तत्त्वेति** । **शास्त्रदर्शनं** तत्पर्यालोचनम् । अत्र 'शास्त्रस्य' इत्यध्याहृत्य व्याख्यानमिति ज्ञातव्यम् ॥ ॥ १२ ॥

***भा०र०***— अवलोकनश्रवणादिरूपस्य शास्त्रदर्शनस्य साक्षाद् अपरोक्षज्ञानसाधनत्वाभावादाह **शास्त्रदर्शनं तत्पर्यालोचनमिति** । 'अथवा सततं शास्त्रविमर्शेन भविष्यति । अपरोक्षज्ञानम्' इति तन्त्रसारसङ्ग्रहवचनात् निरन्तरशास्त्रावमर्शशब्दितं तत्पर्यालोचनं भवत्येवापरोक्षज्ञानसाधनमिति भावः । 'दर्शनं = तत्पर्यालोचनम्' इति क्वचित् पाठः । तत्रोपक्रमाद्यन्यतमप्रमाणकशक्तितात्पर्या-वधारणम् उपासनाद्वारा अपरोक्षज्ञानसाधनमित्यर्थः । **अत्र** 'तत्त्वज्ञानार्थदर्शनम्' इति गीतायाम् । **अध्याहृत्य** 'तत्त्वज्ञानार्थं शास्त्रदर्शनम्' इति दर्शनशब्दात् पूर्वं अर्थशब्दात् परं शास्त्रशब्दं संयो-ज्येत्यर्थः । 'शास्त्रस्य' इति षष्ठ्युक्तिस्तु 'शास्त्रदर्शनम्' इत्यत्र भाष्ये विग्रहदशायां 'शास्त्रस्य दर्शनम्' इति षष्ठ्यन्तं शास्त्रपदं ज्ञेयमित्यभिप्रेत्य ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**तत्त्वज्ञानविषयस्य विष्णोरपरोक्षदर्शनं तत्त्वज्ञानार्थदर्शनम् । ज्ञायतेऽनेनेति ज्ञानम्, ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या "एतज्ज्ञानमिति प्रोक्तम्" इति ज्ञानसाधनं ज्ञानं चोक्तम् ॥ १२ ॥**

***न्या०दी०*— ज्ञेयं वक्तुं ज्ञानमुच्यते अमानित्वमिति । तत्र तत्त्वज्ञानार्थदर्शनपदस्य अस्फुटार्थत्वात् तदर्थमाह तत्त्वेति ॥ नन्वमानित्वमित्यादिना ज्ञानसाधनं तत्त्वज्ञानार्थ-दर्शनमिति ज्ञानं चोक्त्वोपसंहारे कथम् "एतज्ज्ञानमिति प्रोक्तं" इत्युच्यत इत्यत आह ज्ञायत इति ॥ प्रोक्तमित्यत्र ज्ञानशब्देनेति शेषः । उक्तमित्युच्यत इति वा ॥**

*भा०दी०*— **ज्ञानमुच्यत इति** । ज्ञानशब्दोऽत्र भावे करणे च व्युत्पन्नः सन् ज्ञप्ति-तत्साधनोभयपरः ॥

**गीता**

## ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
## अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३ ॥

*वि०वि०*— बहुत्वात् साधनात्युपयोगाच्च पूर्वप्रतिज्ञातं 'यतश्च यत्' इत्यर्थं पश्चाद्वक्तुं 'स च यो यत्प्रभावश्च' इति प्रतिज्ञातार्थं प्रतिपादयन्नेवाह **ज्ञेयमित्यादिना** । 'यत्प्रभावः' इत्येतदुपपाद्यते । आदिरस्यास्तीत्यादिमत् न आदिमदनादिमत् अनादीत्येवोक्ते छान्दसं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहितत्पुरुषसन्देहः । स्वयं कारणं न भवतीत्याशङ्का स्यात्तन्निवृत्यर्थे अनादि-मदित्युक्तम् ।

यद्वा, आदिरेषामस्तीत्यादिमन्ति देहेन्द्रियादीनि तद्वर्जितमनादिमत् । मुख्यतो गुणपूर्णत्वात् परं ब्रह्म मूर्तातीतत्वान्न सत्, अमूर्तातीतत्वान्नासत् । उक्तं च— 'मुख्यतो गुणपूर्णत्वात् परं ब्रह्म जनार्दनः । मूर्तामूर्तव्यतीतत्वान्न सन्नैवासदुच्यते ॥' इति वचनात् । 'मूर्तं सदिति सम्प्रोक्तममूर्त-मसदुच्यते । मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते ॥ 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सत् ।' वायुरन्तरिक्षं चासत् ॥ १३ ॥

*वा०ल०*— अधुना ज्ञेयस्वरूपं सविस्तरं वक्तुमारभते **अनादिमत्परं ब्रह्म इत्यादिना** । जीवनियामकतया हृद्गतं रूपं, मोक्षदायकतया व्याप्तं रूपं च, इति रूपद्वयमपेक्ष्य क्षेत्रज्ञं ज्ञेयमिति च भगवतो द्विर्ग्रहणम् । 'न सत् तन्नासदुच्यते' इति वचनात् सत् मूर्तम्, असत् अमूर्तम् ॥१३॥

*सा०सं०*— एवं ज्ञानं ज्ञानसाधनं चोक्त्वाऽधुना 'स च यो यत्प्रभावश्च' इति प्रतिज्ञात-ज्ञेयस्वरूपम्, तत्प्रभावं च, प्रतिज्ञापूर्वकमाह **ज्ञेयमित्यादिना** । आदरजननाय तज्ज्ञानस्य फलमाह **यज्ज्ञात्वेति** । 'स च यः' इति प्रतिज्ञातज्ञेयस्वरूपोक्तिः **परंब्रह्मेति** । नामोक्त्या तत्स्वरूप-स्यावगतेः अहमेवेति वक्तव्ये 'अक्षरं ब्रह्म परमम्' (८-३) इति अष्टमोक्तदिशा ब्रह्म देहेन्द्रियादीनि। ततो बहुव्रीहिः । प्राकृतस्वयमेवेति सिद्धमिति भावः । 'स च यत्प्रभावः' इत्युक्तमाह **अनादि-मदित्यादिना** । आदिरेषामस्तीत्यादिमन्ति देहेन्द्रियगुणकर्मादिहीनमित्यर्थः । भगवान् क्षेत्रान्तर्गतो भूत्वा क्षेत्रज्ञ इत्युच्यते किमित्यतो नेत्याह **नेति** । **तद्ब्रह्म सत्** व्यक्तशब्दितकार्यजातान्तर्गतं नेत्युच्यते । **असदव्यक्तशब्दितकारणान्तर्गतं** नेत्युच्यते । 'व्यक्ताव्यक्तविलक्षणः' इति स्मृतेः ।

यद्वा, 'मूर्तामूर्तव्यतीतत्वान्न सत् तन्नासदुच्यते' इति स्मृत्युक्तदिशा 'मूर्तं न, अमूर्तं च न' इत्युच्यत इति, 'नेति नेति' इत्यादिश्रुतावित्यर्थः ॥ १३ ॥

*अ०प्र०*— ज्ञेयमिति विकारोक्तिप्रसङ्गात् तदन्तर्भूतं ज्ञानसाधनमुक्त्वा तत्प्रसङ्गात् मुख्यतो ज्ञानस्य विषयं ज्ञेयं 'स च यो यत्प्रभावश्चे'ति पश्चात्प्रतिज्ञातमर्थद्वयं बहुत्वात् महामल्लभङ्गन्यायेन यतश्च परीत्येतत् प्रतिज्ञायाः पूर्वमेवाह येभिः साधनैः यत् ज्ञेयं तदाह श्रोतुरादरजननाय प्रतिज्ञायत तत्स्तुतिः क्रियते । **ज्ञेयमित्यादि** षड्भिः । तत्रादौ **ज्ञेयमिति** ।

अन्वयः— हे अर्जुन ! यत्[१], ज्ञेयं[२], तत्[३], प्रवक्ष्यामि[४], यत्[५], ज्ञात्वा[६], अमृतं[७], अश्नुते[८], तत् किं अनादिमत्[९], परं ब्रह्म[१०] न सत्[११] न असत्[१२], तत् इदं तु उभयविलक्षणं सद्भिः उच्यते इत्यन्वयः ।

यत् ज्ञेयं तत् प्रवक्ष्यामीति । स च यः इति प्रतिज्ञातं परं ब्रह्मेत्यनेनोच्यते यत् = ज्ञानेन विषयीक्रियते तत् = ज्ञेयं[३], प्रवक्ष्यामि = प्रकर्षेण वक्ष्यामि[४], यत् = मया वक्ष्यमाणं[५], ज्ञात्वा = विदित्वा[६], अमृतं = मोक्षं[७], अश्नुते = प्राप्नोति[८], किं तत् अनादिमत् = इत्यादि विशेषणैः यत्प्रभाव इत्येतदुपपाद्यते । न आदिरस्येत्याशयेनानादीत्येवोक्तेऽपि न आदिरनादिरिति नञ्चानादीति नपुंसकत्वात् तत्पुरुषभ्रम इति चेन्न । छान्दसे लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य भ्रमोपपत्तेः । ततश्च ब्रह्मकारणमेव न भवति इति भ्रमः स्यात् । तत्परिहारार्थं अनादिमित्युक्तम् । आदिरस्या-स्तीत्यादिमत् न आदिमत् अनादिमत् स्वयं कारणरहितमित्यर्थः । अस्य ज्ञेयस्यादेरभावात् नित्यत्वात् तथा । यद्वा, आदिरेषा अस्तीत्यादिमन्ति जन्यदेहादीनि तद्वर्जितमनादिमत् । यद्वा, अनादीनि च तत्परमिति च पदद्वयं मम विष्णोः परं निर्विशेषं रूपं ब्रह्मेत्यर्थः[९], परं ब्रह्म = तस्य निरतिशयानन्दत्वात् परं ब्रह्मेति स्वभावतः संज्ञा[१०] तदेवाह न सत् उच्यते = विधिमुखेन प्रमाणस्याविषयः सच्छब्देनोच्यते[११] न असत् उच्यते = निषेधस्य विषयस्तु असच्छब्देनोच्यते ॥ ॥ १३ ॥

**भाष्यम्**

**'परं ब्रह्म' इति च 'स च यः' इति प्रतिज्ञातमुच्यते । अन्यत् 'यत्प्रभावः' इति । आदिमद्देहादिवर्जितं अनादिमत् ।**

*प०टी०*— 'अनादिमत्' इत्यनेन कथं लक्षणप्रभावावुक्तौ ? इत्यत आह **परमिति** । परिपूर्णत्वमेव लक्षणमित्यर्थः । 'अनादिमत्' इत्येतदादिराहित्यमात्रार्थत्वप्रतीतिनिरासाय व्याचष्टे **आदिमदिति** ।

*प्र०दी०*— प्रतिज्ञातार्थद्वयप्रतिपादनाय 'ज्ञेयं यत्तत्' इत्यादिकं वाक्यमिति सूचितम् । तत्र केन तु किमुच्यते ? इत्यत आह **परमिति** । **इति** नामोक्त्या । **अन्यत्** अनादिमदित्यादिकं 'यत्प्रभावः' इति प्रतिज्ञातस्य प्रतिपादकमित्यर्थः ।

'आदिरस्यास्तीत्यादिमत् । न आदिमत् अनादिमदिति व्याख्याने, न विद्यते आदिः अस्येत्यनादि इति बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति दोषं पश्यन्तः केचित् 'अनादिः' इति 'मत्परं' इति च पदं विच्छिद्य 'अहं वासुदेवाख्या परा शक्तिः यस्य तत् मत्परम्' इति व्याचक्षते । तदसत् । अर्थासम्भवात् । न हि 'ब्रह्म' इति 'वासुदेवः' इति कश्चिद्भेदः । 'न च अवतारेषु पारावर्यम्' इत्युक्तमिति भावेन यथा मतुपो न वैयर्थ्यं तथा व्याचष्टे **आदिमदिति** ।

आदिः एषामस्तीत्यादिमन्ति । न विद्यन्ते आदिमन्ति यस्य तदनादिमत् । सामर्थ्यात् तानि च देहेन्द्रियगुणक्रियादीनीत्यर्थः । अथवा पूर्वोक्त एव विग्रहः । न च मतुपो वैयर्थ्यम् । वैदिकं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वाऽयमिति संशयः स्यात् । तथा च ब्रह्म स्वयं कारणं न भवतीत्यपि शङ्क्येत । तन्निवृत्त्यर्थं मतुबन्तेन आदिशब्देन नञ्समासस्य आश्रयणात् ।

*भा०दी०*— **सूचितमिति** । 'वक्तुम्' इत्यन्तभाष्येणेति भावः । **न कश्चिद्भेद इति** । पूर्वाध्याये 'परं तु ब्रह्म न हि भगवतोऽन्यत्' इत्यादिना तथोक्तेरिति भावः । 'अवतारेषु पारावर्यं नास्ति' इति चोक्तं द्वितीयाध्यायान्त्यभागे । अतोऽपि न कश्चिद्भेद इत्यर्थः । **पूर्वोक्त एवेति** । 'आदिरस्यास्ति' इत्यादिनोक्त इत्यर्थः (अवतारेषूक्त इत्यर्थः) । ननु नञ्समासपक्षे 'अनादि' इति निर्देशेन भाव्यम्, आदिपदस्य नित्यपुल्लिङ्गत्वात् तत्कथं 'अनादि' इत्युक्त्या नञ्समाससंशय इत्यत आह **वैदिकं लिङ्गव्यत्ययमित्यादि** ।

*भा०र०*— **सूचितमिति** । 'स च यो यत्प्रभावश्चेति वक्तुं तज्ज्ञानसाधनान्याह इति भाष्येण' इति शेषः । 'परं ब्रह्म' इत्यस्य स्वरूपप्रश्नोत्तरत्वस्फोरणार्थम् इतिशब्दमनूद्य अध्याहरति **इति नामोक्त्येति** । 'सर्वात्मके ब्रह्मणि वासुदेवे', 'अक्षरं ब्रह्म परमम्' इत्यादौ वासुदेवासाधारणाभिधानब्रह्मश्रुत्या वासुदेवत्वेन प्रवर्तकस्वरूपमवगम्यत इत्यर्थः । 'प्रतिज्ञातादन्यत्' इति प्रतीति-

निरासाय 'उच्यते' इत्यनुवृत्तौ अनन्वितमुत्तरभाष्यं साध्याहारं योजयति **अन्यदनादिमद् इत्यादिकमित्यादिना** ॥ 'आदिरस्यास्तीति आदिमत्, न आदिमत् अनादिमत्' इति शङ्करभाष्याक्षरानुवादः । **अत्र केचित्** 'अनादि मत्परम्' इति पदं छिन्दन्ति । बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादित्यर्थविशेषं च दर्शयन्ति— 'अहं = वासुदेवाख्या परा = शक्तिर्यस्य तत् मत्परम्' इति । अन्यमतोपन्यासरूपं शङ्करभाष्यं अर्थतोऽनुवदति **न विद्यत आदिरित्यादि** । **अर्थासम्भवात्** 'अहं = वासुदेवाख्या परा शक्तिर्यस्य' इति विग्रहवाक्यस्य असम्भवदर्थकत्वादित्यर्थः । तदुपपादयति **न हीति** ॥ **कश्चिद्भेद इति** । 'परं तु ब्रह्म न हि भगवतोऽन्यत्, सर्वात्मके ब्रह्मणि वासुदेवे' इति द्वादशेऽध्याये वासुदेवब्रह्मणोरभेदस्य समर्थिततत्वेन 'अहं वासुदेवाख्या परा शक्तिर्यस्य' इत्यनेन प्रतीतस्य भेदस्य दूषितत्वादिति भावः । किञ्च 'वासुदेवाख्या परा शक्तिः' इति पक्षे वासुदेवावतारस्य परत्वप्राप्त्या अर्थाद् इतरावतारेष्ववरत्वमङ्गीकृतं स्यात्, तदयुक्तम् । 'परिपूर्णानि रूपाणि समान्यखिलरूपतः' (गारुडे) इत्यादिप्रमाणोदाहरणेन द्वितीयाध्यायान्ते पारावर्यपक्षस्य दूषितत्वात् । अतोऽपि न परव्याख्यानं युक्तमित्याह **न चेति** ।

'अनादि इत्युक्ते स्वयं कारणं न भवतीत्याशङ्का स्यादिति तन्निवृत्त्यर्थम् अनादिमदित्याह' इत्युत्तरप्रस्थाने मतुपो भाष्यरीत्या मुख्यार्थत्वमङ्गीकृत्यैव प्रयोजनान्तरमन्वाचितम् । तदनुरुन्धानः पक्षान्तरमाह **अथवेति** । **उक्त एव** 'आदिरस्यास्तीति आदिमत्, न आदिमद् अनादिमत्' इत्युक्त एव । ननु 'नञ्समासो वाऽयम्' इति संशयो न सम्भवति ? आदिशब्दस्य 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः' इत्यभिधानेन नित्यपुंस्त्वावगमेन, 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति तत्पुरुषसमासे परवल्लिङ्गत्वानुशासनेन च 'अनादिः' इति पुंलिङ्गशब्दश्रवणस्यैव विशेषदर्शनरूपवत्त्वाद्, इत्यत आह **वैदिकं लिङ्गव्यत्ययमिति** । यद्वा 'सुपां सुलुक्' इति स्मरणात् 'अनादिः' इति प्रथमविभक्तेर्लुका लोपे 'अनादि' इत्युपपद्यत इति भावेनोक्तम् **विभक्तिलोपं चेति** । वेदतुल्यत्वात् 'वैदिकम्' इत्युक्तिः ।

**भाष्यम्**

**अन्यथा 'अनादि' इत्येव स्यात्** ॥ १३ ॥

***प०टी०***— स्वरूपादिराहित्यमात्रमर्थः किं न स्यात् ? इत्यत आह **अन्यथेति** ॥ १३ ॥

***प्र०दी०***— ये त्वेवं प्रयोजनमनभिधाय 'मतुपः प्रयोगः श्लोकपूरणार्थः' इत्युक्तवन्तः तान् निराचष्टे **अन्यथेति** । अस्मदुक्तप्रयोजनद्वयानङ्गीकार इत्यर्थः । सार्थकेन शब्दान्तरेण श्लोकपूरण-

सम्भवादिति भावः । ननु बहुव्रीहिमाश्रित्य पुनः मतुपः प्रयोगे दोषः स्यात् । न चैवम् । किं तु शब्दान्तरमेवैतत्। तत्कथमयं दोषः ? अन्यथा 'यद्विकारि' इत्यत्रापि दोषप्रसङ्गात् । मैवम् । बहुव्रीहिं विवक्षित्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात्, 'यद्विकारि' इत्यत्र गौरवाभावात् ॥ १३ ॥

*भा०दी०*— **शब्दान्तरमिति** । 'आदिमन्नेत्यनादिमत्' इति नञ्तत्पुरुषरूपं शब्दान्तरमित्यर्थः । **अभिमतार्थेति** । आदिमत्वाभावरूपार्थेत्यर्थः । कारणहीनत्वरूपपराभिमतार्थेति यावत् । **बहुयत्नेति**। मतुबन्तेन नञ्समासाश्रयणरूपेत्यर्थः । **गौरवाभावादिति** । बहुव्रीहित्वे यद्विकारमिति कर्मधारयादिन्नन्तत्वे तु 'यद्विकारि' इति । तावता शब्दाधिक्यगौरवं नेति भावः ॥ १३ ॥

*भा०र०*— अपव्याख्याननिराकरणार्थमुत्तरभाष्यमित्याह **ये त्विति** । तथा च *शङ्करः* 'तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः' इति । *श्रीधरः* अपि एवमेव अवादीत्। **प्रयोजनद्वयेति** । आदिमदेहादिवर्जितत्वप्रतिपादनम् एकं प्रयोजनम्, 'ब्रह्म स्वयं कारणं न भवति' इति शङ्कानिरासश्चापरं प्रयोजनम् इत्येवम् अस्मदुक्तप्रयोजनद्वयाङ्गीकार इत्यर्थः । **शब्दान्तरेण** 'मत्परं ब्रह्म' 'परं ब्रह्म' इत्यादिरूपेण शब्दान्तरेण । **शब्दान्तरम्** आदिः = कारणसमस्यास्तीत्यादिमत्, न आदिमत् अनादिमत्', इति अबहुव्रीहिरूपोऽयम् अन्य एव शब्द इत्यर्थः । शब्दान्तरत्वानभ्युपगमे दोषमाह **अन्यथेति** । 'यश्चासौ विकारश्च यद्विकारः, सोऽस्यास्तीति यद्विकारि' इति स्वमते अभ्युपगमात्, तत्रापि इनेर्वैयर्थ्यप्रसङ्गेन शब्दान्तरत्वमेव समाधानं वक्तव्यमिति भावः । **अभिमतार्थः** कारणशून्यत्वम् । **बहुयत्नेति** । आदौ आदिशब्दान्मतुप्, ततो नञ्समासः । तत्रोक्तदोषपरिहाराय शब्दान्तरत्वकल्पनम्, इत्येवं बहुप्रयत्नाश्रयणस्येत्यर्थः । **गौरवाभावादिति** । बहुव्रीहित्वे 'यद्विकारम्' इति भवेत्; तत्र च अनुस्वराधिक्यम् । कर्मधारयाद् इन्नन्तत्वे तु 'यद्विकारि' इत्येव भवतीति मात्राधिक्यगौरवाभावादित्यर्थः । 'न दोषः' इति शेषः ॥ १३ ॥

**गीतातात्पर्यनिर्णयः**

**अनादि इत्युक्ते स्वयं कारणं न भवति इति आशङ्का स्यादिति तन्निवृत्त्यर्थं 'अनादिमत्' इत्याह ।**

*न्या०दी०*— ननु "अनादिमत्परं ब्रह्म" इत्यत्रानादीतावता पूर्णत्वात् अनादिमदिति किमर्थमुच्यत इत्यत आह **अनादीति** ॥ न चात्र भाष्यविरोधः । तत्रोक्तस्य मतुपो मुख्या-

निरासाय 'उच्यते' इत्यनुवृत्तौ अनन्वितमुत्तरभाष्यं साध्याहारं योजयति **अन्यदनादिमद् इत्यादिकमित्यादिना** ॥ 'आदिरस्यास्तीति आदिमत्, न आदिमत् अनादिमत्' इति शङ्करभाष्याक्षरानुवादः । **अत्र केचित्** 'अनादि मत्परम्' इति पदं छिन्दन्ति । बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादित्यर्थविशेषं च दर्शयन्ति— 'अहं = वासुदेवाख्या परा = शक्तिर्यस्य तत् मत्परम्' इति । अन्यमतोपन्यासरूपं शङ्करभाष्यं अर्थतोऽनुवदति **न विद्यत आदिरित्यादि** । **अर्थासम्भवात्** 'अहं = वासुदेवाख्या परा शक्तिर्यस्य' इति विग्रहवाक्यस्य असम्भवदर्थकत्वादित्यर्थः । तदुपपादयति **न हीति** ॥ **कश्चिद्भेद इति** । 'परं तु ब्रह्म न हि भगवतोऽन्यत्, सर्वात्मके ब्रह्मणि वासुदेवे' इति द्वादशेऽध्याये वासुदेवब्रह्मणोरभेदस्य समर्थिततत्वेन 'अहं वासुदेवाख्या परा शक्तिर्यस्य' इत्यनेन प्रतीतस्य भेदस्य दूषितत्वादिति भावः । किञ्च 'वासुदेवाख्या परा शक्तिः' इति पक्षे वासुदेवावतारस्य परत्वप्राप्त्या अर्थाद् इतरावतारेष्ववरत्वमङ्गीकृतं स्यात्, तदयुक्तम् । 'परिपूर्णानि रूपाणि समान्यखिलरूपतः' (गारुडे) इत्यादिप्रमाणोदाहरणेन द्वितीयाध्यायान्ते पारावर्यपक्षस्य दूषितत्वात् । अतोऽपि न परव्याख्यानं युक्तमित्याह **न चेति** ।

'अनादि इत्युक्ते स्वयं कारणं न भवतीत्याशङ्का स्यादिति तन्निवृत्त्यर्थम् अनादिमदित्याह' इत्युत्तरप्रस्थाने मतुपो भाष्यरीत्या मुख्यार्थत्वमङ्गीकृत्यैव प्रयोजनान्तरमन्वाचितम् । तदनुरुन्धानः पक्षान्तरमाह **अथवेति** । **उक्त एव** 'आदिरस्यास्तीति आदिमत्, न आदिमद् अनादिमत्' इत्युक्त एव । ननु 'नञ्समासो वाऽयम्' इति संशयो न सम्भवति ? आदिशब्दस्य 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः' इत्यभिधानेन नित्यपुंस्त्वावगमेन, 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति तत्पुरुषसमासे परवल्लिङ्गत्वानुशासनेन च 'अनादिः' इति पुंलिङ्गशब्दश्रवणस्यैव विशेषदर्शनरूपवत्त्वाद्, इत्यत आह **वैदिकं लिङ्गव्यत्ययमिति** । यद्वा 'सुपां सुलुक्' इति स्मरणात् 'अनादिः' इति प्रथमविभक्तेर्लुका लोपे 'अनादि' इत्युपपद्यत इति भावेनोक्तम् **विभक्तिलोपं चेति** । वेदतुल्यत्वात् 'वैदिकम्' इत्युक्तिः ।

**भाष्यम्**

**अन्यथा 'अनादि' इत्येव स्यात्** ॥ १३ ॥

***प०टी०***— स्वरूपादिराहित्यमात्रमर्थः किं न स्यात् ? इत्यत आह **अन्यथेति** ॥ १३ ॥

***प्र०दी०***— ये त्वेवं प्रयोजनमनभिधाय 'मतुपः प्रयोगः श्लोकपूरणार्थः' इत्युक्तवन्तः तान् निराचष्टे **अन्यथेति** । अस्मदुक्तप्रयोजनद्वयानङ्गीकार इत्यर्थः । सार्थकेन शब्दान्तरेण श्लोकपूरण-

सम्भवादिति भावः । ननु बहुव्रीहिमाश्रित्य पुनः मतुपः प्रयोगे दोषः स्यात् । न चैवम् । किं तु शब्दान्तरमेवैतत्। तत्कथमयं दोषः ? अन्यथा 'यद्विकारि' इत्यत्रापि दोषप्रसङ्गात् । मैवम् । बहुव्रीहिं विवक्षित्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात्, 'यद्विकारि' इत्यत्र गौरवाभावात् ॥ १३ ॥

*भा०दी०*— **शब्दान्तरमिति** । 'आदिमन्नेत्यनादिमत्' इति नञ्तत्पुरुषरूपं शब्दान्तरमित्यर्थः । **अभिमतार्थेति** । आदिमत्वाभावरूपार्थेत्यर्थः । कारणहीनत्वरूपपराभिमतार्थेति यावत् । **बहुयत्नेति**। मतुबन्तेन नञ्समासाश्रयणरूपेत्यर्थः । **गौरवाभावादिति** । बहुव्रीहित्वे यद्विकारमिति कर्मधारयादिन्नन्तत्वे तु 'यद्विकारि' इति । तावता शब्दाधिक्यगौरवं नेति भावः ॥ १३ ॥

*भा०र०*— अपव्याख्याननिराकरणार्थमुत्तरभाष्यमित्याह **ये त्विति** । तथा च *शङ्करः* 'तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः' इति । *श्रीधरः* अपि एवमेव अवादीत्। **प्रयोजनद्वयेति** । आदिमद्देहादिवर्जितत्वप्रतिपादनम् एकं प्रयोजनम्, 'ब्रह्म स्वयं कारणं न भवति' इति शङ्कानिरासश्चापरं प्रयोजनम् इत्येवम् अस्मदुक्तप्रयोजनद्वयाङ्गीकार इत्यर्थः । **शब्दान्तरेण** 'मत्परं ब्रह्म' 'परं ब्रह्म' इत्यादिरूपेण शब्दान्तरेण । **शब्दान्तरम्** आदिः = कारणसमस्यास्तीत्यादिमत्, न आदिमत् अनादिमत्', इति अबहुव्रीहिरूपोऽयम् अन्य एव शब्द इत्यर्थः । शब्दान्तरत्वानभ्युपगमे दोषमाह **अन्यथेति** । 'यश्चासौ विकारश्च यद्विकारः, सोऽस्यास्तीति यद्विकारि' इति स्वमते अभ्युपगमात्, तत्रापि इनेर्वैयर्थ्यप्रसङ्गेन शब्दान्तरत्वमेव समाधानं वक्तव्यमिति भावः । **अभिमतार्थः** कारणशून्यत्वम् । **बहुयत्नेति** । आदौ आदिशब्दान्मतुप्, ततो नञ्समासः । तत्रोक्तदोषपरिहाराय शब्दान्तरत्वकल्पनम्, इत्येवं बहुप्रयत्नाश्रयणस्येत्यर्थः । **गौरवाभावादिति** । बहुव्रीहित्वे 'यद्विकारम्' इति भवेत्; तत्र च अनुस्वाराधिक्यम् । कर्मधारयाद् इन्नन्तत्वे तु 'यद्विकारि' इत्येव भवतीति मात्राधिक्यगौरवाभावादित्यर्थः । 'न दोषः' इति शेषः ॥ १३ ॥

**गीतातात्पर्यनिर्णयः**

**अनादि इत्युक्ते स्वयं कारणं न भवति इति आशङ्का स्यादिति तन्निवृत्त्यर्थं 'अनादिमत्' इत्याह ।**

***न्या०दी०*— ननु "अनादिमत्परं ब्रह्म" इत्यत्रानादीतावता पूर्णत्वात् अनादिमदिति किमर्थमुच्यत इत्यत आह अनादीति ॥ न चात्र भाष्यविरोधः । तत्रोक्तस्य मतुपो मुख्या-**

**र्थस्य अनङ्गीकारे भाष्ये दोषस्योक्तत्वात् । अत्र पुनः तमङ्गीकृत्यैव प्रयोजनान्तरं मतुपा चिनोतीति ।**

***भा०दी०***— केन साधनं केन ज्ञप्तिरुच्यत इत्यतस्तद्विवेचयन्नेव मूलमवतारयति **नन्वित्यादिना** ॥ **न चात्रेति** । आदिमन्न भवतीत्यनादिमदित्यभिप्रेत्य अनादीत्यादिना मूलोक्तार्थे अन्यथा अनादीत्येव स्यादिति भाष्ये विरोध इत्यर्थः ॥ **तत्रेति** । आदिमन्न भवतीत्यनादिमदिति विग्रहाङ्गीकारेण कारणोपेतं नेत्यर्थस्वीकारे न विद्यते आदिः कारणं यस्येति बहुव्रीह्याश्रयेणैवास्यार्थस्य सिद्धेर्मतुपो वैयर्थ्यं स्यादित्युक्तेस्तद्विरोध इत्यर्थः ॥ **तत्रोक्तस्येति** । आदिरेषामस्तीत्यादिमन्ति देहेन्द्रियगुणकर्माणि । न विद्यन्ते आदिमन्ति यस्य तदनादिमदित्युक्तस्य मुख्यार्थत्वस्येत्यर्थः ॥ **दोषस्येति** । मतुपो वैयर्थ्यदोषस्येत्यर्थः ॥ **तमङ्गीकृत्येति** । वैयर्थ्यदोषमङ्गीकृत्य आदिकारणं न भवतीत्यनादीति नञ्तत्पुरुषाश्रयेण स्वयं कारणं नेति चोद्यनिवृत्तिरूपं प्रयोजनमन्वाचिनोति । अनास्थयोपादत्ते इत्यर्थः । चार्थयोरन्वाचयसमुच्चययोः अन्वाचयरूपार्थो न समुच्चयरूपः । अनादीत्युक्तावपि न विद्यते आदिकारणं यस्येति बहुव्रीहिणा स्वस्य कारणं नेत्यर्थो लभ्यते । नञ्तत्पुरुषपक्षे तु छान्दसलिङ्गव्यत्ययो वा विभक्तिलोपो वा आश्रयणीयः । अन्यथा आदिशब्दस्य नित्यपुल्लिङ्गतया अनादिरिति स्यात् । अतोऽनास्थयोक्तशङ्कानिवृत्तिरूपं प्रयोजनलाभमङ्गीकरोत्यादिमन्नेति विग्रहाश्रयणम् । वस्तुतस्तु भाष्योक्तार्थ एव तात्पर्यमिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"मुख्यतो गुणपूर्णत्वात् परं ब्रह्म जनार्दनः ।**
**मूर्तामूर्तव्यतीतत्वान्न सन्नैवासदुच्यते ॥" इति च ।**

***न्या०दी०***— "परंब्रह्म न सत्तन्नासदुच्यत" इत्येतत् **प्रमाणवाक्येनैव व्याचष्टे मुख्यत इति** ॥

***भा०दी०***— **इत्येतदिति** । परब्रह्मादिशब्दजातमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"मूर्तं सदवगम्यत्वात् अज्ञेयत्वात् असत् परम् ।**
**पुंसामर्थ्यादगम्यत्वात् सर्ववेदप्रसिद्धितः ।**
**विलक्षणः सदसतोर्भगवान् विष्णुरव्ययः ॥" इति च ॥ १७ ॥**

*प्रका०*— "एतत् ज्ञानमिति प्रोक्तम्" इत्यत्र एतत् शब्देन अमानित्वमदम्भित्वमित्यादिकं परामृश्यते । अज्ञेयत्वादसत्परमित्यस्य चक्षुरादिभिरज्ञेयत्वात् । अमूर्तमसदुच्यते इत्यर्थः ॥

**न्या०दी०— कथं मूर्तामूर्तयोः सदसच्छब्दवाच्यत्वं, कथं च भगवतस्तद्विलक्षणत्वमित्यत आह मूर्तमिति ॥ परं अमूर्तम् ॥**

**गीता**

# सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
# सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥

*वि०वि०*— केशादिष्वपि सर्वत्र पाणिपादादिशक्तिमत्वस्य कृष्णकेशे कृष्णे दृष्टत्वात् सर्वतः पाण्यादीत्युच्यते ।

अथवा, पाण्यादियुक्तैरणुतरै रूपैः सर्वत्र स्थितत्वात् सर्वतः पाणिपादादिमत् । उक्तं च– 'सर्वत्र पाणिपादादिर्यतः पाण्यादिशक्तिमान् । केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ॥ अणोरणुतरै रूपैः पाणिपादादिसंयुतैः । सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान् ॥' इति ॥१४॥

*सा०सं०*— पुनस्तत्प्रभावमाह **सर्वत इति** । कथं जगद्वैलक्षण्यं हरेरित्यतो वाऽऽह **सर्वत इति** । **तत्** प्रागुक्तं परंब्रह्म । **सर्वतः** सर्वावयवेषु । **पाणिपादम्** द्वन्द्वैकवद्भावः प्राण्यङ्गत्वात् । तेन तच्छक्तिर्लक्ष्यते । पाणिपादादिशक्तिमत्सर्वेऽप्यवयवाः स्वस्वेतरावयवशक्तिमन्तः इत्यर्थः । शुक्ल-कृष्णकेशावतारयोर्बलरामकृष्णयोः पाणिपादादिशक्तेर्दर्शनात् । एवं सर्वतः सर्वावयवेषु चक्षुरादि-शक्तिमदित्यर्थः । **सर्वतः** सर्वावयवेषु श्रुतिमच्छ्रोत्रेन्द्रियशक्तिमत् । सर्वेन्द्रियाणां विषयान् कर्माणि च सर्वेन्द्रियैः वेत्ति करोति चेति यावत् । **लोके** जगति **सर्वं** वस्तु **आवृत्य तिष्ठति** व्याप्य वर्तते । यद्वा, **सर्वतः** सर्वत्र देशे स्थितं **तत्** ब्रह्म पाणिपादाक्षिशिरःप्रभृत्यवयवोपेतं सत् **लोके सर्वं वस्तु व्याप्य तिष्ठति** इति । अणोरणुतरैः पाणिपाद्यवयवोपेतैः अनन्तरूपैः सर्वत्र स्थितं सत् व्याप्त-रूपेण च सर्वमपि व्याप्य वर्तते ब्रह्मेति भावः ॥ १४ ॥

*अ०प्र०*— इदं तु तदुभयविलक्षणं अलक्षणत्वादित्यर्थः । उच्यते सद्भिः सदसदोऽतीतत्वात् अस्ति-नास्तीति वाक् दृष्ट्वा मौनायते मनसो विचारोऽपि यत्र मन्दायते तत् श्रीविष्णुप्रसादेनैव वेद्यमित्यर्थः । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ मूर्तं सदिति सम्प्रोक्तं अमूर्तमसदुच्यते । मूर्तामूर्ततरं ब्रह्म न सत्तं नासदुच्यते । यदन्यद्वायोश्चान्तरिक्षाच्चैतत् सद्वा पुनरन्त-

रिक्षं चासदिति वाक्यतः शेषोक्तरीत्या "पञ्चभूतविलक्षणत्वान्न सत्तन्नासदुच्यते । मुख्यतो गुणपूर्णत्वात्परं ब्रह्म जनार्दनः ॥ मूर्तामूर्तव्यतीतत्वान्न सत्तन्नासदुच्यते । स तु सर्वेषु जीवेषु बहिश्चैव व्यवस्थितः ॥ विलक्षणश्च जीवेभ्यः सर्वेभ्योऽपि सदैव तु ।" इत्यादिश्रुतिप्रसिद्धया अचिन्त्यशक्त्या सर्वान्तर्यामित्वं तस्य दर्शयन्नाह सर्वत इति पञ्चभिः । तत्रादौ **सर्वतः पाणिपादं तदिति** । तत् सर्वतः पाणिपादं शेषं समम् ।

तत् सर्वतः = सर्वत्र पाणयः पादाश्च यस्य तत्[२], सर्वतोऽक्षिशिरोमुखं = सर्वत्राक्षिशिरांसि मुखानि च यस्य तत्[३], सर्वतः श्रुतिमत् सत् = सर्वत्र श्रवणेन्द्रियैर्युक्तं सत्[४], लोके[५], सर्वं[६], सर्वेन्द्रियग्रामं आवृत्य = व्याप्य[७], तिष्ठति = वर्तते सर्वप्राणिवृत्तिभिः पाण्यादिभिः सर्वव्यापारस्य प्रदत्वेन तिष्ठतीत्यर्थः ॥

तत्पाण्यादिकं देशे काले च देशकालानवच्छिन्नत्वेन स्थूलसूक्ष्मदेहयोः या क्रिया भवति त एव सर्वत्र तस्य पाण्यादयः । तदुक्तम्— "सर्वतः पाणिपादादि यतः पाण्यादिशक्तिमान् । केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ॥ अणोरणुतरैरूपैः पाणिपादादिसंयुतैः । सर्वत्र सुस्थितत्वाद्वा सर्वतः पाणिपादवान् ॥ सर्वेन्द्रियाणां विषयान् वेत्ति सोऽप्राकृतेन्द्रियः । यतोऽतोऽनिन्द्रियः प्रोक्तः यन्न भिन्नेन्द्रियोऽथवा ॥ गुणैस्सत्त्वादिभिर्हीनः सर्वकल्याणमूर्तिमान् ।" हस्तादिष्वपि सर्वेन्द्रियाणां नेतृत्वात्तत्कर्मकर्तृत्वाच्च सर्वतः पाण्यादि सर्वावयववानित्यर्थः । अन्यथा "......... भावराहित्यात् अचरश्चर एव च । चरणात्सर्वदेशेषु व्याप्तोऽणुर्मध्यमस्तथा ॥ सर्वगत्वात्समीपे च दूरे चैवान्तरेव सः । अनन्ताव्ययशक्तित्वादन्यत्राप्यविरोधिनः ॥ सन्ति सर्वे गुणास्तत्र न च तत्र विरोधिनः ।" इति प्रमाणानुसारेण व्याख्येयम् । तथाहि— केशादिष्वपि सर्वत्र पाणिपादादिसर्वावयवशक्तिमत्त्वस्य उद्धवबलरामात्मनः केशौ शुक्लकृष्णौ महाविभुरिति भारतोक्तेः कृष्णकेशरूपे यादवकृष्णे दृष्टत्वात्सर्वतः पाणिपादं तदित्यादिकमुच्यते ॥ १४ ॥

**भाष्यम्**

**सर्वेन्द्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम् । इन्द्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् ॥ १४ ॥**

***प०टी०***— 'सर्वेन्द्रिय...' इत्येतद्व्याचष्टे **सर्वेति** । सेन्द्रियं सगुणं ब्रह्म कथमिन्द्रियादिरहितमुच्यते ? इति । तत्राह **इन्द्रियेति** ॥ १४ ॥

*प्र०दी०*— 'अहं परा शक्तिः यस्य' इति व्याख्याने अर्थासम्भवं **कश्चिद्** अन्यथा प्राह । 'ब्रह्मणः सर्वविशेषप्रतिषेधेनैवात्र विजिज्ञापयिषितत्वात् शक्तिमत्त्वप्रतिपादनं विरुद्धम्' इति । तदसत् । अत्र विशेषवत्त्वस्य दर्शनादिति भावेनाह **सर्वेति** । **गुणान्** तद्विषयान् **आभासयति** प्रत्यापयति प्रत्येतीति वा । भासतेः पचाद्यच् । एवं 'सर्वतः पाणिपादं तत्', 'सर्वभृत्', 'गुणभोक्तृ च' इत्यादिकमप्युदाहार्यम् । कथं तर्हि 'सर्वेन्द्रियविवर्जितम्', 'निर्गुणम्', 'अचरम्' इत्याद्युक्तमित्यत आह **इन्द्रियेति** । आदिशब्दात् परं 'शब्द' इत्यध्याहार्यम् । **पुरस्तात्** द्वितीये ॥ १४ ॥

*भा०र०*— **कश्चित्** शङ्करः । तथा च तदीयं भाष्यम् 'न त्वर्थः सम्भवति । ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात् । 'न सत् तन्नासदुच्यते' इति विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धम्' इति । तदिदं सङ्क्षिप्यानुवदति **ब्रह्मण इति** । **विजिज्ञापयिषितत्वात्** विशेषेण ज्ञापयितुमिष्टत्वात् । 'विषयान् वेत्ति' इति तात्पर्यनिर्णयोक्तं हृदि कृत्वा आह **गुणान् विषयानिति, प्रत्येतीति वेति च** । **पचाद्यजिति** । 'प्रत्याययति' इत्यर्थपक्षे आङ्पूर्वाद् हेतुमाण्ण्यन्ताद् भासतेः 'नन्दि-ग्रहि-पचादिभ्यो ल्यु-णिनि-अचः' इति सूत्रविहितः कर्तरि अच्प्रत्ययः । 'प्रत्येति' इत्यर्थे तु स्वार्थे ण्यन्तात् । उभयत्रापि 'णेरनिटि' इति णिलोप इति भावः । **इत्यादिकमिति** । अत्र आदिशब्देन 'भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च' इत्यादिगुणावेदकवाक्यग्रहः । **तर्हि** यदि सविशेषत्वमभिसन्धित्सितम्, तर्हि । नन्विन्द्रियवर्जितत्वादेः अशब्दत्वेनार्थाबोधकत्वादाह **शब्देत्यध्याहार्यमिति** । 'इन्द्रियवर्जितम्', 'निर्गुणम्, 'अचरम्' इत्यादिरूपस्येन्द्रियविवर्जितत्वादिप्रतिपादकशब्दस्य प्राकृतेन्द्रियवर्जितत्वादिरूपोऽर्थः । 'वदन्ति च लौकिकवैलक्षण्ये अभावशब्दम्' इत्यादिना द्वितीयाध्याये उक्त इति नैतद्वचनजातं सविशेषत्वविरोधीति भाव इत्यभिसन्धिः ॥ १४ ॥

**गीता**

## सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
## असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५ ॥

*वि०वि०*— सर्वाणीन्द्रियाणि सर्वे गुणाः विषयाश्च भास्यन्ते ज्ञायन्ते ज्ञाप्यन्ते चानेनेति सर्वेन्द्रियगुणाभासम् । प्राकृतानां भिन्नानां चेन्द्रियाणामभावात् सर्वेन्द्रियवर्जितम् । न तु सर्वथाऽभावात् । 'सर्वतः पाणिपादं तत्' इत्यादेः । उक्तं च–

'अपाणिपादोऽजवनोऽगृहीता पश्यत्यचक्षुः स श्रुणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥'

इति । **असक्तं** निर्लेपम् । सर्वं भुङ्क्त इति **सर्वभुक्** । **निर्गुणं** सत्वादिगुणहीनम् । कल्याणगुणवर्णनप्रकरणात् । 'अगुणोऽगुणदेहत्वात्' इति वचनात् । **गुणभोक्तृ** सर्वगुणभोक्तृत्वेऽपि सारभूतमानन्दादिकमेव भुङ्क्ते । 'सर्वत्र सारभुक् देवो नासारं स कदाचन ।' इति वचनात् ॥१५॥

***वा०ल०***— 'सर्वेन्द्रियगुणाभासम्' इत्यत्र, सर्वेन्द्रियगुणाभासं सर्वेषां जीवानामिन्द्रियाणि प्राकृतेन्द्रियाणि, गुणान् प्राकृतरूपरसादिगुणांश्च आ सम्यक् भासयतीति तत्तथोक्तम् । सर्वेन्द्रियविवर्जितं सर्वेषामिन्द्रियैः प्राकृतेन्द्रियैः, उपलक्षणं चैतत्, प्राकृतगुणैश्च विवर्जितम् । सर्वथा इन्द्रियवर्जितत्वे 'सर्वतः पाणिपादं तत्' इत्यादिनिरवकाशोपक्रमवाक्यविरोधः । निर्गुणं सत्त्वादिगुणरहितम् । गुणभोक्तृ स्वरूपभूतानन्दादिगुणभोक्तृ । सर्वथा गुणाभावपरिहाराय गुणभोक्तृ च इत्युक्तम् ॥ १५ ॥

***सा०सं०***— किञ्च सर्वेन्द्रियगुणाभासं तद्ब्रह्म सर्वाणीन्द्रियाणि गुणान् शब्दादिविषयांश्चाभासयति प्रत्याययति प्रत्येति वा **सर्वेन्द्रियगुणाभासम्** । 'भासृ दीप्तौ' इत्यतः पचाद्यच् । प्राकृतानां भिन्नानां चेन्द्रियाणामभावात् **सर्वेन्द्रियविवर्जितम्** । **असक्तं** निर्लेपम् । सर्वं भुङ्क्त इति **सर्वभुक्** च । सर्वसंहर्तृ इति वा, सर्वसारभोक्तृ इति वाऽर्थः । 'सर्वभृच्च' इति पाठान्तरम् । **गुणभोक्तृ च** सर्वकल्याणगुणभोक्तृ चेत्यर्थः ॥ १५ ॥

***अ०प्र०***— किञ्च, **सर्वेन्द्रियेति** ।

सर्वेन्द्रियगुणाभासं = सर्वाणीन्द्रियाणि सर्वे गुणाः विषयाश्च भास्यन्ते ज्ञायन्ते ज्ञाप्यन्तेऽनेनेति तथा[1], सर्वेन्द्रियविवर्जितं = प्राकृतानां भिन्नानां वा इन्द्रियाणां अभावात् तथा[2], ननु सर्वथेन्द्रियाभावात् सर्वतः पाणिपादं तत् इत्याद्युक्तिविरोधात् ।

अपाणिपादोऽजवनोऽगृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
न वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥

श्रुतेश्च प्रकृतिजन्यभिन्नावयवनिषेध एवेति भावः[२], असक्तं = व्याप्य स्थित्वाऽपि निर्लेपमित्यर्थः[३], सर्वभृत् = स्वमहिम्नैव सर्वं बिभर्तीति तथा[४], निर्गुणं = निर्गताः सत्वादिगुणाः यस्मात् तत् सत्त्वादिगुणहीनं[५], गुणभोक्तृ च = गुणानां सत्वादीनां पालकं चकारेण भक्षकम् । यद्वा, गुणस्य शुभानन्दस्य स्वादविषयस्य वा भोक्तृ न दुःखादेः । तदुक्तम्— 'सर्वत्र सारभुग्देवो नासारं स कदाचन' इत्युक्तेः । यथा वीरः परानिष्टकारी तीक्ष्णं स्वायुधादि दृष्ट्वा तुष्यति तथेश्वरोऽपि परानिष्टकारी स्वाधीनं दुःशब्दादिकमनुभूय सुख्येव भवतीति दुर्विषयोऽपि तस्य सुखहेतुरिति वा । सर्वत्र सारभुक् नारायणानिरुद्धौ चेति स्मृत्युक्तरीत्या वा ॥ १५ ॥

**गीता**

## बहिरन्तश्च भूतानामचरं चरमेव च ।
## सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १६ ॥

***वि०वि०***— भूतानां नित्यसिद्धानां जीवानाम् । बहिरन्तश्च व्यवस्थितम् । अन्यथा भावराहित्यादचरम् । सर्वदेशेषु चरणाच्चरम् । सूक्ष्मत्वादिन्द्रियाग्राह्यत्वादनुमानस्यानियतत्वाद्वेदैर्विज्ञातुमशक्यम् । सर्वगतत्वाद्दूरस्थम् । अन्तिकेऽवस्थितम् ॥ १६ ॥

***सा०सं०***— किञ्च **भूतानां** सर्वप्राणिनाम् । **बहिरन्तश्च** परं ब्रह्म तिष्ठतीत्यनुषज्यते । अन्यथाभावराहित्यात् **अचरम्** । सर्वदेशेषु चरणाद्गमनाच्**चरम्** । **सूक्ष्मत्वाद**प्रतिघात्वात् तद्ब्रह्म **अविज्ञेयम्** । अग्राह्यम् इन्द्रियाविषयः । सर्वगतत्वाद्दूरे अन्तिके समीपे च स्थितं तत् ॥ १६ ॥

***अ०प्र०***— किञ्च, **बहिरिति** ।

अन्वयः— भूतानां[१], बहिः[२], अन्तश्च व्यवस्थितं[३], अचरं[४], चर एव च[५], तत्[६], सूक्ष्मत्वात्[७], अविज्ञेयं[८], अत एव तत्[९], दूरस्थं[१०] अन्तिके च स्थितं[११] इत्यन्वयः ।

भूतानां = प्रवाहतो नित्यं विद्यमानानां चराचराणां मध्ये[१], बहिः = विराटरूपेण बहिः[२], अन्तश्च = अन्तर्यामित्वेन अन्तश्च व्यवस्थितं[३], अचरं = अन्यथाभावराहित्यादचरं[४], चरः = सर्वत्र देशेषु चरन्तीति एवं च[५], एतादृशं तत् = विष्णवाख्यं स्वरूपं[६], सूक्ष्मत्वात् = इन्द्रियाग्राह्यत्वात् केवलानुमानस्य स्वातन्त्र्येणासाधकत्वात्[७], अविज्ञेयं = देवैश्च साकल्येन विज्ञातुमशक्यं सर्वजगत्तत्त्वात् वेदैरपि नेति नेतीत्युक्तत्वात् अविज्ञेयमित्यर्थः[८], अत एव तत् = रूपं[९], दूरस्थं = सविकारायाः प्रकृतेः परत्वात् अविदुषां योजनलक्षान्तरितमिव दूरस्थं च[१०] अन्तिके च स्थितं =

सर्वान्तर्यामित्व-सर्वव्यापक-त्वादिगुणाः श्रीविष्णौ वर्तन्ते इति ज्ञानवतां विदुषां तु आकाशवत् अन्तिके च स्थितं सन्निहितं[११] श्रीहरिकृपयैव उक्तप्रकारेण विज्ञेयं नान्यैरुपायैरित्यर्थः । तत्र मन्त्रः— 'तदेजति तन्नैजति तन्न चलति तदन्तिके' इति ॥ १६ ॥

**गीता**

## अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
## भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥

***वि०वि०***— विभक्तेष्वपि भूतेषु स्थितम् । अविभक्तमेव विभक्तमिवाज्ञानां प्रतिभाति । भूतानां भर्तृ धारणादिकर्तृ । तद्ब्रह्म ज्ञेयं परैर्ज्ञातव्यम् । ग्रसिष्णु प्रलये सर्वभक्षकम्, प्रभविष्णु सृष्टिकाले सर्वोत्पादकम् ॥ १७ ॥

***वा०ल०***— 'अविभक्तं तु भूतेषु' इत्यत्र, भूतेषु अविभक्तं पृथक्पृथग्भूतेषु स्थितावपि अविभक्तं स्वस्मिन् भेदरहितम् । भूतेषु प्राणिष्वित्याधारतया जीवानां कथनात् जीवभेदोऽस्त्येव । यदा भूतपृथग्भावमेकस्थमिति एकपदोक्तब्रह्मणि जीवभेदस्य स्पष्टं वक्ष्यमाणत्वाच्च । तथाऽपि भेदप्रतिनिधिविशेषबलात् विभक्तमिति च स्थितम् ॥ १७ ॥

***सा०सं०***— किञ्च **भूतेषु** नानाविधप्राणिषु । **अविभक्तमेव विभक्तमिव स्थितम्** । अज्ञानां तथा प्रतीतमिति यावत् । **भूतभर्तृ** भूतानां भर्तृ धारणपोषणकर्तृ । **तद्ब्रह्म ज्ञेयम्** । **ग्रसिष्णु** प्रलये सर्वभक्षकम् । **प्रभविष्णु** सृष्टिकाले सर्वोत्पादकं च ॥ १७ ॥

***अ०प्र०***— किञ्च, **अविभक्तमिति** ।

भूतेषु[१], स्थितं[२], अविभक्तं च[३], विभक्तमिव च[४], भूतभर्तृ च[५], परैः तत् पूर्णानन्दरूपं[६], ज्ञेयं सद्भिः[७], ग्रसिष्णुः[८], प्रभविष्णु च[९] इत्यन्वयः ।

भूतेषु = स्वेदजाण्डजादिषु विभक्तेषु भिन्नेष्वपि भूतेषु[१], स्थितं = अन्तर्यामित्वेन स्थितं[२], अविभक्तं च = अभिन्नं एक एव[३], विभक्तमिव च = भिन्नमिव प्रतीयते[४], भूतभर्तृ च = भूतानां धारणादिकर्तृभूतानि बिभर्तीति भूतभृत् । तत् परैः पूर्णानन्दरूपं[६], ज्ञेयं = सद्भिः[७], ग्रसिष्णु = प्रलये सर्वभक्षणशीलं ग्रसने समर्थमित्यर्थः[८], प्रभविष्णु = प्रकर्षेण भूतानां भवने सृजने समर्थमिति चकारात् वर्द्धिष्णु पालने समर्थमिति । यद्वा, सृष्टिकाले सर्वोत्पादनशीलं च ॥ १७ ॥

गीता

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥**

***वि०वि०***— ज्योतिषां सूर्यादीनामपि ज्योतिः प्रकाशशक्तिपदम् । तमसः अव्यक्तान्मृत्योरज्ञानाद्वा । परं ज्ञानं प्रकाशस्वरूपं ज्ञेयं स्वेन प्रकाश्यम् । उक्तं च— 'स्ववेत्ता वेदनं च स्वं स्वेन वेद्यश्च केशवः । परस्य वेत्ता वित्तिश्च वेद्यश्च स्यात्परैः क्वचित् ॥' इति । ज्ञानगम्यं ज्ञानेन मुक्तौ प्राप्यम् । सर्वस्य जगतो हृदि विशेषेण स्थितम् । अन्यत्र विरुद्धत्वेन प्रतीयमाना धर्माः भगवत्यविरोधेन वर्तन्ते । उक्तं च— 'अनन्ताव्ययशक्तित्वात् तदन्यत्र विरोधिनः । सन्ति सर्वगुणास्तत्र न च तत्र विरोधिनः ॥' इति ॥ १८ ॥

***बा०ल०***— 'ज्ञानं ज्ञेयम्' इत्यत्र, ज्ञानं ज्ञानरूपकरचरणादिमत् । सर्वस्य जीवसमूहस्य ॥ १८ ॥

***सा०सं०***— किञ्च तद्ब्रह्म **ज्योतिषां** सूर्यादीनामपि **ज्योतिः** प्रकाशशक्तिप्रदम् । **तमसः** अव्यक्तात्, मृत्योः, अज्ञानाद्वा । **परम्** अतिक्रान्तम् उच्यते । 'तमसः परस्तात्' इति श्रुत्यादावित्यर्थः । **ज्ञानं** प्रकाशस्वरूपम् । **ज्ञेयं** स्वेन ज्ञातव्यरूपम् । स्वप्रकाशमित्यर्थः । जीवानां स्वप्रकाशत्वेऽपि तस्येशाधीनत्वात् । अस्य चान्यानपेक्षत्वात् । स्वकर्मकत्वस्य (क्रियात्वकर्मत्वयोरेकत्र विरोधेन) दुर्घटत्वाच्च तदुक्तिर्भगवतो महिमेति 'यत्प्रभाव' इत्यस्योत्तरं भवतीति भावः । **ज्ञानगम्यम्** अपरोक्षज्ञानेन मुक्तौ प्राप्यम् । **सर्वस्य हृदि विष्ठितं** विशेषेण स्थितम् । सर्वगतत्वेन 'दुरस्थं चान्तिके च तत् । सर्वमावृत्य तिष्ठति' इत्युक्तावपि हृद्यल्पदेशे स्थित्युक्तिर्युक्ता । 'ॐ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ' (१-२-७) इति, 'ॐ अन्यभावव्यावृत्तेश्च ॐ' (१-३-१२) इत्यादि सूत्रेणाणुरूपेणावस्थितेरुक्तत्वात् । अत एव परमित्युक्तिरप्युपपन्नेति भावः ॥ १८ ॥

***अ०प्र०***— किञ्च, **ज्योतिषामपीति** ।

ज्योतिषामपि = चन्द्रसूर्यादीनामपि[1], तत् = ब्रह्म[2], ज्योतिः = प्रकाशशक्तिप्रदं[3], 'येन सूर्यस्तपति तेजसेति न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'त्यादि श्रुतिः । अत एव तमसः परमुच्यते =

सर्वान्तर्यामित्व-सर्वव्यापक-त्वादिगुणाः श्रीविष्णौ वर्तन्ते इति ज्ञानवतां विदुषां तु आकाशवत् अन्तिके च स्थितं सन्निहितं[११] श्रीहरिकृपयैव उक्तप्रकारेण विज्ञेयं नान्यैरुपायैरित्यर्थः । तत्र मन्त्रः— 'तदेजति तन्नैजति तन्न चलति तदन्तिके' इति ॥ १६ ॥

**गीता**

## अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
## भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥

***वि०वि०—*** विभक्तेष्वपि भूतेषु स्थितम् । अविभक्तमेव विभक्तमिवाज्ञानां प्रतिभाति । भूतानां भर्तृ धारणादिकर्तृ । तद्ब्रह्म ज्ञेयं परैर्ज्ञातव्यम् । ग्रसिष्णु प्रलये सर्वभक्षकम्, प्रभविष्णु सृष्टिकाले सर्वोत्पादकम् ॥ १७ ॥

***वा०ल०—*** 'अविभक्तं तु भूतेषु' इत्यत्र, भूतेषु अविभक्तं पृथक्पृथग्भूतेषु स्थितावपि अविभक्तं स्वस्मिन् भेदरहितम् । भूतेषु प्राणिष्वित्याधारतया जीवानां कथनात् जीवभेदोऽस्त्येव । यदा भूतपृथग्भावमेकस्थमिति एकपदोक्तब्रह्मणि जीवभेदस्य स्पष्टं वक्ष्यमाणत्वाच्च । तथाऽपि भेदप्रतिनिधिविशेषबलात् विभक्तमिति च स्थितम् ॥ १७ ॥

***सा०सं०—*** किञ्च **भूतेषु** नानाविधप्राणिषु । **अविभक्तमेव विभक्तमिव स्थितम्** । अज्ञानां तथा प्रतीतमिति यावत् । **भूतभर्तृ** भूतानां भर्तृ धारणपोषणकर्तृ । **तद्ब्रह्म ज्ञेयम्** । **ग्रसिष्णु** प्रलये सर्वभक्षकम् । **प्रभविष्णु** सृष्टिकाले सर्वोत्पादकं च ॥ १७ ॥

***अ०प्र०—*** किञ्च, **अविभक्तमिति** ।

भूतेषु[१], स्थितं[२], अविभक्तं च[३], विभक्तमिव च[४], भूतभर्तृ च[५], परैः तत् पूर्णानन्दरूपं[६], ज्ञेयं सद्भिः[७], ग्रसिष्णुः[८], प्रभविष्णु च[९] इत्यन्वयः ।

भूतेषु = स्वेदजाण्डजादिषु विभक्तेषु भिन्नेष्वपि भूतेषु[१], स्थितं = अन्तर्यामित्वेन स्थितं[२], अविभक्तं च = अभिन्नं एक एव[३], विभक्तमिव च = भिन्नमिव प्रतीयते[४], भूतभर्तृ च = भूतानां धारणादिकर्तृभूतानि बिभर्तीति भूतभृत् । तत् परैः पूर्णानन्दरूपं[६], ज्ञेयं = सद्भिः[७], ग्रसिष्णु = प्रलये सर्वभक्षणशीलं ग्रसने समर्थमित्यर्थः[८], प्रभविष्णु = प्रकर्षेण भूतानां भवने सृजने समर्थमिति चकारात् वर्द्धिष्णु पालने समर्थमिति । यद्वा, सृष्टिकाले सर्वोत्पादनशीलं च ॥ १७ ॥

गीता

# ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
# ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥

***वि०वि०***— ज्योतिषां सूर्यादीनामपि ज्योतिः प्रकाशशक्तिपदम् । तमसः अव्यक्तान्मृत्योरज्ञानाद्वा । परं ज्ञानं प्रकाशस्वरूपं ज्ञेयं स्वेन प्रकाश्यम् । उक्तं च— 'स्ववेत्ता वेदनं च स्वं स्वेन वेद्यश्च केशवः । परस्य वेत्ता वित्तिश्च वेद्यश्च स्यात्परैः क्वचित् ॥' इति । ज्ञानगम्यं ज्ञानेन मुक्तौ प्राप्यम् । सर्वस्य जगतो हृदि विशेषेण स्थितम् । अन्यत्र विरुद्धत्वेन प्रतीयमाना धर्माः भगवत्यविरोधेन वर्तन्ते । उक्तं च— 'अनन्ताव्ययशक्तित्वात् तदन्यत्र विरोधिनः । सन्ति सर्वगुणास्तत्र न च तत्र विरोधिनः ॥' इति ॥ १८ ॥

***वा०ल०***— 'ज्ञानं ज्ञेयम्' इत्यत्र, ज्ञानं ज्ञानरूपकरचरणादिमत् । सर्वस्य जीवसमूहस्य ॥ १८ ॥

***सा०सं०***— किञ्च तद्ब्रह्म **ज्योतिषां** सूर्यादीनामपि **ज्योतिः** प्रकाशशक्तिप्रदम् । **तमसः** अव्यक्तात्, मृत्योः, अज्ञानाद्वा । **परम्** अतिक्रान्तम् उच्यते । 'तमसः परस्तात्' इति श्रुत्यादावित्यर्थः । **ज्ञानं** प्रकाशस्वरूपम् । **ज्ञेयं** स्वेन ज्ञातव्यरूपम् । स्वप्रकाशमित्यर्थः । जीवानां स्वप्रकाशत्वेऽपि तस्येशाधीनत्वात् । अस्य चान्यानपेक्षत्वात् । स्वकर्मकत्वस्य (क्रियात्वकर्मत्वयोरेकत्र विरोधेन) दुर्घटत्वाच्च तदुक्तिर्भगवतो महिमेति 'यत्प्रभाव' इत्यस्योत्तरं भवतीति भावः । **ज्ञानगम्यम्** अपरोक्षज्ञानेन मुक्तौ प्राप्यम् । **सर्वस्य हृदि विष्ठितं** विशेषेण स्थितम् । सर्वगतत्वेन 'दुरस्थं चान्तिके च तत् । सर्वमावृत्य तिष्ठति' इत्युक्तावपि हृद्यल्पदेशे स्थित्युक्तिर्युक्ता । 'ॐ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ' (१-२-७) इति, 'ॐ अन्यभावव्यावृत्तेश्च ॐ' (१-३-१२) इत्यादि सूत्रेणाणुरूपेणावस्थितेरुक्तत्वात् । अत एव परमित्युक्तिरप्युपपन्नेति भावः ॥ १८ ॥

***अ०प्र०***— किञ्च, **ज्योतिषामपीति** ।

ज्योतिषामपि = चन्द्रसूर्यादीनामपि[1], तत् = ब्रह्म[2], ज्योतिः = प्रकाशशक्तिप्रदं[3], 'येन सूर्यस्तपति तेजसेति न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'त्यादि श्रुतिः । अत एव तमसः परमुच्यते =

तमसः मृत्योः प्रकृतेर्वा अज्ञानादिति केचित् । परं रहितं उच्यते ज्ञानिभिरुच्यते । 'आदित्यवर्णं तमसःपुरस्तादि'त्यादिश्रुतिः[६], ज्ञानं प्रकाशरूपं तदेव बुद्धिवृत्तौ अभिव्यक्तं वा[७], ज्ञेयं = स्वेन प्रकाश्यं तदेव रूपाद्याकारेण ज्ञेयं च[८], तदुक्तम्— 'स्ववेत्ता वेदनं च स्वं स्वेन वेद्यश्च केशवः । परस्य वेत्ता वित्तिश्चावेद्यश्च स्यात्परैः क्वचित्' इति वचनात् स्वप्रकाश इत्यवस्थितं कर्तृभावकर्मसु व्युत्पन्नं क्रमात् अङ्गीकृत्य स्वशब्दस्य स्वतन्त्रार्थत्वं अङ्गीकृत्य स्वप्रकाशशब्दस्यार्थत्रयमुक्तमत्रप्रमाण-वाक्येनेति ज्ञातव्यम्[८], ज्ञानगम्यं च अमानित्वादिपूर्वोक्तलक्षणेन ज्ञानसाधनेन प्राप्यं[९], सर्वस्य = प्राणिमात्रस्य जगतः हृदि हृदयारविन्दे[१०] अधिष्ठितं = विष्ठितं विशेषेण स्थितं धिष्ठितमितिपाठे-ऽध्युपसर्गस्याकारलोपः । छान्दसः अन्यत्र विरुद्धत्वेन प्रतीयमानापि धर्मा भगवति अविरोधेन वर्तन्ते । तदुक्तम्— गुणाः श्रुताः सविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ॥ इत्यादि ॥१८॥

**गीतातात्पर्यनिर्णयः**

**ज्ञानेन मुक्तौ प्राप्यत्वाज्ज्ञानगम्यम् । "स्वयमेव आत्मना आत्मानं वेत्थ" इति स्वज्ञेयत्वाज्ज्ञेयम् । अन्यज्ञेयत्वस्य "ज्ञेयं यत् तत्" इति पूर्वमेव सिद्ध-त्वात् । कर्तृकर्मविरोधवादिमतं निराकरोत्युत्तरज्ञेयशब्देन ।**

*न्या०दी०*— ज्ञानगम्यमिति ज्ञानविषयत्वमुच्यत इति अन्यथाप्रतीतिनिरासायाह **ज्ञानेनेति** ॥ ज्ञेयपदेनान्यज्ञेयत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह **स्वयमेवेति** ॥ अत्र स्वज्ञेयत्वमेवोच्यते, न तु परज्ञेयत्वम् । न च भगवतः स्वज्ञेयत्वाभावः । स्वयमिति तस्योक्तत्वादित्यर्थः । अन्यज्ञेयत्वमर्थः किं न स्यादिति आह **अन्येति** ॥ ज्ञानं ज्ञेयमिति ज्ञेयशब्देनैकस्यां क्रियायां कर्तृकर्मणोरैक्यविरोधान्नेश्वरस्य ज्ञेयत्वमुक्तमिति वदतां वादिनां मतनिरासाय स्वज्ञेयत्वमेवोच्यते । न त्वन्यज्ञेयत्वम् । तस्य "ज्ञेयं यत्तत् प्रवक्ष्यामि" इत्युपक्रमवाक्य एवोक्तत्वेन पुनरुक्तिप्रसङ्गादिति भावः । स्वज्ञेयार्थत्वे प्रभावोक्तिरियं कथमित्यत आह **कर्तृकर्मेति** ॥ अघटितमप्येकस्यां ज्ञानक्रियायां कर्तृकर्मभावमात्मनि ईश्वरो घटयतीत्येवमभिप्रायेणेदमुच्यते । अतो भवति प्रभावोक्तिरियमिति भावः ।

*भा०दी०*— उक्तत्वादिति । दशमे ॥

**गीतातात्पर्यनिर्णयः**

**"स्ववेत्ता वेदनं च स्वं स्वेन वेद्यश्च केशवः ।**
**परस्य वेत्ता वित्तिश्च वेद्यश्च स्यात् परैः क्वचित् ॥**

तत्प्रसादं विना कश्चिन्नैनं वेत्तुं हि शक्नुयात् ।
स्ववेदनेऽन्यवित्तौ वा नासावन्यदपेक्षते ॥
स्वप्रकाश इति प्रोक्तस्तेनैकः पुरुषोत्तमः ।
जीवानां स्वप्रकाशत्वं तत्प्रसादात् स्ववेदनम्'' इति च ॥१८॥

*प्रका०*— ''ज्ञानं ज्ञेयं ज्ञानगम्यमि''त्यस्यार्थमाह **ज्ञानेनेत्यादिना** ॥

*न्या०दी०*— ईश्वरस्य ज्ञेयत्वे प्रमाणान्तरं चाह **स्ववेत्तेति** ॥ **स्ववेत्ता** स्वतन्त्रवेत्ता ॥ तस्य वेदनं च स्वतन्त्रम् । कस्य वेत्तेत्यत आह **स्वेनेति** ॥ यच्च तस्य वेदनं स्वतन्त्रमुक्तं तदपि न तस्माद्भिन्नमित्याह **वित्तिश्चेति** ॥ किं स्वेनैव वेद्य इत्यत आह **वेद्यश्चेति** ॥ क्वचिदिति किमर्थमुच्यते, सर्वथा परैर्वेद्याः किं न स्यादित्यत आह **तदिति** ॥ यथाऽन्येषां भगवज्ज्ञाने तत्प्रसादसापेक्षता तथा भगवतोऽपि स्ववेदनादौ परसापेक्षता नास्तीति स्वातन्त्र्यं विवृणोति **स्वेति** ॥ **तेन** स्ववेत्तृत्वादिना । तथाहि— स्वः स्वतन्त्रश्चासौ प्रकाशयति वेत्तीति प्रकाशश्चेति स्वप्रकाशः । स्वः स्वतन्त्रः प्रकाशो यस्यासौ स्वप्रकाशः । स्वः प्रकाशः प्रकाश्यो येनासौ स्वप्रकाशः । स्वश्चासौ प्रकाशश्चेति स्वप्रकाशः । परस्य वेत्ता वेद्यश्च स्यादिति न स्वप्रकाशशब्दार्थकथनम् । जीवानामपि स्वप्रकाशत्वात् कथमेक इत्युच्यत इत्यत आह **जीवानामिति** ॥ जीवानां स्वतन्त्रवेत्तृत्वाभावादेक इति युक्तमिति भावः ॥

*भा०दी०*— **स्वतन्त्रवेत्तेति** । आगमशासनमनित्यमितीडभावः । वेदितेत्यर्थः । स्ववेत्तेति प्रागुक्तार्थमाह **स्वः स्वतन्त्र इत्यादिना** । ज्ञानं च स्वमित्युक्तमाह **स्वः स्वतन्त्रश्चेत्यादि** । स्वेन वेद्यश्चेत्युक्तार्थोक्तिः **स्वः प्रकाश इत्यादि** । स्वः स्वतन्त्र इत्यर्थः । स च स्वयमेवेति कर्मणि घञिति भावः । वित्तिश्चेत्युक्तार्थोक्तिः ॥ **स्वश्चासावित्यादि** । परस्य वेत्ता वेद्यश्च परैरित्युक्तार्थोऽत्र कुतो नोच्यत इत्यत आह **परस्य वेत्तेत्यादि** । किन्तु प्रागुक्तदिशा शङ्कानिरासार्थं प्राप्तमिति शेषः।

**गीता**

## इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
## मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १९ ॥

*वि०वि०*— उक्तमुपसंहृत्य तज्ज्ञानं स्तौति इतीति । मद्भावाय मयि भावाय ॥ १९ ॥

*वा०ल०*— 'मद्भावाय' इत्यत्र, मद्भावाय मयि भक्त्यै ॥ १९ ॥

*सा०सं०*— उक्तमुपसंहृत्य तज्ज्ञानं स्तौति **इति क्षेत्रमिति** । 'महाभूतानि' इत्यादिना **क्षेत्रम्**, 'इच्छा' इत्यादिना तद्विकारश्चेत्यपि ग्राह्यम् । **ज्ञान**शब्दोऽत्र ज्ञप्तितत्साधनोभयपरः । 'अमानित्वम्' इत्यादिना ज्ञानसाधनस्य । 'तत्त्वज्ञानार्थदर्शनम्' इत्यत्र भगवदपरोक्षज्ञप्तेश्चोक्तत्वात् । 'ज्ञेयं यत् तत्' इत्यादिना **ज्ञेयं चोक्तम्** । **समासतः** सङ्क्षेपेण । **मद्भावाय** मयि स्थितये । **उपपद्यते** योग्यो भवति । यद्यप्यत्र ज्ञेये ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां 'ज्ञेयम्' इत्यादिकं पूर्वमुक्त्वा 'अमानित्वम्' इत्यादिकं तज्ज्ञानसाधनं पश्चाद्वाच्यम् । तथाऽपि साधनस्येच्छादिरूपक्षेत्रविकारेष्वन्तर्भावज्ञापनार्थत्वात्, यत्प्रभावपदोक्तप्रेरकत्वस्यालौकिकप्रमेयस्य बुद्ध्यारोहे साधनानामप्युपयोगाच्च, साधनानन्तरमेव 'यत्प्रभावश्च' इत्यस्य वाच्यत्वात् तत्प्रसङ्गेन ज्ञेयस्यापि पश्चादेवोक्तिः । नन्वथाऽपि उद्देशक्रमानुसारेण 'यतश्च यत्' इत्येतत् प्रथममुक्त्वा 'स च यो यत्प्रभावश्च' इत्येतत् पश्चात् वक्तव्यमित्येतदपि अनेनैव निरस्तम् । विकारान्तर्भावज्ञापनाय इच्छाद्युक्त्यनन्तरम् अमानित्वादेः ज्ञानसाधनस्य उपोद्घातप्रक्रियया पूर्वमेव वाच्यत्वेन तदनन्तरमेवोक्तदिशा 'स च यो यत्प्रभावश्च' इत्युक्तस्य वाच्यत्वात् । बहुत्वाच्च 'स च यो यत्प्रभावश्च' इत्येतदुक्त्यपेक्षया 'यतश्च यत्' इत्येतदुक्तेरल्पत्वात्, तत्सर्वोक्त्यनन्तरं पश्चात् 'यतश्च यत्' इत्यस्योक्तिः ॥ १९ ॥

*अ०प्र०*— उक्तमुपसंहृत्य क्षेत्राधिकारिणं फलसहिततज्ज्ञानं स्तौति **इतीति** ।

हे अर्जुन !, मया तव, इति = एवं प्रकारेण[1], क्षेत्रं = महाभूतादिकं[2], तथा ज्ञानं = अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तं, ज्ञेयं च = अनादिमत्परं ब्रह्मेत्यादि धिष्ठितमित्यन्तं चकारात् अज्ञानञ्च[3], समासतः उक्तं = वसिष्ठादिभिः विस्तरेणोक्तं यत् तत् सर्वं मया लीलाविग्रहेण सङ्क्षेपेणोक्तम् । यद्वा, साकल्येनोक्तं[4], एतत् = क्षेत्रादिचतुष्टयं[5], मद्भक्तः = मद्भजनशीलः[7], विज्ञाय = ज्ञात्वा[8], मद्भावाय = मयि भावो मद्भावः मोक्षाय मत्प्राप्तये वा[9], उपपद्यते = योग्यो भवति ॥ १९ ॥

**भाष्यम्**

**विकारान्तर्भावात् ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात् साधनात्युपयोगात् प्रभावः ॥ १९ ॥**

*प०टी०*— 'यतश्च यत्' इति पूर्वप्रतिज्ञातमनुक्त्वा, ज्ञानसाधनं प्रथमतः कथमुच्यते ? इत्यत आह **विकारेति** । तथाऽप्युद्देशक्रममुलङ्घ्य लक्षणप्रभावौ किमित्यादावुदितौ ? इत्यत आह **बहुत्वादिति** ॥ १९ ॥

*प्र०दी०*— ननु ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां साधनं पश्चाद्वक्तव्यम् । तत्कुतः प्रथमत उक्तमित्यत आह **विकारेति** । विकारेष्वन्तर्भावं ज्ञापयितुं तदनन्तर-मुपोद्धातप्रक्रिययोक्तमिति भावः । उद्देशक्रमानुसारेण 'यतश्च यत्' इति प्रथममनुक्त्वा 'स च यो यत्प्रभावश्च' इत्येतत् कुत उक्तम् ? इत्यत आह **बहुत्वादिति** । सूचीकटाहनिर्माणादौ बहुत्वस्य प्राथम्यव्यभिचारात् हेत्वन्तरोक्तिः । अलौकिकस्य प्रभावस्य बुद्ध्यारोहे हि साधनानामत्युपयोगो न तु तावान् लौकिकस्य प्रेरकत्वस्यानुभवारोह इति ज्ञापयितुं ज्ञानसाधनानन्तरमेव प्रभाव उक्तः । तत्प्रसङ्गेन स्वरूपं चेति भावः ॥ १९ ॥

*भा०दी०*— **साधनमिति** । अमानित्वादिज्ञेयब्रह्मसाधनं 'ज्ञेयं यत्तत्' इत्याद्युक्त्यनन्तरं वक्त-व्यमित्यर्थः । **विकारेष्विति** । इच्छाद्वेषादिष्वित्यर्थः । तदनन्तरं इत्याद्युक्त्यनन्तरम् । **हेत्वन्तरेति**। 'साधनात्युपायोगात्' इत्यादिहेत्वन्तरोक्तिरित्यर्थः । **तावानिति** । साधनानामत्युपयोग इत्यर्थः । **प्रेरकत्वस्येति** । 'यतो यत्' इत्यत्र 'यतः' इत्यनेन उक्तप्रेरकत्वस्येत्यर्थः ॥ १९ ॥

*भा०र०*— **कुतः** कस्मात् प्रयोजनात्, किमर्थमिति यावत् । भाष्येऽन्तर्भावशब्दस्तज्ज्ञापन-लक्षकः । पञ्चमी ल्यब्लोपनिमित्ता । तथा च 'अन्तर्भावज्ञापनमुद्दिश्य' इति लभ्यत इति भावेन तत्र निर्गलितं दर्शयति **विकारेष्वन्तर्भावं ज्ञापयितुमिति** । **तदनन्तरं** विकारनिरूपणानन्तरम् । **उपोद्धातेति** । अलौकिकब्रह्म-तद्धर्मान् बुद्धिमारोहयितुम् अमानित्वादिसाधनं ज्ञेयनिरूपणात्पूर्व-मित्यर्थः । **बहुत्वस्य** अनल्पत्वस्य । **हेत्वन्तरोक्तिः** 'साधनात्युपयोगात्' इति हेत्वन्तरोक्तिः । भाष्योक्तं अत्युपयोगं दर्शयति **अलौकिकस्येति** । सर्वलोकविलक्षणतया आगमैकवेद्यस्य आदि-मद्देहेन्द्रियगुणकर्मादिवर्जितत्वरूपस्य **प्रभावस्य** । **साधनानां** अमानित्वादीनाम् । **अत्युपयोगः** मानदम्भादियुक्तपुरुषाणां भगवत्प्रभावो न बुद्धिमारोहतीति प्रमाणैरावेदनादिति भावः । **लौकिकस्य** 'दारुयन्त्रमयप्रतिमादौ यन्तुः, अमात्यादौ राजादेः प्रेरकत्वस्य च लौकिकप्रमाणसिद्धस्यानुभवारोहे साधनात्युपयोगो न' इति ज्ञापयितुं 'प्रभावः' इत्यतः पूर्वं शेषोक्तिः **ज्ञानसाधनानन्तरमेवेति** । 'उक्तम्' इति पूर्वभाष्यपदस्य लिङ्गव्यत्ययेनान्वय इति भावेनोक्तम् **उक्त इति** । लौकिकस्य = वेदेतरप्रमाणगृहीतव्याप्तिकानुमानसिद्धस्य । अनुमानं चेत्थम् 'विमतं क्षेत्रं केनचिन्नियतम् अस्वतन्त्र-त्वाद्, असर्वज्ञत्वाद्, अपर्याप्तशक्तिकत्वाच्च यथा रथादि' इत्यपि आहुः । नन्वेवं ज्ञानसाधननिरू-पणानन्तरं प्रभावस्य निरूप्यत्वमस्तु । 'स च यः' इति प्रेरकस्वरूपनिरूपणस्य तु का सङ्गतिः ? इत्यत आह **तत्प्रसङ्गेनेति** । प्रभावनिरूपणं हि प्रभाविनिरूपणानुबद्धम् । अतस्तत्प्रसक्ततया प्रभाविनः = प्रेरकस्य **स्वरूपं** प्रेरणोपयोगिधर्मवैशिष्ट्यलक्षणमुक्तमित्यर्थः ॥ १९ ॥

*गीताक्षरार्थस्तु—*

पूर्वम् आ षष्ठसमाप्तेः प्राचुर्येण यद् ज्ञानसाधनमुक्तम्, यच्च सप्तमादिभिः षड्भिरध्यायैर्ज्ञेयं ब्रह्मस्वरूपमुक्तम्, यदपि 'भूमिरापः' इत्यादिना क्षेत्रमुक्तम्, यच्च 'न त्वेवाहम्' इत्यादिना पुरुषतत्त्व-मुक्तं तद् विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्य अस्मिन्नध्याये प्रदर्श्यते **तत्क्षेत्रं यच्च** इति । प्रतिज्ञातभगवज्ज्ञानस्यैव मोक्षहेतुत्वात् क्षेत्रं भगवत्स्वरूपं चोभयं किमर्थमुच्यते ? इत्याशङ्का तावत् परिह्रियते **श्रीभगवानुवाच— 'इदं शरीरम्' इति द्वाभ्याम्** ।

**हे कौन्तेय इदं** प्रत्यक्षादिप्रमाणसिद्धम्, वक्ष्यमाणं वा **शरीरं** जीवस्य स्वतो नित्यत्वाद् देहादितया परिणतैतदुपघाताज्जीवो हिंसित इत्युच्यत इति अव्यक्तादिकं हिंसाहेतुर्जीवस्य भवति । 'शॄ = हिंसायाम्' इति धातोर्हिंसाहेतुत्वात् 'शर्', परेण ईर्यत्वाद् 'ईरम्' इति शरीरशब्दवाच्यम् अव्यक्त-महद्-अहङ्कार-पञ्चभूतादिरूपतत्त्वजातं 'क्षीयते = अस्मिन् अव्यक्तादिशरीरे भगवता स्थीयते' इति व्युत्पत्त्या 'क्षेत्रम्' इत्यभिधीयते । **एतद्** अव्यक्तादिशब्दितं **यो वेत्ति तं तद्विदः** क्षेत्रज्ञविदः **क्षेत्रज्ञ** इति प्राहुः । अत्रोक्तव्युत्पत्त्या अव्यक्तादिकमेव शरीरपदवाच्यम् इत्यभ्युपगमेन 'सङ्घातश्चेतना' इत्यत्र क्षेत्रविकारैकदेशत्वेनोक्तस्य सङ्घातशब्दितशरीरस्य कथं समस्तक्षेत्रत्वमिति शङ्का परास्ता ॥ १-२ ॥

'एतद्यो वेत्ति' इत्युक्ते जीवस्यापि किञ्चित्क्षेत्रज्ञानसम्भवात् तस्यं क्षेत्रज्ञत्वप्राप्तेः तन्निराकरणाय उच्यते **क्षेत्रज्ञं चापीति** । **क्षेत्रज्ञं च मां** मामेव **सर्वक्षेत्रेषु** अव्यक्तादिस्थितत्वेन **विद्धि** जानीहि, न पुनर्जीवम् । अत्र स्वस्य सर्वक्षेत्रे स्थित्युक्तिश्च 'अव्यक्तादिरूपशरीरस्य कथं क्षेत्रशब्दवाच्य-त्वम् ? इत्यतः 'क्षीयतेऽत्रेश्वरेण इति क्षेत्रमित्यर्थसूचनाय' इति प्रस्थानान्तरे व्यक्तम् । अतः सर्व-क्षेत्रादिज्ञानस्य क्षेत्रज्ञत्वादिविशिष्टभगवज्ज्ञानोपयोगित्वाद् उभयोः **क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तदेव मम ज्ञानं** मद्विषयकं ज्ञानमिति **मम मतम्** इति ॥ ३ ॥

क्षेत्रादिस्वरूपं श्रावयितुं प्रतिज्ञायते **तत्क्षेत्रमिति** । यद् निर्दिष्टमिदं शरीरमिति **तत् क्षेत्रं यत्** यत्स्वरूपं **यादृक्** यादृशं = धर्मैः यत्प्रकारम्, चशब्दः समुच्चयार्थः । यश्चासौ विकारश्च यद्विकारः, सोऽस्यास्तीति **यद्विकारि** येन विकारेण युक्तम्, **यतश्च** यादृशप्रवृत्त्यनुकूलधर्मवतः पुरुषात्, यस्य प्रेरणयेति यावत् । **यत्** 'एति = गच्छतीति यत्' इति इणो लडादेश-शत्रन्तस्य रूपम्, प्रवर्तत इति यावत् । **स च** प्रवर्तकः **यः** यत्स्वरूपः **यत्प्रभावश्च** यादृशप्रवृत्त्यनुकूलसामर्थ्येतरधर्मयुक्तः **तत्** सर्वं **समासेन** सङ्क्षेपेण **मे** सकाशात् **शृणु** । श्रुत्वा तत्र निष्ठां कुरु ॥ ४ ॥

श्रोतुरत्यादरणजननाय स्वेनोच्यमानं प्राणाणिकमित्युच्यते **ऋषिभिरिति** । **बहुधा** बहुप्रकारेण **विविधैश्छन्दोभिः** वेदैः **पृथग्** विवेकतो **गीतम्** 'गै = शब्दे', निरूपितं **हेतुमद्भिः** न्यायोपेतैः, अत एव **विनिश्चितैः** विशिष्टं निश्चितं = निश्चयो यैः तानि तथा, तैः निश्चयप्रत्ययोत्पादकैः । **ब्रह्मसूत्रपदैः** शारीरकसूत्राक्षरैश्च **गीतम्** । एवं तत्र तत्र विस्तरेणोक्तं सर्वं सङ्क्षिप्य वच्मि, तच्छृणु इति पूर्वे सम्बन्धः ॥ ५ ॥

'तत्क्षेत्रम्' इति प्रतिज्ञातमुच्यते **महाभूतानीति** । आकाशादीनि पञ्च महाभूतानि । अहङ्कार-शब्देन महत्तत्त्वमपि ग्राह्यम् । **बुद्धिः** अन्तःकरणवृत्तिविशेषः । **अव्यक्तं** त्रिगुणात्मकं प्रधानम् । **इन्द्रियाणि** ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्चेति **दश**, चशब्द इन्द्रियत्वानुकर्षणार्थः, मन इन्द्रियं **चैकम्** । **इन्द्रियगोचराः** इन्द्रियविषयाः शब्द-स्पर्श-रूप-रस-गन्धाः पञ्चेति, चतुर्विंशति तत्त्वानि क्षेत्रम् ॥ ६ ॥

इच्छादयः सप्त विकाराः । **सङ्घातो** देहः । **चेतना** चित्तव्याप्तिः । **धृतिः** धैर्यम् । उक्तमुप-संह्रियते **एतदिति** । **समासेन** सङ्क्षेपेण **उदाहृतं** निरूपितम् ॥ ७ ॥

'स च यो यत्प्रभावश्च' इति प्रतिज्ञातमर्थद्वयं 'ज्ञेयं यत्तत्' इत्यादिना वक्तुं साधनानां विकारे-ष्वन्तर्भावं च ज्ञापयितुम्, न यादृशतादृशेन श्रवणेन तद् अनुभवारूढं भवति, किन्तु अमानित्वादि-साधनसम्पत्तियुक्तेन इत्याशयेन ज्ञेयभगवज्ज्ञानसाधनान्युच्यन्ते **अमानित्वम् इत्यादिपञ्चश्लोक्या** । मानः = आत्मगुणश्लाघः, सोऽस्यास्तीति मानी, स न भवतीत्यमानी, तस्य भावः **अमानित्वम्**। आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः, तद्वान् दम्भी, स न भवतीत्यदम्भी, तस्य भावः **अदम्भित्वम्** । **अहिंसा** अहिंसनं = प्राणिनामपीडनम् । **क्षान्तिः** सहनम्, परापराधप्राप्तावपि अविक्रिया । **आर्जवं** ऋजुभावः, सन्मार्गे मनोवाक्कायकर्मणाम् अवैपरीत्यम् । **आचार्योपासनं** मोक्षसाधनोपदेष्टुः शुश्रूषादिना सेवनम् । **शौचम्** ''शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृजलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्'' इति शास्त्रोक्तं द्विविधम् । **स्थैर्यं** स्थिरभावः मोक्षमार्ग एव कृतव्यवसायत्वम् । **आत्मविनिग्रहः** मनसो विशेषेण नियमनम् ॥ ८ ॥

**इन्द्रियार्थेषु** शब्दादिविषयेषु । कर्मसु 'अहं कर्ता' इत्यभिमानाभावः **अनहङ्कारः** । 'रक्षोहा-गमलघ्वसन्देहाः प्रयोजनम्' इत्यत्र 'असन्देहः' इति पदमिव 'अनहङ्कारः' इति पदं साधु । जन्मनि, मृत्यौ, जरायाम्, व्याधिषु दुःखलक्षणदोषस्य पुनः पुनरालोचनं **जन्ममृत्युजराव्याधिदुःखदोषा-नुदर्शनम्** । तत्र जन्मनि गर्भवासयोनिद्वारनिस्सरणनिमित्तदुःखदोषालोचनम्, मृत्यौ भयकम्पादि-

दुःखानुदर्शनम्, जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनम्, व्याधिषु शिरोरोगादिषु तन्निमित्तदोषानुदर्शनमिति द्रष्टव्यम् ॥ ९ ॥

पुत्रदारगृहादिषु **असक्तिः** स्नेहाभावः **अनभिष्वङ्गः** अतिपक्वस्नेहोऽभिष्वङ्गः, तदभावः । **इष्टानिष्टोपपत्तिषु** इष्टानां अनिष्टानां चोपपत्तयः = सम्प्राप्तयः, तासु **नित्यं समचित्तत्वम्** । यथा अनिष्टं हेयं तथा वैषयिकमिष्टमपि हेयमेव इत्युभयत्र तुल्यचित्तम् ॥ १० ॥

**मयि अनन्ययोगेन** अन्याविषयकमनोऽभिनिवेशलक्षणोपायेन, अत एव **अव्यभिचारिणी** न व्यभिचरणशीला, एकान्त**भक्तिश्च** । **विविक्तदेशसेवित्वं** विविक्तः = शुद्धः चित्तप्रसादकरो यो देशः अरण्य-नदीतीर-देवालयादिरूपः, तं सेवितुं शीलमस्य, तस्य भावस्तत्त्वम् । **जनसंसदि** प्राकृतजनसमवाये । **अरतिः** असङ्गः ॥ ११ ॥

**अध्यात्मज्ञाननित्यत्वम्** । अधिक आत्मा अध्यात्मा = परमात्मा, तद्विषयकज्ञाने नियतत्वं = निष्ठावत्त्वम् । **तत्त्वज्ञानार्थदर्शनं** तत्त्वस्य = अनारोपितस्वरूपस्य भगवतो ज्ञानम् अपरोक्षरूपम् अर्थः = प्रयोजनं यस्य तत् तत्त्वज्ञानार्थम्, तच्च तद् दर्शनं च तत्तथा, भगवदपरोक्षनिष्पादनानुकूलशास्त्रपर्यालोचनमित्यर्थः । **एतत्** 'अमानित्वम्' इत्यादिनोक्तं 'तत्त्वज्ञानार्थदर्शनम्' इत्येतदवसानकं विंशतिसङ्ख्याकं धर्मजातं 'ज्ञायतेऽनेन' इति करणे ल्युटि **ज्ञानं** ज्ञानसाधनं **प्रोक्तं** निरूपितम् । **अतः** एतस्माद् उक्ताद् अमानित्वादिकाद् **अन्यथा** विपर्ययेण विद्यमानं **यत्** मानित्वादिकं तत् **अज्ञानं** ज्ञानसाधनं न भवति । इतिशब्दः साधनवर्गनिरूपणसमाप्तौ ॥ १२ ॥

एवं ज्ञानसाधनमुक्त्वा 'स च यः' इति यत् प्रवर्तकस्वरूपं प्रतिज्ञातम्, यच्च 'यत्प्रभावः' इति प्रभाववचनं प्रतिज्ञातम्, तदुभयं सप्रतिज्ञमुच्यते **'ज्ञेयं यत्तत्' इत्यादिषट्श्लोक्या** । **यद् ज्ञेयं** 'स च यः' इति प्रतिज्ञातं **तत्प्रवक्ष्यामि** प्रकर्षेण यथावद् वक्ष्यामि । यद्यप्युद्देशक्रमानुसारेण 'यतश्च यत्' इति प्रतिज्ञातं प्रथमत एव वक्तव्यम्, तथापि 'अलौकिकस्य' बुद्ध्यारोहे हि साधनानां अत्युपयोगः, न तु तावान् लौकिकस्य प्रेरकत्वस्यानुभवारोहे' इति ज्ञापयितुं साधनानन्तरमेव प्रभाव उक्तः, तत्प्रसङ्गेन स्वरूपं चेति तात्पर्यं भाष्यटीकयोः स्फुटम् । श्रोतुरादरमुत्पादयितुं तज्ज्ञानफलमुच्यते **यज्ज्ञात्वेति** । **अमृतं** मोक्षम्, **अश्नुते** प्राप्नोति ।

तत्र 'स च यः' इति प्रतिज्ञातप्रवर्तकस्वरूपोक्तिः । 'परं ब्रह्म' इति नामोक्त्या हि स्वरूपमेव गम्यते । 'यत्प्रभावः' इति प्रतिज्ञातमुच्यते 'अनादिमत्' इत्यादिनेति विवेकः । 'आदिरेषामस्ति इति आदिमन्ति', योग्यतया देहेन्द्रियगुणकर्मादीनि । न विद्यन्ते आदिमन्ति यस्य तद् अनादिमत्,

आदिमद्देहेन्द्रियादिविवर्जितमित्यर्थः । अथवा आदिरस्यास्तीत्यादिमत्, न आदिमद् अनादिमदिति विग्रहः । न च अत्र पक्षे बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति वाच्यम् । वैदिकलिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वाऽयमिति संशयः स्यात् । तथा च ब्रह्म स्वयं कारणं न भवतीत्यपि शङ्कचेत, तन्निवृत्त्यर्थं मतुबन्तेन आदिशब्देन नञ्समासस्याश्रयणात् । मूर्तामूर्तव्यतीतत्वान्न सन्न वाऽसदुच्यते । सच्छब्दः व्यक्तशब्दित-कार्यार्थः । असच्छब्दः अव्यक्तशब्दितकारणार्थकः । व्यक्ताव्यक्तविलक्षणमिति वा ॥ १३ ॥

किञ्च **तद् ब्रह्म सर्वतः पाणिपादं** 'सर्वतः' इति सप्तम्यर्थे तसिः । पाणिपादशब्दौ तच्छक्तिलक्षकौ, अर्शआद्यजन्तौ च केशादिसर्वावयवेषु पाणिपादशक्तिमत् । **सर्वतोऽक्षिशिरोमुखं** सर्वावयवेषु अक्षिशिरोमुखशक्तिमत् । **सर्वतः श्रुतिमत्** सर्वावयवेषु श्रवणशक्तिमत् । पाणिपादादि-सर्वावयवयुक्तैः अणुतररूपैः सर्वत्र स्थितत्वाद्वा 'सर्वतः पाणिपादम्' इत्यादि । **सर्वं** चेतनाचेतना-त्मकं जगद् **आवृत्य** व्याप्त **तिष्ठति** ॥ १४ ॥

अपि च **सर्वेन्द्रियगुणाभावम्** इन्द्रियाणि गुणाः = विषयाश्च इन्द्रियगुणाः, सर्वे च ते इन्द्रियगुणाश्च सर्वेन्द्रियगुणाः । सर्वाणि इन्द्रियाणि, सर्वांश्च गुणान् = विषयान् आभासयति = प्रत्याययति प्रत्येति वेति, भासतेः पचाद्यच्, सर्वेन्द्रियगुणाभासम् । प्राकृतैर्भिन्नैर्वा इन्द्रियैर्विहीन-त्वात् सर्वेन्द्रियविवर्जितम् । सर्वं बिभर्तीति **सर्वभृत्** च । सर्वभृदपि **असक्तं** निर्लेपम् । निर्गतं गुणेभ्यः = सत्त्वादिभ्य इति **निर्गुणम्** । **गुणभोक्तृ** शुभसाराणां भोक्तृ च ॥ १५ ॥

**भूतानां** नित्यसिद्धानां ब्रह्मादिजीवानाम् । **बहिरन्तश्च** 'तिष्ठति' इत्यनुषज्यते । अन्यथाभाव-राहित्याद् **अचरम्,** सर्वदेशसञ्चरणवत् **चरं च सूक्ष्मत्वाद्** रूपरसादिहीनवस्तुत्वात् **तद्** ब्रह्म **अविज्ञेयं** चक्षुरादीन्द्रियाविषयः । **सूक्ष्मत्वात्** अव्यक्तत्वाद् विशिष्टतया विलक्षणतया च सर्वैः अज्ञेयमिति वा । किञ्च तद् ब्रह्म सर्वगतत्वाद् दूरस्थितमपि अन्तिके च । 'तिष्ठति' इत्यनुवर्तते । 'स्थितम्' इति वक्ष्यमाणाकर्षो वा ॥ १६ ॥

**भूतेषु** सुरनरतिर्यगादिषु प्राणिषु **अविभक्तं** प्राज्ञबुद्ध्यपेक्षया स्वयं अन्तर्भेदहीनमपि, **विभक्तम्** अज्ञप्रतीत्यपेक्षया भिन्नम् **इव स्थितम्** । **भूतभर्तृ** भूतानां पोषकं स्थितिकाले, **ग्रसिष्णु** ग्रसनशीलं प्रलयसमये, **प्रभविष्णु** नानाविधजगदुत्पादनशीलम् इति **तद् ब्रह्म ज्ञेयम्** ॥ १७ ॥

**तद् ब्रह्म ज्योतिषां** सूर्यादिप्रकाशकवस्तूनां **ज्योतिः** प्रकाशनशक्तिप्रदम् । **तमसः** अव्यक्तात् मृत्योः अज्ञानाद्वा **परं** तेनास्पृष्टमुच्यते 'आदित्यवर्णं तमसः परस्तात्' इत्यादौ । **ज्ञानम्** अवबोध-

स्वरूपम् । 'स्वयमेवात्मनाऽऽत्मानं वेत्थ' इति स्वज्ञेयत्वाद् **ज्ञेयम्**, स्वप्रकाशमित्यर्थः । अन्यज्ञेयत्वस्य 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इति पूर्ववाक्य एवोक्तत्वाद् अत्र 'ज्ञेयम्' इति स्वज्ञेयत्वमेवाभिप्रेतमिति तात्पर्यनिर्णये स्फुटम् । ज्ञानेन मुक्तौ प्राप्यत्वाद् **ज्ञानगम्यं सर्वस्य** प्राणिजातस्य **हृदि विष्ठितं** विशेषेण नियन्तृ । तथाविधतया वाऽवस्थितम् ॥ १८ ॥

उक्तमुपसंहृत्य तज्ज्ञानं स्तूयते **इति क्षेत्रमिति** । **इति** 'महाभूतानि' इत्युक्तप्रकारेण **क्षेत्रम्**, **ज्ञानं** अमानित्वादिनोक्तम् । ........ । **एतत्** क्षेत्रादि **विज्ञाय** विशेषेण ज्ञात्वा **मद्भावाय** मय्यर्पितस्थितये **उपपद्यते** अर्हो भवति ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**मद्भावाय मयि भावाय ॥ १९ ॥**

***न्या०दी०*— उक्तमुपसंहृत्य तज्ज्ञानं स्तूयते इतीति ॥ तत्र मद्भावपदमन्यथाप्रतीतिनिरासाय व्याचष्टे मद्भावायेति ॥**

***भा०दी०*— अन्यथाप्रतीतीति** । मदात्मकत्वप्रतीतीत्यर्थः ।

**गीता**

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ २० ॥**

***वि०वि०*—** 'यतश्च यत्' इति प्रतिज्ञातं वक्तुं प्रकृतिविकारपुरुषान् सङ्क्षिप्याह **प्रकृतिमित्यादिना** । प्रकृतिशब्देन चेतनाचेतनप्रकृत्योः पुरुषशब्देन जीवपरयोर्ग्रहणाय 'उभावपि' इत्युक्तम् । द्वे प्रकृती द्वौ पुरुषौ चानादी विद्धि । विकारांश्च गुणांश्च प्रकृतिसम्भवान् प्रकृत्युपादानकान् विद्धि । सत्त्वादिगुणानां विकारत्वेऽप्यन्येषामधिकविकारत्वविवक्षया पृथगुक्तिः ॥ २० ॥

***वा०ल०*—** 'प्रकृतिं पुरुषम्' इत्यत्र, पुरुषपदेन जीवोऽपि कथ्यते । परमात्मनः पृथगनुक्तेः सोऽपि कथ्यते । अनादित्वस्य तत्रैव मुख्यत्वात् । विकारान् महदादीन् । गुणान् सत्त्वादीन् ॥२०॥

***सा०सं०*—** एवमुक्तदिशा 'यतश्च यत्' इति प्रतिज्ञातप्रेरकस्वरूपस्य प्रभावोक्त्यनन्तरम्, वाच्यत्वसिद्धौ प्रेरकज्ञानस्य प्रेर्यज्ञानसापेक्षत्वात्, प्रेरणीयं सप्रकारं पुरुषादिरूपं क्षेत्रं तावदाह

**प्रकृतिम् इति** । न चैतत् 'एतत् क्षेत्रम्' इति श्लोके न प्रतिज्ञातमिति शङ्क्यम् । 'यादृक् च' इत्यनेन प्रतिज्ञातत्वात् । तर्हि 'महाभूतानि' इत्याद्युक्त्यवसरे प्रागेव वाच्यमिति न शङ्क्यम् । यादृक्चेत्यनेन प्रतिज्ञातत्वात् । तर्हि महाभूतानीत्याद्युत्त्यवसरे प्रागेव वाच्यमिति न शङ्क्यम् । वक्ष्यमाणप्रेरकस्वरूपोक्त्युपयोगितयाऽपेक्षितप्रेर्यस्वरूपस्य अत्रावश्यंवाच्यत्वात् प्रागप्युक्तौ गौरवापत्तेरिति भावः । एवं च प्रकृतिपदेन 'महाभूतानि' इत्यादिना प्रागुक्तपञ्चविंशतितत्त्वानि गृह्यन्ते । विकारशब्देन च प्रागुक्तेच्छादयः सर्वे प्रकृतिविकाराः । गुणत्रयस्याल्पविवक्षया पृथगुपादानम् । **पुरुषो**ऽत्र जीवः । **प्रकृतिं** पञ्चविंशतितत्त्वानि **पुरुषं जीवं च उभावप्यनादी विद्धि** । तथा **प्रकृतिसम्भवान्** प्रधानोपादानकान् इच्छादि**विकारान्** सत्त्वादि**गुणांश्च विद्धी**त्यर्थः । तथा चेश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः प्रेर्यप्रपञ्चो अत्रोक्तो भवति ।

यद्वा, **प्रकृतिं** चिदचित्प्रकृती । **पुरुषं** जीवं परमात्मानं च । **उभौ** उभे चेत्यपि सङ्गृह्यते । **अनादी विद्धी**त्यर्थः । **विकारान्** इच्छादीन् सत्त्वादि**गुणांश्च प्रकृतिसम्भवान्** प्रकृत्युपादानकान् **विद्धि** गुणानां विकारत्वेऽपीच्छाद्यपेक्षयाऽल्पविकारत्वादिच्छादीनामधिकविकारत्वविवक्षया पृथगुक्ताः ज्ञेयाः । तात्पर्ये तु प्रकृतिपदेन चिदचित्प्रकृत्योः पुरुषपदेन जीवेश्वरयोर्ग्रहणाय 'उभौ' इत्युक्तिरित्युक्तम् ॥ २० ॥

*अ०प्र०*— तदेवं 'तत्क्षेत्रं यच्च यादृक् चे'त्येतावत् प्रपञ्चितं इदानीं 'यद्विकारि यतश्च यत् स च यो यत्प्रभावश्चे'त्येतत् पूर्वं प्रतिज्ञातमेव अधुना प्रकृति-पुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति **प्रकृतिमिति** पञ्चभिः । तत्रादौ **प्रकृतिमिति** ।

प्रकृतिं[१], पुरुषञ्चैव[२], उभावपि[३], अनादीति विद्धि[४], विकारान्[५], गुणां-श्चैव[७], प्रकृतिसम्भवान्[८], विद्धि[९] ॥

प्रकृतिं पुरुषं चैव उभावपि = इत्यत्र प्रकृतिशब्देन चेतनाचेतनप्रकृत्योः पुरुषशब्देन जीवपरयोः ग्रहणयोर्भावमपीत्युक्तम् । न केवलमेकैकं किन्तु उभावपि पुरुषौ उभे च प्रकृती द्वे प्रकृती द्वौ पुरुषौ चैव द्वावपि[३], अनादीति विद्धीत्यर्थः[४], विकारान् = विकारनिष्ठेच्छादीन्[५], गुणांश्चैव = गुणपरिणामान् सुखदुःखमोहादीन् सत्त्वादीन् सत्त्वादिगुणानां विकारत्वेऽपि इच्छादीनामधिकविकारत्वात्सत्त्वादेः अल्पविकारित्वात् पृथगुक्तिः कुरुपाण्डवन्यायेन इति ज्ञातव्यम्[७], प्रकृतिसम्भवान् = प्रकृतेः सम्भूतान्[८], विद्धि = जानीहि[९] ॥ २० ॥

भाष्यम्

**'यतश्च यत्' इति वक्तुं प्रकृतिविकारपुरुषान् सङ्क्षिप्य आह प्रकृतिमिति ।**

***प०टी०***— उत्तरश्लोकानवतारयति **यतश्चेति** । 'यतश्च यत्' इति प्रतिज्ञातप्रवर्तकं वक्तुं प्रवर्त्यं दर्शयतीत्यर्थः ।

***प्र०दी०***— ननु 'प्रकृतिं पुरुषं चैव विद्धि' इत्यादिकमप्रतिज्ञातं किमित्युच्यते ? मैवम् । 'यादृक् च' इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्य कथनात् । तत्प्रतिज्ञाक्रमेण प्रागेव कुतो नोक्तमित्यत आह **यतश्चेति** ।

'यतश्च यत्' इति प्रतिज्ञातं प्रेरकस्वरूपं तावत्प्रभावानन्तरं वक्तव्यं प्राप्तम् । तत्र प्रेरकस्य स्वरूपनिरूपणं प्रेर्यज्ञानमपेक्षते । प्रेर्यं च सप्रकारं क्षेत्रम् । अतः प्रेरकस्वरूपं वक्तुमनेन प्रेरणीयं सप्रकारं क्षेत्रमुच्यते । तस्य प्रागपि वचने गौरवं स्यादिति भावः । तर्हि 'प्रकृति' इत्यादि कथमुच्यते ? ईश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमित्युच्यते । तत्र प्रकृतिशब्देन 'महाभूतानि' इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते । विकारशब्देनेच्छाद्युपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयाद्याः सर्वे विकारा विवक्षाविशेषवशेन पृथगुपात्ताः । पुरुषशब्देन जीव इति ।

'यावत् सञ्जायते' इत्यादिना पुनर्वक्ष्यमाणत्वात् पुनरुक्तिदोषं परिहर्तुं **सङ्क्षिप्य** इत्युक्तम् । **आह** सप्रकारान् निरूपयति ।

***भा०दी०***— **स्वरूपं चेति** । 'परं ब्रह्म' इति ब्रह्मस्वरूपं 'स च यः' इति प्रतिज्ञातमित्यर्थः । **प्रभावानन्तरमिति** । 'अनादिमत्' इत्यादि 'उपपद्येत' इत्यन्तग्रन्थान्तरमित्यर्थः । **अनेनेति** । 'प्रकृतिं पुरुषं च' इत्यादिनेत्यर्थः । **प्रकृति इत्यादीति** । **कथमिति** । 'महाभूतानि' इत्या-दिना प्रकृत्यादेरनेकस्येच्छादिविकाराणां चोक्तत्वात् पुरुषपदेनेश्वरश्चेत् सोऽपि 'अनादिमत्परं ब्रह्म' इति प्रागुक्त एवेति भावः ।

'यादृक् च' प्रतिज्ञातोक्तिपरत्वलाभाय आह **सप्रकारान्निरूपयतीति** । प्रकृतिपुरुषयोरनादित्वरूपं सत्त्वादीनां सर्गकालीनाल्पीभवत्प्रकृतिसम्भवत्वरूपं इच्छादिविकाराणां बहुत्वप्रकृतिसम्भवत्वरूपं प्रकारं निरूपयतीत्यर्थ इत्येके । अन्ये तु प्रकृतेः कार्यकारणकर्तृत्वहेतुत्वरूपं, पुरुषस्य भोक्तृत्वरूपं, गुणानां सदसद्योनिगमनजन्मकारणत्वरूपं प्रकारं निरूपयतीत्यर्थ इत्याहुः ।

*भा०र०*— **कथनात्** 'प्रकृतिं पुरुषं च' इत्यादिना । **प्रागेव** क्षेत्रनिरूपणाद् अनन्तरं विकारनिरूपणाच्च प्रागेव । **वक्तुम्** 'उपद्रष्टा इत्यादिना' इति शेषः । **अनेन** 'प्रकृतिं पुरुषं च' इत्यनेन । **प्रागपि** 'यादृक्च' इति प्रतिज्ञानुसारात् 'पञ्च चेन्द्रियगोचराः' इत्यन्तेन 'यच्च' इति प्रतिज्ञातक्षेत्रोक्त्यनन्तरमपीत्यर्थः ।

**तर्हि** यद्यत्र सप्रकारं क्षेत्रं विवक्षितम्, तर्हि प्रकृतिशब्दः पुरुषशब्दश्च कथं भाष्ये उपात्तः ? प्रकृतिपुरुषयोः पूर्वं केनापि पदेनाप्रतिज्ञातत्वात् । प्रत्युत 'महाभूतानि' इत्यादिना परिगणितानामेव क्षेत्रत्वावगमात् । पुरुषशब्दस्य भगवत्परत्वे प्रेर्यत्वायोगादिति हृदयम् । परिहरति **उच्यत इति** । 'चेतनाचेतनं त्वेतत् सर्वं क्षेत्रमितीरितम्' इति तात्पर्यनिर्णयवचनं हृदि कृत्वाऽऽह **सर्वोऽपीति** । ननु 'इच्छादयो विकाराः' इति इच्छाद्वेषादीनामेव विकारत्वेन भाषितत्वात् तद्विरोधः स्यात् ? इति चोद्यपरिहारायाह **इच्छाद्युपलक्षिता इति** । 'इच्छा द्वेषः सुखं दुःखम्' इतीच्छादिपदोपलक्षिता इत्यर्थः । ननु गुणत्रयादीनां महदादिपृथिव्यन्तानां 'महाभूतानि' इत्युक्तक्षेत्रान्तर्भावेन प्रकृतिशब्देनैव गृहीतानां कथं विकारशब्देन ग्रहणम् ? इत्यत उक्तम् **क्षेत्रान्तर्भूता अपीति** ।

यद्यप्युक्तरीत्या क्षेत्रान्तर्भूताः, तथापि पृथगुपात्ताः । केन निमित्तेन ? इत्यतो ''गुणानां च विकारत्वेऽपि अधिकविकारत्वविवक्षया अन्येषां 'विकारांश्च गुणांश्च' इति पृथगुक्तिः'' इति, 'विशेषविकृतिस्थिताः' इति च तात्पर्यनिर्णयोक्तिं हृदि कृत्वोक्तम् **विवक्षाविशेषवशेनेति** । गुणत्रयाणाम् उत्तरोत्तरं महदादिकारणविवक्षया क्षेत्रत्वम्, प्रकृतिं प्रत्युपादेयत्वविवक्षया विकारत्वम् इति विवक्षाविशेषवशेनेत्यर्थः । 'तेषामत्यल्पोऽपि विशेषो लयात् सर्ग इति विकाराः पृथगुक्ताः' इति भाष्ये वक्ष्यमाणविवक्षाविशेषवशेनेत्यर्थ इत्यपि आहुः । ननु क्षेत्रादीनामुक्तत्वाद् 'आह' इति किमित्युच्यते ? इति चोद्यपरिहाराय, 'यादृक्च' इति प्रतिज्ञातप्रकारोक्तिघटनाय च व्याचष्टे **सप्रकारान्निरूपयतीति** । प्रकृतिपुरुषयोरनादित्वरूपम्, सत्त्वादीनां सर्गकालीनाल्पविशेषवत्त्व-प्रकृतिसम्भवत्वरूपम्, इच्छादिविकाराणां बहुविशेषवत्त्व-प्रकृतिसम्भवत्वरूपम्, जीवस्य भोक्तृत्वरूपं च प्रकारं निरूपयतीत्यर्थ इति भावः ।

**भाष्यम्**

**गुणाः सत्त्वादयः । तेषामत्यल्पो विशेषो लयात् सर्ग इति विकाराः पृथगुक्ताः । ''कार्याकार्यगुणास्तिस्रो यतस्त्वल्पोद्भवो जनौ'' इति माधुच्छन्दस-शाखायाम् ॥ २० ॥**

***प०टी०*—** विकारेभ्यः पृथगुक्तत्वान्नात्र गुणाः सत्त्वादय इति शङ्का मा भूदित्याह **गुणाः सत्त्वादय इति** । तर्हि तेषामपि विकारत्वाद्व्यर्था पृथक्त्वोक्तिरित्येतत् सप्रमाणकं परिहरति **तेषामिति** । **तिस्रः** त्रयः ॥ २० ॥

***प्र०दी०*—** 'गुणाः सुखदुःखमोहाः' इति कश्चित् । 'कार्यकारणलक्षणाः' इत्यन्यः । तदुभयं निराकर्तुं व्याचष्टे **गुणा इति** । ननु सत्त्वरजस्तमसामपि प्रकृतिविकारत्वात् 'विकारांश्च गुणांश्च' इति पृथगुक्तिः किमर्था ? इत्यत आह **तेषामिति** । 'इति ज्ञापयितुम्' इति शेषः । **विकाराः पृथगुक्ता इति** । विकाराश्च गुणाश्च पृथगुक्ता इत्यर्थः । **कार्याश्च ते अकार्याश्च** । **तिस्रः** त्रयः । अनेन सुखाद्यङ्गीकारे विकारेभ्यः पृथग्ग्रहणमयुक्तमित्यपि सूचितम् ॥ २० ॥

***भा०दी०*—** **अनेनेति** । गुणानां विकाराणां पृथगुक्तौ बीजकथनेनेत्यर्थः । **सुखादीति** । गुणपदेन सुखाद्यङ्गीकार इत्यर्थः ॥ २० ॥

***भा०र०*—** **कश्चित्** शङ्करः । तथा च आह 'सत्त्वरजस्तमोगुणपरिणामान् सुखदुःखमोहान्' इति । ननु गुणानामपि प्रकृतिविकारत्वाद् 'गुणा विकारेभ्यः पृथक् न वक्तव्याः' इत्याक्षेपे, 'गुणा विवक्षाविशेषवशेन पृथगुक्ताः' इत्येव भाषणीयम् । तत्कथं 'विकाराः पृथगुक्ताः' इति भाषणम् ? इति शङ्कापरिहाराय 'विकाराः पृथगुक्ताः' इत्येतद् व्याचष्टे **विकाराश्च गुणाश्चेति** । 'कार्याकार्य-गुणास्तिस्रः' इति भाष्ये विवक्षितविग्रहं दर्शयन्, 'तिस्रः' इत्येतद् गुणशब्दसामानाधिकरण्याय लिङ्गव्यत्यासेन योज्यमित्याह **कार्याश्च तेऽकार्याश्चेति** । **तिस्रस्त्रय इति** । तथा च 'त्रयो गुणाः सत्त्व-रजस्-तमोलक्षणाः कार्या अकार्याश्च विवक्षाविशेषवशेनोच्यन्ते' इत्युक्तविवक्षाविशेष एव उच्यते । यतो **जनौ** जनिकाले, **स्वल्पोद्भवः** विषमतावस्थापत्तिलक्षणः 'तेषाम्' इति भाष्यार्थो निष्पन्नः । उद्भवसत्त्वात् कार्यत्वम्, उद्भवस्याल्पत्वात् अकार्यत्वं चेति ज्ञातव्यम् । 'गुणाः सुख-दुःखमोहाः' इत्याद्यपव्याख्यानं प्रत्याख्यातमित्याह **अनेनेति** । विकाराणां गुणानां च पृथगुक्तौ बीजकथनपरप्रमाणोदाहरणेनेत्यर्थः । **इत्यपीति** । न केवलं अस्मद्व्याख्याने पृथग्ग्रहणं युक्तमिति प्रतिपादनम् इत्यपेरर्थः ॥ २० ॥

### गीतातात्पर्यनिर्णयः

**"प्रकृतिं पुरुषं च" इत्यत्र पुरुषशब्देन जीवपरयोः प्रकृतिशब्देन चेतना-चेतनप्रकृत्योः स्वीकाराय 'उभावपि' इति । विकाराणां सत्त्वादीनां चोपादान-त्वविवक्षया प्रकृतिसम्भवत्वम् । स्वातन्त्र्यं तु परमेश्वरस्यैव । "उपद्रष्टाऽनुमन्ता**

च'' इत्यादि वक्ष्यमाणत्वात् । गुणानां च विकारत्वेप्यधिकविकारत्वविवक्षया अन्येषां ''विकारांश्च गुणांश्च'' इति पृथगुक्तिः ॥ २० ॥

*प्रका०*— ''प्रकृतिं पुरुषं चैव विध्यनादी''त्यनेनैव विदितत्वसिद्धेः उभावपीत्यस्य विवक्षामाह **प्रकृतिमिति** । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्'' इत्यस्यार्थमाह **विकाराणामित्यादिना** ।

**न्या०दी०— यतश्च यत् स च य इति प्रतिज्ञातं वक्तुं प्रकृत्यादिस्वरूपमुच्यते प्रकृतिमिति । तत्र प्रकृतिं पुरुषं चेत्युक्त्यैवोभाविति सिद्धेः किमुभावित्युक्तेनेत्यत आह प्रकृतिमिति ॥ इत्युक्तमिति शेषः । उभावित्युक्तस्य पुल्लिङ्गेनान्वयाय व्युत्क्रमः । अनेन उभावित्येतत् पृथग्वाक्यमित्युक्तं भवति । उभे अपीति सङ्ग्रहश्च । विकारांश्च गुणांश्चेत्यत्र विकारादीनां प्रकृतिः स्वतन्त्रं कारणमित्यन्यथाप्रतीतिम् इच्छादयो विकारा इत्युक्तत्वाद् गुणशब्दार्थमेव वदन् निराकरोति विकाराणामिति ॥ स्वातन्त्र्यमेव प्रकृतेः किं न स्यादित्यत आह स्वातन्त्र्यमिति ॥ उपद्रष्टाऽनुमन्ता चेतीश्वरस्यैव स्वातन्त्र्यस्य वक्ष्यमाणत्वात् न प्रकृतेः स्वातन्त्र्यं, किन्तूपादानत्वमेवेत्यर्थः । नन्विच्छादिवत् सत्त्वादिगुणानामपि विकारत्वाद् विकारांश्च गुणांश्चेति पृथगुक्तिः किंनिमित्तेत्यत आह गुणानां चेति ॥ सत्त्वादिगुणानां विकारत्वेऽपि विकारांश्च गुणांश्चेति पृथगुक्तिः सत्त्वादीनामल्पविकारत्वादिच्छादीनां ततोऽधिकविकारत्वात् तद्विवक्षया युक्तेत्यर्थः ।**

*भा०दी०*— भाष्योक्तसङ्गतिमाह **यतश्चेत्यादि** ॥ **वक्तुमिति** । उपद्रष्टेत्यादिनेति योज्यम् । ततः प्रेरकाद्यत् प्रवर्तमानमस्ति प्रकृत्यादिक्षेत्रमित्यर्थः । स च प्रेरकश्च य इति प्रतिज्ञातमित्यर्थः ॥ **पुल्लिङ्गेनान्वयायेति** । पुरुषपदेनान्वयाय पुरुषशब्दितौ उभावित्यन्वयाय पश्चादुक्तपुरुषशब्दार्थं प्रागुक्त्वा पश्चात्प्रकृतिशब्दार्थ उक्त इत्यर्थः । व्युत्क्रमव्याख्यानेन किं जातमित्यत आह **अनेनेति** ॥ **पृथग्वाक्यमिति** । प्रकृतिं पुरुषं च विद्धि उभौ जीवपरौ उभे चेतनाचेतनप्रकृती चानादी विद्धीत्येवमित्यर्थः ॥ **इति सङ्ग्रहश्चेति** । इत्यस्या-प्यत्र (सं)ग्रहणमित्यर्थः । **प्रतीतिमिति** निराकरोति इत्यन्वयः ।

**गीता**

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥**

*वि०वि०*— कार्यं शरीरम् । 'शरीरं कार्यमुच्यते' इत्यभिधानात् । कारणानीन्द्रियाणि । कर्तृत्वं क्रियाविकारः । हेतुः कारणम् । भोक्तृत्वं भोगोऽनुभवात्मकः । यद्यपि सर्वे विकाराः प्रकृतिसम्भवाः तस्या एव परिणामित्वात्, तथापि भोक्तारश्चेतना एव । अचेतनस्य भोक्तृत्वासम्भवादित्यर्थः ।

अथवा, भगवतः सर्वकर्तृत्वेऽपि चित्प्रकृतिर्भोक्तृत्वप्रदाने स्वप्रवृत्तिमपेक्ष्य कार्यकारणकर्तृत्वेऽधिकप्रवृत्तिमती । पुरुषो विष्णुः सर्वकर्ताऽपि जीवं प्रति भोक्तृत्वदाने देव्या अल्पवृत्तित्वात् स्वयमेव सुखादिभोक्तृत्त्वे हेतुरिति विभागेनोभयोः कर्तृत्वव्यपदेशो युज्यते । अत एव उच्यत इत्यर्थद्वयेऽप्युक्तम् । उक्तं च— 'स्वदेहेन्द्रियहेतुत्वं यज्जीवस्य स्वकर्मभिः । आवृत्य विष्णुतत्त्वं तद्धेतुश्चित्प्रकृतिर्मता ॥ जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा । परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ॥ विशेषकर्ता केषाञ्चिदुक्तो यद्वद्विकुण्ठपः । उच्यते सर्वपालोऽपि विशेषेण स्वकर्मणा ॥' इति ॥ २१ ॥

*वा०ल०*— 'पुरुषः सुखदुःखानाम्' इत्यत्र, पुरुषो जीव एव । सुखदुःखभोक्तृत्वस्य परमात्मन्यसम्भवात् ॥ २१ ॥

*सा०सं०*— प्रकृतिसम्भवत्वं विकाराणां व्यनक्ति **कार्येति कार्यं** शरीरम् । **कारणानी-न्द्रियाणि** । जीवस्य यद्देहेन्द्रियकर्तृत्वं तत्र कारणं चित्**प्रकृतिरुच्यते** । **सुखदुःखानां भोक्तृत्वे** जीवस्य प्रकृतिविकारसुखदुःखानां स्वीयतया साक्षात्काररूपे भोगे । **पुरुषो** भगवान् । **हेतुरुच्यते**। अत्र हरेः सर्वहेतुत्वेन जीवगतदेहेन्द्रियकर्तृत्वहेतुत्वसत्त्वेऽपि, तथा देव्याः जीवानां सुखदुःखभोगदानहेतुत्वसत्त्वेऽपि देव्याः सुखदुःखभोगदाने प्रवृत्तिरल्पा । कार्यकारणकर्तृत्वे भोगदानप्रवृत्त्यपेक्षयाऽधिका । अतः कार्यकारणकर्तृत्वे प्रकृतिर्हेतुरिति । पुरुषस्तु सुखदुःखभोगदानहेतुरिति विशिष्योक्तिर्युक्ता । अत एव पूर्वापरार्धयोरुच्यत इति द्विवारमुक्तिः । यद्वा, **कार्यकारणकर्तृत्वे** देहेन्द्रियाणां परिणामक्रियायाम् । **प्रकृतिः** प्रधानं **हेतुरुच्यते** । **पुरुषो** जीवः । **सुखदुःखानां भोक्तृत्वे** अनुभवे हेतुः कर्ता **उच्यते** इत्यर्थः ॥ २१ ॥

*अ०प्र०*— विकाराणां प्रकृतिसम्भवत्वं दर्शयन् पुरुषस्य च संसारे हेतुत्वं दर्शयति **कार्य-कारणेति** ।

प्रकृतिः[१], कार्यकारणकर्तृत्वे = कार्यं शरीरं कारणानि सुखदुःख-साधनानि इन्द्रियाणि तेषां कर्तृत्वे क्रियाविकारे तदाकारपरिणामे वा । यद्वा, कार्यं उत्पाद्यं कारणं क्रियाहेतुः कर्ता क्रियाश्रयः[२],

हेतुः = कारणं उच्यते कपिलादिभिः शरीरादिरूपेण परिणमत इत्यर्थः । पुरुषो = जीवः[3], सुख-दुःखानां = जीवकृतसुखदुःखानां[4], भोक्तृत्वे हेतुः = कारणं उच्यते[5] ॥

देहादिजन्यसुखादिसाक्षात्कारो जीवस्यैव न जडस्येत्यर्थः । यद्यपि प्रकृतेरपि सर्वपरिणाम-कारणत्वात्परिणामेन ज्ञानेच्छाप्रयत्नवत्त्वरूपं कर्तृत्वं सम्भवति । तथापि ज्ञानेच्छाप्रयत्नस्वामित्व-रूपकर्तृत्वाभावात् भोक्तृत्वमपि नास्ति कर्तृत्वविशेषत्वात् भोक्तृत्वस्य स्वीयतया सुखादिसाक्षा-त्कारलक्षण-भोगजन्यनीचोच्चतारूपोत्सेकाद्यभावान्न जडस्य भोक्तृत्वम् । किन्त्वेतल्लक्षणं भोक्तृत्वं चेतनस्यैवेति भावः । मुक्तौ ज्ञानेच्छाप्रयत्नादीनां जीवस्वरूपत्वाङ्गीकारेऽपि विशेषबलात्तत्स्वामित्वं चास्तीति कर्तृत्वं भोक्तृत्वादिकं युज्यत इति मन्तव्यम् । प्रकृतिपुरुषशब्दाभ्यां लक्ष्मीनारायणग्रहणे त्वयं विशेषः— यद्यपि कर्तृत्वभोक्तृत्वादिषु सर्वत्रव्यापारवती लक्ष्मीस्तथापि भोक्तृप्रदाने सा यावन्तं प्रयत्नं करोति तदपेक्षया कार्यकारणत्वे कर्तृत्वे विकारित्वादिरूपे अधिकप्रयत्नं करोति । तथा पुरुषो विष्णुः सर्वकर्ताऽपि सन् जीवस्योक्तलक्षणभोक्तृत्वप्रदाने लक्ष्मीयत्नस्याल्पत्वादेव तदपेक्षया स्वयं तत्र विशेष-यत्नवान् भवतीति । अतो विशेषाल्लक्ष्मीनारायणौ कर्तृत्वभोक्तृत्वयोः हेतुरुच्यते । अत एव उभयोः सर्वकर्तृत्वेऽपि एवं विशेषविवक्षयाऽयं व्यवहार इति दर्शयितुमुभयत्रार्थे उच्यत इति उक्तम्। 'स्वदेहेन्द्रियहेतुत्वं यज्जीवस्य स्वकर्मभिः । आवृत्य विष्णुतत्त्वं तद्धेतुश्चित्प्रकृतिर्मता ॥ जीवस्य सुखदुःखानां भोगशक्तिप्रदस्सदा । विशेषकर्ता केषाञ्चित् उक्तो यद्वद्विकुण्ठपः ॥ उच्यते सर्व-पालोऽपि विशेषेण स्वकर्मणे'ति । विष्णुतत्त्वमावृत्य विष्णोर्यथास्थितिप्रज्ञापयित्वा विष्णुतत्त्व-ज्ञानस्यैव बन्धककर्मद्वारा देहेन्द्रियहेतुत्वात् तदज्ञाने हेतुश्चित्प्रकृतेरपि जीवदेहादिहेतुत्वं सर्वस्य कर्ताऽपि हरिः केषाञ्चिद्भोक्तृत्वादीनां विशिष्टकर्तोच्यते कार्यान्तर इव भोक्तृत्वादावन्येषामिति प्रयत्नाभावात् । यथा केवलं स्वकर्मणा विकुण्ठ इति विशिष्योच्यते स्थानान्तर इव वैकुण्ठेऽन्येषा-माधिपत्याभावादित्येवं विशेषेण इति प्रमाणार्थः । तथाऽप्यविकारिणो जन्मरहितस्य भोक्तृत्वं कथमित्यत आह— जीवानां कार्यकारणसम्बन्धेन सुखदुःखादिभोगे लक्ष्मीनारायणौ कारणमिति यदुक्तं तदसत् । देहादिसम्बन्धस्य सुखादिभोगस्य च मिथ्यात्वादित्यत आह एकविंशतिश्लोके । यद्वा, मतान्तरे यद्यप्यचेतनायाः प्रकृतेः स्वतःकर्तृत्वं न सम्भवति तथा पुरुषस्याप्यविकारिभोक्तृत्वं न सम्भवति । तथापि कर्तृत्वं नाम क्रियानिवर्तकत्वं तत्तचेतनस्याचेतनादृष्टवशात् सम्भवति । यथा वह्नेस्तूर्ध्वज्वलनं वायोस्तिर्यग्गमनं वत्सोऽदृष्टवशात् स्तन्यपयसः क्षरणमित्यादि । अतः पुरुषसन्नि-धानात् प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वं च सुखदुःखसंवेदनम् । तच्चेतनधर्म एवेति प्रकृतिसन्नि-धानात् पुरुषस्य भोक्तृत्वमुच्यत इति ॥ २१ ॥

**गीतातात्पर्यनिर्णयः**

**"स्वेदेहेन्द्रियहेतुत्वं यज्जीवस्य स्वकर्मभिः ।**
**आवृत्य विष्णुतत्त्वं तद्धेतुश्चित्प्रकृतिर्मता ॥**
**जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा ।**
**परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ॥**
**विशेषकर्ता केषाञ्चिदुक्तो यद्वद् विकुण्ठपः ।**
**उच्यते सर्वपालोऽपि विशेषेण स्वकर्मणा ॥"** इति च ।

***प्रका०*—** "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत" इत्यस्यार्थमाह **स्वदेहेत्यादिना** ।

***न्या०दी०*—** "कार्यकारणकर्तृत्वे" इति श्लोकमचेतनप्रकृतिजीवविषयत्वप्रतीतिनिरासाय चेतनप्रकृतीश्वरविषयतया प्रमाणेनैव व्याचष्टे **स्वदेहेति** ॥ **विष्णुतत्त्वमावृत्त्येति** ॥ विष्णोर्यथास्थितिमज्ञापयित्वेत्यर्थः । विष्णुतत्त्वाज्ञस्यैव बन्धकर्मसम्भवेन देहेन्द्रियहेतुत्वादज्ञानहेतुचित्प्रकृतेर्जीवस्य शरीरेन्द्रियहेतुत्वम् । ईश्वरपरतयोत्तरार्धं व्याचष्टे **जीवस्येति** ॥ सर्वकर्तृत्वादीश्वरस्य भोगशक्तिकर्तृत्वं किं विशिष्योच्यत इत्यत आह **सर्वेति** ॥ यथा सर्वपालोऽपि विकुण्ठपो विशिष्योच्यते, स्थानान्तरस्येव विकुण्ठस्य पालकान्तररहितत्वात् तथा सर्वकर्ताऽपि हरिः केषाञ्चिद्भोक्तृत्वादीनां कर्ता विशिष्योच्यते । कार्यान्तर इव भोक्तृत्वादावन्येषां प्रवृत्त्यभावादित्यर्थः । विशेषेण स्वकर्मणा केवलेन स्वकर्मणा । एतेन भगवतः कार्यकारणकर्तृत्वहेतुत्वेऽपि चित्प्रकृतेर्भोक्तृत्वप्रदाने स्वप्रवृत्तिमपेक्ष्य कार्यकारणकर्तृत्वेऽधिकप्रवृत्तिरिति कार्यकारणकर्तृत्वे हेतुत्वोक्तिरिति सूचितं भवति ।

***भा०दी०*—** शङ्कते **अज्ञानहेतुचित्प्रकृतेरित्यादि** । हेतुत्वं किं विशिष्य उच्यत इति अन्वयः । अस्योत्तरं एतेन भगवत इत्यादिना अग्रे व्यक्तम् ॥ **स्वकर्मणेति** । स्वव्यापारेण इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**परमेश्वरस्यैव सर्वकर्तृत्वेऽपि भोक्तृत्वदाने देव्या अल्पप्रवृत्तिरिति दर्शयितुं "उच्यते" इति स्थानद्वयेऽप्युक्तम् । कर्तृत्वेऽपि स एव मुख्यहेतुः । तथाऽपि**

भोक्तृत्वापेक्षया तस्या अधिकप्रवृत्तिरिति "कर्तृत्वे हेतुः प्रकृतिरुच्यते" इति, सर्वहेतुत्वेऽपि विष्णोः प्रकृतेर्जीवं प्रति भोक्तृत्वदानेऽल्पप्रवृत्तिरिति "पुरुषो भोक्तृत्वे हेतुरुच्यते" इति विशेषहेतोरेवमुच्यते । एवं मुख्यतस्तु सर्वहेतुत्वं विष्णोरेवेति भावः ॥

*प्रका०*— **स्थानद्वयेऽपी**त्यस्य श्लोकस्यार्धद्वयेऽपीत्यर्थः ।

***न्या०दी०***— एतदुभयं गीतायामेव सूचितमित्याह **परमेश्वरस्येति** ॥ परमेश्वरस्यैव कार्यकारणकर्तृत्वे हेतुत्वेऽपि चित्प्रकृतेस्तदुक्तिर्युक्ता । भोक्तृत्वदाने तस्या अल्पप्रवृत्तित्वेन तदपेक्षया कर्तृत्वेऽधिकप्रवृत्तिमत्त्वात् । तथा परमेश्वरस्य सर्वकर्तृत्वेऽपि विशिष्य भोक्तृत्वदानोक्तिर्युक्ता । भोक्तृत्वदाने चित्प्रकृत्यादीनामन्यत्र प्रवृत्तिमपेक्ष्याल्पप्रवृत्तित्वेन भगवत एवाधिकप्रवृत्तित्वादित्येतत्सूचयितुमस्य श्लोकस्य पूर्वोत्तरार्धयोरुच्यत इत्युक्तमित्यर्थः । कथमनेनैतत्सूचितमित्यत आह **कर्तृत्वेऽपीति** ॥ **भोक्तृत्वापेक्षयेति** ॥ स्वस्या भोक्तृत्वदाने प्रवृत्त्यपेक्षयेत्यर्थः । अधिकप्रवृत्तिः कार्यकारणकर्तृत्व इति शेषः । भोक्तृत्वे हेतुरुच्यते । विशेषेणेति शेषः ।

**गीतातात्पर्यनिर्णयः**

"पुरुषः प्रकृतिस्थः" इत्यत्र पुरुषशब्दो जीवे । उभयोरपि पुरुषशब्देन पूर्वं प्रस्तुतत्वात् । यथायोग्यमुपपत्तेः ॥ २१ ॥

*प्रका०*— "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिवान् गुणानि"त्यस्यार्थमाह **पुरुषः प्रकृतिस्थ इत्यादिना** । अत्र प्रकृतिजगुणभोक्ता पुरुषो योग्यतया जीव एव । प्रकृतिं पुरुषं चेति पूर्वजीवस्यापि प्रकृतत्वात् । जीवस्य भोक्तृत्वादिकं मिथ्येति यत्कैश्चिदुच्यते तदनेन भुङ्क्ते हीत्यनुभवसिद्धनिर्देशेन निराकृतं भवति । अनुभवसिद्धस्य दुःखादेर्मिथ्यात्वे मिथ्या सर्वं सत्य आत्मा इत्यस्याप्यनुभवसिद्धत्वेन मिथ्यात्वापातात् । इदं मिथ्या इदं सत्यं इत्ययमर्थो न सिद्ध्येत् । वस्तुत्वेन अविद्यमानोऽपि व्यावहारिकतया, अयमर्थः सिद्ध्यतीत्यस्यापि अनुभवसिद्धत्वे । पूर्ववदप्रामाण्यादित्यर्थः ।

***न्या०दी०***— "पुरुषः प्रकृतिस्थो हि" इत्यत्रेश्वर उच्यत इत्यन्यथाप्रतीतिनिरासायाह **पुरुष इति** ॥ ईश्वरस्य "पुरुषः सुखदुःखानां" इति पुरुषशब्देन प्रकृतत्वात् कथमत्र जीवे पुरुषशब्द इत्यत आह **उभयोरिति** ॥ यद्यप्यत्र पुरुषशब्देनेश्वरः प्रकृतस्तथाऽप्यत्र पुरुष-

**गीतातात्पर्यनिर्णयः**

"स्वेदेहेन्द्रियहेतुत्वं यज्जीवस्य स्वकर्मभिः ।
आवृत्य विष्णुतत्त्वं तद्धेतुश्चित्प्रकृतिर्मता ॥
जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा ।
परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ॥
विशेषकर्ता केषाञ्चिदुक्तो यद्वद् विकुण्ठपः ।
उच्यते सर्वपालोऽपि विशेषेण स्वकर्मणा ॥" इति च ।

***प्रका०***— "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत" इत्यस्यार्थमाह **स्वदेहेत्यादिना** ।

***न्या०दी०***— "कार्यकारणकर्तृत्वे" इति श्लोकमचेतनप्रकृतिजीवविषयत्वप्रतीतिनिरासाय चेतनप्रकृतीश्वरविषयतया प्रमाणेनैव व्याचष्टे **स्वदेहेति** ॥ **विष्णुतत्त्वमावृत्त्येति** ॥ विष्णोर्यथास्थितिमज्ञापयित्वेत्यर्थः । विष्णुतत्त्वाज्ञस्यैव बन्धकर्मसम्भवेन देहेन्द्रियहेतुत्वादज्ञानहेतुचित्प्रकृतेर्जीवस्य शरीरेन्द्रियहेतुत्वम् । ईश्वरपरतयोत्तरार्धं व्याचष्टे **जीवस्येति** ॥ सर्वकर्तृत्वादीश्वरस्य भोगशक्तिकर्तृत्वं किं विशिष्योच्यत इत्यत आह **सर्वेति** ॥ यथा सर्वपालोऽपि विकुण्ठपो विशिष्योच्यते, स्थानान्तरस्येव विकुण्ठस्य पालकान्तररहितत्वात् तथा सर्वकर्ताऽपि हरिः केषाञ्चिद्भोक्तृत्वादीनां कर्ता विशिष्योच्यते । कार्यान्तर इव भोक्तृत्वादावन्येषां प्रवृत्त्यभावादित्यर्थः । विशेषेण स्वकर्मणा केवलेन स्वकर्मणा । एतेन भगवतः कार्यकारणकर्तृत्वहेतुत्वेऽपि चित्प्रकृतेर्भोक्तृत्वप्रदाने स्वप्रवृत्तिमपेक्ष्य कार्यकारणकर्तृत्वेऽधिकप्रवृत्तिरिति कार्यकारणकर्तृत्वे हेतुत्वोक्तिरिति सूचितं भवति ।

***भा०दी०***— शङ्कते **अज्ञानहेतुचित्प्रकृतेरित्यादि** । हेतुत्वं किं विशिष्य उच्यत इति अन्वयः । अस्योत्तरं एतेन भगवत इत्यादिना अग्रे व्यक्तम् ॥ **स्वकर्मणेति** । स्वव्यापारेण इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

परमेश्वरस्यैव सर्वकर्तृत्वेऽपि भोक्तृत्वदाने देव्या अल्पप्रवृत्तिरिति दर्शयितुं "उच्यते" इति स्थानद्वयेऽप्युक्तम् । कर्तृत्वेऽपि स एव मुख्यहेतुः । तथाऽपि

भोक्तृत्वापेक्षया तस्या अधिकप्रवृत्तिरिति "कर्तृत्वे हेतुः प्रकृतिरुच्यते" इति, सर्वहेतुत्वेऽपि विष्णोः प्रकृतेर्जीवं प्रति भोक्तृत्वदानेऽल्पप्रवृत्तिरिति "पुरुषो भोक्तृत्वे हेतुरुच्यते" इति विशेषहेतोरेवमुच्यते । एवं मुख्यतस्तु सर्वहेतुत्वं विष्णोरेवेति भावः ॥

*प्रका०*— **स्थानद्वयेऽपीत्यस्य** श्लोकस्यार्धद्वयेऽपीत्यर्थः ।

***न्या०दी०*—** एतदुभयं गीतायामेव सूचितमित्याह **परमेश्वरस्येति** ॥ परमेश्वरस्यैव कार्यकारणकर्तृत्वे हेतुत्वेऽपि चित्प्रकृतेस्तदुक्तिर्युक्ता । भोक्तृत्वदाने तस्या अल्पप्रवृत्तित्वेन तदपेक्षया कर्तृत्वेऽधिकप्रवृत्तिमत्त्वात् । तथा परमेश्वरस्य सर्वकर्तृत्वेऽपि विशिष्य भोक्तृत्वदानोक्तिर्युक्ता । भोक्तृत्वदाने चित्प्रकृत्यादीनामन्यत्र प्रवृत्तिमपेक्ष्याल्पप्रवृत्तित्वेन भगवत एवाधिकप्रवृत्तित्वादित्येतत्सूचयितुमस्य श्लोकस्य पूर्वोत्तरार्धयोरुच्यत इत्युक्तमित्यर्थः । कथमनेनैतत्सूचितमित्यत आह **कर्तृत्वेऽपीति** ॥ **भोक्तृत्वापेक्षयेति** ॥ स्वस्या भोक्तृत्वदाने प्रवृत्त्यपेक्षयेत्यर्थः । अधिकप्रवृत्तिः कार्यकारणकर्तृत्व इति शेषः । भोक्तृत्वे हेतुरुच्यते । विशेषेणेति शेषः ।

**गीतातात्पर्यनिर्णयः**

"पुरुषः प्रकृतिस्थः" इत्यत्र पुरुषशब्दो जीवे । उभयोरपि पुरुषशब्देन पूर्वं प्रस्तुतत्वात् । यथायोग्यमुपपत्तेः ॥ २१ ॥

*प्रका०*— "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिवान् गुणानि"त्यस्यार्थमाह **पुरुषः प्रकृतिस्थ इत्यादिना** । अत्र प्रकृतिजगुणभोक्ता पुरुषो योग्यतया जीव एव । प्रकृतिं पुरुषं चेति पूर्वजीवस्यापि प्रकृतत्वात् । जीवस्य भोक्तृत्वादिकं मिथ्येति यत्कैश्चिदुच्यते तदनेन भुङ्क्ते हीत्यनुभवसिद्धनिर्देशेन निराकृतं भवति । अनुभवसिद्धस्य दुःखादेर्मिथ्यात्वे मिथ्या सर्वं सत्य आत्मा इत्यस्याप्यनुभवसिद्धत्वेन मिथ्यात्वापातात् । इदं मिथ्या इदं सत्यं इत्ययमर्थो न सिद्ध्येत् । वस्तुत्वेन अविद्यमानोऽपि व्यावहारिकतया, अयमर्थः सिद्ध्यतीत्यस्यापि अनुभवसिद्धत्वे । पूर्ववदप्रामाण्यादित्यर्थः ।

***न्या०दी०*—** "पुरुषः प्रकृतिस्थो हि" इत्यत्रेश्वर उच्यत इत्यन्यथाप्रतीतिनिरासायाह **पुरुष इति** ॥ ईश्वरस्य "पुरुषः सुखदुःखानां" इति पुरुषशब्देन प्रकृतत्वात् कथमत्र जीवे पुरुषशब्द इत्यत आह **उभयोरिति** ॥ यद्यप्यत्र पुरुषशब्देनेश्वरः प्रकृतस्तथाऽप्यत्र पुरुष-

शब्दस्य जीवविषयत्वग्रहणं युक्तम् । "प्रकृतिं पुरुषं चैव" इत्यत्र पुरुषशब्देनेश्वरवत् जीवस्यापि प्रकृतत्वात् । अन्यथा 'उभौ' इत्यस्य वैय्यर्थ्यादिति भावः । अस्तु जीवः प्रकृतस्तथापि समीपप्रकृतं परित्यज्य दूरप्रकृतग्रहणं नोपपन्नमित्यत आह **यथेति** ॥ समीपप्रकृतत्वेऽपीश्वरस्य तत्परित्यागेन दूरप्रकृतजीवग्रहणमुपपद्यते । अस्य पुरुषस्य प्रकृतिजगुणभोक्तृत्वप्रतीतेः । ईश्वरस्य तदयोगात्, जीवस्य तद्योग्यत्वात् । यथायोग्यमेवार्थश्रयणस्योपपन्नत्वादिति भावः । उभयोः प्रकृतत्वे जीवमात्रग्रहणं कथमित्यतो वाऽऽह **यथेति** ॥

***भा०दी०***— इत्यतो वाह **यथेतीति** । तदर्थं प्राग्वदेवेति भावः ।

**गीता**

## पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
## कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥

***वि०वि०***— यज्जीवानां कार्यकारणसम्बधे सुखदुःखादिभोगे च लक्ष्मीनारायणौ कारणमित्युक्तं तदसत् । देहादिसम्बन्धस्य सुखदुःखादिभोगस्य च मिथ्यात्वादित्यत आह **पुरुष इति** । पुरुषो जीवः । प्रकृतिकार्ये देहादौ स्थितः, प्रकृतिजान् गुणान् दुःखादीन् भुङ्क्ते हि इत्यनुभवसिद्धत्वाद्बाधकाभावाच्च असत्यत्वं न युज्यत इति भावः । पुरुषशब्देनोभयोः प्रकृतत्वेऽपि योग्यतया जीव एव परामृश्यते । उक्तं च— 'बहूनां सह निर्देश एकयाऽभिधयैव तु । तथैवाभिधया तेषां परामृश्यैकमुच्यते ॥' इति । ननु स्वतःशुद्धस्य जीवस्य प्रकृतिस्थत्त्वे किं कारणमित्यत आह **कारणमिति** । अस्य जीवस्य सदसद्योनिजन्मसु सत्वादिगुणसङ्गः कारणम् ॥ २२ ॥

***वा०ल०***— प्रकृतिस्थः प्राकृतदेहस्थः । 'कारणं गुणसङ्गः' इत्यत्र गुणसङ्गः सत्त्वादिगुणसङ्गः । अस्य जीवस्य ॥ २२ ॥

***सा०सं०***— ननु प्रकृतिकृतदेहेन्द्रियसम्बन्धेन सुखदुःखादिभोक्ता जीवः, तन्नियामिके देवदेव्याविति यत् तदयुक्तम् । देहादिसम्बन्धादेर्मिथ्यात्वादित्यत आह **पुरुष इति** । **पुरुषो** जीवः । **प्रकृतिस्थः** प्रकृतिकार्यदेहादौ स्थितः । **प्रकृतिजान् गुणान्** सुखादीन् । **भुङ्क्ते** । हीति निर्बाधानुभवसिद्धत्वं सूचयति । तेन तद्विरोधान्न मिथ्यात्वं सुखादेरित्युक्तं भवति । एतेन 'कार्यकारणकर्तृत्वे' इत्यत्र, जीवदेहस्थत्वस्य 'भोक्तृत्वे सुखदुःखानाम्' इत्यत्र सुखादिभोगस्योक्तेस्ताभ्यामस्य पौनरुक्त्यमिति निरस्तम् । मिथ्यात्वनिरासाय साक्ष्यनुभवविरोधं मिथ्यावादिनां दर्शयितुं प्रागुक्त-

स्यैवात्र पुनरभिधानात् । शुद्धस्य जीवस्य प्रकृतिस्थत्वे किं कारणमित्यत आह **कारणमिति** । **अस्य** जीवस्य ॥ २२ ॥

***अ०प्र०***— पुरुषः[१], प्रकृतिस्थः सन्[२], प्रकृतिजान्[३], गुणान्[४], हि यस्मात्[५], भुङ्क्ते[६], तस्मात् अस्य[७], सदसद्योनिजन्मसु[८], गुणसङ्गः[९], कारणम्[१०] ॥

पुरुषो = जीवः[१], प्रकृतिस्थः सन् = प्रकृतिकार्यदेहादौ स्थितः सन् यद्वा, प्रकृतिकार्ये देहे तादात्म्येन स्थितः सन्[२], प्रकृतिजान् = देहादि जन्यान्[३], गुणान् = सुखादीन्[४], हि = यस्मात्[५], भुङ्क्ते = अनुभवति[६], पुरुषशब्देन जीवेश्वरयोः प्रकृतत्वेऽपि योग्यतया जीव एवात्र परामृश्यते । उक्तं च— 'बहूनां सहनिर्देशे एकयाभिधयैव तु । तयैवाभिधया तेषां परमृश्यैकमुच्यते' इति ॥

गुणान् भुङ्क्ते इत्यनेन पूर्वश्लोकोक्तं भोक्तृत्वं विवृतं भवति । ननु स्वतःशुद्धस्य जीवस्य नृपश्वादिषु देहसम्बन्धे किं कारणमित्यत आह **कारणमिति** । तस्मात् अस्य = पुरुषस्य गुण-भोक्तृत्वेन प्रकृतस्य जीवस्य[७], सदसद्योनिजन्मसु सतीषु = देवादियोनिषु असतीषु च तिर्यगादि योनिषु च यानि जन्मानि तेषु यद्वा, पुण्यपापकारकनृपश्वादिनानायोनिगतेषु जन्मसु तत्प्राप्ता-वित्यर्थः[८], गुणसङ्गः = शुभाशुभकर्मकारिभिरिन्द्रियैः सत्त्वादिगुणसम्बन्धः[९], कारणं = अत्र सर्व-पापवादस्य सदसद्योनिजन्मसु कारणं गुणसङ्ग इत्यर्थः[१०] एतदुत्तरार्धमालोच्यैव पूर्वार्धेन शुभगुण-भोक्तृविष्णुविषयत्वेन व्याख्यातः सर्वज्ञचूडामणिभिः आचार्यैरिति बोद्धव्यम् ॥ २२ ॥

भाष्यम्

**कार्यं शरीरम् । 'शरीरं कार्यमुच्यते' इत्यभिधानात् । कारणानि इन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात् परिणामिनी । ''कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्'' इति भागवते ॥ २१-२२ ॥**

***प०टी०***— 'कार्यकारणकर्तृत्वे' इति श्लोकं सप्रमाणकं व्याचष्टे **कार्यमिति** ॥ २१-२२ ॥

***प्र०दी०***— कारणानामपि कार्यत्वात् पृथगुक्तिः व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति **कार्यमिति** । 'भोक्तृत्वे' इत्यत्र प्रकृत्यर्थो भोगः अभ्यवहारादिः सुखादिविषयो न सम्भ-वति । अत आह **भोग इति** । स्वीयतया साक्षात्कार इत्यर्थः ।

**शब्दस्य जीवविषयत्वग्रहणं युक्तम् । "प्रकृतिं पुरुषं चैव" इत्यत्र पुरुषशब्देनेश्वरवत् जीवस्यापि प्रकृतत्वात् । अन्यथा 'उभौ' इत्यस्य वैय्यर्थ्यादिति भावः । अस्तु जीवः प्रकृतस्तथापि समीपप्रकृतं परित्यज्य दूरप्रकृतग्रहणं नोपपन्नमित्यत आह यथेति ॥ समीपप्रकृतत्वेऽपीश्वरस्य तत्परित्यागेन दूरप्रकृतजीवग्रहणमुपपद्यते । अस्य पुरुषस्य प्रकृतिजगुणभोक्तृत्वप्रतीतेः । ईश्वरस्य तदयोगात्, जीवस्य तद्योग्यत्वात् । यथायोग्यमेवार्थश्रयणस्योपपन्नत्वादिति भावः । उभयोः प्रकृतत्वे जीवमात्रग्रहणं कथमित्यतो वाऽऽह यथेति ॥**

***भा०दी०*— इत्यतो वाह **यथेतीति** । तदर्थं प्राग्वदेवेति भावः ।

**गीता**

## पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
## कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥

***वि०वि०*— यज्जीवानां कार्यकारणसम्बधे सुखदुःखादिभोगे च लक्ष्मीनारायणौ कारणमित्युक्तं तदसत् । देहादिसम्बन्धस्य सुखदुःखादिभोगस्य च मिथ्यात्वादित्यत आह **पुरुष इति** । पुरुषो जीवः । प्रकृतिकार्ये देहादौ स्थितः, प्रकृतिजान् गुणान् दुःखादीन् भुङ्क्ते हि इत्यनुभवसिद्धत्वाद्बाधकाभावाच्च असत्यत्वं न युज्यत इति भावः । पुरुषशब्देनोभयोः प्रकृतत्वेऽपि योग्यतया जीव एव परामृश्यते । उक्तं च— 'बहूनां सह निर्देश एकयाऽभिधयैव तु । तथैवाभिधया तेषां परामृश्यैकमुच्यते ॥' इति । ननु स्वतःशुद्धस्य जीवस्य प्रकृतिस्थत्त्वे किं कारणमित्यत आह **कारणमिति** । अस्य जीवस्य सदसद्योनिजन्मसु सत्वादिगुणसङ्गः कारणम् ॥ २२ ॥

***वा०ल०*— प्रकृतिस्थः प्राकृतदेहस्थः । 'कारणं गुणसङ्गः' इत्यत्र गुणसङ्गः सत्त्वादिगुणसङ्गः । अस्य जीवस्य ॥ २२ ॥

***सा०सं०*— ननु प्रकृतिकृतदेहेन्द्रियसम्बन्धेन सुखदुःखादिभोक्ता जीवः, तन्नियामिके देवदेव्याविति यत् तदयुक्तम् । देहादिसम्बन्धादेर्मिथ्यात्वादित्यत आह **पुरुष इति** । **पुरुषो** जीवः । **प्रकृतिस्थः** प्रकृतिकार्यदेहादौ स्थितः । **प्रकृतिजान् गुणान्** सुखादीन् । **भुङ्क्ते** । हीति निर्बाधानुभवसिद्धत्वं सूचयति । तेन तद्विरोधान्न मिथ्यात्वं सुखादेरित्युक्तं भवति । एतेन 'कार्यकारणकर्तृत्वे' इत्यत्र, जीवदेहस्थत्वस्य 'भोक्तृत्वे सुखदुःखानाम्' इत्यत्र सुखादिभोगस्योक्तेस्ताभ्यामस्य पौनरुक्त्यमिति निरस्तम् । मिथ्यात्वनिरासाय साक्ष्यनुभवविरोधं मिथ्यावादिनां दर्शयितुं प्रागुक्त-

स्यैवात्र पुनरभिधानात् । शुद्धस्य जीवस्य प्रकृतिस्थत्वे किं कारणमित्यत आह **कारणमिति** । **अस्य** जीवस्य ॥ २२ ॥

***अ०प्र०***— पुरुषः[१], प्रकृतिस्थः सन्[२], प्रकृतिजान्[३], गुणान्[४], हि यस्मात्[५], भुङ्क्ते[६], तस्मात् अस्य[७], सदसद्योनिजन्मसु[८], गुणसङ्गः[९], कारणम्[१०] ॥

पुरुषो = जीवः[१], प्रकृतिस्थः सन् = प्रकृतिकार्यदेहादौ स्थितः सन् यद्वा, प्रकृतिकार्ये देहे तादात्म्येन स्थितः सन्[२], प्रकृतिजान् = देहादि जन्यान्[३], गुणान् = सुखादीन्[४], हि = यस्मात्[५], भुङ्क्ते = अनुभवति[६], पुरुषशब्देन जीवेश्वरयोः प्रकृतत्वेऽपि योग्यतया जीव एवात्र परामृश्यते । उक्तं च— 'बहूनां सहनिर्देशे एकयाभिधयैव तु । तयैवाभिधया तेषां परमृश्यैकमुच्यते' इति ॥

गुणान् भुङ्क्ते इत्यनेन पूर्वश्लोकोक्तं भोक्तृत्वं विवृतं भवति । ननु स्वतःशुद्धस्य जीवस्य नृपश्वादिषु देहसम्बन्धे किं कारणमित्यत आह **कारणमिति** । तस्मात् अस्य = पुरुषस्य गुण-भोक्तृत्वेन प्रकृतस्य जीवस्य[७], सदसद्योनिजन्मसु सतीषु = देवादियोनिषु असतीषु च तिर्यगादि योनिषु च यानि जन्मानि तेषु यद्वा, पुण्यपापकारकनृपश्वादिनानायोनिगतेषु जन्मसु तत्प्राप्ता-वित्यर्थः[८], गुणसङ्गः = शुभाशुभकर्मकारिभिरिन्द्रियैः सत्त्वादिगुणसम्बन्धः[९], कारणं = अत्र सर्व-पापवादस्य सदसद्योनिजन्मसु कारणं गुणसङ्ग इत्यर्थः[१०] एतदुत्तरार्धमालोच्यैव पूर्वार्धेन शुभगुण-भोक्तृविष्णुविषयत्वेन व्याख्यातः सर्वज्ञचूडामणिभिः आचार्यैरिति बोद्धव्यम् ॥ २२ ॥

भाष्यम्

**कार्यं शरीरम् । 'शरीरं कार्यमुच्यते' इत्यभिधानात् । कारणानि इन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात् परिणामिनी । "कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्" इति भागवते ॥ २१-२२ ॥**

***प०टी०***— 'कार्यकारणकर्तृत्वे' इति श्लोकं सप्रमाणकं व्याचष्टे **कार्यमिति** ॥ २१-२२ ॥

***प्र०दी०***— कारणानामपि कार्यत्वात् पृथगुक्तिः व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति **कार्यमिति** । 'भोक्तृत्वे' इत्यत्र प्रकृत्यर्थो भोगः अभ्यवहारादिः सुखादिविषयो न सम्भ-वति । अत आह **भोग इति** । स्वीयतया साक्षात्कार इत्यर्थः ।

भोगः प्रकृतेरेव । न पुरुषस्य । अतः 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः' इति कथमुक्तम् ? इति साङ्ख्याः । तत्राह **स हीति** । 'न तु प्रकृतिः । अचैतन्यात्' इति शेषः । ननु 'कार्यकारण-कर्तृत्वे हेतुः प्रकृतिः' इत्युक्तम् । कर्तृत्वं च ज्ञानेच्छाप्रयत्नयोगः । तत्कथं प्रकृतेर्भोगासम्भव इत्यत आह **प्रकृतिश्चेति** । चस्त्वर्थः । परिणामिकारणत्वात् कर्तृत्वमित्युपचर्यत इति भावः । श्लोकार्धे पुराणसम्मतिमाह **कार्येति** । 'कारणं विदुः' इत्युत्तरार्धेऽनुवर्तते ॥ २१-२२ ॥

*भा०दी०*— अनुभवशब्दार्थमाह **स्वीयतयेति** । स्वस्योच्चत्वनीचत्वापादकसुखदुःख-साक्षात्कार इत्यर्थः ॥ २१-२२ ॥

*भा०र०*— **कारणानाम्** इन्द्रियाणामपि **कार्यत्वात्** तैजसाहङ्कारकार्यत्वात् । 'अभ्यव-हारादिः' इत्यत्र अभ्यवहारः = अशनम्, आदिशब्देन पालनम्, 'भुज = परिपालनाभ्यवहारयोः' इति धातोः । तदुभयमपि सुखादिविषयकं न सम्भवति । न हि पुरुषः सुखादिकम् अश्नाति अबाह्यपदार्थत्वात् । नापि पालयति, तथात्वे सुखनाशाभावप्रसङ्गात् । दुःखस्यानिष्टत्वेन तत्पालन-स्यानिष्यमाणत्वादिति भावः । यज्ञदत्तस्य देवदत्तीयमुखप्रसादादिहेतुकसुखाद्यनुमितिरूपानुभवे सत्यपि 'यज्ञदत्तो देवदत्तसुखं भुङ्क्ते' इत्यव्यवहारादुक्तम् **साक्षात्कार इति** । एवमपीश्वरस्य देवदत्त-मुखादिसाक्षात्कारसत्त्वात् 'ईश्वरो देवदत्तसुखाद्यनुभवति' इति व्यवहारः स्यात् ? इत्यत उक्तम् **स्वीयतयेति** । स्वसम्बन्धितया = स्वोच्चनीचतापादकतयेत्यर्थः । तादृशश्च साक्षात्कारो नेश्वरस्येति न तद्व्यवहारापादनम् उचितमिति भाव इति स्वामिनः । 'स्वीयतया' इत्यस्य स्वाभिमन्यमान-तयेत्यर्थः । ईश्वरस्य च देवदत्तस्येव अभिमानाभावान्नोक्तदोष इत्यपि आहुः । 'स हि' इति भाष्ये सः = पुरुषः इत्यर्थः । **इति शेष इति** । यद्यपि 'प्रकृतिश्च जडत्वात्' इति भाष्ये नञोऽध्याहारे, 'अनुभवति' पदानुवृत्तौ च, 'प्रकृतिस्तु नानुभवति जडत्वात्' इति प्रकृतार्थः सिद्ध्यति । तथापि 'परिणामिनी' इत्यनेनान्वयस्य सुप्रतिभासत्वात्, नञध्याहारस्य प्रायेणादर्शनाद् एवमध्याहृतम् । **श्लोकेति** । 'कार्यकारणकर्तृत्वे' इति श्लोकार्धे 'चिद्रूपत्वाद्', 'अचैतन्याद्' इति युक्त्या सिद्धे । **पुराणसम्मतिं चेति** । न केवलं युक्त्या सिद्धमिति चशब्दः । 'कार्यकारणकर्तृत्वे' इत्यस्य 'शरीरे-न्द्रियपरिणामे' इति निर्गलितोऽर्थः । **उत्तरार्धे** 'सुखदुःखानां भोक्तृत्वे = भोगे स्वीयतया साक्षा-त्कारे, प्रकृतेः परं पुरुषं कारणं विदुः' इत्यनुवर्त्य योजना कार्येत्यर्थः ॥ २१-२२ ॥

***गीताक्षरार्थस्तु*—**

'यतश्च यत्', 'स च यः' इति प्रतिज्ञातं प्रेरकस्य स्वरूपं वक्तुं तत्प्रेरणीयप्रकृत्यादिशब्दित-क्षेत्रस्वरूपं सप्रकारं सङ्क्षिप्योच्यते **प्रकृतिं पुरुषं चेति** । ईश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः

क्षेत्रमुच्यते । तत्र प्रकृतिशब्देन 'महाभूतानि' इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते । विकारशब्देनेच्छादिपदोपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयाद्याः सर्वेऽपि विकाराः विवक्षाविशेषवशेन पृथगुपात्ताः । पुरुषशब्देन जीवोऽपि गृह्यते । एवं च 'प्रकृतिं पुरुषं चैव इत्यादिकम् अप्रतिज्ञातं किमित्युच्यते ?' इति शङ्का परास्ता । 'यादृक्च' इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्यैव इह प्रकृत्यादिशब्दैः कथनम् ।

**प्रकृतिं** महाभूतादिचतुर्विंशतितत्त्वात्मिकां **पुरुषं** जीवमीश्वरं **चोभावप्यनादी विद्धि** जानीहि । पुरुषशब्देनात्र जीवेश्वरयोस्तन्त्रेण ग्रहणात् द्विवचनोपपत्तिः । तथा **विकारान्** 'इच्छा द्वेषः सुखम्' इत्यादिनोक्तान् प्रकृतिसम्भवान् प्रकृत्युपादानकान् सत्त्वरजस्तमोलक्षणान् **गुणांश्च** तथा **विद्धि** । सत्त्वादिगुणानां प्रकृतिविकारत्वेऽपि 'विकारांश्च गुणांश्च' इति पृथक् पृथग् उक्तिः गुणानामत्यल्पो विशेषो लयात् सर्गकाले इच्छादिविकारापेक्षयेति ज्ञापयितुम् ॥ २० ॥

उक्तविकाराणां प्रकृतिसम्भूतत्वं व्यक्तीक्रियते **कार्यकारणेति** । **कार्यं** शरीरम्, **कारणानि** इन्द्रियाणि, तेषां **कर्तृत्वे** परिणामित्वे **प्रकृतिः हेतुः** कारणम् उच्यते । **पुरुषो** जीवः **सुखदुःखानां भोक्तृत्वे**, प्रकृत्यर्थो भोगः = स्वीयतया साक्षात्कार इत्येवं विवक्षितोऽनुभवः, तृट्प्रत्ययार्थश्च कर्तृत्वं तस्मिन् अनुभवितत्वे **हेतुः** कर्ता **उच्यते** । भोक्तृत्वे = भोगप्रदाने **पुरुषो** भगवान् **हेतुरुच्यते** इत्यपि व्याख्यानम् । अत्र विशेषश्चोत्तरप्रस्थानादवसेयः ॥ २१ ॥

'कार्यकारणशब्दितदेहेन्द्रियादिसम्बन्धनिष्पादने भोगे च प्रकृतिपुरुषौ कर्तारौ' इत्युक्तं असत् । कार्यकारणसम्बन्धस्य तन्निमित्तभोगस्य च मिथ्यात्वाद्, इत्यत उच्यते **पुरुषः प्रकृतिस्थो हीति**। **पुरुषः** जीवः **प्रकृतिस्थः** प्रकृतिपरिणतदेहादिसम्बन्धेन स्थितः सन् **प्रकृतिजान् गुणान्** सुखदुःखादीन् **भुङ्क्ते** । 'हि' इत्यनुभवसिद्धत्वं प्रदर्शयता मिथ्यावादस्यानुभवविरोधोऽभिप्रेयते । एतेन ''यद्यत्र पुरुषपदं जीवपरं तर्हि पुनरुक्तिः स्यात् । जीवस्य 'कार्यकारणकर्तृत्वे' इत्यनेनोक्तकार्यकारणसम्बन्धस्यैव प्रकृतिस्थपदेनोक्तेः । 'सखदुःखानां भोक्तृत्वे' इत्यनेनोक्तसुखदुःखादिभोगस्यैव 'भुङ्क्ते प्रकृतिजान् गुणान्' इत्युक्तत्वात्'' इति चोद्यं निरस्तम् । कार्यकारणसम्बन्धस्य सुखादिभोगस्य च प्रागुक्तत्वेऽपि तन्मिथ्यात्ववादिनां निरासाय 'पुरुषः प्रकृतिस्थो हि' इत्युक्तत्वादिति । ननु स्वतः शुद्धस्य जीवस्य प्राकृतदेहेन्द्रियसम्बन्धः किंकारणः ? येन प्रकृतिजन्यगुणभोगः, इत्यत उक्तम् **कारणमिति** । **अस्य** जीवस्य **सदसद्योनिजन्मसु** नरतिर्यगादियोनिषु यानि जन्मानि = उत्पत्तयः, तेषु, **गुणसङ्गः** सत्त्वादिगुणसम्बन्धः **कारणम्** । गुणसम्बन्धश्च अनादिः भगवज्ज्ञानापराधनिबन्धन इति हृदयम् ॥ २२ ॥

**गीतातात्पर्यनिर्णयः**

कार्यकरणसम्बन्धं भोगं च मिथ्येति वदतां निवारणायाह **पुरुषः प्रकृतिस्थो हि** इति । हीत्यनुभवविरोधं दर्शयति तेषाम् ।

***न्या०दी०—*** यद्यत्र पुरुषपदं जीवपरं तर्हि पुनरुक्तिः स्यात् । जीवस्य "कार्यकारण-कर्तृत्वे" इत्यनेनोक्तकार्यकारणसम्बन्धस्यैव प्रकृतिस्थपदेनोक्तेः । सुखदुःखानां भोक्तृत्वे इत्यनेनोक्तसुखदुःखादिभोगस्यैव "भुङ्क्ते प्रकृतिजान् गुणान्" इत्युक्तत्वादित्यत आह **कार्येति** ॥ कार्यकारणसम्बन्धस्य सुखादिभोगस्य च प्रागुक्तत्वेऽपि तन्मिथ्यात्ववादिनां निरासाय "पुरुषः प्रकृतिस्थो हि" इत्युक्तत्वान्न पुनरुक्तिदोष इति भावः । निराकरणस्य प्रमाणसापेक्षत्वात् तदनुक्तोक्ताभिधानमात्रेण कथं निराकरणमित्यत आह **हीति** ॥ अत्र कार्यकारणसम्बन्धस्य सुखादिभोगस्य च हिशब्देनानुभवप्रसिद्धिकथनेन तन्मिथ्यात्व-वादिनामनुभवविरोधस्य दर्शितत्वात् नैतदुक्ताभिधानमात्रमिति भावः ।

***भा०दी०—*** शङ्कते **यद्यत्र पुरुषपदमित्यादिना** ॥ **उक्ताभिधानमात्रेणेति** । प्रागुक्तस्य पुनः कथनमात्रेणेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

न हि ज्ञानाज्ञानसुखदुःखादिविषयस्यान्तरानुभवस्य भ्रान्तित्वं क्वचिद् दृष्टम् । न चास्य मिथ्यात्वे किञ्चिन्मानम् । शरीरमारभ्यैव ह्यपरोक्षभ्रमो दृष्टः । तत्रापि बलवत्प्रमाणविरोधादेव भ्रान्तित्वं कल्प्यम् ।

***न्या०दी०—*** अहं सुखी दुःखीत्याद्यनुभवस्य भ्रान्तित्वसम्भवात् सुखादिभोगस्य मिथ्यात्वाङ्गीकारे कथं तद्विरोध इत्यत आह **न हीति** ॥ सुखादिविषयानुभवो न भ्रमः, आन्तरार्थानुभवस्य भ्रमत्वादर्शनादिति भावः । बाधकाभावाच्च नायमनुभवो भ्रम इत्याह **न चेति** ॥ नन्वात्मादौ जैनादीनां मध्यमपरिमाणत्वादिज्ञानस्य भ्रमत्वदर्शनात् कथमान्त-रार्थानुभवत्वादभ्रमत्वमुच्यत इत्याशङ्कां परिहरन् व्याप्तिमाह **शरीरमिति** ॥ नात्राऽन्तरा-नुभवत्वमेव हेतुः । येन व्यभिचारः स्यात् । अपि त्वपरोक्षत्वविशिष्टम् । अपरोक्षानुभवस्य च बहिरेव भ्रमत्वदर्शनादान्तरानुभवस्य तदभावः सिद्ध्यति ॥ जैनादीनां चानुमानादिनैव मध्यमपरिमाणत्वादिभ्रम इति भावः । बाधकाभावेऽपि सुखाद्यनुभवस्य भ्रमत्वं किं न

स्यादित्यत आह **तत्रापीति** ॥ यत्र बहिरर्थानुभवस्य भ्रमत्वं तत्रापि बलवत्प्रमाणविरोधादेव तत् कल्प्यते । अतः सुखादिविषयानुभवस्य बाधकाभावेनाभ्रमत्वं युक्तमिति भावः ।

*भा०दी०*— अनुकूलतर्कमाह **आन्तरार्थानुभवस्येति** । **बहिरेवेति** । शुक्तिरूप्यादिस्थल एवेत्यर्थः ॥ **तत्रेति** । व्यवहारतो व्यवस्थाऽस्तीत्यत्र प्रमाणाभावादित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**साक्षिसिद्धस्यापि भ्रान्तित्वाङ्गीकारे येन सर्वस्य भ्रान्तित्वमभ्रान्तित्वं च आत्मनोऽवगतं तदपि प्रमाणमात्मैव । व्यवहारतोऽप्यस्तीत्यत्र प्रमाणाभावाद् भ्रान्तिरभ्रान्तिर्वा न किञ्चित् सिद्ध्यति ।**

*न्या०दी०*— इतश्च न सुखादिविषयानुभवस्य भ्रमत्वेन सुखादेर्मिथ्यात्वं वाच्यमित्याह **साक्षीति** ॥ साक्ष्यनुभवसिद्धस्यापि सुखादेर्भ्रान्तिकल्पितत्वे सर्वं मिथ्या, आत्मा सत्य इति व्यवस्थाऽपि न सिद्ध्यति । एतद्व्यवस्थाया अपि साक्ष्यनुभवसिद्धत्वेन मिथ्यात्वापातादिति भावः ॥ **भ्रान्तित्वमभ्रान्तित्वमिति** ॥ भ्रान्तिकल्पितत्वमभ्रान्तिकल्पितत्वमित्यर्थः । सर्वं मिथ्या आत्मा सत्य इति व्यवहारत एवास्ति, न तु परमार्थतः । अतस्तदसिद्धिर्नानिष्टेत्यत आह **व्यवहारत इति** ॥ व्यवहारत एवेयं व्यवस्थाऽस्तीत्यपि न सिद्ध्यति । साक्षिणोऽप्रामाण्ये तत्र प्रमाणाभावादिति भावः । किञ्च साक्ष्यनुभवस्याप्रामाण्ये स्तम्भादौ स्थाण्वादिमनोवृत्तिर्भ्रान्तिः । स्तम्भादिमनोवृत्तिरभ्रान्तिरित्यपि न सिद्ध्यति । साक्षिण एव ज्ञानस्य भ्रान्तित्वाभ्रान्तित्वग्राहकत्वात् । तदसिद्धौ च व्यवहारमात्रं च न सिद्ध्यतीति भावेनाह **भ्रान्तिरिति** ॥ एतेन सर्वं मिथ्या आत्मा सत्य इति व्यवस्था व्यवहारतोऽस्तीत्येतदागमादिना सिद्ध्यतीत्येतदपि निरस्तम् । आगमादिप्रामाण्यस्यापि साक्षिग्राह्यत्वात् । 'साक्षिसिद्धस्य' इत्यादेरेकग्रन्थत्वे भ्रान्तिरित्यस्य साध्याभिधानपरतया तच्छेषत्वं ज्ञातव्यम् ।

*भा०दी०*— **तदसिद्धाविति** । भ्रान्त्यभ्रान्तिव्यवस्थासिद्धावित्यर्थः ॥ **आगमादिप्रामाण्यस्यापीति** । तज्जन्यज्ञानप्रामाण्यस्यापीत्यर्थः ॥ **इत्यादेरिति** । न किञ्चित्सिद्ध्यतीत्यन्तस्येत्यर्थः ॥ **साध्येति** । आपाद्याभिधानपरतयेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**अनुभवो भ्रान्त इत्युक्ते भ्रान्तत्वे प्रमाणं तत्प्रामाण्यं च कुतः सिद्ध्येत् ? व्यवहारतः सर्वमङ्गीकुर्म इत्युक्ते व्यवहारो व्यवहर्ता च कुतः सिद्धः ? प्रतीतित इत्युक्ते सैव कुतः ? स्वत इत्युक्ते स्वस्य भ्रान्तित्वे प्रतीतिं विनैव प्रतीतिरस्तीति भ्रान्तिः स्यात् ।**

*प्रका०*— इतोऽपि दुःखाद्यनुभवस्य भ्रान्तत्वं न युज्यते इत्याह **अनुभव** इत्यादिना । अनुभवस्य भ्रान्तत्वे न अनुभवः प्रमाणम् । तस्य भ्रान्तित्वात् । न चानुमानादिकं तत्र प्रमाणम् । तत्साधकाभावात् । न च व्यवहारस्तत्साधक इति वाच्यम् । व्यवहारसाधकाभावात् । न च प्रतीतिस्तत्साधिकेति वाच्यम् । प्रतीतिसाधकाभावात् । न च स्वानुभवः तत्साधक इति वाच्यम् । स्वानुभवस्य भ्रान्तत्वे प्रीत्यभावेऽपि प्रतीतिभ्रमसम्भवात् । स्वानुभवस्याभ्रान्तत्वे स्वात्मनोऽनुभवस्यापि भ्रमत्वोपपत्तेः । दुःखित्वादिभ्रमः अन्यथानुपपत्त्या तदधिष्ठानभूतात्माऽस्तीत्येतत्तर्कानुभवस्यापि भ्रमत्वोपपत्तेः ।

*न्या०दी०*— यदुक्तं सुखादिविषयसाक्ष्यनुभवस्य न भ्रान्तित्वं, बाधकाभावादिति तदयुक्तम् । "विमुक्तश्च विमुच्यते" इत्यादिप्रमाणसद्भावादित्यत आह **अनुभव इति** ॥ नानेन सुखादिविषयस्यानुभवस्य भ्रान्तित्वं सिद्ध्यति । तत्स्वरूपप्रामाण्ययोः सिद्ध्यभावात् । साक्ष्यनुभवस्यैव तत्साधकत्वात् । तस्य च भ्रान्तित्वाभिधानादिति भावः । न च सुखादिविषय एव साक्ष्यनुभवस्य भ्रमत्वं, प्रमाणस्वरूपादावभ्रमत्वमिति युक्तम् । विशेषप्रमाणाभावेनानाश्वासात् । साक्ष्यनुभवस्य भ्रमत्वेऽपि प्रमाणस्वरूपप्रामाण्ये लोकव्यवहारादेव सेत्स्यत इत्याशङ्क्याह **व्यवहारत इति** ॥ न लोकव्यवहारतः प्रमाणस्वरूपादिसिद्धिः । लोकस्य च तद्व्यवहारस्य चासिद्धेः । साक्षिण एव तद्ग्राहकत्वात् । तस्य च भ्रान्तित्वाङ्गीकारादिति भावः । साक्षिणो भ्रान्तित्वेऽपि व्यवहारव्यवहर्तृसिद्धिः प्रतीतित एव भविष्यतीत्याशङ्क्य परिहरति **प्रतीतित इति** ॥ भवेत् प्रतीत्यैव व्यवहारादिसिद्धिः यदि सैव सिद्ध्येत् । न च तत्साधकं वक्तुं शक्यत इति भावः । साक्षिण एव प्रतीतिसिद्धेः कथं तत्साधकाभाव इत्याशङ्क्य परिहरति **स्वत इति** ॥ न साक्षिणा प्रतीतिसिद्धिः । तस्य सुखादौ भ्रान्तित्वाङ्गीकारेण प्रतीत्यभावेऽपि प्रतीतिरस्तीति भ्रमोऽयमिति शङ्काकुण्ठितशक्तित्वादिति भावः ।

*भा०दी०*— **तत्स्वरूपप्रामाण्ययोरिति** । विमुक्तश्चेति श्रुतिजन्यज्ञानस्वरूपतत्प्रामाण्ययोः इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**स्वभावोऽपि स्यात् । स्वयमस्तीति च भ्रमः स्यात् । निरालम्बनो भ्रमो नोपपद्यत इत्यस्यापि भ्रमत्वोपपत्तेः । तत्प्रमाणमप्यप्रमाणमेव । प्रमाणत्वभ्रम इति न किञ्चित् सिद्ध्यति ।**

*प्रका०*— भ्रमविषयत्वेन आत्मप्रमाणमात्रस्याप्यप्रमाणत्वमेवेति न किञ्चित् सिद्ध्यतीत्याह स्वभाव इत्यादिना ।

*न्या०दी०*— इतश्च न सुखादिविषयानुभवस्य भ्रमत्वमित्याह **स्वेति** ॥ सुखादिविषयानुभवस्य भ्रमत्वाङ्गीकृतावात्माभावोऽपि स्यात् । आत्मसाधकाभावादिति भावः । नन्वहमिति प्रत्यक्षत एवात्मोपलभ्यते । अतः कथं तत्साधकाभाव इत्यत आह **स्वयमिति** ॥ नाहमित्यनुभवेनात्मसिद्धिः, अनुभवस्य सुखादौ भ्रान्तित्वाभ्युपगमेनात्मन्यपि भ्रमत्वशङ्कावारकाभावादिति भावः । निरधिष्ठानभ्रमासम्भवात् सुखादिभ्रमान्यथानुपपत्त्याऽधिष्ठानभूतात्मसिद्धिरित्यत आह **निरालम्बन इति** ॥ नानेन तर्केणात्मसिद्धिः । एतत्तर्कानुभवस्यापि सुखानुभववत् भ्रमत्वशङ्कायाः प्रसङ्गादिति भावः । श्रुतिरात्मनि प्रमाणमित्यत आह **तदिति** ॥ यच्छ्रुतिः प्रमाणमात्मन्युच्यते तच्छ्रुतिप्रामाण्यसाधकाभावेनाप्रामाण्यस्यापि वक्तुं शक्यत्वात् न तेनात्मसिद्धिरिति भावः । श्रुतेः प्रामाण्यानुभवात् कथमप्रामाण्यमित्यत आह **प्रमाणत्वेति** ॥ नानुभवेन श्रुतेः प्रामाण्यसिद्धिः । सुखानुभववदस्याप्यप्रामाण्ये प्रमाणत्वभ्रमत्वसम्भवादिति भावः । साक्षिसिद्धस्येत्याद्युक्तमुपसंहरति **इतीति** ॥ एवमुक्तप्रकारेण साक्ष्यनुभवस्य भ्रमत्वे सर्वं मिथ्या आत्मा सत्य इति व्यवस्थादि किञ्चिदपि न सिद्ध्यतीत्यर्थः ।

*भा०दी०*— इतिशब्दस्यार्थोक्तिः एवमुक्तप्रकारेणेति ॥

**गीतातात्पर्यनिर्णयः**

**भ्रम इत्यस्यैव भ्रमत्वेऽन्यस्याभ्रमत्वमेव भवति । सुखदुःखादिविषयं ज्ञानमात्मस्वरूपमेवेति तस्य भ्रमत्वे छद्मना विनैव शून्यवादो भवति । न हि वृत्ति-**

**ज्ञानविषयमज्ञानादिकं तेषामपि । भ्रमस्य च अविद्याकार्यत्वाङ्गीकारात् । आत्मस्वरूपस्याप्यविद्याकार्यत्वं स्यात् ।**

*प्रका०*— इतोऽपि मायावादेन आत्मास्तित्वं सिद्ध्यतीत्याह **सुखदुःखेत्यादिना** । यथा बाह्यार्थेषु शत्त्यादिषु रजतादिभ्रमस्य मनोवृत्तिरूपस्याविद्याकार्यत्वम्, अत एव मिथ्यात्वं चाङ्गीकृतं मायावादिना, एवं सुखादिविषयस्यात्मरूपस्यानुभवस्य भ्रमत्वेऽविद्याकार्यत्वेन मिथ्यात्वमभ्युपगम्यते । ततः प्रकटशून्यवादित्वं मायावादिनः, स्यादित्यर्थः ।

*न्या०दी०*— सुखाद्यनुभवो भ्रम इत्यर्थसाधकश्रुतेः प्रामाण्यासिद्धेर्न तया सुखाद्यनुभवस्य भ्रमत्वसिद्धिरित्युक्तम् । अथ तस्य श्रौतानुभवस्यापि भ्रमत्वोपपत्त्या सुखाद्यनुभवस्याभ्रमत्वमेव भवति । न तु तेन तस्य भ्रमत्वसिद्धिः । परस्परविरुद्धयोरन्यतरनिषेधस्येतरविधिनान्तरीयकत्वादिति भावेनाह **भ्रम इति** ॥ इतोऽपि न सुखाद्यनुभवस्य भ्रमत्वमित्याह **सुखेति** ॥ यदि सुखाद्यनुभवो भ्रमस्तर्हि यत् प्रच्छन्नं नैरात्म्यमतमङ्गीकृतं तत्प्रकटितं स्यात् । सुखादिविषयानुभवस्य आत्मस्वरूपत्वादित्यर्थः । सुखादिविषयानुभवस्यात्मरूपत्वं भवन्मत एव नास्मन्मते । किन्तु मनोवृत्तिरूपत्वमेवेत्यतोऽपसिद्धान्त इत्याह **न हीति** ॥ नन्वस्तु सुखाद्यनुभवस्य भ्रमत्वमात्मस्वरूपत्वं च । तथापि कथमात्माभावप्रसङ्ग इत्यत आह **भ्रमस्येति** ॥ सुखादिविषयानुभवस्य भ्रमत्वेऽविद्याकार्यत्वं स्यात् । भ्रमस्याविद्याकार्यत्वाङ्गीकारात् । तथा च आत्मनोऽप्यविद्याकार्यत्वं स्यात् । सुखादिविषयानुभवस्यात्मस्वरूपत्वात् । अविद्याकार्यत्वे चात्मनो मिथ्यात्वं दुर्निवारमिति भावः ।

*भा०दी०*— **इत्यर्थसाधकश्रुतेरिति** । विमुक्तिश्चेत्यादिश्रुतेरित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**दुर्घटत्वं भूषणमित्युक्ते दुर्घटत्वं सुघटत्वं चोभयं भूषणमस्माकमित्युत्तरम् । न हि प्रमाणसिद्धस्य दुर्घटत्वे सुघटत्वे वाऽपवादो दृष्टः । दुर्घटत्वं भूषणमिति वदद्भिरात्मनोऽप्यविद्यात्वमङ्गीकृत्य तदयुक्तमित्युक्ते तत्रापि भूषणत्वं किमिति नाङ्गीक्रियते ? अतिसुकरत्वात् ।**

*प्रका०*— अविद्यातत्कार्यविलक्षणतया घटयितुमशक्यत्वेन दुर्घटाऽपि आत्मनोऽस्तिता वक्तुं शक्या । श्रुतिसिद्धत्वादिति यद्युच्यते तर्हि दुःखादिप्रपञ्चः सुघटो वाऽस्तु न मिथ्येत्युच्यताम् । प्रमाणसिद्धत्वात् । स्वमतसमर्थनाशक्ततया दुर्घटत्वं भूषणमङ्गीकुर्वतोऽविद्यया आत्मत्वं दुर्घटं भूषणतया स्वीकर्तव्यं स्यात् । न तु परित्याज्यम् । तदाह **दुर्घटत्वमित्यादिना** ।

***न्या०दी०*— अस्त्वेवमात्मनो युक्त्या दुर्घटत्वम् । तथापि न तद्बाधकम् । आत्मनः प्रमाणसिद्धत्वात् । न हि प्रमाणसिद्धस्य युक्त्या दुर्घटत्वमात्रेण बाधोऽस्तीत्याशङ्क्य परिहरति दुर्घटत्वमिति ॥ यद्यात्मनः प्रामाणिकत्वाद्युक्त्या दुर्घटत्वमपि न बाधकमित्युच्यते तर्हि सुखादीनामपि दुर्घटत्वं सुघटत्वं वाऽस्तु । न तद्बाधकं, प्रमाणसिद्धत्वादिति वक्तव्यमित्यर्थः । युक्त्या दुर्घटत्वमस्तु । न तद्बाधकमिति कथमित्यत आह न हीति ॥ अङ्गीकृत्य चेदमुक्तम् । युक्त्या दुर्घटत्वमपरिहृत्य तस्याबाधकत्वाभ्युपगमेऽतिप्रसङ्गः स्यादित्याह दुर्घटत्वमिति ॥ यदि युक्त्या दुर्घटत्वं न बाधकमित्यात्मास्तित्वं दुर्घटतयाऽङ्गीक्रियते तर्ह्यात्मनोऽविद्यात्वं दुर्घटमप्यङ्गीक्रियतामविशेषादित्यर्थः । प्रामाणिकस्यैव युक्त्या दुर्घटत्वं न बाधकमित्युच्यते । न चात्मनोऽविद्यात्वं प्रामाणिकं, येन युक्त्या दुर्घटत्वमबाधकं स्यादित्यत आह अतीति ॥ नात्मनोऽविद्यात्वमप्रामाणिकम् । किञ्चिच्चेतनं किञ्चिदचेतनमित्यङ्गीकारे गौरवप्राप्तेः । सर्वस्याचेतनत्वाङ्गीकृतेरेव ज्यायस्त्वमिति युक्तिसिद्धत्वादिति भावः ।**

*भा०दी०*— **अङ्गीकृत्य चेदमुक्तमिति** । प्रमाणसिद्धस्य युक्त्या दुर्घटत्वं न बाधकमितीदं चाङ्गीकृत्योक्तमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**न चात्मनोऽप्यविद्यात्वं वदतां तेषामुत्तरम् । अतोऽनन्तदोषदृष्टत्वात् हीति प्रसिद्ध्यैव भगवता निराकृताः ॥ २२ ॥**

***न्या०दी०*— न केवलं प्रामाणिके युक्त्या दुर्घटत्वमबाधकम् । किन्तु यदङ्गीकारे प्रमाणाविरोधस्तत्रैव । आत्मनोऽविद्यात्वं प्रमाणविरुद्धमतो युक्त्या विरुद्धत्वं तत्र बाधकमेवेत्यत आह न चेति ॥ आत्मनोऽविद्यात्वं वदतां प्रतिपक्षिणामुक्तरीत्या न कोऽपि प्रमाणविरोधोऽस्तीति भावः । नन्वेवमनुभवबलेन कार्यकारणसम्बन्धस्य सुखदुःखादि-**

**भोगस्य च सत्यत्वं वदता भगवताऽनुभवस्य भ्रमत्वमभ्युपगच्छतां मतमेवं किमिति न निराकृतमित्याशङ्कां परिहरन्नुक्तमुपसंहरति अत इति ॥ अनुभवभ्रमत्वस्य स्फुटमुक्तरीत्या अनन्तदोषदुष्टत्वप्रतीतेर्न स्वयं भगवता तन्निराकृतिः कृतेति भावः ।**

*भा०दी०*— **तत्रैवेति** । दुर्घटत्वमबाधकमित्यनुषङ्गः ॥ **उक्तरीत्येति** । किञ्चिचेतनमित्यादिनोक्तरीत्येत्यर्थः ॥ **कार्यकारणसम्बन्धस्येति** । कार्यकारणकर्तृत्वस्यैव पुरुषः प्रकृतिस्थो हीति पुनरुक्तसुखादिभोगस्य चेत्यर्थः ॥ **एवमिति** । तात्पर्यकृदुक्तरीत्येत्यर्थः ॥ **उक्तरीत्येति** । न हि ज्ञानाज्ञानेत्यादिना उक्तरीत्येत्यर्थः ॥

**गीता**

## उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
## परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २३ ॥

*वि०वि०*— ननु जीवस्य शरीरसम्बन्धे सत्त्वादिगुणसङ्गो निमित्तमात्रम् । जडत्वेनास्वतन्त्रत्वात् । स्वतन्त्रकारणं तु किमित्यपेक्षायामाह **उपद्रष्टेत्यादि** । अनुमन्तृत्वे हेतुः सर्वेभ्यः उपरि स्थितो द्रष्टा उपद्रष्टा । भर्ता सर्वकारकः । भोक्ता सकलकर्मफलसारभुक् । महेश्वरोऽचिन्त्यशक्तिः। परमात्मा सर्वचेतनेभ्य उत्तमः । इति हेतोरनुमन्ता । स परः पुरुषः अस्मिन् सर्वास्मिन् देहे स्थित्वा नियमयतीति 'क्षेत्रज्ञं चापि मां विद्धि' इत्युक्तः । तेनाहमेवानुमन्तेति दर्शयति । उक्तं च— 'सर्वेभ्य उपरि द्रष्टा य उपद्रष्टृनामकः । स्वातन्त्र्यात् स्वानुकूल्येन मर्त्यं प्रेरयति स्म यत् ॥ अनुमन्तेति कथितः स्वयं प्रभुरजो हरिः । महाशक्तियुतो विष्णुर्महेश्वर इतीरितः ॥ परमत्वात्तु(च्च) तस्यैव ह्यनुमन्तृत्वमुच्यते । स एव सर्वदेहेषु देहिनोऽन्यो व्यवस्थितः ॥' इति । एतेन 'यतश्च यत्' इति प्रतिज्ञातं चोपपादितं भवति ॥ २३ ॥

*बा०ल०*— **उपद्रष्टा** उप समीपे द्रष्टा साक्षी ॥ २३ ॥

*सा०सं०*— साध्वसाधुयोन्युत्पत्तौ सत्त्वादिगुणसङ्गो निमित्तमात्रकारणम् । भगवानेव तु स्वतन्त्रकारणमित्याह **उपद्रष्टेति** । **अनुमन्ता** पुनः पुनः कर्तव्यस्य विशेषेणालोचकः । यद्वा, अनु स्वानुकूल्येन । स्वमनोऽविक्षेपकतयेति यावत् । मन्ता मतिपूर्वं इति यावत् । प्रेरयतीत्यनुमन्ता । तत्र हेतुः **उपद्रष्टेति** । सर्वेभ्य उपरि वर्तमानः । उत्तमः सन्निति यावत् । द्रष्टा । **भर्ता** सर्वभारकः । सर्वपोषक इति यावत् । **भोक्ता** सर्वकर्मफलसारभुक् । महाशक्तित्वात् **महेश्वरः** । **परमात्मा**

परमचेतनः । **इतिशब्दो** हेत्वर्थः सन् सर्वत्रान्वीयमानः अनुमन्तृत्वे उपद्रष्टृत्वाद्भर्तृत्वादादित्यादिरूपेण हेत्वर्थको ध्येयः । उपद्रष्टृत्वादिहेतुभ्योऽनुमन्ता पुरुष **उक्त इति** । चशब्दो हेतुसमुच्चये । कोऽनुमन्ता पुरुष इत्यतः **अस्मिन् देहे**ऽप्युक्त इति उक्तम् । देहस्थत्वेनोक्तश्च भगवान् स्वयमेव । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु' इति स्वस्य देहस्थत्वेन प्रागुक्तत्वादिति भावः । एतेन 'यतश्च यत्' इत्यनेन यादृग्धर्मविशिष्टात् यत् क्षेत्रं प्रवर्तते एतत् 'मे शृणु' इति प्राक् प्रतिज्ञातमप्युक्तं भवति । उपर्दष्टृत्वादिधर्मविशिष्टात् प्रवर्तत इति ॥ २३ ॥

***अ०प्र०***— उपद्रष्टा[१], भर्ता[२], भोक्ता[३], महेश्वरः[४], परमात्मेति च इति हेतोः सः[५], परः पुरुषः[७], अस्मिन्[८], देहे[९], अनुमन्तेति[१०] उक्तः[११] ॥

उपद्रष्टेत्यादिकमनुमन्तृत्वे हेतुः— अनुमन्तृत्वं नाम प्रेरकत्वं उपद्रष्टा = उपरिस्थितो द्रष्टा यद्वा, उप समीपे स्थित्वा द्रष्टा प्रकृत्युपाधौ स्थित इव दृष्टोऽपि तद्व्यतिरिक्तः साक्षीत्यर्थः । 'साक्षी चेता केवलो निगुर्णश्चे'त्यादि श्रुतिः[१], भर्ता = सर्वधारकः यद्वा अस्माज्जीवति अस्याः स तथा जगत्प्रसूतेः तस्मात्प्रकृतेः भर्ता सर्वकर्मसारभुक् । यद्वा, कल्पान्ते प्रकृत्या सहेदं विश्वं अस्मिन्पुरुषे प्रलीयते तस्मादयं सर्वभोक्ता । यद्वा, महांश्चासावीश्वरश्च तथा । अतो महतो ब्रह्मणो मायायाः ईश्वरः नियन्ता इत्यर्थः[३], महेश्वरः = अचिन्त्य-शक्तिः परमात्मा सर्वचेतनोत्तमः इति हेतोः । स च परमात्मा[५], परः पुरुषः[७], अस्मिन्देहे = प्रमाणसिद्धप्रत्यक्षे देहे[९], अनुमन्तेत्युक्तः = प्रेरक इत्युक्तः । अस्मिन् देहे अव्यक्तादिरूपे शरीरक्षेत्रे स्थित्वा नियमयतीत्यर्थः । अत्र परः पुरुषः क्षेत्रप्रेरक इति परोक्षनिर्देशोऽपि 'अहं हि सर्वयज्ञानां भोक्ते'त्युक्तः । 'क्षेत्रज्ञं चापि मां विद्धि' इत्युक्तेश्चाहमेवानुमन्तेति सिद्ध्यति । उक्तं च— "सर्वेभ्य उपरो द्रष्टा य उपद्रष्टनामकः । स्वातन्त्र्यात्स्वानुकूल्येन मत्या प्रेरयति स्म यत् ॥ अनुमन्तेति कथितः स्वयं प्रभुरहो हरिः । महाशक्तियुतो विष्णुर्महेश्वर इतीरितः ॥ परमत्वात्तु तस्यैव ह्यनुमन्तृत्वमुच्यते । स एव सर्वदेहेषु देहिनोऽन्यो व्यवस्थितः ॥" इति उपर उपरि वर्तमान उत्तम इति यावत् । स्वानुकूल्येन स्वमानसा विक्षेपकतया मत्या मतिपूर्वं तत्र स्वातन्त्र्यादिकं हेतुरिति प्रमाणार्थः । एतेन यतश्च यदिति प्रतिज्ञातं यत्प्रेरकत्वं तत्परमात्मानुमन्ता प्रेरक इत्युपपादितं भवति । प्रेरणानुमतिः प्रोक्ता क्वचित्संवाद उच्यते इति । यद्वा, अनुमन्ता अनुमोदनेनैव सन्निच्छामात्रेणैव अनुग्राहकः । अस्मिन् प्रकृति-कार्यदेहे वर्तमानोऽपि पुरुषः परः भिन्न एव । न तद्गुणैः युज्यत इत्यर्थः । एतैर्विशेषणैः सः परमात्मा इति उक्तः अन्तर्यामी चोक्तः । 'एष भूताधिपतिः एष लोकेश्वरः एष लोकपालः' इत्यादि ॥ २३ ॥

**गीतातात्पर्यनिर्णयः**

**अस्य जीवस्य सदसद्योनिजन्मसु कारणं सत्त्वादिगुणसङ्गः ।**

*प्रका०*— प्रकृतिस्थो हीत्युक्तस्य जीवस्य सदसद्योनिजन्मसु त्रिगुणसङ्गः निमित्तमात्रं कारणं स्वतन्त्रकारणं तूपद्रष्टाऽनुमन्तेत्याह **अस्येत्यादिना** ॥

*न्या०दी०*— पुरुषः प्रकृतिस्थ इत्युक्तम् । तत्र स्वतःशुद्धस्य जीवस्य प्रकृतिस्थत्वे किं कारणमित्यत उच्यते 'कारणम्' इति ॥ तत्र परमात्मनो जीवभावेन शरीरसम्बन्धाद्युक्तौ शुद्धस्य किं कारणं शरीरसम्बन्धादेरित्यतः सगुणत्वं तत्कारणमुच्यत इत्यन्यथाप्रतीति-निरासायाऽऽह **अस्येति** ॥

*भा०दी०*— **प्रकृतिस्थत्व** इति । देहेन्द्रिययुक्तत्व इत्यर्थः ॥ **तत्रेति** । जीवभावेन शरीर-सम्बन्ध इत्यर्थः । सगुणत्वमित्यत्र तत्कारणमित्यनुषङ्गः ॥

**गीतातात्पर्यनिर्णयः**

**स्वतन्त्रकारणं तु परम एवेत्याह उपद्रष्टाऽनुमन्तेति ।**

*न्या०दी०*— अत्र जीवस्य शरीरसम्बन्धे सत्त्वादिगुणसङ्गः कारणमुच्यते, न तु परमात्मनस्तत्र सगुणत्वम् । परमार्थतस्तदनुपपत्तेः । तन्मिथ्यात्वस्य दूषितत्वादिति भावः । किं जीवस्य सत्त्वादिगुणसङ्गः सदसद्योनिजन्मसु स्वतन्त्रकारणमुत निमित्त-मात्रम् ? नाद्यः । जडत्वेन तदनुपपत्तेः । द्वितीये स्वतन्त्रकारणं वाच्यमिति शङ्कापरि-हारत्वेन श्लोकमवतारयति **स्वतन्त्रेति** ॥

*भा०दी०*— **तदनुपपत्तेरिति** । देहत्वसगुणत्वाद्यनुपपत्तेरित्यर्थः । मिथ्याभूतं तदस्तीत्यत्र आह **तन्मिथ्यात्वस्येति** । देहसम्बन्धादिमिथ्यात्वस्येत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

"सर्वेभ्य उपरि द्रष्टा यदुपद्रष्टृनामकः ।
स्वातन्त्र्यात् स्वानुकूल्येन मत्या प्रेरयति स्म यत् ॥
अनुमन्तेति कथितः स्वयं प्रभुरजो हरिः ।
महाशक्तिर्यतो विष्णुर्महेश्वर इतीरितः ॥

परमत्वाच्च तस्यैव ह्यनुमन्तृत्वमुच्यते ।
स एव सर्वदेहेषु देहिनोऽन्यो व्यवस्थितः ॥" इति च ।

*न्या०दी०*— कथमनेन हरेः स्वतन्त्रकारणत्वमुच्यत इत्यतः प्रमाणवाक्येन श्लोकं व्याचष्टे **सर्वेभ्य इति** ॥ उपरि उपरि वर्तमानः, उत्तम इति यावत् । **स्वानुकूल्येन** स्वात्मनोऽविक्षेपकतया । **मत्या** बुद्धिपूर्वकम् । स्वातन्त्र्यं तत्र हेतुत्वेनैवोक्तम् । परमत्वादित्यनेन परमात्मेत्युक्तार्थं भवति । उपद्रष्टेत्यादौ सर्वत्रेतिशब्दान्वयेनानुमन्तृत्वे हेत्वभिधायकत्वं द्रष्टव्यम् । देहिनोऽन्य इत्यनेन परशब्दो व्याख्यातो भवति ।

*भा०दी०*— हेतुत्वेनैवेति । न तु शब्दार्थतयेत्यर्थः ॥ इतिशब्दान्वयेनेति । हेत्वर्थकेति योज्यम् ॥

**गीतातात्पर्यनिर्णयः**

"मां विद्धि सर्वक्षेत्रेषु" इति देहेऽप्युक्तः । तेनाहमेव स इति दर्शयति । ॥ २३ ॥

*प्रका०*— परमात्मेति चाप्युक्तो देहेऽस्मिन्नित्यस्यार्थमाह **मां विद्धीति** । तेनाहमेव स इति दर्शयतीत्यस्योपद्रष्टानुमन्ताऽहमिति दर्शयतीत्यर्थः ॥

*न्या०दी०*— नन्वनुमन्तुः प्राग्देहस्थितत्वेन अनुक्तत्वादप्युक्तो देहे अस्मिन्निति कथमुच्यत इत्यत आह **मामिति** ॥ "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति प्रागनुमन्तुर्देहगतत्वेनोक्तत्वादप्युक्तो देहे अस्मिन्नित्युक्तिर्युक्तेति भावः । ननूपद्रष्टृत्वादिकमनुमन्तृत्वे हेतुत्वेनोच्यताम् । अनुमन्तुर्देहस्थतयोक्तत्वं किमर्थमुच्यत इत्यत आह **तेनेति** ॥ कोऽयमनुमन्तेत्यतो देहेऽप्युक्त इत्यनेन अहमेवानुमन्तेति दर्शयति । देहस्थत्वेनात्मनः कथितत्वादिति भावः ॥

**गीता**

**य एनं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४ ॥**

*वि०वि०*— 'प्रकृतिं पुरुषं चैव' इत्याद्युक्तार्थे बुभुत्सातिशयोत्पादनाय तज्ज्ञानफलमाह **य एवमिति** । एनं द्विविधं पुरुषम्, द्विविधां च प्रकृतिं गुणैः सह सम्यक् ज्ञात्वा पश्यति स प्रमादादन्यायेन वर्तमानोऽपि नियतमोक्ष इत्यर्थः ॥ २४ ॥

*सा०सं०*— 'प्रकृतिं पुरुषं चैव विद्धि' इत्युक्तार्थे बुभुत्सातिशयोत्पादनाय तज्ज्ञानफलमाह **य एनमिति** । **यो**ऽधिकारी । **एनं पुरुषं** जीवपराख्यद्विविधपुरुषम् । जडाजडाख्यद्विविध**प्रकृतिं च**। तत्त**द्गुणैः सह वेत्ति** परोक्षतो विदित्वाऽपरोक्षतो जानाति । **स** पुमान् । **सर्वथा वर्तमानोऽपि** प्रमादादन्यायप्रवृत्तिमानपि । **भूयः** पुनः । **नाभिजायते** मुक्तो भवतीत्यर्थः । तदुक्तं सूत्रे 'ॐ कामकारेण चैके ॐ' इति ॥ २४ ॥

*अ०प्र०*— प्रकृतिं पुरुषं चैव इत्याद्युक्तेर्बुभुत्सातिशयोत्पादनाय ज्ञानफलमाह **य एनमिति** ।

यः[1], एनं[2], पुरुषं[3], वेत्ति[4], गुणैस्सह[5], प्रकृतिं च[6], वेत्ति[7], सः[8], सर्वथा वर्तमानोऽपि[9], भूयः[10] नाभिजायते[11] ॥

यः = पुरुषः[1], एनं = द्विविधं[2], पुरुषं वेत्ति[4], तथा गुणैः सह = गुणैः तद्धर्मैः सुखदुःखादिपरिणामैः सहितां[5], प्रकृतिं च = चेतनाचेतनात्मिकां द्विविधां प्रकृतिं च[6], वेत्ति = पश्यति[7], सः = पुरुषः[8], सर्वथा वर्तमानोऽपि = सर्वथा विधिमतिलङ्घ्य वर्तमानोऽपि शरीरसंयोगात् सर्वप्रकारेण शरीरकर्माणि कुर्वन्नपि देहातीत एव[8], भूयः = पुनः सः[9], नाभिजायते = गर्भवासादिदुःखास्पदो न भवति नोत्पद्यते किन्तु मुच्यत एवेत्यर्थः ॥ २४ ॥

भाष्यम्

**'यतश्च यत्' इत्याह उपद्रष्टेति । अनुमन्ता अन्वनु विशेषतो निरूपकः । 'पुरुषः सुखदुःखानाम्' इति जीव उक्तः । 'पुरुषं प्रकृतिं चेति जीवेश्वरौ सहैवोच्यते ।**

*प०टी०*— उत्तरश्लोकमवतारयति **यतश्चेति** । 'यतश्च यत्' इति प्रतिज्ञातं प्रवर्तकमाह इत्यर्थः । 'अनुमन्तृ'पदं व्याचष्टे **अन्विति** । 'य एनं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यत्र 'पुरुष'शब्दार्थं वक्तुमाह **पुरुष इति** । 'य एनं वेत्ति पुरुषम्' इत्यत्र सहैवैकेन शब्देन जीवेश्वरावुच्येते । द्वयोरपि ग्रहणे बाधकाभावात् । 'पुरुषः सुखदुःखानाम्' इत्यत्रापि तौ स्यातामिति न वाच्यम् । ईशस्य दुःखानुभवविरोधादित्यर्थः ।

*प्र०दी०*— 'यतश्च यत् इति वक्तुम्' इत्युक्तम् । तत्केनोच्यत इत्यत आह **यतश्चेति** । 'इति प्रतिज्ञातम्' इति शेषः । 'अनुमन्ताऽनुज्ञाता' इति कश्चित् । तदसत् । औदासीन्यप्राप्तौ 'भर्ता', 'भोक्ता' इत्यादिविरोधादिति भावेन व्याचष्टे **अनुमन्तेति** । अनुशब्दः पुनरर्थे । क्रियाऽऽवृत्तिश्च तदर्थ इति ज्ञापनाय द्विरुक्तिः । 'विशेषतः' इति तृनोऽर्थः । **निरूपकः** कर्तव्यस्यालोचकः । 'य एनं वेत्ति पुरुषम्'' इत्यत्र पुरुषशब्दं व्याख्यातुमुपोद्घातमाह **पुरुष इति** । सुखदुःखभोक्तृत्वलिङ्गादिति भावः ।

सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति व्याख्यानमाश्रित्येदमुक्तम् । व्याख्यानान्तरे तु भगवानेवात्र पुरुषः 'पुरुषः प्रकृतिस्थो हि' इति तु जीवः । उपलक्षणमेतत् । 'उपद्रष्टा' इति ईश्वर उक्त इत्यपि द्रष्टव्यम् । ततः किम् ? इत्यत आह **पुरुषमिति** । यत एवं उभावपि प्रकृतौ, अतो 'य एनं वेत्ति पुरुषं' इत्यत्र पुरुषशब्देन जीवेश्वरौ द्वावपि गृह्येते, द्वयोरपि परामर्शसम्भवात् । तर्हि द्वयोः द्विवचनेन भाव्यमित्यत उक्तम् **सहैवेति** । तन्त्रेणेत्यर्थः ।

*भा०दी०*— **कर्तव्यस्यालोचक इति** । 'मनु अवबोधने' इति धातोः पौनःपुन्यार्थकानुपसर्गयोगे आलोचनमेव सिद्ध्यतीति भावः । **व्याख्यानान्तरे त्विति** । 'भोक्तृत्वे भोक्तृशक्तिदाने पुरुषो हेतुः' इति तात्पर्योक्तव्याख्यानान्तर इत्यर्थः । **उपलक्षणमेतदिति** । 'पुरुषः' इत्यादि भाष्यमित्यर्थः । एतच्च परामर्शसौकर्यायोक्तम् । अत एवाह **उभावपि प्रकृताविति** । **तन्त्रेणेति** । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । तेनेत्यर्थः ।

*भा०र०*— **यतश्च यदिति वक्तुमिति** । 'यतश्च यत्' इति प्रेरकस्य स्वरूपं वक्तुमिति पूर्वभाष्ये उक्तमित्यर्थः । **केचिदिति** । यदाहुः 'कार्यकारणेषु व्याप्रियमाणेष्वपि स्वयमव्यापृतः, तत्साक्षी आत्माऽनुमन्तोच्यते । अथवा स्वव्यापारेषु प्रवृत्तान् देहादीन् अनिवारयन् साक्ष्यात्माऽनुमन्तोच्यते' इति । **इत्यादिविरोधात्** 'कर्ता', 'भोक्ता' इति तृचा स्वतन्त्रकर्तृत्वावगमेन जीवाक्षरविरोधात् । अव्ययानाम् अनेकार्थत्वाशयेनोक्तम् **अनुशब्दः पुनरर्थ इति** । पुनःशब्दार्थ इत्यर्थः । **तदर्थः** पुनःशब्दार्थः । **द्विरुक्तिः** 'अन्वनु' इति भाष्ये । **तृनोऽर्थ इति** । तृन्प्रत्ययस्य तच्छील-तद्धर्म-तत्साधुकारिषु विधानात् विशेषार्थ इत्यर्थः ।

ननु प्रेरकत्वोपयोगिनः प्रेर्यद्रष्टृत्वादयो धर्माः अत्र वक्तव्यतयाऽभिमताः । यथोक्तं प्राक् 'एवंधर्मविशिष्टाद् = उपद्रष्टृत्वादिधर्मविशिष्टाद् अस्मात् क्षेत्रं प्रवर्तते' इति । 'अनुमन्ता' इत्यस्य च 'निरूपकः' इत्यर्थ उक्तो भाष्ये । तत्र निरूपकत्वं यदि ज्ञापकत्वं तदेन्द्रियादेर्ज्ञापकत्वेऽपि प्रेरकत्वाभावात्, 'अनुमन्ता' इत्यस्य न प्रेरकत्वोपयोगिधर्मप्रतिपादकत्वम् ? यदि चोपदेष्टृत्वम्,

तदेश्वरस्य ब्रह्मादीन् प्रत्युपदेष्टृत्वेऽपि, क्षेत्रान्तर्भूतसर्वोपदेष्टृत्वाभावात् न 'अनुमन्ता' इत्यस्य प्रकृतोपयोगः ? इत्याशङ्कानिरासाय व्याचष्टे **कर्तव्यस्यालोचक इति**। 'इदम् अनेन कर्तुं शक्यम्, इदं न' इति पर्यालोचनशालीत्यर्थः। 'मनु = अवबोधने' इति धातोः, पौनःपुन्यार्थक-अनु-उपसर्ग-योगात् ताच्छील्यविशिष्टकर्त्रर्थकतृन्प्रत्यययोगाच्च सिद्ध्यतीति, 'अनुमन्ता' इति पदमपि प्रेरकत्वोपयोगिधर्मसमर्पकं भवतीति भावः। **व्याख्यातुं** 'पुरुषं प्रकृतिं च' इत्युत्तरवाक्ये।

भाष्याभिमतव्याख्यानं दर्शयति **सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति**। **व्याख्यानान्तरे तु** 'जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा। परमः पुरुषो विष्णुः' इति सर्वहेतुत्वेऽपि विष्णोः, प्रकृतेर्जीवं प्रति भोक्तृत्वदाने अल्पप्रवृत्तिरिति 'पुरुषो भोक्तृत्वे हेतुरुच्यते' इति च तात्पर्यनिर्णयोक्तव्याख्याने तु, पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति श्लोके पुरुषशब्दार्थो भगवानेव, न तु जीवः। भोक्तृत्वे = भोगशक्तिदाने इति तत्राभिमतत्वादिति भावः। ननु तात्पर्यमते 'पुरुषः सुखदुःखानाम्' इत्यत्र पुरुषपदेन जीवस्य ग्रहणात् 'प्रकृतिविकारपुरुषान् सङ्क्षिप्याह' इत्यत्र प्रेर्यकोटिनिविष्टत्वेन भाष्योक्तः पुरुषो न क्वाप्युक्तः स्यात्। तथा च 'प्रकृतिं पुरुषं चैव' इत्यत्र पुरुषशब्देन जीवस्य ग्रहणमिति सिद्धान्तो न सिद्ध्यति ? इत्यतः 'पुरुषः प्रकृतिस्थः (१३.२२) इत्यत्र पुरुषशब्दो जीवे' इति तात्पर्यनिर्णयोक्तमाह **पुरुषः प्रकृतिस्थो हीति तु जीव इति**। तथा च पुरुषशब्देन जीव इति पदसिद्धः, तस्य प्रेर्यत्वसिद्धिश्चेति भावः। ननु भाष्यमते 'पुरुषः सुखदुःखानाम्' इत्यत्र मतद्वयेऽपि 'पुरुषः प्रकृतिस्थः' इत्यत्र जीव एव पुरुषशब्देनोक्तः, नेश्वर इति कथं 'य एनं वेत्ति पुरुषम्' इत्युत्तरवाक्ये पुरुषशब्देनोभयोः परामर्शेन व्याख्यानम् ? इत्यत आह **उपलक्षणमेतदिति**। 'उपद्रष्टाऽनुमन्ता च' इति श्लोके उपद्रष्टृत्वादिगुणविशिष्ट ईश्वर उक्त इति, 'य एनं वेत्ति पुरुषम्' इत्यत्र पुरुषशब्देन जीवेश्वरयोः ग्रहणमुपपन्नमिति भावः। 'उपद्रष्टा' इति श्लोके 'पुरुषः परः' इति पुरुषशब्देनेश्वर उक्त इत्यर्थ इत्यपि **आहुः**। 'पुरुषं प्रकृतिं च' इति भाष्यं 'य एनं वेत्ति पुरुषं प्रकृतिं च' इत्यस्यानुवाद इति तत् सपरिकरं योजयति **यत एवमित्यादि**। **द्विवचनेनेति**। 'द्व्येकयोर्द्विवचनैकवचने' इति द्वित्वे द्विवचनानुशासनादिति भावः। **तन्त्रेण** सकृत्प्रयुक्तस्यानेकोपकारकत्वं तन्त्रम्, तेनेत्यर्थः।

भाष्यम्

**अन्यत्र महातात्पर्यविरोधः। उत्कर्षे हि महातात्पर्यम्। तथा हि सौकरायणश्रुतिः— "अवाच्योत्कर्षे महत्त्वात् सर्ववाचां सर्वन्यायानां च महत् तत्पर-**

**त्वम् । विष्णोरनन्तस्य परात्परस्य तच्चापि ह्यस्त्येव न चात्र शङ्का । अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवाऽपि युक्तिः । न तत् प्रमाणं कवयो वदन्ति न चापि युक्तिर्ह्यूनमतिर्हि दृष्टेः ॥''** इति ।

*प०टी०*— ईश्वरस्यापि जीवाभेदाद्दुःखानुभवोऽस्त्येवेत्यत आह **अन्यत्रेति** । **अन्यत्र** अद्वैत-पक्षे । कथं महातात्पर्यविरोधः ? इत्यत आह **उत्कर्ष इति** । महत्त्वादवाच्योत्कर्षे **यत् तदक्षादौ विरुद्धं मानम्**, अल्पज्ञानोत्पादिका **दृष्टेः** श्रुतेः सकाशादित्यर्थः ।

*प्र०दी०*— अत्र कश्चित् 'य एनं वेत्ति पुरुषम्', 'साक्षादहमस्मि' इत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान् । तद्दूषयति **अन्यत्रेति** । जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन यत्प्रतिपादकत्वं तद्विरोधः । कथमित्यत आह **उत्कर्षे हीति** । सर्वागमानामीश्वरस्य सर्वोत्कर्षे हि महातात्पर्यमित्यर्थः । तत्कुतः ? प्रागुक्तयुक्तेः ।

श्रुतेश्चेत्याह **तथा हीति** । **विष्णोः** महत्त्वादेवावाच्यत्वेनोक्ते **सर्वोत्कर्षे** सर्वासां वेदवाचां, **सर्वन्यायानां**, न्यायव्युत्पादकस्य मीमांसाशास्त्रस्येति यावत् । **महत्तत्परत्वं** महातात्पर्यम् । अस्तूत्कर्षे महातात्पर्यम् । तथाऽप्युत्कर्षस्य सत्त्वं कुतः ? न हि जैनवाक्यस्य क्वचित् महातात्पर्येऽपि तत्सत्त्वमस्तीत्यत आह **तच्चापीति** ।

न केवलं तत्र तात्पर्यम् । किं तु तन्महत्त्वमपि **चास्त्येव** । धियां स्वतः प्रामाण्यादिति **हे**रर्थः । स्वतःप्रामाण्येऽपि बाधकात् विषयासत्त्वं भवति । तदप्यत्र नास्तीत्याह **न चात्रेति** । **शङ्केति** । शङ्काहेतुः बाधकमिति यावत् ।

कथं बाधकाभावः ? इत्यत आह— **अत इति** । 'अतः' इत्यस्य उत्तरत्र अन्वयः । तत्र, ईश्वरस्य सर्वोत्कर्षे **तु यद्विरुद्धं मानं शङ्क्यते, तदपि** किं **अक्षजादौ** अक्षजागमयोरन्यतरत् ? **अथवा युक्तिः ?** आद्यं निराकरोति **न तदिति** । **कवयः** न्यायविदः । कुतः ? **अतः** उपजीव्य-वेदविरोधात् ।

एतेन द्वितीयोऽपि निरस्तः । तथाऽपि विशेषं वक्तुमाह **न चेति** । युक्तिरपि नैव मानम्; यतो **दृष्टेः** श्रुतेः **ऊनमतिः** जात्यैव दुर्बलज्ञानोत्पादिका ।

*भा०दी०*— 'तत्कुतः' इति प्रश्नस्योत्तरं **प्रागुक्तयुक्तेरिति** । 'महातात्पर्याच्च' इत्युपक्रम्य 'मोक्षो हि' इत्यादिना मोक्षरूपपरमपुमर्थहेतुभगवत्प्रसादकारणतदीयगुणोत्कर्षज्ञानजननाय प्रवृत्तत्वात् सर्ववेदानाम्' इति द्वितीयाध्यायोक्तयुक्तेरित्यर्थः । **युक्त इति** । 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतौ

इति योज्यम् । **उत्तरत्रेति** । 'अतो न प्रमाणम्' इत्यन्वय इत्यर्थः । तदनुवादेनार्थमाह **तदुपजीव्येत्यादि** । **दृष्टेः** इत्यनुवादः । **श्रुतेः** इति व्याख्या ।

*भा०र०*— **जीवेश्वरैक्यं व्याख्यातवानिति** । यदाह "जीवेश्वरादिसकलकल्पनाविधुरतयोक्तप्रकारं पुरुषं साक्षाद् = अपरोक्षत्वेन 'अहमस्मि' इत्यात्मभावेन वेत्ति = विजानाति" इति। **ईश्वरैक्ये** 'व्याख्यायमाने सति' इति शेषः । महातात्पर्यशब्दार्थमाह **प्राधान्येन यत्प्रतिपादकत्वमिति** । 'वेदानाम्' इति योग्यतया प्राप्तम् । उत्कर्षस्य ससम्बन्धिकत्वादुक्तम् **ईश्वरस्येति** । **प्रागुक्तयुक्तेरिति** । 'महातात्पर्याच्च' इत्युपक्रम्य 'मोक्षो हि महापुरुषार्थः' इति द्वितीयाध्याये मोक्षरूपमहापुरुषार्थहेतुभूतभगवत्प्रसादकारणगुणोत्कर्षज्ञानजननाय प्रवृत्तत्वात् सर्वागमानाम्' इति भाषितयुक्तेरित्यर्थः ।

श्रुतिवाक्यं व्यवहितपदत्वाद् असुबोधकत्वाच्च योजयति **विष्णोर्महत्त्वादेवेति** । देशकालगुणैरपरिच्छेदत्वेन वेदसिद्धमाहात्म्यवत्त्वादेव, न तु सदसद्विलक्षणत्वादित्यर्थः । 'अवाच्योत्कर्षे' इत्यस्यार्थः 'अवाच्यत्वेनोक्ते' इति । 'यतो वाचो निवर्तन्ते' इति श्रुतौ वाच्यत्वेनागोचरत्वेनोक्त इत्यर्थः । चशब्दार्थः **तथेति** । न्यायानां = युक्तीनां न तात्पर्यत्वम् ? तात्पर्यस्य शब्दधर्मत्वाद्, इत्यतो व्याचष्टे **न्यायव्युत्पादकमीमांसेति** । **क्वचित्** 'सन्ततोर्ध्वगमनं मोक्षः' इत्याद्यर्थे । **तत्सत्त्वं** तात्पर्यविषयीभूतार्थस्य सत्त्वम् ।

'तत्' इति नपुंसकलिङ्गघटनायाह **तन्महत्त्वमपि चेति** । 'महत्त्वात्' इत्यनेनोपस्थापितं **महत्त्वम्** उत्कृष्टत्वम् **अस्त्येव** सदेवेत्यर्थः । तत्र हेतुः **धियामिति** । ज्ञानानामित्यर्थः । **हेरर्थ इति** । श्रौतहिशब्दार्थ इत्यर्थः । **विषयासत्त्वमिति** । 'आदित्यो यूपः', 'मृदब्रवीत्' इत्यादिवाक्यस्य श्रुतित्वेन स्वतःप्रामाण्येऽपि प्रत्यक्षादिप्रमाणविरोधात् **बाधकात्** यूपादित्वभेदस्य, मृद्वक्तृत्वादेश्च **विषयस्यासत्त्वम्** इत्यर्थः । लक्षणाबीजं सम्बन्धं दर्शयितुमुक्तम् **शङ्काहेतुरिति** । ननु 'शङ्काहेतुः' इति संशयकारणमुच्यते । तेन च विषयासत्त्वसिद्धिः ? इत्यत उच्यते **बाधकमिति यावदिति** । **उत्तरत्रान्वय इति** । 'न तत्प्रमाणम्' इति वक्ष्यमाणसाध्येऽन्वय इत्यर्थः । 'अत्र' इत्यनुवादः, 'ईश्वरस्य सर्वोत्कर्षे' इति व्याख्या । 'मानम्' इत्यनन्तरं शेषः **शङ्क्यत इति** । तच्छब्दस्य अपिशब्देनान्वय इत्यभिप्रेत्योक्तम् **तदपीति** । 'अक्षजागमयोः' इति व्याख्याय शेषमाह **अन्यतरदिति** ।। अप्रामाण्योपपादनोपयोगितयाऽर्थमाह **कवयो न्यायविद इति** । 'यद् उपजीव्यप्रमाणविरोधि न तत् प्रमाणम्' इति न्यायवेदिन इत्यर्थः ।

यस्य 'अतः' इत्यस्योत्तरत्र अन्वय इत्युक्तम्, तमनूद्यार्थमाह **अत उपजीव्यविरोधादिति**। 'विश्वतः परमां नित्यं विश्वं नारायणं हरिम्' इत्यादिश्रुतिसिद्धं ईश्वरं गृहीत्वा प्रत्यक्षेण आगमेन वा तत्र सर्वोत्कर्षाभावो बोद्धव्यः। न चैवं युक्तम्। श्रुत्यैव सर्वोत्कृष्टतयाऽवगतत्वेन धर्मिग्राहक-उपजीव्यप्रमाणविरोधितया स्वयमुत्थानायोगादिति भावः। **केचित्तु** सर्वोत्कर्षाभाववेदकप्रत्यक्षागमौ प्रति प्रतियोगिभूतसर्वोत्कर्षप्रतिपादकवेदस्योपजीव्यत्वात् तद्विरोधात् इत्यर्थ इत्याहुः। **द्वितीयः** 'युक्तिः' इति पक्षः। 'विष्णुः दोषी चेतनत्वात्' इति युक्तेः धर्मिभूतविष्णुज्ञानाभावे आश्रयासिद्धि-प्रसङ्गेन तज्ज्ञाने वाच्ये, तस्य वेदेतरप्रमाणेन असम्भवात् वेदेनैव तस्मिन् वक्तव्ये, तेन 'निरनिष्टो निरवद्यः' इत्यादिना निर्दोषत्वेनैव सिद्धत्वाद् उपजीव्यवेदविरोधेन सर्वोत्कर्षविरुद्धदोषे युक्तेरनव-काशात् स पक्षो निरस्त इत्यर्थः। चशब्दोऽवधारण इत्यभिसन्धायोक्तम् **नैवेति**। हिशब्दार्थः **यत इति**।

ननु 'युक्तिरपि नोत्कर्षाभावावेदने मानम्' इत्यत्रार्थे दृष्टिशब्दोदितप्रत्यक्षापेक्षया दुर्बलज्ञानोत्पा-दकत्वं कथं हेतुः ? व्यधिकरणत्वात्, इत्यत आह **दृष्टेः श्रुतेरिति**। 'सकाशात्' इति शेषः। 'यतस्ता हरिणा दृष्टाः श्रुता एवाखिलैः जनैः। श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः' इति वचनेन दृष्टिशब्दस्य श्रुतिपर्यायत्वावगतेरिति भावः। तथा च *भावप्रदीपिका* 'दृष्टेः = श्रुतेः सकाशात्' इति। 'दृष्टेः' इत्युपलक्षणं मत्त्वोक्तम् 'श्रुतेः' इति, इत्यपि **आहुः**। 'ऊना मतिः यया सा तथोक्ता' इति विग्रहं हृदि निधाय तदभिप्रेतमर्थमाह **जात्यैव दुर्बलज्ञानोत्पादिकेति**।

**भाष्यम्**

**अतो युक्तिभिः एतदपलापो न युक्तः। अतो यया युक्त्या अविद्यमानत्वादि कल्पयति साऽप्याभासरूपेति सदेव माहात्म्यं वेदैरुच्यत इति सिद्ध्यति। अवान्तरं च तात्पर्यं तत्रास्ति। उक्तं च तत्रैव "अवान्तरं तत्परत्वं च सत्त्वे महद् वाऽप्येकत्वात्तु तयोरनन्ते" इति। श्यामत्वाद्यभिधानाच्च।**

*प०टी०*— 'न विष्णुः सर्वोत्कृष्टः पुरुषत्वात् सम्मतवत्' इति युक्तिविरोधो भगवतः सर्वोत्कर्षे इत्यत आह **अत इति**। उक्तश्रुतेरेवेत्यर्थः। ननु युक्तेरपि स्वतन्त्रप्रमाणत्वात् तद्विरुद्धश्रुतिबोधितं भगवन्माहात्म्यप्रसक्तिं न स्यात् ? इत्यत आह **अत इति**। **अतः** उपजीव्यवेदविरोधादेव। ननु वेदानां भगवदुत्कर्ष एव महातात्पर्यम्, न तत्सत्त्वे। न तर्हि लोकविरुद्धश्यामत्वसूकरत्वाद्यमभिदध्याद्वेदः। अस्ति च अभिधानम्, अतो नासन्नित्याह **श्यामत्वेति**। विरुद्धयुक्तिराभासैवेत्यर्थः।

*प्र०दी०*— भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः सोऽपि प्रकृतोपयुक्त एव । उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य तद्विरोधाभावात् । अतस्तं स्ववाक्येनाप्याह **अत इति** । 'युक्तिभिः' इत्युपलक्षणम् । एतत् अपलापः भगवदुत्कर्षस्य अविद्यमानत्वादिकल्पनम् । 'अतः' इत्युक्तमेवार्थं विशदयति **अत इति** । वेदविरोधादित्यर्थः । **आदिपदेन** अनिर्वाच्यत्वं गृह्यते । 'भगवदुत्कर्षस्य' इति शेषः । 'साऽपि' इत्यपिशब्देन प्रत्यक्षादेः समुच्चयः । **इतिशब्दो** हेतौ । बाधकाभावादित्यर्थः । उत्कर्षस्य प्रकृतत्वेऽपि 'तच्चापि' इति श्रौततच्छब्द-व्याख्यानाय 'माहात्म्यम्' इत्युक्तम् ।

ननु प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम् । स्वतःप्रामाण्यात् । न च उत्कर्षस्य सत्त्वं वेदात् प्रतिपन्नम् । उत्कर्षे तत्सत्त्वे च तात्पर्याङ्गीकारे वाक्यभेदप्रसङ्गादित्यत आह **अवान्तरं चेति** । चशब्दस्य 'तत्र सत्त्वे च' इत्यन्वयः । उभयत्र महातात्पर्याभावान्न दोषः । एतत्कुतः ? इत्यत आह **उक्तं चेति** । **तत्रैव** तस्यामेव श्रुतौ । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु उत्कर्षसत्त्वे महदपि तत्परत्वम् । कुतः ? अनन्तसम्बन्धिनोस्तयोरुत्कर्षस्य तत्सत्त्वस्य चैकत्वात् । **अनन्ते** इति प्रकृतत्वादेवोक्तम् ।

एतदुक्तं भवति । प्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वा, न तु उदासीनम् । तस्य च बाधाभावे स्वत एव सत्त्वासत्त्वलक्षणौ विधिनिषेधौ सिद्ध्यतः; किं तत्र तात्पर्यान्तरकल्पनया ? इति । ननु निराकारमेव ब्रह्म श्रूयते । तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यात् ? इत्यत आह **श्यामत्वादीति** । एतच्च अनन्तरातीताध्याये प्रपञ्चितम् ।

*भा०दी०*— **शेषेणेति** । तच्चापि इत्यपिनेत्यर्थः । सकृदुच्चरितत्वादिनेत्यर्थः । **इत्युपलक्षण-मिति** । 'प्रमाणमात्रस्य' इति योज्यम् । **प्रतिपन्नस्यापीति** । प्रमितस्यापीत्यर्थः । **इदमुक्तमिति** । उत्कर्षसत्त्वे अवान्तरतात्पर्यं तयोर्भेदमङ्गीकृत्य उक्तमित्यर्थः । ननु घटादिपदार्थेष्वपि प्रमाणतः तत्स्वरूपसिद्ध्यैव सत्त्वं सिद्ध्यति । तत् किं 'अनन्तम्' इति विशिष्य उच्यते ? इत्यत आह **प्रकृतत्वादिति** । अस्यां श्रुतौ पूर्वभागे 'विष्णोरनन्तस्य' इति प्रकृतत्वादित्यर्थः । **प्रपञ्चितमिति**। 'रूपं चेदं साधितं पुरस्तात्' इत्यादिना 'श्यामोऽथवा हृदयेऽष्टबाहुः' इत्यन्तग्रन्थेनेति भावः ।

*भा०र०*— 'प्रकृतोपयुक्त एव' इत्यत्र युक्तिः **उत्कर्षस्येति** । तं श्रुतिशेषलब्धमर्थम् । विरोधिप्रत्यक्षागमाभ्यामप्युत्कर्षाभावस्य शङ्कितत्वात् कथं भाष्ये युक्तिमात्रग्रहणम् ? इत्यत आह **युक्तिभिरित्युपलक्षणमिति** । विरुद्धप्रत्यक्षागमावपि युक्तिपदेन लक्षणया ग्राह्यौ इत्यर्थः । न केवलं

आजानसिद्धप्रद्वेषेणोत्कर्षापलाप इति भाष्यस्थापिपदार्थ इति **आहुः** । **केचित्तु** 'उपलक्षणम्' इत्युक्त्या भाष्ये अपिशब्दपाठो लेखकदोषमूल इति सूचितमित्यप्याहुः । अन्ये तु 'एतदपलापोऽपि' इत्यपिशब्दो भिन्नक्रमः । न केवलम् उत्कर्षस्य द्वेषो न युक्तः, अपि त्वपलापोऽपीति समुच्चयार्थ इति वदन्ति । 'अविद्यमानत्वादि कल्पयति' इति भाष्यमनुसृत्य अपलापपदार्थमाह **अविद्यमानत्वादिकल्पनमिति** । आदिपदेन अनिर्वाच्यत्वं गृह्यते ।

**अत इत्युक्तमेवेति** । 'न तत् प्रमाणम्' इत्यत्र हेतुसमर्पकेण अतःशब्देनोक्तमित्यर्थः । 'प्रत्यक्षादेः' इत्यत्र आदिशब्देन विरोध्यागमग्रहः । हेतुमेवाह **बाधकाभावादिति** । वेदविरोधाद् युक्तिप्रत्यक्षागमानामसत्त्वम्, तथा चोत्कर्षे बाधकाभावः, ततश्च बाधकाभावात् सदेव माहात्म्यं वेदैरुच्यत इति समग्रभाष्यार्थो द्रष्टव्य इति भावः । ननूत्कर्षस्य सत्त्वोपसंहाराय प्रवृत्ते भाष्ये 'सन्नेवोत्कर्षो वेदैरुच्यते' इत्येव वक्तव्यम् । तत्किमर्थं 'सदेव' इति नपुंसकलिङ्गप्रयोगः ? इत्यत आह **उत्कर्षस्य सत्त्व इति** । उत्कर्षस्य सत्त्वे या श्रुतिरुपन्यस्ता 'तच्चापि ह्यस्त्येव, न चात्र शङ्का' इति, तत्र 'तत्' इति नपुंसकलिङ्गतच्छब्दव्याख्यानाय 'माहात्म्यम्' इत्यभाषतेत्यर्थः । 'उत्कर्षस्य प्रकृतत्वेऽपि' इति क्वचित् पाठः । *भावप्रदीपिकायां तु* 'न विष्णुः सर्वोत्कृष्टः पुरुषत्वात् सम्मतवत्' इति युक्तिविरोधो भगवतः सर्वोत्कर्षे इत्यत आह अत इति । उक्तश्रुतेरेवेत्यर्थः । ननु युक्तेरपि स्वतन्त्रप्रमाणत्वात् तद्विरुद्धश्रुतिबोधितं भगवन्माहात्म्यप्रसक्तिं न स्यात् ? इत्यत आह अत इति । उपजीव्यवेदविरोधादेवेत्यर्थः इति व्याख्यातम् ।

**प्रतिपन्नस्य** प्रतीतस्य 'विद्यमानत्वादिकम्' इत्यत्रादिशब्देनानिर्वाच्यत्वं गृह्यते । **स्वतः प्रामाण्यात्** प्रामाण्यस्य स्वतस्त्वात् । 'तत्र' इत्यनुवादः, 'सत्त्वे' इति व्याख्या । **उभयत्र** उत्कर्षे तत्सत्त्वे च । **दोषः** वाक्यभेदप्रसङ्गदोषः। **तत्** उभयत्र महातात्पर्याभावेन वाक्यभेदो नास्तीत्येतत्। **तस्यां** सौकरायणाख्यायाम् । **इदमुक्तमिति** । उत्कर्षसत्त्वयोः धर्मधर्मिभावेन भेदमङ्गीकृत्य उभयत्र महातात्पर्याभावेन वाक्यभेदो नास्तीत्येतदुक्तमित्यर्थः । 'तयोः' इत्यनुवादः, 'उत्कर्षस्य तत्सत्त्वस्य च' इति व्याख्यानम् । ननु भगवदितरत्रापि वस्तुस्वरूपतत्सत्त्वयोः अभेदात् किं विशिष्याभिधीयते 'अनन्ते' इति ? इत्यत आह **प्रकृतत्वादेवेति** । 'विष्णोरनन्तस्य' इत्युदाहृतश्रुतौ प्रकृतत्वादित्यर्थः; नत्वितरत्र धर्मधर्मिणोरभेदाभावादित्येवशब्दः ।

'उत्कर्षसत्त्वे महदपि वा तत्परत्वम्' इत्यङ्गीकारे वाक्यभेददोषो दुष्परिहरः ? इत्यतो वाशब्दद्योतितानास्थातात्पर्यं दर्शयति **एतदुक्तं भवतीति** । **उदासीनं** वस्तुसत्त्वासत्त्वानवगाहि । प्रकृतम्

*प्र०दी०*— भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः सोऽपि प्रकृतोपयुक्त एव । उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य तद्विरोधाभावात् । अतस्तं स्ववाक्येनाप्याह **अत इति** । 'युक्तिभिः' इत्युपलक्षणम् । एतत् अपलापः भगवदुत्कर्षस्य अविद्यमानत्वादिकल्पनम् । 'अतः' इत्युक्तमेवार्थं विशदयति **अत इति** । वेदविरोधादित्यर्थः । **आदिपदेन** अनिर्वाच्यत्वं गृह्यते । 'भगवदुत्कर्षस्य' इति शेषः । 'साऽपि' इत्यपिशब्देन प्रत्यक्षादेः समुच्चयः । **इतिशब्दो** हेतौ । बाधकाभावादित्यर्थः । उत्कर्षस्य प्रकृतत्वेऽपि 'तच्चापि' इति श्रौततच्छब्द-व्याख्यानाय 'माहात्म्यम्' इत्युक्तम् ।

ननु प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम् । स्वतःप्रामाण्यात् । न च उत्कर्षस्य सत्त्वं वेदात् प्रतिपन्नम् । उत्कर्षे तत्सत्त्वे च तात्पर्याङ्गीकारे वाक्यभेदप्रसङ्गादित्यत आह **अवान्तरं चेति** । चशब्दस्य 'तत्र सत्त्वे च' इत्यन्वयः । उभयत्र महातात्पर्याभावान्न दोषः । एतत्कुतः ? इत्यत आह **उक्तं चेति** । **तत्रैव** तस्यामेव श्रुतौ । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु उत्कर्षसत्त्वे महदपि तत्परत्वम् । कुतः ? अनन्तसम्बन्धिनोस्तयोरुत्कर्षस्य तत्सत्त्वस्य चैकत्वात् । **अनन्ते** इति प्रकृतत्वादेवोक्तम् ।

एतदुक्तं भवति । प्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वा, न तु उदासीनम् । तस्य च बाधाभावे स्वत एव सत्त्वासत्त्वलक्षणौ विधिनिषेधौ सिद्ध्यतः; किं तत्र तात्पर्यान्तरकल्पनया ? इति । ननु निराकारमेव ब्रह्म श्रूयते । तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यात् ? इत्यत आह **श्यामत्वादीति** । एतच्च अनन्तरातीताध्याये प्रपञ्चितम् ।

*भा०दी०*— **शेषेणेति** । तच्चापि इत्यपिनेत्यर्थः । सकृदुच्चरितत्वादिनेत्यर्थः । **इत्युपलक्षण-मिति** । 'प्रमाणमात्रस्य' इति योज्यम् । **प्रतिपन्नस्यापीति** । प्रमितस्यापीत्यर्थः । **इदमुक्तमिति** । उत्कर्षसत्त्वे अवान्तरतात्पर्यं तयोर्भेदमङ्गीकृत्य उक्तमित्यर्थः । ननु घटादिपदार्थेष्वपि प्रमाणतः तत्स्वरूपसिद्ध्यैव सत्त्वं सिद्ध्यति । तत् किं 'अनन्तम्' इति विशिष्य उच्यते ? इत्यत आह **प्रकृतत्वादिति** । अस्यां श्रुतौ पूर्वभागे 'विष्णोरनन्तस्य' इति प्रकृतत्वादित्यर्थः । **प्रपञ्चितमिति**। 'रूपं चेदं साधितं पुरस्तात्' इत्यादिना 'श्यामोऽथवा हृदयेऽष्टबाहुः' इत्यन्तग्रन्थेनेति भावः ।

*भा०र०*— 'प्रकृतोपयुक्त एव' इत्यत्र युक्तिः **उत्कर्षस्येति** । **तं** श्रुतिशेषलब्धमर्थम् । विरोधिप्रत्यक्षागमाभ्यामप्युत्कर्षाभावस्य शङ्कितत्वात् कथं भाष्ये युक्तिमात्रग्रहणम् ? इत्यत आह **युक्तिभिरित्युपलक्षणमिति** । विरुद्धप्रत्यक्षागमावपि युक्तिपदेन लक्षणया ग्राह्यौ इत्यर्थः । न केवलं

आजानसिद्धप्रद्वेषेणोत्कर्षापलाप इति भाष्यस्थापिपदार्थ इति **आहुः** । **केचित्तु** 'उपलक्षणम्' इत्युक्त्या भाष्ये अपिशब्दपाठो लेखकदोषमूल इति सूचितमित्यप्याहुः । अन्ये तु 'एतदपलापोऽपि' इत्यपिशब्दो भिन्नक्रमः । न केवलम् उत्कर्षस्य द्वेषो न युक्तः, अपि त्वपलापोऽपीति समुच्चयार्थ इति वदन्ति । 'अविद्यमानत्वादि कल्पयति' इति भाष्यमनुसृत्य अपलापपदार्थमाह **अविद्यमान-त्वादिकल्पनमिति** । आदिपदेन अनिर्वाच्यत्वं गृह्यते ।

**अत इत्युक्तमेवेति** । 'न तत् प्रमाणम्' इत्यत्र हेतुसमर्पकेण अतःशब्देनोक्तमित्यर्थः । 'प्रत्यक्षादेः' इत्यत्र आदिशब्देन विरोध्यागमग्रहः । हेतुमेवाह **बाधकाभावादिति** । वेदविरोधाद् युक्तिप्रत्यक्षागमानामसत्त्वम्, तथा चोत्कर्षे बाधकाभावः, ततश्च बाधकाभावात् सदेव माहात्म्यं वेदैरुच्यत इति समग्रभाष्यार्थो द्रष्टव्य इति भावः । ननूत्कर्षस्य सत्त्वोपसंहाराय प्रवृत्ते भाष्ये 'सन्नेवोत्कर्षो वेदैरुच्यते' इत्येव वक्तव्यम् । तत्किमर्थं 'सदेव' इति नपुंसकलिङ्गप्रयोगः ? इत्यत आह **उत्कर्षस्य सत्त्व इति** । उत्कर्षस्य सत्त्वे या श्रुतिरुपन्यस्ता 'तच्चापि ह्यस्त्येव, न चात्र शङ्का' इति, तत्र 'तत्' इति नपुंसकलिङ्गतच्छब्दव्याख्यानाय 'माहात्म्यम्' इत्यभाषतेत्यर्थः । 'उत्कर्षस्य प्रकृतत्वेऽपि' इति क्वचित् पाठः । *भावप्रदीपिकायां तु* 'न विष्णुः सर्वोत्कृष्टः पुरुषत्वात् सम्मतवत्' इति युक्तिविरोधो भगवतः सर्वोत्कर्षे इत्यत आह अत इति । उक्तश्रुतेरेवेत्यर्थः । ननु युक्तेरपि स्वतन्त्रप्रमाणत्वात् तद्विरुद्धश्रुतिबोधितं भगवन्माहात्म्यप्रसक्तिं न स्यात् ? इत्यत आह अत इति । उपजीव्यवेदविरोधादेवेत्यर्थः इति व्याख्यातम् ।

**प्रतिपन्नस्य** प्रतीतस्य 'विद्यमानत्वादिकम्' इत्यत्रादिशब्देनानिर्वाच्यत्वं गृह्यते । **स्वतः प्रामाण्यात्** प्रामाण्यस्य स्वतस्त्वात् । 'तत्र' इत्यनुवादः, 'सत्त्वे' इति व्याख्या । **उभयत्र** उत्कर्षे तत्सत्त्वे च । **दोषः** वाक्यभेदप्रसङ्गदोषः। **तत्** उभयत्र महातात्पर्याभावेन वाक्यभेदो नास्तीत्येतत्। **तस्यां** सौकरायणाख्यायाम् । **इदमुक्तमिति** । उत्कर्षसत्त्वयोः धर्मधर्मिभावेन भेदमङ्गीकृत्य उभयत्र महातात्पर्याभावेन वाक्यभेदो नास्तीत्येतदुक्तमित्यर्थः । 'तयोः' इत्यनुवादः, 'उत्कर्षस्य तत्सत्त्वस्य च' इति व्याख्यानम् । ननु भगवदितरत्रापि वस्तुस्वरूपतत्सत्त्वयोः अभेदात् किं विशिष्याभिधीयते 'अनन्ते' इति ? इत्यत आह **प्रकृतत्वादेवेति** । 'विष्णोरनन्तस्य' इत्युदाहृतश्रुतौ प्रकृतत्वा-दित्यर्थः; नत्वितरत्र धर्मधर्मिणोरभेदाभावादित्येवशब्दः ।

'उत्कर्षसत्त्वे महदपि वा तत्परत्वम्' इत्यङ्गीकारे वाक्यभेददोषो दुष्परिहरः ? इत्यतो वाशब्द-द्योतितानास्थातात्पर्यं दर्शयति **एतदुक्तं भवतीति** । **उदासीनं** वस्तुसत्त्वासत्त्वानवगाहि । प्रकृतम्

अनुसन्धापयन्नाह **सत्त्वासत्त्वलक्षणाविति** । **तात्पर्यान्तरकल्पनयेति** । उत्कर्ष इव तत्सत्त्वे पृथक् महातात्पर्यं न कल्पनीयम् । वस्तुस्वरूपमहातात्पर्यस्यैव तत्सत्त्वमहातात्पर्यरूपत्वादिति भावः । 'श्यामोऽथवा हृदये सोऽष्टबाहुर्ध्येयः स वै लोहितादित्यवर्णः' इत्यादिना श्यामरूपत्व-अष्टबाहुत्वाद्याकारसमभिधानादिति भाष्यार्थः । तर्हि 'अरूपम्' इत्यादेः का गतिः ? इत्याशङ्क्याह **एतच्चेति** । अरूपित्वादिकं लौकिकरूपाद्यभावपरत्वम् 'अरूपत्वादेस्तु' इत्यादिना द्वादशाध्याये सप्रपञ्चं निरूपितमित्यर्थः ।

**भाष्यम्**

**युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् । अज्ञानसम्भवात् । न तु स्वतः प्रमाणस्य वेदस्य आभासत्वम् । अदर्शनं च सम्भवत्येव पुंसां बहूनामपि अज्ञानात् । तर्हि अस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम् । यतस्तत्रैवाह "नैतद्विरुद्धा वाचो नैतद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापतिरुवाच" इति । तद्विरुद्धं च जीवसाम्यम् ।**

*प०टी०*— ननु प्रमाणत्वाविशेषाद्युक्तिविरोधाच्छ्रुतिरेवाभासा किं न स्यात् ? इत्यत आह **युक्तं चेति** । तर्हि शैवादिवाक्यविरुद्धत्वाच्छ्रुतिराभासेत्यत आह **अदर्शनं चेति** । तर्ह्यदर्शन-सम्भवादेव शास्त्रान्तरे भगवदुत्कर्षविरोधसम्भवात् तद्विरोधेनैतच्छ्रुतेराभासत्वमित्याशङ्क्याह **तर्हीति** । अस्तु वेदानां भगवदुत्कर्षे तत्सत्त्वे च तात्पर्यम् । ततश्च किं प्रकृते समायातम् ? इत्यत आह **तदिति** । **तच्छब्दात्** महातात्पर्यम् ।

*प्र०दी०*— वेदविरोधात् युक्त्यादेराभासत्वमित्युक्तम् । तदयुक्तम् । नियामकाभावात् । विपर्ययस्यापि सुवचनादित्यत आह **युक्तं चेति** । **युक्तं** सम्भावितम् । **अज्ञानसम्भवात्** अज्ञान-मूलत्वसम्भवात् । अज्ञानमुपाधिव्यभिचारादिविषयम् । स्वतःप्रमाणस्यापौरुषेयतया पुरुषगुणानपेक्ष-प्रमाणभावस्य । युक्तेरज्ञानमूलत्वसम्भावना निर्बीजेत्यत आह **अदर्शनं चेति** । **सम्भवति** शङ्कार्ह-मित्यर्थः ।

एतदुक्तं भवति । वेदस्य युक्त्यादेश्च, परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तौ अन्यतरस्य आभासत्वे कल्पनीये युक्त्यादेरेव तत्कल्प्यं सम्भवात् । न तु वेदस्यासम्भवात् । निरवकाशेन सावकाशस्य बाधदर्शनादिति । पुरुषेष्वदर्शनमाशङ्कमानानामतिप्रसङ्गमाशङ्क्य निषेधति **तर्हीति** ।

**विपर्ययः** भगवद्गुणोत्कर्षस्य । 'सर्ववाचाम्' इति श्रुत्यैवोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह **यत इति** । तस्यां **एव** श्रुतौ **आह** वेदपुरुषः । **एतद्विरुद्धाः** भगवद्गुणोत्कर्षविरुद्धाः ।

'उत्कर्षे हि' इत्यादिनोक्तमुपसंहरति **तदिति** । सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं **तद्विरुद्धं जीवसाम्यं** जीवस्यैकात्म्यम् ।

*भा०दी०*— **अदर्शनमाशङ्कमानानामिति** । उपाध्यायादियुक्तिदोषाणामदर्शनमित्यर्थः । **सर्ववाचामिति श्रुत्यैवेति** । प्राग्भाष्योक्तश्रुत्यैव सर्वश्रुत्यादौ विपर्ययाभावस्योक्तत्वात् इत्यर्थः ।

*भा०र०*— उभयोः प्रमाणत्वे एकविरोधेनापरस्याभासत्वे नियामकाभाव इत्येतदुपपादयति **विपर्ययस्यापीति** । युक्तिविरोधेन वेदाभासत्वस्यापि सुखेन वक्तुं शक्यत्वादित्यर्थः । ननु 'युक्तम्' इति युक्तिनिश्चितमित्यर्थः । 'अज्ञानसम्भवात्' इति च सम्भावकं भाषितम् । सम्भावकेन च सम्भव एवोत्पत्तुमर्हति, न निश्चयः ? इत्याशङ्क्यात्र विवक्षितं युक्तशब्दार्थमाह **युक्तं सम्भावितमिति** । अचेतनयुक्त्यादेः अज्ञानसम्बन्धः कथम् ? इत्यत आह **अज्ञानमूलत्वसम्भवादिति** । घटादि-विषयकाज्ञानस्य युक्त्याद्याभासे मूलत्वं कथं स्यात् ? इत्यत अज्ञानविषयं दर्शयति **अज्ञानं चेति** । आदिशब्देन प्रबलप्रमाणविरोधशब्दितकालात्ययापदिष्टत्वपरिग्रहः ।

करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वं नाम प्रमाणजननशक्तेर्ज्ञानजननशक्त्यभिन्नत्वम् । तच्च करणत्रयसाधारणमिति किं विशिष्याभिधीयते 'स्वतः प्रमाणस्य वेदस्य' इति वेदमात्रविषयं स्वतःप्रामाण्यं दर्शयति **अपौरुषेयतयेति** । **गुणः** आप्तोक्तत्वं **प्रमाणभावस्य** प्रमाणत्वस्य । इदमेव वेदप्रामाण्यस्य स्वतस्त्वमिति भावः । **निर्बीजेति** । सम्भावना हि सम्भावकसद्भावे स्यात् । न च अत्र तथाविधं सम्भावकमुपलभामह इति शङ्कितुर्हृदयम् । 'अदर्शनम्' इति भाष्यपदस्य 'उपाधि-व्यभिचारादिविषयकमज्ञानम्' इत्यर्थः । सम्भवति = सम्यग्भवत्येवेति कथं निर्धारणम् ? पुरुषे-ष्वज्ञानाभावस्यापि प्रेक्षावत्सु सम्भवात्, इत्यतः प्रकृतानुगुणविवक्षितमर्थमाह **शङ्कार्हमिति** । प्रायेण पुंसाम् अज्ञानदर्शनाद् अत्रानुमानकल्पकस्य पुंस्त्वादिति भावः ।

ननु करणेषु स्वतःप्रामाण्यं विविधं व्यवस्थापितमिति वैषम्यमात्रमायातम्, न पुनर्वेदविरोधेन युक्त्यादेराभासत्वे नियामकमुक्तम् ? इत्यतो भाष्यभावमाह **एतदुक्तं भवतीति** । **सम्भवात्** अज्ञानमूलकत्वस्य शङ्कार्हत्वात् । तथा च तस्य सावकाशत्वम् । **असम्भवात्** तत्र पुरुषाभावेन तदज्ञानमूलत्वासम्भवात् निरवकाशमिति भावः । **अदर्शनम्** अज्ञानम् **आशङ्कमानानां** सिद्धान्ति-नाम् । **सर्ववाचामिति श्रुत्यैवेति** । 'अवाच्योत्कर्षे महत्त्वात् सर्ववाचाम्' इति पूर्वोदाहृतश्रुत्यैव

अनुसन्धापयन्नाह **सत्त्वासत्त्वलक्षणाविति** । **तात्पर्यान्तरकल्पनयेति** । उत्कर्ष इव तत्सत्त्वे पृथक् महातात्पर्यं न कल्पनीयम् । वस्तुस्वरूपमहातात्पर्यस्यैव तत्सत्त्वमहातात्पर्यरूपत्वादिति भावः । 'श्यामोऽथवा हृदये सोऽष्टबाहुर्ध्येयः स वै लोहितादित्यवर्णः' इत्यादिना श्यामरूपत्व-अष्टबाहुत्वाद्याकारसमभिधानादिति भाष्यार्थः । तर्हि 'अरूपम्' इत्यादेः का गतिः ? इत्याशङ्क्याह **एतच्चेति** । अरूपित्वादिकं लौकिकरूपाद्यभावपरत्वम् 'अरूपत्वादेस्तु' इत्यादिना द्वादशाध्याये सप्रपञ्चं निरूपितमित्यर्थः ।

**भाष्यम्**

**युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् । अज्ञानसम्भवात् । न तु स्वतः प्रमाणस्य वेदस्य आभासत्वम् । अदर्शनं च सम्भवत्येव पुंसां बहूनामपि अज्ञानात् । तर्हि अस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम् । यतस्तत्रैवाह "नैतद्विरुद्धा वाचो नैतद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापतिरुवाच" इति । तद्विरुद्धं च जीवसाम्यम् ।**

*प०टी०*— ननु प्रमाणत्वाविशेषाद्युक्तिविरोधाच्छ्रुतिरेवाभासा किं न स्यात् ? इत्यत आह **युक्तं चेति** । तर्हि शैवादिवाक्यविरुद्धत्वाच्छ्रुतिराभासेत्यत आह **अदर्शनं चेति** । तर्ह्यदर्शन-सम्भवादेव शास्त्रान्तरे भगवदुत्कर्षविरोधसम्भवात् तद्विरोधेनैतच्छ्रुतेराभासत्वमित्याशङ्क्याह **तर्हीति** । अस्तु वेदानां भगवदुत्कर्षे तत्सत्त्वे च तात्पर्यम् । ततश्च किं प्रकृते समायातम् ? इत्यत आह **तदिति** । **तच्छब्दात्** महातात्पर्यम् ।

*प्र०दी०*— वेदविरोधात् युक्त्यादेराभासत्वमित्युक्तम् । तदयुक्तम् । नियामकाभावात् । विपर्ययस्यापि सुवचनादित्यत आह **युक्तं चेति** । **युक्तं** सम्भावितम् । **अज्ञानसम्भवात्** अज्ञान-मूलत्वसम्भवात् । अज्ञानमुपाधिव्यभिचारादिविषयम् । स्वतःप्रमाणस्यापौरुषेयतया पुरुषगुणानपेक्ष-प्रमाणभावस्य । युक्तेरज्ञानमूलत्वसम्भावना निर्बीजेत्यत आह **अदर्शनं चेति** । **सम्भवति** शङ्कार्ह-मित्यर्थः ।

एतदुक्तं भवति । वेदस्य युक्त्यादेश्च, परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तौ अन्यतरस्य आभासत्वे कल्पनीये युक्त्यादेरेव तत्कल्प्यं सम्भवात् । न तु वेदस्यासम्भवात् । निरवकाशेन सावकाशस्य बाधदर्शनादिति । पुरुषेष्वदर्शनमाशङ्कमानानामतिप्रसङ्गमाशङ्क्य निषेधति **तर्हीति** ।

**विपर्ययः** भगवद्गुणोत्कर्षस्य । 'सर्ववाचाम्' इति श्रुत्यैवोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह **यत इति** । तस्यां **एव** श्रुतौ **आह** वेदपुरुषः । **एतद्विरुद्धाः** भगवद्गुणोत्कर्षविरुद्धाः ।

'उत्कर्षे हि' इत्यादिनोक्तमुपसंहरति **तदिति** । सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं **तद्विरुद्धं जीवसाम्यं** जीवस्यैकात्म्यम् ।

*भा०दी०*— **अदर्शनमाशङ्कमानानामिति** । उपाध्यायादियुक्तिदोषाणामदर्शनमित्यर्थः । **सर्ववाचामिति श्रुत्यैवेति** । प्राग्भाष्योक्तश्रुत्यैव सर्वश्रुत्यादौ विपर्ययाभावस्योक्तत्वात् इत्यर्थः ।

*भा०र०*— उभयोः प्रमाणत्वे एकविरोधेनापरस्याभासत्वे नियामकाभाव इत्येतदुपपादयति **विपर्ययस्यापीति** । युक्तिविरोधेन वेदाभासत्वस्यापि सुखेन वक्तुं शक्यत्वादित्यर्थः । ननु 'युक्तम्' इति **युक्तिनिश्चितमित्यर्थः** । 'अज्ञानसम्भवात्' इति च सम्भावकं भाषितम् । सम्भावकेन च सम्भव एवोत्पत्तुमर्हति, न निश्चयः ? इत्याशङ्क्यात्र विवक्षितं युक्तशब्दार्थमाह **युक्तं सम्भावितमिति** । अचेतनयुक्त्यादेः अज्ञानसम्बन्धः कथम् ? इत्यत आह **अज्ञानमूलत्वसम्भवादिति** । घटादि-विषयकाज्ञानस्य युक्त्याद्याभासे मूलत्वं कथं स्यात् ? इत्यत अज्ञानविषयं दर्शयति **अज्ञानं चेति** । आदिशब्देन प्रबलप्रमाणविरोधशब्दितकालात्ययापदिष्टत्वपरिग्रहः ।

करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वं नाम प्रमाणजननशक्तेर्ज्ञानजननशक्त्यभिन्नत्वम् । तच्च करणत्रयसाधारणमिति किं विशिष्याभिधीयते 'स्वतः प्रमाणस्य वेदस्य' इति वेदमात्रविषयं स्वतःप्रामाण्यं दर्शयति **अपौरुषेयतयेति** । **गुणः** आप्तोक्तत्वं **प्रमाणभावस्य** प्रमाणत्वस्य । इदमेव वेदप्रामाण्यस्य स्वतस्त्वमिति भावः । **निर्बीजेति** । सम्भावना हि सम्भावकसद्भावे स्यात् । न च अत्र तथाविधं सम्भावकमुपलभामह इति शङ्कितुर्हृदयम् । 'अदर्शनम्' इति भाष्यपदस्य 'उपाधि-व्यभिचारादिविषयकमज्ञानम्' इत्यर्थः । सम्भवति = सम्यग्भवत्येवेति कथं निर्धारणम् ? पुरुषे-ष्वज्ञानाभावस्यापि प्रेक्षावत्सु सम्भवात्, इत्यतः प्रकृतानुगुणविवक्षितमर्थमाह **शङ्कार्हमिति** । प्रायेण पुंसाम् अज्ञानदर्शनाद् अत्रानुमानकल्पकस्य पुंस्त्वादिति भावः ।

ननु करणेषु स्वतःप्रामाण्यं विविधं व्यवस्थापितमिति वैषम्यमात्रमायातम्, न पुनर्वेदविरोधेन युक्त्यादेराभासत्वे नियामकमुक्तम् ? इत्यतो भाष्यभावमाह **एतदुक्तं भवतीति** । **सम्भवात्** अज्ञानमूलकत्वस्य शङ्कार्हत्वात् । तथा च तस्य सावकाशत्वम् । **असम्भवात्** तत्र पुरुषाभावेन तदज्ञानमूलत्वासम्भवात् निरवकाशमिति भावः । **अदर्शनम्** अज्ञानम् **आशङ्कमानानां** सिद्धान्ति-नाम् । **सर्ववाचामिति श्रुत्यैवेति** । 'अवाच्योत्कर्षे महत्त्वात् सर्ववाचाम्' इति पूर्वोदाहृतश्रुत्यैव

सर्वशब्दोपादानेन अस्मदधीतानाम् अनधीतानां च श्रुतिवाचां ग्रहणाद् अनधीतश्रुतावपि गुणोत्कर्ष-विपर्ययो नास्तीत्यर्थस्योक्तत्वादित्यर्थः । **अन्यमप्याहेति** । उक्तसर्वार्थावधारणार्थाय द्विरुक्तेरत्र श्रवणेन 'पूर्वोदाहृतश्रुतौ सर्वशब्दः सङ्कुचितपरोऽस्तु ?' इति शङ्कानर्हपरिहारमाहेत्यर्थः । 'तत्रैव' इत्यस्यार्थः **तस्यामेवेति** । 'आह' इत्याख्यातोपात्तं कर्तारं निदर्शयति **वेदपुरुष इति** । समान-श्चासावात्मा च सात्मा, तस्य भावः सात्म्यम् । समानशब्दश्च 'समानग्रामोऽयम्' इत्यादाविव एकार्थः । 'समानः' इति योगविभागात् 'साधर्म्यम्' इत्यादाविव समानशब्दस्य सभाव इति भावेन तदनूद्य व्याचष्टे **जीवस्यैकात्म्यमिति** ।

भाष्यम्

**'आभास एव च' इति चोक्तम् । "जनमेजय उवाच— "बहवः पुरुषा ब्रह्मन् उताहो एक एव तु । को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ॥ वैश-म्पायन उवाच— नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह । बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥" इति मोक्षधर्मे ।**

*प०टी०*— न केवलं महातात्पर्ययुक्तिविरुद्धमैक्यम्, किन्तु सूत्रस्मृतिविरुद्धं चेत्याह **आभास एवेति** ।

*प्र०दी०*— सूत्रेतिहासविरुद्धं चेत्याह **आभास इति** । **बहवः** इति पक्षेऽपि किं सर्वे समाः, **उत एकः** श्रेष्ठः । द्वितीये **कः** असौ **अत्र** पुरुषेषु श्रेष्ठः ? कथं च **श्रेष्ठः** ? **तं तथा वक्तुमर्हति** इति । **एतत्** एतस्मिन् जगति । किं तु बहवः । तेषां **बहूनां पुरुषाणां** मध्ये यो **योनिः** कारणभूतः **सः** श्रेष्ठः । तथा च **तं पुरुषं** तथा **व्याख्यास्यामि** । **विश्वं** व्याप्तम् ॥

*भा०र०*— **सूत्रेति** । यद्यपि 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतौ जीव ईश्वरस्याभासः = प्रतिबिम्ब एव प्रतिपन्न इति, न मत्स्यादिसाम्यम् इत्यर्थप्रतिपादनाय प्रवृत्तमिदं सूत्रम्, न पुनरीश्वरस्य जीवैक्यनिषेधाय । तथापि 'आभासत्वेन यदा साम्यमपि न, तदा किमु वक्तव्यं सात्म्यं नास्ति' इत्याशयेन तत्सूत्रोदाहरणमिति भावः । **इतिहासः** भारतम् । न केवलं महातात्पर्ययुक्तिविरुद्धमिति चशब्दः । 'अत्र' इत्यनुवादः, 'पुरुषेषु' इति व्याख्या । **श्रेष्ठः** पुरुषः कोऽसौ ? **तं** श्रेष्ठं **तथा** तेन प्रकारेण । अध्याहारेण योजयति **किन्तु बहव इति** । 'एष्टव्याः' इति शेषः । **श्रेष्ठो यथा च** येन

प्रकारेण श्रेष्ठः **तं** श्रेष्ठं **तथा** तेन प्रकारेण । विश्वाभेदस्य बहुमानविरुद्धत्वात्, पूर्णत्वस्य 'गुणाधिकम्' इत्यनेन प्राप्तत्वात्, विवक्षितमर्थमाह **विश्वं व्याप्तमिति** ।

**भाष्यम्**

**न चैतत् सर्वं स्वप्नेन्द्रजालादिवत् । "वैधर्म्याच्च न स्वप्नादिवत्" इति भगवद्वचनम् । न च स्वप्नवदेकजीवकल्पितत्वे मानं पश्यामः । विपर्यये मा चोक्ता द्वितीये । उक्तं च आयास्यशाखायाम्— "स्वप्नो ह वा अयं चञ्चलत्वान्न स्वप्नो न हि विच्छेदो एतदिति ॥" इति ।**

*प०टी०*— ननु भगवतो बहुपुरुषयोनित्वादिकमुक्तम् । तत्सर्वमपि माययैवेति किं न स्यात् ? इत्यत आह **न चेति** । न स्वप्नादिवदीश्वरमाहात्म्यं मायिकमित्याह **न चेति** । यदि स्वप्नादिवत् तर्ह्येककल्पितं स्यात् । न च तत्र प्रमाणं पश्याम इत्यर्थः । न केवलं मायिकत्वे प्रमाणाभावः किन्त्वमायिकत्वे च सन्ति प्रमाणानीत्याह **विपर्यय इति** । ननु जगतः पुराणादौ स्वप्नसमत्वोक्तेः जगत्कर्तृत्वाद्यपि मायिकमेवेत्यत आह **उक्तं चेति** । **चञ्चलत्वात् स्वप्नः** । **न** साक्षात् **स्वप्नः** । यस्मान्नैतस्य **विच्छेदो** बाध इत्यर्थः ।

*प्र०दी०*— स्यादेतत् । **सर्वं जगत् स्वप्नवत्** एकाज्ञानकल्पितमित्येके । **इन्द्रजालवत्** अनेकाज्ञानकल्पितमित्यपरे । अपकृष्टापेक्षश्च उत्कर्षः । तथाच अपकृष्टस्य विश्वस्य मिथ्यात्वात् उत्कर्षस्य सत्त्वं कथं स्यात्? कथं च तत्र सर्ववेदानां महातात्पर्यम्? इत्यत आह **न चेति** । 'भगवद्वचनं यतः' इति शेषः । इतोऽप्येवमेवेत्याह **न चेति** । **कल्पितत्वे** विश्वस्य । एवं बहुजीव-कल्पितत्वेऽपीति वाच्यम् । **विपर्यये** सत्यत्वे । तर्हि कथं विश्वस्य पुराणेषु स्वप्नादिसाम्यमुच्यत इत्यत आह **उक्तं च इति** । अयं प्रपञ्चः स्वप्न इवोच्यते । **चञ्चलत्वात्** अनित्यत्वात् विकारि-त्वाच्च । न तु स्वप्नः साक्षान्मिथ्या इति यावत् । कुतः ? **एतत्** एतस्य **विच्छेदः** बाधो **न हि** इत्यर्थः । यद्यपि स्वप्नः सत्यः। तथाऽप्यङ्गीकारवादोऽयम् । मिथ्यार्थप्राचुर्याद्वा ।

*भा०र०*— प्रकृतार्थेन सङ्गतिं वदन्, दृष्टान्तद्वयोक्तिकृत्यं च सूचयन्नाह **स्यादेतदित्यादिना**। **एकाज्ञानकल्पितम्** एकजीवाज्ञानकल्पितम् । **कथमिति** । 'शशविषाणादुत्कर्षो गोविषाणस्य' इत्यत्र प्रतियोगिभूतशशविषाणस्य मिथ्यात्वे तत्प्रतियोगिकगोविषाणोत्कर्षो यथा सन्न भवति, तथा प्रकृतेऽपि जगन्मिथ्यात्वे तत्प्रतियोगिकोत्कर्षः कथं सन् स्यादिति भावः । **तत्र** असत्यर्थे । **भगव-**

**द्वचनं** ब्रह्मसूत्ररूपम् । **इतोऽपीति** । न केवलं ब्रह्मसूत्रविरुद्धत्वात् स्वप्नेन्द्रियजालवत् जगन्मिथ्यात्वं अयुक्तम् । किन्तु हेत्वन्तराद् = मानाभावरूपादपीत्यर्थः । 'एकजीवकल्पितत्वे' इत्यत्र प्रकृतोपयोगाय शेषमाह **कल्पितत्वे विश्वस्येति** । 'विपर्यये = कल्पितत्वस्य विपर्यये' इत्यस्य निर्गलितमाह **सत्यत्व इति** । *भावप्रदीपिकायां तु* ननु भगवतो बहुपुरुषयोनित्वादिकं उक्तम्, तत् सर्वं माययैवेति किं न स्यात् ? इत्यत आह 'न चे'ति । न स्वप्नादिवद् ईश्वरमाहात्म्यं मायिकमित्याह 'न च स्वप्नवदि'ति । यदि स्वप्नादिवदिष्यते तर्ह्येककल्पितं स्यात् । न च तत्र प्रमाणं पश्याम इत्यर्थः । न केवलं मायिकत्वे प्रमाणाभावः, किन्त्वमायिकत्वे च सन्ति प्रमाणानीत्याह 'विपर्यय' इति ।

**तर्हि** भगवन्माहात्म्यस्यामायिकत्वे **पुराणेषु** 'स्वप्नमनोरथो यथा' इत्यादि भागवतादिषु । श्रौत'वा'शब्दार्थः 'इव' इति । भूधरादेः विद्युदादेरिव चञ्चलत्वाभावादाह **अनित्यत्वाद् विकारित्वाद्** । एकप्रकारेणानवस्थानाच्च इति । इदं च हेतुद्वयं श्रौतचशब्दसमुच्चितमिति ज्ञातव्यम् । चशब्दः तुशब्दार्थोऽपीत्याशयेनोक्तम् **न तु स्वप्नः साक्षादिति** । अनुपचारेण । 'स्वप्न इव' इति स्वप्नसादृश्योक्त्यैव स्वप्नभेदस्य प्राप्तत्वात् वियदादिप्रपञ्चस्य परेणापि स्वप्नार्थभेदाङ्गीकारात् 'न च स्वप्नः' इति किमुच्यते ? इत्यत आह **साक्षान्मिथ्येति यावदिति** । स्वप्न इव स्वरूपतो धर्मतश्च मिथ्याभूत इत्यर्थः । साक्षान्मिथ्या = मुख्यतो मिथ्या इत्यपि आहुः । अनुपचारेण स्वप्नो न भवतीत्यस्य तात्पर्यं मिथ्येतीत्यपि आहुः । **स्वप्नः सत्य इति** । तथा च तत्साम्योक्तिर्नानिष्टेति अनित्यत्वादिना तदुपपादनं व्यर्थमिति भावः । **अङ्गीकारवाद इति** । परोक्तं स्वप्नमिथ्यात्वमङ्गीकृत्य पुराणेषु तत्साम्योक्त्या प्रसक्तं विश्वमिथ्यात्वं निरसितुं इयमुक्तिरित्यर्थः । न च मिथ्यार्थस्यानित्यत्वाद्यभावः । परमते मिथ्यार्थस्याविद्योपादानकत्वात्, ज्ञाननाश्यत्वाच्च अनित्यत्वादेरभ्युपगमादिति भावः । स्वमतेनाह **मिथ्यार्थेति** । तथा च मल्लग्रामादिवत् प्राचुर्यपेक्षया व्यपदेशात् पुराणेषु स्वप्नसाम्योक्त्या **प्रपञ्चस्य** मिथ्यात्वं प्रसज्यते । अतस्तदुपपादनं कृतमिति भावः । न च स्वमते मिथ्यार्थस्यात्यन्तासत्त्वात् कथमनित्यत्वादिकमिति वाच्यम् । अनित्यत्वं = नित्यत्वाभावः, विकारित्वम् = एकप्रकारेणानवस्थानमित्यभ्युपगमादिति *केचिद्* व्याख्यातवन्तः ।

भाष्यम्

**नायं दोषः । न हि ईश्वरस्य जीवैक्यमुच्यते, जीवस्य हि ईश्वरैक्यमिति ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वविरोध्यैक्यम् । तथा च**

**माधुच्छन्दसश्रुतिः— "ऐक्यं चापि प्रातिबिम्ब्येन विष्णोः जीवस्यैतद् ऋषयो वदन्ति" इति ।**

***प०टी०***— ननु कथं जीवस्येशप्रतिबिम्बता ? अस्मीत्यहङ्ग्रहोपासनायाः श्रुतत्वादित्यत आह **नायमिति** । जीवेश्वरैक्ये कथितेऽपि को गुणः ? इत्यत आह **तदपीति** । न साक्षादद्वैत उच्यते। साक्षादद्वैताभिप्राये जीवैक्यमीश्वरस्याप्युच्येत । अतो न प्रतिबिम्बत्वविरुद्धमित्यर्थः । केनोपाधिना ऐक्यमुच्यते ? इत्यत आह **तथा चेति** ।

***प्र०दी०***— ननु जीवस्य ब्रह्मणि 'अहं ब्रह्मास्मि' इत्यहङ्ग्रहोपास्तिस्तावत् कर्तव्या । जीवश्च न सर्वोत्कृष्टः । ततश्च तेनैकीभूतस्येश्वरस्य कथं सर्वोत्कर्ष इत्यत आह **नायमिति** । बुद्धिस्थस्य 'अयं इति' परामर्शः । कुतः ? इत्यत आह **न हीति** । किं तर्ह्युच्यत इत्यत आह **जीवस्य हीति** ।

स्यादयं दोषः, यदि 'अहं ब्रह्मास्मि' इत्यादिना ईश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यम् उच्येत । न चैवम् । किं तु जीवमुद्दिश्य तस्येश्वरैक्यम् । अन्यथा ब्रह्म मदात्मकं भवतीति निर्देशप्रसङ्गात् इति । सत्यमेतज्जीवस्येश्वरैक्यमुच्यत इति । तथाऽपि नोक्तदोषपरिहारः । यदीश्वरः वस्तुतः सर्वोत्कृष्टः स्यात् तदा कथं जीवस्य तदैक्यं स्यात् ? तस्यानुत्कृष्टत्वेन अनुभवात् । अतो जीवस्य ब्रह्मणि श्रुतस्य अहङ्ग्रहोपासनस्यान्यथानुपपत्त्येश्वरस्य सर्वोत्कृष्टत्वं मिथ्येत्यङ्गीकार्यमित्यत आह **तदिति** । यज्जीवस्य **ईश्वरैक्यम्** उच्यते तदपि **न निरुपाधिकं** निरुपचरितम् । किं तु उपचारेणैवमुच्यते ।

उपचारबीजं सहेतुकमाह **अत इति** । यतः साक्षादैक्यं नार्थः । अतः 'अहं ब्रह्मास्मि' इत्यादौ उच्यमानम् **ऐक्यं** प्रतिबिम्बत्वविरोधि प्रतिबिम्बत्वादन्यत्र भवति । किं तु प्रतिबिम्बत्वमेवेत्यर्थः । ननु साक्षादैक्यं कुतो नार्थः ? कुतश्चोपचारोऽपि प्रतिबिम्बत्वनिमित्त इत्यत आह **तथा चेति** । **जीवस्य अपि विष्णोरैक्यं** यद् **ऋषयो वदन्ति** तत् **प्रतिबिम्बेन एव** निमित्तेन हीत्यर्थः ।

***भा०दी०***— **उपचारबीजं सहेतुकमाहेति** । 'अतः' इत्यनेन साक्षादैक्यार्थत्वाभावरूपबीजं प्रतिबिम्बत्वरूपहेतुसहितमाहेत्यर्थः ।

***भा०र०***— **न सर्वोत्कृष्ट इति** । तत्त्वेनाननुभूयमानत्वादिति भावः । **तेन** असर्वोत्कृष्टतयाऽनुभूयमानेन जीवेन । **कुत इति** । असर्वोत्कृष्टजीवाभिन्नेश्वरस्य कथं सर्वोत्कर्ष इत्याक्षेपलक्षणो दोषो नेति कुत इत्यर्थः । वाक्यद्वयलब्धं तात्पर्यं दर्शयति **स्यादयमिति** । **अन्यथा** जीवमुद्दिश्य तस्येश्वरैक्यं नोच्यते, किन्तु ईश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यमुच्यत इतिं अङ्गीकारे 'अहं ब्रह्मास्मि' इति

निर्देशो न स्यात् । तत्राहंपदार्थप्रत्यक्चैतन्यरूपं जीवमुद्दिश्य तस्य 'ब्रह्मास्मि' इति पराक्चैतन्य-रूपेश्वराभेदो हि बोध्यते । स्याच्च 'ब्रह्म मदात्मकं भवति' इति निर्देश इत्यपि प्रसङ्गादित्यर्थः । 'इति'शब्दो वाक्यद्वयभेदोक्तिसमाप्तौ ।

'न निरुपाधिकम्' इत्युक्ते 'सोपाधिकं जीवेश्वरैक्यम्' इत्यङ्गीकृतं स्यात् । तच्च 'जीवेश्वरौ सर्वथा भिन्नौ' इति स्वसिद्धान्तविरोधि ? इत्यत आह **निरुपचरितमिति**। **उपचारबीजं** गौणार्थत्वे निमित्तं प्रतिबिम्बत्वरूपहेतुसहितमाहेत्यर्थः । व्यवहितत्वाद् अन्वयं वदन् अपिशब्दं 'जीवस्य' इत्यनेन संयोजयति **जीवस्यापीति** । अनुत्कृष्टत्वेन दुःखित्वेन चानुभूयमानस्यापीत्यर्थः ।

**भाष्यम्**

**अहङ्ग्रहोपासने च फलाधिक्यम् आग्निवेश्यश्रुतिसिद्धम्— "अहङ्ग्रहोपासकस्तस्य साम्यम् अभ्याशो ह वा अश्नुते नात्र शङ्का" इति । "तदीयोऽहमिति ज्ञानमहङ्ग्रह इतीरितः" इति वामने । "तद्वशत्वात्तु सोऽस्मीति भृत्यैरेव न तु स्वतः" इति च । प्रातिबिम्ब्येन सोऽस्मि भृत्यश्च इति भावना । तथा हि आयास्यशाखायाम्— "भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मीत्येवं ह्युपास्यः परमः पुमान् सः" इति । प्रातिबिम्ब्यं च तत्साम्यमेव ॥ २३-२४ ॥**

*प०टी०*— नन्वेवं सन्दिग्धार्थोऽहङ्ग्रह एव किमर्थम् ? इत्यत आह **अहमिति** । **अभ्याशः** कालसामीप्येन । अहङ्ग्रहस्योक्तार्थत्वे स्मृतिं चाह **तदीयोऽहमिति** । ननु तथाऽपि 'भृत्यस्य 'राजाऽहम्' इत्युक्तेऽपराधवत्, अहङ्ग्रहेऽपराधः स्यादित्येतत् सप्रमाणकं परिहरति **प्रातिबिम्ब्येन** इति । ननु तर्हि प्रतिबिम्बभृत्याभ्यां भेदाभेदौ स्यातामित्यत आह **प्रातिबिम्ब्यमिति** ॥२३-२४॥

*प्र०दी०*— इतश्चोपचारेणैवाहङ्ग्रहोपासनमित्याह **अहमिति** । **फलाधिक्यं** मुख्यं फलम् । अहङ्ग्रहोपासनस्य हि परमं प्रयोजनमीश्वरसारूप्यापत्तिरेव श्रुत्योच्यते । यदि च निरुपचरितमैक्य-मुपास्यं स्यात् तदा तन्नोपपद्येत । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः । **अभ्याशः** समीपम् । अल्पेनैव कालेनेत्यर्थः ।

इतोऽप्युपचारेणैवाहङ्ग्रह इत्याह **तदीय इति** । 'भृत्यैरेवोपास्यते' इति शेषः । **स्वतः** साक्षा-दैक्यात् । ननु 'अग्निर्माणवकः' इत्याद्युपचारो भेदज्ञानसहचरितो दृष्टः । न च प्रकृते तदस्ति ।

तत्कथमुपचारेणाहङ्ग्रहोपासनमित्यतोऽत्रापि भेदज्ञानसाहित्यमस्तीति सप्रमाणकमाह **प्रातिबिम्ब्ये-नेति** ॥ ननु बिम्बत्वमङ्गीकृतं चेत् ऐक्यमेवापन्नमित्यत आह **प्रातिबिम्ब्यं चेति** । तदधीनत्वं च ग्राह्यम् । 'तदीयोऽहं' इत्युक्तत्वात् । एवशब्दस्त्वैक्यस्य व्यवच्छेदार्थः ।

एतेन 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादेरपव्याख्यानमपास्तं भवति ॥ २३-२४ ॥

***भा०दी०***— तदधीनत्वस्यापि ग्रहणे हेतुमाह **तदीयोऽहमित्युक्तत्वादिति** । 'एव' इत्यव-धारणात् विरोधमाशङ्क्याह **एवशब्दस्त्विति** । **अपव्याख्यानमिति** । 'क्षेत्रज्ञं जीवं मां विद्धि, मदैक्येन जानीहि' इत्यपव्याख्यानम्, 'प्रातिबिम्ब्यं च तत्साम्यमेव' इति कथनेन 'अहङ्ग्रहोपासने' इत्युक्तेः अन्यथाव्याख्यानेन अपास्तमित्यर्थः ॥ २३-२४ ॥

***भा०र०***— अन्येन प्राप्ते फलेऽतिशयोऽनेनापद्यत इति प्रतीतिनिरासाय विवक्षितमर्थमाह **मुख्यं फलमिति** । कथमनेन 'उपचारेणैवाहङ्ग्रहोपासनम् इत्यर्थो लभ्यते' इत्यतो भाष्यभावमाह **अहङ्ग्रहेत्यादिना** । 'तस्य साम्यम्' इति श्रवणादुक्तम् **सारूप्यापत्तिरिति** । तत् मुख्यं फलम् । 'तदेव भवति' इत्यस्य 'तदेव प्राप्नोति' इत्यर्थ उक्तः *तत्त्वप्रदीपिकायाम्* । अग्निवैश्यश्रुतिरिव पठ्यते भाष्ये **अहङ्ग्रहेति** । 'समीपनिकटाभ्याशसन्निकर्षसनीडवत्' इत्यभिधानादाह **अभ्याशः समीप-मिति** । **अहङ्ग्रह इति** । जीवस्य ब्रह्मणि 'अहं ब्रह्मास्मि' इत्यहङ्ग्रहोपासनमित्यर्थः । 'स्वतः' इत्यनूद्य अर्थमाह **स्वतः साक्षादैक्यादिति** । निरुपचरितैक्यादित्यर्थः । भाष्ये 'तद्वशत्वात्तु' इत्यस्य 'तत्प्रातिबिम्ब्यादेव' इत्यर्थः । बिम्बप्रतिबिम्बैक्यमतेनाह **ऐक्यमेवापन्नमिति** । **तत्साम्यं** ब्रह्मसारूप्यमेव । 'प्रातिबिम्ब्यम्' इत्युक्ते गोगवयादावतिप्रसक्तेराह **तदधीनत्वं चेति** । **उक्तत्वात्** 'तदीयोऽहमिति ज्ञानम्' इति 'तद्वशोऽहम्' इत्युक्तत्वादित्यर्थः । एवं सत्यवधारणविरोधः ? इत्यत आह **एवशब्दस्त्विति** । *भावप्रदीपिकायां तु* अहङ्ग्रहस्योक्तार्थत्वे स्मृतिं चाह 'तदीयोऽहमि'ति । ननु तथापि भृत्यस्य 'राजाऽहम्' इति भावेन अपराधवत्, अहङ्ग्रहोपासनेऽपराधः स्यात् ? इत्येतत् सप्रमाणकं परिहरति 'प्रातिबिम्ब्येने'ति । ननु तर्हि प्रातिबिम्ब्यभृत्याभ्यामभेदभेदौ स्याताम् ? इत्यत आह **प्रातिबिम्ब्यमितीति** । 'तदीयोऽहम्' इत्यादि भाष्यं व्याख्यातम् । **एतेनेति** । 'तदपि न निरुपाधिकम्' इत्यादिना 'प्रातिबिम्ब्यं तत्साम्यमेव' इत्यन्तेन ग्रन्थेन । **अपव्याख्यानम्** 'सर्वक्षेत्रेषु क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तो यः तं क्षेत्रज्ञं मां परमेश्वरं विद्धि' इति जीवेश्वरैक्यं गीताभिप्रेतमिति व्याख्यानमित्यर्थः ॥ २३-२४ ॥

**गीतातात्पर्यनिर्णयः**

"द्विविधं पुरुषं चैव प्रकृतिं द्विविधामपि ।
सह तत्तद्गुणैः सम्यग्ज्ञात्वा पश्यति यः पुमान् ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४ ॥

*प्रका०*— य एनं वेत्तीत्यस्यार्थमाह द्विविधमिति ।

***न्या०दी०***— "प्रकृतिं पुरुषं चैव" इत्याद्युक्तार्थे बुभुत्सातिशयोत्पादनाय तज्ज्ञान-फलमुच्यते 'य एनं' इति । तत्प्रमाणवचनेनैव व्याचष्टे **द्विविधमिति** ॥ ज्ञात्वा परोक्षतः । "सर्वथा वर्तमानः" इत्यस्य प्रमादादन्यायेन वर्तमानोऽपि नियतमोक्ष इत्यर्थः ।

**गीता**

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥**

*वि०वि०*— परमपुरुषादिदर्शने किं साधनमित्यत आह **ध्यानेनेति** । केचिदात्मना बुद्ध्या । आत्मनि हृदये । आत्मानं परमात्मानम् । ध्यानेन पश्यन्ति । अन्ये साङ्ख्येन योगेन वेदोक्तभगवत्स्वरूपज्ञानेन ज्ञात्वा पश्यन्ति । अपरे कर्मयोगेन श्रुत्वा ज्ञात्वा पश्यन्ति । तेऽपि च श्रवणनिरताः मृत्युमतितरन्त्येव । अन्य इत्याद्यशक्तानामप्युपायदर्शनार्थमवस्थाभेदमाश्रित्योक्तम् । उक्तं च— 'कर्मकृच्चापि तं श्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति । श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति ॥' इति ।

यद्वा, केचिदृषयो ध्यानेनात्मनि पश्यन्ति । केचिन्नारदादयो बहिरपि पश्यन्ति । अन्ये देवाः साङ्ख्येन योगेन स्वप्रतिभानुसारेण तारतम्येन पश्यन्ति । अपरे राजानः कर्मयोगेन यजन्तो यज्ञभागार्थमागतं श्रवणप्रतिभाभ्यां विष्णुं स्मरन्तः पश्यन्ति । उक्तं च— 'ऋषयः केचिदृषयो नारदाद्या बहिस्त्वपि । देवा विष्णुप्रसादेन लब्धसत्प्रतिभाबलात् ॥ सर्वं क्रमेण विज्ञाय प्रतिभास्पष्टताक्रमात् । पश्यन्ति बहिरन्तश्च विष्णुं ध्यानमृतेऽपि तु ॥ येषां ध्यानमृते दृष्टिस्तेषां ध्यानेऽपि दर्शनम् । स्यादेव साङ्ख्ययोगास्ते देवा ब्रह्माधिकोऽत्र च ॥ केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः । यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम् ॥ श्रवणप्रतिभाभ्यां च स्मरन्तः पुरुषोत्तमम् । पश्यन्त्यन्ये तथाऽन्येभ्यः सर्वं श्रुत्वाऽनुमत्य च ॥ उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन ॥' इति ॥ २५ ॥

*सा०सं०*— परमपुरुषादिदर्शने साधनमाह **ध्यानेनेति** । **केचित्** श्रवणमननोपेताः । **ध्यानेनात्मना** बुद्ध्या । **आत्मानं** भगवन्तम् । **आत्मनि** देहे **पश्यन्ति** । **अन्ये साङ्ख्येन योगेन** वेदोक्तभगवत्स्वरूपपरोक्षज्ञानेन । ध्यानेन चेत्यनुषज्यते । आत्मानं पश्यन्ति । **अपरे** श्रवणादिहीनाः । **कर्मयोगेन च** कर्मरूपोपायेन साङ्ख्येन । ध्यानेन चेत्यनुषज्यते । साधुकर्मानुष्ठानलब्धभगवत्प्रसादजन्यश्रवणमननध्यानैरात्मानं पश्यन्ति । ध्याने अशक्तानां साङ्ख्यसम्पादनद्वारा ध्यानसम्पादनेन । तत्राप्यशक्तानां कर्मोपायेन श्रवणादिसम्पादनेनात्मदर्शनमित्यवस्थाभेदमाश्रित्यायमर्थो भाष्योक्तः । तात्पर्ये तु— केचिदृषयः स्वप्रतिभयाऽन्यतः श्रवणेन च हरिं ज्ञात्वा, आत्मना मनसा, आत्मनि हृदये, आत्मानं परमात्मानं ध्यानेन पश्यन्ति साक्षात्कुर्वन्ति । केचिदित्युक्त्या अन्ये नारदाद्याः ऋषयस्तु बहिरपि पश्यन्ति इति सूचितम् । 'केचिदृषयो नारदाद्या बहिस्त्वपि' इति स्मृतेः । 'ऋषयोऽन्तःप्रकाशाः' इति सूत्रभाष्योक्तश्रुतिस्तु नारदाद्यन्यविषयेति ज्ञातव्यम् । अन्ये देवास्तु साङ्ख्येन योगेन स्वप्रतिभाख्यज्ञानरूपोपायेन ध्यानेन विनैव विष्णुप्रसादलब्धस्वप्रतिभाख्यज्ञानेन बहिरन्तश्च विष्णुं पश्यन्तीत्यर्थः । अपरे क्षत्रियवरा राजानः कर्मयोगेनाश्वमेधादिकर्मरूपोपायेन श्रवणेन स्वप्रतिभया च नित्यं भगवन्तं स्मरन्तोऽश्वमेधादियज्ञकर्मकाले यज्ञभागार्थमागतमात्मानं पश्यन्तीत्यर्थः । श्रवणप्रतिभयोरल्पत्वादत्रानुक्तिः ॥ २५ ॥

*अ०प्र०*— एवंभूत परमपुरुषादिदर्शने साधनविकल्पान्याह **ध्यानेनेति** द्वाभ्याम् ।

केचित् = ऋषयः[१], ध्यानेन = परमात्मानं[२], आत्मनि[३], पश्यन्ति[४], तथा केचिन्नारदादयः आत्मना[५], आत्मानं = बहिरपि पश्यन्ति[६], अन्ये = देवाः[७], साङ्ख्येन = तत्वानि सङ्ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति साङ्ख्यं तेन तथा[८], योगेन = स्वप्रतिभानुसारेण तारतम्यतः पश्यन्ति[९], अपरे च = राजानः चकारेण ब्राह्मणादयो मुख्यमनुष्याश्च[१०] कर्मयोगेन = स्ववर्णाश्रमोचित कर्माण्येव योगः तेनोपायेन । यद्वा, यज्ञाख्यकर्मोपायेन यज्ञे प्रत्यक्षं हरिं पश्यन्ति ॥ २५ ॥

**गीता**

# अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
# तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २६ ॥

*वि०वि०*— अन्ये मनुष्याः । अल्पप्रतिभानत्वादन्येभ्यः श्रुत्वोपासत इत्यादि व्याख्येयम् । अन्येषां किञ्चिच्छ्रवणे विद्यमानेऽपि मनुष्याणामेवाल्पप्रतिभानत्वात् 'श्रुत्वान्येऽभ्यः' इति विशे-

षणम् । मनुष्याणां प्रतिभामूलप्रमाणापेक्षा प्रायो न सम्यगुत्पद्यत इत्यत उक्तम् **ते च श्रुतिपरायणा इति** । तदुक्तम्— 'ऋषीन् राज्ञस्तथारभ्य प्रतिभाऽभ्यधिका क्रमात् । यावद्ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् ॥ विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेत् । अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् ॥ अत्यल्पप्रतिभानत्वान्मानुषाः श्रुतवेदिनः । सर्वे ते दर्शनात्तस्मात्स्वयोग्यान्मुक्तिगामिनः ॥ अश्रुता प्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी । विश्रुता नृषु जातं च तं विद्याद्देवसत्तमम् ॥' इति ॥ २६ ॥

***सा०सं०***— **अन्ये तु** मनुष्यास्तु । **एवं** स्वप्रतिभाबलेन । अत्मानमजानन्तः **अन्येभ्यः श्रुत्वा** । मत्वेत्यपि ग्राह्यम् । **उपासते** ध्यायन्ति । ततः पश्यन्ति च । **तेऽपि** च अल्पतरप्रतिभावन्तोऽपि । **श्रुतिपरायणाः** बहुश्रवणवन्तः सन्तः । **मृत्युं** संसारम् । **अतितरन्त्येवे**त्यर्थः ॥२६॥

***अ०प्र०***— अन्ये तु[१], एवं[२], अजानन्तः[३], अन्येभ्यः[४], श्रुत्वा[५], उपासते[६], तेऽपि च[७], श्रुतिपरायणाः सन्तः[८], मृत्युं[९], अतितरन्त्येवेत्यन्वयः[१०] ॥

अतिमन्दाधिकारिणां निस्तरोपायमाह **अन्ये त्विति** ॥ अन्ये तु = अतिमन्दाधिकारिणः मनुष्यास्तु[१], एवं = साङ्ख्ययोगादिमार्गेणैवंभूतं अनुमन्तृत्वादिलक्षणमात्मानं साक्षात्कर्तुं[२], अजानन्तः = ध्यानादिकर्मान्त-साधनमजानन्तः अज्ञानिनः[३], अन्येभ्यः = आचार्येभ्यः[४], श्रुत्वा = उपदेशेन ज्ञात्वा[५], उपासते = मननाद्युपासनां कुर्वन्ति[६], तेऽपि च[७], श्रुतिपरायणाः सन्तः = श्रुतिः श्रवणं एव परं अयनं मार्गो येषां ते तथा तथा च श्रद्धया उपदेशश्रवणनिरताः सन्तः[८], क्रमात् मृत्युं = संसारं[९], जन्ममरणयुक्तं भवार्णवं अतितरन्त्येव = शनैः अत्यन्तं तरन्त्येव अतिक्रामन्त्येव । यद्वा, राघवेन्द्रयतिभिः तन्त्रसारोक्तरीत्या प्रतिपादितं कथञ्चेत्यस्योत्तरं अनेनैवोक्तं द्रष्टव्यम् । पूर्वपूर्वोक्तध्यानाद्युपायेषु साक्षादसक्तानां श्रवणाद्युपायान्तरप्रदर्शनार्थं अवस्थाभेदमाश्रित्योक्तं अन्ये केचिदित्यादि ॥ तदुक्तम्— कर्मकृच्चापि तं श्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति । श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति ॥

यद्वा, अन्ये मनुष्याः अल्पप्रतिभावत्त्वात् अन्येभ्यो गुरुभ्यः श्रुत्वोपासते । एवं न तु तद्वदिदानीं पश्यन्ति देवादीनामपि पूर्वश्रवणे विद्यमानेऽपि मनुष्याणामेवाल्पप्रतिभावत्त्वात् श्रुत्वाऽन्येभ्य इति विशेषणं अत एवाजानन्त इत्युक्तं मनुष्याणां प्रतिभामूलप्रमाणं विना प्रायो न सम्यगुत्पद्यते इत्याशयेनोक्तम् । ते च श्रुतिपरायणा इति प्रमाणसिद्धं द्वितीयार्थं कथयति । अथवा सन्ततशास्त्रविमर्शाच्च भविष्यतीति तं तन्त्रसारोक्तरीत्या श्रवणमननाभ्यासमेवापरोक्षद्वारा मोक्षो न ध्यानापेक्षेति सूचयितुं वा श्रुतिपरायणा इत्युक्तम् ।

'द्विविधं पुरुषं चैव प्रकृतिं द्विविधामपि । सह तत्तद्गुणैः सम्यक् ज्ञात्वा पश्यति यः पुमान् ॥ सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते । अनादियोग्यताभेदात् पुंसां दर्शनसाधनम् ॥ नानैव तत्र विष्णोस्तु प्रसादाद्वैष्णवः प्रभुः । स्वयं विज्ञायते किञ्चित् श्रूयते किञ्चिदन्यतः ॥ तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केचन । ऋषयः केचिदृषयो नारदाद्या बहिस्त्वपि ॥ देवा विष्णुप्रसादेन लब्धसत्प्रतिभाबलात् । सर्वक्रमेण विज्ञाय प्रतिभा स्पष्टताक्रमात् ॥ पश्यन्ति बहिरन्तश्च विष्णुं ध्यानमृतेऽपि तु । येषां ध्यानमृते दृष्टिस्तेषां ध्यानेऽपि दर्शनम् ॥ स्यादेव साङ्ख्ययोगास्तद्देवा ब्रह्माऽधिकोऽत्र च । केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः ॥ यजन्ते भक्तिमन्तश्च यज्ञभागार्थ-मागतम् । श्रवणप्रतिभाभ्यां तु स्मरन्तः पुरुषोत्तमम् ॥ पश्यन्तोऽन्ये तथाऽन्येभ्यः सर्वं श्रुत्वाऽनु-मत्य च । उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन ॥ ऋषीन् राज्ञस्तथा एभ्यः प्रतिमाभ्यधिकः क्रमात् । यावद्ब्रह्मा ब्रह्मणस्तु प्रायो न प्रतिभासितम् ॥ विष्णोः प्रीत्यर्थमेव स्यात् श्रोतव्यं प्रायशो हरेः । अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् ॥ अत्यल्पप्रतिभावत्वान्मानुषाः श्रुतवादिनः । सर्वे ते दर्शनात्तस्मात्स्वयोग्यान्मुक्तिगामिन' इति । अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी । विश्रुता नृषु जातं च तं विन्द्याद्देवसत्तमम् ॥ द्वितीयार्थः स्वयमिति । स्वप्रति स्वप्रतिभयेत्यर्थः । मानुषोत्तर-मिति मानुषा उत्तराः यस्मिन् कर्मणीति तत्तथा । मनुष्याणां प्रायः श्रवणादेव ज्ञानं भवतीत्यर्थः । विस्तृताव्याप्तौ अतुलेत्यर्थः । इति प्रमाणार्थः ॥ २६ ॥

### भाष्यम्

**साङ्ख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । साङ्ख्यानां च ध्यात्वा । तथा च गौपवनश्रुतिः– "कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति । श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति । अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोप-जायते" इति । 'अन्ये' इत्यशक्तानामप्युपायदर्शनार्थम् ॥ २५-२६ ॥**

***प०टी०***— 'साङ्ख्य'शब्दस्यार्थम् अन्यथाप्रतीतिनिरासायाह **साङ्ख्येनेति** । 'ध्यानेनात्मनि' इति ध्यानस्य दृष्टिसाधनत्वमुक्त्वा अन्यदपि दर्शनसाधनमुच्यत इति प्रतीतिनिरासायाह **कर्मिणा-मिति** । ज्ञान्यपि ध्यात्वेत्यर्थः । तर्हि सर्वेषामेकमार्गत्वादन्य इति किमर्थम् ? इत्यत आह **अन्य इति** ॥ २५-२६ ॥

***प्र०दी०***— 'अन्ये साङ्ख्येन योगेन' इत्यत्र 'कापिलतन्त्रोक्तप्रकृतिपुरुषविवेकज्ञानं साङ्ख्यम्' इति व्याख्यानमसत् । कापिलतन्त्रस्यावैदिकस्यात्र ग्रहणायोगात् । तस्य भगवद्दर्शने प्रधानसाधनत्वायोगाच्चेति भावेन अन्यथा व्याचष्टे **साङ्ख्येनेति** । **ज्ञानेन** परोक्षज्ञानेन । 'ध्यानेन' इत्यत्र 'ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह **कर्मिणामिति** । **दृष्टिः** 'प्राप्या' इति शेषः । 'पाठक्रमादर्थक्रमस्य प्राधान्यात् व्युत्क्रमेणोक्तिः । कुत एतत् ? इत्यत आह **तथा चेति** । 'ध्यात्वा' इत्येतत् 'ज्ञान्यपि' इत्युत्तरेणापि सम्बध्यते ।

ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात् । तथा च 'केचित्', 'अन्ये', 'परे' इत्युक्तमयुक्तं स्यादित्यत आह **अन्य इति** । ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्य 'अन्ये' इत्याद्युक्तमित्यर्थः ॥ २५-२६ ॥

***भा०दी०***— ननु 'ध्यानेनात्मनि पश्यन्ति' इत्यस्य 'अन्ये साङ्ख्येन' इति श्लोकात् पूर्वभावित्वात् तदर्थः । 'साङ्ख्येन' इति श्लोकार्थोक्त्यनन्तरं 'साङ्ख्यानां च ध्यात्वा' इति कथमुक्तो भाष्य इत्यत आह **पाठक्रमादिति** । कर्मिणो हि श्रवणं, श्राविणो हि साङ्ख्यशब्दितं परोक्षज्ञानं, ज्ञानिनो हि ध्यानं, ज्ञानाद् ध्यायिनो हि दृष्टिर्भवतीत्यर्थक्रमस्य गीतोक्तपाठक्रमात् 'अग्निहोत्रं जुहोति', 'यवागुं पचति' इत्यत्रेव प्राधान्यात् व्युत्क्रमोक्तिर्भाष्य इत्यर्थः ।

ध्यानेन इति त्रिपादी 'उपासते' इत्यनन्तरं पठितव्याऽपि दृष्टेरव्यवहितसाधनत्वात् पूर्वं पठितेति भावः । **ध्यानादाविति** । ध्यानज्ञानश्रवणकर्मसु उत्तरोत्तरसाधने धायने साक्षाद् अशक्तानां परोक्षज्ञानसम्पादनमुपायः, तत्र अशक्तानां श्रवणे, तत्राप्यशक्तानां कर्मणि इति ध्यानाद्युपायज्ञानादिप्रदर्शनार्थमेव कर्मित्वश्रावकत्वाद्यवस्थाभेदमाश्रित्येत्यर्थः ॥ २५-२६ ॥

***भा०र०***— **अत्र** भगवज्ज्ञानसाधनप्रस्तावे । **तस्य** प्रकृतिपुरुषविवेकज्ञानस्य । **प्रधानेति** । 'श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च । साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते' इति वचनादिति भावः । अत्र ज्ञानशब्देन मुख्यतयाऽपरोक्षज्ञानग्रहणे 'पश्यन्ति' इत्यनन्वितम् ? इत्यतो विवक्षितार्थमाह **ज्ञानेन परोक्षेणेति** । **केवलानाम्** असहायानाम् । 'केचित्' 'अन्ये' इत्यादिश्रवणादिति भावः । 'कर्मिणां = कर्मयोगिनाम्' इति भाष्ये 'कृत्यानां कर्तरि वा' इति षष्ठी । ननु गीतायाम् 'ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना', 'अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे', 'अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते' इति ध्यानयोग-साङ्ख्ययोग-कर्मयोग-श्रवणयोगाः क्रमेण पठ्यन्ते । भाष्ये तु 'कर्मिणाम्' इति कर्मयोग आद्यः, 'श्रावकाणाम्' इति

श्रवणयोगो द्वितीयः, 'साङ्ख्यानाम्' इति भगवत्स्वरूपपरोक्षज्ञानशब्दितसाङ्ख्ययोगस्तृतीयः, 'ध्यात्वा दृष्टिः प्राप्यते' इति ध्यानयोगस्तुरीय इत्येवं कर्म-श्रवण-ज्ञान-ध्यानानाम् अपरोक्षज्ञानं प्रति क्रमेण साधनत्वमिति लभ्यते । एवं क्रमव्यत्यासेनोक्तिः किंनिबन्धना ? इत्यत आह **पाठक्रमादिति** । 'अग्निहोत्रं जुहोति', 'यवागुं पचति' इत्यत्रेवार्थक्रमप्राधान्यमनुरुध्य भाष्यकारसूक्तिः प्रवृत्तेत्यर्थः ।

भाष्ये 'ध्यात्वा दृष्टिः प्राप्या' इत्युभयत्रानुवर्तते । **सम्बध्यते** ज्ञान्यपि = वेदोक्तभगवत्स्वरूपपरोक्षज्ञान्यपि ध्यात्वा पश्यतीति सम्बध्यत इत्यर्थः । **सर्वस्य** 'कर्मणः', 'श्रवणस्य', 'ज्ञानस्य च' इति सर्वस्य **संयोजने** साधनत्वेनानुषङ्गे ग्राह्ये । **उत्तरोत्तरेति** । ध्यान-ज्ञान-श्रवण-कर्मरूपसाधनवर्गे । साक्षाज्ज्ञाने अशक्तानां परोक्षज्ञानमुपायः । परोक्षत्वनिश्चयापादनासमर्थानां श्रवणं उपायः । तत्राप्यसमर्थानां निवृत्तकर्मोपाय इति तत्तदुपायज्ञानादिप्रदर्शनार्थमेव कर्मित्व-श्रावकत्व-ज्ञानित्व-ध्यानित्वलक्षणावस्थाभेदमाश्रित्य 'अन्ये', 'परे', 'केचित्' इत्युक्तमित्यर्थः ॥ २५-२६ ॥

*गीताक्षरार्थस्तु*—

'यतश्च यत्' इति यद्धर्मविशिष्टस्य प्रेरकत्वं प्रतिज्ञातं तद्धर्मविशिष्टप्रेरकस्य स्वरूपमुच्यते **उपद्रष्टेति** । उपशब्दः 'उपरि' इत्यर्थे, सर्वेभ्य उपरि वर्तमानः, उत्तम इति यावत् । द्रष्टा समस्त-साक्षात्कारवान् **उपद्रष्टाऽनुमन्ता** अनुशब्दः पुनरर्थे । क्रियाऽऽवृत्तिश्च तदर्थः । ताच्छील्यार्थः तृन्-प्रत्ययश्च 'विशेष' इत्यर्थे । पुनः पुनः विशेषतः कर्तव्यस्यालोचकः । **भर्ता** भरणकर्ता **भोक्ता** शुभसारस्य **महेश्वरो** महासमर्थोऽचिन्त्यशक्तिः **परमात्मा** उत्तमचेतनः । चशब्दो विशेषणानां परस्परसमुच्चयार्थे, 'कोऽयमनुमन्ता ?' इत्यतोऽनुमन्तृस्वरूपं निर्धारयितुमुक्तम् **अप्युक्तो देहेऽस्मिन्निति** ॥ 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । इति, योऽहं सर्ववेदेषु स्थितत्वेन प्रागुक्तः सोऽनुमन्ता' इत्यनेन स्वात्मैवानुमन्तेत्युक्तं भवति । तथा च तात्पर्यनिर्णये— 'मां विद्धि सर्वक्षेत्रेष्विति देहेऽप्युक्तः । तेनाहमेव स इति दर्शयति' इति । स एव **परः** देहगतजीवविलक्षणः **पुरुषश्च** । इतिशब्दः 'उपद्रष्टा' इत्यादौ सर्वत्रान्वितः सन्ननुमन्तृत्वे हेत्वभिधायक इति **न्यायदीपिका** ॥२३॥

'प्रकृतिं पुरुषं चैव' इत्यत्र प्रकृतं **पुरुषं** जीवमीश्वरं च **प्रकृतिं** चतुर्विंशतितत्त्वात्मिकां **गुणैः** देहेन्द्रियसम्बन्धेन सुखदुःखभोगः, भगवत्प्रेर्यत्वम्, अनादिमत्त्वम् इत्यादिजीवधर्मैः, उपद्रष्टृत्व-सर्वसमत्वादिरूपभगवद्गुणैः, सत्त्वरजस्तमोगुणप्रभवत्वम्, इच्छादिविकारोत्पादकत्वम्, भगवत्प्रेर्यत्वम् इत्यादिरूपैः प्रकृतिधर्मैश्च **सह वेत्ति** परोक्षतो ज्ञात्वाऽपरोक्षतः पश्यति **स सर्वथा वर्तमानोऽपि** प्रमादात् अन्यायेन वर्तमानोऽपि **भूयो नाभिजायते** नियतमोक्षो भवति ॥ २४ ॥

***प्र०दी०***— 'अन्ये साङ्ख्येन योगेन' इत्यत्र 'कापिलतन्त्रोक्तप्रकृतिपुरुषविवेकज्ञानं साङ्ख्यम्' इति व्याख्यानमसत् । कापिलतन्त्रस्यावैदिकस्यात्र ग्रहणायोगात् । तस्य भगवद्दर्शने प्रधानसाधनत्वायोगाच्चेति भावेन अन्यथा व्याचष्टे **साङ्ख्येनेति** । **ज्ञानेन** परोक्षज्ञानेन । **'ध्यानेन'** इत्यत्र 'ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह **कर्मिणामिति** । **दृष्टिः** 'प्राप्या' इति शेषः । 'पाठक्रमादर्थक्रमस्य प्राधान्यात् व्युत्क्रमेणोक्तिः । कुत एतत् ? इत्यत आह **तथा चेति** । 'ध्यात्वा' इत्येतत् 'ज्ञान्यपि' इत्युत्तरेणापि सम्बध्यते ।

ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात् । तथा च 'केचित्', 'अन्ये', 'परे' इत्युक्तमयुक्तं स्यादित्यत आह **अन्य इति** । ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्य 'अन्ये' इत्याद्युक्तमित्यर्थः ॥ २५-२६ ॥

***भा०दी०***— ननु 'ध्यानेनात्मनि पश्यन्ति' इत्यस्य 'अन्ये साङ्ख्येन' इति श्लोकात् पूर्वभावित्वात् तदर्थः । 'साङ्ख्येन' इति श्लोकार्थोक्त्यनन्तरं 'साङ्ख्यानां च ध्यात्वा' इति कथमुक्तो भाष्य इत्यत आह **पाठक्रमादिति** । कर्मिणो हि श्रवणं, श्राविणो हि साङ्ख्यशब्दितं परोक्षज्ञानं, ज्ञानिनो हि ध्यानं, ज्ञानाद् ध्यायिनो हि दृष्टिर्भवतीत्यर्थक्रमस्य गीतोक्तपाठक्रमात् 'अग्निहोत्रं जुहोति', 'यवागुं पचति' इत्यत्रेव प्राधान्यात् व्युत्क्रमोक्तिर्भाष्य इत्यर्थः ।

ध्यानेन इति त्रिपादी 'उपासते' इत्यनन्तरं पठितव्याऽपि दृष्टेरव्यवहितसाधनत्वात् पूर्वं पठितेति भावः । **ध्यानादाविति** । ध्यानज्ञानश्रवणकर्मसु उत्तरोत्तरसाधने धायने साक्षाद् अशक्तानां परोक्षज्ञानसम्पादनमुपायः, तत्र अशक्तानां श्रवणे, तत्राप्यशक्तानां कर्मणि इति ध्यानाद्युपायज्ञानादिप्रदर्शनार्थमेव कर्मित्वश्रावकत्वाद्यवस्थाभेदमाश्रित्येत्यर्थः ॥ २५-२६ ॥

***भा०र०***— **अत्र** भगवज्ज्ञानसाधनप्रस्तावे । **तस्य** प्रकृतिपुरुषविवेकज्ञानस्य । **प्रधानेति** । 'श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च । साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते' इति वचनादिति भावः । अत्र ज्ञानशब्देन मुख्यतयाऽपरोक्षज्ञानग्रहणे 'पश्यन्ति' इत्यनन्वितम् ? इत्यतो विवक्षितार्थमाह **ज्ञानेन परोक्षेणेति** । **केवलानाम्** असहायानाम् । 'केचित्' 'अन्ये' इत्यादिश्रवणादिति भावः । 'कर्मिणां = कर्मयोगिनाम्' इति भाष्ये 'कृत्यानां कर्तरि वा' इति षष्ठी । ननु गीतायाम् 'ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना', 'अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे', 'अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते' इति ध्यानयोग-साङ्ख्ययोग-कर्मयोग-श्रवणयोगाः क्रमेण पठ्यन्ते । भाष्ये तु 'कर्मिणाम्' इति कर्मयोग आद्यः, 'श्रावकाणाम्' इति

श्रवणयोगो द्वितीयः, 'साङ्ख्यानाम्' इति भगवत्स्वरूपपरोक्षज्ञानशब्दितसाङ्ख्ययोगस्तृतीयः, 'ध्यात्वा दृष्टिः प्राप्यते' इति ध्यानयोगस्तुरीय इत्येवं कर्म-श्रवण-ज्ञान-ध्यानानाम् अपरोक्षज्ञानं प्रति क्रमेण साधनत्वमिति लभ्यते । एवं क्रमव्यत्यासेनोक्तिः किंनिबन्धना ? इत्यत आह **पाठक्रमादिति** । 'अग्निहोत्रं जुहोति', 'यवागुं पचति' इत्यत्रेवार्थक्रमप्राधान्यमनुरुध्य भाष्यकारसूक्तिः प्रवृत्तेत्यर्थः ।

भाष्ये 'ध्यात्वा दृष्टिः प्राप्या' इत्युभयत्रानुवर्तते । **सम्बध्यते** ज्ञान्यपि = वेदोक्तभगवत्स्वरूपपरोक्षज्ञान्यपि ध्यात्वा पश्यतीति सम्बध्यत इत्यर्थः । **सर्वस्य** 'कर्मणः', 'श्रवणस्य', 'ज्ञानस्य च' इति सर्वस्य **संयोजने** साधनत्वेनानुषङ्गे ग्राह्ये । **उत्तरोत्तरेति** । ध्यान-ज्ञान-श्रवण-कर्मरूपसाधनवर्गे । साक्षाज्ज्ञाने अशक्तानां परोक्षज्ञानमुपायः । परोक्षत्वनिश्चयापादनासमर्थानां श्रवणं उपायः । तत्राप्यसमर्थानां निवृत्तकर्मोपाय इति तत्तदुपायज्ञानादिप्रदर्शनार्थमेव कर्मित्व-श्रावकत्व-ज्ञानित्व-ध्यानित्वलक्षणावस्थाभेदमाश्रित्य 'अन्ये', 'परे', 'केचित्' इत्युक्तमित्यर्थः ॥ २५-२६ ॥

***गीताक्षरार्थस्तु*—**

'यतश्च यत्' इति यद्धर्मविशिष्टस्य प्रेरकत्वं प्रतिज्ञातं तद्धर्मविशिष्टप्रेरकस्य स्वरूपमुच्यते **उपद्रष्टेति** । उपशब्दः 'उपरि' इत्यर्थे, सर्वेभ्य उपरि वर्तमानः, उत्तम इति यावत् । द्रष्टा समस्त-साक्षात्कारवान् **उपद्रष्टाऽनुमन्ता** अनुशब्दः पुनरर्थे । क्रियाऽऽवृत्तिश्च तदर्थः । ताच्छील्यार्थः तृन्-प्रत्ययश्च 'विशेष' इत्यर्थे । पुनः पुनः विशेषतः कर्तव्यस्यालोचकः । **भर्ता** भरणकर्ता **भोक्ता** शुभसारस्य **महेश्वरो** महासमर्थोऽचिन्त्यशक्तिः **परमात्मा** उत्तमचेतनः । चशब्दो विशेषणानां परस्परसमुच्चयार्थे,' 'कोऽयमनुमन्ता ?' इत्यतोऽनुमन्तृस्वरूपं निर्धारयितुमुक्तम् **अप्युक्तो देहेऽस्मिन्निति** ॥ 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । इति, योऽहं सर्ववेदेषु स्थितत्वेन प्रागुक्तः सोऽनुमन्ता' इत्यनेन स्वात्मैवानुमन्तेत्युक्तं भवति । तथा च तात्पर्यनिर्णये— 'मां विद्धि सर्वक्षेत्रेष्विति देहेऽप्युक्तः । तेनाहमेव स इति दर्शयति' इति । स एव **परः** देहगतजीवविलक्षणः **पुरुषश्च**। इतिशब्दः 'उपद्रष्टा' इत्यादौ सर्वत्रान्वितः सन्ननुमन्तृत्वे हेत्वभिधायक इति **न्यायदीपिका** ॥२३॥

'प्रकृतिं पुरुषं चैव' इत्यत्र प्रकृतं **पुरुषं** जीवमीश्वरं च **प्रकृतिं** चतुर्विंशतितत्त्वात्मिकां **गुणैः** देहेन्द्रियसम्बन्धेन सुखदुःखभोगः, भगवत्प्रेर्यत्वम्, अनादिमत्त्वम् इत्यादिजीवधर्मैः, उपद्रष्टृत्व-सर्वसमत्वादिरूपभगवद्गुणैः, सत्त्वरजस्तमोगुणप्रभवत्वम्, इच्छादिविकारोत्पादकत्वम्, भगवत्प्रेर्यत्वम् इत्यादिरूपैः प्रकृतिधर्मैश्च **सह वेत्ति** परोक्षतो ज्ञात्वाऽपरोक्षतः पश्यति **स सर्वथा वर्तमानोऽपि** प्रमादात् अन्यायेन वर्तमानोऽपि **भूयो नाभिजायते** नियतमोक्षो भवति ॥ २४ ॥

परमपुरुषादिदर्शने किं साधनम् ? इत्यपेक्षायामुच्यते **ध्यानेनेति** ॥ **केचित्** पुमांसः कृत-शास्त्रश्रवणमननाः, **ध्यानेन आत्मना** मनसा **आत्मनि** हृदये **आत्मानं** परमात्मानं **पश्यन्ति** । **अन्ये साङ्ख्येन** वेदोक्तभगवत्स्वरूपपरोक्षज्ञानलक्षणेन योगेन उपायेन 'ध्यानेन' इत्यनुकृष्यते, चशब्द आकृष्यते । ध्यानेन चात्मानं पश्यन्ति । **अपरे कर्मयोगेन** साधुकर्मानुष्ठानापादितभगवत्प्रसादेन, श्रवणमननजन्यसाङ्ख्यशब्दितभगवत्स्वरूपपरोक्षज्ञानेन, 'ध्यानेन' इत्यनुषज्यते आत्मानं पश्यन्ति ॥ २५ ॥

**अन्ये** मनुष्यास्तु अत्र तुशब्दः ध्यानसाङ्ख्यकर्मयोग्यपेक्षया वैशेष्यद्योतनाय । **एवं** ध्यानादि-योगिवद् आत्मानम् **अजानन्तः** '**अन्येभ्यो** गुरुभ्यः **श्रुत्वा** मत्त्वा च **उपासते** ध्यायन्ति 'ततः पश्यन्ति च' इति योज्यम् । **तेऽपि** एवंविधा अपि **श्रुतिपरायणाः** श्रुतिः = श्रवणं परायणत्वं = एकाश्रयत्वं, श्रवणभूमवन्तः सन्तः । एवं **मृत्युं** तदुपलक्षितं संसारम् **अतितरन्ति** ।

ननु ध्यानादियोगिनामपि श्रवणादिसद्भावाभिप्राये, मनुष्याणां 'श्रुत्वाऽन्येभ्य उपासते' इति विशिष्योक्तिर्न युक्तेति चेन्न । तेषामत्यल्पप्रतिभानत्वेन श्रवणबाहुल्यसद्भावाशयेन विशिष्योक्त्युपपत्तेः । कथं मनुष्याणां अत्यल्पाऽपि प्रतिभा युज्यते ? 'श्रुतिपरायणाः' इति श्रवणैकाश्रयत्वस्य स्फुटमवभासात्, इति चेन्न । मनुष्याणाम् अत्यल्पप्रतिभासद्भावेऽपि 'श्रुतिपरायणा' इति विशेषणं युक्तम् । तत्प्रतिभाया मूलप्रमाणापेक्षत्वेन स्वातन्त्र्याभावात् । प्रायेणासम्यक्त्वाच्च । अस्वतन्त्रे असाधुनि च असत्त्वोक्तिदर्शनाद् इत्युत्तरप्रस्थाने स्फुटम् । ननु ध्यानादियोगिषु सर्वत्र श्रवणादेः संयोजने सति, एक एवायं प्रकारः स्यात्; तथा च 'केचित्', 'अन्ये', 'परे' इत्युक्तिः अयुक्ता स्यादिति चेन्न । ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानप्रदर्शनार्थमेव अवस्था-भेदमाश्रित्य 'अन्ये' इत्याद्युक्तेरुपपत्तेरिति भाष्यटीकयोर्व्यक्तम् ॥ २६ ॥

**गीतातात्पर्यनिर्णयः**

**"अनादियोग्यताभेदात् पुंसां दर्शनसाधनम् ।**
**नानैव तत्र विष्णोस्तु प्रसादाद् वैष्णवं वपुः ॥**
**स्वयं विज्ञायते किञ्चित् श्रूयते किञ्चिदन्यतः ।**
**तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केचन ॥**
**ऋषयः केचिदृषयो नारदाद्या बहिस्त्वपि ।**
**देवा विष्णुप्रसादेन लब्धसत्प्रतिभाबलात् ॥**

**सर्वं क्रमेण विज्ञाय प्रतिभास्पष्टताक्रमात् ।**
**पश्यन्ति बहिरन्तश्च विष्णुं ध्यानमृतेऽपि तु ॥**

***प्रका०***— ध्यानेनेत्यादेरर्थमाह **अनादीत्यादिना** ।

***न्या०दी०***— परमपुरुषादिदर्शने किं साधनमित्यत आह **अनादीति** ॥ कथं नानात्वमित्यत आह **तत्रेति** ॥ **स्वयमिति** । स्वप्रतिभया ॥ **तथेति** । उक्तप्रकारद्वयेन । अनेन 'ध्यानेन' इत्युक्तार्थं भवति । 'किञ्चित्' इत्युक्त्या तेषां ध्यानातिरिक्तसाधनसद्भावेऽपि तस्याल्पत्वादनुक्तिरित्युक्तं भवति । ऋषयोऽन्तःप्रकाशा इत्यादौ ऋषीणामन्तर्दर्शनानियमोक्तेः केचनेत्युक्तिः किमर्थेत्यत आह **केचिदिति** ॥ ऋष्यन्तरविषया श्रुतिरिति भावः । 'देवाः' इत्यनेन "अन्ये साङ्ख्येन" इत्युक्तार्थं भवति । **क्रमेण** कालक्रमेण ।

***भा०दी०***— **उक्तप्रकारद्वयेनेति** । स्वप्रतिभयाऽन्यतः श्रवणेन चेत्यर्थः । **तेषां ध्यानातिरिक्तसाधनेति** । स्वप्रतिभादिरूप इत्यर्थः । **अनुक्तिरिति** । ध्यानेनेति श्लोक इति योज्यम् ॥ **इत्यादाविति** । देवा वाव सर्वप्रकाशा ऋषयोऽन्तःप्रकाशाः मनुष्या एव बहिःप्रकाशा इति चतुर्थाध्यायतृतीयपादीयभाष्योक्तश्रुतावित्यर्थः । प्रतिभाप्रमाणमाहेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**येषां ध्यानमृते दृष्टिस्तेषां ध्यानेऽपि दर्शनम् ।**
**स्यादेव साङ्ख्ययोगास्ते देवा ब्रह्माधिकोऽत्र च ॥**
**केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः ।**
**यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम् ॥**
**श्रवणप्रतिभाभ्यां च स्मरन्तः पुरुषोत्तमम् ।**
**पश्यन्त्यन्ये तथाऽन्येभ्यः सर्वं श्रुत्वाऽनुमत्य च ॥**
**उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन ।**

***न्या०दी०***— देवानां ध्यानाभावे दर्शनं भवति चेत् तर्हि दर्शनविरोधिध्यानं किमर्थं ते कुर्वन्तीत्यत आह **येषामिति** ॥ साङ्ख्यं प्रतिभा योगो दर्शनोपायो येषां ते साङ्ख्ययोगाः । "प्रतिभा स्पष्टताक्रमात्" इत्युक्तम् । तत्र सर्वोत्तमप्रतिभा देवेषु कस्य मुख्येत्यत

आह **ब्रह्मेति** ॥ केचिदित्यनेन 'कर्म' इति व्याख्यातं भवति । अत्रापि श्रवणप्रतिभयोरल्पत्वं द्रष्टव्यम् । अन्य इत्यनेन "अन्ये तु" इत्युक्तार्थं भवति ।

**गीतातात्पर्यनिर्णयः**

ऋषीन् राज्ञस्तथाऽऽरभ्य प्रतिभाऽभ्यधिका क्रमात् ॥
यावद् ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् ।
विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो हरेः ॥
अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् ।
अत्यल्पप्रतिभानत्वात् मानुषा श्रुतवेदिनः ॥
सर्वे ते दर्शनात् तस्मात् स्वयोग्यान्मुक्तिगामिनः ॥" इति च ।

*प्रका०*— श्रोतव्यं प्रायशो हरेः = हरेरेव सकाशात् श्रोतव्यमित्यर्थः ।

*न्या०दी०*— ऋषि-देव-राज्ञां प्रतिभोक्ता । तत्र किमेतेषामेकविधैव प्रतिभाऽस्ति, अथ तारतम्येनेत्यपेक्षायामाह **ऋषीनिति** ॥ ब्रह्मणः प्रतिभाप्रमाणमाह **ब्रह्मण इति** ॥ तर्हि तस्य हरेः सकाशात् श्रवणं किमर्थमित्यत आह **विष्णोरिति** ॥ प्रीत्यर्थमेव, न तु ज्ञानार्थम् । केषां तर्हि ज्ञानार्थं श्रवणमित्यत आह **अन्येषामिति** ॥ **मानुषोत्तरमिति** ॥ मानुषाणां प्रायः श्रवणादेव ज्ञानमित्यर्थः । नन्वेवं ध्यानादियोगिनामपि श्रवणादिसद्भावे कथं मानुषाणां श्रुतवेदित्वं क्वचिदुच्यत इत्यत आह **अत्यल्पेति** ॥ एवं दर्शनसाधनं नानाविधमुक्त्वा प्रकृतमनुसन्धत्ते **सर्व इति** ॥

*भा०दी०*— **प्रकृतमनुसन्धत्त इति** । प्रकृतिं पुरुषं चैव विद्धि इत्युक्तार्थे बुभुत्सातिशयजननाय तज्ज्ञानफलवचनं "य एनं वेत्ती"त्यादिना प्रकृतं तद् बुद्धिस्थं करोतीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

अन्येषामपि किञ्चिच्छ्रवणे विद्यमानेऽपि मनुष्याणाम् अल्पप्रतिभानत्वात् "श्रुत्वाऽन्येभ्यः" इति विशेषणम् । मनुष्याणां प्रतिभामूलप्रमाणापेक्षा प्रायो न सम्यगुत्पद्यतेऽल्पा चेति "श्रुतिपरायणाः" इति ।

*न्या०दी०*— यदुक्तं ध्यानादियोगिनामपि श्रवणाद्यस्तीति, तदयुक्तम् । तथा सति केषाञ्चित् "श्रुत्वाऽन्येभ्यः" इति विशिष्योक्त्यसम्भवादित्यत आह **अन्येषामिति** ॥

**ध्यानादियोगिनां श्रवणादिसद्भावेऽपि मनुष्याणां "श्रुत्वाऽन्येभ्य उपासते" इति विशेषोक्तिर्युक्ता । तेषामत्यल्पप्रतिभानत्वेन श्रवणबाहुल्यसद्भावादिति भावः । अनेनात्यल्पप्रतिभानत्वादिति विवृतं भवति । कथं मनुष्याणामत्यल्पाऽपि प्रतिभा युज्यते । श्रुतिपरायणा इति श्रवणैकाश्रयत्वोक्तेरित्यत आह मनुष्याणामिति ॥ मनुष्याणामत्यल्पप्रतिभासद्भावेऽपि श्रुतिपरायणा इति विशेषणं युक्तम् । तत्प्रतिभाया मूलप्रमाणापेक्षत्वेन स्वातन्त्र्याभावात् प्रायेणासम्यक्त्वात् च । अस्वतन्त्रेऽसाधुनि च असत्त्वोक्तिदर्शनादिति भावः ।**

*भा०दी०*— **इति विवृतमिति** । इति स्मृत्युक्तं विवृतमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।**
**विश्रुता नृषु जातं च तं विद्याद् देवसत्तमम् ॥**
**यश्च स्वमुखमानेन नवाधो देहवान् पुमान् ।**
**अष्टमानवती स्त्री च षण्णवत्यङ्गुलौ पुनः ।**
**दशतालौ सप्तपादौ विद्यात् तौ च सुरोत्तमौ ॥**

*प्रका०*— "अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासत" इत्यन्तस्वाभाविकमनुष्योत्तमविषयं, न तु मनुष्यजन्मदेवविशेषविषयमित्यभिप्रेत्य तल्लक्षणमाह **अश्रुतप्रतिभेत्यादिना** । यः पुरुषः स्वमुखमानेन नवमानाधोदेहवान्, या स्त्री स्वमुखमानेन अष्टमानाधोदेहवती तौ स्त्रीपुरुषौ स्वस्वाङ्गुलिमानेन षण्णवत्यङ्गुलौ स्वस्वपादमानेन सप्तपादौ सुरोत्तमौ ज्ञेयौ । अत्र तालशब्देन मध्यमाङ्गुल्यग्रात् मणिबन्धपर्यन्तः कर उच्यते । तत् षण्णवत्यङ्गुलं क्रमेण ह्रसदेकनवत्यङ्गुलपर्यन्तमुत्तमावरसुरावधिकदेवमानं भवति । अत्र सप्तपादमानं क्रमेण ह्रसदेकाङ्गुलोनमेव भवति । तदेकनवत्यङ्गुलं यावत् क्रमेण ह्रसत् गन्धर्वविद्याधराधमदेवमानम् । अत्रापि सप्तपादमानं ह्रसत् पूर्ववत् एकाङ्गुलोनं भवति । सप्ताशीत्यङ्गुलं मनुष्यमानम् । ततो ह्रसत् आसुरं मानम् । सप्ताशीत्यङ्गुलादुपरि षण्णवत्यङ्गुलादधः यदष्टाङ्गुलम् तदुपदेवदेव मानम् । षण्णवत्यङ्गुलं तूत्तमदेवमानम् । च्यवनोचथ्यादिऋषीणां पृथशशिबिन्दुहैहयादिचक्रवर्तिनामवरदेवमानं ज्ञातव्यम् ।

*न्या०दी०*— **यदुक्तं मनुष्याणां प्रतिभा मूलप्रमाणसापेक्षा प्रायो न सम्यगुत्पद्यते, अल्पा चेति तदयुक्तम् । पाण्डवादिमनुष्याणामश्रुतार्थेऽपि सम्यक् बहुप्रतिभादर्शनादित्या-**

शङ्कां प्रमाणेनैव परिहरति **अश्रुतेति** ॥ विश्रुता व्याप्ता बहुलेत्यर्थः । तल्लक्षणान्तराणि चाह **यश्चेति** ॥ यः पुरुषः स्वमुखपरिमाणेन नवपरिमाणाधोदेहवान्, या च स्त्री स्वमुखपरिमाणेनाष्टपरिमाणवती तौ पुनः स्वस्वाङ्गुलिपरिमाणेन षण्णवत्यङ्गुलौ, स्वस्वतालपरिमाणेन दशतालौ, स्वस्वपादपरिमाणेन सप्तपादौ तौ च सुरोत्तमौ विद्यादित्यर्थः । अत्र तालो नाम मध्यमाङ्गुल्यग्रात् मणिबन्धपर्यन्तः कर उच्यते ।

*भा०दी०*— तल्लक्षणान्तराणि चेति । भूमिजातदेवलक्षणान्तराणि चेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

यावत् पञ्चाङ्गुलोनं तद्देवमानं क्रमात्परम् ।
पादे त्वङ्गुलमात्रोनं तदूनं चतुरङ्गुलम् ।
यावद्देवोपदेवानां पादे चोनाङ्गुलं पुनः ॥

*प्रका०*— एतल्लक्षणं स्वाभाविकमित्येतदुच्यते **यावदित्यनेन** ॥

*न्या०दी०*— देवोत्तमलक्षणमुक्त्वा देवमात्रलक्षणमाह **यावदिति** ॥ तत् षण्णवत्यङ्गुलं क्रमेण ह्रसदेकनवत्यङ्गुलपर्यन्तमुत्तमावरसुरावधिकदेवमानं भवति । अत्र सप्तपादपरिमाणं क्रमेण ह्रसदेकाङ्गुलोनमेव भवतीत्यर्थः । गन्धर्वादिलक्षणमाह **तदूनमिति** ॥ तदेकनवत्यङ्गुलं सप्ताशीत्यङ्गुलपर्यन्तं क्रमेण ह्रसद्गन्धर्वादिपरिमाणं भवति । अत्रापि सप्तपादपरिमाणं क्रमेण ह्रसत्पुनरेकाङ्गुलोनं भवतीत्यर्थः ।

*भा०दी०*— **क्रमेण ह्रसदिति** । पञ्चनवति-चतुर्नवति-द्विनवतीत्येवंरूपेणेत्यर्थः । पादे त्वित्यस्यार्थमाह **अत्रेति** । उत्तमावरसुरावधिके देवमानविषय इत्यर्थः ॥ **क्रमेण ह्रसदिति** । एकाङ्गुलमध्य एव पादाङ्गुलार्धाङ्गुलादिरूपेण ह्रसदित्यर्थः । चतुरङ्गुलं यावदित्यस्यार्थः **सप्ताशीत्यङ्गुलपर्यन्तमिति** । **अत्रापि** गन्धर्वादिविषयेऽपीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

तावन्मनुष्यमानं स्यात् ततोऽधस्त्वासुरं स्मृतम् ।
द्विचत्वार्यधिकं तस्मात् षण्णवत्यङ्गुलादधः ।
ज्ञेयमङ्गुलमानं तदुपदेवादिषु स्फुटम् ॥

***न्या०दी०***— मनुष्यलक्षणमाह **तावदिति** ॥ सप्ताशीत्यङ्गुलं मनुष्यपरिमाणमित्यर्थः । असुरलक्षणमाह **तत इति** ॥ सप्ताशीतेरधस्तात् असुरपरिमाणमित्यर्थः । देवोपदेवानां मानस्य सम्भूय कियतीष्वङ्गुलिषु परिसमाप्तिरित्यत आह **द्विचत्वारीति** ॥ तस्मात् सप्ताशीत्यङ्गुलादुपरि देवोत्तमपरिमाणात् । षण्णवत्यङ्गुलादधो यदष्टाङ्गुलं तद्देवोपदेव-परिमाणं ज्ञातव्यमित्यर्थः ।

***भा०दी०***— **देवोपदेवेति** । देवानामुपदेवशब्दितगन्धर्वाणां च परिमाणमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

देवेष्ववरवज्ज्ञेयमृषीणां चक्रवर्तिनाम् ।
यावद्यावत् प्रियो विष्णोस्तावत् स्त्रीपुंस्वरूपिणः ।
हरेः सादृश्यमस्य स्यादनादिक्रमसुस्थिरम् ॥"

—इति च ॥ २५-२६ ॥

***न्या०दी०***— ऋष्यादिलक्षणमाह **देवेष्विति** ॥ च्यवनादीनां पृथ्वादीनामवरदेववत् परिमाणं ज्ञातव्यमित्यर्थः । एतल्लक्षणतारतम्ये हेतुमाह **यावदिति** ॥ अनेनैतत् स्वाभाविक-मिति चोक्तं भवति ॥

***भा०दी०***— **अवरदेववदिति** । एकनवत्यङ्गुलपरिमाणमित्यर्थः ॥

**गीता**

## यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
## क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २७ ॥

***वि०वि०***— पुनश्च साम्यादिधर्मयुक्तं प्रकृत्यादिरूपमाह **यावदित्यादिना** । यावत् स्थावर-जङ्गमात्मकं सत्वं जीवजातं सञ्जायते, तत् क्षेत्रक्षेत्रज्ञयोश्चित्प्रकृतिपरमात्मनोः संयोगात् जायते प्रादुर्भवतीति विद्धि । 'सत्वं जीवः क्वचित्प्रोक्त : क्वचित्सत्वं जनार्दनः । सत्वं नाम गुणः क्वापि क्वचित्साधुत्वमुच्यते ॥' इत्यभिधानात् जीववाची सत्वशब्दः ॥ २७ ॥

***वा०ल०***— 'क्षेत्रक्षेत्रज्ञसंयोगात्' इत्यत्र, क्षेत्रं क्षेत्रस्थानीया प्रकृतिः । क्षेत्रज्ञः क्षेत्रकर्षणादि-कुशलकृषीवलवत् प्रकृतेर्देहात्मना विकारं प्रापयन् परमात्मा । तत् बीजाज्जायमानाङ्कुरजन्मवत्, रेतसा विक्रियमाणस्थावरजङ्गमजन्म ॥ २७ ॥

***सा०सं०***— कार्योपादानत्वप्रकृत्युपादानकदेहयोगित्वसर्वत्रसमत्वरूपधर्मयुक्ततया प्रकृतिपुरुषेश्वरस्वरूपं पुनरप्याह **यावदिति** । न चाप्रतिज्ञातोक्तिर्दोषः, प्रकृतिपुरुषधर्मोक्तेः 'यादृक्च' इत्यत्रेश्वरधर्मोक्तेश्च 'यत्प्रभाव' इत्यत्र प्रतिज्ञातेऽन्तर्भावात् । **यावत्** स्थावरजङ्गमात्मकं **सत्त्वं** जीवजातम् । **तत् क्षेत्रक्षेत्रज्ञसंयोगात्** चित्प्रकृतिपरमात्मनोः संयोगात्, **जायते** प्रादुर्भवतीति विद्धि । यद्वा, 'उपद्रष्टा' इत्यादिना सदसद्योनिजन्मसु भगवानेव स्वतन्त्रकारणमिति यदुक्तं, तत्प्रपञ्चयति **यावदिति** । उक्त एवार्थः ॥ २७ ॥

***अ०प्र०***— तत्र कर्माङ्गस्य तृतीयादि पञ्चमान्ते प्रपञ्चितत्वात् ध्यानस्य योगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात् ध्यानादेश्च साङ्ख्यविविक्तात्मविषयत्वात् पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं तत्तद्धर्मयुक्तं अध्यायसमाप्तिपर्यन्तं तदेव प्रपञ्चयन्नाह **यावदित्यादिना** । तत्र **यावदिति** ।

हे भरतर्षभ ![१], यावत्[२], स्थावरजङ्गमं[३], यत्किञ्चित्[४], सत्त्वं[५], सञ्जायते[६], तत् सर्वं[७], क्षेत्रक्षेत्रज्ञसंयोगाद्भवतीति[८], विद्धि[९] इत्यन्वयः ।

हे भरतर्षभ ![१], यावत् स्थावरजङ्गमात्मकं यत्किञ्चित्सत्त्वजातं उत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् = क्षेत्रक्षेत्रज्ञयोः चित्प्रकृतिपरमात्मनोः संयोगात् भवतीति जानीहि । तदुक्तम्— 'सत्त्वं जीवः क्वचित्प्रोक्तः क्वचित्सत्त्वं जनार्दनः । सत्त्वं नाम गुणः क्वापि क्वचित्साधुत्वमुच्यते ॥' इति वचनात् सत्त्वशब्दोऽत्र जीवार्थकः॥ २७ ॥

**गीता**

## समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
## विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८ ॥

***वि०वि०***— परमेश्वरस्य सर्वशरीरस्थत्वमुक्तम् । तर्ह्यधिष्ठानतारतम्यात्तस्य तारतम्यं दुःखिसहावस्थानात् दुःखं च स्यादित्यत आह **सममिति** । सर्वेषु विलक्षणेषु दुःखसंयोगादिरूपेण विनश्यत्सु भूतेषु जीवेषु स्थितं समं तारतम्यरहितम् । अविनश्यन्तं दुःखसंयोगादिरहितम् । परमेश्वरं यः पश्यति । स एव पश्यति ज्ञानीत्यर्थः ॥ २८ ॥

***सा०सं०***— 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु' इति हरेः सर्वशरीरस्थत्वं यदुक्तं तदयुक्तम्। तथात्वेऽधिष्ठानतारतम्यात् तारतम्यं दुःखिसहावस्थानात् दुःखं च स्यादित्यत आह **सममिति** ।

**सर्वेषु** तारतम्योपेतेषु प्राणिषु **तिष्ठन्तम्** । **परमेश्वरं** अचिन्त्यशक्तिकं हरिम् । **समं** न्यूनाधिकहीनम् । सर्वत्राशेषसद्गुणोपेतम् । एवं **यः पश्यति** । **विनश्यत्सु** सुखदुःखजनिमृत्यादिदोषवत्सु । **भूतेषु** तिष्ठन्तम् । **अविनश्यन्तं** दुःखादिदोषहीनम् । **यः पश्यति स पश्यति** । स एव यथार्थज्ञानवानित्यर्थः ॥ २८ ॥

***अ०प्र०***— उपद्रष्टाऽनुमन्तेत्यादिना हरेः सर्वशरीरस्थत्वेन प्रेरकत्वमुक्तम् । तर्हि अधिष्ठानतारतम्यात्तस्यापि तारतम्यं स्यात् । तथा दुःखिभिः सहावस्थानाद्दुःखं च स्यादित्यत आह **सममिति** ।

हे भरतर्षभ यः = पुरुषः[१], सर्वेषु[२], विनश्यत्सु[३], भूतेषु[४], तिष्ठन्तं[५], परमेश्वरं[६], समं[७], पश्यति[८], तथा यः अविनश्यन्तं च[९], पश्यति[१०] सः पश्यति[११] इत्यन्वयः ।

यः = पुरुषः[१], सर्वेषु = स्थावरजरायुजादिरूपेण विषमतया स्थितेषु नानाविलक्षणेषु[२], विनश्यत्सु = दुःखसंयोगादिरूपेण विनश्यत्सु मायाविकारेषु[३], भूतेषु = प्राणिमात्रेषु[४], तिष्ठन्तं = स्थितं[५], परमेश्वरं = अनन्तानन्तब्रह्माण्डादीनां सृष्ट्यादिकर्तॄणां ब्रह्मादीनां परमं नियन्तारं विष्णवाख्यमित्यर्थः[६], समं = तारतम्यहीनं , सद्रूपेण समं यथा भवेत्येवं वा[७], पश्यति = जीवराशिं दासत्वेन पश्यति[८], तथा यः अविनश्यन्तं च = दुःखसंयोगादिरहितं च[९], यद्वा, विनाशरहितं च[९], पश्यति[१०] सः = स एव[११] पश्यति = सम्यक् पश्यति ज्ञानीत्यर्थः, अन्यः पशुरेवेत्यर्थः ॥२८॥

**गीता**

## समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
## न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २९ ॥

***वि०वि०***— तत् ज्ञानफलमाह **सममिति** । सर्वजीवेष्ववस्थितं सर्वगुणैः समम् अचिन्त्यशक्तिं भगवन्तं पश्यन्नात्मना बुध्या । स्वात्मानं न हिनस्ति नरके न पातयति । ततो ज्ञानात् परां गतिं मुक्तिं याति । उक्तं च— 'दुःखयोगादिरूपेण जीवेषु विनशत्स्वपि । दुःखयोगादिरहितः सर्वजीवेष्ववस्थितः ॥ गुणैः सर्वैः समो नित्यं न हीनो हीनगोऽपि सन् । इति पश्यति यो विष्णुं स एव न तमो व्रजेत् ॥' इति । जीवानां नाशलक्षणं तु द्वितीयाध्याय उक्तम् ॥ २९ ॥

***सा०सं०***— साम्यादिज्ञानस्य फलमाह **सममिति** । **सर्वत्र समवस्थितं** निर्दोषाशेषसद्गुणतया सम्यगवस्थितम् । **ईश्वरं समं सर्वत्र** निर्दोषाशेषसद्गुणतयैकप्रकारम् । 'ॐ न स्थानतोऽपि

परस्योभयलिङ्गं सर्वत्र हि ॐ' इति सूत्रोक्तदिशा **पश्यन्** । **आत्मना** बुद्ध्या । **आत्मानं** स्वात्मानं च **न हिनस्ति** नरके **न** पातयति । **ततो** ज्ञानात् । **परां गतिं** मुक्तिं च **यातीत्यर्थः** ॥ २९ ॥

***अ०प्र०***— तज्ज्ञानफलमाह **सममिति** ।

यः = पुमान् सर्वत्र[१], समवस्थितं[२], ईश्वरं[३], समं[४], पश्यन् सन्[५], आत्मना[६], आत्मानं[७], हि यतः[८], न हिनस्ति[९], ततः[१०] परां गतिं यातीत्यन्वयः ।

यः = पुरुषः सर्वत्र चराचरप्राणिषु[१], समवस्थितं = सम्यगवस्थितं[२], ईश्वरं = अचिन्त्यशक्तिं भगवन्तं[३], समं = तारतम्यहीनं[४], पश्यन् सन्[५], आत्मना = बुद्ध्या स्वेनैव[६], आत्मानं = स्वदेहिनं जीवं[७], हि = यस्मात्[८], न हिनस्ति = न हन्ति हिंसां न करोति आत्मघातफलं नरकं नानुभवतीत्यर्थः[९], ततः = ज्ञानात्[१०] परां गतिं = मोक्षादिगतीनां विश्रान्तिस्थानं मुक्तिं वा[११] याति = प्राप्नोति यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहेन सहात्मानं हिनस्ति । अत्रैतद्विपरीतज्ञाः आत्महनः तमोगच्छन्तीति सूच्यते । न च रमन्त्यहो असदुपासनया । तथा च श्रुतिः— 'असूर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' इति । दुःखयोगादिरूपेण जीवेषु विनशत्स्वपि । दुःखयोगादिरहितः सर्वजीवेष्ववस्थितः ॥ गुणैः सर्वैः समो नित्यं न हीनो हीनगोऽपि सन् । इति पश्यति यो विष्णुं स एव न तमो व्रजेत्' इति वचनसिद्धोऽयमर्थः ॥ २९ ॥

**भाष्यम्**

**पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तं आह यावदित्यादिना ॥**
**॥ २७-२९ ॥**

***प०टी०***— अध्यायशेषार्थमाह **पुनरिति** । तर्हि पुनरुक्तिरित्यत आह **साम्यादीति** । ईश्वरसाम्यम्, प्रकृतेः परिणामित्वम्, जीवस्याकर्तृत्वमिति ॥ २७-२९ ॥

***प्र०दी०***— 'तत् क्षेत्रं यच्च' इति प्रतिज्ञातस्य सर्वस्योक्तत्वात् किमुत्तरेण इत्यत आह **पुनश्चेति** । उक्तस्य पुनर्वचने को हेतुरित्यत उक्तं **साम्यादीति** । ईश्वरधर्मस्योभयधर्मात् प्राधान्येन साम्यग्रहणम् । तत्र प्रकृतिपुरुषधर्मकथनं 'यादृक्' इति प्रतिज्ञातेऽन्तर्भवति । ईश्वरधर्मकथनं च 'यत्प्रभावः' इति ॥ २७-२९ ॥

***भा०दी०***— भाष्ये साम्यादिधर्म इत्यत्र साम्यपदेन ईश्वरधर्मस्य, आदिपदेन कार्योपादानत्व-प्रकृत्यपादानक-देहयोगित्वरूपयोः प्रकृतिपुरुषधर्मयोरुपादानं प्रकृतिपुरुषेश्वरस्वरूपमिति निर्देश-व्युत्क्रमतया कुतः कृतम् ? इत्यत आह **ईश्वरेति** । अप्रतिज्ञातोक्तदोषं निराह **तत्र प्रकृतीति** । 'यत्प्रभाव इति' इत्यनन्तरं 'प्रतिज्ञातेऽन्तर्भवति' इत्यनुषङ्गः ॥ २७-२९ ॥

***भा०र०***— ननु 'प्रकृति-पुरुष-ईश्वरस्वरूपम्' इति निर्देशानुसारेण 'कार्योपादनत्वादिधर्मयुक्त-माह' इत्येव वक्तव्यम् । तथाऽनुक्त्वा, साम्यपदेनेश्वरधर्मं कण्ठरवेणाभिधाय आदिपदेन प्रकृतिपुरुष-धर्मग्रहणे को हेतुः ? इत्यत आह **ईश्वरधर्मस्येति** । **उभयधर्मात्** कार्योपादानत्वरूपप्रकृतिधर्मात्, प्रकृत्युपादानकदेहयोगित्वरूपपुरुषधर्माद् इत्येवं उभयधर्मादित्यर्थः । अप्रतिज्ञातोक्तित्वनिरासायाह **तत्र प्रकृतीति** । **इति** 'प्रतिज्ञातेऽन्तर्भवति' इति वर्तते ॥ २७-२९ ॥

**गीतातात्पर्यनिर्णयः**

**"क्षेत्रक्षेत्रज्ञसंयोगात्" इत्यत्र क्षेत्रं श्रीः ।**

**"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥"**

**—इति वक्ष्यमाणत्वात् ।**

***प्रका०***— "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति" इत्युत्तराध्याये यद्योनिर्महद्ब्रह्मेत्युक्तं चेतनप्रकृत्याख्यं तदेव "यावत्सञ्जायते किञ्चित् सत्त्वं स्थावर-जङ्गमम् । क्षेत्रंक्षेत्रज्ञसंयोगात् तद्विद्धी"त्यनेन क्षेत्रवशेनोच्यते लिङ्गवशात् । एषा चेतनप्रकृतिः अभिव्यक्ता अभिमानिदेवता अव्यक्तादिशब्दवाच्या । एवं महत्तत्वाद्यभिमानिनोऽपि महदादिशब्द-वाच्या ब्रह्मादिजीवाः । तदाह **क्षेत्रेत्यादिना** ।

***न्या०दी०***— **यदुक्तं हरिरेव सर्वजीवानां सदसद्योनिजन्मसु स्वतन्त्रकारणमिति तत्प्रपञ्च्यते 'यावदि'ति । तत्र क्षेत्रज्ञस्य हरेः क्षेत्रसंयोगो नाम जडदेहसंयोग इत्यन्यथा-प्रतीतिनिरासायाह क्षेत्रेति ॥ "यावत् सञ्जायते" इत्येतद्विवरणरूपे "मम योनिः" इत्युत्तरा-ध्यायगतवाक्ये लक्ष्मीनारायणसंयोगात् सर्वभूतसम्भवस्योक्तत्वात् अत्रापि क्षेत्रपदेन श्रीरेवोच्यत इति भावः ।**

***भा०दी०***— **यदुक्तमिति** । उपद्रष्टेत्यादिनेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"अव्यक्तं च महद्ब्रह्म प्रधानं क्षेत्रमित्यपि ।**
**उच्यते श्रीः सदा विष्णोः प्रिया निर्दोषचिद्घना ॥**

***न्या०दी०—*** अव्यक्ततत्त्वे प्रसिद्धः क्षेत्रशब्दः श्रीवाचीत्येतत् कुत इत्यतः श्रियः क्षेत्रशब्दवाच्यत्वं, प्रसङ्गात् महाभूतानीत्याद्युक्ताहङ्कारादिशब्दानां च देवतावाचित्वं प्रमाणेन दर्शयति **अव्यक्तमिति** ॥ सरस्वत्यादीनामपि श्रीशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थमाह **सदेति** ॥ किं जडाव्यक्ताभेदात् तच्छब्दवाच्येत्यत आह **निर्दोषेति** ॥

***भा०दी०—*** सरस्वत्यादीनामपीति । "ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिता" इति भारततात्पर्योक्तेरिति भावः ।

**गीतातात्पर्यनिर्णयः**

**सा हि न व्यज्यते विष्णुरत्र क्षेति महागुणा ।**
**जीवोत्तमा च तेनैतैः शब्दैरेकाऽभिधीयते ॥**
**महान् ब्रह्मा जीवमहान् परात्मप्रेरिताः क्रियाः ।**
**अहं कर्तेति येनायं जीवो मंस्यत्यसौ शिवः ॥**
**अहङ्कार इति प्रोक्तो जीवाहङ्कृतिकृद् यतः ।**
**उमा बुद्धिरिति ज्ञेया शब्दादिज्ञानदा यतः ॥**
**मतिदो मन उद्दिष्ट इन्द्रः स्कन्दोऽपि तत्सुतः ।**
**श्रोत्रं तु श्रावयंश्चन्द्रः स्पर्शो वायुसुतो मरुत् ॥**
**चक्षुः सूर्यश्चक्षयति जिह्वा वारिपतिर्हृतेः ।**
**अश्विनौ घ्राणमाघ्रातेर्वागग्निर्वचनादपि ॥**
**हस्तौ वायुसुतौ ज्ञेयौ मरुतौ हानिलाभयोः ।**
**पादौ तु विष्णुनाऽऽविष्टौ यज्ञशम्भू शचीसुतौ ॥**
**पदनादेव पायुश्च भुक्तस्यैवाप्ययाद् यमः ।**
**सन्तत्युपस्थितिकृतेरुपस्थः सशिवो मनुः ॥**

विनायकस्तथाऽऽकाशो निरावृत्त्या प्रकाशनात् ।
प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः ॥
अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम् ।
अदनात्प्रथनाज्जन्मलयहेतोस्तथाऽभिधाः ॥
शब्दाद्याः पञ्च शिवजाः शब्दनात् स्पर्शनादपि ।
रूपणाद् रसनाच्चैव गन्धनाच्च तथाऽभिधा ॥
सुखं धृतिश्चेतना च सुखनाद् विधृतेरपि ।
चेतोनेतृत्वतश्चैव मुख्यवायुः सरस्वती ।
श्रीश्चेच्छा चैव सा वायोः पत्नी त्वेवं धृतिर्मता ॥

*प्रका०*— 'वायोः पत्नी त्वेवं धृतिर्मते'ति सरस्वतीवत् विधृतेर्हेतोः धृतिर्मतेत्यर्थः ।

***न्या०दी०***— कथं तर्हि अव्यक्तादिपदवाच्यत्वमित्यत आह **सा हीति** ॥ न व्यज्यत इत्यव्यक्तम् । विष्णुरस्यां निवसतीति क्षेत्रम् । महागुणेति महद्ब्रह्म, जीवोत्तमेति प्रधानमुच्यत इत्यर्थः । अत्र महतोऽनुक्तत्वेऽप्यादिकार्यत्वात् ग्राह्य एव । क्रियाः उद्दिश्य । उक्तं विवृणोति **जीवेति** ॥ शब्दादि बोधयतीति बुद्धिरित्यर्थः । तत्सुतोऽनिरुद्धोऽपि ॥ स्पर्शयतीति स्पर्शः । हृञ् हरण इति धातोः रसाहरणहेतुत्वात् जिह्वेत्यर्थः । आघ्रातेर्गन्धाघ्राणहेतुत्वात् । वचनात् वचनप्रवर्तकत्वात् । हानिलाभयोर्निमित्तत्वात् । सन लाभ इति धातुः । क्वचिद्विष्णोः पाददेवत्वोक्तेः विष्णुनेत्युक्तम् । यज्ञशम्भू च न हरिहरावित्युक्तम् ॥ **शचीति** ॥ पदनात् गतिप्रवर्तकत्वात् । पद गताविति धातुः । निरावृत्त्या प्रतिबन्धाभावेन । वातीति वायुः । अदनादग्निः । प्रथनात् विस्तृतत्वात् पृथिवी । जन्मलयहेतुत्वात् जलमित्यर्थः । पृथु विस्तार इति धातुः । उत्पत्तिलययोर्जलाधीनत्वदर्शनात् तन्नियामकदेवतायास्तत्सिद्धम् । शब्दनादित्यादेः शब्दादिप्रवर्तकत्वादित्यर्थः । मुख्यवायुः सुखनात् सुखमित्यादि द्रष्टव्यम् । सा श्रीरेव । एवं सरस्वतीवद्वायोः पत्नी विधृतेर्धृतिर्मतेत्यर्थः ।

*भा०दी०*— विष्णुरत्र क्षेतीत्युक्तिसूचितविग्रहमाह **विष्णुरिति** । क्षि निवासगत्योरिति धातोरिति भावः ॥ **अत्रेति** । गीतायामित्यर्थः । एवकारान्वयेनार्थमाह **सा श्रीरेवेति** । इच्छा च सैवेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

इच्छादानात्तु सैवेच्छा स्थानभेदात्तु देवताः ।
पृथक् पृथक् च कथ्यन्ते लक्ष्म्याद्या उदिता अपि ॥
दुःखद्वेषौ कलिश्चैव द्वापरो ब्रह्मणः सुतौ ।
प्रवरावसुराणां तौ सङ्घातश्चेतनाः परे ॥

***न्या०दी०***— श्रीरेवेच्छेत्युक्तम् । तदुपपादयति **इच्छेति** ॥ यद्यव्यक्तचेतनेच्छादिशब्दैः लक्ष्म्यादिदेवता उच्यन्ते तर्हि क्वचिदव्यक्तमुक्त्वा पुनश्चेतनादिकं कथमुच्यत इत्यत आह **स्थानेति** ॥ अव्यक्तपदोक्तश्रियः चेतनादिपदेन पुनरुक्तिर्युक्ता । अभिमन्यमानस्थानभेदेन रूपभेदादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

एतैरभिमतं यच्च तत्तन्नाम्नाऽभिधीयते ।
चेतनाचेतनं त्वेतत् सर्वं क्षेत्रमितीरितम् ।
क्षितिरेतद् भगवतो यदतः क्षेत्रमीर्यते ॥
क्षिणोति त्राति चैवैतत् अतो वा क्षेत्रमुच्यते ।
क्षितिं कृत्वा त्राति चैतद् अतो वा क्षेत्रमीरितम् ॥
एतस्मात् क्षीणमेतेन त्रातमित्यथवा पुनः ।
इच्छाद्यानां क्षेत्रनाम्नामपि नामान्तरं स्मृतम् ।
विकारा इति यस्मात् ते विशेषविकृतिस्थिताः ॥

***न्या०दी०***— एवं देवतान्तरेऽपि द्रष्टव्यम् । कथं तर्हि जडपदार्थेष्वव्यक्तादिशब्दाः प्रवर्तन्त इत्यत आह **एतैरिति** ॥ अव्यक्तादिनामकदेवताभिमन्यमानत्वात् जडानामव्यक्तादिशब्दवाच्यत्वमिति भावः । **क्षिणोति** नाशयति । क्षितिं कृत्वा त्राति स्वनिवासनिमित्तेन रक्षति । **क्षीणम्** अधमम् । **विशेषविकृतिस्थिता** इति ॥ महदादिभ्योऽतिशयेन विकारितयाऽवस्थिता इत्यर्थः ।

***भा०दी०***— **एवं देवतान्तरेऽपीति** । 'जिह्वावारिपतिर्वरुणो जलं शिवोऽहङ्कार इति प्रोक्तः उपस्थः स शिवो मनुरि'त्याद्युक्तदेवतान्तर इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

विशेषात् क्रियते यस्माद् विकारः कार्यमन्तिमम् ।
विगतं करणं चात्र पुनर्नाशमृते यतः ।
तत्सम्बन्धाद् विकाराख्या इच्छाद्या अभिमानिनः ॥
एतत् सर्वं सर्वदैव निर्दोषेणैव चक्षुषा ।
प्रेरयन्नेव जानाति तत्क्षेत्रज्ञो हरिस्ततः ॥'' इति च ।

***न्या०दी०***— घटादावप्येतदेव विकारशब्दप्रवृत्तिनिमित्तमित्याह **विशेषादिति** ॥ विगतमित्यादेः अत्रान्तिमकार्ये नाशं विना कार्यान्तरोत्पादकत्वं नास्तीत्यर्थः । अभिमानिनामपीच्छादिशब्दवाच्यत्वात् कथं विकारत्वमित्यत आह **तदिति** ॥ **सम्बन्धः** नियम्यनियामकभावः ।

*भा०दी०*— करणमितरस्यार्थः कार्यान्तरोत्पादकत्वमिति ॥

**गीतातात्पर्यनिर्णयः**

''यस्यात्मा शरीरम्'' इत्यादिश्रुतेश्चेतनस्यापि ''इदं शरीरं कौन्तेयम्'' इति शरीरत्वोक्तिर्युज्यते ।

***न्या०दी०***— यदुक्तं चेतनाचेतनं सर्वं क्षेत्रमिति, तदयुक्तम् । चेतनस्य ''इदं शरीरं'' इत्युक्तशरीरत्वानुपपत्तेः । हिंसाहेतुरित्यादिनिर्वचनस्य तत्रासम्भवादित्यत आह **यस्येति** ॥ चेतनस्य क्षेत्रत्वेऽपि न तस्योक्तशरीरत्वासम्भवः । ''यस्यात्मा शरीरम्'' इत्युक्तत्वात् । उक्तनिरुक्त्यसम्भवेऽपि भगवत्तन्त्रत्वेन शरीरत्वोपपत्तेरिति भावः ।

*भा०दी०*— **उक्तनिरुक्तीति** । हिंसाहेतुश्च जीवस्येत्यादिना प्रागुक्तनिरुक्त्येत्यर्थः । ''पृथिव्याद्या देवतास्तु देहवद्वशत्वत'' इति काण्वभाष्योक्तदिशाऽर्थमाह **भगवत्तन्त्रत्वेनेति** ॥

**गीतातात्पर्यनिर्णयः**

''सत्त्वं जीवः क्वचित् प्रोक्तः क्वचित् सत्त्वं जनार्दनः ।
सत्त्वं नाम गुणः क्वापि क्वचित् साधुत्वमुच्यते ॥''

—इति शब्दनिर्णये ।

*न्या०दी०*— "यावत्सञ्जायते किञ्चित् सत्त्वं" इत्यत्र सत्त्वशब्दो जीववाचीति "मम योनिः" इति वाक्यस्योदाहरणेनैव सूचितम् । तत्र सत्त्वशब्दस्य जीववाचित्वे प्रमाणमाह **सत्त्वमिति** ॥

**गीतातात्पर्यनिर्णयः**

"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् ॥" इति च पैङ्गिश्रुतिः ।

*न्या०दी०*— तयोरन्य इति यदुच्यते स जीव इति वक्तव्ये सत्त्वमिति श्रुत्योच्यते ।

**गीतातात्पर्यनिर्णयः**

"जनी प्रादुर्भावे" इति धातोर्जीवस्यापि शरीरे व्यक्त्यपेक्षया जनिर्युज्यते ॥ ॥ २७ ॥

*प्रका०*— जडाव्यक्ताभिमानित्वेनोदितोऽग्निर्न वागभिमानित्वेन पुनरुच्यते स्थानभेदादित्यवगन्तव्यम् । स्थानभेदात्त्वित्यत्राव्यक्ताद्यभिमानिषु येन चेतनेन यज्जडमभिमतम् । तदभिमानवता तेनाव्यक्तशब्देन महच्छब्देन तदव्यक्तं तन्महत्तत्त्वमभिधीयते इत्यवगन्तव्यम् । एतैरभिमानमित्यत्र "यावत्सञ्जायते किञ्चित्सत्त्वमि"त्युक्तस्य जनिं घटयति **जनीप्रादुर्भाव इति** ॥

*न्या०दी०*— सत्त्वशब्देन जीवग्रहणे तस्यानादित्वात् सञ्जायत इत्युक्तजननं न युज्यत इत्यत आह **जनी प्रादुर्भाव इति** ॥

**गीतातात्पर्यनिर्णयः**

जीवेषु दुःखयोगादिरूपेण विनश्यत्स्वप्यतथाभूतम् ।

*प्रका०*— समं सर्वेत्यादेरर्थमाह **जीवेष्वित्यादिना** ॥

*न्या०दी०*— परमेश्वरस्य सर्वशरीरस्थत्वमुक्तम् । तर्हि अधिष्ठानतारतम्यात् तस्य तारतम्यं दुःखिसहावस्थानात् दुःखं च स्यादित्यत उच्यते 'समम्' इति । तत्र "विनश्यत्स्वविनश्यन्तम्" इत्ययुक्तम् । जीवानां विनाशाभावात् । न च तस्याचेतनविषयत्वम् । चशब्दाद्यभावादित्यत आह **जीवेष्विति** ॥ एवं विजानन्नेव ज्ञानीत्युक्तम् । तज्ज्ञानफलमुच्यते 'समम्' इति ।

**गीतातात्पर्यनिर्णयः**

"दुःखयोगादिरूपेण जीवेषु विनशत्स्वपि ।
दुःखयोगादिरहितः सर्वजीवेष्वपि स्थितः ॥
गुणैः सर्वैः समो नित्यं न हीनो हीनगोऽपि सन् ।
इति पश्यति यो विष्णुं स एव न तमो व्रजेत् ॥"

—इति पाद्मे ॥ २८-२९ ॥

*न्या०दी०*— श्लोकद्वयं स्मृत्यैव व्याचष्टे दुःखेति ॥ न हिनस्तीत्यस्यार्थः **स एव इति** ॥

**गीता**

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ ३० ॥**

*वि०वि०*— 'उपद्रष्टा' इत्यनेन परमात्मनः स्वातन्त्र्यमुक्तम् । तज्ज्ञानफलमाह **प्रकृत्येति** । चशब्दानुकृष्टेन प्रकृतेन परमात्मना कर्त्रा प्रकृत्या च निमित्तभूतया । क्रियमाणानि सर्वाणि कर्माणि । स्वात्मानमकर्तारं यः पश्यति सः परमेश्वरं पश्यतीत्यर्थः ।

अथवा, ईश्वरः कर्मानपेक्ष एव सदसद्योनिजन्मसु कारणं चेत्तर्हि तस्य वैषम्यादिकं स्यात् । कर्मापेक्षत्वे च स्वातन्त्र्यं न स्यात् । तथा तस्यापि कर्तृमद्भावाच्चास्वातन्त्र्यमित्यत आह **प्रकृत्येति** । प्रकृत्या प्रारभ्य स्वयमेव कर्मादिकं प्रबोध्य प्रकृतेनेश्वरेण क्रियमाणानि कर्माणि, तथाऽऽत्मानं परमेश्वरमकर्तारं कर्तृरहितं यः पश्यति स पश्यति । कर्तृराहित्यात्स्वातन्त्र्यं पूर्वकर्मापेक्षया कर्तृत्वेनावैषम्यादिकं वेदाप्रामाण्यानापादकत्वाच्च सदप्येतादृशं वैषम्यादिकमदोषः । उक्तं च— 'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् । योग्यतायास्तन्नियत्या विषमत्वं भवेत्तव ॥' इति । 'वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम् ॥' इति ॥ ३० ॥

*वा०ल०*— 'प्रकृत्यैव च' इत्यत्र, प्रकृत्या जीवानां सात्त्विकराजसतामसस्वभावेन तैस्तैर्जीवैः क्रियमाणानि कर्माणि पुण्यपापमिश्रकर्माणि यः पश्यति । तथाऽऽत्मानं परमात्मानम् । अकर्तारं, प्रकृत्यैव कर्म कुर्वतां जीवानां परतन्त्रतया नियामकसापेक्षत्वात्, प्रकृतेर्नियमनमात्राय

तद्भृदिस्थितावपि तेषु रागद्वेषादिदोषवशात् कर्ता न भवतीत्यकर्ता, तम् । अत एव प्रकृतिस्त्वां नियोक्ष्यति इति वक्ष्यति ॥ ३० ॥

***सा०सं०***— नन्वीश्वरः कर्मानपेक्षयैव 'उपद्रष्टा' इत्यत्रोक्तदिशा यदि सदसद्योनिजन्मसु स्वतन्त्रकारणं, तर्हि तस्य वैषम्यादिदोषः स्यात् । कर्मापेक्षितायां स्वातन्त्र्यप्रच्युतिस्तस्य स्यात् । तस्यापि कर्त्रन्तरसत्वाच्च स्वातन्त्र्यहानिरेवेत्यत आह **प्रकृत्येति** । ल्यबन्तमेतत् । **च**शब्दात् पूर्व-प्रकृतेश्वरोऽनुषज्यते । ईश्वरेणैव **प्रकृत्य** पूर्वतनं जीवकर्म उद्बोध्य तदनुसृत्य । **क्रियमाणानि** सर्व**कर्माणि यः पश्यति** । **तथा आत्मानं** परमात्मानम् । **अकर्तारं** कर्तृहीनं **यः पश्यति स पश्यति** । परमेश्वरमित्यर्थः ।

यद्वा, 'उपद्रष्टा' इत्यत्रोक्तभगवत्स्वातन्त्र्यज्ञानस्य फलमाह **प्रकृत्या** इति ॥ तृतीयान्तमिदम् । चशब्दात् प्रकृतेश्वरेण कर्त्रा **प्रकृत्या** निमित्तभूतया **क्रियमाणानि सर्वशः कर्माणि यः पश्यति** । **तथा स्वात्मानं चाकर्तारम्** अस्वतन्त्रं च **यः पश्यति स पश्यति** । हरिमित्यर्थः । तथाच सूत्रम् 'ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ' इति । कर्तृराहित्यात् स्वातन्त्र्यम् । स्वाधीनसत्ताक-तत्तदीयपूर्वकर्मापेक्ष्य सर्वं करोतीति न वैषम्यादिदोष इति भावः । तदुक्तम् 'ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॐ' इति ॥ ३० ॥

***अ०प्र०***— उपद्रष्टेति परमात्मनः स्वातन्त्र्यमुक्तम् । तज्ज्ञानफलमाह **प्रकृत्यैवेति** ।

क्रियमाणानि[१], सर्वशः[२], कर्माणि[३], प्रकृत्यैव च[४], इति यः[५], पश्यति[६], तथा आत्मानं[७], अकर्तारं पश्यति[८], सः[९], पश्यति ॥

क्रियमाणानि[१], सर्वशः = सर्वप्रकारैः सर्वाणि वा[२], कर्माणि[३], प्रकृत्यैव च = चशब्दात्तेन हरिणा प्रकृत्या स्वस्वभावेनैव न प्रयोजनापेक्षया तथा प्रकृत्या स्वेच्छया लक्ष्म्या वा निमित्तया तथोपादानभूतया जडप्रकृत्या च जीवस्वभावेन च कर्माणि पूर्वं निमित्तीकृत्येत्यर्थः[४], इति यः पश्यति[५], तथा आत्मानं = स्वात्मानं जीवं अकर्तारं आह वदति[८], सः[९], पश्यति = स परमेश्वरं पश्यतीत्यर्थः । अत्रेश्वरलक्ष्मीयुक्तकर्मणां न जडप्रकृति-उपादानकत्वमिति ज्ञातव्यम् । यदि ईश्वरस्य सृष्ट्यादौ कर्मापेक्षानपेक्षयोः तस्य पारतन्त्र्यवैषम्ययोः प्रसङ्गः । किञ्च स्वस्यापि चेतनत्वेन सकर्तृकत्वे सिद्धे तत एव पारतन्त्र्यं च स्यादित्याशङ्क्याह **प्रकृत्यैवेति** । प्रकृत्या प्रारब्धः स्वयमेव कर्मादिकं प्रबोध्यते नेश्वरेणैव क्रियमाणानि कर्माणि पश्यति तथाऽऽत्मानं परमात्मानं अकर्तारं कर्तृरहितं यः पश्यति स पश्यति परमेश्वरमिति शेषः ॥ "स्वयं प्रकृत्या भगवान् करोति निखिलं

जगत् । नैव कर्ता हरेः कश्चिदकर्ता तेन केशवः ॥'' इति । ''न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् । योग्यतायास्तन्नियत्याऽविषमत्वं भवेत्तव ॥'' इति ॥ ''वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्य-कारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम् ॥'' इति वचनानुसारेण स्वाधीनयोग्यता-पूर्वककर्मापेक्षया प्राप्तं वैषम्यादि न दोषावहमिति भावः ॥ ३० ॥

**भाष्यम्**

**आत्मानं चाकर्तारं यः पश्यति स पश्यति ॥ ३० ॥**

***प०टी०*— 'स आत्मानमकर्तारं पश्यति' इति प्रतीतिनिरासायाह **आत्मानमिति** ॥ ३० ॥

***प्र०दी०*— 'प्रकृत्यैव च' इत्यत्र 'यः प्रकृत्यैव च कर्माणि क्रियमाणानि पश्यति स आत्मानमकर्तारं पश्यति' इति **कश्चित्** अन्वयमाह । तदसत् । तथाशब्दवैयर्थ्यापत्तेरिति भावेन अन्यथा आह **आत्मानं चेति** । **स पश्यति** परमेश्वरम् ॥ ३० ॥

***भा०दी०*— अन्यथा आह इति** । तथाशब्दसमुच्चयार्थत्वेन आह इत्यर्थः ॥ ३० ॥

***भा०र०*— अन्यथा** समुच्चयार्थत्वेन । 'पश्यति' इत्यनूद्याध्याहार्यमाह **पश्यति परमेश्वर-मिति** । तथाशब्दस्य समुच्चयार्थत्वेन स्वमते 'तथाशब्दः समुच्चये' इति भाष्यभाव इत्यपि **आहुः** ॥ ३० ॥

**गीतातात्पर्यनिर्णयः**

**प्रकृत्य स्वयमेव प्रारभ्य विष्णुना क्रियमाणानि । विष्णोर्नान्यः पूर्वप्रेरक इति । ''पूर्वं तु बादरायणो हेतुव्यपदेशात्'' इति भगवद्वचनात् ।**

**''द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥'' इति च ।**

***प्रका०*—** ''प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः । यः पश्यति तथाऽत्मानमकर्तारं स पश्यति'' इत्यस्यार्थमाह **प्रकृत्येत्यादिना** ।

***न्या०दी०*—** ईश्वरः सदसद्योनिजन्मसु कर्मानपेक्ष्यैव कारणं चेत् तर्हि तस्य वैषम्यादि स्यात् । कर्मापेक्षायां स्वातन्त्र्यप्रच्युतिः । तथा तस्यापि जनकसद्भावाच्च न स्वातन्त्र्यमित्यत उच्यते 'प्रकृत्य' इति । तत्र प्रकृतिरेव कर्त्री न परमात्मेत्यन्यथाप्रतीति-

निरासायाह **प्रकृत्येति** ॥ **स्वयमेव प्रारभ्येति** ॥ पूर्वकर्मादिकं स्वयमेव प्रबोध्येत्यर्थः । अभिप्रायं वक्ति **विष्णोरिति** ॥ कर्मसापेक्षत्वेऽपि न भगवतः स्वातन्त्र्यप्रच्युतिः । यावताऽसौ स्वयमेव पूर्वकर्मादिकमुद्बोध्य तदपेक्ष्येदानीं कर्माणि कारयति । न तु कर्मादिकं विष्णोरुद्बोधकमिति भावः । कुत एतदित्यत आह **पूर्वमिति** ॥ अस्तु कर्मादि हरिरुद्बोधयति, न तु तद्धरिमुद्बोधयतीति । तथापि हरेस्तदपेक्षत्वादस्वातन्त्र्यमित्यतः कर्मादिसत्ताया अपि भगवदधीनत्वात् तदपेक्षायामपि नास्वातन्त्र्यमिति भावेन कर्मादिसत्ताया भगवदधीनत्वे प्रमाणमाह **द्रव्यमिति** ॥

*भा०दी०*— **पूर्वमितीति** । पूर्वोक्तं ब्रह्मैव कर्तृरूपं सत् कर्म प्रवर्तयति । न तु कर्म ब्रह्मप्रवर्तकम् । "पुण्येन पुण्यं लोकं नयती"त्यादौ ब्रह्मणः कर्तृत्वस्य कर्मणो हेतुत्वस्य व्यपदेशादिति भक्तिपादीयान्तिमसूत्रार्थः ॥

**गीतातात्पर्यनिर्णयः**

"स्वयं प्रकृत्या भगवान् करोति निखिलं जगत् ।
नैव कर्ता हरेः कश्चिदकर्ता तेन केशवः ॥" इति च स्कान्दे ।

*न्या०दी०*— कुत एवमर्थकल्पनेत्यत उक्तार्थे स्मृतिसमाख्यां दर्शयति **स्वयमिति** ॥

**गीतातात्पर्यनिर्णयः**

तेनेति प्रस्तुतत्वादेव सिद्धम् ।

*न्या०दी०*— नन्वत्र ईश्वरेणेत्यश्रवणात् कथमयमर्थः स्यादित्यत आह **तेनेति** ॥ "समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्" इति ईश्वरस्य प्रस्तुतत्वात् तेनेश्वरेणेत्यनुक्तेऽपि सिद्ध्यतीत्यर्थः ।

*भा०दी०*— **नन्वत्रेति** । गीतायामित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

"अहं सर्वस्य प्रभवः", "स हि कर्ता", "कर्तारमीशं पुरुषं ब्रह्मयोनिम्", "जन्माद्यस्य यतः", "मत्त एवेति तान् विद्धि" इत्यादिसकलप्रमाणविरोधश्च अन्यथा । "प्रकृत्यैव च" इति चशब्दाच्च तेनैव सिद्ध्यति ।

*न्या०दी०*— किमनया कल्पनया ? प्रकृतेरेव कर्तृत्वं नेश्वरस्येत्येवार्थः किं न स्यात् इत्यत उदाहृतः स्मृतिविरोधः तावत् वाक्यान्तरविरोधं च दर्शयति **अहमिति** ॥ तेनेश्वरेणेत्यत्र सूचितं चेत्याह **प्रकृत्येति** ॥

**गीतातात्पर्यनिर्णयः**

"प्रकृतेन क्रियायोगं चशब्दः क्वचिदीरयेत् ।
क्वचित् समुच्चयं ब्रूयात् क्वचिद् दौर्लभ्यवाचकः ॥"

—इति शब्दनिर्णये ।

*न्या०दी०*— चशब्देन कथमेतत्सिद्ध्यतीत्यत आह **प्रकृतेनेति** ॥ उच्यमानक्रियायाः प्रकृतकर्तृत्वमीरयेदित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

प्रकृतेः कर्तृत्वं "रचनानुपपत्तेश्च नानुमानम्" इत्यादि भगवद्वचनेन निरस्तम् ।
"न ऋते त्वत् क्रियते किञ्चनारे" इति च ।

*न्या०दी०*— ईश्वरस्य कर्तृत्वाभिधायकवचनविरोधान्नार्थान्तरकल्पना युक्तेत्युक्तम् । प्रकृतेः कर्तृत्वस्य श्रुत्यादिविरुद्धत्वाच्च नासौ युक्तेत्याह **प्रकृतेरिति** ॥ त्वदृते दूरेऽपि किञ्चन केनापि न क्रियत इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

केवलप्रकृतेः कर्तृत्वाङ्गीकारे चशब्दो व्यर्थः । "तत एव च विस्तारम्" इति वाक्यशेषविरोधश्च । "अहं बीजप्रदः पिता" इति वक्ष्यमाणमत्रापि "क्षेत्रक्षेत्रज्ञसंयोगात्" इति प्रकृतमिति तेनापि विरोधः ।

*न्या०दी०*— इतश्च नार्थान्तरकल्पना युक्तेत्याह **केवलेति** ॥ ईश्वरसमुच्चयार्थश्चशब्द इत्यतः केवलेत्युक्तम् । आत्मानमकर्तारमित्यत्र परेणेश्वरस्याकर्तृत्वाङ्गीकारात् न तत्समुच्चयार्थश्चशब्द इति भावः । इतश्च नेश्वरस्याकर्तृत्वमेतदर्थ इत्याह **तत एवेति** ॥ इतोऽपि नार्थान्तरकल्पना युक्तेत्याह **अहमिति** ॥ अत्र यावत्सञ्जायत इतीश्वरस्य सर्वकर्तृत्वं प्रकृतमिति तेनापीश्वराकर्तृत्वव्याख्यानं विरुद्धम् । न च वाच्यं पूर्ववाक्येऽपि प्रकृतेरेव कर्तृत्वं

**क्षेत्रज्ञस्य तत्संयोगात् कर्तृत्वोपचार इति । मम योनिर्महद्ब्रह्मेत्यादिना उत्तराध्याये अन्यथा एतद्वाक्यार्थस्य वक्ष्यमाणत्वादित्यर्थः ।**

*भा०दी०*— अत्रापीत्यनन्तरमत्रेत्यनुवादपूर्वं किञ्चित्पूरयित्वा मूलार्थमाह **यावदिति** । तत्सङ्गात् प्रकृतिसंयोगात् । इति न च वाच्यमित्यन्वयः ॥ **एतद्वाक्यार्थस्येति** । यावदित्यादिवाक्यार्थस्येत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

अचेतनं करोतीति स्वोक्तिविरोधश्च ।

"इच्छापूर्वं क्रियादानं कर्तृत्वं मुख्यमीरितम् ॥" इति पैङ्गिश्रुतिः ।

विकारलक्षणं कर्तृत्वं तु प्रकृतेरङ्गीकृतमेव । तथाऽपि लक्ष्मीपरमेश्वरमुक्तचेष्टासु तदभावात् 'सर्वशः' इत्यस्य सङ्कोचप्राप्तिः ।

**न्या०दी०— इतोऽपि न प्रकृतेरेव कर्तृत्वमिति अस्यार्थ इत्याह अचेतनमिति ॥ कथं स्वोक्तिविरोध इत्यत आह इच्छेति ॥ इच्छापूर्वक्रियास्वीकारो हि कर्तृत्वम् । तथा श्रुतेः । अचेतनं नामेच्छारहितम् । अतोऽचेतनं च करोति व्याहतिरिति भावः । ननु प्रकृतेः स्वतन्त्रकर्तृत्वाभावेऽपि परिमाणरूपं कर्तृत्वमङ्गीक्रियत एव सिद्धान्तिनाऽपि । अतस्तदर्थोऽयं श्लोकः किं न स्यादित्यत आह विकारेति ॥ यद्यपि प्रकृतेः परिणामरूपं कर्तृत्वमङ्गीकृतं, तथापि न तदर्थोऽयं श्लोकः । अत्र सर्वकर्मणां प्रकृत्यैव क्रियमाणत्वोक्तेः । एतदर्थत्वे च परमेश्वरादिकर्मसु प्रकृतिविकारत्वाभावात् सर्वश इति पदस्यार्थसङ्कोचप्राप्तेरित्यर्थः ।**

**गीतातात्पर्यनिर्णयः**

"अचेतनाश्रितं कर्म विकारात्मकमीरितम् ।
यत्तु केवलचित्संस्थं प्रत्यभिज्ञाप्रमाणतः ।
अविकारात्मकं ज्ञेयं तन्न तत् प्राकृतं भवेत् ॥" इति च ॥ ३० ॥

**न्या०दी०— परमेश्वरादिकर्मणः प्रकृतिविकारत्वाभावः कुत इत्यत आह अचेतनेति ॥**

गीता

## यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
## तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३१ ॥

***वि०वि०***— न केवलं भगवतः सर्वप्रेरकत्वादिज्ञानमात्रेणालम् । किन्तु, तस्य सर्वाधारत्वाद्यपि ज्ञातव्यमित्याह **यदेति** । यदा भूतानां पृथग्भावं पृथग्भूतानीति यावत् । एकस्थं एकस्मिन्नेव विष्णौ स्थितम् । तत एव विष्णोर्विश्वस्य विस्तारमुत्पत्तिं पश्यति तदा ब्रह्म सम्पद्यते प्राप्नोति । उक्तं च— 'एकविष्ण्वाश्रयाणां च जीवानां भेदमेव यः । ततः परस्परं चैव तारतम्येन पश्यति ॥ विष्णोरेव च विस्तारं जगतः स विमुच्यते ॥' इति ॥ ३१ ॥

***वा०ल०***— 'यदा' इत्यत्र, एकस्थम् एकस्मिन् परमात्मनि स्थितम् । भूतपृथग्भावं भूतानां जीवानां पृथग्भावं भेदम् । ततः परमात्मन एव । विस्तारं जीवजडात्मकप्रपञ्चविस्तारम् ॥ ३१ ॥

***सा०सं०***— न केवलं भगवतः सर्वप्रेरकत्वादि ज्ञानमात्रेणालम् । किन्तु तस्य 'ॐ अवस्थितेरिति काशकृत्स्नः ॐ' इति सूत्रोक्तदिशा सर्वाधारत्वाद्यपि ज्ञातव्यमित्युच्यते **यदेति** । **भूतपृथग्भावं** भूतानां जीवानां पृथक्त्वं भेदम् । **एकस्थमे**कस्मिन् विष्णौ स्थितम् । किमुक्तं भवति— विष्णुनाऽन्योन्यं च पृथग्भूतं भूतग्राममेकविष्ण्वाश्रितं यदानुपश्यतीत्युक्तं भवति । **तत एव** विष्णुत एव । विस्तारमुत्पत्तिं च । भूतानामित्यन्वेति । **अनु** तारतम्येन **पश्यति** । **तदा ब्रह्म सम्पद्यते** प्राप्नोति ॥ ३१ ॥

***अ०प्र०***— ईश्वरस्य सर्वाधारत्वादिज्ञानस्य फलमाह **यदेति** ।

भूतपृथग्भावं[२], एकस्थं[३], तत एव जातं[४], विस्तारञ्च[५], इति यदा[१], अनुपश्यति[६], तदा[७], ब्रह्म सम्पद्यते[८] ॥

भूतपृथग्भावं = भूतानां पृथग्भावत्वं पृथक् सत्त्वं वा । पृथक्त्व-युतभूतं वा[२], एकस्थं = एकस्मिन्नेव विष्णौ स्थितं[३], तत एव जातं = विष्णोस्सकाशादेव जातं[४], विस्तारं च = विश्वस्य उत्पत्तिञ्च[५], इति यदा अनुपश्यति = आलोचयति[६], तदा ब्रह्म सम्पद्यते = ब्रह्मज्ञानी भवतीत्यर्थः[८] । तदुक्तम्— "एकं विष्णुः श्रियाणां च जीवानां भेदमव्ययः । ततः परस्परं चैव तारतम्येन पश्यति ॥ विष्णोरेव च विस्तारं जगतः सत्त्वमुच्यते ॥" इति विष्णोः शरीरे स्थितत्वात् जीववत् नाशलयौ स्यातामित्यत आह ॥ ३१ ॥

यद्वा, तथापि परमेश्वरस्य संस्कारावस्थायां देहसम्बन्धनिमित्तकर्मभिस्तत्फलैश्च सुखदुःखादिभिश्च वैषम्यदुःखपरिहारमिति कुतः समदर्शनम् ? तत्राह 'अनादित्वादि'ति ।

**भाष्यम्**

**एकस्थम्** एकस्मिन्नेव विष्णौ स्थितम् । **तत एव च** विष्णोः **विस्तारम्** ॥ ३१ ॥

***प०टी०***— 'यदा भूत...' इति श्लोकं व्याचष्टे **एकस्थमिति** ॥ ३१ ॥

***प्र०दी०***— 'एकस्थम्' इत्यस्य 'एकस्थात्मकम्' इति व्याख्यानं सर्वप्रमाणविरुद्धमिति भावेनाह **एकस्थमिति** । 'तत एव च विस्तारम्' इत्यस्य 'स्वस्मादेव विश्वस्य विस्तारम्' इति व्याख्यानम् असदिति भावेन आह **तत एवेति** । **विस्तारम्** उत्पत्तिम् ॥ ३१ ॥

***भा०र०***— **एकस्थात्मकमिति** । प्रलये एकमेव तिष्ठतीत्येकस्थम्, तदात्मकमिति व्याख्यानमित्यर्थः । **असदिति** । तच्छब्दस्य पूर्वमप्रकृतपरामर्शित्वस्य व्युत्पत्तिविरोधित्वादिति भावः । **तत एव** विष्णोरेव । एकशब्देन विष्णोः प्रकृतत्वादिति भाष्यार्थस्य स्फुटत्वाद् विस्तारशब्दार्थमाह **विस्तारमुत्पत्तिमिति** । 'भूतानामनुपश्यति' इति योज्यम् ॥ ३१ ॥

**गीतातात्पर्यनिर्णयः**

**एकविष्णवाश्रितानां च जीवानां भेदमेव यः ।**
**ततः परस्परं चैव तारतम्येन पश्यति ।**
**विष्णोरेव च विस्तारं जगतः स विमुच्यते ॥" इति च ॥ ३१ ॥**

***प्रका०***— अथोपक्रम्य पूर्ववासनादिकमुद्बोध्य कर्माणि समवस्थितमीश्वरस्थमिति पूर्वप्रकृतेन प्रकृत्यैव चेति चशब्दसूचितेन विष्णुना क्रियमाणानि "तं चात्मानं कर्तृरहितं यः पश्यति स पश्यति स ज्ञानी"त्युच्यते । न तु क्रियागुणा गुणात्मकतया प्रकृत्यैव क्रियमाणानीति । तथा सति अहं सर्वस्य प्रभव इत्यादिविरोधः स्यात् । "यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ।" इत्यस्यार्थमाह **एकेत्यादिना** ।

***न्या०दी०***— **न केवलं भगवतः सर्वप्रेरकत्वादिज्ञानमात्रेणालम् । किन्तु तस्य सर्वाधारत्वाद्यपि ज्ञातव्यमित्युच्यते 'यदा' इति । तत् तिरोहितार्थत्वात् प्रमाणवाक्येनैव**

व्याचष्टे **एकेति** ॥ भूतपृथग्भावस्य परमात्मस्थत्वोक्त्या पृथग्भूतानां तत्स्थत्वमभिप्रेतम् । तदेवात्रोक्तम् ॥

*भा०दी०*— **अलमिति** । मोक्षादिपुमर्थयेति योज्यम् । प्रमाणस्य मूलसमानार्थत्वाय मूलस्याभिप्रेतार्थमाह **भूतेति** ॥ **अत्रोक्तमिति** । प्रमाणवाक्योक्तमित्यर्थः ॥

**गीता**

## अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
## शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३२ ॥

*वि०वि०*— न च शरीरसम्बधेन विष्णोर्व्ययादिरित्याह **अनादित्वादिति** । यद्यपि भावरूपं तत् सादि गुणात्मकं च । अतादृशत्वादव्ययः परमात्मा लौकिकक्रियादिराहित्यान्न करोति न लिप्यते ।

यद्वा, परमात्मनः सर्वचिदात्मकत्वात्कथं भूतानां ततः पृथग्भाव इत्यत आह **अनादित्वादिति** । शरीरगतदुःखादिभोगलक्षणादभिमानाच्छरीरस्थो जीवः शरीरतोऽप्युत्पत्तिराहित्यात् सर्वात्मना त्रिगुणसम्बन्धाभावाच्छरीरस्थोऽपि व्ययाभावाच्चायं परमात्मा शरीरस्थो जीवो न भवति । किमुत जडं न भवतीत्यपि शब्दार्थः ।

किञ्च, परमात्मा सर्वं करोति न लिप्यते । जीवस्तु न करोति लिप्यत एवेत्यर्थः । उक्तं च– 'शरीरस्थस्तु संसारी शरीराभिमतेर्मतः । विष्णुः शरीरगोऽप्येष न शरीरस्थ उच्यते ॥ शरीराभिमतिर्यस्मान्नैवास्यास्ति कदाचन । तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते ॥ तदभावान्नाभिमानी भगवान्पुरुषोत्तमः ।', 'कुर्वाणोऽपि यतः सर्वं पुण्यपापैर्न लिप्यते । जन्ममृत्यादिरहितः सत्वादिगुणवर्जितः ॥ विष्णुस्तद्विपरीतस्तु जीवोऽन्तस्थोऽपृथक्सदा ॥' इति ॥ ३२ ॥

*वा०ल०*— अनादित्वात् देहेन सह जायमानजीववत् जीवदेहजन्मनि स्वस्य जन्माभावेन पापकर्तृजीवदेहस्य स्वदेहत्वाभावात् पापादिप्रयोजकतामसादिप्रकृतेरपि स्वसम्बन्धित्वात्, त्रिविधजीववत् सत्त्वादिगुणरहितत्वाच्च परमात्मा न करोति न लिप्यते । भाविकर्म तत् पापकर्म च परमात्मनो न । अत एव तेन पाप्मना न लिप्यते च । न हि क्रूरपुरुषेण स्वदोष्णा कस्यचित् कपोले ताड्यमाने शान्तोऽपि ताडयिता वा, ताडनफलभोक्ता वा भवेत् । न वा शिष्यविद्याप्रेरको गुरुः शिष्ययोर्विवादे विवादी, नापि तयोः पराजये सति पराजयीति भावः ।

***सा०सं०***— ननु सर्वभूतेषु तिष्ठतो न विनाश इत्ययुक्तम् । शरीरसम्बन्धे व्ययादेरावश्यकत्वादित्यतो हेतूक्तिपूर्वं व्ययलेपाद्यभावमाह **अनादित्वादिति । शरीरस्थोऽप्ययं परमात्मा अनादित्वात् निर्गुणत्वात्** सत्त्वादिगुणहीनत्वाच्च । **अव्ययः** नाशादिव्ययहीनः । चिन्तासन्तापदुःखादिना **न लिप्यते** न सम्बध्यते । लौकिकक्रियाविलक्षणक्रियावत्त्वात् **न करोति** च । अनादित्वहेतोर्भावत्वे सतीति विशेषणान्न प्रागभावे व्यभिचारः शङ्क्यः ।

***सा०सं०***— यद्वा, 'सर्वं खल्विदं ब्रह्म', 'पुरुष एवेदं सर्वम्' इत्यादिना विष्णोः सर्वचिदचिदात्मकत्वप्रतीतेर्वाद्यन्तैरैस्तथोक्तेश्च कथं भूतानां विष्णोः पृथग्भाव इत्यतः श्रुतितात्पर्यापरिज्ञानादिप्राप्तमद्वैतं सहेतुकं निराह **अनादित्वादिति । अयं परमात्मा । शरीरस्थोऽपि** शरीराभिमानितया तत्स्थसुखदुःखादिभोक्तृतया शरीरस्थोऽत्र जीवोऽभिमतः । शरीरस्थोऽपि न भवति । जीवात्मकोऽपि न भवति । किमु वाच्यं जडात्मको न भवतीति **अपेरर्थः** । कुतः, **अनादित्वात्** देहयोगनिमित्तादिमत्त्वहीनत्वादिति यावत् । सत्त्वादिगुणहीनत्वाद्देहव्ययनिमित्तव्ययहीनत्वात् । **करोति** सर्वकर्तृत्वात् । **न लिप्यते** सर्वकरणनिमित्तफलाभोक्तृत्वाच्च । जीवस्य चोक्तहेतुपञ्चकविपर्ययवत्त्वादिति भावः । ईश्वरः करोति न लिप्यते । जीवस्तु 'परात् तु तच्छ्रुतेः' इति सूत्रोक्तदिशा कर्तृशक्तेरपीशाधीनतया स्वातन्त्र्याभावान्न करोति । पराधीनकर्तृतया लिप्यते चेति योजना ॥ ॥ ३२ ॥

***अ०प्र०***— हे कौन्तेय[१], अयं[२], परमात्मा[३], शरीरस्थः जीवः[४], न भवति[५], अपिशब्देन जडाभिन्नो न भवति[६], कुतः अनादित्वात्[७], निगुर्णत्वाच्च[८], सर्वात्मना अव्ययः व्ययशून्यश्च[९], किञ्च परमात्मा सर्वं करोति[१०] न लिप्यते[११] इत्यन्वयः ।

जीवस्य स्वतो अव्ययत्वेऽपि देहाभिमानादत एव देहाद्यात्मक-सत्त्वादिगुणसम्बन्धाच्च तन्वादिरूपो नाशोऽस्ति । तत एव कर्मलेपोऽपीति । यद्वा, 'पुरुष एवेदं सर्वं' इति श्रुतेः सर्वस्य ब्रह्मात्मकत्वात्कथं भूतानां ततः पृथक्त्वमुच्यत इत्यत आह **अनादित्वादिति** । अत्र शरीरस्थशब्दो जीववाची । अयं परमात्मा शरीरस्थः जीवः न भवति कुतः परमात्मनः अनादित्वात् सर्वप्रकारेणोत्पत्त्यभावान्निर्गुणत्वात् सर्वात्मना त्रिगुणसम्बन्धाभावात् । सर्वात्मना = व्ययशून्यश्चेश्वरो यतोऽत इत्यन्वयः । किञ्च परमात्मा सर्वं करोति न लिप्यते च[११] जीवस्य त्वत्तादृशत्वात् । तथा च विरुद्धधर्माधिकरणत्वेन जीवेश्वरयोर्भेद इति भावः । यदेश्वरो जीवाभिन्नो न भवति तदा किमु वाच्यम् । जडाभिन्नो न भवतीति सूचनाय अपिशब्दः । तथोक्तम्— शरीरस्थस्तु संसारी

शरीराभिमतेर्मतः । विष्णुः शरीरगोऽप्येषः न शरीरस्थ उच्यते ॥ शरीराभिमतिर्यस्मान्नैवास्यास्ति कदाचन । तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते ॥ तदभावान्नाभिमानी भगवान् पुरुषोत्तमः । कुर्वाणोऽपि यतः सर्वं पुण्यपापैर्न लिप्यते ॥ जन्ममृत्यादिरहितः सत्त्वादिगुणवर्जितः । विष्णुस्त-द्विपरीतस्तु जीवोऽन्तरस्थौ पृथक् सदा ॥ इति ॥ ३२ ॥

**भाष्यम्**

**न च व्ययादिस्तस्येत्याह अनादित्वादिति । सादि हि प्रायो व्ययि गुणात्मकं च । 'न करोति' इत्यादेरर्थ उक्तः पुरस्तात् । न लौकिकः क्रियादिः तस्य । अतो 'न प्रज्ञम्' इत्यादिवदिति ॥ ३२ ॥**

***प०टी०***— सर्वेषु भूतेषु तिष्ठति चेत्, नाशः स्यात् तन्नाशेन तस्येत्याशङ्क्य, उक्तम् 'विनश्यत्सु' इति । तदुपासनपरतया 'अनादित्वात्' इति श्लोकमवतारयति **न चेति**। शरीरस्थत्वेऽपि व्ययवृद्ध्यादि नास्ति । कुतो नाशः ? इत्यर्थः । अव्ययत्वानादित्वादेर्हेतुत्वं घटयति **सादीति** । **सादि प्रायो व्ययि, गुणात्मकं** सर्वत्र व्ययीत्यर्थः । 'न करोति' इत्यत्र अन्यथाप्रतीतिनिरासायाह **नेति** ॥ ३२ ॥

***प्र०दी०***— 'अव्यय' इत्यनुवादेन लेपाभावमात्रं विधीयते इत्यन्यथाप्रतीतिनिरासार्थमाह **न चेति** । एतेन अव्ययत्वमपि साध्यमप्राप्तत्वादित्युक्तं भवति । **तस्य** विष्णोः । अनेन 'जीव-विशेषणमेतत् । तस्य प्राप्तिसद्भावेन प्रतिषेधोपपत्तेः' इति निरस्तम् । विष्णोरपि 'शरीरस्थोऽपि' इति प्राप्तेरुक्तत्वात् । अनादिनिर्गुणत्वयोरव्ययत्वे हेतुत्वमुपपादयितुं व्याप्तिमाह **सादीति** । यत् **व्ययि** तत् **प्रायः सादि गुणात्मकं च** इति योजना । प्रागभावे व्यभिचारवारणाय 'प्रायः' इत्युक्तम् । साद्येव गुणात्मकमेवेत्यवधारणेन यथास्थितयोजना वा ।

'न करोति निर्गुणत्वात्' इतीश्वरस्य क्रियागुणाभावः प्रतीयत इत्यत आह **न करोतीति** । पुरस्तादुक्तमेव स्मारयति **नेति** । **इत्यादिवत्** 'अक्रियत्वादिकं व्याख्येयम्' इति शेषः । यद्यपि अव्ययत्वमप्यत्र साध्यम् । तथाऽपि तल्लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं 'यथा सर्वगतं' इत्युपपाद्यते ॥ ३२ ॥

***भा०दी०***— यथाश्रुतयोजनायां ध्वंसे मुक्तौ चानैकान्त्यापत्तेः व्यतिरेकव्याप्त्युक्त्यनापत्तेश्चेति भावः । **इत्यवधारणेनेति** । तदा हेत्वभावस्य (व्याप्य)व्यापकत्वम्, अव्ययत्वरूपसाध्याभावस्य

व्याप्यत्वमुक्तं भवतीति भावः । व्यतिरेकव्याप्तौ व्यापकाभावस्य व्याप्यत्वात् अनादिव्ययत्वस्य च अव्यापकत्वात्, व्यापकाभावपूर्वं व्याप्तिं दर्शयति **यद्यपीति** । **लोकत इति** । 'यदनादि तदव्ययम्' इत्यस्य देशकालादौ ज्ञातुं शक्यत इति तदनुपपाद्य **लेपाभावमात्रं** गीतायामुपपाद्यत इत्यर्थः । एतच्च **अव्ययम्** इत्यनुवादेन इत्यादिना प्रागुक्तान्यथाप्रतीतेर्बीजखण्डनायोक्तमिति ध्येयम् ॥ ३२ ॥

***भा०र०***— एकशब्देन विष्णोः प्रकृतत्वात् तच्छब्देन स एव ग्राह्य इति भावेनाह **तस्य विष्णोरिति** । **अनेन** 'तस्य विष्णोः' इति वचनेन । **एतत्** 'अनादित्वान्निर्गुणत्वात्' इति वचनम्। **तस्य** जीवस्य **प्राप्तिसद्भावेन** 'अहं कर्ता, भोक्ताऽस्मि' इति प्रतीतेः कर्तृत्वलेपप्राप्तिसद्भावेन । **प्राप्तेरुक्तत्वात्** तथा च 'न करोति न लिप्यते' इति प्रतिषेधोपपत्तिरिति भावः । अव्ययत्वे साध्ये व्यतिरेकव्याप्त्युपपादनायाह **सादि हि प्रायो व्ययि गुणात्मकं चेति** । तदयुक्तम् । व्यतिरेकव्याप्ति-प्रदर्शने साध्याभावस्यादौ वक्तव्यात्वाद् इत्यतो यथावद् योजयति **यद्व्ययीति** । विनाशीत्यर्थः । **साद्येवेति** । 'वह्निमानेव धूमवान्' इत्यादौ इव व्याप्यस्य व्यापकायोगव्यवच्छेदवचनेन व्याप्तिरेव प्रदर्शिता भवतीति भावः । 'न करोति' इत्यनेन क्रियाऽभावः 'निर्गुणत्वात्' इत्यनेन गुणाभावः प्रतीयत इत्यर्थः । **साध्यं** तथा चोपपादनीयमिति भावः । **लोकत इति** । 'यद् भावत्वे सति अज्ञानातिरिक्तम् अनादि तद् अव्ययम्' इति व्याप्तिर्देशादौ ज्ञातुं शक्यत इत्यर्थ **इति** गीतायाम् । एतच्च 'अव्यय इत्यनुवादेन' इत्यादिना प्रागुक्तान्यथाप्रतीतेर्बीजखण्डनायोक्तमिति ज्ञेयमिति **स्वामिनः** ॥ ३२ ॥

**गीता**

## यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
## सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३३ ॥

***वि०वि०***— परमात्मनो लेपाभावं दृष्टान्तेनोपपादयति **यथेति** । सर्वगतं पङ्कादिसर्वपदार्थेषु स्थितमाकाशम् । सौक्ष्म्यादसङ्गत्वान्नोपलिप्यते । तथा सर्वत्र नीचोच्चदेहेऽवस्थित आत्मा परमात्मा देहधर्मैर्न लिप्यते ॥ ३३ ॥

***सा०सं०***— परमात्मनो लेपाभावं दृष्टान्तेनोपपादयति **यथेति** । पङ्कादि**सर्वगतमप्याका-शम्** । **सौक्ष्म्यात्** अप्रतिघत्वात् । **नोपलिप्यते यथा** । तथा **सर्वत्र** नीचोच्चादिदेहे स्थितो-ऽप्या**त्मा** परमात्मा **नोपलिप्यते** ॥ ३३ ॥

*अ०प्र०*— ईश्वरस्य लेपाभावे दृष्टान्तमाह **यथेति** ।

यथा[१], सर्वगतं[२], आकाशं[३], सौक्ष्म्यात्[४], नोपलिप्यते[५], तथा सर्वत्र देहे[७], अवस्थितः[८], आत्मा[९], नोपलिप्यते[१०] ॥

हे कौन्तेय !, यथा[१], सर्वगतं = सर्वत्र पङ्कादिष्वपि स्थितं[२], आकाशं = नभः[३], सौक्ष्म्यात् = सूक्ष्मत्वात् असङ्गत्वात्[४], नोपलिप्यते = न तद्धर्म-सम्बन्धो भवति पङ्कादिभिर्नोपलिप्यते[५], तथा सर्वत्र = देहे नृदेहादि उत्तमे अधमे वा देहे[७], अवस्थितः = स्थितोऽपि[८], आत्मा = परमेश्वरः[९], नोपलिप्यते = देहिकैर्गुणदोषैः न युज्यते । देहादिधर्मैः रक्तादिभिः पापादिभिश्च न सम्बध्यते ॥ ॥ ३३ ॥

**गीता**

## यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
## क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४ ॥

*वि०वि०*— यदर्थं क्षेत्रादिस्वरूपं निरूपितं तत् क्षेत्रज्ञस्वरूपं दृष्टान्तेन दर्शयति ॥ ३४ ॥

*बा०ल०*— **क्षेत्रं क्षेत्री** क्षेत्रनियामकः । क्षेत्रक्षेत्रज्ञयोः क्षेत्रस्य जीवजडात्मकप्रपञ्चस्य, क्षेत्रज्ञस्य परमात्मनश्चेत्युभयोः । भूतप्रकृतिमोक्षं च भूतानां परमात्मनः कृपया प्रकृतेः सकाशात् मोक्षं च ये विदुः ते परं नारायणं यान्ति ॥ ३४ ॥

*सा०सं०*— यत्क्षेत्रज्ञत्वविशिष्टतया भगवज्ज्ञानार्थं क्षेत्रादिकमुक्तम् । तत्क्षेत्रज्ञत्वं दृष्टान्तेन व्यनक्ति **यथेति** । **यथैको रविः इमं लोकं कृत्स्नं प्रकाशयति** । **तथैकः क्षेत्री** क्षेत्रस्थः **परमात्मा** । **कृत्स्नं क्षेत्रम्** । चेतनाचेतनरूपम् । **प्रकाशयति** ॥ ३४ ॥

*अ०प्र०*— यदर्थं क्षेत्रादिस्वरूपं निरूपितम् । तत्क्षेत्रस्वरूपं दृष्टान्तेन दर्शयति । प्रकाशकत्वात्प्रकाशधर्मैर्नियुज्यत इति रविदृष्टान्तेनाह **यथेति** ।

हे भरत ![१], यथा[२], रविः[३], एकः = एक एव[४], इमं = पुरोवर्ति दृश्यमानं[५], कृत्स्नं = समस्तं लोकं[७], प्रकाशयति = विश्वं भासयति[८], तथा क्षेत्री = क्षेत्रज्ञ ईश्वरः[१०] कृत्स्नं = ब्रह्मादिस्तम्भान्तं षट्त्रिंशत्तत्त्वात्मिकं[११] क्षेत्रं = क्षेत्राभासं[१२] प्रकाशयति ॥ ३४ ॥

**गीतातात्पर्यनिर्णयः**

शरीरस्थो जीवः ।

***न्या०दी०***— सर्वचेतनाचेतनात्मकत्वात् परमात्मनः कथं भूतानां ततः पृथग्भाव इत्यत उच्यते **अनादित्वादिति** । तत्र परमात्मनोऽकर्तृत्वप्रतीतिं च निराकर्तुं शरीरस्थपदं व्याख्याति **शरीरस्थ इति** ॥

***भा०दी०***— अकर्तृत्वप्रतीतिं चेति । न केवलं सर्वात्मकत्वमिति शङ्कामिति चार्थः ।

**गीतातात्पर्यनिर्णयः**

"स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति" इति श्रुतेः ।

***प्रका०***— अत्र जीवेशयोरभेदः श्रुतितात्पर्यानभिज्ञप्राप्तो निराक्रियते **स्वप्नेन शारीरमभिप्रहत्या सुप्तः सुप्तानभिचाकशीति** इति ।

***न्या०दी०***— शरीरस्थशब्दस्य कुतो जीववाचित्वमित्यतः तत्प्रयोगं दर्शयति **स्वप्नेनेति** ॥

**गीतातात्पर्यनिर्णयः**

"शरीरस्थस्तु संसारी शरीराभिमतेर्मतः ।
विष्णुः शरीरगोऽप्येष न शरीरस्थ उच्यते ॥
शरीराभिमतिर्यस्मान्नैवास्यास्ति कदाचन ।
तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते ।
तदभावान्नाभिमानी भगवान् पुरुषोत्तमः ॥" इति च ।

***न्या०दी०***— ननु जीववदीश्वरस्यापि शरीरस्थितेः जीवस्यैव तत्पदवाच्यत्वं कुत इत्यत आह **शरीरस्थ इति** ॥ विष्णोरपि मयेदं सृष्टं, मदधीनमित्यभिमानोऽस्त्येव । अतः कथं तदनभिमान इत्यत आह **तद्गतानामिति** ॥

**गीतातात्पर्यनिर्णयः**

अनादित्वान्निर्गुणत्वाच्च परमात्मा जीवोऽपि न । किमुत जडं न भवतीति ? शरीरोत्पत्तिलक्षणमपि आदिमत्त्वं परस्य नास्तीति विशेषः । जीवस्य हि तदस्ति

इति । सत्त्वादिगुणसम्बन्धश्च । सर्वं करोति परमात्मा तथाऽपि न लिप्यते । वादिप्रसिद्धत्वादेव "इष्टापूर्तं मन्यमाना वरिष्ठम्" इत्यादिवन्निषेधः ।

***न्या०दी०***— शरीरस्थपदं जीववाचकं चेत् कथं योजनेत्यत आह **अनादित्वादिति** ॥ इति वाच्यमिति शेषः । जीवस्याप्यनादित्वात् किं विशिष्येश्वरस्यैव तदुच्यते, येनास्य जीवाभेदनिवारणे हेतुत्वं स्यादित्यत आह **शरीरेति** ॥ एवम्भूतादिमत्त्वाभावेऽपि कथं परमात्मनो जीवाद्विशेष इत्यत आह **जीवस्येति** ॥ इतिशब्दो हेतौ । ननु निर्गुणत्वं कथमीश्वरस्य जीवभेदे हेतुर्भवति ? जगत्कर्तृत्वादिगुणानाम् ईश्वरे भावेन हेतोरसिद्धेरित्यत आह **सत्त्वेति** ॥ नात्र गुणपदेन जगत्कर्तृत्वादयो विवक्षिताः । किन्तु सत्त्वादय एव । तत्सम्बन्धश्चेश्वरे नास्ति, जीवेऽस्तीति भवति हेतुरिति भावः । करोति न लिप्यत इति जीवेश्वरभेदे हेत्वन्तरम् । तद्व्याचष्टे **सर्वमिति** ॥ जीवो न करोति लिप्यत एवेति द्रष्टव्यम् । लेपश्च तत्फलेन । नन्वत्र जीवाद्यभेदस्याप्राप्तत्वात् कथं निषेधो युक्त इत्यत आह **वादीति** ॥ यथा शून्यवादिसिद्धत्वात् शून्यकारणत्वस्य "तद्धैक आहुः" इत्यादिना निषेधः क्रियते तथा सर्वाद्वैतवादिप्राप्तत्वात् अद्वैतनिषेधो युज्यते । यथा च ज्ञानद्वारा मोक्षार्थं कर्मभिरीश्वर एवाराध्य इति कर्मश्रुत्यभिप्रायापरिज्ञानप्राप्तस्य केवलकर्मणैव स्वर्गादिपुरुषार्थलाभो भवतीत्यस्य "इष्टापूर्तं" इत्यादिना निषेधः क्रियते तथा भगवता सर्वं व्याप्तमिति "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्यभिप्रायापरिज्ञानप्राप्तस्याद्वैतस्य निषेधो युक्त इति भावः ।

***भा०दी०***— जडं न भवतीत्यत्रेतिपदानुवादेन शेषमाह इति वाच्यमिति शेष इति । अनुरूपं दृष्टान्तं स्वयमाह **यथा शून्येति** ॥

**गीतातात्पर्यनिर्णयः**

"कुर्वाणोऽपि यतः सर्वं पुण्यपापैर्न लिप्यते ।
जन्ममृत्यादिरहितः सत्त्वादिगुणवर्जितः ।
विष्णुस्तद्विपरीतस्तु जीवोऽतस्तौ पृथक् सदा ॥" इति च ।

***न्या०दी०***— प्रातीतिक एवार्थः किं न स्यादित्यत उक्तार्थे वाक्यान्तरसम्मतिमाह **कुर्वाण इति** ॥ मृत्यादिरहित इत्यनेनाव्ययपदं व्याख्यातं भवति ।

**गीतातात्पर्यनिर्णयः**

**"स एष नेति नेति" इत्यादि च ॥ ३२-३४ ॥**

***प्रका०***— "स एष नेति नेति आत्मे"त्यादिश्रुतिबलात् इति । **न इति** । नेत्यनेन जीवजड-प्रकारवैलक्षण्यमपरमात्मनः उच्यते ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां त्रयोदशोऽध्यायः ॥*

***न्या०दी०*— ईश्वरस्य चेतनाचेतनभिन्नत्वे श्रुतिसम्मतिं चाह स एष इति ॥**

**गीता**

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्॥ ३५ ॥**

***इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥***

***वि०वि०***— अध्यायार्थमुपसंहरति **क्षेत्रक्षेत्रज्ञयोरिति** । एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं ज्ञानचक्षुषा विवेकदृष्ट्या ये विदुः, तथा भूतेभ्यः पृथिव्यादिभ्यः प्रकृतेश्च मोक्षो येन, भूतानां जीवानामचेतनप्रकृतेः सकाशान्मोक्षो येनेति वा । तदभिमानित्वादिकं ये विदुः ते परं ब्रह्म यान्ति ॥ ३५ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां त्रयोदशोऽध्यायः ॥*

***सा०सं०***— फलोक्त्याऽध्यायार्थमुपसंहरति **क्षेत्रेति** । **क्षेत्रक्षेत्रज्ञयोरेवमुक्त**प्रकारेण । **अन्तरं** भेदम् । **ज्ञानचक्षुषा** विवेकदृष्ट्या । **ये विदुः** । तथा भूतेभ्यः प्रकृतेश्च जीवानां मोक्षो येनेति वा। भूतानां जीवानाम् अचेतनप्रकृतेः सकाशान्मोक्षो येनेति वा । तदभिमानित्वादिकं प्रागुक्तमोक्षसाधनं च ये विदुः **ते** ब्रह्म **यान्ती**ति ॥ ३५ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण श्रीमद्राघवेन्द्रयतिकृते श्रीमद्गीतार्थसङ्ग्रहे त्रयोदशोऽध्यायः ॥*

*अ०प्र०*— हे भारत !, एवं[1], क्षेत्रक्षेत्रज्ञयोः[2], अन्तरं[3], तथा भूतप्रकृतिमोक्षं च[4], ये ज्ञानचक्षुषा[6], विदुः[7], ते[8], परं[9], यान्तीत्यन्वयः ॥

हे भारत !, एवं = उक्तप्रकारेण[1], क्षेत्रक्षेत्रज्ञयोः[2], अन्तरं = भेदं[3], तथा भूतप्रकृतिमोक्षञ्च = भूतानि च प्रकृतयश्च भूतप्रकृतयः । मुच्यते अनेनेति मोक्षः । मोक्षसाधनं भूतप्रकृतिभ्यो मोक्षो भूतप्रकृतिमोक्षः । तं तथा भूतानां प्रकृतेर्मोक्षमिति वा । यद्वा, भूतानां प्रकृतिः भूतप्रकृतिः । तस्याः सकाशान्मोक्षं मोक्षोपायं ध्यानादिकं च तादृशममानित्वादिकं लिङ्गदेहस्य पञ्चभूतप्रकृत्याद्यात्मकत्वात्तद्वियोगसाधनमित्यर्थः[4], ये = पुरुषाः[5], ज्ञानचक्षुषा = ज्ञानलक्षणेन चक्षुषा विवेकदृष्ट्या[6], विदुः = जानन्ति[7], परं = पदं[8], यान्ति = प्राप्नुवन्तीत्यर्थः ॥ ३५ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां त्रयोदशोऽध्यायः ॥*

भाष्यम्

**भूतेभ्यः प्रकृतेश्च मोक्षसाधनम् अमानित्वादिकम् ॥ ३५ ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये त्रयोदशोऽध्यायः ॥***

*प०टी०*— 'भूतप्रकृतिमोक्ष'पदार्थमाह **भूतेभ्य इति** ॥ ३५ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां त्रयोदशोऽध्यायः ॥*

*प्र०दी०*— 'भूतप्रकृतिमोक्षम्' इत्यस्य 'भूतानां प्रकृतिरविद्या, तस्याः मोक्षमवसानलक्षणम्' इति व्याख्यानमसत् । भूतशब्दवैयर्थ्यात् । अविद्याध्वंसस्यानुक्तत्वेन 'एवम्' इति परामर्शायोगाच्चेति भावेनाह **भूतेभ्य इति** । अनेन 'भूतप्रकृति' इति द्वन्द्वः । ततः 'पञ्चमी' इति योगविभागात् पञ्चमीतत्पुरुष इत्युक्तं भवति । **भूतेभ्यः** पृथिव्यादिभ्यः ।

ननु मोक्षो न प्रागुक्त इत्यत उक्तम् **मोक्षसाधनमिति** । करणे घञ् इत्यर्थः । मोक्षसाधनमपि नोक्तमित्यत आह **अमानित्वादिकमिति** । ज्ञानसाधनमपि परम्परया मोक्षसाधनमिति भावः । मोक्षशब्दस्य नित्यसापेक्षत्वान्नासमर्थत्वम् । यद्वा 'भूतेभ्यः प्रकृतेश्च' इति समासद्वयसूचनार्थं पृथगेव वाक्यम् । ततो मोक्षपदव्याख्यानं पृथगेवेति ॥ ३५ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां त्रयोदशोऽध्यायः ॥ १३ ॥*

***भा०दी०*— ननु 'पञ्चमी भयेन' इति सूत्रे पञ्चम्यन्तं भयपदेन समस्यते । 'चोराद्भयं चोरभयम्' इत्युक्तेरिह कथं समासः ? इत्यत आह **इति योगविभागादिति । करणे घञ् इति ।** 'मुच्लृ मोक्षणे' इति धातोरिति भावः । ननु तज्ज्ञानसाधनत्वेन उक्तमित्यत आह **ज्ञानसाधनमपीति ।**

ननु मोक्षपदस्य 'कस्मात्' इत्याकाङ्क्षायां 'भूतेभ्यः प्रकृतेश्च' इत्युक्तपञ्चम्यन्तसापेक्षत्वेन 'सापेक्षमसमर्थम्' इत्युक्तेः कथं साधनपदेन समासोक्तिर्भाष्ये ? इत्यत आह **नित्येति** । देवदत्तस्य गुरुकुलमित्यत्र **यथेति** भावः ॥ ३५ ॥

भाष्यं न समासाभिप्रायम्, किन्तु पञ्चम्यन्तद्वयं 'भूतप्रकृति' इत्यत्र द्वन्द्वसमासेन मोक्षपदं प्रत्येकमन्वेतीति प्रदर्शनमात्रपरम् । मोक्षसाधनपदं मोक्षपदार्थोक्तिपरम् । अतो भिन्नवाक्यत्वान्न दोष इत्याह **यद्वेति । समासद्वयेति** । द्वन्द्वः पूर्वं पश्चात् पञ्चमीतत्पुरुष इति सूचनार्थ इत्यर्थः ॥३५॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे त्रयोदशोऽध्यायः ॥*

***भा०र०*— वैयर्थ्यादिति** । अविद्याया भूतान्यानाश्रिततया तदुक्त्यैव तदनुबन्धितया भूतानां लाभेन वैयर्थ्यादित्यर्थः । **द्वन्द्वः** 'भूतानि प्रकृतिश्च' इति द्वन्द्वः । ननु भूतानां प्रकृतेश्च विश्लेषावधित्वेन अपादानत्वेन 'अपादाने पञ्चमी' इति पञ्चमीसम्भवेऽपि, न तत्समासः सम्भवति ? विधायकाभावात् । 'पञ्चमी भयेन' इत्यादेश्च नियतविषयत्वाद्, इत्यत आह **पञ्चमीति योगविभागादिति** । 'पञ्चमी भयेन' इत्यत्र 'पञ्चमी' इति योगविभागादित्यर्थः । भूतशब्देन सदेहजीवग्रहणे तेभ्यो मोक्षम् इत्यसङ्गतम् ? इत्यतो भूतशब्दार्थमाह **पृथिव्यादिभ्य इति** । मोक्षशब्देन मोक्षसाधनं कथं लभ्यते ? इत्यत आह **करण इति** । 'मोक्ष आसने इति चौरादिकाद् धातोः' इति शेषः । घञि च णिलोपश्च ज्ञेयः ।

ननु 'अमानित्वादिकम् एतज्ज्ञानमिति प्रोक्तम्' इति ज्ञानसाधनमित्युक्तम्, न मोक्षसाधनमिति ? तत्राह **ज्ञानसाधनमपीति** । ननु समासे एकार्थीभावरूपं सामर्थ्यमपेक्षितम्, 'समर्थः पदविधिः' इत्युक्तत्वात् । मोक्षशब्दस्य चेतरसापेक्षत्वात् न सामर्थ्यम् । अतः कथं 'मोक्षसाधनम्' इति भाष्ये समासः ? इत्यत आह **मोक्षशब्दस्येति** । तथा च 'देवदत्तस्य गुरुकुलम्' इत्यादाविव समास उपपन्न इति भावः । **समासद्वयेति** । 'भूतानि प्रकृतिश्च' इति द्वन्द्वः, ततः पञ्चमीतत्पुरुष

इति समासद्वयसूचनार्थमित्यर्थः । **पृथगेवेति** । **ततः** 'भूतेभ्यः प्रकृतेश्च' इति वाक्यात् । **मोक्षपद-व्याख्यानं** 'मोक्षसाधनममानित्वादिकम्' इति वाक्यं पृथगेवेत्यर्थः । तथा च नासामर्थ्यशङ्केति हृदयम् । इतिशब्दोऽध्यायभाष्यव्याख्यासमाप्तौ । इममेवार्थं दर्शयति **इति श्रीमदानन्दतीर्थेति** ॥ ॥ ३५ ॥

*गीताक्षरार्थस्तु—*

पूर्वं **क्षेत्रशब्देन** **ईश्वरातिरिक्तः** प्रकृतिपुरुषात्मकः सर्वोऽपि चेतनाचेतनवर्गो विवक्षितः । तत्र क्षेत्रान्तर्भूता प्रकृतिः 'महाभूतानि' इत्यादिना निरूपिता । क्षेत्रान्तर्भूतः पुरुषश्च 'पुरुषः प्रकृतिस्थो हि' इत्यादिनोक्तः । एतन्नियामकभगवत्स्वरूपं च 'उपद्रष्टा' इत्यादिना व्याख्यातम् । पुनश्च प्रकृति-पुरुष-ईश्वरस्वरूपं सर्वकार्योपादानत्व-प्रकृत्युपादानकदेहयोगित्व-सर्वाधिष्ठानसमत्वरूपधर्मयुक्ततया निरूप्यते **यावत्सञ्जायत इति** ।

**यावत्किञ्चित्** वस्तुमात्रम् । किंरूपं तत् ? स्थावरात्मकं जङ्गमात्मकं च । **सत्त्वं** जीव-जातम् । 'सत्त्वं जीवः क्वचित् प्रोक्तः' इति वचनात् प्रमाणेन लक्ष्यते । **तत् सर्वं क्षेत्रक्षेत्रज्ञ-संयोगात्** क्षेत्रं = श्रीदेवी, 'सत्त्वात् सञ्जायते' इत्येतद्वाक्यविवरणभाष्ये 'मम योनिः' इत्युत्तरा-ध्यायगते वाक्ये लक्ष्मीनारायणसंयोगात् सर्वभूतसम्भवस्योक्तत्वात् 'अव्यक्तं च महद् ब्रह्म प्रधानं क्षेत्रमित्यपि । उच्यते श्रीः' इति वचनाच्चात्र क्षेत्रशब्देन तस्या ग्रहणं युक्तम् । क्षेत्रज्ञः = भगवान्, तयोः संयोगात् **सञ्जायते** इति **विद्धि** जानीहि । **भरतर्षभ** भरतश्रेष्ठ इति पार्थसम्बुद्धिः । अत्र श्रीदेव्यभिमन्यमानजडप्रकृतेः क्षेत्रशब्दार्थस्य सर्वकार्योपादनत्वरूपो धर्मः, सत्त्वं क्षेत्रसंयोगादुत्पद्यत इति सत्त्वशब्दार्थस्य पुरुषस्य प्रकृत्युपादानकदेहयोगित्वरूपधर्मश्च निरूपितो वेदितव्यः ॥ २७ ॥

यदुक्तं 'क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धि' इति, 'देहेऽस्मिन् पुरुषः परः' इति च, परमेश्वरस्य सर्वशरीरस्थत्वम्, तदयुक्तम् ? सुर-नर-तिर्यगादिशरीराणां तारतम्यवत्त्वेन तत्र स्थितस्य परमेश्वरस्यापि तारतम्यापत्तेः । 'भुङ्क्ते प्रकृतिजान् गुणान्' इत्युक्तदुःखिजीवेन सहावस्थितस्य तस्य दुःखप्राप्तेश्च, इत्यत उच्यते **सममिति** । **सर्वेषु** उच्चावचेषु **भूतेषु** प्राणिषु **तिष्ठन्तं परमेश्वरं** भगवन्तं **यः समं** तारतम्यरहितं **पश्यति**, तथा **भूतेषु** विनश्यत्सु अपि 'अनित्यत्वं देहहानि-र्दुखप्राप्तिरपूर्णता । नाशश्चतुर्विधो ज्ञेयः' इति शास्त्रेण दुःखयोग-देहहान्योर्नाशशब्दितग्रहणात् दुःखयोगदेहहानिरूपनाशवत्स्वपि, **अविनश्यन्तं** दुःखयोगादिरहितम्, तरतमभावापन्नदेहेषु तिष्ठतः समत्वम्, दुःखयोगिजीवसहभावेऽपि दुःखाप्राप्तिं च उपपादयितुं 'परमेश्वरम्' इत्युक्तम् । अचिन्त्य-

शक्तिसम्पन्नमित्यर्थः । एवंविधं **पश्यति** साक्षात्करोति **सः पश्यति** स एव ज्ञानी भवति । अत्र भगवतः स्थानतारतम्यनिबन्धननीचोच्चताहीनतया समस्तसद्गुणसम्पूर्णत्वलक्षणं समत्वम्, दुःखिसह-भावेऽपि दुःखास्पृष्टत्वं च विभावितं ज्ञातव्यम् । तथा चोक्तं भगवता सूत्रकारेण 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति । 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' इति ॥ २८ ॥

एवं जानन्नेव 'ज्ञानी' इत्युक्तम् । तज्ज्ञानफलमुच्यते **सममिति** । **सर्वत्र** स्थावरजङ्गमेषु **समवस्थितं** सम्यङ् नियामकतयाऽवस्थितं **समं** समस्तसद्गुणैरेकप्रकारम् **ईश्वरम्** अचिन्त्यशक्तिं भगवन्तं **पश्यन्** साक्षात्कुर्वत्, **आत्मना** बुद्ध्या **आत्मानं** स्वात्मानं **न हिनस्ति** नरके न पात-यति । प्रत्युत **ततो** ज्ञानात् **परां गतिं** मुक्तिं **याति हि** प्राप्नोत्येव । पूर्वश्लोकोक्तार्थानुवादः न पूर्वार्ध इति द्योतनाय हिशब्द इत्यपि **आहुः** ॥ २९ ॥

पूर्वश्लोके 'सर्वत्र विद्यमानमीश्वरं समं पश्यन् मुक्तिं याति' इति साम्यदर्शनस्य मोक्षहेतुत्व-मुक्तम् । तच्च दर्शनम् 'सर्वकर्मसु भगवानेव मुख्यः कर्ता, प्रकृतिर्निमित्तमात्रम्, स्वस्य तत्र कर्तृत्वा-भावः' इत्येतज्ज्ञानोपोद्बलितमेव मोक्षसाधनायालमिति भावेनोच्यते **प्रकृत्येति** । 'समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्' इति प्रस्तुतपरमात्मा चशब्देन समुच्चीयते । तत्र इवशब्दस्य सम्बन्धः । पूर्वप्रस्तुतेनेश्वरेणैव मुख्यकर्त्रा **प्रकृत्या** च निमित्तभूतया **क्रियमाणानि सर्वशः** स्वार्थिकः शस् । सर्वाणि **कर्माणि यः पश्यति, तथा आत्मानं** स्वात्मानं च **अकर्तारं** मुख्यतोऽकुर्वन्तं **पश्यति, स पश्यति** परमेश्वरम् ॥ ३० ॥

न केवलं भगवतः सर्वप्रेरकत्व-सर्वसमत्वादिज्ञानमात्रेणालम् । किन्तु तस्य सर्वाधारत्वाद्यपि ज्ञातव्यमित्युच्यते **यदेति** । अत्र भूतपृथग्भावस्य परमात्मस्थत्वोक्त्या पृथग्भूतानां तत्स्थत्वमभि-प्रेतम् । तदयमर्थः । **भूतानां** जीवानां **पृथग्भावं** विष्णोः अन्योन्यतश्च भेदं तथा भूतग्रामम् **एकस्थम्** एकस्मिन्नेव विष्णौ स्थितं **यदा अनु** तारतम्येन **पश्यति तत एव** एकशब्दार्थविष्णोरेव स्थावरजङ्गमात्मकजगतो **विस्तारं** उत्पत्तिं च अनुपश्यति तदा स **ब्रह्म** परब्रह्म **सम्पद्यते** प्राप्नोति ॥ ३१ ॥

ननु 'विनश्यत्सु तिष्ठतोऽपि अविनश्यन्तम्' इत्यविनाशशब्दितव्ययाभावोक्तिरयुक्ता ? शरीर-सम्बन्धेन व्ययादेरावश्यकत्वाद्, इत्यतो न विष्णोर्व्ययादिरित्युच्यते **अनादित्वादिति । हे कौन्तेय! शरीरस्थोऽपि अयं परमात्मा** 'अनादित्वात्' इति हेतुः प्रागभावे व्यभिचारपरिहाराय 'भावत्वे सति' इति विशेषणीयः । भावत्वे सत्यनादित्वाद् = आदिमत्त्वशून्यत्वात्, सत्त्वादिगुणेभ्यो निर्गत-

त्वाच्च **अव्ययो** देहतोऽपि नाशरहितः **न लिप्यते** तत्कृतपुण्यपापैर्न सङ्गच्छते च, लौकिकक्रिया-राहित्याद् 'न प्रज्ञं न सुखम्' इत्यादिवत् 'न करोति' इत्येतदपि व्याख्येयम् ॥ ३२ ॥

यद्यप्यव्ययत्वम् अत्र साध्यम् । तथापि तत् लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं भगवत उपपाद्यते **यथा सर्वगतमिति** ॥ **सर्वगतं** पङ्कादिमद्देशगतं **आकाशं सौक्ष्म्यात्** सूक्ष्मत्वाद् अप्रतिघत्वाद् यथा पङ्कादिभिर्नोपलिप्यते । तथा **सर्वत्र** नीचोच्चादिरूपे **देहे अवस्थितः आत्मा** परमात्मा **नोपलिप्यते** देहधर्मैर्न सम्बध्यते ॥ ३३ ॥

यत्क्षेत्रज्ञत्वविशिष्टतया भगवज्ज्ञानार्थं क्षेत्रादिकं निरूपितं तत्क्षेत्रज्ञं दृष्टान्तेन प्रदर्शयति **यथा प्रकाशयतीति** । **यथैको रविः कृत्स्नमिमं लोकं** लोकस्थितं पदार्थजातं **प्रकाशयति तथा क्षेत्री** क्षेत्रज्ञो भगवान् **कृत्स्नं क्षेत्रम्** ईश्वरातिरिक्तचेतनाचेतनवर्गं **प्रकाशयति** ॥ ३४ ॥

अध्यायार्थं उपसंहरति **क्षेत्रक्षेत्रज्ञयोरिति** ॥ **क्षेत्रक्षेत्रज्ञयोः** जगत्-परमात्मनोः एवं प्रेर्यत्व-प्रेरकत्व;सगुणत्व-निर्गुणत्वाद्युक्तप्रकारेण **अन्तरं** भेदं **ज्ञानचक्षुषा** शास्त्रप्राप्तदिव्यदृष्ट्या **ये विदुः भूतप्रकृतिमोक्षं** भूतानि = पृथिव्यादीनि च प्रकृतिश्चेति द्वन्द्वः, ततः 'पञ्चमी' इति योगविभागात् पञ्चमीतत्पुरुषः । 'मोक्ष्यते अनेन' इति करणे घञि मोक्षः = अमानित्वादिरूपं मोक्षसाधनजातम्। यद्यपि, अमानित्वादिकं ज्ञानसाधनमेवोक्तम्, तथापि परम्परया मोक्षसाधनत्वाशयेन 'मोक्षम्' इत्युक्तम् । तच्च **ये विदुस्ते परं पूर्णं ब्रह्म यान्ति** इति ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाटिप्पण्यां भावरत्नकोशसमाख्यायां सूरीन्द्रश्रीपादशिष्यसुमतीन्द्रतीर्थविरचितायां त्रयोदशोऽध्यायः समाप्तः ॥*

**गीतातात्पर्यनिर्णयः**

**जीवानामचेतनप्रकृतेर्मोक्षं भूतप्रकृतिमोक्षम् ॥ ३५ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये त्रयोदशोऽध्यायः ॥*

***न्या०दी०—*** अध्यायार्थ उपसंह्रियते 'क्षेत्रे'ति ॥ तत्र भूतप्रकृतिमोक्षपदं तिरोहितार्थत्वात् व्याचष्टे **जीवानामिति** ॥ मोक्षं मोक्षसाधनममानित्वमित्याद्युक्तम् ॥ ३५ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां त्रयोदशोऽध्यायः समाप्तः ॥*

*भा०दी०*— भूतानां प्रकृतेः सकाशात् मोक्षो यस्मादिति विग्रहमाश्रित्याह **मोक्षं मोक्ष-साधनमिति** । तत्किमित्यत उक्तम् **अमानित्वादिकमिति** ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते त्रयोदशोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ चतुर्दशोऽध्यायः

**गीता**

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

***वि०वि०—*** साधनं प्राधान्येनोत्तरैरध्यायैरुच्यते । तत्र बन्धनप्रकारपरिज्ञाने एव तन्मोक्ष-साधनानुष्ठानं युज्यते । बन्धश्च त्रिगुणात्मकः । अतो 'यावत्सञ्जायते' इत्युक्तविवरणपूर्वकं त्रिगुण-विकारस्थितिः तदत्ययोपायश्च, अस्मिन्नध्याये प्रदर्श्यते । वक्ष्यमाणार्थं प्रतिज्ञाय स्तौति **परमिति श्लोकद्वयेन** । परं कर्माद्यपेक्षयोत्कृष्टं ज्ञानानां मध्ये उत्तमं ज्ञानम् । भूयः प्रकर्षेण वक्ष्यामि । यज्ज्ञात्वा मुनयः मननशीलाः, इतः संसारात् परां सिद्धिं गताः ॥ १ ॥

***सा०सं०—*** 'बुद्धिर्योगे त्विमां शृणु' (२-३९) इति द्वितीये प्रतिज्ञाय आषष्ठसमाप्तेः कामादिवर्जनादीतिकर्तव्यतासहितं कर्म ध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांशम् उत्तरा-ध्यायपञ्चकेन प्रपञ्चयतीति प्रघट्टार्थः । तत्र बन्धप्रकारे ज्ञाते सत्येव तन्मोचनसाधनस्य तदिति-कर्तव्यस्य चानुष्ठानाय तत्प्रपञ्चनं युज्यते । बन्धश्च 'कारणं गुणसङ्गोऽस्य' (१३-१२) इति पूर्वा-ध्यायोक्तदिशा त्रिगुणात्मकः । अतो 'यावत् सञ्जायते' (१३-२६) इत्यादिना पूर्वाध्यायोक्तक्षेत्र-क्षेत्रसंयोगहेतुकप्राणिजननविवरणपूर्वकं त्रिगुणविकारस्थितिं तदत्ययोपायं च दर्शयत्यस्मिन्नध्याये । 'कार्यते ह्यवशः कर्म' (३-५) इति तृतीयाध्याये सङ्क्षेपेण त्रैगुण्यस्योक्तत्वेऽपीह तस्य विविच्य कीर्तनमिति ज्ञेयम् । श्रोतुरादरजननाय वक्ष्यमाणमर्थं प्रतिज्ञाय स्तौति **परमिति** द्वयेन । **परम्** अन्यत् । **भूयः** पुनः **प्रवक्ष्यामि** । तत्किमित्यत उक्तम् **ज्ञानानामिति** । कर्मणि ल्युट् । ज्ञातव्यानां

*भा०दी०*— भूतानां प्रकृतेः सकाशात् मोक्षो यस्मादिति विग्रहमाश्रित्याह **मोक्षं मोक्ष-साधनमिति** । तत्किमित्यत उक्तम् **अमानित्वादिकमिति** ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते त्रयोदशोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ चतुर्दशोऽध्यायः

**गीता**

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

*वि०वि०*— साधनं प्राधान्येनोत्तरैरध्यायैरुच्यते । तत्र बन्धनप्रकारपरिज्ञाने एव तन्मोक्षसाधनानुष्ठानं युज्यते । बन्धश्च त्रिगुणात्मकः । अतो 'यावत्सञ्जायते' इत्युक्तविवरणपूर्वकं त्रिगुणविकारस्थितिः तदत्ययोपायश्च, अस्मिन्नध्याये प्रदर्श्यते । वक्ष्यमाणार्थं प्रतिज्ञाय स्तौति **परमिति श्लोकद्वयेन** । परं कर्माद्यपेक्षयोत्कृष्टं ज्ञानानां मध्ये उत्तमं ज्ञानम् । भूयः प्रकर्षेण वक्ष्यामि । यज्ज्ञात्वा मुनयः मननशीलाः, इतः संसारात् परां सिद्धिं गताः ॥ १ ॥

*सा०सं०*— 'बुद्धिर्योगे त्विमां शृणु' (२-३९) इति द्वितीये प्रतिज्ञाय आषष्ठसमाप्तेः कामादिवर्जनादीतिकर्तव्यतासहितं कर्म ध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांशम् उत्तराध्यायपञ्चकेन प्रपञ्चयतीति प्रघट्टार्थः । तत्र बन्धप्रकारे ज्ञाते सत्येव तन्मोचनसाधनस्य तदितिकर्तव्यस्य चानुष्ठानाय तत्प्रपञ्चनं युज्यते । बन्धश्च 'कारणं गुणसङ्गोऽस्य' (१३-१२) इति पूर्वाध्यायोक्तदिशा त्रिगुणात्मकः । अतो 'यावत् सञ्जायते' (१३-२६) इत्यादिना पूर्वाध्यायोक्तक्षेत्रक्षेत्रसंयोगहेतुकप्राणिजननविवरणपूर्वकं त्रिगुणविकारस्थितिं तदत्ययोपायं च दर्शयत्यस्मिन्नध्याये । 'कार्यते ह्यवशः कर्म' (३-५) इति तृतीयाध्याये सङ्क्षेपेण त्रैगुण्यस्योक्तत्वेऽपीह तस्य विविच्य कीर्तनमिति ज्ञेयम् । श्रोतुरादरजननाय वक्ष्यमाणमर्थं प्रतिज्ञाय स्तौति **परमिति** द्वयेन । **परम्** अन्यत् । **भूयः** पुनः **प्रवक्ष्यामि** । तत्किमित्यत उक्तम् **ज्ञानानामिति** । कर्मणि ल्युट् । ज्ञातव्यानां

मध्ये । **उत्तमं ज्ञानं** ज्ञातव्यम् । **यज्ज्ञात्वा मुनयो** मननशीलाः । **सर्वे इतः** संसारात् । **परां सिद्धिं** मोक्षम् । **गताः** प्राप्ताः ॥ १ ॥

***अ०प्र०— अ०प्र०***— ज्ञानसाधनं प्रायो वक्त्युत्तरैः पञ्चभिरध्यायैः । क्षेत्रक्षेत्रज्ञसंयोगात् स त्वजायत इत्युक्तस्य विवरणपूर्वकं कारणं गुणसङ्गोऽस्येत्युक्तत्रिगुणविकारात्मकः संसारकस्थितिं तदत्ययोपायञ्चाहाऽत्र । चतुर्दशाध्याये प्रतिज्ञाय वक्ष्यमाणमर्थं स्तौति **परमिति** द्वाभ्याम् ।

अथान्वयः— हे भारतेति तृतीयेणान्वयः । अहं = ते[२], सर्वे मुनयः[३], यत्[४], ज्ञात्वा[५], इतः[६], परां[७], सिद्धिं[८], गताः[९], तत्[१०] ज्ञानानां[११] परं[१२], उत्तमं[१३], ज्ञानं भूयः[१४], प्रवक्ष्यामि[१५] इत्यन्वयः ।

हे भारत !, अहं ते = तुभ्यं[२], सर्वे मुनयः = मननशीलाः सर्वे[३], यत् = ज्ञानं[४], ज्ञात्वा = साधयित्वा[५], इतः = अस्मात्स्थूलसूक्ष्मदेहद्वयबन्धनात् अतीतास्सन्तः[६], परां = उत्कृष्टां[७], सिद्धिं = मोक्षं[८], गताः = प्राप्ताः[९], अतः तत् = ज्ञेयं ज्ञानानां ज्ञेयानां तपःकर्मादिविषयाणां मध्ये[११] परं = परमार्थनिष्ठं[१२], उत्तमं ज्ञानं = ज्ञानसाधनं[१३], उपदेशं = ज्ञायतेऽनेनेति ज्ञानं[१४], भूयः = पुनः विस्तरेण[१५], प्रवक्ष्यामि = प्रकर्षेण यथा ज्ञानं स्यात् तथा वक्ष्यामि ॥ १ ॥

**भाष्यम्**

## साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति ॥

***प०टी०***— अवशिष्टोत्तराध्यायपञ्चकार्थं दर्शयति **साधनमिति** ।

***प्र०दी०***— उत्तरेषां पञ्चानामध्यायानां प्रतिपाद्यमाह **साधनमिति** । 'योगे त्विमां शृणु' इति प्रतिज्ञाय, आषष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्मध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्र इतिकर्तव्यतांशम् उत्तरैरध्यायैः प्रपञ्चयतीत्यर्थः । 'मम योनिर्महद्ब्रह्म', 'न तद्भासयते सूर्यः' इत्यादिना ईश्वरमाहात्म्यस्यापि वचनात् कथमेतदित्यत उक्तम् । **प्राधान्येनेति** । प्राचुर्यापेक्षया सङ्ग्राहकमेतदित्यर्थः ।

अत्रान्तरप्रतिपाद्यभेदादध्यायभेदः । तत्र 'यावत्सञ्जायते किञ्चित्' इत्युक्तविवरणपूर्वकं कारणं 'गुणसंयोगस्य' इत्युक्तं गुणसम्बन्धं प्रपञ्च्य तदत्ययसाधनमनेनाध्यायेनोच्यते ।

***भा०दी०***— पञ्चानामिति । तत्तदध्यायावान्तरप्रतिपाद्यं तत्र तत्र दर्शयिष्यतीति न सर्वस्यैकाध्यायत्व(ता)प्रसक्तिरित्यनुपदमेव व्यक्तम् । **प्रतिज्ञायेति** । द्वितीये 'योगे = ज्ञानोपाये बुद्धि-

शब्दितां इमां वक्ष्यमाणां वाचं शृणु इति प्रतिज्ञातेत्यर्थः । **आषष्ठेति** । 'आकडारात्' इतिवदयं निर्देशः । साधनशब्दोऽत्र भाष्ये तदितिकर्तव्यतापर इति भावेनाह **तत्रेतिकर्तव्यतांशमिति** । तस्यैवोत्तराध्यायेषु प्रतीतेरिति भावः । **एतदिति** । प्रतिपाद्योक्तिपरं भाष्यमित्यर्थः । तात्पर्यदिशा अवान्तरप्रतिपाद्यमस्य दर्शयति **तत्रेति**। **इत्युक्तेति** । जायमानस्य यत्प्रकृतिविकारमुक्तं पूर्वमित्यर्थः।

*भा०र०*— भाष्योपात्तोत्तराध्यायशब्दविवक्षितार्थं दर्शयति **उत्तरेषां पञ्चानामध्यायानामिति** । अत्र साधनशब्द उपसाधनशब्दितोपकरणार्थः । उपकरणापरनामकेतिकर्तव्यतोक्तिश्च साधने निरूपित एवावसरं लभत इति भावेन तत्साधनोक्तिस्थलं तावद्दर्शयति **योगे त्विमामिति** । 'ज्ञानोपायविषयिणीं बुद्धिशब्दितां वाचं शृणु' इति द्वितीयाध्याये प्रतिज्ञायेत्यर्थः । 'आषष्ठपरिसमाप्तेः' इत्यत्र 'अपञ्चम्याः' इति प्रतिषेधात् पञ्चम्या अव्ययीभावत्वेऽपि लुगभावः । षष्ठाध्यायसमाप्तिपर्यन्तमित्यर्थः । 'कामवर्जनादि' इत्यत्र आदिशब्देन द्वन्द्वातीतत्वविमत्सरत्वादिग्रहः । कामवर्जनद्वन्द्वातीतत्वादिरूपेतिकर्तव्यतासहितमित्यर्थः । **कर्मध्यानलक्षणमिति** । कर्मयोग-ध्यानयोगलक्षणमित्यर्थः । तत्रापि आपञ्चमाध्यायसमाप्तेः प्राधान्येन कर्मयोग उक्तः । षष्ठे कर्मयोगसाध्यो ज्ञानान्तरङ्गभूतः समाधियोगशब्दितध्यानयोग उक्त इति विवेकः । **तत्र** ज्ञानसाधने । **अध्यायैः** पञ्चभिः । प्रथमषट्के कर्मध्यानयोगयोरपि कामादिवर्जनादिरूपेतिकर्तव्यताया उक्तत्वात् कथमत्र 'वक्ति' इत्युच्यते ? इति शङ्कापरिहाराय 'वक्ति' इत्यस्यार्थमाह **प्रपञ्चयतीति** । 'वच = परिभाषणे' इति धात्वर्थः 'परिभाषणम्' अत्र 'प्रपञ्चः' इति भावः ।

**केचित्तु** 'साधनं प्राधान्येन' इति भाष्ये स्थलनिर्देशपूर्वं साधनस्वरूपं वदन् 'उक्तम्' इत्यध्याहृत्य 'उत्तरैरध्यायैः' इत्यत्र 'इतिकर्तव्यतांशम्' इत्यध्याहृतवान् इति टीकाशयमाहुः । तदभव्यम् । न्यायदीपिकायां 'प्राधान्येनोत्तरैरध्यायैः साधनमेवोच्यते' इति टीकाकारीयवचनानुगुण्यात् इति **अपरे** । **एतत्** 'इतिकर्तव्यतांशं प्राधान्येन वक्ति' इति भाषणम् । अत्र विवक्षितप्राधान्यशब्दार्थमाह **प्राचुर्येति** । 'साधनं प्राधान्येन' इति भाष्यम् इतिकर्तव्यताप्रपञ्चनपरग्रन्थबाहुल्यापेक्षया पञ्चाध्यायार्थसङ्ग्राहकमित्यर्थः । तर्हि एकमर्थं प्रतिपादयन्ती पञ्चाध्यायी एकमेव वाक्यं स्यात् ? 'अर्थैकत्वाद् एकं वाक्यम्' इति जैमिनिवचनात्, इत्यत आह **अवान्तरेति** । तमेवावान्तरप्रतिपाद्यं अर्थभेदं तत्र तत्र यथाऽऽचार्यवचनं वक्ष्यन् एतदध्यायप्रतिपाद्यमर्थं तात्पर्यनिर्णयोक्तदिशा दर्शयति **तत्र यावदिति** । ''यावत्सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि .. ॥'' इति समनन्तराध्याये क्षेत्रक्षेत्रज्ञशब्दितलक्ष्मीनारायणसंयोगात् सर्वभूतसम्भव उक्तः । तद्विवरणपूर्वकं

'अस्य जीवस्य सदसद्योनिजन्मसु सत्त्वरजस्तमोगुणसङ्गः कारणम्' इति 'कारणं गुणसङ्गोऽस्य' इति पूर्वाध्यायगतश्लोकोक्तबन्धमित्यर्थः । **तदत्ययसाधनम्** बन्धादिक्रमोपायः ॥

**गीतातात्पर्यनिर्णयः**

**क्षेत्रक्षेत्रज्ञसंयोगस्पष्टीकरणपूर्वकं त्रैगुण्यं विविच्य दर्शयति ॥**

*प्रका०*— एतदध्यायप्रतिपाद्यं दर्शयति **क्षेत्रेति** ।

***न्या०दी०***— **एतदध्यायप्रतिपाद्यमर्थं दर्शयति क्षेत्रेति ॥ प्राधान्येनोत्तराध्यायैः साधनमेवोच्यते । तत्र बन्धप्रकारपरिज्ञान एव तन्मोक्षसाधनानुष्ठानं युज्यते । बन्धश्च त्रिगुणात्मकः । अतो "यावत्सञ्जायते" इत्युक्तविवरणपूर्वकं त्रिगुणविकारस्थितिं तदत्ययोपायं च दर्शयत्यनेनाध्यायेनेति भावः । "कार्यते ह्यवशः कर्म" इत्यादौ त्रैगुण्यस्य सङ्क्षेपेण उक्तत्वात् विविच्य इत्युक्तम् ।**

*भा०दी०*— भाष्यदिशा घट्टार्थमाह **प्राधान्येनेति** । अत्र साधनशब्देन भगवज्ज्ञानसाधनस्य कर्मध्यानरूपस्य आद्यषट्कोक्तस्य कामादिवर्जनरूपेतिकर्तव्यतांशो ग्राह्यः । "मम योनिर्महद्ब्रह्म", "न तद्भासयते सूर्य" इत्यादिना ईश्वरमाहात्म्यस्यापि वर्णनात् प्राधान्येनेत्युक्तम् । प्राचुर्यापेक्षया सङ्ग्राहकमेतदिति भावः ॥ **तत्रेति** । अध्यायपञ्चकमध्ये दर्शयति अनेन अध्यायेन इत्यन्वयः ॥ **इत्युक्तेति** । क्षेत्रक्षेत्रज्ञसंयोगहेतुकप्रपञ्चजननविवरणेत्यर्थः ॥

**गीता**

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

*वि०वि०*— इदं ज्ञानमवलम्ब्य मम साधर्म्यं सारूप्यादिलक्षणमाश्रिताः ॥ २ ॥

*सा०सं०*— **इदं ज्ञानं** वक्ष्यमाणार्थज्ञानम् । **उपाश्रित्य** सम्पाद्य । **मम साधर्म्यं** सारूप्यम् । **आगताः** प्राप्ताः । शिष्टं व्यक्तम् ॥ २ ॥

*अ०प्र०*— सिद्धिस्वरूपे वादिविवादसद्भावात् तद्विवृणोति **इदमिति** ।

अन्वयो यथाक्रमः ॥

इदं = वक्ष्यमाणं[२], ज्ञानं = ज्ञानसाधनं[२], उपाश्रित्य = अनुष्ठाय[३], मम साधर्म्यं = सारूप्यतां मुक्तिं[४], अगताः सन्तः = यथायोग्यं पूर्णानन्दत्व-निर्दुःखत्वनिर्दोषत्वादि समानधर्मवत्त्वमेव मत्प्राप्तिरूपा मुक्तिः सैव सिद्धिः न ब्रह्मात्म्यैक्यप्राप्त्यादीति भावः । एतादृशं मम साधर्म्यं पूर्वोक्त-समानधर्मवत्त्वं आगताः सन्तः प्राप्ताः सन्तः सिद्धिं गताः सन्तः[५], सिद्धिं गतानां किं भवतीत्यत आह **सर्गेऽपीति** ॥ सर्गेऽपि = सृष्टावपि यद्वा, ब्रह्मादिषूत्पद्यमानेष्वपि[६], नोपजायन्ते = नोत्प-द्यन्ते[७], प्रलयेऽपि तथा प्रलयकालेऽपि[८], न व्यथन्ति च = प्रलयदुःखानि नानुभवन्ति जननमरणादि-दुःखाभावो भवति । न पुनः संसारे आवर्तत इति भावः ॥ २ ॥

**गीता**

## मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
## सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

*वि०वि०*— प्रतिज्ञातमर्थमाह **ममेति** । महद्ब्रह्म चित्प्रकृतिः । 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः' इत्युक्तेः मम योनिर्भार्या । 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इत्य-भिधानात् । तस्मिन्नहं गर्भं दधामि । ततः सर्वजीवानां देहसम्बन्धलक्षण उद्भवो भवति ॥ ३ ॥

*वा०ल०*— 'मम योनिर्महद्ब्रह्म' इत्यत्र, योनिः भार्या । महद्ब्रह्म 'बृहजातिजीवकमलासन-शब्दराशिषु' इत्यनुशासनात् वेदमुख्याभिमानितया महद्ब्रह्मपदवाच्या महालक्ष्मीः ॥ ३ ॥

*सा०सं०*— प्रतिज्ञातार्थमाह **ममेति** । **महद्ब्रह्म** महती चित्प्रकृतिः । **मम योनिः** भार्या । **तस्मिन्** ब्रह्मणि चित्प्रकृतौ । **गर्भं दधामि** । चतुर्विंशतितत्त्वांशयुतान् जीवान् स्वोदरस्थान् रेतोरूपेण निर्वास्य चित्प्रकृत्युदरे निक्षिपामीत्यर्थः । **ततस्तत्र** निक्षेपात् । **भूतानां** प्राणिनाम् । देहयोगरूप**सम्भवो** जन्म । **भवति** । 'ॐ ज्ञोऽत एव ॐ', 'ॐ युक्तेश्च ॐ' इति सूत्रकृदुक्तेः ॥ ३ ॥

*अ०प्र०*— तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं इतीमं विवक्षितमर्थं कथयति **ममेति** ।

हे भारत ![१], मम[२], महद्ब्रह्म[३], योनिः[४], अहं[५], तस्मिन्[६], गर्भं[७], दधामि[८], ततः[९], सर्वभूतानां[१०] सम्भवः[११] भवति[१२] ॥

हे भारत ![1], मम = परमेश्वरस्य[2], महद्ब्रह्म = देशतः कालतश्च अनवच्छिन्नत्वात् महद्ब्रह्मणत्वाच्च । स्वकार्याणां वृद्धिहेतुत्वाच्च । चित्प्रकृतिः मम शक्तिः । यद्वा, महत् महदादितत्त्वानां विश्रामस्थानत्वात् महत् । बृहन्तो गुणविकारा यस्मिन् तत् तथा । महती ब्रह्मणां हेतुप्रकृतिश्च महेश्वरः[3], योनिः = सर्वजगतः गर्भाधानस्थानं[4], 'योनिर्भार्या तथा स्थानं योनिः कारणमेव चे'त्यभिधानात्[4], अहं[5], तस्मिन्[6], गर्भं = जगद्विस्तारहेतुं[7], दधामि = निक्षिपामि प्रलये लीनं जीवं सृष्टिसमये भोग्येन क्षेत्रेण संयोजयामीत्यर्थः[8], ततः = गर्भाधानात्[9], सर्वभूतानां = ब्रह्मादिस्थावरान्तादीनां[10] सम्भवः = देहसम्बन्धलक्षणोत्पत्तिः[11] भवति जायते[12] ॥ ३ ॥

**गीता**

## सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति च ।
## तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

***वि०वि०***— न केवलमादिसर्ग एवानयोः कारणत्वम्, किन्तु सर्वदेत्याह **सर्वयोनिष्विति** । मनुष्यतिर्यगादि सर्वयोनिषु याः मूर्तयः कार्यव्यक्त्यापन्नाः सम्भवन्ति तासां महद्ब्रह्म लक्ष्मीर्योनिः क्षेत्ररूपं कारणम् । अहं बीजप्रदः गर्भाधानकर्ता पिता ॥ ४ ॥

***वा०ल०***— 'मूर्तयः सम्भवन्ति याः' इत्यत्र, मूर्तयः देवर्ष्यादीनां या मूर्तयः सम्भवन्ति तासां महद्ब्रह्म महालक्ष्मीः महद्योनिः माता ॥ ४ ॥

***सा०सं०***— न केवलमादिसर्ग एवानयोः कारणत्वं किन्तु सर्वदेत्याह **सर्वेति** । देवमनुष्यतिर्यगादि**योनिषु याः मूर्तयः** कार्यव्यक्तयः । **सम्भवन्ति** । **तासां महद्ब्रह्म** महालक्ष्मीः । **योनिः** क्षेत्ररूपं कारणम् । **अहं बीजप्रदः** गर्भाधानकर्ता ॥ **पिता** ॥ ४ ॥

***अ०प्र०***— किञ्च, **सर्वयोनिष्विति** ।

न केवलमादिसर्ग एव प्रकृतिपरमेश्वरयोः कारणत्वम्, किन्तु सदैव । तदुक्तं भवति **सर्वयोनिष्विति** ।

हे कौन्तेय ![1], सर्वयोनिषु[2], याः[3], मूर्तयः[4], सम्भवन्ति[5], तासां[6], महत्[7], ब्रह्म[8], योनिः[9], अहं[10] बीजप्रदः[11] पिता[12] ।

हे कौन्तेय ![१], सर्वयोनिषु = देवमनुष्यादिसर्वासु योनिषु[२], याः[३], मूर्तयः = स्थावर-जङ्गमात्मकजीवराशयः[४], सम्भवन्ति = उत्पद्यन्ते[५], तासां = सर्वभूतानां[६], महद्ब्रह्म = प्रकृतिः[७,८], योनिः = मातृस्थानीया । बीजावपनस्थानं महालक्ष्मीः क्षेत्रं तद्रूपं कारणं मातेति यावत्[९], अहं[१०] बीजप्रदः = गर्भाधानादिकर्ता[११] पिता = जनक इत्यर्थः[१२] ॥ ४ ॥

**भाष्यम्**

**महद् ब्रह्म प्रकृतिः । सा च श्रीभूदुर्गेति भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः । तथा च काषायणश्रुतिः— "श्रीर्भूर्दुर्गा महती तु माया सा लोकसूतिर्जगतो बन्धिका च । उमावागाद्या अन्यजीवास्तदंशास्तदात्मना सर्ववेदेषु गीताः" इति । "मम योनिः" इति गर्भाधानार्था योनिः । न तु माता, वाक्यशेषात् ।**

***प०टी०***— 'मम योनिर्महद्ब्रह्म' इत्यत्र 'महद्ब्रह्म'शब्दार्थमाह **महदिति** । 'सत्वं रजस्तमः' इति व्याख्याति **सा चेति** । उमासरस्वतीन्द्राणीत्यादिपुराणेषु श्रूयत इत्यत आह **उमेति** । 'मम योनिः' इति मम मातेत्यर्थं वाक्यशेषश्रुतिभ्यां दूषयति **ममेति** ।

***प्र०दी०***— अत्र 'महद्ब्रह्म' इति जडाविद्योच्यते इति प्रतीतिनिरासार्थमाह **महदिति** । **प्रकृतिः** महालक्ष्मीः । ननु 'सत्त्वं रजस्तम' इति जडा प्रकृतिः वक्ष्यते । तत्सन्निधानादत्रापि सैव युक्तेति चेन्न । तत्रापि चेतनप्रकृत्यभिधानात् । कथमस्याः सत्त्वादिभेदभिन्नत्वम् ? इत्यत आह **सा चेति** । जडप्रकृतेरभिमानिनी तत्कार्यसत्त्वादिगुणाभिमानिनी एतद्रूपत्रयवतीत्यर्थः । ननु भगवती 'माहेश्वरी, ब्राह्मी, कौमारी, माहेन्द्री, श्री, भू, दुर्गा' इति सप्तधा भिन्ना आगमेषूच्यते । तत्कथं त्रिधा भिन्नोच्यते ? इत्यत आह **उमेति** । **आद्याः** चतस्रो भगवत्या अन्याः । कुतः ? जीवाः । कथं तद्रूपत्वोक्तिः । **तदंशयुताः** तत्सन्निधानोपेताः । कुत एतत् ? इत्यत आह **तथा चेति** ।

'मम योनिः' इत्येतत् परे व्याचक्षते "मम स्वरूपभूता योनिः कारणं विश्वस्य । प्रतीत एव अन्वये 'मम माता' इत्यापत्तेः" इति । तन्निरासार्थमाह **ममेति** । भार्या इत्यर्थः । 'मम' इत्यनु-वादेनान्यथाप्रतीतावन्वयबाधः स्यादिति सूचयति । प्रतीतान्वयाङ्गीकारे 'माता' इत्यपि प्रतीयेत । तत्र कथं भार्येति निश्चय इत्यत आह **न त्विति** । 'इति प्रतीतिः प्रसज्यते' इति शेषः । कुतो न ? इत्यत आह **वाक्येति** । 'तस्मिन् गर्भं दधाम्यहम्' इति **वाक्यशेषात्** भार्यार्थतानिश्चयात् ।

*भा०दी०*— **भगवती** इत्यनुवादः । **माहेश्वरी** इत्यादि प्रभेदोक्तिः । **आद्या** इति भाष्यैकदेशानुवादः । तदवधिमाह **चतस्र इति** । 'माहेन्द्री' इत्यन्तमित्यर्थः । **ममेत्यनुवादेनेति** । **इति सूचयति** इत्यन्वयः । **अन्यथेति** । परोक्तयोजनापक्ष इत्यर्थः ।

*भा०र०*— 'मदीया त्रिगुणात्मिका माया सर्वेषां भूतानां उपादानकारणभूता देशतः कालतोऽनवच्छिन्नत्वात् महत्, सर्वकार्यवृद्धिहेतुत्वात् ब्रह्म' इति परैर्व्याख्यानादाह **जडाविद्येति** । **प्रतीतिनिरासार्थं** परापरव्याख्यानाहितप्रतीतिनिरासार्थम् । प्रकृतिशब्देन जडाविद्योपस्थाप्यत इति कथं तन्निरासः ? इत्यतः 'महालक्ष्मीः प्रकृतिः' इति तात्पर्योक्तं प्रकृतिशब्दार्थमाह **प्रकृतिर्महालक्ष्मीरिति** । 'युक्ता ग्रहीतुम्' इति शेषः । **अस्याः** चेतनप्रकृतेः । **भगवत्याः** महालक्ष्म्याः । **जीवाः** दुःखस्पृष्टचेतनाः । अनेन भाष्ये 'अन्याश्च जीवाश्च' इति विग्रहाश्रयणाद् 'अन्याः' इत्येव पूर्तेः, जीवपदमतिरिच्यते ? इति शङ्का परास्ता । अन्यत्वे जीवत्वस्य हेतूकरणार्थत्वात् । **कथं** 'तर्हि' इति शेषः । **तद्रूपत्वोक्तिः** महालक्ष्मीरूपत्वोक्तिः । 'इत्यत उक्तम्' इति शेषः । 'तदंशायुताः' इत्यतःपरं 'इति'शब्दोऽध्याहार्यः । जयन्ती-जानक्यादिप्रतीतिनिरासाय अंशशब्दितविवक्षितं अर्थं आह **तत्सन्निधानोपेता इति** ।

भाष्ये— महती माया लक्ष्मीः 'श्रीः भूः दुर्गा' इति रूपत्रयवती लोकसूतिः = लोकस्य सवित्री जगतः = देव-मानव-दानवात्मकस्य बन्धिका = श्रीर्देवानाम्, भूर्नृणाम्, दुर्गा दानवानां बन्धकर्त्रीति विवेकः । वाक् = सरस्वती । आद्यशब्देन कुमारस्त्री रतिः, महेन्द्रस्त्री शची च ग्राह्ये। **अन्यजीवाः** मायाया अन्याः, कुतः ? जीवाः । कथं तर्हि मायारूपत्वोक्तिः ? इत्यत उक्तम् **तदंशा इति** । मायांशा इव तत्सन्निधानवत्य इति यावत्, 'यतोऽतः' इति शेषः । तदात्मता = मायारूपता, सर्ववेदेषु तत्रतत्रागमेषु गीता इत्यर्थो द्रष्टव्यः ।

**विश्वस्य** 'इत्यध्याहृतेनान्वयः' इति शेषः । 'न' इत्यनन्तरं 'पुनः' इति च । क्वचित्तु 'प्रतीते एवान्वये' इति सप्तम्यन्तपाठः । **इत्यापत्तेरिति** । योनिशब्दस्य कारणार्थत्वात् 'मम योनिः = मम कारणम्' इत्यर्थे 'मम माता' इत्यापत्तेरित्यर्थः । ननु गर्भाधानार्थयोनिः का स्यात् ? इत्यतः 'अत्र योनिः भार्या' इत्यन्यत्र उक्तं योनिशब्दार्थं निर्दिशति **भार्येत्यर्थ इति** ॥ ननु 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इत्यभिधानात् योनिशब्दो नानार्थ इति विवक्षितार्थो व्याख्यातव्यः । तत्र 'मम' इत्यनुवादो व्यर्थः ? इत्यत आह **ममेत्यनुवादेनेति** । **अन्यथा** 'स्वरूपभूता' इति, 'विश्वस्य' इति च पदद्वयाध्याहारेणान्वय इति परपक्षे । **प्रतीतान्वयेति** । 'मम योनिः' इति यथा-

श्रुतान्वयाङ्गीकार इत्यर्थः । **तत्र** तथा सति । 'माता' इत्यनन्तरमध्याहार्यमाह **इति प्रतीतिरिति** । 'निश्चयाद्' इति हेतोः 'न तु मातेति प्रतीतिः प्रसज्यते' इति साध्येनान्वयः ।

**भाष्यम्**

**तथा हि सामवेदे शार्कराक्ष्यश्रुतौ– "विष्णोर्योनिर्गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना । तथाऽप्यात्मानं दुःखिवन्मोहनार्थं प्रकाशयन्ती सह विष्णुना सा" इति । अतः सीतादुःखादिकं सर्वं मृषाप्रदर्शनमेव । तथा कूर्मपुराणे । न च इयं भूः । तथा च सौकरायणश्रुतिः— "अन्या भूर्भूरियं तस्य छाया भूताऽवमा सा हि भूतैकयोनिः" इति । "अवाप स्वेच्छया दास्यं जगतां प्रपितामही" इति अनभिम्लातश्रुतिः । मत्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्याऽपि प्रकृतिरेव । "महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः" इति तत्रैव ॥ ३-४ ॥**

***प०टी०***— नन्विदं सर्वोत्पत्त्यादिरूपाया दुःखमित्यत आह **अत इति** । एतच्छ्रुतित एवेत्यर्थः । स्मृतिं चैतस्मिन्नर्थे दर्शयति **तथा चेति** । 'दग्ध्वा मायामयीं सीतां पावकोऽसौ सुरप्रियः । रामायादर्शयत् सीतां भगवानुग्रदीधितिः' इति । ननु 'भूमिर्दृप्तनृपव्याज' इत्यादिना भूमिदेव्या दुःखमुच्यत इत्यत आह **न चेति** । ननु मात्स्ये वाल्मीकिशुश्रूषादि रामवियोगादि चोचेयत इत्यत आह **अवापेति** । **महद्ब्रह्म प्रकृतिः** इत्युक्तं समर्थयति **महदिति** ॥ ३-४ ॥

***प्र०दी०***— श्रुतिबलाच्चेत्याह **तथा हीति** । **प्रकाशयन्ती** प्रवर्तते । अनयैव श्रुत्या अन्यदपि लब्धमिति प्रसङ्गादाह **अत इति** । **मृषा** अयथार्थं **प्रदर्शनं** यस्य तत्तथा । इतश्चैवमेवेत्याह **तथेति**। तत्र ह्येवमुक्तम्— 'दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत् सीतां पावकोऽसौ सुरप्रियः' इत्यादि । ननु "महालक्ष्मीः 'श्री, भू, दुर्गा' इति भिन्ना" इत्युक्तम् । भुवश्च 'गौर्भूत्वा-ऽश्रुमुखी खिन्ना" इति दुःखं प्रतीयते । तत्कथमेतत् ? इत्यत आह **न चेति** । इयं भूताभिमानिनी प्रसिद्धा **भूः** भगवत्या रूपं **न** भवति । किन्तु इयं अन्यैव । कुत इत्यत आह **तथा चेति** । महालक्ष्मीरूपं **भूः अन्या** । इयं प्रसिद्धा **तस्य** तस्याः **छाया** प्रतिमा ।

ननु रावणहरणादिकं भवतु मायासीतायाः । वाल्मीकिदास्यं तावन्मत्स्यपुराणे साक्षात् सीताया एवोक्तम् । दास्ये च दुःखमवर्जनीयमित्याशङ्कां प्रमाणपूर्वकमपाकरोति **अवापेति** । **श्रुतिः** 'अस्ति यतः अतः' इति शेषः ।

'महद्ब्रह्म प्रकृतिः' इत्युक्तम् । तत्र प्रमाणं वक्तुं व्यवहितत्वात् पुनः प्रतिजानीते **महदिति** । 'महत्' 'ब्रह्म' इति भिन्ने पदे । ततःपरं इतिशब्दः अध्याहार्यः । कुतः ? इत्यत आह **महतीति**। **तत्रैव** मत्स्यपुराणे । अर्थक्रमेण 'मम योनिः महत् ब्रह्म' इत्यत्र व्युत्क्रमेण व्याख्यानम् । मत्स्य-पुराणोदाहरणप्रसङ्गादत्रोपपादनमिति ॥ ३-४ ॥

***भा०दी०***— 'प्रकाशयन्ती' इत्यनूद्य तस्याध्याहारेण क्रियान्वयमाह **प्रवर्तत इति** । ननु गीतापाठक्रमानुरोधेन व्याख्याने कार्ये महद्ब्रह्मपदार्थं पूर्वमुक्त्वा 'मम योनिः' इति योनिपदव्याख्यानं भाष्ये पूर्वं कुतः कृतमित्यत आह **अर्थक्रमेणेति** । 'ब्रह्म' इत्यस्य विशेष्यत्वात् योनिपदस्य विशेषणत्वात् वा, ब्रह्मणः प्राधान्यरूपार्थक्रमेणेत्यर्थः । 'महद्ब्रह्म' इति शब्दार्थत्वोपपादनं तत्रैव अकृत्वा अत्र कुतः कृतम् ? इत्यत आह **मत्स्येति** ॥ ३-४ ॥

***भा०र०***— भाष्ये— 'महामाया = महालक्ष्मीः विष्णोः गर्भसन्धारणार्था योनिः = भार्या। तथापि = सर्वैर्दुःखैर्विशेषतो हीनाऽपि मोहनार्थम् अयोग्यजनस्य इत्यर्थस्य स्फुटत्वाद् 'एकतिङ् वाक्यम्' इति प्रसिद्धवचनुसारेण वाक्यसमाप्तये अध्याहरति **प्रवर्तत इति** । **प्रसङ्गात्** योनिशब्दस्य भार्यार्थत्वनिर्धारणप्रस्तावात् ।

ननु दुःख-रामवियोग-रावणहरणादेः अर्थस्य प्रदर्शनरूपत्वम्, अयुक्तं च प्रदर्शनस्य मिथ्या-त्वम् ? 'अयोग्यजनव्यामोहनाय दुःखिवत् आत्मानं प्रकाशयन्ती' इति प्रदर्शनस्य श्रुत्युक्तत्वात्, इत्यतो मृषाशब्दस्य विवक्षितार्थं वदन् बहुव्रीहिमाह **मृषाऽयथार्थमिति** । लोकदर्शननिष्पादनं हि प्रदर्शनशब्दार्थः । तत्र दर्शनं मिथ्याभूतदुःखाद्यर्थविषयीकारि, इति व्याख्यानात् न शङ्कितदोष-द्वयमिति भावः । **इतश्च** स्मृतिबलाच्चेत्यर्थः । न केवलं 'महामाया सीतातिरूपदुःखिवत् आत्मानं प्रकाशयन्ती' इति श्रुतिबलात् 'सीतादुःखादिकं मिथ्या' इति ज्ञातव्यम् । किन्तु विस्पष्टार्थवादि-पुराणवचनबलाच्चेति चशब्दः । अनेनैव पूर्वभाष्ये 'अतः' इत्यस्य 'उदाहृतश्रुतिवाक्यात्' इत्यर्थः सूचितो भवति । उग्रदीधितिः = तिग्मप्रकाश इति पावकविशेषणम् । द्वितीयार्धे 'सीतां माया-मयीम्' इति ।

'भागवते भगवत्याः = महालक्ष्म्या रूपम्' इति भाष्येऽध्याहारः । अन्यत्व एव प्रमाणोदा-हरणात् 'इयम्' इति भाष्यपदमावर्त्य तत्र संयोज्यमाह **किन्त्वियमन्यैवेति** । **प्रसिद्धा** 'भूरन्या' इत्यनुवर्तते । 'पुंवत् शक्तियुतत्वेन पुल्लिङ्गं वेदे' इति भावेन 'तस्य' इत्येतदनूद्य व्याचष्टे **तस्य तस्या इति** । छायाशब्देन 'दीपच्छाया', 'नरच्छाया' इत्यादाविव अत्रापि द्रव्यान्तरं प्रतीयते ।

न च तद्ग्रहणं युक्तम् ? स्वच्छद्रव्यस्य महालक्ष्म्याः छायाऽयोगाद् इति, एतस्य विवक्षितार्थमाह **छाया प्रतिमेति** । भाष्ये– अन्यशब्दोक्तं भेदमुपपादयितुं विरुद्धधर्मावुक्तौ– 'भूताऽवमा', 'भूतैक-योनिः' इति । तत्र भूताऽवमा = आकाशादिभूतेभ्य इयमवरा, सा तु = महालक्ष्मीरूपा भूतानां मुख्यकारणम्, ततोऽधिकेत्यर्थः । 'पृथिवी सर्वभूतेभ्यः सदा सर्वगुणैर्वरा' इति छान्दोग्यभाष्यं विवक्षाविशेषेण तस्या उत्तमत्वाशयमिति न तद्विरोधः । **दास्यं** शुश्रूषणम् । 'अपाकरोति' इति वदन् भाष्ये– 'स्वेच्छयैव, न तु कर्मायत्तत्वेन, तेन दुःखमवर्जनीयमिति नाशङ्कनीयम्' इति संयोज्यम् इत्यभिधत्ते ।

'श्रुतिः' इत्यनूद्य तत्र पदत्रयमध्याहरति **श्रुतिरस्ति यतोऽत इति** । ननु 'आन्महतः समाना-धिकरणजातीययोः' इति आत्वानुशासनाद् 'महाब्रह्म' इति स्यात् ? इत्यत आह **ततःपरमिति** । 'महद्' इति विशेषणसमर्पकः, 'ब्रह्म' इति विशेष्यसमर्पकश्च यो गीतोपात्तः शब्दः तद्वाच्येति भाष्यार्थ इति भावः । '**महती इति**' इत्यत्र 'ईत्-ऊत्-एत् द्विवचनं प्रगृह्यम्' इति प्रकृतिभावः । स्थलप्रदर्शनाय एवशब्दशिरस्कप्रतीकम् आगृह्य तदर्थमाह **तत्रैव मत्स्यपुराण इति** । ननूत्तरपञ्चा-ध्यायीप्रतिपाद्योक्त्यनन्तरं भाष्ये महद् ब्रह्मशब्दो महालक्ष्म्यर्थो व्याख्यातः । अनन्तरं योनिशब्दो भार्यार्थो भाषितः । गीतापाठस्तु 'मम योनिर्महद् ब्रह्म' इति । तत्र गीतापाठमनुसृत्य योनि-महद्-ब्रह्मशब्देषु क्रमेणैव व्याख्यातव्येषु किमिति क्रमातिलङ्घनेन व्याख्यानम् ? इत्यत आह **अर्थ-क्रमेणेति** । 'महद् ब्रह्म मम योनिः = भार्या' इत्यन्वयक्रमेण विवक्षितेन निमित्तेनैवं व्याख्यानं कृतमित्यर्थः । ननु तर्हि 'महद् ब्रह्म प्रकृतिः' इत्युक्त्यनन्तरमेव 'महती ब्रह्मणी द्वे तु' इति प्रमाण-मुदाहार्यम् ? प्रतिपत्तिसौकर्यात्, न त्वत्र । पुनः प्रतिज्ञाकरणदोषात्, इत्यत आह, **मत्स्यपुराणेति**। **उपपादनं** प्रमाणोदाहरणेन प्रकृत्यर्थत्वप्रतिपादनम् ॥ ३-४ ॥

***गीताक्षरार्थस्तु—***

'योगे त्विमां शृणु' इति प्रतिज्ञाय आषष्ठीपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्म-ध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांश उत्तरैः पञ्चभिरध्यायैः प्रपञ्च्यत इत्युत्तरषट्कार्थः । अवान्तरप्रतिपाद्यभेदाद् अध्यायभेदः । तत्र 'यावत्सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम्' इत्युक्त-विवरणपूर्वकम् 'कारणं गुणसङ्गोऽस्य' इत्युक्तगुणबन्धं प्रपञ्च्य, तदत्ययसाधनम् अनेन चतुर्दशा-ध्यायेनोच्यते । श्रोतुरादरजननाय वक्ष्यमाणार्थज्ञानं प्रतिज्ञापूर्वकं फलोक्त्या प्रशस्यते **भगवानुवाच– परं भूय इति द्वाभ्याम्** । **परम्** अन्यत्, कर्माद्यपेक्षयोत्कृष्टम् इति वा **भूयः** पुनः **प्रवक्ष्यामि** ।

किं तत् ? **ज्ञानानां** ज्ञातव्यानां मध्ये **उत्तमं ज्ञानं** ज्ञातव्यम् । **यद् ज्ञात्वा सर्वे मुनयः** मननशीलाः **इतः** संसारात् **परां सिद्धिं** मुक्तिं **गताः** प्राप्तवन्तः ॥ १ ॥

'ब्रह्मभावो मुक्तिः' इत्यादिमिथ्याज्ञानादिनिबर्हणाय मुक्तिस्वरूपं विवृण्वता उपदेष्टव्यज्ञानस्य तात्पर्यद्योतनाय मुक्तिसाधनत्वमुच्यते **इदं ज्ञानमिति** । **इदम्** उपदेक्ष्यमाणार्थ**ज्ञानम् उपाश्रित्य** सम्पाद्य **मम साधर्म्यम्** 'निर्दुःखत्वं परानन्दो लिङ्गभेदः समा मताः' इति वचनोक्तनिर्दुःखत्वादिना समानधर्मत्वम् **आगताः** कर्तरि निष्ठा, प्राप्तवन्तः भवन्ति । एवम्भूता अपि स्वर्गिण इव पुनः प्रत्यावृत्त्योत्पद्यन्ते, म्रियन्ते च किम् ? इत्यपेक्षायामुच्यते **सर्गेऽपीति** । **न व्यथन्ति** मृत्यादिव्यथां न गच्छन्ति च ॥ २ ॥

'परं भूयः प्रवक्ष्यामि' इति प्रतिज्ञातुमुच्यते **मम योनिरिति** । हे **भारत महद् ब्रह्म** प्रकृति-शब्दिता महालक्ष्मीः **मम योनिः** भार्या **तस्मिन्** महति ब्रह्मणि **अहं गर्भं दधामि** । **ततः** च **सर्वभूतानां** स्थावरजङ्गमात्मकप्राणिनां **सम्भवः** देहयोगलक्षण उद्भवो **भवति** ॥ ३ ॥

एवं मत्तः प्रकृतौ प्राणिनामुद्भवो न आदिसर्ग एव, किन्तु सर्वदाऽपीत्युच्यते **सर्वयोनिष्विति**। **सर्वयोनिषु** सुर-नर-तिर्यगादिरूपासु **याः मूर्तयः** कार्यव्यक्तयः **सम्भवन्ति तासां महद् ब्रह्म** प्रकृतिः **योनिः** गर्भाधानस्थानं = क्षेत्ररूपं कारणम् **अहं बीजप्रदः** गर्भाधानकर्ता **पिता** इति ॥४॥

**गीता**

## सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
## निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

***वि०वि०***— गुणत्रयकृतबन्धनप्रकारं दर्शयति **सत्त्वमिति** । अत्र गुणत्रयाभिमानिन्यो लक्ष्म्याद्यास्तिस्रो मूर्तयो जीवं बध्नन्ति इति बोद्धव्यम् । 'श्री भू दुर्गा महती तु माया सा लोकसूतिर्जगतो बन्धिका च' इति श्रुतेः ॥ ५ ॥

***सा०सं०***— एवं 'सत्त्वं रजस्तम इति' 'यावत्सञ्जायते' (१३-२३) इत्युक्तं श्लोकद्वयेन विवृत्य, इदानीं यो हि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वाऽनुतिष्ठति। अतो बन्धोच्छेदसाधनानुष्ठानाय तत्साधनज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबन्धप्रकारं तावदाह **सत्त्वमिति** । **प्रकृतिसम्भवाः** त्रिगुणात्मकजडप्रकृतितः सम्भवन्तस्तदंशभूताः । **सत्त्वं रजस्तम इति गुणाः** तथा प्रकृतिसम्भवाः । चित्प्रकृतितः सृष्टिकाले विभज्यमानाः सद्गुणत्व-

सृष्ट्यादिरञ्जनकर्तृत्वजीवग्लपनहेतुत्वनिमित्तैः क्रमात् सत्त्वरजस्तमश्शब्दिताः श्रीभूदुर्गाख्याः गुणाः क्रमाद्गुणत्रयाभिमानिन्यः । तिस्रो देव्यश्च देहे स्थित**मव्ययम्**, स्वरूपतो व्ययहीनम् । जीवम् । जात्येकवचनम्, जीवजातम् **निबध्नन्ति** । सर्वासां सर्वजीवबन्धकत्वेऽपि सत्त्वमानिनी श्रीः देवबन्धिका, रजोऽभिमानिनी भूर्मनुष्यबन्धिका, तमोऽभिमानिनी दुर्गा दैत्यबन्धिकेति विशेषो ज्ञेयः । अत्र देह इत्युक्तिर्भूतपूर्वगत्या मुक्तानामपि देहित्वात् तद्व्यावृत्त्यर्था ॥ ५ ॥

***अ०प्र०***— एवं श्रीविष्णुरमाभ्यां सर्वोत्पत्तिमुक्त्वा गुणत्रयसङ्गेन बन्धप्रकारं निरूपयति चतुर्भिः ॥

हे महाबाहो ![1], सत्त्वं[2], रजः[3], तमः[4], इत्येवंसंज्ञकाः[5], त्रयो गुणाः[6], प्रकृतिसम्भवाः = प्रकृतेः सकाशात् सम्भवो येषां ते तथा प्रकृतिजन्याः गुणसाम्यं प्रकृतिः तस्याः सकाशात् पृथक्त्वेनाभिव्यक्ताः सङ्ख्याताः वैषम्यं प्राप्ताः सन्तः[7], देहे = प्रकृतिकार्ये स्थितं[8], अव्ययं = वस्तुतो निर्विकारं सन्तं[9], देहिनं = जीवं[10] निबध्नन्ति = स्वकार्यभूतैः सुखदुःखमोहादिभिः संयोजयन्ति[11] महाबाहो सत्त्वं रजस्तमेत्येवं प्रकृतिसम्भवाः गुणाः देहे स्थितं अव्ययं देहिनं निबध्नन्तीत्यन्वयः । तदुक्तम्— "महालक्ष्मीरिति परा भार्या नारायणस्य या । प्रकृतिर्नाम सा ज्ञेया प्रकर्षेण करोति यत् ॥ तस्यास्तु त्रीणि रूपाणि सत्त्वं नाम रजस्तमः । सृष्टिकाले विभज्यन्ते सत्त्वं श्रीसद्गुणप्रभा ॥ रजोरञ्जनकर्तृत्वाद्भूः सा सृष्टिकरी यतः। यदावेशादियं पृथ्वी भूमिरित्येव कथ्यते ॥ जीवानां ग्लपना दुर्गा तम इत्येव कीर्तिता । एताभिस्तिसृभिर्जीवास्सर्वे बद्धा अमुक्तिगाः ॥ सर्वान् बध्नन्ति सर्वाश्च तथाऽपि तु विशेषतः । श्रीर्दैवबन्धिका नृणां भूर्दैत्यानां तथा परा ॥ एताभ्योऽन्यं परं चैवं विष्णुं ज्ञात्वा विमुच्यते ।" इति वचनानुसारेण गुणत्रयाभिमानिनी लक्ष्मीरेव बन्धिका । अत्रेदं तत्त्वम्— श्री, भू, दुर्गा, ब्राह्मी, माहेश्वरी, महेन्द्राणी, कौमारीति सप्तरूपा भगवती पुराणेषु उच्यते । तत्राद्यं रूपत्रयं लक्ष्म्या एव । अन्याश्चतुस्रो ब्रह्म-रुद्रेन्द्रस्कन्दपत्न्यो जीवाः तत्सन्निधानात् तथोच्यन्ते । तथोक्तम्— "श्रीर्भूर्दुर्गा महती या तु माया सा लोकसूतिर्जगतो बन्धिका च । उमा वागाद्यन्यजीवास्तदंशास्तदात्मानः सर्ववेदेषु गीताः ॥ सद्गुणत्वासत्प्रकाशरूपत्वात् त्वं त्विट् प्रकाशे स चेतत्वं रञ्जरागे तमज्ञानौ ॥ ५ ॥

**भाष्यम्**

**बन्धप्रकारं दर्शयति साधनानुष्ठानाय सत्त्वमित्यादिना ॥ ५ ॥**

***प०टी०***— 'सत्त्वं रजस्तमः' इत्यादि प्रघट्टकमवतारयति **बन्धेति** ॥ ५ ॥

*प्र०दी०*— ननु प्रतिज्ञातं ज्ञानं श्लोकद्वयेनोक्तम् । तत्किमुत्तरेण ग्रन्थेनाध्यायासङ्गतमुच्यते ? इत्यत आह **बन्धेति** ! यो हि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वा अनुतिष्ठति । अतो **बन्धोच्छेदसाधनानुष्ठानाय** तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृत**बन्ध-प्रकारम्** आदौ तावद् **दर्शयति** इति नासङ्गतिरित्यर्थः ॥ ५ ॥

*भा०दी०*— **प्रतिज्ञातं ज्ञानमिति** । ज्ञायत इति ज्ञानमिति कर्मव्युत्पत्त्या प्रकृतेः सर्व-कारणत्वरूपं प्रकृतौ भगवतः बीजाधायकत्वरूपं ज्ञातव्यमित्यर्थः । **विजिज्ञास्य** विचार्य ॥ ५ ॥

*भा०र०*— **प्रतिज्ञातं ज्ञाममिति** ॥ 'परं भूयः प्रवक्ष्यामि' इति प्रतिज्ञातं प्रकृतेः सर्वकारण-त्वरूपम्, भगवतः प्रकृतौ बीजावापकर्तृत्वरूपं च ज्ञातव्यमित्यर्थः । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणाद् कर्मणि ल्युट् इति भावः । सन्निधानाद् 'बन्धसाधनानुष्ठानाय' इति प्रतीतिव्युदासाय सतात्पर्यं व्याचष्टे **यो हीति** । **तन्निवृत्तिसाधनं** बन्धनिवृत्तिसाधनम् । **विजिज्ञास्य** विचार्य **तज्ज्ञापनार्थं** साधनानुष्ठानज्ञापनार्थम् ॥ ५ ॥

**गीता**

## तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
## सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

*वि०वि०*— सर्वान् बध्नन्ति सर्वाश्च । तथापि तु विशेषतः 'श्रीर्देवबन्धिका नृणां भूर्दैत्याना-मथापरा' इत्युक्तन्यायेन बन्धकत्वं क्रमेणाह तत्रेत्यादिना । तत्र तेषु गुणेषु मध्ये । स्वच्छत्वात् प्रकाशकम् । निरुपद्रवं सत्त्वं सुखज्ञानशक्तिजननेन देवान् बध्नाति ॥ ६ ॥

*वा०ल०*— 'सत्त्वम्' इत्यत्र, सत्त्वं सत्त्वगुणः । सुखसङ्गेन प्राकृतसुखसङ्गेन । ज्ञानसङ्गेन प्राकृतज्ञानसङ्गेन ॥ ६ ॥

*सा०सं०*— श्रीभूदुर्गाभिः क्रियमाणं देवादित्रितयविषयबन्धनप्रकारं विविच्याह **तत्रेत्यादि** त्रयेण । **तत्र** तेषु गुणेषु तासु देवीषु च । **सत्त्वं** सत्त्वाभिमानिश्रीतत्त्वम् । **निर्मलत्वात्** । **अनामयं** न विद्यते आमयो व्याध्याद्युपद्रवो यस्मात् तत् । तच्च **प्रकाशकं** तत्त्वज्ञानोत्पादकं सत् । **सुख-सङ्गेन** तत्त्व**ज्ञानसङ्गेन** च देवान् **बध्नाति** ॥ ६ ॥

*अ०प्र०*— तत्र सत्त्वस्य लक्षणं बन्धकत्वं चाह **तत्रेति** ।

हे अनघ ![१], तत्र[२], सत्त्वं च[३], निर्मलत्वात्[४], प्रकाशकं[५], अनामयं[६], अतः सुखसङ्गेन[७], बध्नाति[८], ज्ञानसङ्गेन च बध्नाति[९] इत्यन्वयः ।

हे अनघ ![१], तत्र = गुणानां मध्ये[२], सत्त्वं[३], ग्मिलत्वात् = स्वच्छत्वात्[४], प्रकाशकं स्फटिकमणिरिव भास्वरं[५], अनामयं = निरुपद्रवं सुखरूपं शान्तमित्यर्थः[६], अतः = शान्तत्वात् सुखसङ्गेन = स्वकार्येण सुखेन यः सङ्गः तेन[७], बध्नाति[८], ज्ञानसङ्गेन च प्रकाशकत्वात् स्वकार्येण ज्ञानेन यः सङ्गः तेन च बध्नाति एवं सत्त्वगुणः द्विविधा बध्नाति[९], देवादीन् अहं सुखी ज्ञानी चेति मनोधर्मास्तदभिमानिनी जीवे संयोजयतीत्यर्थः ॥ ६ ॥

**गीता**

## रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
## तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

***वि०वि०*—** अनुरञ्जनरूपं विद्धि । तत् कर्मसङ्गेन मानुषं बध्नाति ॥ ७॥

***वा०ल०*—** कर्मसङ्गेन काम्यकर्मसङ्गेन ॥ ७ ॥

***सा०सं०*—** **तृष्णा** नाम- इदं मे भूयादित्याशा । **सङ्गो** वस्तुष्वासक्तिः । तयोः समुद्भवो यस्मात् तत् । **रजो**ऽभिमानिनी भूदेवी भूतत्त्वं च । **रागात्मकं** सृष्ट्यादिरञ्जनस्वरूपम् । **विद्धि** । **तत्** द्विविधं रजः । कर्मयोगेन **देहिनं** मानुषं जीवं **बध्नाति** ॥ ७ ॥

***अ०प्र०*—** रजोलक्षणं बन्धकत्वं चाह **रज इति** ।

हे कौन्तेय ![१], तृष्णासङ्गसमुद्भवं[२], रजः[३], रागात्मकं[४], विद्धि[५], यस्मात्तस्मात् तं[६], देहिनं[७], कर्मसङ्गेन[८], निबध्नाति[९] ॥

हे कौन्तेय ![१], तृष्णासङ्गसमुद्भवं = तृष्णायाः सङ्गस्य समुद्भवो यस्मात्तत् अप्राप्ताभिलाषः सङ्गः प्राप्त्यर्थे प्रीतिः विशेषेण आसक्तिः तयोः तृष्णासङ्गयोः समुद्भवो यस्मात्तथोक्तं तृष्णासञ्जनकमित्यर्थः[२], रजः = रजःसंज्ञं गुणं[३], रागात्माकं = अनुरागात्मकं अनुरञ्जनरूपमिति वा[४], विद्धि = जानीहि[५], यस्मात्तस्माद्रजः तं[६], देहिनं[७], कर्मसङ्गेन = काम्ययागादिकर्मणां सङ्गेन यद्वा, दृष्टादृष्टार्थकर्मसु विषयेषु सङ्गेन आसक्त्या[८], निबध्नाति = नितरां बध्नाति[९], मनुजादीन् तृष्णासङ्गाभ्यां हि कर्मस्वासक्तिर्भवति ॥ ७ ॥

**भाष्यम्**

**तृष्णासङ्गयोः समुद्भवं तयोः कारणम् ॥ ७ ॥**

*प०टी०*— तृष्णासङ्गाभ्यामुद्भवो यस्येति प्रतीतिनिरासायाह **तृष्णेति** ॥ ७ ॥

*प्र०दी०*— अत्र रजः 'तृष्णासङ्गसमुद्भवम्' इत्यस्य तृष्णासङ्गाभ्यां समुद्भवो यस्य इत्यपव्याख्यानमिति भावेन विग्रहप्रदर्शनपूर्वकमर्थमाह **तृष्णेति** । समुद्भवति अस्मादिति **समुद्भवं** कारणम् । अन्यथा 'प्रकृतिसम्भवाः' इत्युक्तविरोधात् । समुद्भवशब्देनाविर्भावो विवक्षित इति चेत् । तथाऽपि गुणकार्यकथनप्रकरणविरोधात् ॥ ७ ॥

*भा०र०*— **अत्र** गुणैर्बन्धकथनप्रकरणे । **समुद्भवत्यस्मादिति** । सम्पूर्वाद् भवतेः 'ऋदोरप्' इति अप्प्रत्ययतः । 'सार्वधातुकार्धधातुकयोः' इति गुणोऽवादेशश्च, न पुनर्घञ्प्रत्ययः । 'श्रि-णी-भुवोऽनुपसर्गे' इति उपसर्ग उपपदे भूधातोः घञः पर्युदासात् । न चैवं सति भाष्ये 'समुद्भवम्' इति नपुंसकप्रयोगो न युक्तः ? लिङ्गानुशासने 'पुंसि' इत्यधिकृत्य 'घञबन्तः' इति अप्प्रत्ययान्तस्य पुंस्त्वानुशासनात्, इति वाच्यम् । भावार्थकघञबन्तस्य पुंस्त्वेऽपि कर्माद्यर्थकतदन्तस्य तदभावेन विशेष्यनिघ्नत्वात् । अत एव 'सम्बन्धमनुवर्तिष्यते' इति भाष्यप्रयोगः कैयटोक्तरीत्यैव निर्व्यूढः । **केचित्तु** 'समुद्भवत्यस्मात्' इति टीकोक्तव्युत्पत्तिरुपलक्षणम् । 'सम्यग् उद्भवः = उत्पत्तिः यस्मात् समुद्भवम्' इत्यपि द्रष्टव्यम् । तथा च भाष्ये नपुंसकलिङ्गप्रयोग उपपन्न इत्याहुः । **अन्यथा** 'तृष्णासङ्गाभ्यां समुद्भवो यस्य' इति परव्याख्याने । **इत्युक्तेति** । 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इत्युक्तत्वेन प्रकृतिकार्यस्य रजसः तृष्णासङ्गकार्यत्वाभ्युपगमे स्वोक्तिविरोधापत्तेरित्यर्थः । प्रकृतिकार्यत्वाविघातेनैव तृष्णासङ्गाभ्यां रजसः समुद्भवं घटयितुमाह **समुद्भवशब्देनेति** । **गुणेति** । गुणानां कार्यबन्धो ह्यत्र कथ्यते । तत्प्रकरणे चाविर्भावकथनस्यानुचितत्वेन तत्कथनस्य प्रकरणविरोधित्वादित्यर्थः ॥ ७ ॥

**गीता**

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

*वि०वि०*— अज्ञानं जायते यतस्तदज्ञानजम् । तमो मोहनं विद्धि । तत् प्रमादादिभिरसुरं बध्नाति ॥ ८ ॥

*सा०सं०*— अज्ञानं जायते यतस्तदज्ञानजम् । **तम**स्तमोऽभिमानिनी दुर्गा, तत्त्वं च । **सर्वदेहिनां मोहनं** मिथ्याज्ञानजनकम् । **विद्धि** । **तत्** द्विरूपं तमः । प्रमादादिभिर्दैत्यजनं **निबध्नाति** ॥ ८ ॥

*अ०प्र०*— तमोलक्षणं बन्धकत्वं चाह **तमस्त्विति** ।

हे भारत ![1], तमस्तु[2], अज्ञानजं = अज्ञानाज्जातं यद्वा, अज्ञानं जायते यस्मात्तत् अज्ञानजं तज्जनकं व्यवहारज्ञानमपि येन तमसा मन्दीभूतामित्यर्थः । आवरणशक्तिप्रधानात् प्रकृत्यंशादुद्भूतं[3], विद्धीत्यर्थः[4], अत एव सर्वदेहिनां मोहनं = मिथ्याज्ञानजनकं[5], मुह वैचित्ये अत एव तत् तमः प्रमादालस्यनिद्राभिः प्रमादेन आलस्येन निद्रया च तत्तमः[7], तं देहिनं निबध्नाति[8], यद्वा, तत्र प्रमादो अनवधानं आलस्यं अनुद्यमः निद्रा चित्तस्यावसादः सल्लयः ॥ ८ ॥

**भाष्यम्**

**अज्ञानं जायते यतः तद् अज्ञानजम् । 'प्रमादमोहौ तमसः' इति वाक्यशेषात् ॥ ८ ॥**

*प०टी०*— अज्ञानाज्जातमिति प्रतीतिनिरासायाह **अज्ञानमिति** ॥ ८ ॥

*प्र०दी०*— 'तमस्तु अज्ञानजम्' इत्यस्य 'अज्ञानाज्जातम्' इत्यपव्याख्यां प्रत्याख्यातुमाह **अज्ञानमिति** । एतच्च 'अन्येष्वपि दृश्यते' इति दृशिग्रहणसामर्थ्याल्लभ्यते । कुतः प्रतीत एवार्थो न ? इत्यत आह **प्रमादेति** । वाक्यशेषे अज्ञानस्य तमःकार्यत्ववचनादित्यर्थः ॥ ८ ॥

*भा०दी०*— **एतच्चेति** । 'अज्ञानजनकम्' इत्येतच्च 'सप्तम्यां जनेर्डः' इत्यत्र 'अन्येष्वपि दृश्यते' इत्युक्तेर्दृशिग्रहणसामर्थ्यात् करणे प्रथमान्ते उपपदेऽपि जनेः डप्रत्ययो लभ्यत इत्यर्थः ॥८॥

*भा०र०*— ननु 'अज्ञानं जायते यतः' इति विग्रहे 'अज्ञानजम्' इति कथं रूपम् ? 'सप्तम्यां जनेर्डः', 'पञ्चम्यामजातौ', 'उपसर्गे च संज्ञायाम्', 'अनौ कर्मणि' इति सप्तम्यन्तादौ उपपद एव जनेर्डप्रत्ययविधानात्, प्रथमान्त उपपदे अकर्तरि अविधानात्, इत्यत आह **एतच्चेति** । उक्त-विग्रहेऽपि 'अज्ञानजम्' इति रूपम् । 'अन्येष्वपि दृश्यते' इति सूत्रे 'दृश्यते' इति दृशिग्रहण-सामर्थ्यात् 'यथादर्शनं व्याख्यातव्यम्' इत्यवगमात्, प्रथमान्त उपपदे अपादानकारकार्थेऽपि 'जनी = प्रादुर्भावे' इति धातोर्डप्रत्ययो भवतीति व्याख्याने लभ्यत इत्यर्थः । अत एव सूत्रे 'सर्वोपाधि-व्यभिचारार्थः अपिशब्दः' इति भावः । **केचित्तु** केवलाज्जनेः कर्तरि डप्रत्ययः, ततः 'अज्ञानं जं

= जनिमत् यस्मात्' इति पञ्चम्यर्थे बहुव्रीहिः । भाष्यं तु अर्थप्रदर्शनमात्रपरमिति व्याख्येयम् । न च तद्युक्तम् ? 'अन्येष्वपि दृश्यते' इत्यनेन सूत्रेण उपपदे सत्येव डप्रत्ययविधानात्, इत्यत आह 'एतच्चेति' इत्यवातारयन् । दूरस्थस्यापि एतदर्थप्रतिपादकत्वात् एकवाक्यता इत्यभिप्रायेण भाष्ये शेषत्वोक्तिः इति भावेनाह **वाक्यशेष इति** । 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति वाक्य-शेषे, 'अज्ञानं तमसः फलम्' इति वाक्यशेषे चेत्यर्थः ॥ ८ ॥

**गीता**

# सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
# ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

***वि०वि०***— सत्त्वादीनां बन्धकत्वं सुखादिसङ्गापादनेनैवेति नियमं दृढयति **सत्त्वमिति** । संजयति सुखयुक्तं करोति ॥ ९ ॥

***सा०सं०***— सत्त्वादीनां सुखादिसम्पादनेनैव बन्धकत्वमिति नियमं द्रढयति **सत्त्वमिति** । **सत्त्वं** सत्त्वाभिमानिनी श्रीश्च । **सुखे** सुखविषये । **संजयति** प्रवर्तयतीत्यर्थः । **रजः** रजोऽभि-मानिनी भूदेवी च कर्मविषये संजयति । **तमस्तु** तमोऽभिमानिनी दुर्गा च **ज्ञानमावृत्य** मनस-स्तत्त्वज्ञानशक्तिं प्रतिबध्य । **प्रमादे** अधर्मे अधर्मबुद्ध्यादिरूपे संजयति । **उत**शब्दादालस्यादिग्रहः ॥ ९ ॥

***अ०प्र०***— सत्त्वादीनां स्वस्वकार्यकरणे सामर्थ्यातिशयमाह **सत्त्वमिति** ।

हे भारत ![१], सत्त्वं[२], सुखे[३], सञ्जयति[४], रजः[५], कर्मणि सञ्जयति[६], तमस्तु[७], ज्ञानं[८], आवृत्य[९], प्रमादे[१०] सञ्जयति[११] उत इत्यनेन आलस्याद्यपि ददाति[१२] इत्यन्वयः ।

हे भारत ![१], सत्त्वं = सत्त्वगुणः[२], सुखे = विषयसुखे[३], सञ्जयति = मेलयति संश्लेषयति वा[४], दुःखशोकादिकारणे सत्यपि सुखानि सुखमेव देहिनं करोति[४], रजः = रजोगुणः[५], कर्मणि = काम्ये कर्मणि सञ्जयति = संयोजयति प्रवर्तयति वा[६], सुखादिकारणे सत्यपि कर्मण्येव संयोजयति[६], तमस्तु = तमोगुणः[७], ज्ञानं[८], आवृत्य[९], प्रमादे मनश्चाञ्चल्यादौ[१०] सञ्जयति = महत्सङ्गे नोत्पद्यमानमपि ज्ञानं आच्छाद्य प्रतिबुध्य दुराचारे संयोजयतीत्यर्थः[११] उत आलस्याद्यपि ददाति[१२] ॥ ९ ॥

**गीता**

# रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
# रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

***वि०वि०—*** ननु त्रयाणां गुणानां समत्वात् कथं कदाचित् कस्यचिदेव गुणस्य कार्यं दृश्यत इत्यत आह **रज इति** । ईश्वरेच्छया सत्त्वं कदाचिद्रजस्तमसी अभिभूय स्वयमुत्कटं भवति । कदाचिद्रजः सत्त्वतमसी अभिभूयोल्बणं भवति । तमः सत्वरजसी अभिभूय प्रादुर्भवतीत्यर्थः ॥ १० ॥

***वा०ल०—*** 'रजस्तमश्च' इत्यत्र, सर्वद्वारेषु घ्राणरसनादिनवद्वारेषु, सत्त्वमेव भवति प्रबलं भवति – अयमुत्तमानां स्वभावः । रजः सत्त्वं चाभिभूय प्रकाशं स्पष्टं यथा भवति, तथा सर्वद्वारेषु तम एवोपजायते – अयमधमानां स्वभावः । तथा तमः सत्त्वं चाभिभूय सर्वद्वारेषु प्रकाशं स्पष्टं यथा भवति तथा रज एवोपजायते – अयं मध्यमानां स्वभावः ॥ १० ॥

***सा०सं०—*** ननु त्रयाणां बन्धकत्वसाम्यात् कथं कस्यचिदेव गुणस्य कार्यं दृश्यते इत्यतः उत्कटत्वानुत्कटत्वाभ्यामिति भावेनाह **रज इति** । ईश्वरेच्छया **सत्त्वमुत्कटं** सत् **रजस्तमश्चाभिभूय** स्वकार्यदक्षं **भवति** । **रजस्तथोत्कटं** सत् **तमःसत्त्वं चाभिभूय** स्वकार्यदक्षं **भवति** । **तमश्चोत्कटं** सत् **रजःसत्त्वं चाभिभूय** स्वकार्यकारि **भवति** इत्यर्थः । अभिभवशब्दितकार्यशक्तिप्रतिबन्धो गुणानामेव । देवीनां त्वौदासीन्यमेवेति ज्ञातव्यम् ॥ १० ॥

***अ०प्र०—*** तर्हि तत्र हेतुमाह **रजस्तम इति** ।

हे भारत ![१], रजः[२], तमश्च[३], अभिभूय[४], सत्त्वं[५], भवति[६], सत्त्वं[७], तमश्चैवाभिभूय[८], रजः भवति[९], तथा[१०] सत्त्वं[११] रजः अभिभूय[१२], तमः भवति[१३] इत्यन्वयः ।

हे भारत ![१], रजस्तमश्चैव = रजस्तमश्चेति गुणद्वयं[३], अभिभूय = तिरस्कृत्य यद्वा निर्जित्य[४], सत्त्वं = सत्त्वगुणं उन्नतं[५], भवति = कदाचित् अदृष्टवशात् सत्वमेव प्रकटीभवति स्वकार्यं करोति । स्वकार्ये सुखज्ञानादौ संयोजयतीत्यर्थः[६], तथा सत्त्वं = तमश्चोभयमपि अभिभूय निर्जित्य[८], रजः प्रकटीभवति[९], रजोऽप्येवं स्वेतरगुणौ तिरस्कृत्य प्रादुर्भवति । ततश्च स्वकार्ये तृष्णाकर्मादौ संयोजयति[९], तथा[१०] सत्त्वं रजः अभिभूय = तथा सत्त्वं रजश्चोभयमपि तिरस्कृत्य[१२], तमः भवति = तमोगुणः स्वयं वर्धते स्वेतर-गुणद्वयं सत्त्वरजसी निर्जित्य प्रादुर्भवति । ततश्च स्वकार्ये प्रमादालस्यादौ संयोजयतीत्यर्थः ॥ १० ॥

**गीता**

## सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
## ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

*वि०वि०*— केन लिङ्गेन गुणस्य कस्य वृद्धिरनुमेयेत्यपेक्षायामाह **सर्वद्वारेष्वित्यादिना** । यदा, श्रोत्रादिद्वारेषु शब्दादिज्ञानात्मकः प्रकाश उपजायते । उपशब्दात् सुखादि ज्ञायते, तदा तत्कारणं सत्त्वं विवृद्धमिति विद्यात् ॥ ११ ॥

*सा०सं०*— केन लिङ्गेन सत्त्वादिवृद्धिर्ज्ञेयेत्यत आह **सर्वेत्यादित्रयेण** । **अस्मिन् देहे सर्वद्वारेषु** क्षेत्रादिषु । **ज्ञानं** शब्दादिज्ञानात्मकः **प्रकाशः** । उतशब्दात् सुखादि चोपजायते । **यदा तदा सत्त्वं विवृद्धमिति विद्यात्** । जानीयात् ॥ ११ ॥

*अ०प्र०*— हे भारत !, अस्मिन्[१], देहे[२], सर्वद्वारेषु[३], यदा[४], प्रकाशः[५], उपजायते[६], तदा[७], ज्ञानं[८], सत्त्वं[९], विवृद्धमिति[१०], विद्यात्[११], उत[१२] इत्यन्वयः ।

हे भारत !, अस्मिन् देहे = आत्मनो भोगायतने शरीरे[२], सर्वेन्द्रियद्वारेषु श्रोत्रादिषु[३], यदा प्रकाशः उपजायते = पदशब्दादिज्ञानात्मकः प्रकाशः उत्पद्यते नैर्मल्यरूपः प्रसादो वा । तज्ज्ञानं स एव प्रकाशः सैव प्रज्ञा स एव विवेक इत्यर्थः[६], तदा ज्ञानं[८], अनेन प्रकाशलिङ्गेन ज्ञानेन सत्त्वं[९], विवृद्धमिति[१०], विद्यात् = जानीयात्[११] रजस्तमोभ्यां विजयेन सत्त्वं भवतीति विद्यात्[११] उतशब्दः सुखादिलिङ्गेनापि जानीयादित्युक्तम्[१२] ॥ ११ ॥

**गीता**

## लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
## रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

*वि०वि०*— लोभो धनत्यागेच्छाभावः । प्रवृत्तिः विषयोद्योगः । कर्मणां काम्यानामारम्भः अशमः चित्तस्यानुपरतिः । स्पृहा अप्राप्तेऽभिलाषः । एतानि रजसि विवृद्धे जायन्ते । एतैर्लिङ्गै रजोविवृद्धिं जानीयात् ॥ १२ ॥

*वा०ल०*— 'लोभः प्रवृत्तिः' इत्यत्र, कर्मणां काम्यकर्मणामारम्भ इति सम्बन्धः ॥ १२ ॥

***सा०सं०***— **लोभो** धनादेरत्यागेच्छा । **प्रवृत्तिर्व्यर्थोद्योगः** । काम्यकर्मणाम् **आरम्भः** । **अशमः** चित्तस्यानुपरतिः । अप्राप्ताभिलाषः **स्पृहा** । **एतानि विवृद्धे रजसि जायन्ते** । एतै रजोवृद्धिर्ज्ञेयेति भावः ॥ १२ ॥

***अ०प्र०***— विवृद्धानां सत्त्वादीनां लिङ्गानि सर्वद्वारेत्यादिभिः । किञ्च, **लोभेति** ।

हे भरतर्षभ ![१], रजसि[२], प्रवृद्धे सति[३], लोभः[४], प्रवृत्तिः[५], कर्मणां[६], आरम्भः[७], अशमः[८], स्पृहा[९], एतानि[१०] जायन्ते इत्यन्वयः ।

हे भरतर्षभ ![१], रजसि[२], प्रवृद्धे सति = रजोगुणप्रवृद्धौ सत्यां[३], लोभः = लोभे धनागमे बहुधा जायमानेऽपि पुनःपुनः वर्धमानोऽभिलाषः परदारादि-विषयाचरणं लोभः[४], प्रवृत्तिः = व्यावहारिक-व्यापारे प्रवर्तनं यद्वा, नित्यं कर्मवद्रूपतां[५], कर्मणां आरम्भः = काम्ययज्ञादीनां अप्रयत्नारम्भः यद्वा, अत्युन्नतप्रासादाश्वमेधनगरजलाशयमहावनादिनानाविधमहत्कर्मणां समारम्भः[७], अशमः = चित्त-स्वास्थ्याभावः इदं कृत्वैदं करिष्यामीत्यादि सङ्कल्पविकल्पानुपरमः[८], स्पृहा = उच्चावचेष्विष्टमात्र-वस्तुषु जिघृक्षा[९], यद्वा, 'अशमस्पृहा' समस्तपदे सति इह परकामेषु अपर्याप्तस्पृहेत्यर्थः[९], एतानि = जायन्ते रजसि प्रवृद्धे सति एतानि लिङ्गानि जायन्ते[११] एतैर्लिङ्गैः रजोगुणस्य वृद्धिं विद्यादित्यर्थः ॥ ॥ १२ ॥

**गीता**

## अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
## तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

***वि०वि०***— अप्रकाशः श्रोत्रादिषु शब्दादिज्ञानाभावः । अप्रवृत्तिरनुद्यमः । प्रमादोऽनवधानम् । मोहो विपर्ययः । एतानि तमसि विवृद्धे जायन्ते । एतैर्लिङ्गैस्तमोवृद्धिं जानीयात् ॥ १३ ॥

***सा०सं०***— **अप्रकाशः** श्रोत्रादिषु शब्दादिज्ञानाभावः । **अप्रवृत्तिरनुद्यमः** । **प्रमादो**ऽनव-धानम् । **मोहो** विपर्ययः । **एतानि** तमसि **विवृद्धे जायन्ते** । एतैलिङ्गैस्तमोविवृद्धिर्ज्ञेयेति भावः ॥ ॥ १३ ॥

***अ०प्र०***— किञ्च, **अप्रकाश इति** ।

हे कुरुनन्दन ![१], तमसि[२], विवृद्धे सति[३], अप्रकाशः[४], अप्रवृत्तिश्च[५], प्रमादः[६], मोह एव च[७], एतानि[८], जायन्ते[९] इत्यन्वयः ।

हे कुरुनन्दन ![१], तमसि[२], विवृद्धे सति[३], अप्रकाशः = विवेकाभावः[४], अप्रवृत्तिश्च = अनुद्यमः दुराचारप्रवृत्तिश्च[५], प्रमादः = कर्तव्यानुसन्धानराहित्यं निषिद्धकर्मणि उल्हासेनेन्द्रियप्रवर्तनं प्रमादः । कर्तव्यकरणे मूढतेत्यर्थः[६], मोह एव च = उन्मत्त इवाहेतुकेन्द्रियप्रवर्तनं मोहः मिथ्याभिनिवेश एव च[७], एतानि = चिह्नानि[८], जायन्ते[९], एतैस्तमोवृद्धिं जानीयादित्यर्थः ॥ १३ ॥

**गीता**

# यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
# तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

***वि०वि०***— तद्गुणवृद्ध्यवस्थायां मृतानां गतिभेदमाह **यदा सत्व इत्यादिना** । सत्त्वे प्रवृद्धे सति, यदा यदि, देहभृत् प्रलयं मरणं याति, तदा तर्हि, उत्तमविदां सर्वोत्तमं विष्णुं जानताम्, निर्दोषान् लोकान् देहान् प्रतिपद्यते सात्त्विकदेहान् प्रविश्य ततो जायते ॥ १४ ॥

***वा०ल०***— 'तदोत्तमविदाम्' इत्यत्र, उत्तमविदाम् उत्तमज्ञानिनाम् ॥ १४ ॥

***सा०सं०***— सत्त्वादिगुणवृद्ध्यवस्थायां मृतानां गतिभेदमाह **यदेति द्वयेन** । **यदा सत्त्वे** विवृद्धे **देहभृत् प्रलयं याति** म्रियते । **तदोत्तमविदां** विष्णुज्ञानिनाम् । **अमलान्** निर्दोषान् । **लोकान्** देहान् । **प्रतिपद्यते** । सात्त्विककुले जायत इत्यर्थः ॥ १४ ॥

***अ०प्र०***— मरणसमये एवं विवृद्धानां सत्त्वादीनां फले विशेषमाह **यदेति** द्वाभ्याम् । तत्र **यदेति** ।

हे कुरुनन्दन !, सत्त्वे[१], प्रवृद्धे सति[२], यदा[३], देहभृत्[४], प्रलयं[५], याति[६], तदा[७], उत्तमविदान्[८], अमलान्[९], लोकान्[१०] प्रतिपद्यते इत्यन्वयः ।

हे कुरुनन्दन !, सत्त्वे[१], प्रवृद्धे सति[२], यदा[३], देहभृत् = जीवः[४], प्रलयं = मृत्युं[५], याति = प्राप्नोति[६], तदा[७], उत्तमविदान् = सर्वोत्तमविष्णुज्ञानिनां हिरण्यगर्भादीनां उत्तमं ज्ञानं तद्विदः उत्तम-विदः तान् उत्तमविदान्[८], अमलान् परिशुद्धान् । यद्वा, प्रकाशमयाः सुखोपभोगस्थानविशेषाः तान् तथा[९], एतादृशान्लोकान् = अत्र लोकशब्दो जनवाचकः तत्प्रामाण्यान् निर्दोषविप्रादीनां देहान् वा[११] प्रतिपद्यते = प्राप्नोतीत्यर्थः ॥ १४ ॥

गीता

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते॥ १५ ॥**

*वि०वि०*— रजसि प्रवृद्धे, प्रलयं गत्वा फलार्थं कर्म कुर्वतां कुलेषु जायते । तथा तमसि प्रवृद्धे तु प्रलीनो मूढयोनिषु श्वसूकरादिषु जायते ॥ १५ ॥

*सा०सं०*— **रजसि** प्रवृद्धे, **प्रलयं गत्वा** मृत्वा। **कर्मसङ्गिषु** काम्यकर्मिणां कुले। **जायते**। **तथा तमसि** प्रवृद्धे, **प्रलीनो** मृतः । **मूढयोनिषु** दैत्यानां कुलेषु **जायते** ॥ १५ ॥

*अ०प्र०*— किञ्च, रजसीति ।

हे कुरुनन्दन !, रजसि प्रवृद्धे सति[१], प्रलयं[२], गत्वा[३], कर्मसङ्गिषु[४], जायते[५], तथा[६], तमसि प्रवृद्धे सति[७], प्रलीनः पुरुषः[८], मूढयोनिषु[९], जायते इत्यन्वयः ।

हे कुरुनन्दन !, रजसि प्रवृद्धे सति[१], प्रलयं = मृत्युं[२], गत्वा = प्राप्य[३], कर्मसङ्गिषु = कर्मणि सङ्गः अहं कर्तेति अभिनिवेशो येषां ते कर्मसङ्गिनः । तेषु कर्मठेषु काम्यकर्मासक्तमनुष्येषु[४], जायते = उत्पद्यते[५], तथा[६], तमसि प्रवृद्धे सति[७], प्रलीनः = मृतः पुरुषः[८], मूढयोनिषु = पश्वादिषु[९], जायते = उत्पद्यते[१०] ॥ १५ ॥

गीता

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

*वि०वि०*— सात्त्विकादिकर्मणां फलमाह **कर्मण इति** । विद्वत्कुलप्रसूतेन सुष्ठुकृतस्य कर्मणः सात्त्विकं निर्मलं दुःखगन्धरहितफलमाहुः । रजसो राजसस्य कर्मणो दुःखं दुखमिश्रसुखमाहुः । 'दुःखं दुरिति सम्प्रोक्तं खं नाम सुखमुच्यते' इत्यभिधानात् । अन्यथा दुःखस्यातिकष्टत्वात्तमोऽधिकत्वं रजसो न स्यात् । तमसस्तामसस्य कर्मणः । अज्ञानं अज्ञानतत्कार्यरूपं फलमाहुः ॥१६॥

*वा०ल०*— 'कर्मणः सुकृतस्य' इत्यत्र, सुकृतस्य कर्मणः निर्मलं यत् फलं सुखं तत् सात्त्विकं सत्त्वगुणोत्पन्नम् ॥ १६ ॥

*सा०सं०*— सात्त्विकादिकर्मणां फलमाह **कर्मण** इत्यादिद्वयेन । विद्वत्कुलप्रसूतेन सुष्ठुकृतस्य **कर्मणः सात्त्विकं निर्मलं** दुःखगन्धहीनं **फलमाहुः । रजसो** राजसकर्मणः **तु दुःखं** दुःखमिश्रं सुखमाहुः । **तमसस्तु** तामसकर्मणः । **अज्ञानम्** अज्ञानकार्यं च फलमाहुः ॥ १६ ॥

*अ०प्र०*— अथ सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह **कर्मण इति** ।

हे कुरुनन्दन !, सुकृतस्य[१], कर्मणः[२], निर्मलं[३], सात्त्विकं[४], फलं[५], आहुः[६], रजसः कर्मणस्तु[७], दुःखं[८], फलं आहुः[९], तमसः कर्मणः[१०] अज्ञानं[११]फलं आहुः[१२] इत्यन्वयः ।

हे कुरुनन्दन !, सुकृतस्य = सत्त्वस्य[१], कर्मणः[२], निर्मलं = सुख-ज्ञानादिप्रकाशबहुलं[३], सात्त्विकं = सत्त्वसम्बन्धि सत्त्वप्रधानमिति वा[४], फलं = सुखं[५], आहुः = ज्ञानिनः[६], रजसः कर्मणस्तु[७], दुःखं फलं आहुः = वैषयिकसुखं च फलं संसारे सुखस्याल्पत्वात् तदनुक्तिरिति ज्ञेयम् । तदुक्तम्— 'दुःखं दुरिति सम्प्रोक्तं खं नाम सुखमुच्यते' इति वचनात् । दुःखमिश्रं सुखं दुःखशब्दार्थः । कर्मफलस्य प्रकृतत्वात् तस्य रजसः दुःखं फलमाहुः[९], तमसः कर्मणः = तामसकर्मणस्तु[१०] अज्ञानं = तज्जन्यबहुदुःखं च[११] फलमाहुः[१२], तदुक्तम्— 'अज्ञानजं तामसस्य नित्यदुःखफलं विदुः' इति वचनात् ॥ १६ ॥

**भाष्यम्**

**रजसस्तु फलं दुःखमिति । अल्पसुखं दुःखम् । तथा हि शार्कराक्ष्य-शाखायाम्— "रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात् तान् सुखिनो दुःखिन इत्याचक्षते" इति । अन्यथा दुःखस्यातिकष्टत्वात् तमोऽधिकत्वं रजसो न स्यात् ॥ १६ ॥**

*प०टी०*— 'रजसस्तु फलं दुःखम्' इत्यत्र केवलदुःखं नेत्याह **रजस इति । तान्** राजसान् ॥ १६ ॥

*प्र०दी०*— दुःखशब्दः केवलदुःखवाचीत्यन्यथाप्रतीतिनिरासायाह **रजस इति** । 'दुःखशब्देन उच्यते' इति शेषः । तत्कथम् ? इत्यत उक्तम् **अल्पेति** । अल्पत्वात् सुखस्याविवक्षेति भावः । कुतः ? इत्यत आह **तथा हीति** । 'रजसः' इति पञ्चमी । 'मात्रया' इति सुखविशेषणम् । स्तोका-त्मकं **सुखं दुःखं** चेत्यर्थः । **तान्** राजसकर्मिणः । केवलदुःखार्थाङ्गीकारे बाधकं चाह **अन्यथेति** । **अतिकष्टत्वात्** अज्ञानादपि कष्टत्वात् । तत्फलकस्य **रजसः** । तथा च 'मध्ये तिष्ठन्ति राजसाः', 'अधो गच्छन्ति तामसाः' इत्याद्ययुक्तं स्यादिति भावः ॥ १६ ॥

*भा०दी०*— **इति शेष इति** । 'रजसस्तु फलं दुःखम्' इति दुःखशब्देनाल्पसुखं दुःखमुच्यत इति योजना ध्येयेति भावः । **अज्ञानादपीति** । तमःकार्यादपि तमःकार्यादज्ञानादित्यर्थः । 'रजसः' इत्यस्य विशेषणमाह **तत्फलकस्य रजसः इति** । दुःखफलकस्येत्यर्थः । को दोष इत्यत आह **तथा चेति** ॥ १६ ॥

*भा०र०*— 'दुःखम्' इत्यनन्तरं भाष्ये शेषमाह **दुःखशब्देनेति** । भाष्ये– 'दुःखमिति' इत्यनन्तरम् 'अत्र' इति शेषो द्रष्टव्यः । 'अल्पसुखम्' इत्यत्र 'अल्पं सुखं यस्मिन् तत् अल्पसुखम्' इत्यर्थस्य स्फुटत्वात् तत्तात्पर्यमाह **अल्पत्वादिति** । 'रजसस्तु' इति प्रस्तुतत्वात् अत्रापि षष्ठ्यन्तत्वप्रतीतिव्युदासायाह **पञ्चमीति** । स्तोकात्मकम् = अल्पं सुखमेवात्र दुःखपदेन ग्राह्यमिति प्रतीतिनिरासायाह **दुःखं चेति** । पुल्लिङ्गघटनाय तच्छब्दविवक्षितार्थमाह **तान् राजसकर्मिण इति** । न केवलम् 'अल्पं सुखं च रजसः फलम्' इत्यत्र प्रमाणमुक्तम्, तदनङ्गीकारे बाधकं चेति चशब्दः । भाष्ये अपादानानुरूपं रजसो विशेषणमाह **तत्फलस्येति** । दुःखफलकस्येत्यर्थः । तमोऽधिकत्वम् = तमोगुणापेक्षयोत्तमत्वं न स्याद् इत्यत्र इष्टापत्तिमाशङ्क्याह **तथा चेति** ॥१६॥

*गीताक्षरार्थस्तु*—

'सत्त्वं रजस्तमः' इत्यादिचतुर्दशश्लोकाक्षरार्थस्तु— 'परं भूयः' इति प्रतिज्ञातं 'मम योनिर्महद् ब्रह्म' इति श्लोकद्वयेनोक्तम् । तत्र ज्ञातव्यार्थज्ञानं 'परां सिद्धिमितो गताः', 'मम साधर्म्यमागताः' इति **मोक्षसाधनमित्यभिहितम्** । मोक्षश्च संसारलक्षणाद् बन्धादिति वक्तव्यम् । अतो बन्धस्वरूपं प्रतिज्ञाय तन्निवृत्तिसाधनं अनुष्ठातव्यं मुमुक्षुणा । यो हि 'बद्धोऽस्मि' इति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य, ज्ञात्वा, अनुतिष्ठति । अतो बन्धोच्छेदसाधनानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबन्धप्रकारस्तावद् आदौ प्रदर्श्यते **सत्त्वमित्यादिना** ।

**इति गुणाः** इति संज्ञोपेताः गुणाः । 'सम्भवत्यस्याः' इति सम्पूर्वाद् भवतेः 'ऋदोरप्' इत्यप्प्रत्यये सम्भवा । प्रकृतिः सम्भवा = कारणं येषां ते **प्रकृतिसम्भवाः** । 'प्रकृतेः सम्भवः = उत्पत्तिः येषां ते' इति व्यधिकरणबहुव्रीहिरित्यपि **आहुः** । **देहे** उपचीयमाने शरीरे स्थितम् **अव्ययं** स्वरूपेण व्ययरहितमपि **देहिनं** जीवं **निबध्नन्ति** । अत्र 'देहे' इत्युक्तिः भूतपूर्वगत्या मुक्तानामपि देहित्वाद् तान् बध्नन्तीति शङ्काव्युदासायेति **स्वामिनः** । **देहे** देहादिसंसारे भवितव्ये **गुणाः** श्री-भू-दुर्गादिवीभिः नियता **देहिनां** जीवं **बध्नन्ति** आवृण्वत इत्यपि योजयन्ति ॥ ५ ॥

त्रयाणां गुणानां बन्धकत्वं विविच्य प्रदर्श्यते **तत्रेति** श्लोकत्रयेण । हे **अनघ !** श्रोतृदोष-विधुर ! इत्यर्जुनसम्बुद्धिः । **तत्र** गुणानां मध्ये **सत्त्वं** गुणः **निर्मलत्वात्** स्वच्छत्वाद् **अनामयं** न विद्यते आमयः = ज्वराद्युपद्रवो यस्मात् तत् **प्रकाशकं** ज्ञानोत्पादकम् । तत्र सूक्ष्मं सत्त्वं परमेश्वरविषयज्ञानकारणम् । स्थूलं तु लौकिकप्रकाशकारणमिति ज्ञातव्यम् । स्वकार्यभूतेन सुखस्य यः सङ्गः = सम्बन्धः तेन, **ज्ञानसङ्गेन** च । अनेन 'प्रकाशकम्' इत्यत्र प्रकाशशब्देन ज्ञानं ग्राह्यमिति भावितम् । **बध्नाति** । अत्र सत्त्वगुणाभिमानिनी श्रीदेवी देवानां ज्ञानस्य सुखस्य कारणं भवतीति विशेष उत्तरप्रस्थानोक्तः ॥ ६ ॥

**रजः** रजोगुणं **रागात्मकं** रागः = रञ्जनम्, आत्मा = रूपं यस्य तत्तथा अनुरञ्जनरूपम् । 'समुद्भवत्यस्मात्' इति समुद्भवं = कारणम् । तृष्णा नाम अप्राप्तार्थाभिलाषः । सङ्गस्तु प्राप्तार्थे 'नाहमिमं त्यक्तुमुत्सहे' इत्यासक्तिः = विषयसम्बन्धः, तयोः समुद्भवं **तृष्णासङ्गसमुद्भवं विद्धि** । **तद्** रजः स्वर्गादिसाधनकर्मसम्बन्धेन **देहिनं** जीवं **बध्नाति** । रजोगुणाभिमानिनी भूदेवी रजोगुण-कार्येण कर्मसङ्गेन मानुषी जीवबन्धिका इति विशेष उत्तरप्रस्थानाद् अवगन्तव्यः ॥ ७ ॥

सत्त्वरजोगुणाभ्यां वैलक्षण्यद्योतनाय 'तमस्तु' इति तुशब्दः । **तमः** तमोगुणः **सर्वदेहिनाम्** 'अज्ञानं जायते यतः तद्' **अज्ञानजम्** अज्ञानजनकमित्यर्थः । **मोहनं** मिथ्याज्ञानजनकं **विद्धि** । **तत्** तमः **प्रमादेन** = करणीयेष्वनवधानेन आलस्येन = मान्द्येन निद्रया च 'सर्वदेहिनः' इति विपरिणामेनानुवर्तते **निबध्नाति** । अत्रापि तमोगुणाभिमानिनी दुर्गादेवी तमोगुणकार्येण अज्ञान-मिथ्याज्ञान-प्रमादादिना असुरजनबन्धिका इति विशेष उत्तरप्रस्थानतो ज्ञेयः । तथा च तत्र वचनम् 'श्रीर्देवबन्धिका नृणां भूर्दैत्यानामथापरा' इति । श्रीः-भूः-अपरा इति सत्त्वरजस्तमोगुणाभिमानिन्यो देव्यो विवक्षिताः ॥ ८ ॥

यदुक्तं सत्त्वस्य सुखसङ्गेन, रजसः कर्मसङ्गेन, तमसः प्रमादादिसङ्गेन बन्धकत्वम्, तदेव 'सत्त्वम्' इत्यादित्रिश्लोक्योक्तं दृढीक्रियते **सत्त्वं सुख इति** । **सत्त्वं** सत्त्वगुणः **सुखे** सुखविषये **सञ्जयति** 'षञ्ज = सङ्गे' सङ्गवन्तं करोति । **रजः** रजोगुणः **कर्मणि सञ्जयति** स्वर्गादिसाधन-कर्मसङ्गवन्तं करोति । **तमस्तु ज्ञानं** मनसस्तत्त्वज्ञानजननशक्तिम् **आवृत्य** प्रतिबध्य **प्रमादे** अधर्मे धर्मबुद्ध्यादिरूपेण बद्ध्यते । उतशब्दोऽपेरर्थे निपातः । आलस्यादावपि **सञ्जयति** ॥ ९ ॥

ननु त्रयाणां गुणानां समतया बन्धकत्वाद् कथं कदाचित् कस्यचिदेव गुणस्य कार्यं दृश्यते ? उत्कटत्व-अनुत्कटत्वाभ्यां तत्तत्कार्योपलम्भ-अनुपलम्भाविति भावेनोच्यते **रज इति** । **अभिभूय**

उपमृद्य **सत्त्वं भवति** 'उत्कटम्' इति शेषः । तदा सुखलक्षणं ज्ञानलक्षणं च कार्यं दृश्यते । यदा **रजः** गुणः सत्त्वतमसी अभिभूय उल्बणं भवति, तदा कर्मसङ्गलक्षणं कार्यम् । **तमः** तु यदा सत्त्व-रजसी अभिभूय तथा स्वयं प्रकटं भवति, तदा प्रमादादिकार्यं दृश्यत इति युक्तं कादाचित्कत्वं कार्यदर्शनस्येति ॥ १० ॥

तत्तद्गुणस्योत्कटत्वं केन लिङ्गेन अनुमातव्यम् ? इत्यत उच्यते **सर्वद्वारेष्वित्यादिना** । **यदा अस्मिन्** भोगायतने प्राकृते वा **देहे सर्वद्वारेषु** श्रोत्रादीन्द्रियद्वारेषु **ज्ञानं** ज्ञानलक्षणः **प्रकाशः** शब्दादिविषयावभास उत सुखमपि **उपजायते तदा सत्त्वं विवृद्धमिति विद्यात्** जानीयात् । **केचित्तु** 'प्रकाशः = शब्दादिविषयावभास उत = अनन्तरं उत सुखमपि तदा' इत्यपि व्याचक्षते। **अन्ये तु** प्रकृष्टः काशः = दीप्तिः यस्मात् स प्रकाशः = विषयसन्निकर्षः, उत = अनन्तरं ज्ञान-मुपजायत इत्यर्थ इत्याहुः ॥ ११ ॥

**लोभः** देयस्यापि धनादेरत्यागबुद्धिः **प्रवृत्तिः** विषयव्यापारः, व्यर्थोद्योगो वा **कर्मणां** प्रवृत्तानाम् **आरम्भः** 'इदं कृतवान्', 'इदं कर्ताऽस्मि' इति सङ्कल्पानुरमः **अशमः** भगवन्निष्ठाऽभावः, चित्तस्यानुपरमो वा **स्पृहा** अप्राप्ताभिलाष इति **एतानि** कार्याणि **रजसि विवृद्धे जायन्ते** । एतैर्लिङ्गैः रजोगुणवृद्धिरनुमेयेति भावः ॥ १२ ॥

**अप्रकाशः** श्रोत्रादिषु शब्दादिविषयप्रकाशाभावः **अप्रवृत्तिः** उद्योगाभावः 'रक्षा-ऊहा-आगम-लघु-असन्देहाः प्रयोजनम्' इति महाभाष्यप्रयोगवत् 'अप्रकाशः', 'अप्रवृत्तिः' इति प्रयोगः। अन्यथा 'निर्मक्षिकम्' इतिवत् 'अप्रकाशम्' इति स्यादिति भावः । **प्रमादः** कृत्येष्वनवधानं **मोहः** मिथ्याऽध्यवसायः **हे कुरुनन्दन ! एतानि** कर्माणि **तमसि विवृद्धे जायन्ते** । एतैर्लिङ्गैस्तमोवृद्धिं जानीयाद् इत्यभिप्रायः ॥ १३ ॥

तत्तद्गुणवृद्ध्यवस्थायां परेतायां गतिभेद उच्यते **यदा सत्त्व इत्यादिना** । **देहभृद्** जीवः **प्रलयं** मरणम् **उत्तमविदां** सर्वोत्तमविष्णुज्ञानिनां **लोकान्** देहान् **प्रतिपद्यते** । सात्त्विकानां कुले सत्त्वगुणप्राकट्यानुकूलदेहयोगी जायत इति तात्पर्यम् ॥ १४ ॥

**रजसि** 'प्रवृद्धे' इति च वर्तते । **प्रलयं गत्वा** मृत्वा **कर्मसङ्गिषु** काम्यकर्मसङ्गवत्सु स्वर्गाद्युद्देश्यककर्मानुष्ठातृकुले **जायते** । तथाशब्दः समुच्चये । **तमसि** प्रवृद्धे **प्रलीनः** मृतः **मूढयोनिषु** मिथ्याज्ञानिकुले **जायते** ॥ १५ ॥

सत्त्वादीनां स्वस्वोत्पादितकर्मद्वारा विविधफले हेतुत्वमुच्यते **कर्मण इति** । सात्त्विकानां विदुषां कुलेषु प्रसूतेन पुरुषेण सुष्ठु कृतस्य **कर्मणः निर्मलं** दुःखासम्भिन्नं **सात्त्विकं** सत्त्वप्रधानं ज्ञानसुखरूपं **फलम् आहुः** प्राज्ञाः । **रजसः** राजसस्य तु कर्मणः **दुःखं** दुःखमिश्रं सुखं फलमाहुः। **तमसः** तामसस्य तु कर्मणः **अज्ञानं फलम्** आहुः ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

**"योनिर्भार्या तथा स्थानं योनिः कारणमेव च ॥"**

**—इति शब्दनिर्णये ।**

*प्रका०*— **तथा स्थानमिति** । गुह्यस्थानमित्यर्थः ॥

*न्या०दी०*— "परं भूयः प्रवक्ष्यामि" इति प्रतिज्ञातमुच्यते **"मम योनिः"** इति । तत्र योनिशब्दस्य कारणार्थत्वप्रतीतिनिरासाय भार्याद्यर्थत्वे प्रमाणमाह **योनिरिति** ॥ **स्थानं** गुह्यस्थानम् । अस्त्वेवं योनिशब्दो भार्याद्यनेकार्थः ।

**गीतातात्पर्यनिर्णयः**

**अत्र योनिर्भार्या । "तस्मिन् गर्भं दधाम्यहम्" इति वाक्यशेषात् ॥ ३-१५ ॥**

*प्रका०*— "क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धी"ति यदुक्तं तदिदं स्पष्टयते **मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्** इत्यनेन ।

*न्या०दी०*— प्रकृतः किमर्थ इत्यत आह **अत्रेति** ॥ योनिशब्दस्यानेकार्थत्वात् । कथमयमेवार्थ इत्यत आह **तस्मिन्निति** ॥

**गीता**

**सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥**

*वि०वि०*— निर्मलत्वादि फलं किमित्यत आह **सत्वादिति**। सत्वात् ज्ञानं परमात्मविषयम्। रजसः लोभः स्वर्गादिविषयासक्तिः । तमसः प्रमादमोहौ भवतः । अज्ञानं च भवति ॥ १७ ॥

***सा०सं०***— निर्मलत्वादिफलं च किमित्यतो विविच्याह **सत्त्वमित्यादिना** । **ज्ञानं** परापर-तत्त्वविषयम् । **लोभः** स्वर्गादिविषयासक्तिः । **भवत एवेत्यन्वयः** । **अज्ञानं च** भवतीत्यर्थः ॥ ॥ १७ ॥

***अ०प्र०***— ज्ञानं[२], सत्त्वात्[१], सञ्जायते[३], लोभ एव[४], रजसः सञ्जायते[५], तसमः[६], प्रमादमोहौ[७], भवतः[८], अज्ञानमेव च भवति इत्यन्वयः ।

सात्त्विकादिलक्षणं च नियतं सङ्गरहितं इत्यादिनाऽष्टादशे वक्ष्यति । तत्र हेतुमाह **सत्त्वा-दिति** । सत्त्वात् ज्ञानं सञ्जायते । अतो सात्त्विकस्य कर्मणः ज्ञानद्वारा प्रकाशबहुलं सुखं भवति[३], रजसः लोभ एव सञ्जायते = अतो लोभपूर्वकराजसकर्मणः सुखदुःखरूपं मिश्रफलं भवति[५], तमसस्तु[६], प्रमादमोहौ भवतः[८], अज्ञानमेव च भवति । अज्ञानमेव चकारेण प्रमाद-मोहादीनि भवन्तीत्यर्थः ॥ १७ ॥

**गीता**

# ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
# जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

***वि०वि०***— एतत् साक्षात् फलं न । ज्ञानादीनां स्वरूपेणाफलत्वात् । तेषामपि फलमाह **ऊर्ध्वमिति** । सत्त्वस्थाः सत्त्वशीलाः । ज्ञानेनोर्ध्वं जनादिलोकं गच्छन्ति । राजसाः काम्यकर्माणो मध्ये स्वर्गादौ तिष्ठन्ति । जघन्यो नीचो गुणस्तमः, तस्य वृत्तमज्ञानादि, तत्स्थास्तमःशीलाः । अधो निरयं गच्छन्ति ॥ १८ ॥

***सा०सं०***— ज्ञानलोभप्रमादादेः सत्त्वादिगुणेभ्यः साक्षाज्जन्यत्वेऽपि तस्य स्वरूपतोऽफल-त्वात् तज्जन्यफलान्याह **ऊर्ध्वमिति** । **सत्त्वस्थाः** सात्विकाः । ज्ञानेन **ऊर्ध्वं** जन आदिलोकं **गच्छन्ति** । **राजसाः** काम्यकर्मिणः । **मध्ये** स्वर्गादौ **तिष्ठन्ति** । जघन्यगुणः तमः, तद्वृत्तिः तत्परिणामाज्ञानम्, तन्निष्ठास्तद्वन्त इत्यर्थः । **अधो** निरयं **गच्छन्ति** ॥ १८ ॥

***अ०प्र०***— इदानीं सत्त्वादिस्वभावशीलानां जीवानां फलभेदमाह **ऊर्ध्वमिति** ।

अथान्वयः— हे कुरुनन्दन !, सत्त्वस्थाः = सत्त्ववृत्तिप्रधानाः पुरुषाः[१], ऊर्ध्वं = सत्त्वो-त्कर्षतारतम्यादुत्तरोत्तरं शतगुणानन्दात् मनुष्यगन्धर्वपितृदेवादिसत्यलोकपर्यन्तान् ज्ञानेन ऊर्ध्व-

लोकं[२], गच्छन्ति = प्राप्नुवन्तीत्यर्थः[३], राजसाः = लोभादिमन्तो राजसाः[४], मध्ये तिष्ठन्ति = मनुष्यलोक एव उत्पद्यन्ते[५], जघन्यगुणवृत्तिस्थाः = जघन्यो अवरः निकृष्टस्तमोगुणः तस्य वृत्तं प्रमादमोहादि । तत्र स्थिताः । यद्वा, काम्यकर्मणः यत् भूनिरयरूपं मध्ये नीचस्य तमोगुणस्य वृत्तिं अज्ञानादिकं आस्थिताः[७], तामसाः[८], अधो गच्छन्ति = अधो नित्यनरकादिकं पश्वादियोनिं प्राप्नुवन्तीति शब्दार्थः[९], अत्रापि तमोवृत्तितारतम्यात् नित्यनिरयेऽपि तारतम्यं ज्ञेयम् ॥ १८ ॥

**गीता**

## ना(ऽ)न्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
## गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

***वि०वि०***— त्रयो गुणाः विविच्योक्ताः । तेषां जगद्बन्धने हेतुत्वं चोक्तम् । ततश्च तेषामेव स्वातन्त्र्यम्, न तु ततोऽन्यः स्वतन्त्रः कश्चिदिति शङ्का स्यात्, तां निराकरोति **नान्यमिति** । द्रष्टा जीवो यदा गुणेभ्यः अन्यं कर्तारं परिणामिनं नानुपश्यति, गुणेभ्यश्चापरं स्वतन्त्रं परमात्मानं वेत्ति, सः मयि भावमधिगच्छति ।

अथवा, एतेभ्यः सत्त्वादिगुणेभ्योऽन्यं कर्तारमीशं यदा पश्यति तदैवायं ना पुरुषः । अन्यथा पशुसमः । न केवलं कर्तारं विष्णुमन्यत्वेन पश्यन् पुरुषः; किन्तु, गुणेभ्यः परम् उत्तमत्त्वेन च । कथं स एव पुमान् यस्मान्मद्भावं सोऽधिगच्छति । उक्तं च— 'एताभ्योऽन्यं परं चैव विष्णुं ज्ञात्वा विमुच्यते । सामर्थ्यातिशयादासां नैताभ्यो विद्यते परः ॥ इति यावद्विजानाति तावत्तं नृपशुं विदुः । तस्मादाभ्योऽधिकगुणो विष्णुर्ज्ञेयः सदैव च ॥' इति ॥ १९ ॥

***वा०ल०***— 'नान्यं गुणेभ्यः' इत्यत्र, गुणेभ्यः अन्यम् उक्तविधया सत्त्वादिगुणेभ्यो भिन्नं नारायणम्, कर्तारं स्वस्य सुखदुःखकर्तारम्, द्रष्टा जीवः, यदाऽनुपश्यति, जीवस्वभावभूतसत्त्वादि-गुणा एव जीवान् सुखयन्ति दुःखयन्ति च। तस्माज्जीवस्यैवायमपराधो न हरेरिति यः पश्यतीत्यर्थः। तं नारायणं गुणेभ्यः परं उत्तमं, सत्त्वादिगुणविधुरमित्यर्थः । मद्भावं मयि भक्तिम् ॥ १९ ॥

***सा०सं०***— एवं त्रयो गुणा विविच्योक्ताः । तेषां जगद्बन्धकत्वं तेभ्यः साक्षात् परम्परया च जन्यफलानि चोक्तानि । एवं त्रैगुण्यस्य 'कार्यते ह्यवशः' (३-५) इत्यत्र सङ्क्षेपेणोक्तस्येह विविच्य कीर्तने कृते सति, तर्हि गुणा एव सर्वोत्तमाः न तु ततोऽन्यः सर्वोत्तमोऽस्तीति शङ्का स्यात्, तां निराकरोति **नान्यमिति** । **द्रष्टा** जीवः । **यदा गुणेभ्योऽन्यं कर्तारं** परिणामिकर्तारं **नानुपश्यति** ।

**गुणेभ्यश्च परं** स्वतन्त्रम्। परमात्मानं **वेत्ति** । **स** ज्ञानी । **मद्भावं** ज्ञानानन्दात्मिकां मयि स्थितिम्। **अधिगच्छति** प्राप्नोति ।

यद्वा, एतेभ्यो **गुणेभ्यो अन्यं कर्तारम्** ईशं **यदा** अनुपश्यति तदा **द्रष्टैव ना** । नृशब्दोऽयम्, पुरुषः, अन्यथा पशुः । न केवलं गुणेभ्योऽन्यत्वेन कर्तारं पश्यन् ना पुरुषः, किन्तु गुणेभ्यः परमुत्तमम् उत्तमत्वेनापि पश्यन् पुरुषः । कुतः ? स एवं पश्यन् यस्मात् **मद्भावं अधिगच्छति**। अत इति ॥ १९ ॥

***अ०प्र०***— तमोवृत्तिं गुणसङ्गकृतं संसारं सप्रपञ्चमुक्त्वा इदानीं तद्विवेकतो तेषां विष्णवर्थेन तज्ज्ञानेन मोक्षो भवतीत्याह **नान्यमिति** ।

यदा[१], द्रष्टा[२], गुणेभ्यः[३], अन्यं[४], कर्तारं[५], न = नास्तीति[६], अनुपश्यति[७], किञ्च, मां गुणेभ्यश्च[८], परं[९], वेत्ति[१०] सः[११] मद्भावं[१२], अधिगच्छति[१३] ॥

द्रष्टा = विवेकी जीवः[१], यदा[२], गुणेभ्यः[३], अन्यं = सत्त्वादिगुणेभ्योऽन्यं[४], कर्तारं = परिणामकर्तारं विष्णुं[५], न = विष्णुं विना नास्तीति[६], अनुपश्यति[७], तदैवाऽयं पुरुषः । अन्यथा पशुसमः । न केवलकर्तारं विष्णुं अन्यत्वेन पश्यन् स पुरुषः, किञ्च मां गुणेभ्यश्च[८], परं = व्यतिरिक्तं स्वतन्त्रं उत्तमं च[९], यो वेत्ति[१०] सः = पुरुषः कथं[११] यतो मद्भावं = दास्यत्वं[१२], अधिगच्छति = प्राप्नोति[१३], तदुक्तम्— एताभ्योऽन्यं परं चैव विष्णुं ज्ञात्वा विमुच्यते । सामर्थ्यातिशयादासां नैताभ्यो विद्यते परः ॥ इति यावद्विजानाति तावत्तं नृपशुं विदुः । तस्मादाभ्योऽधिकगुणो विष्णुर्ज्ञेयः सदैव च ॥ इति॥ १९ ॥

**भाष्यम्**

**परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा "यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥" इति श्रुतिविरोधः । "नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः ॥" इति मोक्षधर्मे ॥ १९ ॥**

***प०टी०***— 'नान्यं गुणेभ्यः' इत्यत्र अनीश्वरकर्तृवादो निराक्रियते श्रुत्यादिविरोधादित्याह **परिणामीति** ॥ १९ ॥

***प्र०दी०***— 'नान्यं गुणेभ्यः कर्तारम्' इति स्वतन्त्रकर्तृत्वं गुणानामेव नान्यस्येत्युच्यते इत्यपव्याख्याननिरासार्थमाह **परिणामीति** । कुत एतत् ? इत्यत आह **अन्यथेति** । गुणेभ्योऽन्यस्य कर्तृत्वाभावे । **मोक्षधर्मे** 'परमेश्वरस्य कर्तृत्वमुक्तं तद्विरोधश्च' इति वाक्यशेषः ॥ १९ ॥

*भा०र०*— *गीताक्षरार्थस्तु*—

सत्त्वादिगुणफलं शृङ्गिग्राहिकया प्रदर्श्यते **सत्त्वादिति** । स्थूलाल्लौकिकम्, सूक्ष्मात् परमेश्वर-विषयं **ज्ञानं** सम्यग् जायते । **लोभः** स्वर्गादिविषयासक्तिः तदा दुःखमिश्रं सुखं च । **तमसस्तु प्रमादमोहौ** भवतः, **अज्ञानं** च भवति ॥ १७ ॥

ज्ञानलोभप्रमादादि न स्वरूपतः फलम्, सुखादिरूपत्वाभावात्, इत्यतः तज्जन्यफलानि विविच्यन्ते **ऊर्ध्वमिति** । **सत्त्वस्थाः** सात्त्विकाः, अनेन सत्त्वगुणजन्यज्ञानवन्तो लक्ष्यन्ते । **ऊर्ध्वं** जनलोकादिकं **गच्छन्ति** । तेन महत्सुखमनुभवन्ति च । **राजसाः** काम्यकर्मिणः **मध्ये** स्वर्गादौ **तिष्ठन्ति** । किञ्च दुःखमिश्रं सुखमनुभवन्ति च । जघन्यः = चरमो गुणः तमः, तद्वृत्तिः = तत्परिमाणरूपम् अज्ञानम्, तत्स्थाः = तद्वन्तः तमोगुणकार्यप्रमादमोहवन्तः **तामसाः अधः** अधोलोकं = निरयं **गच्छन्ति** ॥ १८ ॥

'अन्यथा' इत्यस्यार्थमाह **गुणेभ्योऽन्यस्य कर्तृत्वाभाव इति** । भाष्यपदमनूद्यानन्तरं शेषमाह **मोक्षधर्म इति** । 'विरोधः' इति भाष्यपदं 'मोक्षधर्मे' इत्यनेनान्वितम् इत्यनुवर्तितम् ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**एतेभ्यः सत्त्वादिगुणेभ्योऽन्यं कर्तारमीशं यदा पश्यति तदैवायं ना पुरुषः । अन्यथा पशुसमः । न केवलमन्यत्वेन पश्यन् ना, तं कर्तारं विष्णुम् । किन्तु गुणेभ्य उत्तमत्वेन च । कथं स एव ना ? यस्मात् "मद्भावं सोऽधिगच्छति" ॥**

*प्रका०*— "नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति" इत्येतदीश्वरकर्तृत्वाविरोधेन योजयति **एतेभ्य इत्यादिना** ॥

*न्या०दी०*— त्रैगुण्ये विविच्योक्ते सति तर्हि गुणा एव सर्वोत्तमाः, न तु ततोऽन्यः सर्वोत्तम इति शङ्का स्यात् । सा निराक्रियते 'नान्यमि'ति । अत्र गुणानामेव कर्तृत्वं, नेश्वरस्येत्यन्यथाप्रतीतिनिरासायाह **एतेभ्य इति** ॥ अज्ञस्यापि पुरुषत्वात् को विशेषो ज्ञानिन इत्यत आह **अन्यथेति** ॥ एवं योजनायां "मद्भावं सोऽधिगच्छति" इति व्यर्थं स्यात् । वाक्यस्य तद्विनैव समाप्तत्वादित्यतः तत्सार्थक्यं दर्शयति **कथमिति** ॥ भगवति भावप्राप्तियोग्यस्यैव पुरुषत्वं "पुरुषत्वे वा विस्तरादात्मा" इत्यादिश्रुतिसिद्धम् ।

***भा०दी०***— गीतावाक्यमवतारयति **त्रैगुण्य इति** ॥ **इत्यादिश्रुतिसिद्धमिति** । ऐतरेयश्रुतौ सामपरमात्मा पुरुष एव अतिशयेन आविर्भवतीत्युक्त्या योग्यस्यैव पुरुषत्वमित्येतत्सिद्धमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"महालक्ष्मीरिति परा भार्या नारायणस्य या ।**
**प्रकृतिर्नाम सा ज्ञेया प्रकर्षेण करोति यत् ॥**
**तस्यास्तु त्रीणि रूपाणि सत्त्वं नाम रजस्तमः ।**
**सृष्टिकाले विभज्यन्ते सत्त्वं श्रीः सद्गुणप्रभा ॥**
**रजो रञ्जनकर्तृत्वाद् भूः सा सृष्टिकरी यतः ।**
**यदावेशादियं पृथ्वी भूमिरित्येव कथ्यते ॥**
**जीवानां ग्लपनाद् दुर्गा तम इत्येव कीर्तिता ।**
**एताभिस्तिसृभिर्जीवाः सर्वे बद्धा अमुक्तिगाः ॥**

***प्रका०***— "सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिन-मव्ययमि"त्यादेरर्थमाह **महालक्ष्मीरित्यादिना** । सद्गुणात् सद्रूपत्वात् सत्त्वं श्रीः । इयं पृथिवी देवतेत्युच्यते तमुग्लापन इति धातुः ॥

***न्या०दी०***— **प्रतीत एवार्थः किं न स्यादित्यतो "मम योनिः" इत्यादि स्मृत्यैव व्याचष्टे महालक्ष्मीरिति ॥ परा षड्भ्योऽधिका । सद्गुणत्वात् सत्, त्विष दीप्ताविति धातोः प्रभारूपत्वात् त्वमिति सत्त्वमित्यर्थः । सृष्ट्या हि रञ्जनं भवति । किमियं प्रसिद्धा पृथिवी-देवताऽसावित्यत आह यदिति ॥ तमु ग्लपन इति धातुः । ग्लपनं संसारेण ग्लानि-दानम् । अमुक्तिगा इत्यनेन "देहे देहिनं" इत्यस्यार्थ उक्तो भवति ।**

***भा०दी०***— **परेत्यनुवादः** । **षड्भ्योऽधिकेति** व्याख्या । **सद्गुणत्वात्सदिति** । "सद्भावे साधुभावे च सदित्येतत् प्रयुज्यत" इत्युक्तेरिति भावः ॥ **इति धातुरिति** । असुन्प्रत्यये तम इति रूपमिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**सर्वान् बध्नन्ति सर्वांश्च तथाऽपि तु विशेषतः ।**
**श्रीर्देवबन्धिका नृणां भूर्दैत्यानां तथा परा ॥**

एताभ्योऽन्यं परं चैव विष्णुं ज्ञात्वा विमुच्यते ।
सामर्थ्यातिशयादासां नैताभ्यो विद्यते परः ॥
इति यावद् विजानाति तावत् तं नृपशुं विदुः ।
तस्मादाभ्योऽधिकगुणो विष्णुर्ज्ञेयः सदैव च ॥"

—इति महाविष्णुपुराणे ॥ १६-१९ ॥

*न्या०दी०*— केषां का बन्धिकेत्यत आह **सर्वानिति** ॥ अनेन तत्र सत्त्वमित्यादिना तारतम्येनोक्तबन्धत्रैविध्यस्य विषयः प्रदर्शितो भवति । एवमेतासां सर्वबन्धकत्वेनातिसामर्थ्यात् सर्वोत्तमत्वमिति न मन्तव्यमित्याह **एताभ्य इति** ॥ विष्णुं सर्वोत्तमत्वेन जानन्नेव यतो विमुच्यते अतः स एव पुरुषः । अतो नैताभ्यो विद्यते पर इति जानन् नृपशुरित्यर्थः ॥

**गीता**

## गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
## जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

*वि०वि०*— एवं सुखदुःखादिबन्धनस्य गुणत्रयनिबन्धनत्वात् तदत्यये सत्येव बन्धहानिर्नान्यथेत्याह **गुणानिति** । देही देहसमुद्भवान् । तत्तद्गुणपरिणामदेहेषु तथा तथा प्रकाशीभूतान् एतान् त्रीन् गुणानतीत्य । जन्मादिभिः विमुक्तोऽमृतं परं ब्रह्म अश्नुते ॥ २० ॥

*वा०ल०*— 'गुणानेतान्' इत्यत्र, अतीत्य हरेरनुग्रहादतीत्य ॥ २० ॥

*सा०सं०*— एवं सुखदुःखादिरूपबन्धस्य गुणत्रयनिबन्धनत्वात् तदत्यये सत्येव बन्धहानिर्नान्यथेत्याह **गुणानिति** । तत्तद्गुणपरिणामिदेहेषु प्रकटीभूतान् **त्रीन् गुणानतीत्यैव** जन्मादिभि**र्विमुक्तोऽमृतमश्नुते** । परंब्रह्म प्राप्नोति ॥ २० ॥

*अ०प्र०*— एवं सर्वानर्थस्य त्रिगुणहेतुत्वात् तन्निवृत्त्या तन्निवृत्तिर्भवति । ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतार्थो भवतीत्याह **गुणानेतानिति** ।

अथान्वयः— देही[१], देहसमुद्भवान्[२], एतान्[३], त्रीन्[४], गुणान्[५], अतीत्य[६], जन्ममृत्युजरादुःखैः[७], विमुक्तः सन्[८], अमृतं[९], अश्नुते इत्यन्वयः ।

देही = देहमस्यास्तीति देही जीवः[१], देहसमुद्भवान् = देहात्समुद्भवो कार्यं परिणामो येषां ते तथोक्ताः[२], एतान् = पूर्वोक्तान्[३], त्रीन्[४], गुणान्[५], अतीत्य = अतिक्रम्य[६], जन्ममृत्युजरादुःखैः = जन्म च मृत्युश्च जरा च दुःखं च तानि जन्ममृत्युजरादुःखानि । तैः तथा तत्कृतैर्जन्मादिभिः[७], विमुक्तः सन् = विशेषेण मुक्तः सन् । यद्वा, सन्त्यक्तः[८], अमृतं = परमानन्दरूपं मोक्षं[९], अश्नुते = गच्छति[१०] ॥ २० ॥

**गीता**

**अर्जुन उवाच—**

**कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥**

***वि०वि०***— गुणातीत एव मुच्यते इत्युक्ते, गुणातीतः कैर्लिङ्गैर्युक्तो भवति, कीदृशाचारवान्, केनोपायेन गुणानत्येतीति पृच्छन् अर्जुन उवाच ॥ २१ ॥

***सा०सं०***— गुणानतीत्येत्युक्ते सति पृच्छति **कैरिति** । **एतान्** सर्वबन्धकान् सत्त्वादि-**गुणानतीतो**ऽतिक्रान्तः **पुमान् कैर्लिङ्गै**र्लक्षणैर्युक्तो भवति । हे **प्रभो किमाचारः** कीदृशाचार-वान् । **कथं केनोपायेनैतान् त्रीन् गुणानतिवर्तते** ॥ २१ ॥

***अ०प्र०***— गुणानतीत्यामृतत्वमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणं सदाचारं गुणात्ययोपायं च सम्यक् बुभुत्सया अर्जुन उवाच **कैरिति** ।

अर्जुनः प्रश्नं करोति हे प्रभो ![१], कैः[२], लिङ्गैः[३], एतान्[४], त्रीन्[५], गुणान्[६], अतीतो भवति[८], किं आचारः[१०] कथं[११] एतान्[१२], त्रीन्[१३], गुणान्[१४], अतिवर्तते इत्यन्वयः ।

हे प्रभो !, कैर्लिङ्गैः = कीदृशैरात्मन्युत्पन्नैश्चिह्नैः[३], एतान् = पूर्वोक्तान्[४], त्रीन् गुणान् = सत्त्वरजस्तमेतिनामकगुणान्[५-६], देही अतीतो भवति[८], किमाचारः = किं आचारो अस्येति तथा कथं वर्तेत इत्यर्थः[१०] कथं = केनोपायेन[११] एतान्[१२], त्रीन्[१३], गुणान्[१४], अतिवर्तते = अतीत्य वर्तते[१५], तत्सर्वं कथय इत्यर्थः ॥ २५ ॥

**गीतातात्पर्यनिर्णयः**

"रजसस्तु फलं दुःखम्" इत्यत्र दुःखमिति दुःखमिश्रं सुखम् ।

"दुःखं दुरिति सम्प्रोक्तं खं नाम सुखमुच्यते ॥"

—इति शब्दनिर्णये ।

*प्रका०*— "रजसस्तु फलं दुःखम् अज्ञानं तमसः फलमि"त्यस्यार्थमाह **रजस** इत्यादिना ।

*न्या०दी०*— "रजसस्तु फलं दुःखम्" इत्यत्र दुःखशब्दः केवलदुःखार्थ इत्यन्यथा-प्रतीतिनिरासायाह **रजस इति** ॥ दुःखशब्दः कथं दुःखमिश्रसुखवाचीत्यत आह **दुःख-मिति** ॥

**गीतातात्पर्यनिर्णयः**

"कर्मणो राजसस्योक्तं दुःखमिश्रं सुखं फलम् ।
अज्ञानजं तामसस्य नित्यदुःखं फलं विदुः ॥"

—इति स्कान्दे ॥ २०-२१ ॥

*न्या०दी०*— अत्र केवलदुःखवाची किं न स्यादित्यतो रजसो मिश्रफलत्वे स्मृति-माह **कर्मण इति** ॥ अज्ञानजमित्यनेन अज्ञानमिति व्याख्यातं भवति । तेन केवलदुःखस्य तमःफलत्वोक्तिश्चार्थान्तरे बाधिकेति सूचितं भवति ॥

*भा०दी०*— अर्थान्तर इति । रजसः केवलदुःखफलकत्वरूपार्थान्तर इत्यर्थः । यद्वा तमसो ज्ञानमात्रफलकत्वरूपार्थान्तर इत्यर्थः ॥

**गीता**

**श्रीभगवानुवाच—**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

*वि०वि०*— कैरिति जानताऽप्यर्जुनेन विशेषजिज्ञासया पृष्टं लक्षणादिकं भगवानुवाच **प्रकाशमित्यादिना** । प्रकाशं ज्ञानम् । प्रवृत्तिं उद्योगम् । मोहं अज्ञानम् । सत्त्वादिकार्याणि प्रकाशादीनि स्वयं प्राप्तानि । दुःखबुद्ध्या न द्वेष्टि । निवृत्तानि च सुखबुद्ध्या न काङ्क्षतीत्यर्थः ।

अत्रायं विभागः— सत्वादयो गुणाः द्विविधाः— स्थूलाः सूक्ष्माश्च । तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते । सूक्ष्मेभ्यस्तु परमात्मविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे प्रायो न स्तः । न तु सर्वथा प्रारब्धवशात् कदाचित् सम्भवतः । द्वितीयेषु काङ्क्षादिकं विद्यत एवेति । तथा च श्रुतिः– 'रजस्तमः सत्त्वगुणान् प्रवृत्तान् प्रायो न च द्वेष्टि न चापि काङ्क्षेत्। तथापि सूक्ष्मं सत्त्वगुणं च काङ्क्षेत् यदि प्रविष्टं सुतमश्च जह्यात् ॥' इति । अथवा, पुरुषान्तरे स्थितं प्रकाशादि साधु न द्वेष्टि । तत्र मोहादि साधु नेच्छतीत्यर्थः ॥ २२ ॥

*वा०ल०*— 'न द्वेष्टि सम्प्रवृत्तानि' इत्यत्र, सम्प्रवृत्तानि यदृच्छया प्रवृत्तानि, एतानि प्रकाशादीनि न द्वेष्टि, न काङ्क्षति ॥ २२ ॥

*सा०सं०*— इति पृष्टो भगवान् उत्तरमाह **प्रकाशं** चेत्यादिना । सत्त्वादयो गुणा हि द्विविधाः, स्थूलाः सूक्ष्माश्च । स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येभ्यः सत्त्वादिगुणेभ्यः क्रमाज्जातं **प्रकाशं प्रवृत्ति**शब्दितमुद्योगं मोहशब्दितमज्ञानं चेत्येतानि **सम्प्रवृत्तानि** प्रायो **न द्वेष्टि । निवृत्तानि च न काङ्क्षति** । गुणातीत इत्यनुषज्यते । द्वितीये तु विष्णुविषयप्रकाशं प्रवृत्तिं चेच्छति मोहं च द्वेष्टीत्यर्थः । यद्वा, पुरुषान्तरे स्थितप्रकाशादिसाधुगुणजातानि **सम्प्रवृत्तानि न द्वेष्टि** । मोहाद्यसाधुधर्मजातं **निवृत्तं न काङ्क्षती**त्यर्थः । परस्येष्टानिष्टहानिप्राप्ती नेच्छति गुणातीत इति भावः ॥ २२ ॥

*अ०प्र०*— 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशवे'त्यादिना द्वितीयाध्याये पृष्टमपि दत्तोत्तरमपि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण तस्य लक्षणादिकं **श्रीभगवानुवाच प्रकाशं चेत्यादि** षड्भिः । तत्रादौ **प्रकाशं चेति** ।

हे पाण्डव ![१], प्रकाशं च[२], प्रवृत्तिं च[३], मोहमेव च एतानि त्रीणि[४], सम्प्रवृत्तानि सति[५], न द्वेष्टि[६], तथा निवृत्तानि सति[७], न काङ्क्षति यः[८], सः गुणातीत उच्यते इति चतुर्थेनान्वयः ।

प्रकाशं च = 'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते' इति पूर्वोक्तं सत्त्वं कार्यं[२], प्रवृत्तिं च = प्रवृत्तिं रजःकार्यम्, उपलक्षणमेतत्[३], मोहमेव च = मोहो नाम तमः तत्कार्यम्, उपलक्षणमेतत्[४], एतानि त्रीणीत्युक्ते सत्त्वरजस्तमेत्यादिगुणत्रयाणां सर्वाणि कार्याणि यथायथं सम्प्रवृत्तानि सति स्वतःप्राप्तानि सति[७], न काङ्क्षति = सुखबुद्ध्या न काङ्क्षति[८], एतादृशो यः सः गुणातीत उच्यते इति चतुर्थेनान्वयः॥ २२ ॥

### भाष्यम्

**प्रायो न द्वेष्टि न काङ्क्षति । तथाहि सामवेदे भाल्लवेयशाखायाम्— "रजस्तमः सत्त्वगुणान् प्रवृत्तान् प्रायो न च द्वेष्टि न चापि काङ्क्षेत् । तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद् यदि प्रविष्टं सुतमश्च जह्यात्" इति । "न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम । हीनाः सूक्ष्मेण सत्त्वेन ततो वैकारिका मताः । कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम्" इति हि मोक्षधर्मे । "सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः" इति च ॥ २२ ॥**

*प०टी०*— प्रकाशं च प्रवृत्तिं च मोहं च न द्वेष्टि न काङ्क्षतीत्येतत्प्रायिकमेवेत्याह **प्राय इति** । प्रकाशादिशब्दत्रयोक्तगुणत्रयं प्रवृत्तिं च निवृत्तिं चेश्वरेच्छयैव हि प्रत्येति नेच्छति, **द्वेष्टि** यद्यपि । तत्रापि शुद्धसत्त्वं काङ्क्षति, तस्मात् तद्यदि स्वस्मिन् प्रविष्टं तर्ह्यज्ञाननाशकं भवतीत्यर्थः । **सत्त्वं काङ्क्षेद्यदि तमो**ऽस्ति तज्जहाति चेति वा । सूक्ष्मसत्त्वाभावे ज्ञानमोक्षाभावात् तदिच्छाऽस्तीत्याह **न हीति** । यदि सत्त्वेन सूक्ष्मेण हीनास्तर्हि न सत्त्वस्थाः । किन्तु वैकारिका मताः ॥ २२ ॥

*प्र०दी०*— " 'प्रकाशं च प्रवृत्तिं च' इत्यनेन गुणातीतस्य सर्वथा सत्त्वादिगुणकार्येषु प्रकाशादिषु द्वेषाकाङ्क्षे न स्त इत्युच्यते" इत्यन्यथाप्रतीतिनिरासार्थमाह **प्राय इति** । इदमुक्तं भवति— सत्त्वादयो गुणाः द्विविधाः स्थूलाः सूक्ष्माश्च । तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्ति-मोहाः जायन्ते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे प्रायो न स्तः । न तु सर्वथा प्रारब्धवशात् कदाचित् सम्भवात् । द्वितीयेषु त्वाकाङ्क्षादिकं विद्यत एवेति । कुत एतत् ? इत्यत आह **तथा हीति** । यद्यपि 'न द्वेष्टि' इत्यादिकमुक्तम् । तथाऽपि यदि **सुतमः** सूक्ष्मं तमः **दैववशात् तं** प्रविष्टं स्यात् । तदाऽसौ तत् **जह्यात्** द्विष्यात् । गुणातीतानां च सूक्ष्मसत्त्व-सद्भावे भारतवाक्यं च पठति । **न हीति** । यदि **देवा ऋषयश्च सूक्ष्मेण सत्त्वेन हीनाः स्युः**, तदा सत्त्वस्था इति नोच्येरन् । किं तु **ततः** तदा **वैकारिकाः मताः** प्रसज्येरन् । ततः किं **कथं वैकारिको गच्छेत् पुरुषोत्तमम् ?** तेषां मोक्षो न स्यादिति यावत् । अस्ति च तेषां मोक्षः । अतः सूक्ष्म-सत्त्ववन्त एव ते इत्यर्थः । **सात्त्विकः** सूक्ष्मसत्त्ववान् । 'स सूक्ष्मसत्त्वसंयुक्तः संयुक्तस्त्रिभिरक्षरैः । पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः' इति सूक्ष्मसत्त्वप्रकरणात् । **मोक्षार्थनिश्चितः** मोक्षलक्षणे पुरुषार्थे निश्चितः ॥ २२ ॥

*भा०दी०*— वक्ष्यमाणश्रुत्यनुरोधादाह **इदमुक्तं भवतीति**। 'सूक्ष्मसत्त्ववान्' इत्यर्थे ज्ञापकमाह **स सूक्ष्मेति**। **त्रिभिरक्षरैः** प्रणवाक्षरैः ॥ २२ ॥

*भा०र०*— ननु गुणातीतस्यापि ईश्वरविषयप्रकाशप्रवृत्तिमोहेषु द्वेषाकाङ्क्षे नियमेन युक्ते एव, तत्कथं 'प्रायो न द्वेष्टि न काङ्क्षति' इति भाष्यम्? कथं चैतत्साक्षिभूतप्रमाणे 'सत्त्वगुणं नाकाङ्क्षेत्', 'सत्त्वगुणं च काङ्क्षेत्' इति व्याहतभाषणम्? इत्यतो भाष्यप्रमाणतात्पर्यं प्रमाणोपात्तसूक्ष्मशब्दस्वारस्यानुसारेणाह **इदमुक्तं भवतीति**। 'सूक्ष्माश्च' इत्यनन्तरम् 'इति'शब्दोऽध्याहार्यः। **लौकिकाः** लौकिकार्थविषयाः 'यथासङ्ख्यम्' इति शेषः। **परमेश्वरादिविषयाः** परमेश्वर-परमेश्वरी-ब्रह्मादितत्त्वदेवादिविषयाः। प्रायःपदव्यावर्त्यमाह **न त्विति**। **द्वितीयेषु** परमेश्वरविषयेषु प्रकाश-प्रवृत्ति-मोहेषु। **विद्यत एवेतीति**। पारमेश्वरे प्रकाशादावाकाङ्क्षादिनियमो युक्त एव। लौकिकविषये प्रकाशादौ प्राय आकाङ्क्षाद्यभावो गुणातीतस्य इति युक्तम् 'प्रायो न द्वेष्टि न काङ्क्षति' इति भाष्यम्। प्रमाणं च स्थूलसूक्ष्मसत्त्वादिविषयमिति न तत्र व्याहतिशङ्केति भावः। भाष्ये 'तथापि' इति श्रवणाद् तत्प्रतियोग्याह **यद्यपीति**। **उक्तम्** पूर्वार्धेन 'द्वेष्टि न काङ्क्षति' इत्युक्तम्। सूक्ष्मं सत्त्वगुणं = सूक्ष्मसत्त्वगुणकार्यं परमेश्वरविषयं प्रकाशम् इत्यर्थस्य स्पष्टप्रतिभानत्वाद् 'यदि प्रविष्टम्' इत्याद्येव व्याचष्टे **यदि सुतम इति**। **तं** गुणातीतं **तत्** तमः। प्रकृतोपयोगाय तात्पर्यमाह **द्विष्यादिति**।

'ततः' इत्यस्य 'तदा' इत्यर्थकत्वात् तदनुसारेणाह **यदीति**। **स्युरिति**। **'नोच्येरन्' 'प्रसज्येरन्'** इति च शेषः। 'ततः' इत्यस्यार्थः **तदेति**। **वैकारिकाः** विकारः = भौतिकदेहादि, तत्र भवाः बन्धकदेहोपेता इत्यर्थः। यदि सूक्ष्मसत्त्ववन्तो न स्युः तर्हि स्थूलसत्त्वादिनियमात् तेन मनोविकारवन्तः प्रसज्येरन् इत्यर्थ इत्यपि **आहुः**। 'देवा ऋषयः' इति बहुवचनान्तशब्देन प्रकृतत्वादाह **तेषामिति**। वैकारिकाणामित्यर्थः। तर्कस्य विपर्यये पर्यवसानमाह **अस्ति चेति**। **तेषाम्** गुणातीतानाम्। 'अनियमः सर्वेषाम्' इति शास्त्रादिति भावः। 'सात्त्विकः' इति सत्त्वगुणवत्त्वमेव प्रतीयते, तत्कथं सूक्ष्मसत्त्ववानिति व्याख्यानम्? इत्यत उक्तार्थे लिङ्गमाह **स सूक्ष्मेति**। **त्रिभिरक्षरैः संयुक्तः** अकार-उकार-मकारैः सम्यङ्मनोयोगवान् प्रणवेन हरिं ध्यायन् इति यावत्। **निष्क्रियः** यतिः, विकारशून्य इति वा। **पञ्चविंशक इति**। 'पुरुषोऽव्यक्तं च महान् अहङ्कारो मनस्तथा। दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः' इति तन्त्रसारसङ्ग्रहवचनात्, 'चतुर्विंशतितत्त्वानि जीवो वा पञ्चविंशकः' इति वचनान्तराच्च पञ्चविंशतिसङ्ख्यापूरकः पुरुषो जीव इत्यर्थः। **पुरुषार्थे निश्चित इति**। नियतमोक्ष इत्यर्थः ॥ २२ ॥

**गीता**

## उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
## गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥

***वि०वि०***— 'उदासीनवत्' इत्यादि आचारप्रदर्शनम् । उदासीनवदासीनो न तु उदासीनः । वैष्णवकर्मानुष्ठानात् गुणैः सत्वादिभिर्न विचाल्यते । गुणा एव ईश्वरेच्छया प्रवर्तन्ते ॥ २३ ॥

***वा०ल०***— 'गुणा वर्तन्त' इत्यत्र, गुणा वर्तन्ते स्वस्वकार्येषु ॥ २३ ॥

***सा०सं०***— एवं कैर्लिङ्गैरिति प्रश्नस्योत्तरमुक्त्वा किमाचार इत्यस्योत्तरमाह **उदासीनवदिति** । **यो** गुणातीतः पुमान् । **उदासीनवदासीन**ः न तूदासीन एव, वैष्णवधर्मानुष्ठानात् । **गुणै**ः सत्त्वादिभिः । **न विचाल्यते** तत्कृतविकारं न प्राप्नोति । **गुणा** सत्त्वादयः । परमेश्वरेच्छया प्रवर्तन्ते । न स्वतन्त्रा **इत्येवं योऽवतिष्ठति** वेत्ति । **स नेङ्गते** गुणकृतावैष्णवकर्मकरणाय न चेष्ट इति । वैष्णवान्येव कर्माण्याचरति नान्यानीति तदाचार इति भावः ॥ २३ ॥

***अ०प्र०***— कैर्लिङ्गैर्गुणातीतो भवतीति प्रश्नस्योत्तरमुक्त्वा किमाचर इति द्वितीयप्रश्नस्योत्तरमाह **उदासीनवदिति** त्रिभिः ।

अन्वयः स्पष्टः । उदासीनवत् साक्षितया[१], आसीनः[२], स्थितः सन्[३], गुणैः = गुणकार्यैः सुखदुःखादिभिः[३], यः = पुरुषः[४], न विचाल्यते = न विकम्प्यते स्वरूपान्न प्रचाल्यते[५], अपि तु गुणाः = सत्त्वं सात्त्विके कर्मणि रजो रागादिषु तमो मोहादिषु एवं परमात्मसत्तया गुणक्रियाः[६], वर्तन्ते = गुणक्रियाः स्वकार्येषु वर्तन्ते[७], इत्येवं = एतैर्मम सम्बन्धो नास्तीति विवेकज्ञानेन ज्ञात्वा[८], यः = जीवः[९], अवतिष्ठति = तूष्णीं अवतिष्ठति[१०] परस्मैपदं आर्षं[१०] नेङ्गते = न चलति वैष्णवमार्गादचलः[११] गुणातीतः स उच्यते इति तृतीयेनान्वयः ॥ २३ ॥

**गीता**

## समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
## तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

***वि०वि०***— प्रायः सुखादिषु सम इत्याद्युक्तप्रकारेण 'समदुःखसुखः' इत्यादिकं व्याख्येयम् । यद्वा, विष्णुभक्तित्यागयोर्दृष्टसुखदुःखाभावेऽपि विष्णुभक्तौ सम इति समदुःखसुखः । स्वस्थो

वैष्णवमार्गादचलः । गुणातीतस्यार्थादिना निमित्तेन विष्णुभक्तिह्रासो नास्तीत्याशयेनोक्तं **समलोष्टाश्मकाञ्चन इत्यादि** । 'नेङ्गते इति सामान्येनान्यत्र प्रवृत्याभाव उक्तः ॥ २४॥

*सा०सं०*— आचारान्तरं चाह **समेति** । प्रायेण हेयतया दुःखसमं वैषयिकं सुखं यस्य स **समदुःखसुखः** । गुणातीत इत्यनुषज्यते । **स्वस्थः** प्रायेण निर्विकारः । हेयत्वेन लोष्टाश्मसमं काञ्चनं यस्य स **समलोष्टाश्मकाञ्चनः** । प्राय इति सर्वत्र योज्यम् । हेयत्वेनाप्रियतुल्यं प्रियं यस्य सः **तुल्यप्रियाप्रियः** । हेयत्वेन निन्दया तुल्या आत्मनः स्वस्य संस्तुतिर्यस्य स तथा । समत्वादिकं केन स्यादित्यत उक्तम् **धीर इति** । धैर्येणेत्यर्थः ।

यद्वा, विष्णुभजनादिविषये समदुःखसुख इत्यादि योज्यम् । किमुक्तं भवति । विष्णुभजनादौ दुःखसत्त्वे, तत्त्यागे सुखसत्त्वेऽपि विष्णुभजनादिकं सममेकप्रकारमेव कार्यमित्युक्तं भवति । एवमग्रेऽपि । अनुष्ठाने लोष्टाश्माद्यनभिमतप्राप्तिः, तत्त्यागे काञ्चनाद्यभिमतं प्रयच्छतीति विष्णुभजनादिकं न त्याज्यम् । लौकिकपुमर्थप्राप्तिहानावपि विष्णुभजनादि न त्याज्यमित्यर्थः । अनुष्ठाने अननुष्ठाने क्रियाक्रिययोः प्राप्तावपि विष्णुभजनादौ तुल्य एव । सदाऽनुष्ठेयमेवेत्यर्थः । तथाऽनुष्ठानाननुष्ठानयोः क्रमान्निन्दात्मस्तुत्योः प्राप्तौ सत्यामपि विष्णुभक्त्यादौ तुल्य एव । न त्याज्यं विष्णुभक्त्यादीत्यर्थः । तत्र हेतुर्धीरः । धीमान् विष्णुमाहात्म्यज्ञानवान् । **स्वस्थः** विष्णुधर्मादचल इति ॥२४॥

*अ०प्र०*— अपि च **समेति** ।

समदुःखसुखः = समे दुःखसुखे यस्य सः तथा[१], यतः स्वस्थः = लौकिकसुखदुःखप्राप्तावपि विष्णुभक्तौ समः स्वस्थः अत एव[२], समलोष्टा-श्मकाञ्चनः = लोष्टं च मृत्पिण्डश्च अश्म पाषाणश्च काञ्चनं च एतानि समानि यस्य सः तथा । यद्वा, समानि लोष्टाश्मकाञ्चनानि यस्य सः तथा[३], तुल्यप्रियाप्रियो = सुखदुःखे हेतुभूते यस्य स तथा । यद्वा, सुखदुःखलोष्टकाञ्चनअश्मरत्ननिन्दास्तुतिमानावमानमित्रारिपक्षयोः तुल्यः[५], धीरः = अत्यन्त-सुखदुःखयोरपि श्रीविष्णुभक्तौ अखण्डिता बुद्धिः यस्य सः धीरः[६], धीमान् वा[७], तुल्यनिन्दात्मसंस्तुतिः = तुल्ये समे परे कृते आत्मनिन्दास्तुतिर्यस्य सः । यद्वा, तुल्यनिन्दा च आत्मस्तुतिश्च यस्य सः तथा एतैर्युक्तो यो गुणातीतः स उच्यते इति उत्तरेणान्वयः ॥ २४ ॥

**गीतातात्पर्यनिर्णयः**

**"लोकस्थितान् प्रकाशादीन् प्रायो न द्वेष्टि नेच्छति ।**

**गीता**

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥**

*वि०वि०*— 'उदासीनवत्' इत्यादि आचारप्रदर्शनम् । उदासीनवदासीनो न तु उदासीनः । वैष्णवकर्मानुष्ठानात् गुणैः सत्वादिभिर्न विचाल्यते । गुणा एव ईश्वरेच्छया प्रवर्तन्ते ॥ २३ ॥

*वा०ल०*— 'गुणा वर्तन्त' इत्यत्र, गुणा वर्तन्ते स्वस्वकार्येषु ॥ २३ ॥

*सा०सं०*— एवं कैर्लिङ्गैरिति प्रश्नस्योत्तरमुक्त्वा किमाचार इत्यस्योत्तरमाह **उदासीनवदिति** । **यो** गुणातीतः पुमान् । **उदासीनवदासीनः** न तूदासीन एव, वैष्णवधर्मानुष्ठानात् । **गुणैः** सत्त्वादिभिः । **न विचाल्यते** तत्कृतविकारं न प्राप्नोति । **गुणा** सत्त्वादयः । परमेश्वरेच्छया प्रवर्तन्ते । न स्वतन्त्रा **इत्येवं योऽवतिष्ठति** वेत्ति । **स नेङ्गते** गुणकृतावैष्णवकर्मकरणाय न चेष्ट इति । वैष्णवान्येव कर्माण्याचरति नान्यानीति तदाचार इति भावः ॥ २३ ॥

*अ०प्र०*— कैर्लिङ्गैर्गुणातीतो भवतीति प्रश्नस्योत्तरमुक्त्वा किमाचर इति द्वितीयप्रश्नस्योत्तरमाह **उदासीनवदिति** त्रिभिः ।

अन्वयः स्पष्टः । उदासीनवत् साक्षितया[१], आसीनः[२], स्थितः सन्[३], गुणैः = गुणकार्यैः सुखदुःखादिभिः[३], यः = पुरुषः[४], न विचाल्यते = न विकम्प्यते स्वरूपान्न प्रचाल्यते[५], अपि तु गुणाः = सत्त्वं सात्त्विके कर्मणि रजो रागादिषु तमो मोहादिषु एवं परमात्मसत्तया गुणक्रियाः[६], वर्तन्ते = गुणक्रियाः स्वकार्येषु वर्तन्ते[७], इत्येवं = एतैर्मम सम्बन्धो नास्तीति विवेकज्ञानेन ज्ञात्वा[८], यः = जीवः[९], अवतिष्ठति = तूष्णीं अवतिष्ठति[१०] परस्मैपदं आर्षं[१०] नेङ्गते = न चलति वैष्णवमार्गादचलः[११] गुणातीतः स उच्यते इति तृतीयेनान्वयः ॥ २३ ॥

**गीता**

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥**

*वि०वि०*— प्रायः सुखादिषु सम इत्याद्युक्तप्रकारेण 'समदुःखसुखः' इत्यादिकं व्याख्येयम् । यद्वा, विष्णुभक्तित्यागयोर्दृष्टसुखदुःखाभावेऽपि विष्णुभक्तौ सम इति समदुःखसुखः । स्वस्थो

वैष्णवमार्गादचलः । गुणातीतस्यार्थादिना निमित्तेन विष्णुभक्तिह्रासो नास्तीत्याशयेनोक्तं **समलोष्टाश्मकाञ्चन इत्यादि** । 'नेङ्गते इति सामान्येनान्यत्र प्रवृत्याभाव उक्तः ॥ २४॥

*सा०सं०*— आचारान्तरं चाह **समेति** । प्रायेण हेयतया दुःखसमं वैषयिकं सुखं यस्य स **समदुःखसुखः** । गुणातीत इत्यनुषज्यते । **स्वस्थः** प्रायेण निर्विकारः । हेयत्वेन लोष्टाश्मसमं काञ्चनं यस्य स **समलोष्टाश्मकाञ्चनः** । प्राय इति सर्वत्र योज्यम् । हेयत्वेनाप्रियतुल्यं प्रियं यस्य सः **तुल्यप्रियाप्रियः** । हेयत्वेन निन्दया तुल्या आत्मनः स्वस्य संस्तुतिर्यस्य स तथा । समत्वादिकं केन स्यादित्यत उक्तम् **धीर इति** । धैर्येणेत्यर्थः ।

यद्वा, विष्णुभजनादिविषये समदुःखसुख इत्यादि योज्यम् । किमुक्तं भवति । विष्णुभजनादौ दुःखसत्त्वे, तत्त्यागे सुखसत्त्वेऽपि विष्णुभजनादिकं सममेकप्रकारमेव कार्यमित्युक्तं भवति । एवमग्रेऽपि । अनुष्ठाने लोष्टाश्माद्यनभिमतप्राप्तिः, तत्त्यागे काञ्चनाद्यभिमतं प्रयच्छतीति विष्णुभजनादिकं न त्याज्यम् । लौकिकपुमर्थप्राप्तिहानावपि विष्णुभजनादि न त्याज्यमित्यर्थः । अनुष्ठाने अननुष्ठाने क्रियाक्रिययोः प्राप्तावपि विष्णुभजनादौ तुल्य एव । सदाऽनुष्ठेयमेवेत्यर्थः । तथाऽनुष्ठानाननुष्ठानयोः क्रमान्निन्दात्मस्तुत्योः प्राप्तौ सत्यामपि विष्णुभक्त्यादौ तुल्य एव । न त्याज्यं विष्णुभक्त्यादीत्यर्थः । तत्र हेतुर्धीरः । धीमान् विष्णुमाहात्म्यज्ञानवान् । **स्वस्थः** विष्णुधर्मादचल इति ॥२४॥

*अ०प्र०*— अपि च **समेति** ।

समदुःखसुखः = समे दुःखसुखे यस्य सः तथा[१], यतः स्वस्थः = लौकिकसुखदुःखप्राप्तावपि विष्णुभक्तौ समः स्वस्थः अत एव[२], समलोष्टा-श्मकाञ्चनः = लोष्टं च मृत्पिण्डश्च अश्म पाषाणश्च काञ्चनं च एतानि समानि यस्य सः तथा । यद्वा, समानि लोष्टाश्मकाञ्चनानि यस्य सः तथा[३], तुल्यप्रियाप्रियो = सुखदुःखे हेतुभूते यस्य स तथा । यद्वा, सुखदुःखलोष्टकाञ्चनअश्मरत्ननिन्दास्तुतिमानावमानमित्रारिपक्षयोः तुल्यः[४], धीरः = अत्यन्त-सुखदुःखयोरपि श्रीविष्णुभक्तौ अखण्डिता बुद्धिः यस्य सः धीरः[५], धीमान् वा[६], तुल्यनिन्दात्मसंस्तुतिः = तुल्ये समे परे कृते आत्मनिन्दास्तुतिर्यस्य सः । यद्वा, तुल्यनिन्दा च आत्मस्तुतिश्च यस्य सः तथा एतैर्युक्तो यो गुणातीतः स उच्यते इति उत्तरेणान्वयः॥ २४ ॥

**गीतातात्पर्यनिर्णयः**

**"लोकस्थितान् प्रकाशादीन् प्रायो न द्वेष्टि नेच्छति ।**

*न्या०दी०*— गुणात्ययोपायादिप्रश्नस्य परिहार उच्यते 'प्रकाशं' इति । तत्र स्वस्मिन् प्रकाशं नेच्छति, स्वगतमोहं न द्वेष्टि, दुःखादिसाम्यं च स्पृहाद्यभावमात्रं, सर्वारम्भपरित्यागश्च सर्वत्रोदासीनत्वमित्यन्यथाप्रतीतिनिरासाय प्रमाणान्तरेण तद्व्याचष्टे **लोकेति** ॥ पुरुषान्तरे स्थितं प्रकाशादि साधु न द्वेष्टि । तत्र मोहाद्यसाधु नेच्छतीत्यर्थः ।

*भा०दी०*— **गुणात्ययोपायादीति** । लक्षणाचारावादिपदार्थः ॥ **साध्विति** । समीचीनधर्ममित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

स्वयंप्रकाशी मोहोज्झस्तथाऽपि पुनरिच्छति ।
विष्णोः प्रकाशं तं चापि नित्यभक्त्याऽभिसेवते ॥

सुखदुःखादिभावेऽपि विष्णुभक्तौ समः सदा ।
अर्थार्थं वा प्रियार्थं वा निन्दादीनां भयादपि ॥

न विष्णुभक्तिह्रासोऽस्य किन्तु साम्यमथोन्नतिः ।
अवैष्णवारम्भवर्जी विष्णुं याति न संशयः ॥"

—इति च ॥ २२-२४ ॥

*प्रका०*— "प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति" इत्यस्यार्थमाह **लोकस्थितानित्यादिना** । लोकस्थितानीति पुरुषान्तरस्थितानि इत्यर्थः ।

*न्या०दी०*— स्वस्य प्राप्तप्रकाशत्वात् मोहोज्झितत्वात् स्वस्मिन्नेव तदिच्छाद्यभावः किं न स्यादित्यत आह **स्वयमिति** ॥ मोहं द्वेष्टि चेति द्रष्टव्यम् । तं चापीत्यनेन मां चेत्युक्तार्थं भवति । सुखदुःखादीत्यस्य विष्णुभक्तिपरित्यागे सुखस्य, अन्यथा दुःखस्य भावेऽपीत्यर्थः । अर्थार्थमित्यादिना समलोष्टेत्याद्युक्तार्थं भवति । अवैष्णवेत्यनेन सर्वारम्भेत्युक्तार्थं भवति । विष्णुं यातीत्यनेन सगुणानित्यादेः तात्पर्यमुक्तं भवति ॥

*भा०दी०*— **इत्याद्युक्तार्थमिति** । विष्णुभक्तिकृतौ(ते) लौकिकपुमर्थहानिप्राप्तौ तत्त्यागे पुमर्थप्राप्तावपि विष्णुभक्तिरनुष्ठेयैवेत्यादिरूपेणोक्तार्थमित्यर्थः ॥

**गीता**

## मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
## सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

***वि०वि०***— 'सर्वारम्भपरित्यागी' इति विशेषप्रयोजनापेक्षयाऽप्यवैष्णवारम्भाः निषिद्ध्यन्ते इति भेदः ।

यद्वा, 'नेङ्गत इति कदाचित्कवैष्णवप्रवृत्यभाव उक्तः । 'सर्वारम्भपरित्यागी' इति दीर्घो वैष्णवप्रवृत्यभाव उच्यते । 'इङ्गनं क्षणिकं कर्म दीर्घमारम्भ उच्यत' इत्यभिधानात् ॥ २५ ॥

***सा०सं०***— तथा मानापमानयोः प्राप्तावपि विष्णुभक्त्यादौ तुल्य एव । न त्याज्यं तदित्यर्थः । कृतावकृतौ चारिपक्षमित्रपक्षयोः सत्वेऽपि विष्णुभक्त्यादि कार्यमेवेत्यर्थः । पूर्वं 'नेङ्गते' इति सामान्यतोऽवैष्णवकर्मारम्भत्यागोक्तावपि प्रयोजनविशेषापेक्षयाऽपि नावैष्णवकर्मारम्भवानित्याह **सर्वारम्भपरित्यागीति** । केनचित् प्रयोजनेनाप्यवैष्णवसर्वकर्मारम्भमकुर्वन्नित्यर्थः । यद्वा, 'नेङ्गते' इत्यल्पावैष्णवकर्मत्यागः, अत्र तु अतिदीर्घवैष्णवकर्मत्याग इति न पुनरुक्तिः ॥ २५ ॥

***अ०प्र०***— किञ्च, **मानापमानयोरिति** ।

माने अवमाने च तुल्यः[1], मित्रपक्षे अरिपक्षे च तुल्यः[2], सर्वारम्भ-परित्यागी = सर्वान् दृष्टादृष्टार्थान् आरम्भान् उद्यमान् परित्यक्तुं शीलं यस्य स तथा । यद्वा, सर्वेषां कर्मणां आरम्भो मूलोऽहङ्कारः कर्तृत्वाभिमानः परित्यक्तो येन स तथा, एवम्भूताचारयुक्तो यः[3], सः गुणतीत उच्यते । यद्वा, 'प्रकाशं चे'ति आरभ्य मानापमानयोरित्यन्तं श्लोकचतुष्टयस्य राघवेन्द्रयतिभिः संक्षेपेण उक्तमर्थं लिख्यते— प्रायः सुखादिषु सम इत्याद्युक्तरीत्या सम-दुःखसुख इत्यादिकं व्याख्येयम् । यद्वा, लौकिकसुखदुःखप्राप्तौ अपि विष्णुभक्तौ प्रायः सुखादिषु सम इत्याद्युक्तरीत्या समदुःखसुखादिकं व्याख्येयम् । यद्वा, लौकिकसुखदुःखप्राप्तावपि विष्णुभक्तौ समः स्वस्थः वैष्णवमार्गात् अचलः गुणातीतस्यापि अर्थादिनिमित्तेन विष्णुभक्तिह्रासो नास्तीत्याशयेनोक्तः । 'समलोष्टाश्मकाञ्चन' इत्यादि ॥ नेङ्गत इति सामान्येनावैष्णवप्रवृत्त्यभाव उक्तः । सर्वारम्भपरित्यागीति विशेषप्रयोजनापेक्षयाऽप्यवैष्णवकर्माणि निषिध्यते । यद्वा नेङ्गत इति कदाचित् को वैष्णवप्रवृत्यभाव उक्तः ? सर्वारम्भपरित्यागीति दीर्घो वैष्णवप्रवृत्यभाव उच्यते । तथोक्तम्—''सुखदुःखादिभावेऽपि विष्णुभक्तौ समः सदा । अर्थार्थं वा प्रियार्थं वा निन्दादीनां भयादपि ॥ न विष्णुभक्तिह्रासोऽस्य किन्तु साम्यमथोन्नतिः । अवैष्णवारम्भवर्जी विष्णुं याति न संशयः ॥'' इति ॥

'इङ्गतं क्षणिकं कर्म दीर्घमारम्भमुच्यते' इत्यभिधानम् ॥ स्पष्टोऽन्वयः । एवं भूताऽऽचारयुक्तो गुणातीत उच्यते॥ २५ ॥

**भाष्यम्**

**तुल्यत्वार्थ उक्तः पुरस्तात् ॥ २३-२५ ॥**

*प०टी०*— प्रियादौ तुल्यत्वं न पूजादावित्याह **तुल्यत्वार्थ इति** ॥ २३-२५ ॥

*प्र०दी०*— 'समदुःखसुखः' इत्यादिना सर्वथा सुखादौ तुल्यत्वबुद्धिरुच्यत इति अन्यथा-प्रतीतिनिरासार्थमाह **तुल्यत्वेति** । तुल्यत्ववाचिनः शब्दस्यार्थ इत्यर्थः । 'प्रायः सर्वान्' इत्याद्युक्त-रीत्येति भावः ॥ २३-२५ ॥

*भा०दी०*— **'प्रायः सर्वान्' इत्युक्तरीत्येति** । द्वितीये 'प्रजहाति यदा कामान्' इत्यत्र भाष्योक्तरीत्येत्यर्थः । तत्र तुल्यशब्दाभावेऽपि तुल्यत्ववाचिनः 'प्रजहाति कामान्' इति 'दुःखेष्वनु-द्विग्नमनाः, सुखेषु विगतस्पृहः' इत्यादिशब्दस्य सत्त्वात् 'तुल्यत्ववाचिनः शब्दस्यार्थः' इत्युक्तम् । अत एव भाष्येऽपि 'तुल्यत्वार्थः' इत्येवोक्तम् ॥ २३-२५ ॥

*भा०र०*— तुल्यत्वस्यार्थरूपत्वेन 'तस्यार्थः' इत्यनन्वितम् ? 'समदुःखसुखः' इत्यादौ तुल्यशब्दाभावश्च ? इत्यतो लक्षणामाश्रित्य व्याचष्टे **तुल्यत्ववाचिन इति** । तत्र द्वितीयाध्याये तुल्य-समादिशब्दाभावेऽपि 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इत्यादौ सुखदुःखतुल्यत्व-पर्यवसानस्याभिसंहितत्वाद् अत्र 'समदुःखसुखः' इत्यादौ समशब्दस्य तुल्यशब्दस्य आहत्य श्रवणेन तत्रापि तदर्थस्य वक्तव्यत्वाच्च एवमुक्तिरिति **आहुः** । 'पुरस्तात्' इत्यस्य 'द्वितीयाध्याये' इत्यर्थं सिद्धवत्कृत्य तत्र स्थलं दर्शयति **प्रायः सर्वानित्याद्युक्तरीत्येति** । 'प्रजहाति यदा कामान् इति गीतावाक्यावसरे' इति शेषः ॥ २३-२५ ॥

**गीतातात्पर्यनिर्णयः**

**उदासीनवदित्युक्तेश्च न केवलोदासीनत्वम् । नेङ्गत इत्युदासीनवृत्तिनिषेधः । सर्वारम्भपरित्यागीति विशेषप्रयोजनापेक्षयाऽपि नावैष्णवारम्भ इति ।**

*प्रका०*— उदासीनवदित्युक्तेश्च न केवलोदासीनत्वम् इत्येतदुपपादयति **नेङ्गत इत्युदासीन-प्रवृत्तिनिषेध इति** । अवैष्णवारम्भेऽपि यथा भगवदुदासीनः प्रवर्तते न तथा भागवतः प्रवर्तत इत्यर्थः । नेङ्गत इत्यनेन सर्वारम्भपरित्यागीत्यस्य पौनरुक्तिं परिहरति **विशेषेत्यादिना** ।

*न्या०दी०*— इतश्च सर्वारम्भपरित्यागीति न केवलोदासीनत्वमुच्यते । उदासीनवदिति पूर्ववाक्ये केवलोदासीनत्वाभावस्योक्तेः । अन्यथोदासीन एवेत्युक्तिप्रसङ्गादित्याह **उदासीनवदिति** ॥ नेङ्गत इति पूर्ववाक्ये कर्माभावस्योक्तत्वात् कथं केवलोदासीनत्वाभाव इत्यत आह **नेङ्गत इति** ॥ नेङ्गत इति न सर्वप्रवृत्तिनिषेधः, किन्तु भगवदुदासीनप्रवृत्तिनिषेध एवेत्यर्थः । तर्हि नेङ्गत इत्यनेनैव अवैष्णवकर्माकरणस्योक्तत्वात् सर्वारम्भपरित्यागीति पुनरुक्तिरित्यत आह **सर्वेति** ॥ इति वक्तीति शेषः ।

**गीतातात्पर्यनिर्णयः**

"इङ्गनं क्षणिकं कर्म दीर्घमारम्भ उच्यते ॥"

—इति शब्दनिर्णये ॥ २३-२५ ॥

*न्या०दी०*— नेङ्गत इति सामान्योक्तिरिति द्रष्टव्यम् । नेङ्गत इत्यल्पावैष्णवप्रवृत्त्यभाव उच्यते । सर्वारम्भपरित्यागीति दीर्घवैष्णवप्रवृत्त्यभाव उच्यत इत्यतश्च न पुनरुक्तिरिति भावेन इङ्गनारम्भशब्दयोः अल्पमहत्कर्मार्थत्वे प्रमाणमाह **इङ्गनमिति** ॥

*भा०दी०*— दीर्घवैष्णवेति । बहुकालानुष्ठेयेत्यर्थः ॥

**गीता**

## मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
## स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

*वि०वि०*— 'अव्यभिचारेण भक्तियोगेन सेवत' इति गुणात्ययोपायकथनम् । गुणान्समतीत्य लक्ष्म्यादीनामनुग्रहात् तत्कृतं बन्धमतीत्य, ब्रह्मभूयाय 'मम योनिर्महद्ब्रह्म' इति प्रकृतं ब्रह्म लक्ष्मीस्तद्वद्भूयाय, लक्ष्मीवत् स्वयोग्यभगवत्प्रियत्वाय । यद्वा, ब्रह्माणि भूयाय लक्ष्मीप्राप्तये कल्पते ॥२६॥

*वा०ल०*— 'ब्रह्मभूयाय कल्पते' इत्यत्र, ब्रह्मभूयाय ब्रह्मत्वाय । 'बृह वृद्धौ, इति धातोः । 'ब्रह्माणि जीवाः सर्वेऽपि' इति वचनाच्च । स्वयोग्यसुखपूर्णमुक्तजीवत्वाय । 'युजिर् योगे' इति धातोः । सदा ब्रह्मसम्बन्धाख्यब्रह्मसायुज्याय वा । 'स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि' इत्यमरः ॥ २६ ॥

*सा०सं०*— एवं गुणातीतलक्षणम् आचारं चोक्त्वा कथं 'गुणानतिवर्तते' इति प्रश्नस्योत्तरमाह **मां चेति** । **अव्यभिचारेण भक्तियोगेन** नित्यभक्त्याख्योपायेन । **मां च सेवते** । **गुणान्**

सत्त्वादिगुणैः तदभिमानिश्रीदेव्यादिभिः कृतबन्धं समतीत्य । **ब्रह्मभूयाय** । ब्रह्मशब्दोऽत्र चित्प्रकृतिपरः । चित्प्रकृतिवद्भूयं भवनं ब्रह्मभूयम् । सा यथा विष्णुप्रिया तथा गुणातीतोऽपि विष्णुप्रियो भवतीत्यर्थः । यद्वा, ब्रह्मणि चित्प्रकृतौ भूयाय भावाय चित्प्रकृतिप्राप्तये । **कल्पते** शक्तो भवति ॥ २६ ॥

***अ०प्र०***— कथं गुणानत्येति इति प्रश्नोत्तरमाह **मां चेति** ।

मां च = श्रीमन्नारायणं मामेव[1], यः = भक्तः[2], अव्यभिचारेण = अनन्यविषयेन[3], एकान्तभक्तियोगेन[4], सेवते = उपास्ते[5], सः = भक्तः[6], एतान् = पूर्वोक्तान्[7], गुणान् = त्रिगुणान्[8], समतीत्य = सम्यक् अतिक्रम्य लक्ष्म्यादीनां अनुग्रहात् तत्कृतबन्धमतिक्रम्य[9], ब्रह्मभूयाय = भवनं भूयं भावो भावयति क्यप् । 'मम योनिर्महद्ब्रह्मे'त्युक्त्या महालक्ष्मीः ब्रह्म ब्रह्मवद्रूपं ब्रह्म भूयं तस्मै ब्रह्मभूयाय[10] कल्पते = श्रीलक्ष्मीवद्भवतीत्यर्थः । प्रियत्वं स्वयोग्यत्वानुसारेण प्रियो भवतीत्यर्थः । यद्वा, ब्रह्मणि लक्ष्म्यां भूयं ब्रह्मभूयं भू = प्राप्ताविति धातोः भावे क्यप् । ततश्च लक्ष्मीप्राप्त्यै कल्पते समर्थो भवति लक्ष्मीं प्राप्नोतीत्यर्थः । तदुक्तम्— "अतीत्य त्रीणि रूपाणि महालक्ष्मीं प्रपद्यते । तया त्वनुगृहीतोऽसौ वैष्णवो विष्णुगो भवेत् ।" इति वचनात् ॥ २६ ॥

भाष्यम्

**ब्रह्मवत् प्रकृतिवत् भगवत्प्रियत्वं ब्रह्मभूयम् । न तु तावत्प्रियत्वम् । किन्तु प्रियत्वमात्रम् । "बद्धो वाऽपि तु मुक्तो वा न रमावत् प्रियो हरेः" इति पाद्मे । भूयाय भावाय ॥ २६ ॥**

***प०टी०***— 'ब्रह्मभूय'शब्दार्थमाह **ब्रह्मवदिति** । 'भूय'शब्दः कथं भगवत्प्रियत्वं वक्ति ? इत्यत आह **भूयायेति** । पूर्वोक्तमार्थिकमित्यर्थः ॥ २६ ॥

***प्र०दी०***— 'ब्रह्मभूयाय' इत्यस्य 'परब्रह्मत्वाय' इति व्याख्यानं प्रमाणविरुद्धम् इति भावेन अन्यथा व्याचष्टे **ब्रह्मवदिति** । नात्र ब्रह्मशब्दं परं ब्रह्म । किं तु 'मम योनिर्महद्ब्रह्म' इति प्रकृता प्रकृतिरेव । 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इत्युत्तरवाक्यात् । तद्भूयं च न तादात्म्यम्, किं तु तद्वत् भगवत्प्रियत्वमेव । अन्यस्यान्यभावायोगादिति भावः । तत्किं यावत् प्रकृतेः भगवत्प्रियत्वं तावत् गुणातीतस्य ? इत्यतः सप्रमाणमाह **न त्विति** । तत्किं भूयशब्दः प्रियत्ववाची, येनैवं व्याख्यायत इत्यत आह **भूयाय इति** । 'भुवो भावे' इति वचनात् भावो भवनं भूयशब्दार्थः । ब्रह्मवत् भावः

**ब्रह्मभूयम्** । 'वदः सुपि' इति सुबन्तमात्रस्योपपदस्यानुवृत्तेः । वत्यर्थस्य च वृत्तावन्तर्भावात् । मयूरव्यंसकादिवत् । वत्यर्थश्च प्रियत्वमिति तदुक्तमिति भावः ॥ २६ ॥

*भा०दी०*— **ब्रह्मशब्दमिति** । 'ब्रह्म' इति शब्दो यस्य तद् ब्रह्मशब्दम् । ब्रह्मशब्दवाच्यमित्यर्थः **इति वचनादिति** । तृतीयस्याद्यपादे 'वदः सुपि क्यप् च' इति सूत्रात् क्यपप्रत्ययमनुवर्त्य 'भुवो भावे' इति सूत्रे 'सुबन्त उपपदे भूधातोर्भवनरूपेऽर्थे क्यप्प्रत्ययो भवति इत्युक्तत्वात्, कित्त्वेन गुणाभावे 'भूयः' इति रूपसिद्धेरिति भावः ।

ननु तत्र 'वदः सुपि' इत्यनुवृत्तेर्वत्यन्तस्य च सुबन्तत्वाभावात् कथमत्र क्यप्प्रत्यय इत्यत आह **सुबन्तेति** । मात्रपदेन **तद्ब्रह्म** इत्यादाविव भावकर्मरूपार्थविशेषो व्यावर्त्यते । नात्र वतिप्रत्ययोऽस्ति । किन्तु वत्यर्थ एव । स च समासेऽन्तर्भूत एव प्रतीयते अतः सुबन्तोपपदत्वं अस्त्येवात्रेति भावेनाह **वत्यर्थस्येति** । **वृत्ताविति** । समास इत्यर्थः । मयूरवद् व्यंसको यस्य स मयूरव्यंसक इति समासो यथा 'मयूरव्यंसकादयश्च' इति सूत्रोक्तः तथात्रापि समास इत्यर्थः ।

**तदुक्तमिति** । प्रकृतिवद् भगवत्प्रियत्वं ब्रह्मभूयपदेनोक्तमित्यर्थः ॥ २६ ॥

*भा०र०*— 'स्याद् ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरोक्तेराह **ब्रह्मत्वायेति** । 'इति भावेन' इत्यनन्तरं 'तत्पदम्' इत्यध्याहार्यम् । 'ब्रह्मशब्दम्' इत्यत्र बहुव्रीहिः, ब्रह्मशब्दवाच्यमित्यर्थः । **प्रकृतिरेव** ब्रह्मशब्दा **प्रतिष्ठा** प्रतिष्ठापक इत्यर्थः । न ह्युत्सर्गतः स्वात्मा स्वस्य प्रतिष्ठापक इति भावः । तत्तादात्म्यं न तच्छब्दार्थ इत्यत्र युक्तिमाह **अन्यस्येति** । **आह** प्रियत्वं भावशब्दस्य । 'तस्य भावस्त्वतलौ' इत्यत्रेव प्रवृत्तिनिमित्तधर्मार्थत्वे परव्याख्यानप्रत्याख्यानायोगः ? इत्यतोऽर्थमाह **भावो भवनमिति** । कुतोऽयमर्थो ज्ञायते ? इत्यत उक्तम् **भुवो भाव इति** । 'सुबन्त उपपदे भूधातोः भवनरूपेऽर्थे क्यप्प्रत्ययो भवति' इति पाणिनीयसूत्रादित्यर्थः । भूयशब्दस्य भवनार्थकत्वेऽपि प्रकृतिभवनमेव प्राप्तम्, न तु प्रकृतिवत् प्रियत्वम् ? इत्यतो भाष्यभावमाह **ब्रह्मवद् भाव इति** । ननु 'ब्रह्मवद्भावः' इत्यर्थे 'ब्रह्मभूयम्' इति न रूपम् उपपद्यते ? 'वदः सुपि' इति पूर्वसूत्राद् 'भुवो भावे' इति सूत्रे 'सुबन्ते उपपदे' इत्यनुवृत्तेरिष्टत्वाद्, वत्यन्तस्य ब्रह्मशब्दस्य सुबन्तत्वाभावात्, इत्यत आह **वदः सुपीत्यत इति** । सुबन्तमेवोपपदं विवक्षितम्, न तु वत्यन्तमपि । ब्रह्मशब्दश्चात्र सुबन्त एवोपादीयते ।

तर्हि 'ब्रह्मणो भूयम् = भवनम्' इत्येव प्रतीयते, न तु 'ब्रह्मवद् भवनम्' इति ? इत्यत उक्तम् **वत्यर्थस्य चेति** । **वृत्तौ** 'ब्रह्मभूयम्' इति समासवृत्तौ । **अन्तर्भावात्** अन्तर्भूततया प्रतीतेरिष्ट-

त्वात् । तच्छब्दाभावेऽपि तदर्थस्य समासवृत्तौ अन्तर्भाविनावभासे दृष्टान्तमाह **मयूरव्यंसकादिवदिति** । 'मयूर इव व्यंसकः = मयूरव्यंसकः' इत्युपमानपूर्वपदकर्मधारय इति मते यथा 'मयूरव्यंसकः' इति समासे इवशब्दाभावेऽपि समासशक्त्यैव तदर्थः प्रतीयते, 'मयूरव्यंसकादयश्च' इति सूत्रेण तदर्थे समासनिपातनात्, तथा ब्रह्मभूयसमासेऽपि वत्यर्थः प्रत्येतुं युक्त इति भावः । एवं ब्रह्मभूयशब्दसमुदायार्थमुक्त्वा प्रकृतमाह **वत्यर्थश्चेति** । वत्यर्थो हि सादृश्यम् । तच्च तद्भिन्नत्वे सति तद्गतधर्मयोगित्वम् । प्रकृते प्रियत्वमेव तद्गतधर्म इति भावेन **तदुक्तम्** प्रकृतिवत् भगवत्प्रियत्वमेव ब्रह्मभूयपदेनोक्तमित्यर्थः ॥ २६ ॥

**गीतातात्पर्यनिर्णयः**

**"लक्ष्म्यादिभिः कृतो बन्धो योऽनादिः पुरुषस्य तु ।**
**तमत्येतीह यो विद्वान् स विज्ञेयो गुणात्ययी ॥" इति च प्रवृत्ते ।**

**तत्कृतबन्धात्ययात् तदधिकविष्णुप्राप्तेश्च तदत्ययीत्युच्यते । यथा द्वारपालमतीत्य राजानं गच्छतीति ।**

*प्रका०*— महालक्ष्म्याः प्रकृतिशब्देन तद्रूपाणां श्रीभूदुर्गाणां सत्त्वरजस्तमःशब्दैः पूर्वप्रस्तुतत्वात् तदविरोधेन "सगुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पत" इत्येतद्योजयति **लक्ष्म्यादिभिरिति** ।

***न्या०दी०*— ननु गुणशब्देन श्र्यादीनां विवक्षितत्वात् "सगुणान् समतीत्यैतान्" इति तदत्ययः कथमुच्यते । अशक्यत्वादित्यत आह लक्ष्म्यादिभिरिति ॥ लक्ष्मीति श्रीः उच्यते । स्मृत्युक्तार्थानुवादेन अर्थान्तरं चाह तदिति ॥ उभयत्र प्रयोगं दर्शयति यथेति ॥ यथा द्वारपालकृतबन्धात्ययेन गच्छन् द्वारपालमतीत्य राजानं गच्छतीत्युच्यते, यथा च यो राजानं गच्छति स द्वारपालमतीत्य गच्छतीत्युच्यते तथैवेत्यर्थः ।**

*भा०दी०*— श्रीरूपस्यैव सत्त्वगुणमानित्वादाह **श्रीरुच्यत इति** ॥ **उभयत्रेति** । तत्कृतबन्धत्यागेन तदधिकप्राप्त्या च तदत्ययीत्युच्यत इत्यत्रेत्यर्थः । तद्व्यनक्ति **यथेति** ॥

**गीतातात्पर्यनिर्णयः**

**ब्रह्मणि भूयं ब्रह्मभूयम् । ब्रह्मेति प्रकृता महालक्ष्मीः ।**

*प्रका०*— **ब्रह्मेति प्रकृतेति** । "मम योनिर्महद्ब्रह्मे"ति प्रकृतेत्यर्थः ।

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां चतुर्दशोऽध्यायः ॥*

***न्या०दी०***— 'ब्रह्मभूयाय' इत्यस्य ब्रह्मभावायेति अन्यथाप्रतीतिनिरासाय अर्थमाह **ब्रह्मणीति** ॥ अत्र ब्रह्मेति भगवानित्यन्यथाप्रतीतिनिरासायाह **ब्रह्मेति** ॥ ''मम योनिर्महद्ब्रह्म'' इति महालक्ष्म्या एव ब्रह्मशब्देन प्रकृतत्वात् अत्रापि सैवोच्यत इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

''अतीत्य त्रीणि रूपाणि महालक्ष्मीं प्रपद्यते ।
तया त्वनुगृहीतोऽसौ वैष्णवो विष्णुगो भवेत् ॥''

—इति च ॥ २६ ॥

***न्या०दी०***— प्रमाणान्तरसमाख्यानेनाप्येतत् साधयति **अतीत्येति** ॥

**गीता**

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥ २७ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥*

***वि०वि०***— ननु गुणातीतस्य भगवत्प्राप्तिरेव वक्तव्या । लक्ष्मीप्राप्तिः किमर्थमुच्यत इत्यत आह **ब्रह्मण इति** । अहं ब्रह्मणो लक्ष्म्याः, अव्ययस्यामृतस्य च मुक्तवर्गस्य, शाश्वतस्य अक्षयफलस्य निष्कामस्य धर्मस्य, एकान्तिकस्य दुःखासम्मिश्रस्य, सुष्ठु मोक्षस्य वा । प्रतिष्ठा आधारः। अतो मदवियोगिनीं लक्ष्मीं प्राप्तोऽपि मामेव प्राप्त इत्यर्थः । लक्ष्मीसमीपं प्राप्य तदनुज्ञया भगवत्प्राप्तिरिति दर्शयितुं भगवत्प्राप्तिमनुक्त्वा लक्ष्मीप्राप्त्युक्तिः । अत एव यथा द्वारपालमतीत्य राजानं गच्छतीत्युच्यते एवं गुणानतीत्येति व्यवहारो युज्यत एव उक्तं चैतत्सर्वम्— 'लोकस्थितान् प्रकाशादीन् प्रायो न द्वेष्टि नेच्छति । स्वयं प्रकाशी मोहोज्झस्तथापि पुनरिच्छति । विष्णोः प्रकाशं तं चैव नित्यभक्त्याऽभिसेवते । सुखदुःखादिभावेऽपि विष्णुभक्तौ समः सदा ॥ अर्थार्थं वा प्रियार्थं वा निन्दादीनां भयादपि । न विष्णुभक्तिह्रासोऽस्य किन्तु साम्यमथोन्नतिः ॥ अवैष्णवारम्भवर्जी

विष्णुं याति न संशयः ।' 'लक्ष्म्यादिभिः कृतो बन्धो योऽनादिपुरुषस्य तु । तमत्येतीह यो विद्वान् स विज्ञेयो गुणात्ययी ॥' 'अतीत्य त्रीणि रूपाणि महालक्ष्मीं प्रपद्यते । तया त्वनुगृहीतोऽसौ वैष्णवो विष्णुगो भवेत् ॥' इति ॥ २७ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां चतुर्दशोऽध्यायः ॥ १४ ॥*

***वा०ल०***— 'ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च' इत्यत्र, ब्रह्मणः पूर्णसुखरूपमुक्तजीवस्य प्रतिष्ठा आधारः । अमृतस्य मोक्षस्य । ब्रह्मणोऽहं प्रतिष्ठा इत्युक्तेः, ब्रह्मभूयाय इत्यत्रोक्तं ब्रह्मत्वमपि पूर्णसुखरूपमुक्तजीवत्वमेव ।

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे चतुर्दशोऽध्यायः ॥*

***सा०सं०***— ननु गुणातीतस्य भगवत्प्राप्त्यादिकमेव वाच्यम् । लक्ष्मीप्राप्तिः किमर्थमुच्यते इत्यतस्तत्प्राप्तौ मत्प्राप्तिरेव भवति । तस्याः मत्स्थत्वादिति भावेनाह **ब्रह्मण इति** । **ब्रह्मणो** महालक्ष्म्याः । **अव्ययस्यामृतस्य च** मुक्तवर्गस्य । **शाश्वतस्या**क्षयफलस्य । निष्काम**धर्मस्य एकान्तिकस्य** । अस्मादिदमधिकमिति गणने एवमेवान्ते यस्य तदैकान्तिकम्, तस्य दुःखासम्भिन्नस्य सुखस्य मोक्षस्येत्यर्थः । **प्रतिष्ठा** आधारः । अतो मदवियोगिनीं लक्ष्मीं प्राप्तो मामेव प्राप्तो भवति । गुणातीतो लक्ष्मीसमीपं प्राप्य तदनुगृहीतो हरिं पश्चादाप्नोतीति परम्पराद्योतनायैवमुक्तिरिति ज्ञेयम् ॥ २७ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण श्रीमद्राघवेन्द्रयतिकृते श्रीमद्गीतार्थसङ्ग्रहे चतुर्दशोऽध्यायः ॥*

***अ०प्र०***— लक्ष्मीं प्राप्तो मत्प्राप्तो भवतीत्यत्र हेतुमाह **ब्रह्मण इति** ।

अथान्वयः— अमृतस्य[१], अव्ययस्य च[२], शाश्वतस्य[३], धर्मस्य च[४], एकान्तिकस्य सुखस्य च[५], ब्रह्मणः[७], अहं[८], हि यस्मात्[९], प्रतिष्ठा[१०] अतो मदवियोगिनीं लक्ष्मीं प्राप्तो मामेव प्राप्त इत्यर्थः ॥

अमृतस्य = अव्यक्तस्य[१], अव्ययस्य च = मुक्तवर्गस्य[२], शाश्वतस्य = अक्षयफलकनिष्कामस्य[३], धर्मस्य च = निष्कामकस्य कर्मणश्च[४], एकान्तिकस्य = अस्मादिदमेकमेवान्ते स्थितमिति गणनाविषयस्य[५], सुखस्य च = दुःखासम्भिन्नस्य च[६], ब्रह्मणः = लक्ष्म्याः[७], अहं =

श्रीकृष्णः[८], हि = यस्मात्[९], प्रतिष्ठा = आश्रयः[१०] अतो मदवियोगिनीं लक्ष्मीं प्राप्तोऽपि मामेव प्राप्त इत्यर्थः । लक्ष्मीं प्राप्य तदेव विज्ञाय विष्णुं प्राप्तेरिति ज्ञापयितुं भगवत्प्राप्तिमनुक्त्वा लक्ष्मीं प्रागुक्तिः । अत एवंविधा लोके द्वारपालकृतावधानात्ययेन राजानं गतः द्वारपालमतीत्य गत इत्युच्यते । तथाऽत्रापि गुणत्रयकृत बन्धात्ययात्तदधिकविष्णुं गतो गुणात्ययीत्युच्यते । तथोक्तम्— 'लक्ष्म्यादिभिः कृतो बन्धो योऽनादिः पुरुषस्य तु । तमत्येतीह यो विद्वान् स विज्ञेयो गुणात्ययी ॥' ॥ २७ ॥

*इति श्रीमद्भगवद्गीतायाः विवरणे अन्वयप्रकाशिकायां चतुर्दशोऽध्यायः ॥*

**भाष्यम्**

**ब्रह्मणः मायायाः ॥ २७ ॥**

## *॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये चतुर्दशोऽध्यायः ॥*

*प०टी०*— 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इत्यत्र 'ब्रह्म'शब्दार्थमाह **ब्रह्मण इति** ॥ २७ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां चतुर्दशोऽध्यायः ॥*

*प्र०दी०*— 'ब्रह्मणो हि' इत्येतत् 'परब्रह्मणो हि' इति व्याचक्षते । तदसत् । 'प्रतिष्ठाऽहं' इति वचनात् । उपचारोऽसौ इति चेन्न । मुख्ये सम्भवति तदुपादानायोगादिति भावेनाह **ब्रह्मण इति** । मायेति प्रकृता महालक्ष्मीः ॥ २७ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां चतुर्दशोऽध्यायः ॥ १४ ॥*

*भा०दी०*— **प्रकृता महालक्ष्मीरिति** । 'मम योनिर्महद्ब्रह्म' इति प्रकृता मूलरूपभूतेत्यर्थः ॥ ॥ २७ ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां राघवेन्द्रयतिकृतायां भावदीपे चतुर्दशोऽध्यायः ॥*

*भा०र०*— **इति वचनादिति** । न हि स्वात्मैव स्वस्य प्रतिष्ठापक इति युज्यत इति भावः। ननु 'ब्रह्मणः' इत्यस्य 'परब्रह्मणः' इत्यर्थकत्वेऽपि न प्रतिष्ठापकत्वोक्तिविरोधः । विशिष्टस्याहं-पदार्थस्य प्रतिष्ठापकतया तत्संवलिते चिति तदुपचारोऽस्तु ? इति शङ्कते **उपचार इति** । प्रतिष्ठा-शब्दस्य गौणी वृत्तिरित्यर्थः । **मुख्य इति** । मुख्यं प्रतिष्ठापकत्वमेव प्रतिष्ठाशब्दार्थ इत्यभ्युपगम्य 'ब्रह्मणः' इत्यस्यार्थान्तरसम्भवे उपचरितार्थोपादानायोगादित्यर्थः । ननु 'मम योनिर्महद् ब्रह्म' इत्यत्र 'प्रकृतिः ब्रह्मशब्दार्थः' इति भाषितम् । अत्र पुनः 'माया ब्रह्मशब्दार्थ इति भाष्यते, तत्कथम् ? इत्यत आह **मायेतीति** । 'मायायाः' इति भाष्ये मायाप्रातिपदिकार्थः 'मम योनिर्महद् ब्रह्म' इति महाब्रह्मशब्देन प्रकृता महालक्ष्मीरेव, तस्याः मायायाः प्रकृतेश्च महालक्ष्म्या इत्यर्थ इति न विसंवाद इति भावः ॥ २७ ॥

*गीताक्षरार्थस्तु*—

'नान्यं गुणेभ्यः इत्यादि**गीताक्षरार्थस्तु**— एवं 'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः' इत्यत्र सङ्क्षेपेणोक्तानां त्रयाणां गुणानां बन्धकत्वं तत्तजन्यफलदातृत्वेन विविच्योक्तम् । तत्र शङ्का— एवं त्रैगुण्ये विविच्योक्ते तर्हि 'गुणाः एव स्वतन्त्राः, न ततोऽन्यः स्वतन्त्रः क्वचित्' इति । सा निरस्यते **नान्यमिति** । **द्रष्टा** जीवः **यदा गुणेभ्यः** सत्त्वादिभ्यः **अन्यं कर्तारं** परिणामि-कर्तारं **नानुपश्यति; गुणेभ्यश्च परम्** उत्तमं स्वतन्त्रं कर्तारं परमात्मानं **वेत्ति** च, **स** ज्ञानी **मद्भावं** मयि सत्तां निर्दुःखानन्दात्मिकां स्थितिम् **अधिगच्छति** प्राप्नोति ॥ १९ ॥

एवं सुखदुःखादिबन्धस्य गुणत्रयनिबन्धनत्वाद् तदत्यये सत्येव बन्धविमोकेन परमसुखावाप्ति-र्भवतीत्युच्यते **गुणानेतानिति** । **देही** देहाभिमानी जीवः **देहसमुद्भवान्** देहादिरूपसंसारोत्पादकान् **एतान्** युक्तान् **त्रीन् गुणान् अतीत्य** अतिक्रम्य जन्ममृत्युजरानिमित्तैः दुःखैः **विमुक्तोऽमृतमश्नुते** परं ब्रह्म प्राप्नोति । तत्प्राप्त्या परमानन्दमनुभवति ॥ २० ॥

'गुणानतीत्य' इत्युक्तेऽर्जुनस्य ज्ञीप्सा जातेत्युच्यते **अर्जुन उवाच– कैरिति** । हे **प्रभो** ! **एतान्** बन्धकत्वेनोक्तान् **त्रीन् गुणान्** सत्त्वादीन् **अतीतः** अतिक्रान्तवान् ज्ञानी **कैर्लिङ्गैः** लक्षणैः युक्तो भवति ? क आचारोऽस्य **किमाचारः** कीदृशाचारवान् ? **कथं** केनोपायेन **एतांस्त्रीन् गुणानतिवर्तते** अतिक्रामति ॥ २१ ॥

गुणातीतस्य कानि लक्षणानि ? कश्च तस्याचारः ? गुणात्ययोपायश्च कः ? इति ज्ञानिना-ऽप्यर्जुनेन विशेषजिज्ञासया सल्लोकं प्रति विजिज्ञापयिषया च कृतं प्रश्नत्रयं भगवतोत्तरितमित्युच्यते

**श्रीभगवानुवाच– प्रकाशमित्यादिना ।** **प्रकाशं** ज्ञानं चशब्दात् सुखं **प्रवृत्तिं** कर्मण्युद्योगं चशब्दात् तृष्णासङ्गादौ **मोहं** मिथ्याज्ञानं चशब्दात् अज्ञान-प्रमाद-आलस्य-निद्राश्च एतानि सत्त्वादिगुणकार्याणि **सम्प्रवृत्तानि प्रायो न द्वेष्टि, निवृत्तानि** प्रायो **न काङ्क्षति** च । 'स गुणातीत उच्यते' इति वक्ष्यमाणेनान्वयः ।

इदमुक्तं भवति— सत्त्वादयो गुणा द्विविधाः– स्थूलाः सूक्ष्माश्च । तत्र स्थूलेभ्यो लौकिकाः प्रकाश-प्रवृत्ति-मोहा जायन्ते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे **प्रायो न** स्तः, न तु सर्वथा । प्रारब्धवशात् कदाचित् सम्भवात् । द्वितीयेषु परमेश्वरविषयप्रकाश-प्रवृत्ति-मोहेषु प्रकाशप्रवृत्ती काङ्क्षति, मोहं तु द्वेष्ट्येवेति ॥ २२ ॥

एवं गुणातीतः कैर्लिङ्गैर्युक्तः ? इति प्रश्नस्योत्तरमुक्तम् । इदानीं किमाचारः ? इति प्रश्नस्योत्तरमुच्यते **उदासीनवदित्यादित्रिश्लोक्या** । यः पुमान् कर्मणां विषये **उदासीनवदासीनः** वर्तमानः 'काम्यकर्मण्युदासीनः, निष्कामकर्मणि प्रयतमानः' इति भावेन वतिप्रत्ययः कृतः । **गुणैः** सत्त्वादिभिः तत्कार्यैः सुखादिभिः **न विचाल्यते** उच्चनीचतालक्षणविकारवान् न क्रियते; **गुणाः** ईश्वरेच्छया नियता एव **वर्तन्ते** स्वकार्येषु प्रवर्तन्त इति **योऽवतिष्ठति** जानन् जोषमास्ते स **नेङ्गते** गुणकृतावैष्णवकर्मकरणाय न चेष्टते । 'भगवदधीना गुणाः स्वकार्यं कुर्वन्ति' इति जानन् यो वैष्णवान्येव कर्माण्याचरति; नेतराणि, स गुणातीत एवंविधाचार इति भावः ॥ २३ ॥

तस्यैवाचारान्तरमुच्यते **समदुःखसुख इति** ॥ समे दुःखसुखे यस्य, प्रायो हेयतया वैषयिकसुखमपि दुःखसमत्वेन यस्यानुभवारूढं स तथोच्यते । **स्वस्थः** प्रायेण निर्विकारः प्रायेण **समलोष्टाश्मकाञ्चनः** प्रायेण प्रियाप्रियवस्तुनोः उपनतयोः तुल्यबुद्धिः । अत एव भगवदुत्तमत्वे स्थिरमतिः । तुल्ये निन्दा आत्मसंस्तुती यस्य स तथा, प्रायेणात्मनो निन्दायां संस्तुतौ वोपनतायाम् अनुन्नाहः = उन्नाहहीनः ॥ २४ ॥

प्रायेण **मानापमानयोस्तुल्यः** । **तुल्यो मित्रारिपक्षयोः** इत्यत्रापि 'प्रायेण' इति योज्यम् । **सर्वारम्भपरित्यागी** प्रयोजनविशेषापेक्षयाऽपि अवैष्णवसर्वकर्मारम्भपरित्यागी यः **सः** अपि **गुणातीतः** गुणान् अतीतः = अतिक्रान्त इत्यत्र 'द्वितीया श्रितातीत...' इति द्वितीयासमासः ॥२५॥

एवं गुणातीतस्याचारमुक्त्वा केनोपायेन गुणानतीत्यैति ? इति प्रश्नस्योत्तरमुच्यते **मां चेति** । प्रश्नोत्तरसमुच्चये चशब्दः, एवार्थो वा । **अव्यभिचारेण** न विद्यते व्यभिचारः = अन्यगामित्वं यस्य

स तथा । तेन = अनन्यविषयेण **भक्तियोगेन** भक्तिलक्षणोपायेन **सेवते** उपास्ते **सः** अपरोक्षज्ञानी सन् **एतान्** बन्धकत्वेनोक्तान् त्रीन् **गुणान् समतीत्य** 'ब्रह्मभूयाय' इत्यत्र ब्रह्मशब्दः अत्र 'मम योनिर्महद् ब्रह्म' इति प्रकृतमहालक्ष्मीवचनः । 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इति वक्ष्यमाणत्वाच्च । भूय-शब्दश्च 'भुवो भावे' इति पाणिनिवचनाद् भावशब्दार्थः । भावश्च भवनम् । अन्यस्य अन्यभवना-योगाद् महालक्ष्मीवत् स्वयोग्यतापेक्षया भगवत्प्रियत्वमेव व्याख्येयमिति 'ब्रह्मभूयाय' इत्यस्य महालक्ष्मीवत् 'भगवत्प्रियत्वाय' इत्यर्थो भवति । **कल्पते** 'कृपू = सामर्थ्ये' समर्थो भवति = मुक्तो भवतीति यावत् ॥ २६ ॥

ननु 'मां चाव्यभिचारेण' इत्यनन्यया भक्त्या मदुपासने मदपरोक्षज्ञानप्रसादद्वारा मत्प्राप्ति-लक्षणमुक्तिर्भवतीति 'त्वत्प्राप्तिरेव मुक्तिः' इत्युक्तम् । तदयुक्तमिव ? त्वदन्यमहालक्ष्म्यादिदेवता-न्तरोपासनादिसाध्यतत्प्राप्तेरपि मुक्तित्वसम्भवात् 'श्रियं वसाना अतृतत्वमायन्', 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिश्रवणात् । त्वत्प्राप्तेः सुखदुःखहानिरूपत्वाभावेन अपुरुषार्थत्वाच्च, इत्याशङ्क्य महालक्ष्म्यादिदेवतानाम् अहमेवाधारः, मोक्षहेतुभक्त्युपासनादिसद्धर्माणाम् अनुष्ठापयि-ताऽपि अहमेव पुरुषार्थ इत्यभिसन्धायोच्यते **ब्रह्मण इति** । **ब्रह्मणः** महालक्ष्म्याः **अव्ययस्य** व्ययादिदोषहीनस्य **अमृतस्य** ब्रह्मादिमुक्तवर्गस्य **शाश्वतस्य** अक्षयफलकस्य **धर्मस्य** निष्कामस्य **एकान्तिकस्य** दुःखासम्भिन्नस्य **सुखस्य** च **अहमेव प्रतिष्ठा** प्रतिष्ठापकः । अयं चार्थः श्रुति-स्मृति-इतिहासादिसर्वप्रमाणप्रसिद्ध इति द्योतनाय हिशब्द इति ॥ २७ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यस्य टीकायाः टिप्पण्यां भावरत्नकोशसमाख्यायां सुरीन्द्रश्रीपादशिष्यसुमतीन्द्रतीर्थविरचितायां चतुर्दशोऽध्यायः समाप्तः ॥*

**गीतातात्पर्यनिर्णयः**

**ब्रह्मप्राप्तो मत्प्राप्त एव भवतीत्याह ब्रह्मणो हीति । मदवियोगात् तस्या अपि मत्स्थ एव भवतीत्यर्थः । तथापि मत्प्राप्तिक्रमविवक्षया तदुक्तिः । एकान्तिकस्य सुखस्य मोक्षस्य ॥ २७ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये चतुर्दशोऽध्यायः ॥*

***न्या०दी०***— गुणातीतस्य भगवत्प्राप्त्याद्येव वक्तव्यं, लक्ष्मीप्राप्तिः किमर्थमुच्यत इत्याशङ्कापरिहारत्वेन श्लोकमवतारयति **ब्रह्म प्राप्त इति** ॥ लक्ष्मीर्भगवन्तमाश्रित्यैव वर्तत इत्येवात्रोच्यते । न तु लक्ष्मीप्राप्त्या भगवत्प्राप्तिः । येन तदुक्तिः सङ्गता स्यादित्यतोऽभिप्रायमाह **मदिति** ॥ तत्स्थत्व इति शेषः । लक्ष्मीनारायणयोः अवियोगश्चेत् गुणातीतो मामाप्नोतीत्येव वक्तव्यम् । किं परम्परोक्त्येत्यत आह **तथापीति** ॥ यद्यपि तयोरवियोगः तथापि लक्ष्मीसमीपं प्राप्य तदनुज्ञया भगवत्प्राप्तिर्भवतीति परम्परोक्तिर्युक्तेत्यर्थः । "सुखस्यैकान्तिकस्य" इति तिरोहितार्थत्वाद्व्याचष्टे **एकान्तिकस्येति** ॥ एकमेवास्मादधिकमिति गणनेऽन्ते स्थितमेकान्तिकम् । तत्तु मोक्ष एवेति भावः ।

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां चतुर्दशोऽध्यायः समाप्तः ॥*

*भा०दी०*— **एकमेवेति** । अन्ते स्थितमित्यन्वयः । सर्वाधिकत्वेनान्ते स्थितमित्यर्थः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्दशोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ पञ्चदशोऽध्यायः

**गीता**

**श्रीभगवानुवाच—**

**ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

*वि०वि०*— अस्मिन्नध्याये समग्रसंसारस्वरूपं तदत्ययोपायविज्ञानादि प्रपञ्च्यते । विष्णोः सर्वोत्तमत्वात्, श्रियः परतन्त्रेषूत्तमत्वात्, चित्प्रकृतेरचेतनेषूत्तमत्वात्, ऊर्ध्वान्युत्तमानि विष्ण्वादीनि मूलानि यस्य स ऊर्ध्वमूलः । तं तत्र जगद्वृक्षस्य विष्णुः पृथिवीदेवतावत्पृथग्भूतं मूलम् । अचित्प्रकृतिर्मृद्वदुपादानतया मूलम् । तदधिष्ठानत्वेन चित्प्रकृतिरपि मूलभाग्भवेत् । अधोभागवदाद्यापेक्षया नीचा महदादयः शाखा यस्यासावधःशाखः, तम् । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । अश्ववच्चञ्चलत्वेन स्थितोऽश्वत्थः इति वा । तम् । चञ्चलत्वेऽपि सर्वात्मनाऽनुच्छिद्यमानः पूर्वब्रह्मकल्पे यथास्थितिस्तथा सर्वत्राऽपीत्यव्ययं प्राहुः । लोके पर्णोत्पत्तावेव फलदर्शनात् छन्दसां काममोक्षफलहेतुत्वादस्य जगद्वृक्षस्य छन्दांसि श्रुतीः पर्णान्याहुः । यस्तं जगद्वृक्षं वेद स वेदवित् ॥ ॥ १ ॥

*वा०ल०*— 'ऊर्ध्वमूलम्' इत्यत्र, ऊर्ध्वमूलम् ऊर्ध्वाः महत्तत्त्वादप्युपरितनाः सत्त्वादिगुणाः मूलं यस्य तम् । अधःशाखम् अधः शाखाः शाखास्थानीयाः देवर्षिमनुष्य पशुपक्षिदैत्यदानवादिरूपनानायोनयो यस्य तम् । अश्वत्थं श्वो न तिष्ठतीत्यश्वत्थः संसाराख्यवृक्षः, तम् । छन्दांसि वेदाः। पर्णानि पत्रस्थानीयानि ॥ १ ॥

***सा०सं०***— त्रयोदशाध्याये संसारहेतुभूतं प्रकृतिमहदहङ्कारादितत्त्वजातरूपं क्षेत्रशब्दितं जगत्स्वरूपम् उक्तम् । 'य एनं वेत्ति पुरुषम्' (१३-२६) इत्यादिना भगवदादिज्ञानरूपः तदत्ययोपायश्चोक्तः । तद्द्वयमत्र दर्शयति । ननु पूर्वाध्याय एव तद्द्वयं दर्शितमिति चेन्न । तत्र संसारहेत्वेकदेशगुणानामेव प्रवृत्तिर्दर्शिता । अत्र पुनः समग्रं संसारहेतुप्रकृत्यादिजगत्स्वरूपं प्रदर्श्य, तदत्ययेच्छामुत्पाद्य, तत्साधनजिज्ञासुं प्रति प्रागुक्ततदत्ययसाधनं प्रपञ्चयति । अत एव पूर्वानन्तर्यमस्य । तदत्ययसाधनप्रपञ्चनं प्रसङ्गादेव भगवन्महिमानं च दर्शयतीति ज्ञेयम् ।

जगत्स्वरूपं तावदाह **ऊर्ध्वेत्यादिसार्धश्लोकद्वयेन** । ऊर्ध्वशब्द उन्नतवाची सन् विष्णुचिदचित्प्रकृतिपरोऽत्र ज्ञेयः । विष्णोः सर्वोत्तमत्वात्, परतन्त्रेषु चित्प्रकृतेः सर्वोत्तमत्वात्, अचित्प्रकृतेरचेतनेषूत्तमत्वात् । ऊर्ध्वाः विष्णुचिदचित्प्रकृतयो वृक्षस्य मूलानीव मूलानि यस्य सविकाराव्यक्तादिप्रागुक्तपञ्चविंशतितत्त्वात्मकस्य जगदाख्यवृक्षस्य तम् **ऊर्ध्वमूलम्** । श्व एकरूपेण न तिष्ठतीति व्युत्पत्त्या, अश्ववच्चञ्चलत्वेन तिष्ठतीति वाऽश्वत्थनामकम् । 'सुपि स्थः' इति कः । 'आतो लोप इटि च' इत्याकारलोपः । तस्य तकारः । जगदाख्यं चिदचिदात्मकं वृक्षम् ।

तत्रायं विवेकः— प्रसिद्धवृक्षस्य धरादेवीवत् विष्णुर्जगद्वृक्षस्य पृथङ्मूलम् । अचित्प्रकृतिः सत्त्वादित्रिगुणात्मिका वृक्षस्य मृद्वत्परिणामितया मूलम् । त्रिमूलो हि जगद्वृक्षः । जडप्रकृतिरपि त्रिगुणात्मकत्वात् मूलत्रयात्मना त्रिभिर्गुणैः परिणमते । चित्प्रकृतिस्तु तदधिष्ठातृत्वात् मूलभागवज्ज्ञातव्येति । अधःशब्दो नीचवाची । विष्ण्वादिप्रागुक्तत्रितयापेक्षयाऽधः नीचाः पञ्चभूतसहिताः महदहङ्कारबुद्ध्योऽष्टौ पदार्थाः साभिमानिनः शाखा इव शाखाः यस्य तथा, तम् । **अव्ययं** सर्वथाऽनुच्छिद्यमानम् । पूर्वकल्पे यथा स्थितं तथैव कल्पान्तरेऽपि स्थितम् । प्रवाहतोऽनादिनित्यमिति यावत् । **प्राहुः** प्राज्ञा इत्यर्थः । लोके पर्णोत्पत्तावेव फलोदयदर्शनात्, छन्दसां काममोक्षरूपफलहेतुत्वात्, यस्य जगदाख्यवृक्षस्य छन्दांसि वेदवाक्यजातानि अभिमानिसहितानि पर्णानीव पर्णानि आहुः । एतेन जगद्वृक्षः काममोक्षरूपद्विफल इत्युक्तं भवति । **यस्तं जगद्वृक्षं वेद स वेदवित्** वेदार्थज्ञ इत्यर्थः ॥ १ ॥

***अ०प्र०***— ***अ०प्र०***— पूर्वाध्याये संसारसाधनैकदेशानां सत्त्वादिगुणानां प्रवृत्तिमुक्त्वा अध्या-यान्ते 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते' इत्यादिना परमेश्वरं एकान्तभक्त्या भजतः तत्प्रसादलब्धज्ञानेन ब्रह्मणः लक्ष्म्याः प्राप्तिर्भवतीति तद्द्वारा मत्प्राप्तिर्भवतीति उक्तम् । न च एकान्तभक्तिः ज्ञानं वा विरक्तस्य सम्भवतीति वैराग्यपूर्वकं ज्ञानमुपदेष्टुकामः तत्प्रसङ्गात् अलौकिकं भगवन्माहात्म्यं चोच्यते । प्रथमं तावत्सार्धश्लोकाभ्यां संसारस्वरूपवृक्ष इव शाखा यस्य तं विन-

श्वरत्वेन श्वः प्रभातपर्यन्तमपि स्थास्यतीति विश्वासानर्हत्वात् अश्वत्थं प्राहुः । प्रवाहरूपेणाचिच्छेदाव्ययं च प्राहुः । तत्रादौ संसारमूलजगतो वृक्षसाम्यमाह **ऊर्ध्वेति** ।

अथान्वयः— श्लोकक्रमेणैवान्वयः ।

हे अर्जुन !, ऊर्ध्वाः उत्तमाः मूलानि विष्णुः चित्प्रकृतिः त्रिगुणाश्च यथायथं मूलानि यस्यासौ ऊर्ध्वमूलः । यद्वा, संसारवृक्षस्य ऊर्ध्वं मूलम् । तत्र किं ऊर्ध्वं सूक्ष्मत्वात् कारणत्वात् महत्वात् नित्यत्वाच्चोर्ध्वं ब्रह्म ऊर्ध्वं ब्रह्मेत्युक्तम् । तर्हि ये कस्मिन् ब्रह्मणि कथमूर्ध्वमूलत्वमित्युक्ते जगत्कारणीभूतमायैव अस्य संसारवृक्षस्य मूलं मूलमायाया सकाशात् अधःशाखारूपेण अयं संसारवृक्षः परिणतः । तस्मात् ऊर्ध्वमूलः[१], अधःशाखं = अधोभागे शाखाः अस्य संसारवृक्षस्यास्तीति अधः शाखः । तं तथा । यद्वा, अधो निकृष्टं ब्रह्मादि जीवाः महदाद्यचेतनं च शाखा यस्य सोऽधःशाखः[२], अश्वत्थं = श्वोऽप्येकप्रकारेण न स्थास्यतीत्यश्वत्थः । अश्ववच्चाञ्चल्येन स्थितो वाऽश्वत्थः सदसज्जन्मादि विकारोपेत इत्यर्थः । सकारलोपः छान्दसः प्रतिक्षणे अस्य संसारवृक्षस्य विनाशित्वात्[३], अव्ययं = त्रिकालेऽपि प्रवाहरूपेण तत्तत्कालानुसारतो स्थित इति अव्ययमिति[४], प्राहुः = आहुः[५], छन्दांसि = वेदाः[६], यस्य = जगद्वृक्षस्य[७], पर्णानि = संरक्षणार्थानि इत्यस्य धर्माधर्मप्रतिपादनद्वारेण छायास्थानीयैः कर्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वापादनात् पर्णस्थानीया वेदाः[८], तं जगद्वृक्षं प्राहुरित्यन्वयः । यः तं वेद = यस्तमेवंभूतमश्वत्थं वेद एवं वेदानां मोक्षफलहेत्वात् पूर्णसाम्यं[११] सः वेदवित् = स एव वेदार्थवित् अथ वेदार्थत्वात् विष्णवाद्यपेक्षयेत्यर्थः[१३], संसारवृक्षमूलं ईश्वरः श्रीमन्नारायणः ब्रह्मादयस्तदंशाः शाखास्थानीयाः स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च वेदोक्तैः कर्मभिः सेव्यतमोपादितश्चेत्येतावानिह वेदार्थः । अत एव विद्वान् वेदविदिति स्तूयते ॥ १ ॥

**भाष्यम्**

**संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति । ऊर्ध्वो विष्णुः । "ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि द्रविणꣳसवर्चसम्" इति हि श्रुतिः । ऊर्ध्वः उत्तमः सर्वतः ।**

***प०टी०***— एतदध्यायार्थं दर्शयति **संसारेति** । **तदत्ययोपायो** निर्मानत्वादिकम् । तत्र 'ऊर्ध्व'शब्दस्य विष्णुविषयत्वं रूढियोगाभ्यां दर्शयति **ऊर्ध्व इति** ।

*प्र०दी०*— अध्यायप्रतिपाद्यमर्थमाह **संसारेति** । संसरति अनेन इति संसारः । प्रकृत्यादिकं क्षेत्रम् । पूर्वाध्याये संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् । अत्र पुनः समग्रं संसारस्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधन प्रपञ्चयति । तत्प्रसङ्गादलौकिकं भगवन्महिमानं च दर्शयति अनेनाध्यायेनेत्यर्थः ।

जगद्वृक्षस्योर्ध्वमूलत्वं घटयितुमूर्ध्वशब्दाभिधेयं तावदाह **ऊर्ध्व इति** । कुतः ? श्रौतप्रयोगादित्याह **ऊर्ध्वेति** । आदौ तावदहम् **ऊर्ध्वेन** विष्णुना **पवित्रः** निष्पापोऽस्मि । ततो वाजिरूपश्च नेता च । वाजिनीः सूर्यः । तत्र वसतीति वाजिनीवसुः । तेन **वाजिनीवसुना** विष्णुना अमृतं प्रारब्धकर्मनिर्मुक्तश्च **अस्मि** । 'स तेजसि सूर्ये सम्पन्नः' इति श्रुतेः । ततश्च तेनैव **सवर्चसं** सप्रभम् । अनुभूयमानमिति यावत् । द्रविणं धनं सुखं च **अस्मि** इत्यर्थः ।

वर्चसशब्दः अकारान्तोऽप्यस्ति । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यत्र योगविभागात् समासान्तो वा । विष्णुप्रसङ्गदर्शनाय श्रुतिशेषोदाहरणम् । इदानीं तस्य तत्र प्रवृत्तौ निमित्तमाह **ऊर्ध्व इति** । उन्नतो हि ऊर्ध्व उच्यते । अतो ब्रह्मादिलोकस्थत्वादिलक्षणा सूक्ष्मत्वादिगुणयोगो वा नाश्रयणीयः । **सर्वतः** सर्वस्मात् प्रपञ्चात् । **सर्वैश्च** गुणैः ।

*भा०दी०*— सम्पूर्वात् 'सृगतौ' इत्यतः करणे घञ् इत्युपेत्याह **संसरतीति** । **क्षेत्रमिति** । त्रयोदशाध्याये 'महाभूतान्यहङ्कारः' इति श्लोकोक्तं प्रकृत्यादीत्यर्थः । **वृत्तमिति** । 'सत्त्वं रजस्तमः' इत्यादिना कार्यप्रवृत्तिर्दर्शितेत्यर्थः । **संसारेति** । प्रकृत्यादिक्षेत्रस्वरूपमित्यर्थः ।

**प्रागुक्तमिति** । प्रथमषट्काद्युक्तं निवृत्तकर्म भगवज्ज्ञानध्यानरूपं साधनमित्यर्थः । 'कुतः' इत्यनन्तरं 'इत्यतः' इति शेषः । **इति श्रुतेरिति** । षट्प्रश्नश्रुतेरित्यर्थः । नपुंसकद्रविणशब्दे विशेषणत्वात् 'वर्चसः' इति भाव्यमित्यत आह **वर्चसशब्द इति** । **योगविभागादिति** । ब्रह्मशब्दात् हस्तिशब्दाच्च परस्य वर्चःशब्दस्याचप्रत्यये 'ब्रह्मवर्चसम्' इत्यादि सिद्ध्यर्थं अयं एको योगः, 'वर्चसः' इति पुनरन्यो योगो विभज्य कर्तव्यः । अन्यत्रापि वर्चसशब्दः समासान्तो भवतीत्यर्थः इति । तथाच 'सवर्चसम्' इत्यकारान्तः साध्विति भावः । **अत इति** । मुख्यार्थसम्भवादित्यर्थः । **ब्रह्मादीति** । अत्युन्नतसत्यलोकवैकुण्ठलोकस्थत्वाद् ऊर्ध्व इति लक्षणा वा सूक्ष्मत्वाद् अतीन्द्रियत्वादिगुणयोगाद् गौणीवृत्तिर्वा न आश्रयणीयेति भावः ।

*भा०र०*— **अध्यायेति** । पञ्चदशाध्यायेत्यर्थः । अभ्यर्हितत्वात् 'एतद्' इत्यनुक्तिः । 'त्रयोदशाध्यायोक्तम्' इति तात्पर्यनिर्णयवचनात्, 'ऊर्ध्वमूलम्' इत्यादौ प्रकृत्यादिक्षेत्रस्यैवाभिधानाच्चाह

**संसरत्यनेनेति** । सम्पूर्वात् 'सृ = गतौ' इत्यतः करणे घञि निष्पन्नः संसारशब्द इति भावः । **प्रकृत्यादिकम्** प्रकृतिकारणकम् । **क्षेत्रम्** 'महाभूतानि' इत्यादिनोक्तानि चतुर्विंशतितत्त्वानीति व्याख्येयम् । 'प्रकृतिशब्देन महाभूतानि इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते' इति त्रयोदशाध्यायटीकोक्तेः । तेन 'त्रयोदशाध्याये प्रकृतेः क्षेत्रत्वानभिधानाद् कथमेवमुक्तिः ?' इति चोद्यं निरस्तम् ।

केचित्तु— 'हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् । अव्यक्तादि शरीरं तत् क्षेत्रं तु क्षीयतेऽत्र यत्' इति तात्पर्यनिर्णये अव्यक्तशब्दितप्रकृतिग्रहणात् अत्र 'प्रकृत्यादिकम्' इत्युक्तम् । एवं च यथाश्रुतमपि समञ्जसमित्याहुः । तदभव्यमिव । अव्यक्तशब्देन तत्रापि प्रकृतेरनभिप्रेतत्वात्, अत एव *न्यायदीपिका*— 'देहादितया परिणतैतदुपघातादेव जीवो हिंसित इत्युच्यते' इति । एतदुपघातात् = देहादितया परिणताव्यक्तशब्दितप्रकृत्युपघाताद् इति तदर्थः । एवं च न्यायदीपिकारीत्या अव्यक्तशब्देन तात्पर्यकृदुपात्ताव्यक्तपरम्परापरिणामदेहादेरेव ग्राह्यतया आहत्य प्रकृतेर्न क्षेत्रत्वलाभ इति **अपरे** । **अन्ये तु** 'ईश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमुच्यते' इति त्रयोदशाध्यायटीकोक्तेः प्रकृतेरपि क्षेत्रत्वविवक्षया प्रकृत्यादिकं क्षेत्रमित्युक्तमिति वदन्ति ।

ननु समनन्तरातीताध्याये क्षेत्रस्य तदत्ययोपायस्य च निरूपितत्वाद् इह पुनस्तदुक्तौ पुनरुक्तिः ? त्रयोदशाध्यायार्थविवेचनपरत्वे चास्य तदानन्तर्यापत्तिः ? संसार-तदत्ययोपायविज्ञानानां अत्र प्रतिपादने वाक्यभेदापत्त्या एकवाक्यता च न स्यात् ? कथं चानन्तर्यसङ्गतिः ? इत्यत आह **पूर्वाध्याय इति** । वृत्तं वर्तनम् = स्वस्वकार्यप्रवर्तकत्वरूपा स्थितिः । **तत्साधनजिज्ञासुं** संसारात्ययसाधनज्ञानेच्छुम् । 'अन्नं बुभुक्षुः' इति महाभाष्यप्रयोग इव 'साधनजिज्ञासुम्' इति प्रयोगो युक्तः । **प्रागुक्तम्** आ षष्ठसमाप्तेरुक्तं **साधनम्** 'तदत्ययोपायो निर्मानत्वादिकम्' इति *भावप्रदीपिका* । **तत्प्रसङ्गात्** साधनप्रपञ्चप्रसङ्गात् । तथाच पूर्वाध्याये एकदेशकीर्तनम्, अत्र तु समग्रक्षेत्रप्रदर्शनम्, तदपि साधनप्रपञ्चनार्थमेव क्रियत इति न पुनरुक्तिः । अत एवानन्तरसङ्गतिश्च लब्धा । विज्ञानोक्तिश्च प्रासङ्गिकी । साधनं तु प्राधान्येन प्रतिपिपादयिषितम् इत्यध्यायैक्यं चोपपद्यत इति भावः ।

'विलक्षणतया ज्ञातव्यं माहात्म्यम् = विज्ञानम्' इत्यभिप्रेत्योक्तम् **अलौकिकं महिमानमिति** ॥ **घटयितुम्** वृक्षस्योर्ध्वमूलत्वम् अदृष्टचरम् इति; तद्घटनां कर्तुं **कुतः** इत्यनन्तरं 'चेत्' इति शेषः । विष्णुनाऽपरोक्षीकृतेन निष्पापः = निर्गतानि पापानि यस्मात् स तथा, निर्गतः पापेभ्य इति वा । **तथा च** सूत्रम्— 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति । ततः = निष्पापत्वा-

नन्तरम् 'वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते' इति तैत्तिरीयभाष्यं हृदि निधायाह **वाजि-रूपश्चेति**। वसतेरौणादिके कर्तरि उप्रत्यय एव वसुशब्दश्च इति भावेनोक्तम् **वसतीति**। 'अमृतम्' इत्यस्यार्थः **प्रारब्ध इति**। सूर्ये स्थितस्य विष्णोः प्रारब्धकर्मनिर्मोचकत्वे प्रमाणम् **स तेजसि इति**। 'यथा पादोदरस्त्वचा विनिर्मुच्यते, एवमेवायमात्मा पाप्मभिर्विमुच्यते' इति शेषः। **तेनैव** सूर्यस्थितविष्णुनैव, तत्प्रसादेनैव। धनार्थो द्रविणशब्दः प्रेमास्पदत्वसादृश्यात् सुखमत्र ग्राह्यमिति भावनोक्तम् **सुखं चेति**। स्वयोग्यपूर्णानन्दरूप इत्यर्थः।

'प्रारब्धकर्मनिर्मुक्तः' इत्यनेन समुच्चयार्थश्चशब्दः। द्रविणविशेषणं हि वर्चःशब्दः। अतः 'सवर्चः' इत्येव स्यात् ?, कथं 'सवर्चसम्' इति निर्देशः ? इत्यत आह **वर्चसशब्द इति**। 'यशसं वीरवत्तमम्' इत्यादौ यशःशब्द इव वैदिकप्रयोगादेव अकारान्तताऽप्यस्तीति विज्ञायत इति भावः। **योगविभागात्** 'ब्रह्महस्तिभ्यां वर्चसः' इत्यत्र 'ब्रह्महस्तिभ्याम्' इति एको योगः, 'वर्चसः' इत्यपर इति सूत्रविभागात्, तस्य चेष्टसिद्ध्यर्थत्वाद् वर्चःशब्दस्य समासान्तेऽच्प्रत्यये तस्याकारा-न्तत्वमिष्टं सिद्ध्यतीति भावः। उपलक्षणमेतत्। 'अच् प्रति-अनु-अवपूर्वात् सामलोम्नः' इत्यत्र 'अच्' इति योगविभागात् पद्मनाभशब्द इवात्रापि अच्प्रत्यय इत्यपि ज्ञेयमिति **केचित्**। ऊर्ध्व-शब्दस्य विष्णौ श्रौतप्रयोगदर्शनाय 'ऊर्ध्वपवित्रः' इत्यंश एवोदाहर्तव्ये किमिति 'वाजिनीवस्वमृत-मस्मि' इत्यधिकांशोदाहरणम् ? इत्यत आह **विष्णुप्रसङ्गेति**। वाजिनीशब्दस्तावद् उक्तव्युत्पत्त्या सूर्यार्थकः। सूर्ये वसंश्च विष्णुरेव। 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इति पुराण-वचनादिति भावः।

**तस्य** ऊर्ध्वशब्दस्य **तत्र** विष्णौ। उत्तमत्वं कथम् ऊर्ध्वशब्दस्य प्रवृत्तौ निमित्तम् ? इत्यत-स्तदुपपादयति **उन्नतो हीति**। 'उन्नतः' इति 'उच्चः' इति 'उत्तमः' इति चानर्थान्तरमिति भावः। **अत इति**। मुख्यार्थेऽनुपपत्त्यभावादित्यर्थः। **लक्षणेति**। ऊर्ध्वत्वेन निमित्तेन सत्यादिलोकार्थ-कोर्ध्वशब्दस्य तत्स्थे विष्णौ लक्षणेत्यर्थः। **सूक्ष्मत्वादिगुणयोग इति**। 'सूक्ष्मत्वात् कारणत्वात् नित्यत्वात् महत्त्वाच्चोर्ध्वमिति ब्रह्मोच्यते' इति *शङ्करीत्या* अतीन्द्रियत्वादिगुणेन ध्रुवमण्डलत्वाद् ऊर्ध्ववस्तुसादृश्याद् ऊर्ध्वशब्दस्य विष्णौ गौणी वृत्तिर्वा नाश्रयणीयेत्यर्थः। ऊर्ध्वशब्देन उच्चपर्यायेण उत्तमत्वं प्राप्तम्। तच्च सप्रतियोगिकम्, इत्यतो भाष्ये प्रतियोगिसमर्पणाय 'सर्वतः' इत्युक्तम्। तदनूद्यार्थमाह **सर्वतः सर्वस्मादिति**। चेतनाचेतनात्मकादित्यर्थः। 'तृतीयार्थे तसिः' इति भावेन तस्य विवक्षितमर्थमाह **सर्वैश्च गुणैरिति**। स्वतन्त्रत्वप्रमुखैः शुभधर्मैरित्यर्थः।

भाष्यम्

**अधः निकृष्टम् । शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिः तथा सर्वत्रापीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वम् । न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ॥१॥**

***प०टी०***— 'अधःशाखम्' इत्येतद्व्याचष्टे **अध इति** । भूतानि पञ्च देवादीनि च शाखा इत्यर्थः । 'अश्वत्थ'शब्दं जगत्परतया योजयति **श्वोऽपीति** । तर्ह्युत्तरपदकोप इत्यत आह **तथाऽपीति** । महाप्रलये सर्वथाऽप्युच्छेदोऽस्तीत्याह **पूर्वेति** । कया विवक्षया छन्दसां पर्णत्वम् ? इत्यत आह **फलेति** । पर्णानां फलकारणत्वं कथम् ? इत्यत आह **न हीति** ॥ १ ॥

***प्र०दी०*— अधःशाखम्** इत्येतद्घटयन् अधःशब्दार्थं तावदाह **अध इति** । शाखाः काः ? इत्यत आह **शाखा इति** । तानि हि मूलापेक्षया अपकृष्टानि ।

ननु वृक्षमात्रस्य सारूप्यमभिदधता कथमश्वत्थत्वम् अस्य उच्यते ? इत्यत आह **श्वोऽपीति** । 'सुपि स्थः' इति कः । श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् । श्वः स्थाता श्वत्थः । श्वत्थो न भवतीति **अश्वत्थः** । 'किमुत कालान्तरे' इति, **अपिशब्दः** ।

ननु पदार्थानां बहुकालस्थायित्वदर्शनात् कथमेतदित्यत आह **एकेति** । 'तिष्ठति' इति लुडर्थे अनादरसूचनाय लट् । अथवा **अपिशब्देन** वर्तमानातीतयोः समुच्चयः । ततः क्रियाप्रबन्धे लट् । तर्हि 'अव्ययं' इति व्याघात इत्यत आह **तथाऽपीति** । विकारित्वेऽपि । एतदपि नास्ति । जगत्प्रवाहस्य प्रलये व्ययादित्यत आह **पूर्वेति** । छन्दसां पर्णत्वं घटयति **फलेति** । फलकारणत्वसादृश्यादित्यर्थः । अत्र फलं मोक्षादिकम् । **छन्दसां** वेदानाम् । स्यादिदं यदि पर्णानां फलकारणत्वं स्यात् । तदेव कुतः ? अन्वयव्यतिरेकाभ्यामित्याह **न हीति** । किं तु जात एवेत्यन्वयोऽपि वाच्यः ॥ १ ॥

***भा०दी०***— **सुपि स्थ इति** । सुबन्ते उपपदे 'ष्ठा गतिनिवृत्तौ' इत्यतः कप्रत्ययो भवतीति कप्रत्यय इत्यर्थः । श्वस्शब्दोपपदात् स्थाधातोः कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे सकारस्य षत्वे सलोपे च अश्वत्थ इति रूपमिति भावः । ननु 'अनद्यतने लङ्' इति सूत्रे भविष्यदनद्यतने काले लृट् भवतीत्युक्तत्वात् भाष्ये अनद्यतनवाचिनः 'श्वः' इत्यस्य प्रयोगात् 'स्थाता' इति प्रयोक्तव्यम् । कथं 'तिष्ठति' इति प्रयोगः ? इत्यत आह **तिष्ठतीति लुडर्थ इति** । 'व्यत्ययो

बहुलम्' इत्युक्तेरिति भावः । किमर्थमेवमुक्तम् ? 'स्थाता' इत्येव कुतो **नोक्तम्** ? इत्यत आह **अनादरेति** । कालविशेषे अनादरसूचनायेत्यर्थः । **वर्तमानेति** । श्व इति पदेन हि अद्यतनकालस्य ततः पूर्वतनकालस्य च इत्यर्थः । **ततः क्रियाप्रबन्धे लडिति** । अस्यार्थो द्वादशाध्याये एव उक्तो ध्येयः ॥ १ ॥

*भा०र०*— कथमनेन घटनाप्रतीतिः ? इत्यत उपपादयति **तानि हीति** । भूतानीत्यर्थः । **अपकृष्टानि** अप्रधानानि । **सुपि स्थ इति क इति** । सुबन्त उपपदे 'ष्ठा = गतिनिवृत्तौ' इति धातोः कप्रत्ययो भवतीति सूत्रात् कप्रत्यय इत्यर्थः । कित्त्वाद् 'आतो लोप इटि च' इत्याकार-लोपश्चेति भावः । तथापि 'श्वत्थः' इति कथम् ? इत्यत उक्तम् **श्वसः सकारस्येति** । कुत एतद् द्वयम् ? इत्यत उक्तम् **निरुक्तत्वादिति** । 'वर्णागमो वर्णविपर्ययश्च तथाऽपरौ वर्णविकारनाशौ' इति वचनात् सकारस्य तकारो विकारः, 'धात्वादेः षः सः' इति शास्त्रप्राप्तस्य धातुसकारस्य लोपश्च द्रष्टव्य इत्यर्थः । श्वस्तनकालस्य भविष्यदनद्यतनकालत्वात् तत्र च अनद्यतने लुड्विधानात् कथं 'श्वस्तिष्ठति' इति विग्रहप्रदर्शनम् ? इत्यतो लुड्विधानानुसारेण विग्रहमाह **श्वः स्थातेति** । एवं तर्हि भाष्ये 'तिष्ठते' इति कथं लट्प्रयोगः ? इत्यत आह **तिष्ठतीति लुडर्थे चायं लडिति** । 'व्यत्ययो बहलुम्' इति वचनादिति भावः । व्यत्ययाभ्युपगमानुशयाद् आह **अथवेति** । **वर्तमानातीतयोः** कालयोः । एवमपि अद्य पूर्वेद्युश्च न तिष्ठतीति लडयुक्त एव ? इत्यत उक्तम् **तत इति** । क्रियाणां प्रबन्धः क्रियाप्रबन्धः = सातत्येनानुष्ठानम्, तस्मिन् गम्यमाने विहितः यः लट् सोऽत्र निष्पाद्य इत्यर्थः ।

यद्यपि 'नानद्यतनवत् क्रियाप्रबन्ध-सामीप्ययोः' इति सूत्रे भूतानद्यतने भविष्यदनद्यतने च यौ लट्लुटौ विहितौ तयोः प्रतिषेधः क्रियते 'अनद्यतनवत् प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये गम्यमाने' इति च लुट्लटोरनद्यतने प्रतिषेध एव कृतः, न पुनर्लड् विहितः । तथापि सूत्रे 'अद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति कर्तव्ये यद् द्वौ प्रतिषेधौ प्रायुङ्क्त तद् यथाप्राप्तस्यापि अभ्यनुज्ञानाय इति वृत्तिकारवचनेन भूत-भविष्यत्-अनद्यतनवत् प्रत्ययौ न भवत इत्यनवगमेन अनद्यतने प्रतिषेधानवगमाद् अद्यतनप्रत्ययो लड् भवत्येवेति भावेन 'क्रियाप्रबन्धे लट्' इत्युक्तमिति **स्वामिनः** । **केचित्तु** 'अनादरसूचनाय' इति पाठमुपलभ्य अनादरः = अतात्पर्यम्, लुटि प्रयुक्ते श्वस्तनकाले तात्पर्यं विज्ञायेत, तथा भविष्यकाले एव अवस्थानाभावः, न वर्तमानातीतकालयो-रित्यापद्येत । लटि तु प्रयुक्ते तेन वर्तमानकालताप्रतीत्या 'श्वस्तिष्ठति' इत्यनयोः पदयोः अनन्वयात्, आप्तवाक्यस्य चाप्रामाण्यायोगात् श्वस्तनकाले वक्तुस्तात्पर्याभावो विज्ञायत इति व्याख्याय, 'ननु

**भाष्यम्**

**अधः निकृष्टम् । शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिः तथा सर्वत्रापीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वम् । न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ॥१॥**

*प०टी०*— 'अधःशाखम्' इत्येतद्व्याचष्टे **अध इति** । भूतानि पञ्च देवादीनि च शाखा इत्यर्थः । 'अश्वत्थ'शब्दं जगत्परतया योजयति **श्वोऽपीति** । तर्ह्युत्तरपदकोप इत्यत आह **तथा-ऽपीति** । महाप्रलये सर्वथाऽप्युच्छेदोऽस्तीत्याह **पूर्वेति** । कया विवक्षया छन्दसां पर्णत्वम् ? इत्यत आह **फलेति** । पर्णानां फलकारणत्वं कथम् ? इत्यत आह **न हीति** ॥ १ ॥

*प्र०दी०*— **अधःशाखम्** इत्येतद्घटयन् अधःशब्दार्थं तावदाह **अध इति** । शाखाः काः ? इत्यत आह **शाखा इति** । तानि हि मूलापेक्षया अपकृष्टानि ।

ननु वृक्षमात्रस्य सारूप्यमभिदधता कथमश्वत्थत्वम् अस्य उच्यते ? इत्यत आह **श्वोऽपीति** । 'सुपि स्थः' इति कः । श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् । श्वः स्थाता श्वत्थः । श्वत्थो न भवतीति **अश्वत्थः** । 'किमुत कालान्तरे' इति, **अपिशब्दः** ।

ननु पदार्थानां बहुकालस्थायित्वदर्शनात् कथमेतदित्यत आह **एकेति** । 'तिष्ठति' इति लुडर्थे अनादरसूचनाय लट् । अथवा **अपिशब्देन** वर्तमानातीतयोः समुच्चयः । ततः क्रियाप्रबन्धे लट् । तर्हि 'अव्ययं' इति व्याघात इत्यत आह **तथाऽपीति** । विकारित्वेऽपि । एतदपि नास्ति । जगत्प्रवाहस्य प्रलये व्ययादित्यत आह **पूर्वेति** । छन्दसां पर्णत्वं घटयति **फलेति** । फलकारणत्वसादृश्या-दित्यर्थः । अत्र फलं मोक्षादिकम् । **छन्दसां** वेदानाम् । स्यादिदं यदि पर्णानां फलकारणत्वं स्यात् । तदेव कुतः ? अन्वयव्यतिरेकाभ्यामित्याह **न हीति** । किं तु जात एवेत्यन्वयोऽपि वाच्यः ॥ १ ॥

*भा०दी०*— **सुपि स्थ इति** । सुबन्ते उपपदे 'ष्ठा गतिनिवृत्तौ' इत्यतः कप्रत्ययो भवतीति कप्रत्यय इत्यर्थः । श्वस्शब्दोपपदात् स्थाधातोः कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे सकारस्य षत्वे सलोपे च अश्वत्थ इति रूपमिति भावः । ननु 'अनद्यतने लङ्' इति सूत्रे भविष्य-दनद्यतने काले लृट् भवतीत्युक्तत्वात् भाष्ये अनद्यतनवाचिनः 'श्वः' इत्यस्य प्रयोगात् 'स्थाता' इति प्रयोक्तव्यम् । कथं 'तिष्ठति' इति प्रयोगः ? इत्यत आह **तिष्ठतीति लुडर्थ इति** । 'व्यत्ययो

बहुलम्' इत्युक्तेरिति भावः । किमर्थमेवमुक्तम् ? 'स्थाता' इत्येव कुतो नोक्तम् ? इत्यत आह **अनादरेति** । कालविशेषे अनादरसूचनायेत्यर्थः । **वर्तमानेति** । श्व इति पदेन हि अद्यतनकालस्य ततः पूर्वतनकालस्य च इत्यर्थः । **ततः क्रियाप्रबन्धे लडिति** । अस्यार्थो द्वादशाध्याये एव उक्तो ध्येयः ॥ १ ॥

***भा०र०***— कथमनेन घटनाप्रतीतिः ? इत्यत उपपादयति **तानि हीति** । भूतानीत्यर्थः । **अपकृष्टानि** अप्रधानानि । **सुपि स्थ इति क इति** । सुबन्त उपपदे 'ष्ठा = गतिनिवृत्तौ' इति धातोः कप्रत्ययो भवतीति सूत्रात् कप्रत्यय इत्यर्थः । कित्त्वाद् 'आतो लोप इटि च' इत्याकार-लोपश्चेति भावः । तथापि 'श्वत्थः' इति कथम् ? इत्यत उक्तम् **श्वसः सकारस्येति** । कुत एतद् द्वयम् ? इत्यत उक्तम् **निरुक्तत्वादिति** । 'वर्णागमो वर्णविपर्ययश्च तथाऽपरौ वर्णविकारनाशौ' इति वचनात् सकारस्य तकारो विकारः, 'धात्वादेः षः सः' इति शास्त्रप्राप्तस्य धातुसकारस्य लोपश्च द्रष्टव्य इत्यर्थः । श्वस्तनकालस्य भविष्यदनद्यतनकालत्वात् तत्र च अनद्यतने लुड्विधानात् कथं 'श्वस्तिष्ठति' इति विग्रहप्रदर्शनम् ? इत्यतो लुड्विधानानुसारेण विग्रहमाह **श्वः स्थातेति** । एवं तर्हि भाष्ये 'तिष्ठते' इति कथं लट्प्रयोगः ? इत्यत आह **तिष्ठतीति लुडर्थे चायं लडिति** । 'व्यत्ययो बहलुम्' इति वचनादिति भावः । व्यत्ययाभ्युपगमानुशयाद् आह **अथवेति** । **वर्तमानातीतयोः** कालयोः । एवमपि अद्य पूर्वेद्युश्च न तिष्ठतीति लडयुक्त एव ? इत्यत उक्तम् **तत इति** । क्रियाणां प्रबन्धः क्रियाप्रबन्धः = सातत्येनानुष्ठानम्, तस्मिन् गम्यमाने विहितः यः लट् सोऽत्र निष्पाद्य इत्यर्थः ।

यद्यपि 'नानद्यतनवत् क्रियाप्रबन्ध-सामीप्ययोः' इति सूत्रे भूतानद्यतने भविष्यदनद्यतने च यौ लट्लुटौ विहितौ तयोः प्रतिषेधः क्रियते 'अनद्यतनवत् प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये गम्यमाने' इति च लुट्लटोरनद्यतने प्रतिषेध एव कृतः, न पुनर्लड् विहितः । तथापि सूत्रे 'अद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति कर्तव्ये यद् द्वौ प्रतिषेधौ प्रायुङ्क्त तद् यथाप्राप्तस्यापि अभ्यनुज्ञानाय इति वृत्तिकारवचनेन भूत-भविष्यत्-अनद्यतनवत् प्रत्ययौ न भवत इत्यनवगमेन अनद्यतने प्रतिषेधानवगमाद् अद्यतनप्रत्ययो लड् भवत्येवेति भावेन 'क्रियाप्रबन्धे लट्' इत्युक्तमिति **स्वामिनः** । **केचित्तु** 'अनादरसूचनाय' इति पाठमुपलभ्य अनादरः = अतात्पर्यम्, लुटि प्रयुक्ते श्वस्तनकाले तात्पर्यं विज्ञायेत, तथा भविष्यकाले एव अवस्थानाभावः, न वर्तमानातीतकालयो-रित्यापद्येत । लटि तु प्रयुक्ते तेन वर्तमानकालताप्रतीत्या 'श्वस्तिष्ठति' इत्यनयोः पदयोः अनन्वयात्, आप्तवाक्यस्य चाप्रामाण्यायोगात् श्वस्तनकाले वक्तुस्तात्पर्याभावो विज्ञायत इति व्याख्याय, 'ननु

श्चस्तिष्ठति' इत्युक्तत्वात् तत्र तात्पर्याभाव इत्ययुक्तम् ? नियामकाभावेन वैपरीत्यस्यापि सम्भवात्, इत्याशङ्क्य पक्षान्तरमाह 'अथवेति' इति व्याकृतवन्तः ।

**तर्हि** एकप्रकारेण बहुकालव्यापित्वे **व्याघातः** एकप्रकारेण अनवस्थानस्य एकप्रकारेण अवस्थानलक्षणाव्ययत्वेन विप्रतिषेध इत्यर्थः । 'तथापि' इत्यस्यार्थः **विकारित्वेऽपीति** । **एतदपि** 'न प्रवाहव्ययः' इत्येतदपि । **प्रलये** सर्वकार्यध्वंसाधिकरणकाले । ननु फलकारणत्वलिङ्गेन कथं पर्णत्वानुमानम् ? यागादृष्टादौ व्यभिचारात् ? इत्यत आह **फलकारणत्वसादृश्यादित्यर्थ इति** । फलशब्देन प्रसिद्धकदलीफलादिग्रहणे कथं तत्कारणत्वं छन्दसाम् ? इत्यत आह **तत्र फलमिति** । **तत्र** भाष्ये । **मोक्षादिकं** विवक्षितम्' इति शेषः । मोक्षादिरूपं फलं च छन्दोभिरेव निष्पादनीयमिति भावः। गायत्री-उष्णिग्-अनुष्टुबादिप्रतीतिनिरासायोक्तम् **वेदानामिति** । **कुतः** 'इत्यतः' इति शेषः। भाष्ये प्रथमतो व्यतिरेकोक्तिः व्यभिचाराभावं द्योतयितुम् इति मनसि निधाय 'अन्वयव्यतिरेकाभ्याम्' इति स्वोक्त्यनुसारेणाह **किन्तु जात एवेतीति** । तथा च वक्ष्यते 'पत्रेभ्यो हि फलं जायते' इति ॥ १ ॥

**गीतातात्पर्यनिर्णयः**

**त्रयोदशाध्यायोक्तं विविच्य दर्शयति ।**

***न्या०दी०*— एतदध्यायप्रतिपाद्यं दर्शयति त्रयोदशेति ॥ यत् त्रयोदशाध्याये जगत्स्वरूपं वर्णितं तदस्मिन् अध्याये विविच्य दर्शयति । तस्यैव संसाररूपत्वात् । संसारं जिहासता तत्स्वरूपस्य ज्ञातव्यत्वात् । यश्च तत्र संसारात्ययोपायो निरूपितस्तं चात्र दर्शयतीत्यर्थः ।**

***भा०दी०*— जगत्स्वरूपमिति** । महानहङ्कार इत्यादिना प्रकृतिमहदादिचतुर्विंशतितत्त्वात्मकमिच्छाद्वेषात्मकं इच्छाद्वेषादिविकारसहितं सदैवतं यज्जगत्स्वरूपमुक्तमित्यर्थः । संसारस्वरूपं दर्शयति इति भाष्याविरोधायाह **तस्यैवेति** । संसरत्यनेन इति व्युत्पत्त्येति भावः । जिहासता त्यक्तुमिच्छतेत्यर्थः ॥ **निरूपित इति** । ''य एनं वेत्ति पुरुषमि''त्यादिना भगवदादिज्ञानरूपोपाय इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**''पृथङ् मूलं हरिस्तस्य जगद्वृक्षस्य भूमिवत् ।**
**सत्त्वादियुक्ते चिदचित्प्रकृती मूलभागवत् ॥**

*प्रका०*— ऊर्ध्वमूलमित्यादेरर्थमाह **पृथङ्मूलमित्यादिना** । त्रयोदशाध्याये यत् क्षेत्रशब्दोक्तं तदश्वत्थशब्देनोच्यते । अश्वत्थसाम्यात् । सत्त्वादियुक्ते चिदचित्प्रकृती । **मूलभागवत्** इत्यनेन सत्त्वरजस्तमोगुणत्रिमूलो जगदश्वत्थ इत्युक्तं भवति । मृदाद्यचेतनेत्यचेतनप्रकृतिरित्यर्थः ।

*न्या०दी०*— तत्र अप्रतिपत्त्यन्यथाप्रतिपत्तिनिरासाय श्रुत्यैव अध्यायो व्याख्यायते **पृथगिति** ॥ तत्र ऊर्ध्वमूलमित्यस्यार्थः पृथगिति । जगद्वृक्षस्य हरिर्मूलं चेत् तर्हि तस्य जगदेकदेशत्वं स्यादित्यतः पृथगित्युक्तम् । यथा प्रसिद्धस्य वृक्षस्य भूमिरतदेकदेशत्वेन मूलं तथैवेत्यर्थः । प्रकारान्तरेणोर्ध्वमूलत्वं दर्शयति **सत्त्वादिति** ॥ **मूलभागवदिति** ॥ प्रसिद्धवृक्षस्यैकदेशभूतमूलवन्मूलमित्यर्थः । सत्त्वादियुक्ते इत्यनेन त्रिमूलो जगद्वृक्ष इत्युक्तं भवति । गुणप्रवृद्धा इत्यस्य तात्पर्यं चोक्तं भवति । मूलैर्हि शाखा प्रवर्धन्ते ।

*भा०दी०*— अतदेकदेशत्वेनेति । तदेकदेशत्वाभावेनेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अत्रापि चिदचिद्योगो वृक्षवत् सम्प्रकीर्तितः ।**
**पृथिवीदेवतावत् तद्धरिर्मृद्वदचेतना ॥**

*न्या०दी०*— ननु जगतोऽचेतनत्वात् अचेतनप्रकृतेरेव एतन्मूलत्वं, न चेतनप्रकृतेरित्यत आह **अत्रापीति** ॥ यदि हरिर्भूमिवन्मूलं तर्हि तस्य जगद्रूपेण परिणामः स्यात् । भूम्यंशानां लोके परिणामित्वदर्शनादित्यत आह **पृथिवीति** ॥ तत्तत्र जगद्वृक्षे हरिः प्रसिद्धवृक्षस्य पृथिवीदेवतावन्निमित्तत्वेनैव मूलं न तु मृद्वदुपादानतयेत्यर्थः । तर्हि तद्वत्परिणामितया मूलं किमित्यत आह **मृद्वदिति** ॥ **अचेतना** अचेतनप्रकृतिः ।

**गीतातात्पर्यनिर्णयः**

**उत्तमत्वात्तु मूलानामूर्ध्वमूलस्त्वयं स्मृतः ।**
**नीचास्ततो महदहंबुद्ध्यो भूतसंयुताः ।**
**शाखाश्छन्दांसि पर्णानि काममोक्षफले ह्यतः ॥ १ ॥**

*प्रका०*— **ऊर्ध्वं** उत्कृष्टः विष्णुः मूलं यस्यासौ ऊर्ध्वमूलो जगदश्वत्थोऽधोभूता विष्णवपेक्षया महदादयः शाखा यस्यासौ अधःशाख इत्यर्थः । पर्णानन्तरभावित्वात् वृक्षफलस्य काममोक्षफले ह्यत इत्युक्तम् ।

*न्या०दी०*— एवं चेज्जगद्वृक्षो विष्णवादिमूलः स्यात्, ऊर्ध्वमूलः कथमित्यत आह **उत्तमत्वादिति** ॥ विष्णोः सर्वोत्तमत्वात्, श्रियः परतन्त्रेषूत्तमत्वात्, अचित्प्रकृतेरचेतनेषूत्तमत्वात् ऊर्ध्वानि उत्तमानि विष्णवादिमूलानि यस्यासावूर्ध्वमूल इत्यर्थः । अधःशाखमित्यस्यार्थो **नीचा** इति । अधो भगवदपेक्षया **नीचा** महदादयः शाखा यस्यासावधःशाख इत्यर्थः । जगद्वृक्षस्येति सम्बध्यते । छन्दसां पर्णत्वमुपपादयति **कामेति** ॥ लोके पर्णोत्पत्त्यनन्तरमेव फलदर्शनादत्रापि फलहेतुत्वाच्छन्दसां पर्णत्वमिति भावः ॥

**गीता**

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

*वि०वि०*— तस्य शाखाभूतानि अधश्च स्वापेक्षयाऽप्रकृष्टे शरीरादौ, कार्ये चोर्ध्वं चोत्तमे कारणेऽव्यक्ते च प्रसृताः । सूक्ष्मरूपेण सन्ति । कीदृश्यः शाखा गुणैः सत्वादिभिः प्रवृद्धाः । अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति । सत्त्वादयश्चार्वाचीनमूलानीति । प्रतीतिसमयमात्रे सुखहेतुत्वेन विमर्दनासहत्वसाम्याद्विषया एव प्रवालाः पल्लवा यासां ताः । मूलानि भगवद्रूपादीनि । अधश्च शाखास्वनुसन्ततानि । कर्मापेक्षया फलदातृत्वात् । कर्मसम्बन्धीनि कर्मानुबन्धीनि मूलानि ॥ २ ॥

*वा०ल०*— 'अधश्चोर्ध्वं प्रसृताः' इत्यत्र, ऊर्ध्वं सत्यलोकमारभ्य मानुषलोकपर्यन्तम्, अधः मानुषलोकमारभ्य पाताललोकपर्यन्तं च प्रसृताः । गुणप्रवृद्धाः रूपरसादिगुणैः प्रवृद्धाः । गुणो विषयानुभवः, तज्जन्यं सुखं वा । विषयप्रवालाः स्रक्चन्दनादिविषयाख्यप्रवालवन्तः । अधश्च शाखायाः सन्धौ सन्धौ । मूलानि गुणत्रयाख्यमूलानि । कर्मानुबन्धीनि कर्माणि पुण्यपापमिश्ररूपकर्माणि अनु उत्तमाधममध्यमजीवानां योग्यतामनुसृत्य बध्नन्तीति तानि तथोक्तानि । सत्यादिपाताललोकपर्यन्तं गुणत्रयानुबन्धेनैव जीवानां प्रवृत्तेरिति भावः ॥ २ ॥

*सा०सं०*— **तस्य** जगदाख्यवृक्षस्य । **शाखाः** शाखास्थानीयाः महदाद्याः अष्टौ पदार्थाः चिदचिद्रूपाः । **अधः** स्वापेक्षयाऽप्रकृष्टकार्यभूतशरीरादौ स्वापेक्षयोत्कृष्टोर्ध्वशब्दोक्ते कारणभूताव्यक्ते च सूक्ष्मरूपेण **प्रसृताः** व्याप्ताः । किं रूपाः शाखा इत्यत उक्तम् **गुणप्रवृद्धा** इत्यादि । गुणैः

सत्त्वादिभिः प्रवृद्धाः । गुणानामर्वाचीनमूलत्वात् तादृशमूलैरेव प्रवृद्धे वृक्षे शाखानां प्रवृद्धिर्दृष्टेति भावः । **विषयप्रवालाः** । तात्कालिकसुखहेतुत्वसाम्यात् शब्दाद्याः विषया एव प्रवालाः पल्लवा यासां ताः, विषयप्रवालाः । **मूलानि** ऊर्ध्वपदेन प्रकृतानि विष्णो रूपाणि जडाजडप्रकृती, सत्त्वरजस्तमांसि च । **अधः** जगदाख्यवृक्षस्य अधोभागेषु च । शाखास्वपीति यावत् । **अनुसन्ततानि** व्याप्तानि । कीदृशानि मूलानीत्यत उक्तम् **कर्मानुबन्धीनीति** । मनुष्यलोके कर्माणि अपेक्ष्य फलदातृत्वात् कर्मानुबन्धीनि इति । तथा चोक्तम्— ब्रह्माऽस्य पृथङ्मूलम्, प्रकृतिः समूलम्, सत्त्वादयोऽर्वाचीनमूलं, भूतानि शाखाः, छन्दांसि पत्राणि, देवनृतिर्यञ्चश्च शाखाः, पत्रेभ्यो हि फलं जायते । मात्राः शिफाः, मुक्तिः फलममुक्तिः फलम् । ''मोक्षो रसोऽमोक्षो रसः'' (भाल्लवेयशाखायाम्) इत्यादिश्रुतेः ॥ २ ॥

*अ०प्र०*— किञ्च, **अधश्चेति** ।

अथान्वयः— तस्य शाखाः[१], ऊर्ध्वं[२], अधश्च[३], प्रसृताः[४], गुणप्रवृद्धाः[५], विषयप्रवालाः[६], मूलानि[७], अधः चकारेण ऊर्ध्वं च[८], अनुसन्ततानि[९], तेषां कार्यमाह मनुष्यलोके[१०] कर्मानुबन्धीनि[११] इत्यन्वयः ।

तस्य शाखाः = तस्य जगद्वृक्षस्य शाखाः तत्स्थानानि भूतानि[१], ऊर्ध्वं = उत्तमं कारणं सुकृतिनः देवादियोनिषु प्रसृताः[२], अधश्च निकृष्टकार्यं च । यद्वा हिरण्यगर्भादयो कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्ताः तेषु च ये दुष्कृतिनः तमोगुणप्रवृद्धा पश्वादि तिर्यग्जन्तुरूपेण अधोभागे[३], प्रसृताः = विंस्तारं गताः । तदुभयत्र स्थिता जगद्वृक्षशाखारूपभूतानि स्वकार्यशरीरादौ स्वकारणे प्रकृत्यादौ च सूक्ष्मरूपेण सन्तीति भावः[४], गुणप्रवृद्धाः = गुणैः अर्वाचीनमूलरूपैः । यद्वा, सत्त्वादिवृत्तिभिः जलसेचनैरिव यथायथं वृद्धिं प्राप्ताः लोके अवान्तरमूलैः शाखानां वृद्धिर्भवति[५], विषयप्रवालाः = विषयाः शब्दाद्याः प्रवालाः पल्लवस्थानीयाः यासां ताः । प्रतीतिसम एव सुखहेतुत्वाद्विमर्दनासहत्वाच्च विषयाणां प्रवालसाम्यं[६], मूलानि च = अस्य वृक्षमूलानि बिल्वादीनि[७], अधः च = चकारादूर्ध्वं च शाखाभूतेष्वपि अधश्चोर्ध्वं चेत्यर्थः[८], अनुसन्ततानि = व्याप्तानि विरूढानि वा । यद्वा, नैरन्तर्याणि निरन्तरं प्रवर्धमानानीत्यर्थः । मुख्यं मूलं ईश्वर एक एव इमानि तु अवान्तरमूलानि तत्तद्भोगवासनालक्षणानि तेषां कार्यमाह 'मनुष्यलोके इति'[९], मनुष्यलोके = अस्मिन् मर्त्यलोके[१०] कर्मानुबन्धीनि = कर्मभिः अनुबन्धो येषां तानि । यद्वा, कर्मैव अनुबन्धश्चरमकारणं तद्वचक्तानि । सर्वस्यापि कर्मापेक्षप्रवृत्तिमत्त्वादीश्वरस्यापि कर्मापेक्षया फलदातृत्वात् सर्वमूलं

कर्मानुबन्धीत्यर्थः । यद्वा, कर्म अनुबन्धः अनन्तरभावी येषां तानि ऊर्ध्वाधोलोकेषु उपभुक्ततत्तद्भोगवासनाभिर्हि कर्मक्षेपेन मनुष्यलोकं प्राप्तानां तत्तदनुरूपेषु कर्मसु प्रवृत्तिर्भवति । तस्मिन्निव हि कर्माधिकारः नान्येषु लोकेषु ततो मनुष्यलोके इत्युक्तम् ॥ २ ॥

भाष्यम्

**अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीति अधश्चोर्ध्वं च प्रसृताः । गुणैः सत्त्वादिभिः । प्रतीतिमात्रसुखत्वात् प्रवाला विषयाः । मूलानि भगवद्रूपादीनि । भगवानपि कर्मानुबन्धेन हि फलं ददाति ।**

*प०टी०*— 'अधश्चोर्ध्वम्' इत्येतद्व्याचष्टे **अव्यक्तेति** । 'शाखाः' पञ्चमहाभूतानि, 'अधः' इति स्वापेक्षया निकृष्टशरीरेषु, 'ऊर्ध्वम्' उत्कृष्टप्रकृतौ 'प्रसृतानि' इत्यर्थः । 'गुण'शब्दस्यानेकार्थत्वात्, विवक्षितार्थमाह **गुणैरिति** । विषयानां प्रवाळत्वे विवक्षामाह **प्रतीतिमात्रेति** । पूर्वं मूलस्यैकवचनेनोक्तत्वान्मूलानीत्यन्यानीति प्रतीतिमपराकरोति **मूलानीति** । **आदि**पदात् प्रकृत्यादीनि । कर्मानुबन्धीनि इति श्रवणात् मूलानि जीवा एव भवेयुः इति शङ्कापनोदाय आह **भगवानपीति** ।

*प्र०दी०*— 'अधश्च' इत्येतद् घटयति **अव्यक्तेऽपीति** । अनेन **तस्य शाखा भूतानि अधश्च** स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये च **ऊर्ध्वं** चोत्तमे कारणेऽव्यक्ते च **प्रसृताः** सूक्ष्मरूपेण सन्तीति व्याख्यातं भवति । 'प्रसृता इत्यनेनोच्यन्ते' इति शेषः । 'अधः पातालाद् ऊर्ध्वं स्वर्गादौ' इत्यादि व्याख्याने प्रकृतपरित्यागाप्रकृतप्रक्रिये प्रसज्येते । गुणशब्दस्यानेकार्थत्वात् 'गुणप्रवृद्धाः' इत्यत्र विवक्षितमर्थमाह **गुणैरिति** । अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति । सत्त्वादयश्च अर्वाचीनमूलानि इति वक्ष्यति । विषयाणां प्रवालत्वं घटयति **प्रतीतिमात्रेति** । प्रतीतिसमयमात्रसुखहेतुत्वादित्यर्थः । विमर्दनासहत्वसाम्यादिति भावः । **विषयाः** प्रवाला इति सम्बन्धः ।

'अधश्च मूलानि' इत्यत्र 'रागद्वेषादिवासनामूलानि' इति व्याख्यानमसत् । प्रक्रमविरोधादिति भावेनाह **मूलानीति** । आदिपदेन जडाजडप्रकृत्योः सत्त्वादीनां च ग्रहणम् । तेषामपि 'ऊर्ध्वमूलं' इत्यत्र विवक्षितत्वात् । ननु भगवतः कथं कर्मानुबन्धित्वम् ? इत्यत आह **भगवानपीति** । अत्र कर्मानुबन्धित्वं नाम कर्मानुसारित्वम् । तच्च कर्मसम्बन्धेन फलदातृत्वाद् भगवतोऽपि युक्तमित्यर्थः । यद्वा, कर्म एवानुबन्धः = चरमभाविकारणं कर्मानुबन्धः । तद्वत्त्वं = कर्मानुबन्धित्वम् । तदपि कर्मानुबन्धेन फलदातृत्वात् भगवतो अपि युज्यत इति ।

*भा०दी०*— **तस्येति** । जगद्वृक्षस्येत्यर्थः । **स्वापेक्षयेति** । स्वशब्देन भूतपरामर्शः । **प्रकृतेति** । अव्यक्तभूतादिक्षेत्रस्थितस्वरूपस्यैव प्रकृतत्वात् तत्त्यागः अप्रकृतप्रकरणं च प्रसज्यत इत्यर्थः । **साम्यादिति** । प्रबलशब्दितपल्लवसाम्यादित्यर्थः । **प्रक्रमेति** । ऊर्ध्वपदेन ब्रह्मप्रकृत्यादेरेव प्रक्रमात् तद्विरोध इत्यर्थः । तत्कथम् ? इत्यत आह **तेषामपीति** । **चरमभाविकारणमिति** । फलभोगादिकार्योत्पत्ताविति योज्यम् ।

*भा०र०*— **अधश्चेत्येतद्** 'अधश्चोर्ध्वं च प्रसृताः' इत्येतद् । भाष्ये सोपस्कारमन्वयं दर्शयंस्तत्तात्पर्यमाह **अनेनेति** । 'प्रसृताः' इति भाष्यं साकाङ्क्षम् इति तत्र शेषमाह **इत्यनेनोच्यत इति शेष इति** । **उच्यते** 'सूक्ष्मरूपेण सन्तीत्ययमर्थः' इति शेषः । **इत्यादिव्याख्यान इति** । अत्र आदिपदेन 'अधो मनुष्यादिभ्यो यावत् स्थावरम्, अत ऊर्ध्वं च यावद् विश्वसृजो धाम महान् इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः' इति *शाङ्करीयम्,* 'अधश्चोर्ध्वं च प्रसृताः हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्ताः तेषु च ये दुष्कृतिनः ते अधः पश्वादियोनिषु प्रसृताः, ये च सुकृतिनः ते देवादियोनिषु प्रसृताः' इति **श्रीधरीयं** व्याख्यानं ग्राह्यम् । **प्रकृतेति** । ऊर्ध्वमूलमधःशाखम् इत्यत्र ऊर्ध्वम् = उत्कृष्टं ब्रह्म, तद् मूलं यस्य स ऊर्ध्वमूलः, तम्, अधःशाखम् महत्-अहङ्कार-तन्मात्रादयः शाखा इव अस्य अधो भवन्तीति सोऽयम् अधःशाखः तम्' इति *शङ्करव्याख्याने* ऊर्ध्वाधःशब्दाभ्याम् उत्कृष्टापकृष्टयोरेव प्रकृतत्वात् पातालस्वर्गयोः स्थावरपर्यन्त-ब्रह्मपर्यन्तयोर्वा अप्रकृतत्वात्, *श्रीधरीयव्याख्याने*ऽपि 'ऊर्ध्वः = उत्तमः = क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम्, अधःशाखम् = अपकृष्टाः कार्योपाधयो हिरण्यगर्भादयो जीवाः शाखा इव शाखा यस्य तम्' इत्यभिधानेन उत्कृष्टापकृष्टयोरेव प्रकृतत्वात् प्रकृतार्थस्य परित्यागः, अप्रकृतपातालस्थावरपर्यन्तत्व-ब्रह्मपर्यन्तत्वादेश्च प्रक्रिया = प्रकरणम्, स्वीकार इति यावत्, ते प्रसज्येते इत्यर्थः ।

गुणानां सत्त्वरजस्तमसां शाखाप्रवृद्धिहेतुत्वं 'सत्त्वादयोऽर्वाचीनमूलम्' इत्युक्तिमनुरुन्धान उपपादयति **अर्वाचीनमूलैर्हीति** । **वक्ष्यते** सत्त्वादयोऽर्वाचीनमूलम् इति भाष्योदाहरिष्यमाणश्रुतौ । प्रतीतिशब्देन तत्समयः, सुखशब्देन तद्धेतुश्च लक्षणीय इति भावेनाह **प्रतीतिसमयमात्रे सुखहेतुत्वादिति** । एवमपि प्रवालशब्दः कथं विषयेषु प्रवर्तते ? इत्यतो भाष्यभावमाह **विमर्दनासहत्वसाम्यादिति** । विषयेषु विमर्दनं नाम स्थायित्वशोभनत्वादिरूपः क्षोदः, तदक्षमत्वसाम्याद् गौणोऽयं शब्द इति भावः । भाष्योक्तं प्रवालानां विषयत्वविधानं न गीतानुगुणम् ? इत्यतः सम्बन्धं दर्शयति **विषया इति** ।

**इति व्याख्यानमिति** । तथा च *शङ्करः*— संसारवृक्षस्य परममूलम् उपादानम् 'ऊर्ध्वं ब्रह्म मूलमस्य' इतीश्वर एव मुख्यं मूलमित्युक्तम् । अथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव धर्माधर्मप्रवृत्तिकारणानि अधश्च देवादियोन्यपेक्षया मूलान्यनुसन्ततानि' इति । **प्रक्रमेति** । 'ऊर्ध्वमूलम्' इत्यत्र ब्रह्मण एव मूलत्वेन प्रकृतत्वात् तद्विरोधो रागद्वेषादिवासनानां मूलत्वाभ्युपगमे इत्यर्थः । ननु पूर्वम् 'ऊर्ध्वो विष्णुर्मूलम्' इति भाषितम् । अत्र पुनः विष्णु-जडाजडप्रकृति-सत्त्वादीनां मूलत्वाभ्युपगमे प्रक्रमविरोधः स्वपक्षेऽपि कस्मन्न स्यात् ? इत्यत आह **तेषामिति** । **कथमिति** । मूलानि भगवद्रूपादीनि, तत्र च कर्मानुबन्धित्वं विशेषणम् । कर्ममात्रविधुरे भगवति कर्मसम्बन्धो न युक्तः ? इत्याक्षेपः । 'फलं ददाति' इत्यस्य तात्पर्यम् **फलदातृत्वादिति** ।

अनुबन्धशब्दस्य सम्बन्धे प्रयोगप्राचुर्याभावात्, 'अनुबन्धादिभ्यः' इत्यादौ अन्यार्थत्वादर्शनाद् अत्र च तद्ग्रहणं न युक्तम् ? इत्यतश्च पक्षान्तरमाह **यद्वेति** । **कर्मैव** धर्माधर्मलक्षणम् । **चरम-भावीति** । फलदाने वैषम्यनैर्घृण्यपरिहाराय अन्ततो भगवताऽपि कर्मणोऽपेक्षणीयत्वात् तस्य चरमभावित्वम् । मनुष्यलोके यत् समार्जितं कर्म तत् स्वर्गनरकलक्षणफलं प्रति चरमभाविकारण-मित्यर्थ इति **आहुः** । **अन्ये तु** भगवदपेक्षया अविद्यायोग्यतापेक्षया च अधमं कारणं कर्म फलदाने इति 'चरमभावि' इत्युक्तम् इत्याहुः । 'भगवानपि' इति भाष्यं कर्मानुबन्धित्वश्रवणाद् 'मूलानि जीवा एव भवेयुः' इति शङ्कापनोदाय प्रवृत्तमित्युक्तम् *भावप्रदीपिकायाम्* ।

### भाष्यम्

**तथा च भाल्लवेयशाखायाम्—**

**"ब्रह्म वा अस्य पृथङ् मूलं प्रकृतिः समूलं सत्त्वादयोऽर्वाचीनमूलम् । भूतानि शाखाः छन्दांसि पत्राणि देवनृतिर्यञ्चश्च शाखाः । पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलम्, अमुक्तिः फलम् । मोक्षो रसः, अमोक्षो रसः । अव्यक्ते च शाखाः । व्यक्ते च शाखाः । अव्यक्ते च मूलम्, व्यक्ते च मूलम् । एषोऽश्वत्थो गुणाऽलोलपत्रो न स्थीयते न न स्थीयते न ह्येष कदाचन अन्यथा जायते नान्यथा जायते" इति ॥ २ ॥**

*प०टी०*— श्लोकद्वयार्थे प्रमाणमाह **तथा चेति** । **पृथङ्मूलं** भूमिवत्, प्रकृतिरपि बुध्नम् । **अर्वाचीनमूलं** भूम्यन्तर्गतम् । **छन्दांसि पत्राणि** इत्यस्योपपादकं **पत्रेभ्यो हीति** । 'अधश्च

मूलानि' इत्यस्यार्थः **अव्यक्ते च मूलम्** इत्यादि । 'अश्वत्थः' इत्यस्योपव्याख्यानम् **न स्थीयतेऽनेनेति** । **न न स्थीयते** इत्यव्ययत्वस्य **न ह्येष** इति तदुपपादनम् । **नान्यथा** इत्यभ्यासः ॥ ॥ २ ॥

*प्र०दी०*— श्लोकद्वयार्थे श्रुतिसम्मतिं चाह **तथा चेति** । अस्य जगद्वृक्षस्य, **पृथक्** वृक्षानन्तर्गतम् । सहभूतं मूलं **समूलम्** । **अर्वाचीनमूलं** भूम्यन्तर्गतपादाख्यम् । **छन्दांसि** इत्यस्योपपादनम् **पत्रेभ्यो हीति** । देवादिशरीराणि चोपशाखाः । **मात्राः** भूतसूक्ष्माणि । **शिफाः** जटाः । मुक्त्यमुक्तिशब्दाभ्यां मोक्षतदितरपुरुषार्थसाधने ज्ञानकर्मणी उच्येते । **फलम्** अवान्तरम् । मोक्षामोक्षशब्दाभ्यां तु पुरुषार्थावेव । **रसः** श्रेष्ठं फलम् । **गुणाः** विषयाः । **आलोलपत्राणि** प्रवालपत्राणि यस्यासौ तथोक्तः । 'न स्थीयते' इत्यनेन अश्वत्थशब्दार्थकथनम् । तत्किं क्षणिकः ? **न न स्थीयते** प्रवाहव्ययो नास्तीत्यर्थः । तस्योपपादनम् **न हीति** । द्विरुक्तिस्तात्पर्यार्था ॥ २ ॥

*भा०दी०*— अपौनरुक्त्याय साधनफलपरत्वेन अर्थभेदमाह **मुक्त्यमुक्तिशब्दाभ्यामित्यादिना** ॥ २ ॥

*भा०र०*— 'ब्रह्मशब्दार्थो विष्णुरेव' इति सिद्धं कृत्वा इदंशब्दार्थमाह **अस्य जगद्वृक्षस्येति** । पृषोदरादिभावेन सहशब्दस्य सहभावमभ्युपगम्याह **सहभूतं मूलं समूलमिति** । वृक्षस्वरूपान्तर्गतमित्यर्थः । **पादाख्यमिति** । प्रधानमूलानुस्यूतमूलमित्यर्थः । अत एव वृक्षे पादपशब्द इति भावः । देव-नृ-तिर्यक्शब्दैः देवादिशरीराणि, शाखाशब्देन 'भूतानि शाखाः' इत्यनेनाविसंवादाय उपशाखा ग्राह्या इति भावेन व्याचष्टे **देवादीति** । **उपशाखाः** प्रधानशाखानुस्यूताः शाखाः ।

'मीयन्ते इति मात्राः = विषयाः' इति स्वीकारे 'विषयप्रवालाः' इत्ययुक्तम् ? इत्यतोऽर्थान्तरमाह **मात्रा भूतसूक्ष्माणीति** । भूतोपादानभूताः पञ्चतन्मात्राः शब्दादय इत्यर्थः । द्विविधाः हि शब्दादयः 'भूतोपादानभूताः', 'भौतिकाश्च' इति । तत्राद्यानां शिफात्वेनात्र रूपणम्, अन्त्यानां तु प्रवालत्वेनेति नानुपपत्तिरिति हृदयम् । **साधने इति** । 'मुच्यतेऽनेन' इति करणे क्तिनि मुक्तिशब्दोऽत्र मोक्षसाधनज्ञानवचनः । 'न मुच्यतेऽनेन' इति अमुक्तिशब्दो मोक्षाद् अवरस्वर्गादिसाधनकर्मपरः । 'मुक्तिर्ज्ञानम्, अमुक्तिः कर्म च' इत्येवं ज्ञानकर्मणी वेदनिष्पाद्यत्वात् वेदफले इत्यर्थः । तयोः फलत्वं घटयति **अवान्तरमिति** । महाफलहेतुत्वात् फलत्वं वैवक्षिकमिति भावः । **पुरुषार्थावेव** अपवर्गस्वर्गाख्यौ, तथा च न पुनरुक्तिरिति भावः । यथा फले रस एव प्रशस्यः, एवं वेदफलेषु

मोक्षः स्वर्गश्च प्रशस्य इति प्रशस्यत्वगुणयोगेन रसशब्दो गौण इति भावेनोक्तम् **श्रेष्ठमिति** । अतिशयेन प्रशस्यमित्यर्थः । 'प्रशस्यस्य श्रः' 'अतिशायने तमबिष्ठनौ' इति हि पाणिनिः ।

'अधश्चोर्ध्वं च प्रसृतास्तस्य शाखाः' इत्यत्र प्रमाणम्— 'अव्यक्ते च शाखाः, व्यक्ते च शाखाः' इति । 'अधश्च मूलान्यनुसन्ततानि' इत्यत्र प्रमाणम्— 'अव्यक्ते च मूलम्, व्यक्ते च मूलम्' इति । तत्र भूतशब्दिताः शाखा अव्यक्ते स्वकारणे सूक्ष्मरूपेण प्रसृताः सन्ति, व्यक्ते स्वकार्ये शरीरादौ च प्रसृताः' इत्यर्थस्य, अव्यक्ते = प्रकृतौ व्यक्ते = भूतादौ कार्ये च मूलं भगवाननुसन्तत इत्यर्थस्य च, अनेन 'तस्य शाखाः भूतानि' इत्यादिनोक्तप्रायत्वात् । 'गुणालोल-पत्रः' इत्येतद् दुर्गमार्थं व्याख्याति **गुणा विषया इति** । 'न स्थीयते' इत्यत्रापेक्षितं कर्तारमध्याहरति **अनेनेति** । **तत्** तर्हि **क्षणिकः** 'इत्यत उक्तम्' इति शेषः । 'न न स्थीयते' इत्यनन्तरम् 'इति' इति शेषः । तर्हि पदार्थानां ध्रौव्यापत्त्या अभावावगाहिप्रमाणविरोधः ? इत्यतः तथापि न प्रवाह-व्ययः । पूर्वब्रह्मकल्पे यथास्थितः तथा सर्वदाऽपि इति भाष्यं अर्थतोऽनुवदति **प्रवाहव्यय इति** । **तस्य** प्रवाहव्ययो नास्तीत्यर्थस्य । श्रुतौ 'एषः' इति जगत्प्रवाहो विवक्षितः । अन्यथा = पूर्वब्रह्म-कल्पापेक्षया ॥ २ ॥

**गीतातात्पर्यनिर्णयः**

**कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणम् ।**
**अन्योन्यसंयुताः शाखा मूलानि तु सदैव तु ।**
**विषया दर्शनीयत्वात् प्रवालसदृशा मताः ॥ २ ॥**

***प्रका०***— **कारणेषु** इत्यनेन अधश्चोर्ध्वञ्चेत्यस्यार्थ उच्यते ।

***न्या०दी०***— **अनेन धर्मार्थयोः काममोक्षार्थत्वात् काममोक्षाख्यद्विफलो जगद्वृक्ष इत्युक्तं भवति । अधश्चोर्ध्वं चेत्यस्यार्थः अन्योन्येति । अनेनाधोभूताः शाखा ऊर्ध्वमूलेषु प्रसृताः, मूलानि चाधःशाखासु सन्ततानीत्युक्तं भवति । तस्योपपादनं कारणेष्विति । कारणेषु कार्यस्य स्थितत्वात् शाखानां मूलेषु प्रसृतिर्युज्यते । कार्येषु कारणस्य व्याप्त-त्वान्मूलानां शाखासु सन्ततिर्युक्तेत्यर्थः ॥**

***भा०दी०***— धर्मार्थयोः काममोक्षार्थत्वादिति । धर्मो मोक्षार्थः, अर्थः कामार्थ इत्यर्थः ।

गीता

**न रूपमस्येह तथोपलभ्यते**
**नान्तो न चादिर्न च सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूल-**
**मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

***वि०वि०***— अस्य जगद्वृक्षस्य रूपमिह लोके यथास्थितं तथा नोपलभ्यते । अस्य नाशजन्मस्थितिहेतुत्वादन्तादिर्विष्णुः । स केनाऽपि नोपलभ्यते । सुविरूढमूलमतिबद्धमूलमश्वत्थम् । दृढेनासङ्गशस्त्रेण सङ्गराहित्यसहितज्ञानासिना । छित्वा विमर्शलक्षणं छेदं कृत्वा । 'ज्ञानासिनोपासनया सितेन छिन्देत संसारतरुं मुमुक्षुः ।' 'विमर्शो ह्यस्य छेदः तं न बध्नाति चान्यान्' इत्यादि वचनात् ॥ ३ ॥

***वा०ल०***— 'न रूपमस्य' इत्यत्र, अस्य संसारवृक्षस्य । रूपम् ईदृशं रूपम् ॥ ३ ॥

***सा०सं०***— **अस्य** जगद्वृक्षस्य । **रूपं** यथा स्थितं **तथेह** लोके **नोपलभ्यते** । विकारित्वादिति भावः । जगतो जन्मसंहारकर्तृत्वहेतुनाऽऽद्यन्तपदोक्तो विष्णुः **सम्प्रविष्टश्च** जगद्वृक्षमनुप्रविष्टोऽपि नोपलभ्यते । 'नान्तः', 'न चादिः', 'न च सम्प्रविष्ट उपलभ्यते' इति वाक्यत्रयेणानुपलम्भोक्तिरादरार्था । अस्त्वेवं जगद्वृक्षस्वरूपम् । ततः किमित्यत आह **अश्वत्थमिति** । **सुविरूढमूलं** प्रबलविष्ण्वादिबहुमूलकम् । एनं प्रागुक्तं अश्वत्थनामकं जगद्वृक्षम् । **असङ्गशस्त्रेण** सङ्गराहित्यसहितेन ज्ञानासिना । **छित्त्वा** मूलभूतो विष्णुः प्रकृत्यादिजगतो विलक्षणः, जगच्चावान्तरभेदयुक्तं परतन्त्रं प्रवाहतोऽव्ययमित्यादिरूपेण विविच्य ज्ञात्वेत्यर्थः । उक्तज्ञानरूपछेदनं तस्य कार्यमिति भावः ॥ ३ ॥

***अ०प्र०***— किञ्च, **न रूपमस्येति** ।

इह[1], अस्य[2], रूपं यथा[3], तथा[4], नोपलभ्यते[5], अतो नान्तः[6], न चादिः[7], सम्प्रतिष्ठा न च[8], यस्मादेवं तस्मात् सुविरूढमूलं[10] एनं[11] अश्वत्थं[12], दृढेन[13], असङ्गशस्त्रेण[14], छित्वा[15], तत्पदं परिमार्गितव्यमित्युत्तरक्रिययान्वयः ॥

इह = अत्र संसारे स्थितैः प्राणिभिः मनुष्यलोके[1], अस्य = जगद्रूपस्य संसारवृक्षस्य[2], रूपं यथा तथा = अस्माभिर्यथा संसारवृक्षो वर्णितस्तथा रूपं विकारित्वादिना ऊर्ध्वमूलत्वादिना

प्रकारान्तरेण रूपं यथा स्थितं तथा[४], नोपलभ्यते = नैव विद्यते[५], अतो नान्तः = अपर्यन्तत्वात् अवमानं नाशो वा नोपलभ्यते[६], न चादिः = आदिः उत्पत्तिः अनादिहेतुत्वात् विष्णुः अन्तः आदिः इत्युच्यते । एवमादिरपि नोपलभ्यते सम्प्रतिष्ठा न च सम्प्रतिष्ठा नाम स्थितिः कथं तिष्ठतीति च नोपलभ्यते[९], यस्मादेवं = संसारवृक्षो दुरुच्छेदः अनर्थकरश्च तस्मात् सुविरूढमूलं = अत्यन्त-बद्धमूलं सुष्ठुतया विरूढतां गतं एनं अश्वत्थं[१२], दृढेन = तत्त्वज्ञानोपेतदृढवैराग्येण[१३], असङ्गशस्त्रेण = अहं ममतादिरूपः सङ्गः तदभावोऽसङ्गः तद्युक्तज्ञानाख्यशस्त्रेण । यद्वा, देहाभिमान एव सङ्गः तेन रहितं तदेव भववृक्षस्य छेदनार्थं शस्त्रमिति । तेन असङ्गशस्त्रेण ज्ञानखड्गेन[१४], छित्त्वा = विचार-लक्षणेन पृथक् कृत्वा बुद्धेर्हस्तेन ज्ञानखड्गं सङ्गृह्य मायारूपसंसारवृक्षं छेदयेत् । छेदयित्वा[१५], तत्पदं परिमार्गितव्यं इत्युत्तरक्रिययान्वयः । विमर्शो हि अस्य छेदः छेदकमित्यर्थः । तन्निबध्नाति चान्यानिति वचनात् ॥ ३ ॥

**भाष्यम्**

**यथा स्थितिः तथा नोपलभ्यते । अन्तादिर्विष्णुः । "त्वमादिरन्तो जगतोऽस्य मध्यम्" इति भागवते । "अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः" इति च मोक्षधर्मे । असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन । "ज्ञानासिनोपासनया सितेन" इति हि भागवते । छेदश्च विमर्श एव। ततश्च तस्यैवाबन्धकं भवति ।**

***प०टी०***— जगतो दृश्यमानत्वात् 'न रूपम्' इत्येतत्कथम् ? इत्यत आह **यथेति** । जगदन्तादि दृश्यमानं कथं न दृश्यते ? इत्यत आह **अन्तादिरिति** । विष्णोरज्ञेयत्वे प्रमाणमाह **अनादीति** । असङ्गाख्यशस्त्रेणेति नेत्याह **असङ्गेति** । ननु यदि संसारवृक्षे ज्ञानेन छेद्यः, तर्ह्येकस्य ज्ञानेन सर्वमोक्षः स्यात् इत्यत आह **छेदश्चेति** ।

***प्र०दी०***— 'अस्य रूपं नोपलभ्यते' इत्युक्ते प्रमाणबाधः । अत उक्तम् **तथेति** । तत्सापेक्ष-मित्यतः पूरयति **यथेति** । विकारित्वादिनेत्यर्थः । जगतो देशकालाभ्यां परिच्छेदस्योपलभ्यमानत्वात् 'नान्तः' इत्याद्युक्तमयुक्तमित्यत आह **अन्तादिरिति** । 'संहर्तृत्वादेः' इति शेषः । अत्र सम्मतिमाह **त्वमिति** । **मध्यं** स्थितेः कर्ता । तस्यानुपलभ्यमानत्वे प्रमाणमाह **अनादीति** । आद्यन्तरहितम् । 'असङ्ग एव शस्त्रम्' इति व्याख्यानमसदिति भावेनाह **असङ्गेति** । असङ्गः सङ्गराहित्यम् । तेन सहितं ज्ञानम् असङ्गशस्त्रम् । दध्योदनादिवद् वृत्तौ साहित्यस्यान्तर्भावाद् अप्रयोग इति भावः । प्रतीतार्थः कुतो न ? इत्यतो ज्ञानस्यैव तत्र कारणत्वेनोक्तेरित्याह **ज्ञानेति** ।

'छित्वा' इत्यस्य 'सबीजमुद्धृत्य' इति व्याख्यानमसदिति भावेनाह **छेदश्चेति** । चः त्वर्थः । **विमर्शः** विवेकः । व्याख्यानान्तरपरित्यागेनैवं व्याख्याने को हेतुः ? इत्यत आह **ततश्चेति** । यतो **विमर्श एव प्रकृत्यादेः** विश्वस्य **च्छेदः**, न सर्वथोद्धारणम् । तत एव **तस्य** एकस्य **एव** इदम् **अबन्धकं भवति** इति युज्यते । अन्यथा एकेन च्छेदे कृते सर्वमुक्तिः स्यादिति भावः ।

*भा०दी०*— गीतायामन्वयमुखेन पदान्यनुपेक्ष्य पदानुपपत्तियुक्तिपूर्वं गीताशेषमवतारयति **अस्येति** । **विकारित्वादिनेति** । वृद्धिह्रासविनाशादिरादिपदार्थः । जगद्वृक्षस्य प्रसविता विष्णुः कथम् अन्तादिः केन हेतुना ? इत्यत आह **संहर्तृत्वादेरिति शेष इति** । संहर्तृत्वात् अन्तः, जनकत्वात् आदिः, स्थितिहेतुत्वात् सम्प्रतिष्ठा इत्युच्यत इत्यर्थः । **दध्योदनादिवदिति** । दधि-सिक्तोदनो घृतसिक्त ओदन इत्याद्यर्थे दध्योदन घृतोदन इत्यादिप्रयोगः तथा इत्यर्थः । साहित्यर्थे पदप्रयोगे बीजमाह **वृत्ताविति** । समासे साहित्यरूपार्थस्य सङ्गम्यमानत्वादित्यर्थः । **उद्धृत्येति** । विनाश्येत्यर्थः । **विवेक इति** । कार्यत्वात् स्वतन्त्रत्वादिज्ञानादित्यर्थः ।

*भा०र०*— जगद्वृक्षस्य प्रत्यक्षत एवोपलभ्यमानत्वादाह **प्रमाणबाध इति** । 'बाधः' इत्यनन्तरम् 'इति'शब्दोऽध्याहार्यः । 'उक्तम्' इत्यनन्तरम् 'गीतायाम्' इति शेषः । **तत्** 'तथा' इति पदम् । यथाशब्दविवक्षितार्थोक्तिः **विकारित्वादिनेति** । आदिपदेन नाशो वृद्धिर्ह्रासश्च गृह्यते । ऊर्ध्वमूलत्व-अधःशाखत्वादिरादिपदार्थ इति **एके** । ननु जगन्नाशादिरूपत्वं विष्णोः कथम् ? इत्यत आह **संहर्तृत्वादेरिति** । संहारकर्तृत्वात्, उत्पत्तिकर्तृत्वात्, स्थितिकर्तृत्वाच्च तत्तच्छब्दव्यपदे-श्यत्वमिति भावः । **अत्र** अन्तत्वे आदित्वे प्रतिष्ठात्वे च । **मध्यं स्थितेः कर्तेति** ॥ तथा च उत्पत्तिकर्तृत्वाद् आदिः, स्थितिकर्तृत्वाद् मध्यम्, संहारकर्तृत्वाद् अन्त इति भागवतस्यात्रोक्तेऽर्थे सम्मतित्वमिति भावः । **तस्य** अन्तादिशब्दार्थस्य विष्णोः । आदिश्च अन्तश्च आद्यन्तौ, न विद्येते आद्यन्तौ यस्य स तथा इति विग्रहाद्यभिप्रेत्य तदर्थमाह **आद्यन्तरहितमिति** । देवा ऋषयश्च यदा न विदुः, तदा किमु वक्तव्यम्, 'मनुष्यलोको न वेद' इति प्रकृतार्थसिद्धिः ।

'असङ्गः' इति पुत्र-वित्त-लोकेषणाभ्युत्थानम्, तदेव शस्त्रम्, तेनेति शङ्करभाष्यं निष्कृष्या-नुवदति **असङ्ग एव शस्त्रमितीति** । छेदकत्वगुणयोगात् शस्त्रशब्दो ज्ञाने वर्तते इति भावेन 'शस्त्रं ज्ञानम्' इत्युक्तम् । ननु साहित्यस्य विवक्षायां तद्बोधक'सहित'पदमपि समासे प्रयोक्तव्यं स्यात् ? इत्यत आह **दध्योदनादिवदिति** । 'दधिसहित ओदनो दध्योदनः', 'घृतसित ओदनो घृतौदनः', 'गुडेन मिश्रा धाना गुडधानाः' इत्यादौ यथा साहित्यं समासीयाखण्डशक्तिशब्दितया वृत्त्या भाति,

तथा प्रकृतेऽपि 'असङ्गशस्त्रेण' इति समासवृत्त्यैव भातीति न तद्वाचकपदप्रयोग इत्यर्थः । अत्र 'इदं च परीत्या' इत्यादि बहूक्तं कृष्णाचार्यैरिति तद्विचारणीयम् । **प्रतीतार्थः** 'असङ्ग एव शस्त्रम्' इति परोक्तार्थः । 'ज्ञानस्यैव' इति वदन् 'एतच्छित्त्वा च हित्वा च ज्ञानेन परमासिना' इति पुराणवचनम् उदाहरतः *शङ्करस्यैव* स्वव्याहतिरिति सूचयति । **तत्र** छेदे । 'छित्त्वा संसारवृक्षं = सबीजमुद्धृत्य' इति शङ्करभाष्ये दूष्यभागमनुवदति **छित्त्वेतीति** । **विवेकः** विवेचनम् = कार्यत्व-परतन्त्रत्वादि-विमर्श इति यावत् । **तस्य** विमर्शशालिनः । **इदम्** प्रकृत्यादिरूपं विश्वम् । **अन्यथा** 'सबीजमुद्धृत्य' इत्यर्थत्वे ।

**भाष्यम्**

**तथा हि मूलस्थं ब्रह्म प्रतीयते । तच्चोक्तं च तच्छ्रुतावेव "विमर्शो ह्यस्य च्छेदः । स तं न बध्नाति बध्नाति चान्यान्" इति ॥ ३ ॥**

*प०टी०*— संसारविमर्शेन कथं मोक्षः ? इत्यत आह **तथा हीति**। संसारविमर्शे सतीत्यर्थः । अनेन 'ततः परम्' इति व्याख्यातं भवति ॥ ३ ॥

*प्र०दी०*— इतश्च अयमेव च्छेद इत्याह **तथा हीति** । अत्र ह्यश्वत्थमेनं छित्वा 'ततः परं तत् परिमार्गितव्यम्' इति विश्वच्छेदस्य ब्रह्मप्रतीतावुपायत्वमुच्यते । तथा हि । विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात्, चेतनानधिष्ठिताद् उपादानाद् उत्पत्त्यसम्भवात्, परतन्त्राणां मुख्यतो अधिष्ठातृत्वायोगात्, मूलस्थमुपादानकारणाधिष्ठातृ ब्रह्म प्रतीयते न विश्वविनाशे । अतो योग्यतावशाद् विमर्श एव च्छेदो न विनाश इति गम्यत इत्यर्थः । विश्वमिथ्यात्वज्ञानमेव च्छेद इति चेन्न । अस्य मिथ्याज्ञानत्वात् । श्रुतिसंवादाच्चैवमेवेत्याह **तच्चेति** । 'तं वै प्रपद्येत यं वै प्रपद्ये' इति तच्छ्रुतावेव । अतः **तं** छेदकमेव ॥ ३ ॥

*भा०दी०*— **परतन्त्राणामिति** । ब्रह्मादीनां जीवानामिति वा । **मूलस्थम्** इत्यनुवादः, **उपादाने**त्यादि व्याख्या ॥ ३ ॥

*भा०र०*— **उपायत्वमिति** । क्त्वाप्रत्ययेन पूर्वकालवाचिना छेदस्य पूर्वकालवर्तित्वावगमात्, पूर्वकालवर्तिनश्च ब्रह्मपरिमार्गणलक्षणोत्तरकालवर्तिकार्यं प्रत्युपायत्वमुच्यत इत्यर्थः । **तथा हि** 'सति' इति सशेषमनुवादः । 'विश्वस्य कार्यत्वादिना विमर्शे सति' इति व्याख्यानम् । **उत्पत्त्यसम्भवात्** 'कार्यस्य' इति वर्तते । **परतन्त्राणाम्** ब्रह्मादिजीवानाम् । 'मूलस्थम्' इत्यनुवादः, 'उपादानकारणा-

धिष्ठातृ' इति व्याख्या । **योग्यतावशात्** औचित्यवशात् । 'छित्त्वा' इत्यस्य 'सबीजमुद्धृत्य' इति व्याख्यानं दूषितम् । तद्दूषणमुद्धर्तुं 'प्रकृत्यादिरूपसंसारवृक्षं छित्त्वा = मिथ्यात्वेन ज्ञात्वा' इत्यर्थ इति विवक्षुः शङ्कते **विश्वमिथ्यात्वेति** । **अस्य मिथ्याज्ञानत्वादिति** । 'विश्वं सत्यम्' इत्यादि-प्रमाणावगतसत्यताकस्य प्रकृत्यादिरूपवृक्षस्य मिथ्यात्वे ज्ञानस्य भ्रान्तिरूपत्वात्, मिथ्याज्ञानस्य च 'तत्परिमार्गितव्यम्' इत्युक्तब्रह्मप्रतीत्युपायत्वायोगाद् नापरोक्षविवक्षा युज्यत इति भावः । **श्रुति-संवादाच्चेति** । न केवलं योग्यतावशाद् इत्युक्तोपपत्तिबलादिति चशब्दः । **तच्छ्रुतावेव** भाल्लवेय-शाखायामिति भाष्यार्थः । **अतस्तं छेदकमेवेति** । अनेन 'हि = यतो विमर्श एवास्य प्रकृतादे-र्विश्वस्य छेदः, अतः तं = छेदकमेव प्रकृत्यादि न बध्नाति, अन्यान् = विमर्शहीनान् बध्नाति' इति श्रुतिशेषार्थ उक्तो भवति ॥ ३ ॥

**गीता**

**ततः परं तत्परिमार्गितव्यं**
**यस्मिन्गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये**
**यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

***वि०वि०***— ततः तत्परं ब्रह्म परिमार्गितव्यमन्वेषणीयम् । यस्मिन् गताः पुनर्न निवर्तन्ते विमर्शेनोपाय उच्यते **तमेवेति** । यतः पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विसृता । तमेव चाद्यं पुरुषं प्रपद्ये प्रपद्येत । व्यत्ययः छान्दसः । भगवतोऽन्यस्य शरणस्याभावात् तमेव प्रपद्य इत्येवं परिमार्गितव्यमित्यन्वये तस्य परिमार्गणत्वाभावादिति । 'तं वै प्रपद्येत यं वै प्रपद्य न शोचति' इत्यादिश्रुतिः ॥ ४ ॥

***वा०ल०***— असङ्गशस्त्रेण वैराग्याख्यशस्त्रेण । ततः परं वृक्षच्छेदानन्तरम् । तत् नारायणाख्यं परं ब्रह्म । तमेव पुरुषं प्रपद्ये इति मनसि निश्चित्य तत् परिमार्गितव्यमिति पूर्वेण सम्बन्धः ॥४॥

***सा०सं०***— **ततः परं** परापरतत्त्वविषयविमर्शादनन्तरम् । **तत्** ऊर्ध्वादिपदेन प्रकृतं ब्रह्म । **परिमार्गितव्यम्** अन्वेषणीयम् । श्रवणादिना विषयीकर्तव्यम् । जगद्वैलक्षण्यज्ञाने सत्येव तत्स्वरूप-मन्वेष्टुं शक्यत इति भावः । **यस्मिन् गताः भूयः** पुनः **न निवर्तन्ते** न गर्भयातनां प्राप्नुवन्ति । तदिति पूर्वेणान्वयः । जगद्वृक्षच्छेदनोपायमाह **तमेव चेति** । येयं **पुराणी** चिरन्तनी संसारप्रवृत्तिः ।

**यतः प्रसृता** विस्तृता । **तमेव चाद्यं** प्राथमिकं पुरुषं विष्णुम् । **प्रपद्ये** प्रपद्येत । व्यत्ययात् । 'तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम् । वीवराशिः' (नारायणश्रुतिः) इति वचनात् । जगद्वृक्ष-च्छेदनार्थमिति योज्यम् ॥ ४ ॥

***अ०प्र०*—** ततः[१], तत्पदं[३], परिमार्गितव्यम्[४], यस्मिन्[५], गताः[६], भूयः[७], न निवर्तन्ते[८], यतः[९], पुराणी[१०] प्रवृत्तिः[११] प्रसृता[१२], तं[१३], एव च[१४], आद्यं[१५], पुरुषं[१६], प्रपद्ये[१७] ।

ततः = तस्य वृक्षस्य[१], तत् मूलभूतं पदं = वेदवेद्यं वैष्णवं उत्तमस्वरूपं ब्रह्म[३], परिमार्गितव्यं = परितः सर्वतः विचार्य अन्वेष्टव्यं वा[४], यस्मिन् गताः = यत्पदं प्राप्ता ज्ञानिनः[६], भूयः = पुनः[७], न निवर्तन्ते = न पुनरावर्तन्ते विमर्शात् ब्रह्मज्ञानं भवेत् । यद्वा, संसाराय नागच्छन्ति नोत्पद्यन्त इत्यर्थः । स विमर्श एव कथं स्यादित्यतो विमर्शस्योपायमाह **तमेवेति** । यतः = एषा[९], पुराणी = चिरन्तनी[१०] संसारप्रवृत्तिः[११] प्रसृता = विस्तृता[१२], तमेव च = परमात्मानमेव मनोवाचां अगोचरं[१४], आद्यं = आदौ विद्यमानं[१५], पुरुषं = विष्ण्वाख्यं पुरुषं[१६], प्रपद्ये = शरणं व्रजामि । यद्वा, प्रपद्येत पुरुषव्यत्यय आर्षः भगवतान्यस्य शरण्यस्याभावात् तमेवं प्रपद्ये इत्येवं परिमार्गितव्यमित्यन्वयो न युक्तः । अस्य परिमार्गणत्वाभावात् तं वै प्रपद्ये । यं वै प्राप्य न शोचतीति श्रुतेः ॥ ४ ॥

**भाष्यम्**

**तदर्थं च तमेव प्रपद्ये**, प्रपद्येत । **तच्चोक्तं तत्रैव "तं वै प्रपद्येत यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियते तद् ब्रह्ममूलं तच्छित्सुः" इति । "नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान्" इति मोक्षधर्मे । छेदनोपायो ह्यत्र आकाङ्क्षितः । न च भगवतोऽन्यः शरण्योऽस्ति ॥ ४ ॥**

***प०टी०*—** विमर्शेन ब्रह्मदर्शनं भवतीत्युक्तम् । विमर्शश्च कथम् ? इत्याशङ्क्य, 'तमेव' इत्येतत् पुरुषव्यत्यासेन व्याचष्टे **तदर्थमिति** । उत्तमपुरुषतैवात्र किं न स्यात् ? इत्यतः साऽनुपयुक्तेत्याह **छेदनेति** । न तु भगवतः शरणागतिकथनमिति शेषः । अयुक्ता चेत्याह **न चेति** ॥ ४ ॥

***प्र०दी०*—** वाक्यार्थस्यासमाप्तत्वात् 'तमेव चाद्यं' इति व्यर्थमित्यतः सङ्गतिं सूचयन्नाह **तदर्थं चेति** । **विमर्शार्थं चेति** । विश्वविमर्शात् ब्रह्मज्ञानं भवतु । स विमर्श एव कथं स्यात् ? इत्याकाङ्क्षां **तदर्थम्** इत्यनेन सूचयति ।

तर्हि चिच्छिदिषुं प्रति तदुपायो विधेयः, न तु प्रपद्य इति वचनं सङ्गतमित्यतो 'व्यत्ययो बहुलम्' इति वचनमाश्रित्याह **प्रपद्येतेति** । कुतः ? इत्यतः श्रुतिस्मृतिसंवादादित्याह **तच्चेति** । **तद्विश्वं छित्सुः** । अभ्यासलोपः छान्दसः । **चिच्छिदिषुः छित्सुः** विश्वविमर्शार्थी **यद् ब्रह्म विश्वस्य मूलं** तमेव पुरुषं **प्रपद्येत** इत्यर्थः । प्रपत्त्या प्रसन्नेन **नारायणन दृष्टः** पुमान् **प्रतिबुद्धः** विश्वविमर्शक्षमो **भवेत्** इत्यर्थः । इतश्च पुरुषव्यत्ययोऽत्र व्याख्येय इत्याह **च्छेदनेति** । 'अतस्तदुपायविधानमेव सङ्गतम्' इति शेषः । न केवलं उत्तमपुरुषोऽत्र अनुपयुक्तः, किन्त्वयुक्तश्चेत्याह **न चेति** । 'तमेव प्रपद्य इत्येवं परिमार्गितव्यम्' इति सम्बन्धस्त्वयुक्तः । अस्य परिमार्गणत्वाभावात् ॥ ४ ॥

***भा०दी०*—** ननु 'छिदिर् द्वैधीकरणे' इत्यतः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सन्प्रत्यये 'सन्यङोः' इति द्विर्वचने, नलोपे 'आर्धधातुकस्येड् वलादेः' इति इडागमे 'हलन्ताच्च' इति सनः कित्वेन गुणाभावे 'सनाशंसभिक्ष उः' इत्युप्रत्यये 'चिच्छित्सुः' इति भाव्यम् । कथं छित्सुः ? इत्यत आह **अभ्यासलोप इति** । इडभाव इति पाठो लेखकदोषमूलः। छिदेरनिट्त्वात् 'चिच्छिदिषुः' इति प्रयोगोऽपि तथैवेति ज्ञेयम् । 'छित्सुः' इत्यस्य प्रतिपदमुक्त्वा तस्यार्थमाह **चिच्छिदिषुरिति** । **पुरुषव्यत्यय इति** । **प्रपद्ये** इत्युत्तमपुरुषः प्रथमपुरुषतया व्यत्यय इत्यर्थः । **तत्परिमार्गितव्यमिति** । 'तमेव चाद्यं पुरुषं प्रपद्ये' इत्यन्वेषणयत्नेन, प्रपत्तिकर्मत्वेन च च पुरुषस्यैव प्रकृतत्वात् । तत्स्वरूपोक्तेरेवाकाङ्क्षितत्वादिति भावः ॥ ४ ॥

***भा०र०*—** **वाक्यार्थस्येति** । संसाराख्यविश्वरूपम् 'ऊर्ध्वमूलमधःशाखम्' इत्याद्युक्तप्रकारोपेतं विकारत्वादिनाऽज्ञायमानं च तत् । एवंविधं विरूढमूलं वृक्षं सङ्गराहित्यसहितेन ज्ञानासिना छित्वा = विमृश्य, ततो ब्रह्मज्ञानमापाद्य, ब्रह्म प्राप्य न पुनरावर्तत इति 'ऊर्ध्वमूलम्' इत्यादि-महावाक्यार्थस्य **'यस्मिन्** गता न निवर्तन्ति भूयः' इत्युक्त्या **समाप्तत्वात्** इत्यर्थः । 'तमेव च' इत्यस्य कथं विश्वविमर्शार्थत्वम् ? इत्यत आह **विश्वविमर्शादिति** । 'चिच्छित्सुम्' इत्यत्र चिच्छिदिषुम्' इति पाठो लेखकदोषमूल इति **स्वामिनः** । **केचित्तु** 'छिदिर् = द्वैधीकरणे' इति धातोः द्वैधीकरणार्थकस्यापि 'अनेकार्था हि धातवः' इति न्यायेनेह विमर्शार्थत्वाभ्युपगमेन 'एकाच उपदेशेऽनुदात्तात्' इति शास्त्रप्राप्तस्य इण्निषेधस्य द्वैधीकरणार्थकधातावेव प्रवृत्त्या, विमर्शार्थके प्रवृत्त्यभाव इति मनसि निधाय 'चिच्छिदिषुम्' इति प्रयुक्तम् इत्याहुः । **तदुपायः** छेदनोपायः । **न त्विति** । 'प्रपद्ये' इत्युत्तमपुरुषश्रवणात् कृष्णस्य प्रपत्तृत्ववचनं तदनुपायत्वात् न तु सङ्गत-मित्यर्थः । **व्यत्यय इति** । 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति एतत्सूत्रवार्तिकेन नरशब्देन पुरुषग्रहणात् 'क्वचिदन्यदेव' इति वचनादिह 'प्रपद्यते' इति प्रथमपुरुषार्थे उत्तमपुरुषप्रयोग इति भावः ।

**कुत इति** । 'गीतायां पुरुषव्यत्ययो व्याख्येयः' इत्येतत् कुतः प्रमाणात् प्रतिपत्तव्यमित्यर्थः। 'तत्रैव' इति भाष्ये भाल्लवेयश्रुतेरेवोक्तत्वात् तत्र च ब्रह्म वाऽस्य पृथङ्मूलम्' इति इदंशब्देन विश्वस्य प्रकृतत्वाद् अत्र तच्छब्देन तदेव ग्राह्यमिति भावेनाह **तद्विश्वमिति** । ननु छिदिर् = द्वैधीकरणे इति धातोः 'धातोः कर्मणः समानकर्तृकाद् इच्छायां वा' इति सन्प्रत्यये, 'सन्यङोः' इति द्वित्वे, 'हलन्ताच्च' इति सनः कित्त्वेन गुणाभावे, 'सन्-आशंस-भिक्ष उः' इति उप्रत्यये च 'चिच्छित्सुः' इति भाव्यम् । तत्कथं 'छित्सुः' इति ? तत्राह **अभ्यासलोप इति** । ननु विमर्शार्थस्य छिदे-रुक्तरीत्या इण्निषेधाभावाभ्युपगमाद् 'छिदिषुम्' इत्येव स्यात् ? इत्यत आह **इडभावश्चेति** । **चिच्छिदिषुरिति** । **तदर्थः** 'विश्वविमर्शार्थी' इति । 'चिच्छिदिषुः' इति निर्वाहस्तु प्रागुक्त एव । **विश्वस्य** विमर्शनीयविश्वस्य । 'सा वैश्वदेवव्यामिक्षा' इतिवत् विधेयापेक्षया 'तम्' इति पुल्लिङ्गम् । मोक्षधर्मस्मृत्यर्थमाह **प्रपत्त्येति** । शरणागत्या । **दृष्टः** अनुगृहीतः । 'प्रतिबुद्धः' इत्यस्य प्रकृतो-पयोग्यर्थकथनम् **विश्वविमर्शक्षम इति** । अनेन 'विश्वविमर्शाद् ब्रह्मज्ञानं भवतु, स विमर्श एव कथं स्यात् ?' इति शङ्का परिहृतेत्युक्तं भवति ।

चशब्दश्रवणादाह **इतश्चेति** । न केवलं श्रुतिस्मृतिसंवादात्, किन्त्वौचित्यबलाच्चेत्यर्थः । **तदुपायविधानम्** प्रतिपत्तिरूपच्छेदनोपायविधानम् । अनेन 'प्रपद्ये' इति वचनं न सङ्गतमिति कृतचोद्यं परिहृतं भवति । *भावप्रदीपिकायां तु* ननु यदि संसारवृक्षे ज्ञानेन छेद्यः, तर्हि एकस्य ज्ञानेन सर्वमोक्षः स्यात् ? इत्यत आह 'छेदश्चे'ति। संसारविमर्शेन कथं मोक्षः? इत्यत आह 'तथाही'ति। संसारविमर्शे सतीत्यर्थः । अनेन 'ततःपरम्' इति व्याख्यातं भवति । विमर्शेन ब्रह्मदर्शनं भवती-त्युक्तम् । विमर्शश्च कथम् ? इत्याशङ्क्य 'तमेव' इत्येतत् पुरुषव्यत्ययेन व्याचष्टे 'तदर्थमि'ति । उत्तमपुरुषतैवात्र किं न स्यात् ? इत्यतः साऽनुपयुक्तेत्याह 'छेदने'ति । 'न तु भगवतः शरणा-गतिकथनम्' इति शेषः । अयुक्ता चेत्याह 'न चे'ति । इति 'छेदश्च' इत्यादिभाष्यं व्याख्यातम् ।

अनुपयुक्तमयुक्तत्वं च दोषं परिजिहीर्षुः *शङ्करः* 'कथं परिमार्गितव्यम्' इत्यत उच्यते **तमेव इति** । 'तमेव चाद्यं पुरुषं प्रपद्ये' इत्येवं परिमार्गितव्यमिति सम्बन्धमुक्तवान्, तदनुवदति **तमेव प्रपद्य इत्येवमिति** । इत्येवं परिमार्गितव्यमिति वदन् 'इत्येवम्' इत्यस्याध्याहारो दोष इत्यभि-सन्धत्ते । अर्थदोषं चाह **अस्येति** । 'अहं प्रपद्ये' इत्येवम्भावनस्य ब्रह्मज्ञानत्वाभावादित्यर्थः । 'प्रपद्ये' इत्येवम् एकान्तभक्तिलक्षणया शरणागत्या परिमार्गितव्यमित्यत्र तात्पर्यमिति चेन्न । एतदपेक्षया भाष्यरीत्या श्रुतिस्मृतिसंवादिपुरुषव्यत्ययमात्रव्याख्यानस्योक्तत्वादिति ॥ ४ ॥

**गीतातात्पर्यनिर्णयः**

**जगद्वृक्षोऽयमश्वत्थो ह्यश्ववच्चञ्चलात्मकः ।**
**अव्ययोऽयं प्रवाहेण स्वसक्तिज्ञानहेतिना ॥**
**विष्णोः सम्यक् पृथग्दृष्टिनामच्छेदनभाक् सदा ।**
**अव्यक्तादिसमस्तं तु नेति नेत्यादिवाक्यतः ॥**
**बोधेनैव पृथग् विष्णोः कृत्वा मृग्यः स केशवः ।**
**तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम् ।**
**जीवराशिः समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः ॥ ३-४ ॥**

***प्रका०***— "अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा । ततः परं तत्परिमार्गितव्यमि"त्यस्यार्थः स्पष्टयते **स्वसत्त्येत्यादिना** । "तमेव चाद्यं पुरुषं प्रपद्य" इत्यत्र पुरुषव्यत्ययेन प्रपद्यतेति ज्ञातव्यम् । "ममैवांशो जीवलोके जीवभूत" इत्यस्यार्थं घटयति **यदंशेत्यादिना** । वा क्षेत्रगतविपादाकृतौ विष्णुपादाज्जीवराशौ विष्ण्वंशशब्दः सादृश्यमात्रादित्यर्थः ।

***न्या०दी०***— वृक्षमात्रसाम्यस्योक्तत्वात् "अश्वत्थं प्राहुः" इत्यादावश्वत्थोक्तिः कथमित्यत आह **जगदिति** ॥ अश्ववत् स्थितः अश्वत्थ इत्यर्थः । चञ्चलश्चेत् किं सर्वात्मना उच्छिद्यत इत्यत आह **अव्यय इति** ॥ किमतो यद्येवं जगद्वृक्ष इत्यत आह **स्वसक्तीति** ॥ सङ्गराहित्यसहितज्ञानासिनेत्यर्थः । अस्य विष्णोः पृथक्त्वमेव कुतः ? तज्ज्ञानेन च किमित्यत उक्तं विवृण्वन्नाह **अव्यक्तादीति** ॥ नेति नेतीत्यादेः पृथक्त्वज्ञानेन च भगवन्मार्गणं भवति । जगतो भगवद्वैलक्षण्ये ज्ञाते हि तत्स्वरूपं ज्ञातुं शक्यत इति भावः । अनेन 'अश्वत्थमेनं' इत्युक्तार्थं भवति । को जगद्वृक्षच्छेदनोपाय इत्यत आह **तमेवेति** ॥ अनेन 'तमेव' इति विवृतं भवति । वृक्षच्छेदार्थमिति शेषः । ननु जगद्वृक्षच्छेदो ब्रह्मादिप्रतिपत्त्याऽपि भवति । अतः 'तमेव' इति किमवधार्यत इत्यत आह **यदिति** ॥ ब्रह्मादीनां भगवदंशाभासत्वेनासमर्थत्वात् जगद्वृक्षच्छेदाय भगवन्तमेव प्रपद्येतेत्याशयः ॥

***भा०दी०***— **अश्ववत्स्थितोऽश्वत्थ** इति । सुपि स्थ इति कप्रत्ययः ॥ कुत इति । कस्मात्प्रमाणादित्यर्थः ॥ **भगवन्मार्गणमिति** । श्रवणादिरूपमित्यर्थः ॥

**गीता**

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

***वि०वि०*— भगवत्प्राप्तौ साधनान्तराण्याह **निर्मानेति** । अहङ्कारविपर्ययहीनाः जितविषय-सङ्गदोषाः । अध्यात्मज्ञाननिरता विशेषतो निवृत्तकामाः । सुखदुःखहेतुत्वात्सुखदुःखसंज्ञैर्द्वन्द्वैः शीतोष्णादिभिर्मुक्ताः । अमूढाः रजस्तमःस्वभावशून्याः । अव्ययं तत्पदं स्वरूपं गच्छन्ति ॥ ५ ॥

***वा०ल०*— निर्गतौ मानमोहौ येभ्यस्ते निर्मानमोहाः ॥ ५ ॥

***सा०सं०*— भगवत्प्रतिपत्तौ साधनान्तराण्याह **निर्मानेति** । मानमोहाभ्याम् अहङ्कारमिथ्या-ज्ञानाभ्यां निर्गतास्ताभ्यां हीना इति यावत् । **जितविषयसङ्गदोषाः** । **अध्यात्मनित्याः** अध्यात्म-ज्ञाने भगवच्छ्रवणादौ निरताः । विशेषतो निवृत्तविषयतृष्णाः । **सुखदुःखसंज्ञैः द्वन्द्वै**र्लाभालाभ-जयाजयादिरूपै**र्विमुक्ताः** । **अमूढा** रजस्तमस्स्वभावशून्याः । **अव्ययं तत्पदं** भगवत्स्वरूपम् । **गच्छन्ति** ॥ ५ ॥

***अ०प्र०*— भगवत्प्राप्तौ साधनान्तराण्याह **निर्मानेति** ।

अन्वयः— पूर्वार्धचतुर्विंशेन युक्ताः[१], सुखदुःखसंज्ञैः द्वन्द्वैः विमुक्ताः[७], अमूढाः[८], तत्[९], अव्ययं[१०] पदं[११] गच्छन्तीत्यन्वयः ॥

निर्मानमोहाः = मानश्च मोहश्च मानमोहौ तौ निर्गतौ येषां मनसः सकाशात् ते तथा । यद्वा, निर्गतौ मानमोहौ अहङ्कारमिथ्याभिनिवेशौ येभ्यः ते निर्गताहङ्कारमिथ्याज्ञानाः[१], जितसङ्गदोषाः = जितः पुत्रादिसङ्गरूपो दोषो यैस्ते । यद्वा, सङ्गो देहाभिमानः सङ्ग एव दोषः जितः सङ्गदोषो यैस्ते तथा[२], अध्यात्मनित्याः = अध्यात्मे ब्रह्मज्ञाने नित्याः नियताः परिनिष्ठिताः । यद्वा, आत्मनि कार्यकारणरूपसमुदाये अधिकृत्य तिष्ठतीत्यध्यात्मं आत्मतत्त्वं तस्मिन् नित्याः परिनिष्ठिताः[३], विनिवृत्तकामाः = विशेषेण निवृत्तोऽपगतो कामो येभ्यः ते तथा । तेषां भगवद्भक्त्या लब्धज्ञान-वैराग्यात् कामाभावः[४], सुखदुःखसंज्ञैः = द्वन्द्वैः सुखदुःखादिहेतुत्वात् तत्संज्ञानि शीतोष्णादीनि

द्वन्द्वानि तैः[९], विमुक्ताः = विशेषेण मुक्ताः स्पृष्टार्थो वा[७], अत एव अमूढाः = निवृत्ता विद्याः रजस्तमोजन्यज्ञानशून्याः सन्तः[८], तत् = तद्वारा वेद्यं[९], अव्ययं = अव्ययप्रकाशमयं[१०] पदं = वैष्णवं पदं ब्रह्मविष्ण्वाख्यं जानन्ति[११] गच्छन्ति च = ततः प्राप्नुवन्ति च[१२] ॥ ५ ॥

**भाष्यम्**

**साधनान्तरमाह निर्मानेति ॥ ५ ॥**

*प०टी०*— 'तमेव' इत्यनेनैव उपायकथने 'निर्मान.........' इति किमर्थम् ? इत्यत आह **साधनान्तरमिति** ॥ ५ ॥

*प्र०दी०*— तर्हि ब्रह्मज्ञानसाधनं विश्वविमर्शः । तत्र साधनं च तत्प्रपत्तिरिति समस्तमुक्तम्, किमुत्तरेण ? इत्यत आह **साधनान्तरमिति** ॥ ५ ॥

*भा०र०*— उत्तरभाष्यमवतारयन् वृत्तनिर्गलितमनुवदति **तर्हीति** । 'प्रपत्तेर्विश्वविमर्शोपायत्वे' इत्यर्थः । **समस्तम्** आकाङ्क्षितं सर्वम् । **साधनान्तरमितीति** । 'ब्रह्मज्ञाने' इति शेषः ॥ ५ ॥

*गीताक्षरार्थस्तु*—

**'ऊर्ध्वमूलम्' इत्यादिपञ्चश्लोक्यक्षरार्थस्तु**— त्रयोदशाध्याये संसारमूलभूतप्रकृत्युपादानकमहदहङ्कारादितत्त्वजातं क्षेत्रशब्दितं जगत्स्वरूपमुक्तम् । तन्मूलकसंसारात्ययोपायश्च 'य एनं वेत्ति पुरुषम्' इत्यादिना दर्शितम् । तदुभयं अत्र विविच्य प्रदर्श्यते । ननु समनन्तरातीताध्याय एव तद्वयमुक्तम् ? सत्यम् । तथापि तत्र संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् । अत्र पुनः समग्रं संसाररूपं प्रदर्श्य, तदत्ययेच्छाम् उत्पाद्य, तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपञ्च्यते । अत एव चतुर्दशाध्यायानन्तर्यम् अस्य । तत्प्रसङ्गाद् अलौकिको भगवन्महिमा चात्रोच्यते ।

तत्र समग्रसंसारस्वरूपं तावदुच्यते **ऊर्ध्वमित्यादि सार्धश्लोकद्वयेन** । उन्नतो ह्यूर्ध्व उच्यते । विष्णुश्च सर्वस्मात् प्रपञ्चात् सर्वैर्गुणैरुन्नत इत्यूर्ध्वशब्दार्थः । तथा श्रियः परतन्त्रेषूत्तमत्वाद्, अचित्प्रकृतेः सत्त्वादिगुणसहिताया अचेतनेषूत्तमत्वाद्, ऊर्ध्वशब्देन जडाजडप्रकृती च गृह्येते । यद्यपि 'ऊर्ध्वो विष्णुः' इति भाष्ये विष्णुरेक एवोर्ध्वशब्दार्थः प्रतीयते । तथापि 'मूलानि भगवद्रूपादीनि' इति भाष्यटीकायाम् आदिपदेन जडाजडप्रकृत्योः सत्त्वादिगुणानां च ग्रहणम् । तेषामपि 'ऊर्ध्वमूलम्' इत्यत्र विवक्षितत्वादिति विष्णु-चिदचित्प्रकृति-सत्त्व-रजस्-तमोगुणानां मूलत्वेन गृहीतत्वाद् अत्र तेषां ग्रहणं युक्तम् । ऊर्ध्वाः = उत्तमा विष्णु-श्रीतत्त्व-जडप्रकृति-सत्त्व-रजस्-तमोगुणा मूलानि यस्य स तथा तम् ।

अत्रायं विवेकः— 'प्रसिद्धवृक्षस्य पृथिवीदेवतावत् जगद्वृक्षस्य हरिः चेतनप्रकृतिश्च निमित्तत्वेनैव मूलम् । अचित्प्रकृतिस्तु मृद्वत् उपादानतया, सत्त्वादयो भूम्यन्तर्गतपादाख्यार्वाचीनमूलम्' इति । **अधःशाखम्** अधः = मूलापेक्षया अपकृष्टानि पञ्चभूतानि शाखा इव शाखा यस्यासौ अधःशाखः, तम् । 'नीचास्ततो महदहम्बुद्ध्यो भूतसंयुताः' इत्युत्तरप्रस्थाने एव इत्यतोऽत्र शाखाशब्देन पञ्चभूतानि देव-मनुष्य-तिरश्चां शरीराणि चोपशाखा भाष्य-टीकोक्ता एव ग्राह्याः । श्वः स्थाता श्वस्स्थः, 'सुपि स्थः' इति कः. श्वस्स्थो न भवतीति अश्वस्स्थः, स एव अश्वत्थः, तम्। श्वसः सकारस्य तकारः, धातुसकारस्य लोपश्च निरुक्तत्वात् । पूर्वेद्युः, अद्य, श्वोऽपि एकप्रकारेण अनवस्थायिनमित्यर्थः । एवं विकारिणोऽपि न प्रवाहव्यय इत्युच्यते **अव्ययमिति** ।

नन्विदमयुक्तम् ? जगत्प्रवाहस्य प्रलये व्ययात्, इति चेन्न । पूर्वब्रह्मकाले यथा स्थितः तथा सर्वदाऽपि जगद्वृक्षः स्थायी । 'धाता यथा पूर्वमकल्पयत्' इति श्रुतेरित्यभिप्रायात् । **यस्य छन्दांसि** वेदान् फलकारत्वसादृश्यात् **पर्णानि** प्राहुः प्राज्ञाः । लोके पर्णोत्पत्त्यनन्तरमेव फलदर्शनाद् अत्रापि अवबुद्धार्थैः वेदैरेव मोक्षादिफलस्य भाव्यत्वात् छन्दसां पर्णत्वेन रूपणम् । **यस्तं** जगद्वृक्षं **वेद** ऊर्ध्वमूलत्वाद्युक्तप्रकारेण **स वेदवित्** वेदार्थवित् । संसारप्रपञ्चवृक्षस्य ईश्वरो मूलम्, भूतानि शाखाः, स एकप्रकारेणानवस्थायी, प्रवाहतोऽव्यवयश्च, वेदादिबोधितमोक्षफलं च इत्येतावानेव हि वेदार्थः ॥ ॥ १ ॥

किञ्च **अधश्च ऊर्ध्वं च प्रसृताः तस्य** जगद्वृक्षस्य **शाखाः** भूतानि **अधश्च** स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये च **ऊर्ध्वं** चोत्तमे कारणे अव्यक्ते च **प्रसृताः** प्रगताः सूक्ष्मरूपेण सन्ति। गुणैः = अर्वाचीनमूलरूपैः सत्त्वरजस्तमोभिः प्रवृद्धाः = स्थूलीकृताः, अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति । विषयाः = शब्दादयः प्रवालाः = पल्लवा इव यासां ताः तथा, प्रतीतिसमयमात्रे सुखहेतुतया विमर्दनासहत्वसाम्याद् विषयाणां प्रवालत्वोपचारः । **अधश्च** मूलापेक्षयाऽपकृष्टासु शाखासु भूतेषु **मूलानि** भगवद्रूप-जडाजडप्रकृति-सत्त्व-रजस्-तमोगुणलक्षणानि **अनुसन्ततानि** व्याप्तानि च । तानि च मूलानि **कर्मानुबन्धीनि** । अत्र कर्मानुबन्धित्वं = कर्मसम्बन्धित्वम्, तच्च कर्मसम्बन्धेन फलदातृत्वाद् भगवतोऽपि युक्तम् । यद्वा कर्मैवानुबन्धः = चरमभाविकारणं कर्मानुबन्धः, तद्वत्त्वं कर्मानुबन्धित्वम् । तदपि धर्माधर्मलक्षणकर्मानुबन्धेन फलदातृत्वाद् भगवतोऽपि युज्यत इति । कर्मसापेक्षया फलदानं च मनुष्यलोक एव, न स्वर्गनरकादाविति 'मनुष्यलोके' इत्युक्तम् ॥ २ ॥

किञ्च **इह मनुष्यलोके** स्थितैः **अस्य** जगद्वृक्षस्य रूपं यथा येन प्रकारेण विकारित्वादिना स्थितं **तथा नोपलभ्यते** । किञ्चास्य वृक्षस्य **अन्तः** संहर्ता **न** उपलभ्यते, **आदिः** उत्पादयिता **न** उपलभ्यते, **सम्प्रतिष्ठा** स्थितेः कर्ता **च** विष्णुः **न** उपलभ्यत इति संसारवृक्षस्वरूपनिरूपणम् । किमतो यद्येवं जगद्वृक्ष उक्तस्वरूपः ? इत्यत उच्यते **अश्वत्थमेनमिति** । **सुविरूढमूलम्** सुष्ठु विरूढानि = विरोहं गतानि मूलानि = भगवद्रूपादीनि यस्य स तथा तमेनम्, अन्वादेश एनादेशः, उक्तविशेषणयुक्तं **अश्वत्थं** सर्वदैकप्रकारेणानवस्थायिनं जगद्वृक्षं **दृढेन** उपासनाशितेन **असङ्गशस्त्रेण** असङ्गः = सङ्गराहित्यम्, तेन सहितं शस्त्रं = शस्त्रमिव ज्ञानं असङ्गशस्त्रम्, तेन । दध्योदनादिवत् वृत्तौ साहित्यस्य अन्तर्भावात् तद्वाचकपदाप्रयोगः । **छित्त्वा** कार्यत्व-परतन्त्रत्वादिना विमृश्य ॥ ३ ॥

**ततः** प्रकृत्यादेर्विश्वस्मात् **परं** विलक्षणं **तत्** 'ओम् तत्सदिति निर्देशो ब्रह्मणः परिकीर्तितः' इति वचनाद् ब्रह्म **परमार्गितव्यं** परिमार्गणम् = अन्वेषणम् । श्रवणादिना ज्ञातव्यं कीदृशम् ? **यस्मिन् गताः** यत् प्राप्ताः **न निवर्तन्ति** भूयो नावर्तन्ते । *भावप्रदीपिकायां तु*— 'ततः पदम्' इति पठितम्, तदा ततः = पश्चात् तत् = 'ऊर्ध्वमूलम्' इत्यत्र प्रकृतं पदं = वस्तु विष्णवाख्यं परिमार्गितव्यमिति व्याख्येयम् । ननु विश्वविमर्शो ब्रह्मज्ञानं प्रति कथमुपायः ? इति चेदुच्यते— विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात्, चेतनानधिष्ठिताद् उपादानाद् उत्पत्त्यसम्भवात्, परतन्त्राणां मुख्यतयाऽधिष्ठातृत्वायोगाद् उपादानकारणाधिष्ठातृ ब्रह्मैव विज्ञातं भवतीति ।

ननूक्तरीत्या विश्वविमर्शाद् ब्रह्मज्ञानं भवतु, स विमर्श एव कथं स्यात् ? इत्यतस्तत्रोच्यते **तमेव चाद्यमिति** । **यतः** यस्मात् पुरुषात् **पुराणी** चिरन्तनी = अनादिकालप्राप्तवृत्तिः संसारवृक्षस्य सव्यापारावस्थितिः **प्रसृता** निर्गता **तमेव** आदौ भवं **पुरुषं प्रपद्ये** 'व्यत्ययो बहुलम्' इति पुरुषव्यत्ययेन प्रपद्येत = शरणं व्रजेत् 'विश्वविमर्शार्थम्' इति शेषः । कुतः पुरुषव्यत्ययाश्रयणम् ? इति चेत् 'तं वै प्रपद्येत, यं वै प्रपद्य न शोचति.... तद् ब्रह्म' इति, 'तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम्' इति च श्रुतिबलादिति ब्रूमः ॥ ४ ॥

एवम् 'अश्वत्थमेनम्' इत्यत्र 'एनमश्वत्थं छित्त्वा = कार्यत्व-परतन्त्रत्वादिना विमृश्य, परं तत् परिमार्गितव्यम्' इति विश्वावमर्शस्य ब्रह्मज्ञानं प्रत्युपायत्वमुक्तम् । ब्रह्मज्ञानस्य किं फलम् ? इत्याकाङ्क्षायाम् 'यस्मिन् गता न निवर्तन्ति भूयः' इति प्राप्तपरब्रह्मस्वरूपाणाम् अपुनरावृत्तिलक्षणं

फलं चोक्तम्। इदानीं विश्वविमर्शादन्यच्च ब्रह्मज्ञानसाधनं तज्ज्ञानफलं चाव्ययमित्युच्यते **निर्मानेति**। निर्गतौ मानमोहौ = अहङ्कार-मिथ्याप्रत्ययौ येभ्यस्ते **निर्मानमोहाः**, जितः सङ्गदोषः = दुर्जन-सङ्गलक्षणदोषो यैस्ते **जितसङ्गदोषाः**, 'मृतौ वाऽपि न चाप्येकत्ववादिभिः समत्ववादिभिश्चाहं सङ्गच्छेयं कथञ्चन' इत्यादेः । **अध्यात्मनित्याः** अध्यात्मे = श्रवणादिना परमात्मस्वरूपालोचने नित्याः = ध्रुवाः = परिनिष्ठिताः, **विनिवृत्तकामाः** विशेषतो निवृत्तकाम्यकर्मनिषिद्धविषयाभि-लाषाः, **सुखदुःखसंज्ञैः** सुखदुःखहेतुत्वात् लक्षणया 'सुखं दुःखम्' इति संज्ञाशब्दो येषां तानि तैः **द्वन्द्वैः** शीतोष्णलाभालाभजयादिरूपैः **विमुक्ताः** अत एव **विमूढाः** निवृत्ताविद्याः रजस्तमस्स्वभाव-शून्या वा, **अव्ययं तत्पदं** भगवत्स्वरूपं **गच्छन्ति** अवगच्छन्ति, ततः प्राप्नुवन्ति च इति, 'गच्छन्ति' इत्यस्यार्थद्वयं द्रष्टव्यम्— 'इदं च साधनान्तरमाह' इति भाष्येण 'कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थः' इति टीकया च गम्यते । 'साधनान्तरम्' इत्यत्र विश्वविमर्शादन्यद् ब्रह्मज्ञाने साधनं निर्मानत्वादि इत्यर्थस्य प्राप्तिः पुरुषार्थ इत्यस्य स्फुटमवगमादिति ॥ ५ ॥

**गीता**

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

***वि०वि०***— कीदृशं तत्पदमित्यत आह **न तदिति** । सूर्याद्यप्रकाश्यं मुक्तप्राप्यं धाम स्वरूपम् ॥ ६ ॥

***सा०सं०***— कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थ इत्यत आह **न तदिति** । तत्पदं सूर्यादिर्न प्रकाशयति । **यद्गत्वा** यत्स्वरूपं प्राप्य । **न निवर्तन्ते** संसारं न यान्ति । **परमं तत् मम धाम**रूपमित्यर्थः ॥ ६ ॥

***अ०प्र०***— तदेवं गन्तव्यं पदं विशिनष्टि **न तदिति** ।

सूर्यः[१], शशाङ्कः[२], पावकश्च[३], तत्पदं[४], न भासयते = न प्रकाशयति[५], योगिनः यद्गत्वा = यत्पदं प्राप्य[६], न निवर्तन्ते = परं उत्कृष्टं धाम प्रकाशः[७], तत्[८], मम[९], परमं धाम = पुनः संसृतिं न प्राप्नुवन्ति[११] इति विद्धीत्यन्वयः ।

सूर्यादिप्रकाशाविषयत्वेन जडत्वशीतोष्णादिदोषप्रसङ्गो निरस्तः इत्यन्वयार्थः स्पष्टः ॥ ६ ॥

**भाष्यम्**

## स्वरूपं कथयति न तदित्यादिना ॥ ६ ॥

*प०टी०*— संसारविमर्शनद्वारा ब्रह्मस्वरूपप्राप्तिर्निर्मानत्वादिनेत्युक्तम् । कीदृशं तत्स्वरूपम् ? इत्यत उत्तरश्लोकमवतारयति **स्वरूपमिति** । जीवाभिन्नस्य कथमयं महिमा ? इत्यत उक्तम् **'ममैव'** इति ॥ ६ ॥

*प्र०दी०*— उत्तरवाक्यानां सङ्गत्यप्रतीतेस्तां सूचयन्नाह **स्वरूपमिति** । अनेन कीदृशं तत्पदम्, यत्प्राप्तिः पुरुषार्थः ? इत्याकाङ्क्षायामिदमुच्यत इत्युक्तं भवति । 'स्वरूपं' इत्यनेन 'पदं' इत्युक्तस्य 'धाम' इति वक्ष्यमाणस्य चार्थोऽप्युक्तो भवति । स्थानतेजसोः असङ्गतत्वात् ॥ ६ ॥

*भा०दी०*— पद-धामशब्दयोरर्थान्तरशङ्कां निराह **स्थानेति** ॥ ६ ॥

*भा०र०*— **उत्तरवाक्यानाम्** 'न तद्भासयते' इत्यादीनाम् । **अनेन** 'न तदित्यादिना' इति प्रतीकेन । **पदम्** 'गच्छन्त्यमूढाः पदमव्ययं तत्' इत्यत्रोक्तम् । उक्तस्य पदपदस्य न केवलं सङ्गतिः, किन्तु अर्थोऽपि इत्यपिशब्दः । ननु पद-धामशब्दयोः स्थान-तेजोऽर्थत्वं किं न स्यात् ? इत्यत आह **स्थानतेजसोरिति** । 'तत्परिमार्गितव्यम्' इत्युक्तपरिमार्गणकर्मत्वेन, 'पुरुषं प्रपद्यते' इति प्रपदनीयत्वेन च प्रस्तुतभगवत एवात्र वक्तव्यतया प्रसिद्ध्या स्थानस्य, 'धाम तेजः' इति शङ्करोक्त-रीत्या तेजसश्चानाकाङ्क्षितत्वादिति भावः ॥ ६ ॥

**गीता**

## ममैवांशो जीवलोके जीवभूतः सनातनः ।
## मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

*वि०वि०*— यदुक्तं जगद्वृक्षच्छेदनार्थं तमेव प्रपद्येतेति तदयुक्तम् । ब्रह्मादिप्रतिपत्त्याऽपि तत्सम्भवादित्यत आह **ममैवेति** । जीवलोके जीवशरीरे । जीवभूतो जीवाख्यः । ब्रह्मादीनां मदंशाभासत्त्वेनासमर्थत्वात् । जगद्वृक्षच्छेदाय भगवन्तमेव प्रपद्येत इत्याशयः । अंशशब्दो भिन्नां-शाभिप्रायः, न तु मत्स्यादिवत्स्वरूपांशाभिप्रायः । उक्तं च— 'जीवराशिः समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः । किञ्चित्सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते ॥' इति अंशाभासत्वात् । तर्हि कुत्रापि कार्ये जीवस्य सामर्थ्यं न स्यात् इत्यत आह **मन इति** । प्रकृतिस्थानि प्रकृतिकार्ये शरीरे स्थितानि । मनःषष्ठानि श्रोत्रादीनि पञ्चेन्द्रियाणि । गोलकेभ्यो विषयान् प्रति जीवः कर्षति ॥ ७ ॥

*सा०सं०*— जगद्वृक्षच्छेदार्थं ब्रह्मादिप्रतिपत्त्यैवालं किं भगवत्प्रतिपत्त्येत्यत आह **ममैवेति** । **जीवलोके** ब्रह्मादिजीवशरीरे । **सनातनो**ऽनादिनित्यः । **जीवभूतः** जीवरूपः । **ममैव** भिन्नांशः । न तु मत्स्यादिवत् स्वरूपांशः । भिन्नोऽपि सूर्यस्य खद्योत इव किञ्चित् सादृश्यमात्रेणांश इत्युच्यते । अतो ब्रह्मादीनां मदंशाभासत्वेन तेषां ब्रह्मादीनाम् अशक्तत्वात्, तेषां प्रतिपत्तिं विना भगवत्प्रतिपत्तिरेव कार्येति भावः । जीवानामंशाभासत्वे क्वचिदपि कार्ये शक्तिर्न स्यादित्यतोऽस्तीत्याह **मन इति** । **प्रकृतिस्थानि** प्रकृतिकार्यशरीरस्थानि । **मनःषष्ठानि** श्रोत्रादिपञ्चेन्द्रियाणि । ममांशो जीवभूतः । विषयान् प्रति **कर्षति** प्रवर्तयति स्थितिदशायाम् । देहावाप्तिवेलायां तु मूलकारणात् । उत्क्रान्तौ तु शरीरात् कर्षति ॥ ७ ॥

*अ०प्र०*— यदुक्तं जगद्वृक्षच्छेदनार्थं तमेव प्रपद्येतेति तदयुक्तम् । ब्रह्मादिप्रतिपत्त्यापि तत्सम्भवादित्यत आह **ममेति** पञ्चभिः । तत्रादौ **ममेति** ।

जीवलोके[१], सनातनः[२], जीवभूतः[३], ममैवांशः[४], प्रकृतिस्थानि[५], मनः-षष्ठानि[६], इन्द्रियाणि[७], कर्षतीत्यन्वयः ॥

जीवलोके = जीवशरीरे[१], सनातनः = सर्वदा संसारित्वेन प्रसिद्धः विधिबद्धो नित्यः[२], जीवभूतः = जीवपदार्थो ब्रह्मादिलक्षणः[३], यः = सः[३], ममैवांशः = प्रतिबिम्बरूप एव प्रपद्येतेत्याशयः[४], न तु जीवस्य प्रतिबिम्बांशत्वे कुत्रापि कार्ये सामर्थ्यं न स्यादित्यत आह **मन इति** । प्रतिबिम्बांशो जीवपदार्थः । प्रकृतिस्थानि = स्वकारणस्थितानि प्रकृतिकार्याणि[५], मनःषष्ठानि = मनोयुक्ततया षष्ठानि[६], इन्द्रियाणि = पञ्च ज्ञानेन्द्रियाणि[७], कर्षति = तत्तत्कार्यारूढौ भवतीत्यर्थः। अधिष्ठाय श्रवणद्वारेण शब्दविषयं भुङ्क्ते । एवं त्वगादीन्द्रियैः स्पर्शादिक्रमेण विषयान् भुङ्क्ते इति सर्वत्र योजनीयम् । यद्वा, तथा शरीरस्थानि तानि चोत्क्रमणे शरीराल्लोकान्तरे कर्षति इन्द्रियैस्सहैव जायते मृत्वा लोकान्तरं च तैस्सह गच्छतीति भावः ॥ ७ ॥

*त्रि०वि०*— अस्याद्वैतमतेनार्थः— कृष्णाख्यं ब्रह्म अर्जुनाख्यमधिकारिणमुपदिशति **ममैवेति** । ममैव नान्यस्य अंशः – स्वरूपांशः जीवलोके – पृथ्वीतले, जीवभूतः – जीवाख्यः पदार्थः सोऽपि नाधुनिकः किन्तु सनातनः – अनादिसिद्धः । मनः षष्ठं येषु तानि इन्द्रियाणि – ज्ञानेन्द्रियाणि, प्रकृतिस्थानि – देहस्थानि, कर्षति – नाटयतीति । **अत्र विचारः**— कृष्णाख्यः किं ब्रह्मणो भिन्नः अभिन्नो वा । नाद्यः "अहोभाग्यमहोभाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्" इति भागवतवाक्यविरोधात् । न द्वितीयः । तस्य निर्धर्मकत्वेन

वचनायोगात् । नोभयथापि कृष्णस्य उपदेशकत्वं सिद्ध्यति । तथा अद्वैतमते कृष्णादर्जुनो भिन्नोऽभिन्नो वा । नाद्यः अपसिद्धान्तात् । औपाधिकभेदाङ्गीकारेण नापसिद्धान्त इति चेन्न । उपाधेः निर्धर्मकब्रह्मणि संयोगेन जीवसिद्धिर्वा, जीवे संयोगेन वा, उभयसंयोगेन वा, उभयसंयोगं विनैव वा । नाद्यः असङ्गश्रुतिविरोधात्, न चोपाधेर्मिथ्यात्वानङ्गीकारेण विरोधाभावः । उपाधौ वर्तमानं यन्मिथ्यात्वं तत्सत्यं मिथ्या वा । नाद्यः, अद्वैतमते एकस्य ब्रह्मण एव सत्यत्वाङ्गीकारेण उपाधिगतमिथ्यात्वस्य सत्यत्वाङ्गीकारेण अपसिद्धान्तात् । न द्वितीयः, मिथ्यात्वस्य मिथ्यात्वे उपाधेः सत्यत्वसिद्धेः, तस्मात् श्रुतिविरोधोऽपरिहार्यः । न द्वितीयः, उपाधिं विना जीवत्वायोगात् जीवं विना उपाधिसङ्गासिद्ध्या अन्योन्याश्रयात् । न तृतीयः, उभयशब्देनैव भेदसिद्धेः अन्ततः आत्माश्रयाच्च । न चतुर्थः । भेदस्यौपाधिकत्वे अकारणकार्योत्पत्तिप्रसङ्गात् । तस्मान्नापसिद्धान्तसम्भवात् अर्जुनस्योपदेश्यत्वसिद्धिः । श्लोकार्थेऽपि विचारः सद्भिर्द्रष्टव्यः । ममैवेत्यस्मच्छब्दप्रयोक्ता कृष्णः जीवो वा ब्रह्म वा आद्ये जीवस्य जीवांशत्वाङ्गीकारे अस्माकं का हानिः, तव च को लाभः । द्वितीये ब्रह्मणो निर्धर्मकत्वेन वक्तृत्वानुपपत्तेः । कृष्णाख्यं सगुणं ब्रह्म, निर्धर्मकं तु तदन्यत् इति चेन्न "रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपम्" इति भागवतविरोधात् । तस्मादुभयथाप्यनुपपत्तिः । तथा एवशब्दस्य अन्ययोगव्यवच्छेदार्थकत्वे अन्यः किं ब्रह्मोत जीवोऽथ जडः । नाद्यः, तवानभिमतसिद्धेः । न द्वितीयः, देवयोग्यातिरिक्तानां जीवानां अंशाभावेन भागासिद्धेः । न तृतीयः, जडस्य जीवरूपांशाभावेन प्राप्त्यभावात् निषेधानुपपत्तेः । निषेधस्य प्राप्तिपूर्वत्वात् । तस्मान्नैवशब्दस्योपयोगः । ब्रह्मणोंशोऽप्ययुक्तः अखण्डत्वात् । विशेषाद्युज्यत इति चेन्न । निर्विशेषत्वाङ्गीकारात् । किञ्च जीवलोकशब्देन किं भूलोको गृह्यते उत जीवसमुदायोऽथवा देहः । नाद्यः, द्युवादिस्थानां कृष्णांशत्वानुपपत्तेः । न द्वितीयः, सप्तम्यनुपपत्तेः । न तृतीयः, मृतस्य अंशत्वानुपपत्तेः । देहशब्देन लिङ्गदेहो गृह्यते इति हेतोर्मृतस्यापि तद्वत्त्वमिति चेत् । लिङ्गदेहस्थितोंशः किं स्वरूपभूतः उत प्रतिबिम्बरूपः । नाद्यः, "रूपं रूपं प्रतिरूपो बभूव" इति श्रुतिव्याकोपात् । न द्वितीयः, ऐक्यानुपपत्तेः । न हि प्रतिबिम्बं बिम्बे निविशतीति केनचिद् दृष्टम् । तस्मान्न जीवलोकपदोपादानं युज्यते । जीवभूत इत्यपि अंशविशेषणं न युज्यते । न जीवः अजीवः अजीवः जीव इव स्थित इति जीवभूत इति विग्रहेण साम्यसिद्ध्या तादात्म्यासिद्धेः । किञ्च साधनपूर्तिमतो जीवस्य ब्रह्मैक्यरूपसायुज्यमुक्तौ सिद्धायां पुनः कल्पान्तरे "यथापूर्वमकल्पयत्" इति श्रुत्या पुनर्ब्रह्मणः संसरणप्राप्तौ मुक्तांशं विहाय ब्रह्मविद्यया संसरति मुक्तांशेन सहैव वा । आद्ये, ऐक्यानुपपत्तिः

ब्रह्मणोऽखण्डत्वहानिश्च । न द्वितीयः, "न च पुनरावर्तते यद्गत्वा न निवर्तन्ते" इति श्रुतिस्मृति-विरोधात् । तस्मादैक्यानुपपत्तिः । सनातनशब्देनानादित्वमुच्यते । अनाद्यंशस्य अन्तेऽप्यंशत्वा-नपगमात् । अंशिना ब्रह्मणा साकमैक्यं कथं घटेत ? पूर्वसिद्धस्योत्तरत्राप्यसिद्धेः । अस्तु ज्ञानवदिति चेन्न ज्ञानस्य अज्ञानावरणेन प्रतिबन्धे जातेऽपि श्रुतादिना तन्निवृत्तौ जीवस्य चिद्रूपतया पूर्वसिद्ध-स्यैवाभ्युदयात् । नासिद्धसिद्धिः । अपि च जीवस्य अनादित्वमेव दुर्घटं त्वन्मते । अनादेर्भावस्य सान्तत्वायोगात् । तदनादित्वं षण्मध्येऽस्मदीयैरङ्गीकृतमिति चेत् न । "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः", "नान्यद्यत्सदसत्परम्" इति श्रुतिस्मृतिव्याकोपात् । अद्वैतमते मनसः इन्द्रियाणां प्रकृतेः कर्षणक्रियायाश्च मिथ्यात्वेन उत्तरार्धस्य कथनायोगः । न हि मिथ्यापदार्थः आकृष्टुं शक्यते । तथात्वे न शुक्तिरजतस्याप्याकर्षणप्रसङ्गात् । नापि हि भ्रमज्ञानविषयस्य क्रिया-विषयत्वम् । शुक्तिरजतस्यापि तापनताडनसहत्वापातात् । तस्मात् त्वन्मते श्लोकार्थानुपपत्तिः । तर्हि कोऽर्थस्तस्येति चेदुच्यते ॥ पूर्वश्लोके कृष्णेन स्वस्वरूपस्य सूर्याद्यप्रकाश्यत्वं गन्तुरपुनरावृत्ति-कारकत्वं चोक्तम् । तत्र कोऽसौ सूर्यादिकस्य च प्रकाशे इत्यत आह पूर्वार्धेन **ममैवेति** । प्रथमप्रश्नस्योत्तरं **ममैवांश इति** । द्वितीयस्योत्तरं **जीवलोक इति** । जीवस्य लोके – प्रकाशे "लुकप्रकाश"इति धातोः ईष्टे इति शेषः । उत्तरार्धोक्तं गन्तुरपुनरावृत्तिकारकत्वं भगवतः कथमित्यत आह त्रिभिः पादैः । **जीवभूत इति** । सनातनः पुराणपुरुषो भगवान् प्रकृतिस्थानि जडशरीरस्थानि मनःषष्ठानीन्द्रियाणि – मनसा सह षड्ज्ञानेन्द्रियाणि – जीवभूतः – जीवस्य भूः – चिच्छरीरं तस्मात् कर्षति – आकृष्य वियोजयतीति यावत् । जडेन्द्रियवियोगे एव मुक्तानामपुनरावृत्तिकारक-भगवत्स्वरूपप्राप्तिर्भवतीति भावः । यद्वा— यस्य सूर्याद्यप्रकाशत्वादिकमुक्तं स क इत्यत आह **ममैवेति** । स ममैवांशः – स्वरूपभूतः ना – पुरुषरूपः अतनः "अतसातत्यगमने" इति धातोः व्याप्तो नित्यज्ञानी वा जीवभूतः – जीवे भूतः "भूसत्तायाम्" इति धातोः स्थित इति यावत् । तथा सत् प्रकृतिस्थानि – स्वभावस्थितानि – स्वभावतो विषयासक्तानीति यावत् । मनःषष्ठानि इन्द्रियाणि जीवलोके – जीवप्रकाशके भगवति विषये कर्षति – आकर्षति – भगवद्विषयकाणि करोतीति यावत् । अपुनरावृत्तिधाम च अनेन सत्कृत्यैव प्राप्यमिति सूचितम् । अथवा अपुनरा-वृत्तिधामगन्ता क इत्यत आह **ममैवेति** । जीवलोके – जीवानां – प्रकाश्यानां जडानां च समाहारः जीवलोकं तस्मिन् जीवजडमध्ये इत्यर्थः । जीवभूतः – जीवरूप एव न जडरूपः ममांशः – प्रतिबिम्बरूपांशः सनातनः – नादनेन – विधिनिषेधात्मकशब्दरूपेण वेदेन सहितः सनादनः सनादन एव सनातनः । "वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन

योगरस्तदुच्यते पञ्चविधं निरुक्तम्'' इति ऋग्भाष्ये । वेदोक्तविधिनिषेधपात्रभूत इत्यर्थः । तदुक्तं ''निषेधविधिपात्रत्वात् सनातन इतीरित'' इति महाविष्णुपुराणे । मनआदि षडिन्द्रियाणि प्रकृतिस्थानि – प्रकृष्टा – सर्वोत्कृष्टा कृतिर्यस्य स प्रकृतिः भगवान् तत्स्थानिं – तदाश्रितानि तदधीनानि इति यावत् । कर्षति – प्रवर्तयति । स एव तद्धामगन्तेति भावः ॥ ७ ॥

*इति श्रीमन्नारदशिष्य पाङ्गरीभीमाचार्यात्मजश्रीनिवासविरचिता*
*श्रीगीतात्रिविधार्थविवृतिः समाप्ता ॥*

**गीतातात्पर्यनिर्णयः**

**किञ्चित्सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते ।**
**ईश्वरस्तु यदा त्वस्य शरीरं विशति प्रभुः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ५-७ ॥**

*प्रका०*— ''मनःषष्ठानी''त्यादेरर्थ उच्यते **ईश्वरस्त्वित्यादिना** ।

***न्या०दी०***— अंश एव किं न स्यादिति चेन्न । भिन्नत्वात् । तर्ह्यंशाभासोऽपि कथमित्यत आह **किञ्चिदिति** ॥ अनेन **'ममैव'** इत्युक्तार्थं भवति । किञ्च जीवस्य विषयान् प्रति इन्द्रियप्रेरणादिकमपीश्वराधीनमिति तत्प्रपत्तिर्जगद्वृक्षच्छेदनोपाय इति भावेन भगवन्महिमानं दर्शयति **ईश्वर इति** ॥ **प्रकृतिस्थानि** शरीरस्थानि । अनेन **मनःषष्ठानीत्युक्तार्थं** भवति ।

*भा०दी०*— प्रकृतिस्थानीत्यत्र प्रकृतिशब्दस्तत्कार्यपर इत्युपेत्याह **शरीरस्थानीति** ॥

**गीता**

## शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
## गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

*वि०वि०*— जीवस्येन्द्रियाकर्षणसामर्थ्यमपि ईश्वराधीनं न स्वत इत्याह **शरीरमिति** । यद् यदा । जीवः शरीरमवाप्नोति यदाप्युत्क्रामति च तदेश्वर एतानि सूक्ष्माणीन्द्रियाणि वायुराशयात् स्थानात्पुष्पादेः । गन्धवान् गन्धवतः पुष्पाद्यवयवानि गृहीत्वा । शरीरं लोकान्तरं च संयाति । 'यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः । तत्र तत्रैव वसति न यत्र स्वयमिच्छति ॥' इत्यादि वचनात् ॥ ८ ॥

*वा०ल०*— 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' इत्यत्र, जीवविषयत्वे स्पष्टोऽर्थः । परमुखमुद्रणार्थं परमात्मविषयतयैव योजना क्रियते । 'दशार्थाः सर्वभारते' इति हि प्राञ्चः । यत् यदा शरीरमाप्नोति जीवः उत्पत्तिसमये प्राप्नोति, तदा जीवभूतः जीवेषु भूतः, 'भू सत्तायाम्' इति धातोः, सन्निहितः ममैवांशः प्रकृतिस्थानि जडप्रकृतौ स्थितानि मनःषष्ठानि इन्द्रियाणि ज्ञानेन्द्रियाणि, कर्षति आकर्षति जीवशरीरं प्रत्याकर्षति । प्रकृतेराकृष्य परिणम्यमानजीवदेहे पञ्चमे मासि चक्षुरादीन्द्रियस्थानेषु परिणामयतीत्यर्थः । यत् यदा जीवः शरीरमुत्क्रामति च, तदाऽपि ईश्वरः 'आशयात्' पुष्पाद्याशयात् वायुः गन्धानिव एतानीन्द्रियाणि गृहीत्वा सूक्ष्मरूपेण लिङ्गदेहे गृहीत्वा संयाति । सूक्ष्मरूपेण नयतीति सूचनाय वायुर्गन्धानिवेत्युक्तम् । "शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते, न च मां तानि कर्माणि निबध्नन्ति धनञ्जय। उदासीनवदासीनमसक्तं तेषु कर्मसु" इत्यादिनिरवकाशोक्तेः अस्मदुक्त एवार्थः । जीवो भूत्वा ईश्वर एव संसरतीत्यर्थस्तु न मनसाऽपि स्मर्तुं योग्यः । अत्रैवोक्तेश्वरपदविरोधात् । कललान्तःस्थितनिश्चेष्टजीवस्य प्रकृतिस्थेन्द्रियकर्षणासामर्थ्याच्चास्मदुक्तरीत्या जीवसन्निहितसमर्थेश्वरस्यैवेदं सृष्टिसंहारकौशलमिति ज्ञेयम् ॥ ८ ॥

*सा०सं०*— किं स्वसामर्थ्येन नेत्याह **शरीरमिति** । **ईश्वरः शरीरं** जीवशरीरं **यदाऽऽप्नोति** तदैव जीवस्तत्प्रेरितः सन् कर्षतीत्यर्थः । स्वातन्त्र्येण तु ईश्वर एव सर्वाणीन्द्रियाणि विषयान् प्रति प्रयुङ्क्ते । तदाह सूत्रे 'ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ' इत्यादि । तथा— यच्च यदाऽप्युत्क्रामतीश्वरः । जीवमादायेति योज्यम् । **तदैतानि** इन्द्रियाणि । सूक्ष्मेन्द्रियांशान् **आशयात्** पुष्पादिस्थानात् । **गन्धानिव** गन्धवतः पुष्पाद्यवयवानिव । भागशो गृहीत्वा **संयाति** । लोकान्तरमित्यर्थः । न च 'अग्निं वागप्येति' इत्यादिविरोधः । तस्य भागविषयत्वात् । 'ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ' इति सूत्रात् । अत एव गन्धानिवेति दृष्टान्तोक्तिः । अन्यथा वायुनाऽनेकेष्वाकृष्यमाणेषु गन्धान् गन्धवतः पुष्पाद्यवयवानित्युक्तिर्न स्यात् । सर्वेन्द्रियप्रेरणस्यापि ईशाधीनत्वान्न तेषां प्रतिपत्तिर्जगद्वृक्षच्छेदनशक्तेति भावः । यद्वा, यत् यदा जीवः **शरीरमाप्नोति** तदेश्वरः **एतानि गृहीत्वा** शरीरं **संयाति** । जीवः **यदोत्क्रामति च** तदेश्वरः एतानि गृहीत्वा लोकान्तरं संयातीति योजना ॥ ८ ॥

*अ०प्र०*— स्थितौ च गोलकेभ्यो विषयान्प्रति कर्षति जीवस्येन्द्रियाकर्षणसामर्थ्यमपीश्वराधीनमेवेत्याह **शरीरमिति** ।

यदा जीवः यत्[1], शरीरं[2], अवाप्नोति[3], यच्च[4], उत्क्रामति[5], तदा ईश्वर एव[6], आशयात्[7], गन्धान्[8], वायुरिव[9], एतानि[10] गृहीत्वा[11] संयातीत्यन्वयः ॥

यदा जीवः = कर्मवशात् यत् दैवतिर्यग्मानुषं वा सन् यत्[1], शरीरं[2], अवाप्नोति = प्राप्नोति[3], यच्च = चकारेण यत् यत् शरीरान्तरात् पूर्वस्मा-च्छरीरात्[4], उत्क्रामति = विसृजति प्राक्शरीरं विसृज्य इत ऊर्ध्वं क्रामति अतिक्रामति[5], तदा ईश्वर एव = देहादीनां स्वामिरेव[6], आशयात् = स्वस्था-नात्[7], गन्धान् = कुसुमादेः सकाशान्द्गधवतः सूक्ष्मपुष्पाद्यवयवान्[8], वायुरिव वायुर्यथा गृहीत्वा गच्छति । तद्वत्[9], एतानि = मनःषष्ठानीन्द्रियाणि[10] गृहीत्वा = आकर्ष्य[11], संयाति = सम्यग्गच्छति[12], सशरीरे सत्येवेन्द्रियग्रहणे दृष्टान्तः । 'मनोकृतेनायान्त्यस्मिन् शरीर प्राज्ञेनात्मना चारूढ उत्सर्जन्याति' इत्यादि श्रुतेः ॥ ८ ॥

**भाष्यम्**

**'कर्षति' इत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतम् । तन्निवारयति शरीरमित्या-दिना । यत् यदा शरीरमवाप्नोति उत्क्रामति च जीवः, तदा ईश्वरः एतानि गृहीत्वा संयाति ।**

*प०टी०*— अंशोऽपि स्वरूपांशो नेत्यभिप्रायेण तदुत्तरं श्लोकद्वयमवतार्य व्याचष्टे **कर्षतीति** ।

*प्र०दी०*— पूर्ववाक्ये जीवस्य प्रकृतत्वात् तदुत्तरमपि तद्विषयमिति व्याख्यानमसत् । ईश्वर-पदरूढार्थपरित्यागदोषादित्याशयवान् सङ्गतिं तावदाह **कर्षतीति** । 'शरीरावाप्तौ मूलकारणात्, उत्क्रमणे शरीरात्, स्थितौ गोलकादिभ्यो विषयान् प्रतीन्द्रियाणि जीवः कर्षति' इति पूर्वत्रोक्तम् । तथा च तस्य नियामकान्तरानुक्त्या इन्द्रियकर्षणे **स्वातन्त्र्यं प्रतीतम्** । तदयुक्तम् । पूर्वोक्तेन विरोधादित्याशङ्क्य, ईश्वरस्यैव तत्प्रतिपादयन् **तत्** = जीवस्य स्वातन्त्र्यं **निवारयति** इत्यर्थः । श्लोकद्वयोपादानाय आदिपदम् । अत्र शरीरावाप्त्युत्क्रमणयोरुक्तत्वादीश्वरस्य तदयोगात् कथमिदं तद्विषयम् ? इत्यतो व्याचष्टे **यदिति** । 'जीवः' इति पूर्ववाक्यादनुवर्तते । 'यदा' इति श्रवणात् 'तदा' इति लभ्यते । **एतानि** इन्द्रियाणि । **संयाति** शरीरम्, लोकान्तरं च ।

*भा०दी०*— 'प्रकृतिस्थानीन्द्रियाणि कर्षति' इत्यत्र कस्मात् कर्षणम् ? किं निमित्तं कर्षति ? इत्याकाङ्क्षायामाह **शरीरावाप्तौ मूलकारणादित्यादिना** । **पूर्वोक्तेनेति** । 'न हि प्रतिबिम्बस्य क्रिया च' इत्यादिना जीवास्वातन्त्र्यस्य द्वितीये समर्थनेन तद्विरोधादित्यर्थः ।

*भा०र०*— **पूर्ववाक्ये** 'ममैवांशः' इति श्लोके । **उत्तरम्** 'शरीरं तदवाप्नोति' इति वाक्यम्। **इति व्याख्यानमिति** । तथा च शाङ्करः— 'यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसङ्घातस्वामी जीवः' इति । **रूढार्थेति** । यद्यपि 'ईश्वरः शर्व ईशानः शङ्करः' इतीश्वरशब्दः शङ्करे लोकतो रूढः। तथापि 'बिभर्त्यव्यय ईश्वरः', 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादौ ईश्वरशब्दस्य भगवत्येव प्रयोगात्, 'ईश्वरो विक्रमी धन्वी' इति विष्णुसहस्रनामस्तुतस्य तस्य विष्णावेव प्राज्ञप्रसिद्धेः, 'बिभर्त्यव्यय ईश्वरः' इत्यत्र 'ईश्वरः ईशनशीलो नारायणाख्यः' इति स्वेनैव योगरूढेर्भाषितत्वाच्च तत्परित्याग एव परपक्षे दोष इत्यभिप्रायेणैवमुक्तम् । **मूलकारणात्** कर्षति = शरीरात् कर्षति । गोलकशब्देन इन्द्रियाधिष्ठानावयवविशेषग्रहः । प्रत्याहारादिकाले विषयेभ्य इन्द्रियाणि चक्षुरादीनि आन्तरं विषयं प्रति कर्षतीति विषय आदिपदार्थः । अनेन 'प्रकृतिस्थानि कर्षति' इत्येतत् त्रेधा व्याख्यातं भवति ।

**तस्य** जीवस्य **नियामकान्तरानुक्त्या** 'जीवस्य विषयान् प्रतीन्द्रियाकर्षणे शक्तिप्रदोऽन्योऽस्ति नियामकः' इत्यनुक्त्या **स्वातन्त्र्यं प्रतीतमिति** । 'कर्षति' इत्याख्यातार्थो हि कर्ता, कर्ता च स्वतन्त्रः, 'स्वतन्त्रः कर्ता' इति पाणिनिवचनादिति भावः । **पूर्वोक्तविरोधादिति** । 'न हि प्रतिबिम्बस्य क्रिया, स हि बिम्बक्रिययैव क्रियावान्' इति द्वितीयादौ जीवास्वातन्त्र्यस्योक्तत्वेन तद्विरोधादित्यर्थः । **'तत्** कर्षणे स्वातन्त्र्यं निवारयति' इति वदन् 'ईश्वरदत्तस्वातन्त्र्येण जीव इन्द्रियाणि विषयान् प्रति कर्षति' इत्येव पूर्ववाक्यं व्याख्यातव्यम् । तथा च पाणिनिवचनमपि अनुकूलितमित्यभिसन्धत्ते । **इदं** 'शरीरं यदवाप्नोति' इति वाक्यम् । **तद्विषयं** ईश्वरविषयम् । **पूर्ववाक्यात्** 'जीवभूतः' इति पूर्ववाक्यात् । **लभ्यत इति** । तथा च नोन्मूलं व्याख्यानमिति भावः। 'संयाति' इत्यनूद्य तत्र शेषमाह **संयाति शरीरं लोकान्तरं चेति** । 'उत्क्रमणे' इति योज्यम् ।

**अयमर्थः**— जीवस्य शरीरप्राप्तिकाले इन्द्रियाणि गृहीत्वा शरीरं जीवेन सह संयाति । उत्क्रमणकाले च लोकान्तरं इन्द्रियाणि गृहीत्वा जीवेन सह संयाति, इत्ययमर्थः ।

**भाष्यम्**

**"यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः । तत्र तत्रैव वसति न यत्र स्वयमिच्छति" इति हि मोक्षधर्मे ।**

*प०टी०*— उत्पत्तौ जीवस्यास्वातन्त्र्ये प्रमाणमाह **यत्रेति** ।

*प्र०दी०*— कुतोऽयमर्थः ? इत्यतो जीवस्य शरीरप्राप्तौ तावदीश्वराधीनत्वे प्रमाणसम्मतिमाह **यत्रेति** । **संयुक्तः** प्रेरकत्वेन संयुक्तः । **यत्र यत्रैव** योनौ **गर्भं धाता तत्र तत्रैव वसति** जीवः ।

*भा०दी०*— **गर्भं धातेति** । निदधातीत्यर्थः ॥ ७-८ ॥

*भा०र०*— **कुतः** प्रमाणादित्यर्थः । उत्क्रमणे भगवदधीनत्वे प्रमाणं वक्ष्यत इति तावच्छब्दः । अनादिकालतो जीवेन प्रेरणाय संयोगवान् संयुक्तः, सः कः ? 'परमेश्वरः' इति भावेन 'संयुक्तः' इत्यनूद्य 'परमेश्वरः' इति व्याख्या-तम् । 'धाता' इति तृन्नन्ततया द्वितीयोपपत्तिः, 'निदधाति' इति यावत् । आख्यातोपात्तं गर्भपदेन सन्निहितं कर्तारमाह **जीव इति** । 'स्वयमिच्छति वस्तुम्, न तत्र वसति अस्वातन्त्र्यात्' इति भाष्यशेषार्थः ।

**भाष्यम्**

**"भावाभावावपि जानन् गरीयो जानामि श्रेयो न तु तत् करोमि । आशासु हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि" इति च ।**

**"हत्वा जित्वाऽपि मघवन् यः कश्चित् पुरुषायते । अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्" इति च ।**

*प०टी०*— तस्य प्रवृत्तावस्वातन्त्र्ये प्रमाणमाह **भावेति** । **हर्म्यासु** क्रीडाहर्म्येषु च नमुचि-वाक्यम् । **हत्वा** इति बलिवाक्यम् ।

*प्र०दी०*— प्रवृत्तावपीश्वराधीनत्वे जीवस्य प्रमाणसंवादमाह **भावेति** । **भावाभावौ** लौकिके शुभाशुभे । **गरीयः** श्रेयो मोक्षमपि । तथाऽपि **तन्न करोमि**, साधयितुं न स्वतन्त्रोऽस्मि । किन्तु **आशासु** दिक्षु **हर्म्यासु** हर्म्येषु, **हृदासु** हृदेषु । तास्ताः क्रियाः **कुर्वन्** इव प्रतीयमानोऽहं यथेश्वरेण **नियुक्तोऽस्मि तथा** ताः **वहामि** । हननादिक्रियाः कृत्वा **यः कश्चित्** परमपुरुषवत् स्वातन्त्र्यमात्मनो मन्यते सोऽपि **अकर्तैव भवति** । यतः **तत्** हननादिकं **कर्ता** ईश्वर एव **करोति** ।

*भा०दी०*— 'कर्तुः क्यङ् सलोपश्च' इत्युपमानादाचारार्थे क्यङन्तोऽयं पुरुषायत इति शब्द इत्युपेत्य तदर्थमाह **परमपुरुषवदिति** । तद्वदाचारः । स्वातन्त्र्यमतिरेवेति भावः । कर्ता इति कारकपदम् ।

*भा०र०*— **प्रवृत्तावपि** । इन्द्रियकर्षणादिसर्वव्यापारेऽपि । 'तन्न करोमि' इत्यनुवादः 'साधयितुं न स्वतन्त्रोऽस्मि' इति प्रकृतोपयोगाय व्याख्यानम् । तुशब्दार्थः **किन्त्विति** । आशा-

शब्दस्य अभिलाषार्थत्वप्रतीतिं व्युदसितुमर्थमाह **दिक्ष्विति** । हर्म्य-ह्रदशब्दयोः स्त्रीलिङ्गमार्षमिति भावेनोक्तम् **हर्म्येषु ह्रदेष्विति च** । 'कुर्वन्' इत्यत्र कर्मोक्तिः **तास्ताः क्रिया इति** । गमन-विलास-सलिलक्रीडा-प्लवनादितत्तद्योग्यक्रिया इत्यर्थः । 'इव' इति स्वातन्त्र्याभावाभिप्रायकः शेषः । **ताः** क्रियाः **वहामि** प्राप्नोमि । हनन-जय-क्रियोक्तिरुपलक्षणमिति भावेनोक्तम् **हननादिक्रिया इति** ।। अपिपदेन क्रियान्तरग्रहणमिति भावेनैवमुक्तमित्यपि **आहुः** । 'पुरुषायते' इत्यस्यार्थः **परम-पुरुषवत् स्वातन्त्र्यमात्मनो मन्यत इति** । अनेन 'कर्तुः क्यङ् सलोपश्च' इति उपमानाद् आचारे क्यङन्तोऽयं शब्दः, पुरुषशब्दश्च परमपुरुषार्थकः, पुरुषसदृशाचारश्च स्वातन्त्र्यमतिरेवेत्युक्तं भवति । 'कर्ता' इत्यस्यार्थः **ईश्वर इति** ।

**भाष्यम्**

**"तद्यथाऽनः सुसमाहितं उत्सर्जद् यायात् । एवमेवायं शारीर आत्मा प्राज्ञेन आत्मना अन्वारूढ उत्सर्जद् याति" इति च श्रुतिः । "वाङ् मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्" इति च ।**

*प०टी०*— तस्योत्क्रमणेऽस्वातन्त्र्ये प्रमाणमाह **तद्यथेति** ।

*प्र०दी०*— शरीरोत्क्रमणमपीश्वराधीनमित्यत्र श्रुतिसम्मतिमाह **तद्यथेति** । **अनः** शकटम् । **सुसमाहितं** पुरुषेण सम्यगधिष्ठितम् । **उत्सर्जत्** ग्रामादिकं उत्सृजन् । **शारीरः आत्मा** जीवः । **प्राज्ञेन** आत्मना परमात्मना **अन्वारूढः** अधिष्ठितः । **उत्सर्जत्** शरीरं उत्सृजत् । 'वाक्' इत्यनेन उत्क्रमणे परदेवता वागादीन्याकर्षतीत्युच्यते ।

*भा०र०*— 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरोक्तेराह **अनःशकटमिति** । सृजेः सकर्मत्वात् कर्म समर्पयन् तस्य तौदादिकतया शबनवकाशादाह **ग्रामादिकमुत्सृजदिति** । 'शारीर आत्मा' इत्यस्यार्थः **जीव इति** । 'शरीरमुत्सृजन्' इत्यनेन शरीरादुत्क्रमणमपि ईश्वराधीनमित्युक्तं भवति । 'वाक्' इति श्रुतेः प्रकृतोपयोगाय तात्पर्यमाह **वागित्यनेनेति** ।

**भाष्यम्**

**गन्धानिव सूक्ष्माणि । भोगोऽस्यापि साधितः पुरस्तात् ।। ७-८ ।।**

*प०टी०*— गन्धदृष्टान्तस्य विवक्षामाह **गन्धानिति** । अभोक्ता हरिः कथं विषयानुपसेवते ? इत्यत आह **भोग इति** ।। ७-८ ।।

*प्र०दी०*— अनेकेष्वाकृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्रायमाह **गन्धानिवेति** । गन्धवतः पुष्पाद्यवयवानित्यर्थः ॥ ७-८ ॥

*भा०र०*— **अनेकेषु** तूलशीर्णपर्णप्रभृतिषु गन्धशब्दस्य गुणवचनत्वे बहुवचनानुपपत्तिः ? वायुनाऽऽकृष्यमाणत्वानुपपत्तिश्च ? इत्यत आह **गन्धवत इति** । 'गन्धो गन्धक आमोदे सम्बन्धे लेशवर्गयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति वचनेन द्रव्यवचनो गन्धशब्द आकृष्यमाणवस्त्वर्थो बहुवचनान्तश्चात्र गृहीत इति भावः । अनेन 'वायुर्गन्धवतः पुष्पाद्यवयवान् यथा गृहीत्वा दूरदेशं संयाति, तथा ईश्वर एतानि पूर्वश्लोके जीवसम्बन्धितया प्रकृतानीन्द्रियाणि गृहीत्वा जीवस्य शरीरावाप्त्यादौ संयाति' इत्यर्थः सम्पद्यत इत्युक्तं भवति । 'गन्धवतः' इति वदन् गन्धशब्दोऽयं अर्श आद्यजन्त इत्यभिप्रैति इत्यपि केचित् । सप्तमे 'पुण्यो गन्धः' इति 'भोगा-पेक्षयेत्यादिना' इति शेषः ॥ ७-८ ॥

**गीतातात्पर्यनिर्णयः**

**शब्दादीन् प्रत्यथ यदा जीवमादाय यात्यतः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽशयात् ॥ ८ ॥**

***न्या०दी०*— अथ इत्यनेन 'यच्चापि' इत्युक्तार्थं भवति ॥ अतः** शरीरतः ॥

**गीता**

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

*वि०वि०*— इन्द्रियेषु प्रवर्तकत्वेन स्थितस्य विष्णोरिन्द्रियद्वारा किं विषयभोगोऽस्तीत्यपे-क्षायामाह **श्रोत्रमिति** ॥ ९ ॥

*वा०ल०*— 'श्रोत्रं चक्षुः' इत्यत्र, अयं परमात्मा, 'अधिष्ठाय' चक्षुरादीन्द्रियेषु व्याप्य, 'विषयान् उप' उपपन्नतया सेवते सुखरसमेव भुङ्क्ते, न तु कदाऽपि दुःखमित्यर्थः ॥ ९ ॥

*सा०सं०*— इन्द्रियेषु प्रवर्तकत्वेन स्थितस्य हरेरिन्द्रियद्वारा विषयभोगमाह **श्रोत्रमिति** । **अधिष्ठायैवे**त्यन्वयः । प्रवर्तकः सन्नेवेत्यर्थः । **विषयान्** शब्दादीन् ॥ ९ ॥

***अ०प्र०***— इन्द्रियेषु प्रवर्तकत्वेन स्थितस्य विष्णोरिन्द्रियद्वारा विषयभोगोऽस्ति इत्याह ईश्वरः **श्रोत्रेति** ।

अयं जीवः श्रोत्रादि पञ्चज्ञानेन्द्रियाणि बाह्यानि पञ्च[1], मनश्चान्तरेन्द्रियं यद्वा अन्तःकरणं[2], अधिष्ठाय = आश्रित्य[3], विषयान् = शब्दादिविषयान्[4], उपसेवते = साक्षात्कृत्य तज्जन्यसुखमाप्नोतीत्यर्थः ॥ ९ ॥

भाष्यम्

**भोगो अस्यापि साधितः पुरस्तात् । इन्द्रियद्वाराऽपि सोऽपि भुङ्क्ते । "तद् य इमे वीणायां गायन्त्येतं ते गायन्ति" इति च श्रुतिः । गुणान्वितमिव भुङ्क्ते । "न ह वै देवान् पापं गच्छति" इति श्रुतेः ॥ ९ ॥**

***प०टी०***— भोक्तृत्वेऽपीश्वरस्य जीवेन्द्रियद्वारा भोक्तृत्वं कुतः ? इत्यत आह **इन्द्रियेति** । नन्विन्द्रियद्वारा यदि भुङ्क्ते, तर्ह्यशुभभोगोऽपि सम्भवतीत्याशङ्क्य, उत्तरश्लोके परिहृतमित्याह **गुणेति** ॥ ९ ॥

***प्र०दी०***— ननु 'श्रोत्रम्' इत्यादिना विषयभोगोऽस्योच्यते । न चेश्वरस्यासावस्ति । किं तु जीवस्यैव । तत्कथमिदमीश्वरविषयमित्यत आह **भोग इति** । **पुरस्तात्** सप्तमे ।

अस्तीश्वरस्य भोगः । किं तु जीवेन्द्रियैर्नास्तीत्यतो जीवविषयमेतदित्यत आह **इन्द्रियेति** । 'राजाद्यन्तर्गतं गायन्ति' इत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते । विषयभोगाङ्गीकारे दुष्टस्यापि भोगः स्यादित्यत उत्तरवाक्यगतं विशेषणमाश्रित्याह **गुणेति** । गुणमेवेत्यर्थः । एतद्भुञ्जानस्य विशेषणमिति **केचित्** । तान् प्रत्याह **न ह वा इति** ॥ ९ ॥

***भा०दी०***— 'एतं ते गायन्ति' इत्यत्र एतच्छब्दार्थमाह **राजाद्यन्तर्गतमिति** । **उत्तरवाक्येति** । 'गुणान्वितम्' इत्युरवाक्येत्यर्थः । **न ह वै देवानितीति** । 'किमु देवोत्तमं हरिम्' इति वा श्रुतिशेषः ॥ ९ ॥

***भा०र०***— 'एतम्' इत्यस्यार्थः **राजाद्यन्तर्गतमिति** । तच्छ्रोत्रेण राजादिश्रोत्रेन्द्रियेण । 'गुणैः = सारत्व-शुचित्वादिशुभधर्मैरन्वितम्' इत्यस्य निर्गलितं दर्शयति **शुभमेवेति** । 'विषयम्' इति शेषः । एवमभिप्रेत्य गमनिकायाम् 'उत्तरवाक्यगतं विशेषणम्' इत्युक्तम् । *शङ्करस्तु* 'भुञ्जानं

= शब्दादीन् विषयान् उपलभमानम्, गुणान्वितम् = सुखदुःखमोहाख्यैर्गुणैरन्वितम् = अनुगतं = संयुक्तमिति भुञ्जानस्य विशेषणम्' इत्यभाषत । तदनुवदति **एतद् भुञ्जानस्येति** । 'पुण्यमेवामुं गच्छति, न ह वै देवान् पापं गच्छति' इति श्रुतौ अमुम् = सप्तान्नविद्योपासकं सर्वजीवदेहान्तर्गतं हिरण्यगर्भं पुण्यमेव गच्छति, कुतः ? तस्य देवत्वात् । तथापि कुतः ? न ह वै इति । देवमात्रस्य पापास्पृष्टपुण्यभोगनियमोक्तेः देवोत्तमस्य भगवतः सुतरां तत्सिद्ध्याऽत्र भुञ्जाने दुःखमोहाप्रसक्तेः न परोक्तं भुञ्जानविशेषणत्वं युक्तम् । किन्तु दुष्टभोगशङ्कानिवारणाय भाष्यरीत्या भुजिक्रियाकर्मसमर्पकत्वमेवेति भावेनाह **तान् प्रत्याहेति** । दूषयतीत्यर्थः ॥ ९ ॥

**गीता**

## उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
## विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

***वि०वि०—*** विषयभोगाङ्गीकारे जीववत् भोगोऽपि स्यादित्याशङ्कां परिहरन् यदि जीवातिरिक्तो देहनियामकः स्यात्तर्हि किमिति न दृश्यत इत्याशङ्कां च परिहरति **उत्क्रामन्तमिति** । गुणान्वितं सारम् अदुष्टं वस्तु भुञ्जानमित्यनेनाद्या शङ्का निरस्ता । उक्तं च— 'भुङ्क्ते हरिः शुभान् भोगानिन्द्रियेषु व्यवस्थितः । पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव तु ॥' इति । ज्ञानिभिर्दृश्यमानत्वाद्विमूढत्वमदर्शने कारणं न नियमवत् स्वभाव इति द्वितीया शङ्का निरस्ता ॥ १० ॥

***वा०ल०—*** 'उत्क्रामन्तं' स्वोत्क्रमणसमये स्वैः सह उत्क्रामन्तम् । स्थितं स्वस्थितौ स्थितम् । 'भुञ्जानं' स्वैः सह सारभागं भुञ्जानं वा । 'गुणान्वितम्' आनन्दादिगुणान्वितम्, अणिमाद्यष्टैश्वर्यसम्पन्नं वा । परमात्मानं विमूढा नानुपश्यन्ति ॥ १० ॥

***सा०सं०—*** जीववदशुभभोगोऽप्यस्ति किमित्यतः शुभानेव भुङ्क्त इति वदन् कुतो नोपलभ्यत इति शङ्कां निराह **उत्क्रामन्तमिति** । **गुणान्वितं** शुभयुक्तमेवेत्यर्थः । **विमूढा** इत्यनुपलम्भे हेतूक्तिः ॥ १० ॥

***अ०प्र०—*** यदीश्वरो जीवभिन्नो देहे नियामकः स्यात् तर्हि किमिति न दृश्यते इत्याशङ्कां परिहरति **उत्क्रामन्त इति** ।

विमूढाः[१], उत्क्रामन्तं[२], स्थितं वापि[३], भुञ्जानं वा[४], गुणान्वितं[५], नानुपश्यन्ति[६], ज्ञानचक्षुषः[७], पश्यन्ति[८] इत्यन्वयः ।

विमूढाः = अज्ञाः यद्वा, मिथ्याज्ञानिनः[1], उत्क्रामन्तं = देहाद्देहान्तरे गच्छन्तं[2], स्थितं वाऽपि = तस्मिन्नेव देहे स्थितं वाऽपि[3], विषयान्भुजानं वा[4], गुणान्वितं = इन्द्रियादियुक्तं यद्वा, सारं अदुष्टं पवित्रं शुद्धभागवतानां तु स्वभावापेक्ष्ययैव च स्वादुत्वादि विजानीयात् । पदार्थानां न चान्यथेति वचनात् । सज्जनानां यत्स्वादुभूतं रसादि तदेव भुञ्जानं विष्णुं[5], नानुपश्यन्ति = न पश्यन्ति[6], ज्ञानचक्षुषाः = ज्ञानदृष्टिमन्तो[7], पश्यन्ति = अनुपश्यन्ति[8], 'न हि वै देवान्पापं गच्छन्ति अप्रियत्वाद्धरेत्तस्मान्न सुरां तु पिबे'दिति । अदुःखं = निरनिष्टो निरवद्य इत्यादि वचनाविरोधोऽयं गुणान्वितमित्युक्तं पापसाधनं पापजन्यं च अपवित्ररसादिकमपि देवोऽपि न भुङ्क्ते किमु देवोत्तमो विष्णुः । राजा यथा परैरानीतं उपायनं दृष्ट्वा स्वीकृत्य गृहे संस्थाप्य प्रियश्चेत्पश्चात्काले भुङ्क्ते पुत्रादिभिः सह अप्रियश्चेद्वैरिभ्यो ददाति तथेत्यर्थः । प्रतिमायां स्थित ईश्वरोऽन्नादिकं संस्कारार्थं दृष्ट्वा गृह्णाति अग्न्यादिदेवर्षिपित्रादिषु ब्राह्मणादिषु च स्थितस्तेषां देवादीनां कृपयान्नादेरन्नयोग्यता-सिद्धर्चर्थं पूर्वं स्वयं भुंक्त्वा पश्चात्स्वोच्छिष्टं तान् भोजयति स्वभोगाभावे देवादीनां वैष्णवानां भोगाभावः स्यात् । तत्रापि पवित्रं प्रियमेव भुङ्क्ते नापवित्रं अप्रियञ्च स्वातन्त्र्यात् तेनानुभूयमानापि दुःखशब्दादयो न तस्य दुःखहेतवस्तदधीनत्वात् । किञ्च लोके यथा राजा स्वानिष्टं दुःखादिसाधनं दुःशब्दादिकमनुभाविनः कृत्वा तान् स्वयं तद्दृष्ट्वा सुख्येव भवतीति सर्वदुःशब्दादिकं सुखहेतुरेव तस्य सुशब्दादौ तु स्वयं अनुभूय भक्ताननुभावयित्वापि द्वेधा सुखी भवति । तदुक्तम्— 'अन्नादीनां संस्कारार्थं गृह्णामि प्रतिमादिके । भक्तानामदनार्थाय गृह्णामि ब्राह्मणादिके ॥ विष्णुना तं समश्नाति ही'त्यादि श्रुतिचोदितं द्रष्टव्यम् । पुरुषश्रेष्ठमानमस्मिन्महामते— 'तथाग्नौ संस्कृतं ह्याज्यं नैव संस्क्रियते पुनः । अर्पितं प्रतिमायां वै नार्पयेत्प्रतिमान्तरे ॥ अग्निविप्राद्यधिष्ठानेष्वदयेद्वै मदा-ज्ञया ॥'' तथा, प्राक् संस्कृतं ह्याज्यं अग्न्यादौ हूयते पुनः । निवेदितान्नशेषेण ये यजन्ति द्विजा-तिषु ॥ सर्वस्थं मां समुद्दिश्य ते स्मृता कर्मकौशला ।'' इति अप्सु रसः पुण्यो गन्धः प्रभवः प्रलयः तस्येदमाहुः पिप्पलं साध्वितीत्यादि च द्रष्टव्यम् । शिष्टमुक्तं सप्तमे । यद्वा, 'नारायणानिरुद्धौ तु भोज्यवस्तुषु संस्थितौ' इत्याद्यैतरेयभाष्योक्तं सन्त्येश्वरस्य सर्वभोगा इति द्रष्टव्यम् ॥ १० ॥

**भाष्यम्**

**तर्हि किमिति न दृश्यते ? इत्यत आह उत्क्रामन्तमित्यादिना ॥ १० ॥**

***प०टी०***— नन्वेवं सर्वत्र भुङ्क्ते, तर्हि तस्यानुपलब्धिबाध इत्याशङ्क्य, उत्तरश्लोकद्वयमव-तारयति **तर्हीति** ॥ १० ॥

*प्र०दी०*— उक्तमेव किमित्युच्यते ? इति मन्दाशङ्कानिरासार्थमुत्तरश्लोकद्वयस्य सङ्गतिमाह **तर्हीति**। 'यदि जीवातिरिक्तो देहे नियामकः स्यात्' इति शेषः। उक्तानुवादेन विमूढत्वमनुपलम्भे कारणम्, न तदभाव इत्युच्यत इति भावः ॥ १० ॥

*भा०दी०*— **उक्तमेवेति**। 'विषयानुपसेवते' इत्युक्तमेव 'भुञ्जानं वा गुणान्वितम्' इति किमुच्यत इत्यर्थः ॥ १० ॥

*भा०र०*— **उक्तमेवेति**। 'विषयानुपसेवते' इत्युक्तविषयभोजनमेव। 'गुणान्वितं भुञ्जानम्' इति किमुच्यत इत्यर्थः। विषयोपसेवने दुष्टविषयस्यापि भोगः स्यात् ? इति शङ्कानिरासार्थं पूर्वोक्तविषयसेवानुवादेन 'भुञ्जानश्च शुभविषयमेव भुङ्क्ते, नाशुभम्' इति वक्तुं पुनरुक्तिरर्थवती इति विमर्शवतः सुमतेर्न पुनरुक्तिशङ्केति भावेनोक्तम् **मन्दा शङ्केति**। केचित्तु 'यच्चाप्युत्क्रामतीश्वरः' इत्युक्तम् 'उत्क्रामन्तम्' इत्यनूद्य 'विषयानुपसेवते' इत्युक्तम्; 'गुणान्वितं भुञ्जानम्' इत्यनूद्य च 'नानुपश्यन्ति' इति दर्शनाभावोऽपि विधीयत इति स्पष्टं अपुनरुक्तिप्रतिभासात् 'मन्दाशङ्का' इत्युक्तं इत्याहुः। 'तर्हि इत्यत्र प्रतियोग्याह **यदीति**। **नियामकः** 'इन्द्रियाणाम्' इति शेषः। **उक्तानुवादेनेति**। अत्रानुवादप्रकारः प्राग् दर्शितोऽस्माभिः। **न तदभावः** देहे जीवातिरिक्तनियामकाभावः 'कारणम्' इत्यनुषङ्गः। वस्त्वनुपलम्भो हि वस्तुनोऽभावे, वस्तुदर्शने प्रतिबन्धकभावे वा भवति। प्रकृते च न नियामकाभावः तदनुपलम्भहेतुः, किन्तु दर्शनप्रतिबन्धकं विमूढत्वमेवेति अनेन श्लोकेन उच्यत इत्यर्थः ॥ १० ॥

**गीता**

## यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
## यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

*वि०वि०*— ननु यत्ने कृतेऽप्यदर्शनात् कथं ज्ञानचक्षुषः पश्यन्तीति तत्राह **यतन्त इति**। योगिनो वृत्तिनिरोधेन निर्मलचित्ताः। अकृतात्मानः अशुद्धबुद्धयः। अचेतसोऽविवेकिनः ॥ ११ ॥

*सा०सं०*— यत्ने कृतेऽप्यनुपलम्भः कथमित्यत आह **यतन्त इति**। **योगिनो** ज्ञानोपायानुष्ठातारः। **यतन्तो** यतमानाः। ज्ञानं प्राप्य। **एनं पश्यन्ति**। अशुद्धबुद्धयो यतमाना अपि। **अचेतसो** अविवेकिनः। नैनं पश्यन्तीत्यर्थः ॥ ११ ॥

*अ०प्र०*— पूर्वश्लोकोक्तं विविच्याह **यतन्त इति** ।

योगिनः[१], यतन्तः सन्तः[२], आत्मनि[३], अवस्थितं[४], एनं[५], पश्यन्ति[६], अकृतात्मानः[७], अत एव अचेतसः[८], यतन्तोऽपि[९], एनं[१०] न पश्यन्तीत्यन्वयः ॥

यतन्तः = इन्द्रियनियमवन्तः ध्यानादिभिः प्रयतमानाः भक्तियोगिनः[२], आत्मनि = स्वदेह-हृदयारविन्दे[३], अवस्थितं = व्यवस्थितं तिष्ठन्तं[४], एनं = भोक्तारं विष्णुं[५], पश्यन्ति = तत्प्रसादा-ल्लब्धज्ञानेन[६], अकृतात्मानः = देहाहङ्कारादिरूढाः यद्वा, असंयतात्मानः अवशीकृतान्तःकरणाः वा केवलदेहादिविषयासक्ताः वा । यद्वा, अविशुद्धचित्ताः[७], अत एव अचेतसः अशिक्षितबुद्धयः यद्वा मन्दमतयः[८], यतन्तोऽपि = शास्त्रजन्यज्ञानवन्तोऽपि हरिकीर्तनश्रवणादिना यतमाना अपि[९], एनं = पूर्वोक्तगुणवन्तं[१०] न पश्यन्ति = न प्राप्नुवन्ति[११] यतन्तोऽपि अचेतस इत्यस्य विवरणं शास्त्रजन्ये शब्दार्थ-ज्ञानजातमपि विरक्तिः नो चेत् तत्र भक्त्या ज्ञानसाधनं तद्वारा मोक्षः कथं भवति ? साधनस्य विरक्तिमूलत्वात् 'एतैर्विमुक्तः कौन्तेय तमोद्वारैः त्रिभिर्नर' इति गीताप्रामाण्यात् एतैः कामक्रोधलोभैः । तथा भागवते एकादशस्कन्धे 'शब्दब्रह्मणि निष्णातो न निष्णातो परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षकः ।' अत्र यतन्तोऽपि साधनं कुर्वन्तोऽपि अकृतात्मानः केवलविषया-सक्ता इत्यर्थः ॥ ११ ॥

**भाष्यम्**

**यतन्तः ज्ञानं प्राप्य । अकृतात्मानः अशुद्धबुद्धयः ॥ ११ ॥**

*प०टी०*— यततां कथमपरोक्षदर्शनम् ? इत्यत आह **यतन्त इति** । सर्वात्मनामकृतत्वात् को विशेषः ? इत्यत आह **अकृतेति** ॥ ११ ॥

*प्र०दी०*— 'यतन्तो योगिनश्च' इति कारणान्तरमुच्यते इति प्रतीतिनिराकरणार्थमाह **यतन्त इति** । आत्मा जीवश्चेत् सर्वदा अकृत एव । शरीरं चेद् असम्भव इत्यत आह **अकृतेति** । **आत्मा** बुद्धिः । अकृतत्वं चाशुद्धत्वम् । 'केशान् करोति' इत्यादौ शोधनेऽपि करोतेः प्रयोगादिति भावः ॥ ११ ॥

*भा०दी०*— **कारणान्तरमिति** । 'ज्ञानचक्षुष्ट्वापेक्षयेति योज्यम्' ॥ ११ ॥

*भा०र०*— **कारणान्तरमिति** । 'ज्ञानचक्षुषः पश्यन्ति', 'यतन्तो योगिनश्च पश्यन्ति' इत्यत्र चशब्देन ज्ञानचक्षुष्ट्वव्यतिरिक्तं यत्नयोगादिरूपं दर्शनकारणमुच्यत इति प्रतीतीत्यर्थः । अनेन 'यतन्तो

योगिनश्च' इत्यत्र 'ज्ञानं प्राप्य' इति शेषः पूरितो भवति । 'आत्मा जीवे धृतौ बुद्धौ शरीरे परमात्मनि' इत्यात्मशब्दस्य नानार्थत्वादाह **आत्मा जीवश्चेदिति । सर्वदेति** । तथा च 'नैनं पश्यन्ति' इति दर्शनाभावसमय एव विशिष्य 'अकृतात्मानः' इत्युक्त्ययोग इति भावः । **असम्भव इति** । अकृता आत्मानः = देहा येषां ते तथोक्ता इति विवक्षाया 'शरीरमात्रस्योत्पत्तिः प्रत्यक्षसिद्धा' इति तस्याकृतत्वम् असम्भवदुक्तिकमित्यर्थः । **अशुद्धत्वं** च तस्याह । करोतेः शोधनार्थत्वे प्रयोगं प्रमाणयति **केशानिति** ॥ ११ ॥

*गीताक्षरार्थस्तु*—

**'न तद्भासयते' इति षट्श्लोक्यक्षरार्थस्तु**— 'गच्छन्त्यमूढाः पदमव्ययम्' इत्युक्तावाशङ्कते कीदृशं तत्पदम् ? यत्प्राप्तिः पुरुषार्थ इति तत्रोच्यते **न तद्भासयत इति । तद्** ब्रह्मत्वेन प्रसिद्धं यत् पदं सर्वावभासनसमर्थोऽपि **सूर्यो न भासयते** न दीपयति न प्रकाशयति । **शशाङ्कः** चन्द्रो **न** भासयते **पावकः** अग्निश्च न भासयत इति सूर्याद्यप्रकाश्यमित्युच्यते । **यत् च गत्वा** प्राप्य **न निवर्तन्ते** पुनः संसारं न यान्ति इति मुक्तप्राप्यमित्युच्यते । **तत्परमम्** उत्तमं **मम धाम** स्वरूपम् ॥ ६ ॥

ननु विश्वविमर्शशब्दितजगद्वृक्षच्छेदो ब्रह्मादिप्रपत्त्याऽपि भवति, अतः 'तमेव' इति किमवधार्यते ? इत्यत उच्यते **ममैवांश इति । जीवलोके** जीवाधिष्ठितब्रह्मादिजने = ब्रह्मादिशरीर इति यावत् । **सनातनः** अनादिनित्यः **जीवभूतः** जीवत्वं प्राप्तः **ममांश** इव, सूर्यस्य खद्योत इव किञ्चित्सादृश्यमात्रेण 'अंशः' इत्युच्यते, मदंशाभासः = मत्प्रतिबिम्ब इति यावत् । प्रतिबिम्बत्वं च तत्सदृशत्वे सति तदधीनत्वं विवक्षितम् । तथा च ब्रह्मादेर्जीवस्य भगवदंशाभासत्वेनासमर्थत्वाद् जगद्वृक्षच्छेदाय भगवन्तमेव प्रपद्येतेत्याशयः । एवं प्रतिबिम्बोऽपि जीवः किमपि कार्यं करोतीत्युच्यते **मनःषष्ठानीति** । जीवः **प्रकृतिस्थानि** स्वाधिष्ठाने स्थितानि मनःषष्ठं = सङ्ख्यापूरणं येषां तानि तथोक्तानि **इन्द्रियाणि** श्रोत्रादिपञ्चज्ञानेन्द्रियाणि शरीरावाप्तिकाले स्वाधिष्ठानान्मूलकारणात् शरीरं प्रति **कर्षति** । उत्क्रमणकाले स्वाधिष्ठानात् शरीरान्तरं प्रति कर्षति, स्थितिकाले च स्वाधिष्ठानाद् गोलकादिभ्यो विषयान् प्रति कर्षतीति । *विवृतिकारादयस्तु* जीवानाम् अंशाभासतयाऽसमर्थत्वे क्वापि कार्ये शक्तिर्न स्यादित्यत उच्यते 'मनःषष्ठानीति' इत्यवातारयन् ॥ ७ ॥

'जीव इन्द्रियाणि कर्षति' इत्युक्ते नियामकान्तरानुक्त्या कर्षणे स्वातन्त्र्यम् आख्यातेन तस्य प्रतीतम्, तदयुक्तम् । 'नित्यः सर्वगतः', 'अनाशिनोऽप्रमेयस्य' इत्यादौ जीवस्येश्वरप्रतिबिम्बत्वोक्त्या

अस्वातन्त्र्याभिधानेन तद्विरोधात्, इत्याशङ्क्य 'ईश्वरस्यैवेन्द्रियकर्षणे स्वातन्त्र्यम्, न जीवस्य' इति जीवस्वातन्त्र्यनिवारणायोच्यते **शरीरमिति** । **श्रोत्रं चक्षुरिति च** । 'जीवः' इति पूर्ववाक्यादनुवर्तते । **यद्** 'यदा' इति श्रवणात् 'तदा' इति लभ्यते । दुःखस्पृष्टचेतनत्वं प्राप्तो जीवो **यद्** यदा **शरीरमाप्नोति यच्चापि** यदाऽपि च **उत्क्रामति** शरीरान्निर्गच्छति तदा **ईश्वरो** भगवान् एतानि जीवकर्षणीयत्वेनोक्तानि इन्द्रियाणि **गृहीत्वा** शरीरं लोकान्तरं च प्रति **संयाति** सम्यग् गच्छति । सत्येव शरीरे तद्गतेन्द्रियमात्रादानेन गमने दृष्टान्तः— **वायुराशयात्** पुष्पादेः स्थानाद् **गन्धानिव** गन्धवतः पुष्पाद्यवयवादीनिवेति । अनेकेष्वाकृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्राय उक्तो भाष्ये 'गन्धानिव सूक्ष्माणि' इति ॥ ८ ॥

इन्द्रियाणि व्यापारयतो भगवत इन्द्रियद्वारा तत्तद्विषये भोगोऽप्यस्तीत्युच्यते **श्रोत्रमिति** । श्रोत्रादीनि घ्राणान्तानि बाह्येन्द्रियाणि च **मनः** अन्तरिन्द्रियं **च अधिष्ठाय अयमेव** ईश्वरपदेनोक्तः स्वतन्त्रो भगवानेव **विषयान्** शब्दादीन् **उपसेवते** उपभुङ्क्ते, जीवस्तु तदधीनतयाऽनुभवतीति जीवस्य विषयभोगेऽप्यस्वातन्त्र्यम् एवशब्देन द्योत्यते ॥ ९ ॥

नन्वीश्वरस्य विषयभोगाङ्गीकारे दुष्टविषयभोगोऽपि स्यात् ? किञ्च यदि देहे जीवातिरिक्त इन्द्रियनियामकः स्यात् तर्ह्यसौ तथा परिदृश्येत । न दृश्यते च । अतोऽनुपलम्भात् नास्त्येव ? इति शङ्काद्वयं परिहर्तुमुच्यते **उत्क्रामन्तमित्यादिना** । **उत्क्रामन्तं** जीवेन सह पूर्वदेहान्निर्गच्छन्तं **स्थितं** देहे जीवेन सहावस्थितं वा **गुणान्वितं** शुभमेव विषयं **भुञ्जानं वा** भगवन्तं **विमूढाः** विशेषेण अज्ञानिनः, मिथ्याज्ञानिनश्च **नानुपश्यन्ति** । अनुपलम्भादभाव एव किं नेष्यते ? नैवमित्युच्यते **ज्ञानचक्षुषः** भगवत्प्रसादायत्त-अपरोक्षनिश्चयाख्यचक्षुष्मन्तस्तु **पश्यन्ति** इति । अत्र 'सारत्व-शुचित्वादिगुणान्वितं शुभमेव विषयं भुङ्क्ते' इत्यनेन 'दुष्टभोगोऽपि स्यात्' इति शङ्का, 'विमूढा नानुपश्यन्ति' इत्यनेन विमूढत्वम् अनुपलम्भे कारणम्, न तदभावोऽनुपलम्भे कारणमिति सिद्ध्या 'तर्हि किमित्यसौ न दृश्यते' इति शङ्का च परिहृता बोद्धव्या ॥ १० ॥

ज्ञानचक्षुष्व्यतिरिक्तप्रयत्नादिकारणेन उपलम्भः किं न स्यात् ? इत्यत उच्यते **यतन्त इति**। यतमानाः = श्रवणादिलक्षणप्रयत्नं कुर्वाणा अपि परोक्षनिश्चयरूपज्ञानं प्राप्यैव **योगिनो** भवन्ति । चित्तनिरोधलक्षणसमाधिशालिन एव **आत्मनि** मनसि **अवस्थितमेनम्** शुभभोक्तृत्वादिधर्मविशिष्टं भगवन्तं **पश्यन्ति** साक्षात्कुर्वन्ति । **अकृतात्मानः** अशुद्धबुद्धयस्तु यतमाना अपि **अचेतसः** असंज्ञानाः = अप्राप्तपरोक्षनिश्चयाः **नैनं पश्यन्ति** । 'न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि

वाचः समासन् । मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः । प्रायः परं पुरुषतत्त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वाऽत्र तु डाम्भिकानाम् ॥' इत्यादिवचनादिति ॥११॥

**गीता**

## यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
## यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

*वि०वि०*— 'अधश्च मूलान्यनुसन्ततानि' इति यत् सर्वान्तर्यामित्वस्वरूपविज्ञानमुक्तं तत्प्रपञ्चयति **यदादित्यगतमित्यादिना** । जगद्भासकमादित्यगतं तेजो मामकं मदीयं मदधीनं च विद्धि ॥ ॥ १२ ॥

*सा०सं०*— 'अधश्च मूलान्यनुसन्ततानि' इति यत् सर्वान्तर्यामित्वरूपं विज्ञानमुक्तम्, यच्चोर्ध्वशब्देन सर्वोत्तमत्वमुक्तं तद्द्वयमध्यायशेषेण प्रपञ्चयति **यदादित्येत्यादिना** । **तेजः** जगत्प्रकाशनशक्तिः । **मामकं** मदीयम् । मदधीनमित्यर्थः । 'तमेव भान्तमनुभाति सर्वं' इत्यादेः । 'ॐ अनुकृतेस्तस्य च ॐ' इति सूत्रात् ॥ १२ ॥

*अ०प्र०*— तदेवं न तद्भासयते सूर्य इत्यनेन पारमेश्वरं परन्धामोक्तं तत्प्राप्तानां चापुनरावृत्तिरुक्ता । तत्र च संसारिणो भावमाशङ्क्य संसारिस्वरूपं देहादिव्यतिरिक्तं दर्शितम् । इदानीं तदेव पारमेश्वरं रूपमनन्तशक्तित्वेन निरूपयति **यदादित्येत्यादि** चतुर्भिः । तत्र **यदेति** ।

हे भारत !, यत्[१], चन्द्रमसि = चन्द्रमसि आह्लादकर्तृत्वं रूपं तेजः । तथा अग्नौ दहनपचनसिद्धिप्रदं तेजः तथा रूपान्तर्गतं तेजः[२], यच्चाग्नौ[३], यत् आदित्यगतं[४], तेजः[५], अखिलं[६], जगत्[७], भासयते[८], तत्तेजः[९], मामकं[१०] विद्धीत्यर्थः ॥

यत् = आदित्यादिषु स्थितं यदनेकप्रकारं तेजः अखिलं जगत् सर्वं विश्वं प्रकाशयति तत्तेजः मामकं विद्धि = अहमेव तत्र स्थित्वा सर्वं प्रकाशयामीति भावः । यद्वा, 'सूर्यादितेजः मदीयं मदधीनं विद्धि तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः ॥ १२ ॥

**भाष्यम्**

**पूर्वोक्तमेव ज्ञानं प्रपञ्चयति यदादित्यगतमित्यादिना ॥ १२ ॥**

*प०टी०*— नोत्तरत्राद्वैतमुच्यत इत्याह **पूर्वोक्तमिति** ॥ १२ ॥

*प्र०दी०*— ननु 'न तद्भासयते' इत्यादिना स्वरूपं कथितम् । तत्किमुत्तरेण इत्यत आह **पूर्वोक्तमेवेति** । 'अधश्च मूलान्यनुसन्ततानि' इति यत्सर्वान्तर्यामिस्वरूपं विज्ञानमुक्तम्, यच्चोर्ध्व-शब्देन सर्वोत्तमत्वं तदध्यायशेषेण प्रपञ्चयतीत्यर्थः ॥ १२ ॥

*भा०र०*— 'यदादित्यगतम्' इत्यादिना 'द्वाविमौ पुरुषौ' इत्यादिना च वक्ष्यमाणयोः सर्वान्तर्यामित्व-सर्वोत्तमत्वयोः पूर्वाध्यायेऽनुक्तत्वात् कथं 'पूर्वोक्तमेव' इति भाषणम् ? कथं च 'संसारस्वरूप-तदत्ययोपाय-विज्ञानान्युच्यन्ते' इति प्रतिज्ञातविज्ञानस्याप्रदर्शनम् ? इत्यत आह **अधश्चेत्यादिना** । **विज्ञानं**.विज्ञातव्यं भगवन्माहात्म्यम् 'ऊर्ध्व उत्तमः सर्वतः' इति भाषितत्वादाह **सर्वोत्तमत्वमिति** । 'अध्यायशेषेण' इत्यत्र 'यदादित्यगतम्' इत्यादिचतुःश्लोक्या सर्वान्तर्यामित्व-प्रपञ्चनम्, 'द्वाविमौ' इत्यादित्रिश्लोक्या सर्वोत्तमत्वप्रपञ्चनम्, तदुत्तरश्लोकद्वयस्यापि तत्फलकथन-रूपस्य तच्छेषत्वम् इति विवेक्तव्यम् ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**भुङ्क्ते हरिः शुभान् भोगानिन्द्रियेषु व्यवस्थितः ।**
**पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव तु ॥ ९-१२ ॥**

*प्रका०*— "भुञ्जानं वा गुणान्वितम्" एव ईश्वरो भुङ्क्ते न तु दोषात्मकमिति ज्ञातव्यम् ।

***न्या०दी०*— भुङ्क्त इत्यनेन 'श्रोत्रं' इत्यस्यार्थ उक्तो भवति । शुभान् इत्यनेन 'गुणान्' इत्युक्तार्थं भवति । ईश्वरस्य पूर्णानन्दत्वात् किं विषयभोगेनेत्यत आह पूर्णेति ॥**

**गीता**

## गामाविश्य च भूतानि धारयाम्यहमोजसा ।
## पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

*वि०वि०*— गां भूमिमाविश्य स्वशक्त्या भूतान्यहमेव धारयामि । सोमो भूत्वा सोमरूपे स्थित्वाऽमृतरसात्मकोऽहमोषधीः संवर्धयामि ॥ १३ ॥

*वा०ल०*— 'गामाविश्य' इत्यत्र, 'गां' भूमिम् । 'सोमो भूत्वा' – 'गामाविश्य' इतिवत् सोमाविष्टो भूत्वा ॥ १३ ॥

***सा०सं०***— **अहं गां** भूमिम् **आविश्य । ओजसा** स्वशक्त्या । **भूतानि धारयामि । अमृतरसात्मकः** । सौम्यत्वात् सोमनामा सोमगः सन् । **सर्वा ओषधीः** सस्यादीनि । **पुष्णामि** वर्धयामि च ॥ १३ ॥

***अ०प्र०***— किञ्च, **गामाविश्येति** ।

अहं[१], गां[२], आविश्य[३], ओजसा[४], भूतानि[५], धारयामि[६], अहमेव रसात्मकः[७], सोमो भूत्वा[८], सर्वाः औषधीः[१०] पुष्णामि[११]

अहं = पृथ्वीमाविश्य द्वे कार्ये करोमि । तत्र प्रथमं चकारस्यार्थः । गां आविश्य = समुद्र-जलेन पांसुराशिरियं पृथ्वी यथा न विदीर्यते तथा तां घनीभूतां करोमि । अथ द्वितीयं कार्यम् । तथैषा पृथ्वी भूतानि धारयतीति विश्वे कथयन्ति । तर्हि तद्धारणे तस्याः क्षमत्वं कुतः ? तस्मादहं गां आविश्य[३], ओजसा बलेन स्वाचिन्त्यशक्त्या तया सह[४], भूतानि = सर्वाणि चराचराणि भूतानि[५], धारयामि[६], अहमेव रसात्मकः अमृतरसप्रचुरः[७], सोमो भूत्वा = चन्द्रे स्थित्वा[८], सर्वाश्चोषधीः पुष्णामि = पोषयामि व्रीह्याद्यौषधीः संवर्धयामीत्यर्थः[११] तत्सम्भूतान्नेन भूतानां जीवनं ददामीत्यभिप्रायः ॥ १३ ॥

**भाष्यम्**

**गां भूमिम्** ॥ १३ ॥

***प०टी०***— 'गो'शब्दस्यानेकार्थत्वात् तस्यार्थमाह **गामिति** ॥ १३ ॥

***प्र०दी०***— धेनोः आवेशो न भूतधारणे किं कारणम् इत्यत आह **गामिति** ॥ १३ ॥

**गीतातात्पर्यनिर्णयः**

**सौम्यत्वात् सोमनामाऽसौ सोममण्डलगः सदा ॥ १३ ॥**

***प्रका०***— "पुष्णामि चौषधीः सर्वा सोमो भूत्वे"त्यादेरर्थ उच्यते **सौम्यत्वादित्यादिना** । "द्वाविमौ पुरुषौ" इत्यत्र पुरुषशब्द आत्मवचन इति ज्ञातव्यम् ।

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां पञ्चदशोऽध्यायः ॥*

**गीता**

## अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
## प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

*वि०वि०*— जठराग्नौ वैश्वानरमूर्तिः सन् स्थित्वा । अग्न्युद्दीपकप्राणापानसंयुक्तो भक्ष्यं भोज्यं च लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि ॥ १४ ॥

*वा०ल०*— 'अहं वैश्वानरः' इत्यत्र, वैश्वानरः वैश्वानराग्नौ सन्निहितत्वात् वैश्वानरनामकः ॥ ॥ १४ ॥

*सा०सं०*— किञ्च **अहम्** । विश्वनरसम्बन्धितया वैश्वानरनामा जाठरवैश्वानराग्निस्थः सन् । **प्राणिनां देहमाश्रितः** । प्राणापानाभ्यां मुख्यप्राणस्वरूपाभ्यां सम्यग्युक्तः । भक्षभोज्यलेह्यपेयभेदेन **चतुर्विधमन्नं पचामि** । जीर्णं करोमि ॥ १४ ॥

*अ०प्र०*— अहं[१], वैश्वानरो भूत्वा = जठराग्नौ वैश्वानररूपेण स्थित्वा[२], प्राणिनां[३], देहं[४], आश्रितः सन् अन्तःप्रविश्य प्रविष्टः सन्[५], प्राणापानसमायुक्तः = अग्न्युद्दीपकाभ्यां प्राणापानाभ्यां सहितः[६], चतुर्विधं प्राणिभिः भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमेधमानं देहाद्युपचयकारणं तस्य विवरणं, यद्दन्तैरवखण्ड्य भक्ष्यते अपूपादि तत् भक्ष्यम् । यत्तु केवलजिह्वया विलोड्य निगीर्यते अन्नपायसादिः तत् भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन निगीर्यते द्रवीभूतं गुडादि तत् लेह्यम् । यत्तु दंष्ट्रादिभिः निष्पीड्य सारांशं निगीर्यावशिष्टं त्यज्यते यथेक्षुदण्डादि तच्चोष्यमिति भेदः । एतादृशं चतुर्विधमिति उक्तं चेत् भक्षादिचतुर्विधान्नं मनुष्याणामेव तदितरभूतानां तत्तद्योनि-विहितत्वेन पृथक् पृथक् जीवनरूपेणान्नं सर्वेषां वर्तते तत्र भक्ष्यादि-चतुर्विधमन्नमिति सर्वेषां प्राणिनां कथं भवति । अत एव चतुर्विधान्नस्य निरूपणं सप्तमाध्याये 'जीवनं सर्वभूतेषु' अस्मि-ञ्छ्लोकार्थे पवनजलान्नतृणान्तं चतुर्विधमन्नमिति प्रपञ्चितम् । अतः तत्तद्भूतानां विहितान्नं चतुर्विधं[७], अन्नं[८], पचामि = पचनं करोमि ॥ १४ ॥

**गीतातात्पर्यनिर्णयः**

स एवाग्निस्थितो विष्णुर्नाम्ना वैश्वानरः सदा ।
सर्वेषां स नराणां यदुपजीव्यः सदैव च ॥ १४ ॥

*न्या०दी०*— उपजीव्यतया विश्वनरसम्बन्धो वैश्वानर इत्यर्थः ॥

*भा०दी०*— सर्वेषामित्यस्यार्थमाह **उपजीव्यतयेति** । एतेन यच्छब्दो हेत्वर्थ इत्युक्तं भवति । तस्येदमित्यण्प्रत्यये आदिवृद्धौ उपपदस्य नरे संज्ञायामिति दीर्घे वैश्वानर इति रूपमिति भावः ॥

**गीता**

**सर्वस्य चाहं हृदि सन्निविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

*वि०वि०*— अहं सर्वस्य हृदि नियन्तृत्वेन सन्निविष्टः । मत्त एव संस्कारसहकृतमनोजन्यं ज्ञानमनुभवरूपं च ज्ञाननिवृत्तिश्च सर्वस्य भवति । वेदैश्च सर्वैः परममुख्यवृत्त्या अहमेव वेद्यः । वेदान्तकृत् व्यासरूपेण वेदनिर्णयात्मकब्रह्ममीमांसाकर्ता । वेदवित् तत्वतो वेदार्थज्ञानवानहमेव ॥ ॥ १५ ॥

*वा०ल०*— आपातत ऐक्योक्तिवत्प्रतीयमानस्ववचनानां स्वयमेवार्थमाह - 'सर्वस्य चाहं हृदि सन्निविष्टः' इति ॥ १५ ॥

*सा०सं०*— किञ्च **सर्वस्य हृदि सन्निविष्टोऽहम्** । **मत्त** एव च **स्मृतिः**, अनुभवरूपं **ज्ञानम्**, **अपोहनं** विपर्ययश्च भवति । **अहमेव** परममुख्यवृत्त्या **सर्वैश्च वेदैः वेद्यः** । **वेदान्तकृत्** वेदानामन्तो निर्णयो यस्मात् सः, वेदान्तो ब्रह्मसूत्रसन्दर्भः । तस्य व्यासरूपेण कर्ता । **वेदवित्** तत्त्वतो वेदार्थज्ञानवानहमेवेत्यर्थः । 'मां विधत्तेऽभिधत्ते माम्' इत्यादेः ॥ १५ ॥

*अ०प्र०*— किञ्च, **सर्वस्येति** ।

सर्वस्य[१], हृदि[२], सन्निविष्टः अहमेव[३], स्मृतिः[४], ज्ञानं[५], अपोहनं च[६], मत्त एव भवति[७], सर्वैः[८], वेदैश्च[९], वेद्यः[१०] अहमेव[११] वेदान्तकृत् अहं[१२], वेदविच्च[१३], अहमेवेत्यन्वयः ।

सर्वस्य = प्राणिजातस्य[१], हृदि = हृदयदेशे[२], सन्निविष्टः = सम्यक् अन्तर्यामिरूपेण नियामकत्वेन स्थितः प्रविष्टः अहमेव[३], स्मृतिः = प्राणिनः पूर्वानुभूतार्थविषयस्य स्मरणं जायते तत् स्मृतिः[४], ज्ञानं = विषयेन्द्रियसंयोगजं ज्ञानं च जायते तत् ज्ञानं[५], अपोहनं च = स्मृतिज्ञानयोरभावश्च तयोः प्रमोषो भवति । यद्वा, अज्ञानं दुःखमित्यर्थः[६], मत्त एव भवति[७], सर्वैः वेदैश्च =

शाखाभिः तत्तद्देवतारूपेण[९], वेद्यः = परममुख्यवृत्त्या प्रतिपाद्यः[१०], अहमेव[११], वेदान्तकृदहं = तत्सम्प्रदायप्रवर्तकश्च ज्ञानदो गुरुरहम् । यद्वा, व्यासरूपेण वेदार्थनिर्णायकब्रह्ममीमांसा-कर्ताप्यहमेव[१२], यद्वा, वेदस्यान्तं तिरोधानं करोतीति वेदान्तकृत् अहमेवेत्युक्तम् । मयि परमात्मनि महाकल्पान्ते सशब्दाः श्रुतयस्तिरोहिता भवन्ति । पूर्वपादस्थितात् चकारात् पुनः कल्पादौ अहमाविर्भूत्वा प्रकटीकरोमीत्यर्थः[१२], वेदविच्चाहमेव[१३], = वेदवित् अत्र वेदशब्दस्य ज्ञानमित्यर्थः । यद्वा तत्त्वतो वेदार्थवेत्ताप्यहमेव । 'मां विधत्तेऽभिधत्ते मां विकल्पोपोह्य इत्यहं' इत्यस्य 'हृदयं साक्षान्नान्यो मद्वेद कश्चने'ति वचनात् 'अहरहः सन्ध्यामुपासीते'ति श्रुतिमान् मत्प्रीत्यर्थं विद्यते । न करीन्द्रश्रुतिर्मामभिधत्ते 'चत्वारि वागि'ति श्रुत्या विकल्पः विविधतया ध्येयोऽहं 'न सुरां पिबेत्' इति श्रुत्या अपोह्य अहम्मदादिप्रियत्वात् सुरापानं न कार्यमित्याशयेनाह अहमेव निषेध्याः इत्येव-मस्याः श्रुतेरभिप्रायः मदन्यः कश्चन मुख्यतो न वेद । मत्प्रसादात् किञ्चिज्जानातीति वचनार्थः ॥ ॥ १५ ॥

## भाष्यम्

**वेदनिर्णयात्मिका मीमांसा वेदान्तः । तथाच सामवेदे प्राचीनशालश्रुतिः– "स वेदान्तकृत् स कालक इति, स ह्येव युक्तिसूत्रकृत्", "स कालकः" इति ॥ ॥ १५ ॥**

*प०टी०*— 'वेदान्तकृत्' इत्यस्यार्थमुपनिषत्कर्तेति प्रतीतिनिरासाय सप्रमाणकमाह **वेदेति** । **कालकः** अज्ञानहारी ॥ १५ ॥

*प्र०दी०*— 'वेदान्तकृत्' इत्युपनिषदां कर्ता इत्यन्यथाप्रतीतिनिरासार्थमाह **वेदेति** । **वेदः** वेदार्थः । तस्यान्तो **निर्णयः** । तदात्मिका । तादर्थ्यात् ताच्छब्द्यम् । **मीमांसा** ब्राह्मी । तस्याः 'कर्ता' इति शेषः । कुत एतत् ? इत्यत आह **तथा चेति** । **युक्तिसूत्रकृत्** वेदार्थनिर्णयार्थयुक्ति-सूचकवाक्यकृत् । **स कालकः** इति द्वितीयेन कलधातोः ज्ञानाद्यर्थतया प्रसिद्धत्वात् निगद-व्याख्यानमेतदित्याचष्टे ॥ १५ ॥

*भा०दी०*— 'हि' इत्यन्तप्रतीकं गृहीत्वा **स हि** इत्यादिना 'वेदान्तकृत्' इत्येतावदेव व्याख्यानम् । 'स कालकः' इत्येतत्कुतो न व्याख्यातम् ? इत्यत आह **स कालक इति द्वितीयेनेति** । **इत्याचष्टे** इत्यन्वयः ॥ १५ ॥

*भा०र०*— 'अयं वेदः' इति निर्णये, 'अयं ऋग्वेदः', 'अयं यजुर्वेदः' इत्यादिनिर्णये वा न मीमांसोपयोगः ? इत्यतो भाष्यगतवेदशब्दविवक्षितार्थमाह **वेदो वेदार्थ इति** । 'अन्तोऽस्त्री निश्चये नाशे' इत्यभिधानाद् 'उभयोरपि दृष्टोऽन्तः' इत्यत्र 'अन्तो निर्णय' इति भाषणाच्चाह **अन्तो निर्णय इति** । मीमांसाया वेदार्थनिर्णयरूपत्वाभावादाह **तादर्थ्यादिति** । निर्णयप्रयोजनकत्वात् निर्णयशब्दार्थत्वमित्यर्थः । मुख्यो वेदार्थो हि भगवान्, तन्निर्णयात्मकत्वं च न कर्ममीमांसादेः, इत्यतोऽत्र मीमांसाशब्दविवक्षितार्थमाह **ब्राह्मीति** । **तस्याः** मीमांसायाः **कर्ता**' इति वदन् मीमांसा वेदान्तः, तस्याः कर्ता 'वेदान्तकृत्' इति भाष्यशेषो निरूपणीय इत्यभिसन्धत्ते । 'युक्तिसूत्रकृत्' इत्यत्र युक्तीनां सूत्राणां कर्ता' इति प्रतीतिनिरासायार्थमाह **वेदार्थेति** । युक्तिसूचकं च वाक्यं ब्रह्ममीमांसैव । तस्या एव 'आकाशस्तल्लिङ्गात्' इत्यादिसूत्ररूपाया आकाशादिशब्दानां वेदमुख्यार्थभगवद्ग्रहणे परोवरीयस्त्वादियुक्तिसूचकवाक्यत्वादिति भावः । व्यासस्य ब्रह्मसूत्रकर्तृत्वाद् 'अहं कर्ता' इति कथं गीताचार्य उपदिशति ? इति शङ्का 'स एव व्यासरूपेण वेदान्तकृदुदाहृतः' इति प्रमाणोदाहरणेनोत्तरप्रस्थाने परिहृता ।

ननु वेदान्तकृच्छब्द इव कालकशब्दोऽपि श्रुतावुपात्तः किमिति न व्याख्यातः ? पुनरुक्तश्च ? इत्यतः तदभिप्रायमाह **स कालक इति द्वितीयेनेति** । पुनरनुवादेनेत्यर्थः । 'कलधातोः' इति वदन् कलधातुः पचाद्यजन्तः । कलयति = जानातीति कलः, स एव प्रज्ञादित्वात् कालः, स एव कालकः, स्वार्थे कः, 'ज्ञाता' इत्यर्थ इत्यभिसन्धत्ते । 'ज्ञानाद्यर्थत्वात्' इत्यत्रादिशब्दार्थः 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' इत्यत्र भाष्य एव स्फुटः । *भावप्रदीपिकायां तु* 'कालकोऽज्ञानहारी'' इति व्याख्यातम् । **निगदव्याख्यानम्** निगदः पाठः, स एव व्याख्यानम् = अर्थकथनं यस्य तत् तथा । **एतत्** कालकपदमित्यर्थः ॥ १५ ॥

**गीतातात्पर्यनिर्णयः**

**स एव व्यासरूपेण वेदान्तकृदुदाहृतः ॥ १५ ॥**

**गीता**

## द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
## क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

*वि०वि०*— यदुक्तमूर्ध्वशब्देन विष्णोः सर्वोत्तमत्वं तद्विशदयति **द्वाविमावित्यादिना** । द्वावेवेति सम्बन्धः । इमौ प्रमितौ चेतनौ लोके पर्यालोचने सति ।

शाखाभिः तत्तद्देवतारूपेण[९], वेद्यः = परममुख्यवृत्त्या प्रतिपाद्यः[१०], अहमेव[११], वेदान्तकृदहं = तत्सम्प्रदायप्रवर्तकश्च ज्ञानदो गुरुरहम् । यद्वा, व्यासरूपेण वेदार्थनिर्णायकब्रह्ममीमांसा-कर्ताप्यहमेव[१२], यद्वा, वेदस्यान्तं तिरोधानं करोतीति वेदान्तकृत् अहमेवेत्युक्तम् । मयि परमात्मनि महाकल्पान्ते सशब्दाः श्रुतयस्तिरोहिता भवन्ति । पूर्वपादस्थितात् चकारात् पुनः कल्पादौ अहमाविर्भूत्वा प्रकटीकरोमीत्यर्थः[१२], वेदविच्चाहमेव[१३], = वेदवित् अत्र वेदशब्दस्य ज्ञानमित्यर्थः । यद्वा तत्त्वतो वेदार्थवेत्ताप्यहमेव । 'मां विधत्तेऽभिधत्ते मां विकल्पोपोह्य इत्यहं' इत्यस्य 'हृदयं साक्षान्नान्यो मद्वेद कश्चने'ति वचनात् 'अहरहः सन्ध्यामुपासीते'ति श्रुतिमान् मत्प्रीत्यर्थं विद्यते । न करीन्द्रश्रुतिर्मामभिधत्ते 'चत्वारि वागि'ति श्रुत्या विकल्पः विविधतया ध्येयोऽहं 'न सुरां पिबेत्' इति श्रुत्या अपोह्य अहम्मदादिप्रियत्वात् सुरापानं न कार्यमित्याशयेनाह अहमेव निषेध्याः इत्येव-मस्याः श्रुतेरभिप्रायः मदन्यः कश्चन मुख्यतो न वेद । मत्प्रसादात् किञ्चिज्जानातीति वचनार्थः ॥ ॥ १५ ॥

### भाष्यम्

**वेदनिर्णयात्मिका मीमांसा वेदान्तः । तथाच सामवेदे प्राचीनशालश्रुतिः– "स वेदान्तकृत् स कालक इति, स ह्येव युक्तिसूत्रकृत्", "स कालकः" इति ॥ ॥ १५ ॥**

***प०टी०***— 'वेदान्तकृत्' इत्यस्यार्थमुपनिषत्कर्तेति प्रतीतिनिरासाय सप्रमाणकमाह **वेदेति** । **कालकः** अज्ञानहारी ॥ १५ ॥

***प्र०दी०***— 'वेदान्तकृत्' इत्युपनिषदां कर्ता इत्यन्यथाप्रतीतिनिरासार्थमाह **वेदेति** । **वेदः** वेदार्थः । तस्यान्तो निर्णयः । तदात्मिका । तादर्थ्यात् ताच्छब्द्यम् । **मीमांसा** ब्राह्मी । तस्याः 'कर्ता' इति शेषः । कुत एतत् ? इत्यत आह **तथा चेति** । **युक्तिसूत्रकृत्** वेदार्थनिर्णयार्थयुक्ति-सूचकवाक्यकृत् । **स कालकः** इति द्वितीयेन कलधातोः ज्ञानाद्यर्थतया प्रसिद्धत्वात् निगद-व्याख्यानमेतदित्याचष्टे ॥ १५ ॥

***भा०दी०***— 'हि' इत्यन्तप्रतीकं गृहीत्वा **स हि** इत्यादिना 'वेदान्तकृत्' इत्येतावदेव व्याख्यानम् । 'स कालकः' इत्येतत्कुतो न व्याख्यातम् ? इत्यत आह **स कालक इति द्वितीयेनेति** । **इत्याचष्टे** इत्यन्वयः ॥ १५ ॥

*भा०र०*— 'अयं वेदः' इति निर्णये, 'अयं ऋग्वेदः', 'अयं यजुर्वेदः' इत्यादिनिर्णये वा न मीमांसोपयोगः ? इत्यतो भाष्यगतवेदशब्दविवक्षितार्थमाह **वेदो वेदार्थ इति** । 'अन्तोऽस्त्री निश्चये नाशे' इत्यभिधानाद् 'उभयोरपि दृष्टोऽन्तः' इत्यत्र 'अन्तो निर्णय' इति भाषणाच्चाह **अन्तो निर्णय इति** । मीमांसाया वेदार्थनिर्णयरूपत्वाभावादाह **तादर्थ्यादिति** । निर्णयप्रयोजनकत्वात् निर्णय-शब्दार्थत्वमित्यर्थः । मुख्यो वेदार्थो हि भगवान्, तन्निर्णयात्मकत्वं च न कर्ममीमांसादेः, इत्यतोऽत्र मीमांसाशब्दविवक्षितार्थमाह **ब्राह्मीति** । **तस्याः** मीमांसायाः **कर्ता**' इति वदन् मीमांसा वेदान्तः, तस्याः कर्ता 'वेदान्तकृत्' इति भाष्यशेषो निरूपणीय इत्यभिसन्धत्ते । 'युक्तिसूत्रकृत्' इत्यत्र युक्तीनां सूत्राणां कर्ता' इति प्रतीतिनिरासायार्थमाह **वेदार्थेति** । युक्तिसूचकं च वाक्यं ब्रह्ममीमां-सैव । तस्या एव 'आकाशस्तल्लिङ्गात्' इत्यादिसूत्ररूपाया आकाशादिशब्दानां वेदमुख्यार्थभगवद्ग्रहणे परोवरीयस्त्वादियुक्तिसूचकवाक्यत्वादिति भावः । व्यासस्य ब्रह्मसूत्रकर्तृत्वाद् 'अहं कर्ता' इति कथं गीताचार्य उपदिशति ? इति शङ्का 'स एव व्यासरूपेण वेदान्तकृदुदाहृतः' इति प्रमाणोदाहरणे-नोत्तरप्रस्थाने परिहृता ।

ननु वेदान्तकृच्छब्द इव कालकशब्दोऽपि श्रुतावुपात्तः किमिति न व्याख्यातः ? पुनरुक्तश्च ? इत्यतः तदभिप्रायमाह **स कालक इति द्वितीयेनेति** । पुनरनुवादेनेत्यर्थः । 'कलधातोः' इति वदन् कलधातुः पचाद्यजन्तः । कलयति = जानातीति कलः, स एव प्रज्ञादित्वात् कालः, स एव कालकः, स्वार्थे कः, 'ज्ञाता' इत्यर्थ इत्यभिसन्धत्ते । 'ज्ञानाद्यर्थत्वात्' इत्यत्रादिशब्दार्थः 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' इत्यत्र भाष्य एव स्फुटः । *भावप्रदीपिकायां तु* 'कालको-ऽज्ञानहारी' इति व्याख्यातम् । **निगदव्याख्यानम्** निगदः पाठः, स एव व्याख्यानम् = अर्थकथनं यस्य तत् तथा । **एतत्** कालकपदमित्यर्थः ॥ १५ ॥

**गीतातात्पर्यनिर्णयः**

**स एव व्यासरूपेण वेदान्तकृदुदाहृतः ॥ १५ ॥**

**गीता**

## द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
## क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

*वि०वि०*— यदुक्तमूर्ध्वशब्देन विष्णोः सर्वोत्तमत्वं तद्विशदयति **द्वाविमावित्यादिना** । द्वावेवेति सम्बन्धः । इमौ प्रमितौ चेतनौ लोके पर्यालोचने सति ।

अथवा, द्वावेवेत्यस्योपपत्तये परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । ईशितव्यवर्ग इत्यर्थः । **सर्वाणि** भूतानि ब्रह्मादयो जीवाः क्षराः शरीरक्षरणात् । **कूटस्थः** पुरुषो महालक्ष्मीः । 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति वचनात् पुल्लिङ्गत्वम् । अक्षरः देहनाशाभावात् ॥ १६ ॥

***वा०ल०***— 'द्वाविमौ पुरुषौ' इत्यत्र, लोके इमौ विद्वत्प्रसिद्धौ क्षरश्चाक्षरश्चेति द्वौ पुरुषौ चेतनौ स्तः । तत्र शरीरक्षरणात् सर्वाणि भूतानि सकलप्राणिसमूहः क्षर इत्युच्यते । मुक्तानामपि संसारदशायां शरीरक्षरणात् क्षरपुरुषेष्वेवान्तर्भावः । क्षरः इति तु जातावेकवचनम् । सर्वाणि भूतानीति भगवतैव स्पष्टं व्याख्यातत्वात् । 'देहः क्षरः' इति व्याख्या अपव्याख्या । भूतशब्दस्य प्राणिष्वेव रूढत्वात् । नित्यमुक्ततया कदाचिदपि देहक्षरणाभावात् कूटस्थपदवाच्या लक्ष्मीः 'अक्षरपुरुषः' इत्युच्यते । पुल्लिङ्गदारपदवाच्यजायावत्, पुंवच्छक्तिमती श्रीश्च क्वचित्पुंलिङ्गेनोच्यते । निर्विकारार्थकूटस्थशब्दस्य सविकारेषु जीवेष्वसम्भवात् । परमात्मनः पृथगुक्तेः, प्रकृतिलक्ष्मीनारायणाख्येषु त्रिष्वक्षरेषु मध्यमाक्षरपदवाच्यतया प्रसिद्धा श्रीरेव कूटस्थपुरुषः ॥ १६ ॥

***सा०सं०***— एवं सर्वान्तर्यामित्वं प्रपञ्च्याधुना सर्वोत्तमत्वं प्रपञ्चयति **द्वाविति** । **इमौ** प्रमाणप्रमितौ । **पुरुषौ** चेतनौ । **लोके** ईशितव्यवर्गे । द्वावेतौ कावित्यत आह **क्षरश्चेति** । **सर्वाणि भूतानि** ब्रह्मादिजीवराशिः । शरीरक्षरणहेतुना **क्षर उच्यते** । **कूटस्थः** कूटमाकाशं तद्वत् स्थितः पुरुषः । अक्षरदेहत्वात् श्रीरक्षर **उच्यते** । 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति छान्दोग्यभाष्योक्तेः ॥ १६ ॥

***अ०प्र०***— इदानीं 'तद्धाम परमं मम'ेति यदुक्तं तत्स्वकीयं सर्वोत्कृष्टस्वरूपं दर्शयति ईश्वरादिशब्दैः । प्रकृतं सर्वोत्तमं प्रपञ्चयति **द्वावित्यादिना** ।

हे कुरुनन्दन !, अस्मिन् लोके[१], क्षरः पुरुषः[२], अक्षरः = पुरुषश्चेति[३], इमौ[४], द्वौ[५], पुरुषौ प्रसिद्धौ[६], तत्र सर्वाणि भूतानि[७], क्षरः = पुरुषः उच्यते[८], कूटस्थः[९], अक्षरः पुरुषः[१०] उच्यते[११] इत्यन्वयः ।

अस्मिन् = ब्रह्माण्डगोलके लोकेऽवलोकेऽर्थालोचने सति द्वावेत्यस्योपपत्तये परमपुरुषं व्यावर्तयितुं लोकेत्युक्तं, ईशितव्यवर्ग इत्यर्थः[१], क्षरः पुरुषः अक्षरः पुरुषश्चेति[३], इमौ = प्रमितौ[४], द्वौ[५], पुरुषौ = चेतनौ प्रसिद्धौ[६], तत्र तयोर्मध्ये सर्वाणि भूतानि ब्रह्मादि स्थावरान्तानि[७], क्षरः पुरुष उच्यते = सर्वप्राणिजातं क्षरः पुरुष इत्युच्यते[८], कूटस्थः = कूटे जडाजडजाते नियामकतया

तिष्ठतीति कूटस्थः । यद्वा, कूटवत् व्योमवत् निर्विकारत्वेन तिष्ठतीति कूटस्थः पुरुषः महालक्ष्मीः[९], अक्षरः पुरुषः = न क्षरतीत्यक्षरः पूर्णत्वात्पुरुषः पुरौ शेत इति पुरुषः । शरीरनाशाभावात् पुल्लिङ्गेनोच्यते स्त्री च । पुम्वच्छक्तिमती क्वचिदित्युक्तेः[१०] उच्यते इत्यर्थः[११], यद्वा, कूटः = शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थः ॥ १६ ॥

**भाष्यम्**

**क्षरभूतानि** ब्रह्मादीनि । **कूटस्थः** प्रकृतिः । तथा च शार्कराक्ष्यश्रुतिः—

"प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् । तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकम्" इति ॥ १६ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये पञ्चदशोऽध्यायः ॥*

*प०टी०*— 'क्षरः सर्वाणि' इत्यादि व्याचष्टे **क्षरेति** । 'द्वौ' इत्यादेः सङ्ग्रहेण श्रुत्यर्थमाह **तथा चेति** । जननमरणरहितं **जालाजालम्** ॥ १६ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां पञ्चदशोऽध्यायः ॥*

*प्र०दी०*— 'क्षराक्षरशब्दौ जडजीवार्थौ' इत्यपव्याख्याननिरासार्थमाह **क्षरेति** । भूतग्रहणं युक्तिसूचनार्थम् । न हि जडमात्रे भूतशब्दो रूढः । किं तु जीवेष्वपि । पुरुषशब्दस्य चैतदुपलक्षणम् । **प्रकृतिः** चेतना । 'अक्षरः' इति वक्तव्ये 'कूटस्थः' इति वचनमपि युक्तिसूचनार्थमेव । न हि जीवानां कूटस्थत्वमस्ति । सुखादिमत्त्वेन विकारित्वात् ।

श्रुतिसम्मत्या चायमेवार्थ इत्याह **तथा चेति** । 'क्षरः' इत्यनुवादेन 'प्रजापतिः' इत्यादि व्याख्यानम् । **अन्यं** परमात्मानम् । क्षरान्तर्भूतोऽपि मातरिश्वा विवक्षाविशेषेणाक्षरोऽपि भवतीत्युच्यते **जालेति** । जालं संसारबन्धः । सोऽस्यास्तीति जालः । 'अर्श आदिभ्यो अच्' । तद्रहितश्चाजालः । अभिमानाभावात् ॥ १६-२० ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चदशोऽध्यायः ॥ १५ ॥*

*भा०दी०*— युक्तिसूचनार्थमित्युक्तं व्यनक्ति **न हीति** । 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ जीवेष्वेव प्रयोगादिति भावः । न केवलं भूतपदप्रयोगान्न जडं क्षरपदार्थः किन्तु 'द्वाविमौ पुरुषौ' इति निर्दिष्टपुरुषपदायोगाच्चेति भावेनाह **पुरुषशब्दस्य चैतदुपलक्षणमिति** ।

**विवक्षाविशेषेणेति** । सत्यपि संसारे कृति तत्कृतविकाराभावरूपकूटस्थत्वविवक्षयेत्यर्थः । 'जालश्चासावजालश्च' इति विग्रहमुपेत्याह **जालमिति** । एतेन 'मातरिश्वानमेकमक्षरमुदाहरन्ति' इति योजना सूचिता ॥ १६-२० ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे पञ्चदशोऽध्यायः ॥*

*भा०र०*— **इत्यपव्याख्यानेति** । तथा च *शङ्करः*— 'क्षरतीति क्षरः = विनाशी पुरुषः, समस्तं विकारि जडजातम् । न कदाचित् क्षरतीत्यक्षरः पुरुषः संसारी जन्तुः' इति । 'युक्तिसूचनार्थम्' इत्यत्र क्षरशब्दस्य जडार्थत्वे बाधिका, जीवार्थत्वे साधिका च या युक्तिः तत्सूचनार्थम् इत्युक्तयुक्तिमेवाह **न हि जडमात्र इति** ॥ 'मात्रे' इति वदन् पञ्चभूतेषु भूतशब्दवृत्तिमङ्गीकरोति । **रूढ इति** । तथा च जडग्रहणे रूढिबाधः, जीवग्रहणे रूढिस्वीकार एव युक्तिरिति भावः । **किन्तु जीवेष्विति** । 'यतो वा इमानि भूतानि जायन्ते', 'एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति', 'तं भूतान्यभ्यक्रोशन्' इत्यादाविवेति भावः । न केवलं भूतपदरूढिबाधात् न जडं क्षरपदार्थः, किन्तु 'द्वाविमौ पुरुषौ' इत्युपात्तपुरुषपदाप्रयोगाच्च इति युक्त्याऽपीति भावेन तां युक्तिमाह **पुरुषशब्दस्य चेति** । **एतत्** भूतग्रहणम् । जडप्रकृतेर्विकारितया कूटस्थत्वायोगादाह **प्रकृतिश्चेतनेति** ।

'क्षरो भूतानि' इतिवत् 'अक्षरः प्रकृतिः' इति भाषणीयेऽपि; एवमुक्तेः प्रयोजनमाह **अक्षर इतीति** । तामेव युक्तिं दर्शयति **न हीति** । **विकारित्वात्** उच्चनीचतालक्षणविकारवत्त्वात् । अनेन भाष्ये कूटस्थशब्दो निर्विकारार्थकः, पुरुषशब्दापेक्षया च पुलिङ्गम् इति भावितं भवति । क्षरशब्दस्यैवात्र गीतागतस्य व्याख्यातव्यत्वाद् भाष्यं व्यत्यस्य योज्यमित्याह **क्षर इतीति** । 'प्रधानम्' इति श्रौतपदस्य चेतनप्रकृतिरर्थः । 'परमात्मेत्युदाहृतः' इति गीतानुसारेणान्यपदार्थमाह **अन्यं परमात्मानमिति** । **क्षरान्तर्भूतोऽपि** क्षरपदार्थोऽपि **विवक्षाविशेषेण** सत्यपि संसारे तत्राभिमानाभावेन विकारित्वाभावलक्षणकूटस्थत्वविवक्षाविशेषेण । **अच्** मत्वर्थीय इति भावः । **अभिमानाभावादिति** । 'ब्रह्मा निरभिमानित्वात् शरीर्यप्यशरीरवान् । तदप्यनभिमानतः' इत्यादिशास्त्राद् 'वायुर्हि

ब्रह्मतामेति तस्मात् ब्रह्मैव स स्मृतः' इति वचनाद् ब्रह्मशब्दो वाच्यर्थक इति तस्य संसाराभिमानाभावाद् अजालशब्दितसंसाराभाववचनं युक्तमित्यर्थः । अनेन 'जालश्चासौ अजालश्च' इति बहुलग्रहणाद् विशेषणयोरपि समास इति विभावितं भवति । 'जननमरणरहितं जालाजालम्' इति *भावप्रदीपिका* ॥ १६ ॥

*गीताक्षरार्थस्तु*—

'अधश्च मूलान्यनुसन्ततानि' इति यत् सर्वान्तर्यामित्वरूपं विज्ञानशब्दितं भगवन्माहात्म्यमुक्तम्, तत्प्रपञ्च्यते **यदादित्यगतमित्यादिचतुःश्लोक्या** । **तेजः** प्रकाशनशक्तिः **जगद् भासयते** प्रकाशयति **यच्चन्द्रमसि यच्चाग्नौ तत्तेजो मामकं** मदीयम्, यद् आदित्यादौ मत्सन्निधायत्तं तेजः तत् **मामकं** मदधीनं **विद्धि** जानीहि ॥ १२ ॥

किञ्च **गां** भूमिम् **आविश्य भूतानि** सशरीरान् जीवान् **ओजसा** बलेन स्वसामर्थ्येन **धारयामि** । किञ्चाहमेव **रसात्मकः** अमृतरसम् आददानः, रसस्वामी वा **सोमः** सौम्यत्वात् सोमनामकः, चन्द्रगतत्वाच्च सोमशब्दवाच्यो भूत्वा **सर्वा ओषधीः** व्रीहियवाद्याः **पुष्णामि** पुष्टिमतीः स्वादुमतीश्च करोमि ॥ १३ ॥

किञ्चाहं उपजीव्यतया विश्वनरसम्बन्धी **वैश्वानरः** जाठरजातवेदा **भूत्वा प्राणिनां देहमाश्रितः** देहे प्रविष्टः सन् प्राणापानाभ्यां मुख्यप्राणरूपाभ्यां समायुक्तः = सहितः, 'भक्ष्यम्, भोज्यम्, लेह्यम्, चोष्यं च' इति **चतुर्विधमन्नं** प्राणिभिर्भुक्तं **पचामि** पक्त्वा देहाद्युपचयकारणं करोमि । यत्र यद् दन्तैरवखण्ड्य भक्ष्यते अपूपादि तत् भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते पायसादि तद् भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादनेन निगीर्यते द्रवीभूतं गुडादि तल्लेह्यम् । यत्तु दंष्ट्रादिभिर्निष्पीड्य रसांशं निगीर्य अवशिष्यं त्यज्यते इक्षुखण्डादि तच्चोष्यमित्यादि चतुर्विधमन्नं विवेचयन्ति ॥ १४ ॥

किञ्च **सर्वस्य** प्राणिजातस्य **हृदि** अन्तर्यामितया **सन्निविष्टः** अस्मि । **मत्तः** 'पञ्चम्यास्तसिल्', मत् एव **स्मृतिः** पूर्वानुभूतार्थविषया प्रतीतिः **ज्ञानम्** अनुभवः, स्मृतिज्ञानयोः **अपोहनम्** अपगमनं प्रमोषश्च भवति । अपोहनं = विपरीतप्रत्यय इत्यपि **आहुः** । **सर्वैर्वेदैरहमेव** परममुख्यया वृत्त्या **वेद्यो** ज्ञातव्यः । **वेदान्तकृद्** वेदस्य अन्तो वेदान्तः, करोतीति कृत्, वेदान्तस्य कृत् वेदान्तकृद् इत्यत्र वेदशब्देन वेदार्थो गृह्यते । अन्तशब्देन निर्णयवचनेन निर्णायकग्रन्थः, तादर्थ्यात्

ताच्छब्द्यम् । तथा च वेदार्थनिर्णायकमीमांसा वेदान्तशब्दार्थः, तस्याः कर्ता व्यासरूपेणाहमेवेति स तथोच्यते । **वेदवित्** वेदार्थस्य वेदिता च **अहमेव** मुख्यः ॥ १५ ॥

एवं सर्वान्तर्यामित्वं प्रपञ्च्य यद् 'ऊर्ध्वमूलम्' इत्यत्र ऊर्ध्वशब्देन सर्वोत्तमत्वमुक्तम्, तद् अध्यायशेषेण प्रपञ्च्यते **द्वाविमौ पुरुषावित्यादिना** । 'इमौ' इति प्रमाणसिद्धया सूच्यते । **पुरुषौ** चेतनौ, एवशब्दस्य 'द्वावेव' इति सम्बन्धः । तद्धटनाय परमपुरुषं व्यावर्तयितुम् 'लोके' इत्युक्तम् । चशब्दौ परस्परसमुच्चये । कौ तौ पुरुषौ ? इत्यत उच्यते **क्षर इति** । **सर्वाणि भूतानि** ब्रह्म-शिव-सुराद्या जीवाः शरीरक्षरणात् **क्षरः** पुरुषः, **कूटस्थः** पुरुषोऽक्षरदेहत्वात् महालक्ष्मीः । तदनेन उत्तमपुरुषनिरूपणस्यापेक्षितं पुरुषनिरूपणं कृतम् ॥ १६ ॥

**गीता**

## उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
## यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

***वि०वि०***— यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह **उत्तम इति** । अन्यः क्षराक्षराभ्याम् । न पुनरेतयोर्मध्ये कश्चित् पुरुषोत्तमः कल्प्यः । तत्र श्रुत्यादिसम्मतिमाह **परमात्मेति** । आत्म-शब्दोऽपि चेतनपर्यायः । उक्तं च— 'ब्रह्मादिजीवाः सर्वेऽपि शरीरक्षरणात् क्षराः । लक्ष्मीरक्षर-देहत्वादक्षरा तत्परो हरिः ॥' इत्यादियुक्तिमप्याह । य इति लोकत्रयमिति सर्वोपलक्षणम् । यो हि यस्य धारणपोषणकर्ता स तस्मादुत्तमो युक्तः । तत्प्रविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम् **अव्यय इति** । तत्कथम् ऐश्वर्यादित्याह **ईश्वर इति** ॥ १७ ॥

***वा०ल०***— तु विशेषेण क्षराक्षरपुरुषयोरन्यः अत्यन्तभिन्नः उत्तमः पुरुषः । लोकत्रयनाशेऽपि नाशरहितत्वात् अव्ययः इत्युक्तम् । तच्च ईश्वरत्वाद्घटत इति सूचनाय ईश्वरः इत्युक्तम् ॥ १७ ॥

***सा०सं०***— यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह **उत्तम इति** । क्षराक्षराभ्यामिति विपरि-णाम्यानुषज्यते । **उत्तमः पुरुषस्तु** ताभ्याम् **अन्यः** । न त्वनयोरेकः पुरुषोत्तम इत्यर्थः । उक्तार्थे श्रुत्यादिसम्मतिमाह **परमेति** । आत्माऽत्र चेतनः । क्षराक्षरौ चेतनमात्रम् । उत्तमपुरुषस्तु परमचेतन इति । 'चेतनश्चेतनानाम्', 'ब्रह्माणि जीवाः सर्वेऽपि' इत्यादि श्रुतिषूदाहृत इत्यर्थः । अतस्ताभ्या-मन्यः पुरुषोत्तम इति भावः । उक्तार्थे युक्तिमप्याह **य इति** । यः भूर्भुवः स्वरिति **लोकत्रयमाविश्य बिभर्ति** धत्ते । यो यस्य धारणपोषणकर्ता स तस्मादुत्तमोऽन्यश्च दृष्ट इति भावः । किं लोकनाशे

प्रविष्टस्यापि नाशोऽस्तीत्यत उक्तम् **अव्यय इति** । तत्कथमित्यतोऽचिन्त्यशक्तित्वादित्याह **ईश्वर इति** । एतेन क्षराक्षराभ्यामुत्तमोऽन्यः किंनामक इत्यपि शङ्का परास्ता ॥ १७ ॥

***अ०प्र०*— यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह उत्तम इति** ।

उत्तमः = अतिशयेन उत्कृष्टः पुरुषोत्तमः[१], पुरुषस्तु[२], अन्यः = क्षराक्षराभ्यां न पुनरनयोर्मध्ये विलक्षणः अन्यः पुरुषः[३], कल्प्यः[४], श्रुत्यादिकमाह **परमात्मेति** । आत्मशब्दश्चेतनपर्यायः परमात्मा इति[५], उदाहृतः = समाहितश्रुतिभिरुक्तः[६], एष आत्मा नारायणपरः परः 'पूतात्मा परमात्मा चे'ति श्रुत्यादौ उदाहृतः । युक्तिमप्याह **य इति** । यो = यस्याधारेण आदिकर्ता स तस्मादुत्तमोक्तः तत्प्रतिष्ठितस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तं **अव्ययमिति** । तत्कथं ऐश्वर्यादित्यत आह **ईश्वर इति** । यः ईश्वरः = ईशनशीलः[६], अव्ययश्च = निर्विकार एव सन्[७], लोकत्रयं = कृत्स्नं त्रैलोक्यं[८], आविश्य = व्याप्य[९], बिभर्ति = पालयति ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः ।**
**श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः ॥**
**चेतनाचेतनस्यास्य राशेः संस्थापकत्वतः ।**
**कूटस्थ आत्मा सा ज्ञेया परमात्मा हरिः स्वयम् ॥ १६-१७ ॥**

***न्या०दी०*— क्षरणं** विनाशः । क्षर विनाशसन्ततदानयोरिति धातोः । **अत्रात्मपदप्रयोगेण "द्वाविमौ पुरुषौ" इति पुरुषशब्दः चेतनार्थ इत्युक्तं भवति । ततश्च न श्रियः पुरुषत्वविरोधः ॥**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां पञ्चदशोऽध्यायः समाप्तः ॥*

***भा०दी०*— इति धातोरिति** । शरीरद्वारा क्षरतीत्यर्थे पचाद्यच्प्रत्यये क्षरेति रूपमिति भावः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते पञ्चदशोऽध्यायः ॥*

**गीता**

## यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
## अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

***वि०वि०***— स च क इत्यपेक्षायामहमेवेति सप्रमाणकमाह **यस्मादिति** । क्षरं चेत्यन्वयः । लोके पौरुषेयागमे ॥ १८ ॥

***वा०ल०***— परमात्मेत्युदाहृतः इति परोक्षतया निर्देशात् स्वयमुत्तमः पुरुषो नेति वारयितुमाह **यस्मात् क्षरमतीतोऽहम्** इति । क्षरमतीतः अतिक्रम्य स्थितः । क्षरादुत्तम इति यावत् । लोके विद्वज्जने पौरुषेयागमे वा । एषः परोक्षतया निर्दिष्टः स परमात्मापि स्वयमेव । 'आत्मनोश्चेतनयोः क्षराक्षरपुरुषयोः परमः' इति व्युत्पत्त्या क्षराक्षरपुरुषयोरात्मानात्मत्वशङ्कां व्यावर्तयितुं स्वस्य तदुभयोत्तमत्वमनुभावयितुं च परमात्मपदप्रयोग इति भावः ॥ १८ ॥

***सा०सं०***— स किं त्वत्तोऽन्य इत्यतोऽहमेवेति सप्रमाणकमाह **यस्मादिति** । **यस्मात् क्षरं** चातीतः **अक्षरादुत्तमोऽतः** कारणात् । **लोके** पौरुषेयग्रन्थे । **वेदे** अपौरुषेयग्रन्थे च । **प्रथितः** प्रसिद्धः । **पुरुषोत्तमो**ऽहमेवेत्यर्थः ॥ १८ ॥

***अ०प्र०***— एवंभूतं पुरुषोत्तमत्वमात्मनो नाम निर्वचनेन दर्शयति **यस्मादिति** ।

यस्मात् अहं[१], क्षरं[२], अतीतः अक्षरादपि च[३], उत्तमः[४], अतः[५], लोके[६], वेदे च[७], पुरुषोत्तम इति[८], प्रथितोऽस्मि[९] इत्यन्वयः ।

यस्मात्कारणात् = अहं लीलाविग्रहः[१], क्षरं = ब्रह्मादिस्थावरान्तं जीवजडवर्गं[२], अतीतः = क्षरपुरुषादतीतः नित्यमुक्तत्वात्[३], अक्षरादपि च = अक्षरात् महालक्ष्म्याः अपि च नियन्तृत्वात्[४], उत्तमः = उत्कृष्टतमः श्रेष्ठः[५], अतः = कारणात्[६], लोके = पौरुषेयागमे[७], वेदे च = यद्वा, वेदे लोके = समुदाये च वेदस्यानेकत्वात् वेदसमुदाये च[८] ॥ **पुरुषोत्तम इति** । क्षरा-क्षराभ्यां उत्तमस्तस्मात्पुरुषोत्तम इति[९], प्रथितोऽस्मि = प्रख्यातोऽस्मि[१०], कथित इत्यर्थः । तथा च श्रुतिः— 'सर्वस्यात्मा सर्वस्य वशी सर्वस्यैशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'ति ॥ १८ ॥

गीता

## यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
## स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

*वि०वि०*— अत्रात्मनस्तात्पर्यद्योतनाय ज्ञातुः फलमाह **यो मामेति** । एवं नत्वश्वकर्णादिवत् संज्ञात्वेन । एतच्च पुरुषोत्तमत्वमपरमार्थकमिति सम्मोहवर्जितः । सर्ववित् अस्यैव सर्वशास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण ॥ १९ ॥

*बा०ल०*— इदं च पुरुषोत्तमत्वं व्यावहारिकमिति शङ्कां निवारयितुमाह - 'यो मामेवम्' इति । एवं पूर्वोक्तव्युत्पत्त्या नत्वश्वकर्मादिशब्दवत् सङ्केतमात्रेणेत्यर्थः । 'असम्मूढः' सम्मोहरहितः । व्यावहारिकावस्थाया मायामयत्वेन सम्मोहरूपत्वात्, असम्मूढः इत्युक्त्या तद्राहित्यमेवोक्तं स्यात् । जडदेहादेर्नश्वरतया, क्षराक्षरभेदेन द्विविधचेतनयोर्भृत्यतया, स्वस्योत्तमतया च ज्ञानात् स सर्वविदित्युक्तम् । सर्वभावेन सर्वेण भावेन, चेष्टापरपर्यायप्रकारेण, सर्वप्रकारेणेत्यर्थः । सर्वमनोवृत्त्या वा । पूर्वोक्तप्रमेयमनुसृत्य सर्वोत्तमपदार्थरूपतयेति वाऽर्थः ।

शाकपार्थिवादिव्यपदेशेषु मध्यमपदलोपस्य बहुलमुपलम्भात् प्रागुक्तसर्वोत्तमत्वोपलक्षितसमस्तमद्गुणानां भावेन । असम्मूढपदसूचितसत्तया वा । 'भावः पदार्थे सत्तायां चेष्टाभिप्रायजन्मसु' इत्यमरः । मां भजति सेवते । सर्वोत्तमत्ववेदनमेव महती सेवेत्यर्थः । 'सर्वभावेन' सर्वरूपत्वेन मां भजतीत्यर्थस्तु 'भज सेवायाम्' इति धातुविरुद्धत्वात् पूर्वश्लोके पूर्वार्धे चोक्तसर्वोत्तमत्वविरुद्धत्वाच्च महाननर्थ एव ॥ १९ ॥

*सा०सं०*— तात्पर्यद्योतनायोक्तार्थज्ञानिनः फलमाह **यो मामिति** । **यो**ऽधिकारी **मामेवम्** । क्षराक्षरोत्तमत्त्वेन वेदादिषु प्रथितत्वप्रकारेण । **असम्मूढः** सर्वोत्तमत्वं मिथ्याभूतमुच्यत इति मोहरहितः सन् । **पुरुषोत्तमं** क्षराक्षरपुरुषाभ्यामुत्तमम् । **जानाति स सर्ववित्** सर्वशास्त्रार्थज्ञानी । **सर्वभावेन** सर्वप्रकारेण । **मां भजति** ॥ १९ ॥

*अ०प्र०*— अत्रान्तरस्तात्पर्यद्योतनाय ज्ञातुः फलमाह **यो मामिति** ।

हे भारत ![१], यः[२], असंमूढः सन्[३], एवं[४], पुरुषोत्तमं[५], मां[६], जानाति[७], तथा मां[८], सर्वभावेन[९], भजति[१०], सः[११], सर्वविद्भवति[१२] इत्यन्वयः ।

हे भारत ![१], यः = पुरुषः[२], असम्मूढः सन् संमोहवर्जितः निश्चितमतिः ज्ञानीत्यर्थः[३], एवं = पूर्वोक्तरीत्या न त्वश्वकर्णादिकशब्दवत् संज्ञात्वेन[४], पुरुषोत्तमं = एतच्च पुरुषोत्तमत्वं पारमार्थिकमिति[५], मां = अनन्तषड्गुणैश्वर्यादियुक्तं मां[६], जानाति[७], तथा ज्ञात्वा मां[८], सर्वभावेन = सर्वप्रकारेण[९], भजति = मामेव भजति[१०] सः = पुरुष एव मत्प्रसादेन[११], सर्वविद्भवति = सर्वज्ञो भवति ॥ १९ ॥

**गीता**

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥*

***वि०वि०—*** एतच्च न यस्मै कस्मैचिद्वाच्यमित्याशयेनाह **इतीति** । इदं 'सर्ववित्' इत्याद्युक्तम् । ततः किमित्यत आह **एतदिति** । बुद्धिमानपरोक्षज्ञानी । कृतकृत्यो मुक्तः ॥ २० ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य-विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां पञ्चदशोऽध्यायः ॥ १५ ॥*

***वा०ल०—*** बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः ॥ २० ॥

*॥ इति श्रीरादिराजयतीन्द्रेण कृते श्रीमद्भगवद्गीतालक्षालङ्कारे पञ्चदशोऽध्यायः ॥*

***सा०सं०—*** एतच्च न यस्मै कस्मैचिद्वाच्यमिति भावेनाह **इतीति** । **इति** 'अधश्च मूलान्यनुसन्ततानि' इत्यादिनोक्तप्रकारेण । **इदं** सर्वान्तर्यामित्वादिकम् । यद्वा, 'ऊर्ध्वमूलम्' इत्यादिनोक्तप्रकारेण । **इदं** जगद्वृक्षमूलत्वादिकम् । **शास्त्रं** शिक्षणीयम् । **गुह्यतमम्** अतिगोप्यम् । **मयोक्तम्** । ततः किमित्यत आह **एतदिति** । **एतत्** प्रागुक्तं सर्वम् । **बुद्ध्वा** । **बुद्धिमान्** अपरोक्षज्ञानी **स्यात्** । **कृतकृत्यो** मुक्तः **च** स्यादिति ॥ २० ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते पञ्चदशोऽध्यायः ॥*

*अ०प्र०*— हे अनघ ![1], ते मया[2], इति[3], गुह्यतमं[4], शास्त्रं[5], इदं[6], उक्तं[7], एतत् योऽपि कोपि[8], बुद्ध्वा[9], बुद्धिमान्[10] स्यात्[11], कृतकृत्यश्च स्यात्[12], हे भारत !, त्वं कृतकृत्योऽसीति किं वक्तव्यं इत्यन्वयः ।

हे अनघ ! = अर्जुन[1], ते = तव मया = ज्ञेन कृष्णमूर्तिना[2], इति = सङ्क्षेपप्रकारेण[3], गुह्यतमं = अतिरहस्यं[4], इदं = पूर्वोक्तं[5], शास्त्रं = न पुनर्विंशतिश्लोकमध्यायमात्रं किन्तु सम्पूर्णं शास्त्रमेव[6], उक्तं = उपदेशितं[7], अत एव एतत् = मदुक्तं शास्त्रं[8], योऽपि कोऽपि = बुद्ध्वा ज्ञात्वा[9], बुद्धिमान् स्यात् = अपरोक्षज्ञानी स्यात् भवतीत्यर्थः[11], कृतकृत्यश्च स्यात् = कृतमाचरितं कृत्यं करणीयं कर्म येन स कृतकृत्यश्च स्यात् । कर्मानुसरणात् साधकस्य ऋणोत्तीर्णाय वैराग्यद्वारा श्रीविष्णुभक्त्यै दृढज्ञानं दत्वा कर्म स्वयमपि तत्रैव दास्यत्वेन रतो भवति । तस्मादज्ञानवतः कृत्यं कृतमासीत् नावशिष्टमित्यर्थः[12], हे भारत !, त्वं कृतकृत्योऽसीति किं वक्तव्यम् ? इत्याशयः ।

अत एव ज्ञानी कर्मातीतः, तस्य कर्तृत्वाभिमानाभावात् 'यस्य नाहं कृतो भावो नैव किञ्चित्करोमी'ति तस्य कार्यं न विद्यते इत्यादि वचनात् ॥ २० ॥

उक्तार्थे प्रमाणमाह राघवेन्द्रयतिभिर्विरचितम् । तदुक्तम्—

पृथङ्मूलं हरिस्तस्य जगद्वृक्षस्य भूमिवत् ।
सत्त्वादियुक्ती चिदचित्प्रकृती मूलभागवत् ॥ १ ॥
....अत्रापि चिद्योगो वृक्षवत्सम्प्रकीर्तितः ।
पृथिवी देवता तत्तद्धरिमूला ह्यचेतना ॥ २ ॥
उत्तमत्वात्तु मूलानां ऊर्ध्वमूलस्त्वयं स्मृतः ।
नीचास्ततो महदहम्बुद्धयो भूतसंयुताः ॥ ३ ॥
शाखा-छन्दांसि-पर्णानि काममोक्षौ फले ह्यतः ।
कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणम् ॥ ४ ॥
अन्योन्यसंयुताः शाखामूलानि च सदैव तु ।
विषयादशनीयत्वात्प्रवालसदृशा मताः ॥ ५ ॥
जगद्वृक्षोऽयमश्वत्थो ह्यश्ववचञ्चलात्मकः ।
अव्ययोऽयं प्रवाहेन स्वसक्तज्ञानहेतुना ॥ ६ ॥

विष्णोः सम्यक् पृथक् दृष्टि नामछेदनभाक् सदा ।
अव्यक्तादिसमस्तं तु नेति नेत्यादि वाक्यतः ॥ ७ ॥
बोधेनैव पृथग्विष्णोः कृत्वा मृग्यः स केशवः ।
तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम् ॥ ८ ॥
जीवराशिः समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः ।
किञ्चित्सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते ॥ ९ ॥
ईश्वरस्तु यदा त्वस्य शरीरं विशति प्रभुः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ १० ॥
शब्दादीन् प्रापयत्यर्थं जीवमादाय यात्यतः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ११ ॥
भुङ्क्ते हरिः शुभान् भोगान् इन्द्रियेषु व्यवस्थितः ।
पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव च ॥ १२ ॥
सौम्यत्वात्सोमनामासौ सोममण्डलगः सदा ।
स एवाग्निः स्थितो विष्णुः नाम्ना वैश्वानरः सदा॥ १३ ॥
सर्वेषां सनराणां य उपजीव्यः सदैव तु ।
स एव व्यासरूपेण वेदान्तकृदुदाहृतः ॥ १४ ॥
ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात्क्षरः ।
श्रीरक्षरात्म्येत्युदिता नित्यचिद्देहकायतः ॥ १५ ॥
चेतनाचेतनस्यास्य राशेः संस्थापकत्वतः ।
कूटस्थ आत्मा सा ज्ञेया परमात्मा हरिः स्वयम्॥ १६ ॥
क्षराक्षरार्थास्तस्मात् उत्तमः स सदानयोः ।
पुरुषोत्तमनामाऽतः प्रसिद्धो लोकवेदयोः ॥ १७ ॥

इत्यादि पृथग्मूलं वृक्षानन्तर्गतं भूदेवतावराधार इत्यर्थः । एवमेव चित्प्रकृतिरपि जगत्प्रकृति-वृक्षान्तर्गतमहामूलं सत्त्वादयोऽपि क्षुद्रमूलानि एतद्द्वयमुपादानं हरिनिर्मितं अधोर्ध्वयोः काममोक्षार्थ-त्वात् । काममोक्षयोः ग्रहणं सङ्गरहितज्ञानाख्यशस्त्रेण । अस्य विष्णोः पृथक्त्वमेव कुतस्तज्ज्ञानेन च किमित्यत उक्तं विवृण्वन्नाह **अव्यक्तादिति** । हरिर्जीवौ न जडं नेत्यादि वाक्यतो जन्येन विष्णोः

जगत्पृथक्त्वबोधेनैव हरिः मृग्यः वृक्षच्छेदनरूप-वैलक्षण्यज्ञानार्थं च हरिमेवं प्रपद्यते । जीवराशेः तत्प्रतिबिम्बत्वात् **छेदनसामर्थ्यहीनः** जीवस्य स्वेन्द्रियादिकमपि ईश्वराधीनमित्याह **ईश्वर इति** । उपजीव्य तथा विश्वनरसम्बन्धी वैश्वानरः । क्षरविनाशसन्ततदानयोः । शिष्टं गीतावद्व्याख्येयमिति प्रमाणार्थः ॥ २० ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां पञ्चदशोऽध्यायः ॥*

*भा०र०— गीताक्षरार्थस्तु—*

ततः किम् ? इत्यतः **उत्तमः पुरुष इति** । **अन्यः** क्षराक्षराभ्याम्, न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः । अस्योत्तमपुरुषत्वे श्रुत्यादिसम्मतिरुच्यते **परमात्मेत्युदाहृत इति** । आत्मशब्दोऽत्र चेतनपर्यायः । **उदाहृतः** 'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम्। तदुत्तमं चान्यमुदाहरन्ति' इत्यादिश्रुतौ, 'ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः । सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः' इत्यादिस्मृतौ च । युक्तिमाह **यो लोकत्रयमिति** ॥ यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः । आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम् **अव्यय इति** । कथम् ? ऐश्वर्यादित्युच्यते **ईश्वर इति** ॥ १७ ॥

स कः ? इत्यतोऽहमेवेति सप्रमाणकमुच्यते **यस्मादिति** । 'क्षरं चातीतः' इति चशब्दान्वयः । क्षराच्चोत्तम इत्यर्थः । लोकशब्देन पौरुषेयागम उच्यते । **प्रथितः** प्रख्यातः ॥ १८ ॥

एवं प्रतिपादिते क्षराक्षरोत्तमत्वे तात्पर्यद्योतनाय वेदितुः फलमुच्यते **यो मामेवमिति** । 'एवम्' इत्यस्य व्यावृत्तिनिरासः **असम्मूढ इति** । न पुनरश्वकर्णादिशब्दवत् संज्ञामात्रत्वेनेत्यर्थः । **स सर्ववित्** अस्यैव सर्वशास्त्रार्थत्वात् सर्वशास्त्रार्थस्य वेदिता । **सर्वभावेन** सर्वप्रकारेण ॥ १९ ॥

एतच्च यस्मैकस्मैचित् न वाच्यमिति भावेनोच्यते **इति गुह्यतममिति** । **शास्त्रमिति** । शास्त्रार्थः 'स सर्ववित्' इत्याद्युक्तम् । ततः किम् ? इत्यत उच्यते **एतद्बुद्ध्वेति** । **बुद्धिमान्** अपरोक्षज्ञानी । **कृतकृत्यः** मुक्त इति मायावादखण्डनटीकोक्तः ॥ २० ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

भूरिमनीषागमचित्रकरणाङ्गी जयतीर्थव्रतिकृतिशरणान् ।
सन्ततमीडे सुचरितवरणान् वेङ्कटनारायणगुरुचरणान् ॥

नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां पञ्चदशोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

**"क्षराक्षरात्मनोर्यस्मादुत्तमः स सदाऽनयोः ।**
**पुरुषोत्तमनाम्नाऽतः प्रसिद्धो लोकवेदयोः ॥"**

**—इति नारायणश्रुतिः ॥ १८-२० ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये पञ्चदशोऽध्यायः ॥***

* * *

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ षोडशोऽध्यायः

गीता

**श्रीभगवानुवाच—**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

*वि०वि०*— साधनानुष्ठानार्थं 'यतन्तो योगिनः' इत्यादिना, 'यतन्तोऽप्यकृतात्मानः' इत्यादिना तद्विरोधि च परित्यागार्थमुक्तम् । तदुभयात्मकं देवासुरलक्षणं प्रपञ्च्यतेऽस्मिन्नध्याये । तत्र देवलक्षणमाह **अभयमित्यादिना** । अभयं स्वतोऽन्यस्माद्वा स्वस्य भयाभावः । 'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः' इत्युक्तेः । सत्वसंशुद्धिः चित्तप्रसादः, ज्ञानयोगव्यवस्थितिः ज्ञानोपायनिष्ठत्वम् । दानं स्वभोज्यान्नादेर्यथोचितसंविभागः, दम इन्द्रियविनिग्रहः । 'ब्रह्मचर्यादिकं तपः' इत्यभिधानात् । स्वाध्यायो वेदाध्ययनम् ॥ १ ॥

*वा०ल०*— 'अभयं सत्त्वसंशुद्धिः' इत्यत्र, 'सत्त्वं' चित्तं, तस्य संशुद्धिः ॥ १ ॥

*सा०सं०*— पूर्वाध्याये 'निर्मानमोहाः' इत्यादिना सङ्क्षेपेणोक्तस्य पुमर्थयोर्ज्ञानमोक्षयोः साधनस्य 'यतन्तोऽप्यकृतात्मानः' इत्यादिना चोक्तस्य पुमर्थविरोधिनश्च देवासुरलक्षणरूपत्वात् तत्प्रपञ्चनमस्मिन्नध्याये क्रियत इति पूर्वसङ्गतिरध्यायभेदश्च ज्ञेयः । विरोध्युक्तिश्च साधनमनुतिष्ठता तत्त्यागोऽवश्यं कार्य इति भावेनेति बोध्यम् । तत्रादावभ्यर्हितत्वाद्देवलक्षणं तावदाह **अभयमित्यादिश्लोकत्रयेण** । **अभयं** स्वतोऽन्यस्यान्यस्माच्च स्वस्य भयाभावः । 'यस्मान्नोद्विजते लोको

कोलान्नोद्विजते च यः' इत्युक्तेः । **सत्त्वसंशुद्धिः** चित्तप्रसादः । **ज्ञानयोगव्यवस्थितिः** ज्ञानोपाय-निष्ठता । **दानं** पात्रे द्रव्यादित्यागः । **दमः** इन्द्रियनिग्रहः । **यज्ञो** ज्योतिष्टोमादिः । देवयज्ञ-पितृयज्ञादिर्वा । **स्वाध्यायो** वेदाध्ययनम् । **तपो** ब्रह्मचर्यादि । **आर्जवं** मनोवाक्कर्मस्वैकरूप्यम् ॥ ॥ १ ॥

***अ०प्र०— अ०प्र०—*** पूर्वाध्याये ज्ञानसाधनमनुष्ठानार्थं निर्याणेनोक्तं यतन्तोऽप्यकृतात्मान इति ज्ञानविरोधि च परित्यागार्थमुक्तं तदेव विवृण्वन् किञ्च अध्यायान्ते 'एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारते'त्युक्तं तत्र च एतत्तत्त्वं बुध्यते को वा न बुध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिका-रिणो अनधिकारिणश्च विवेकार्थं षोडशाध्यायः । निरूपिते हि कर्मार्थेऽधिकारिजिज्ञासा सम्भवति । तदुक्तम्— भेदे भारस्तु यो येन वोढव्यः स प्रागात्तोलितो यदा । तदेकस्तस्य वोढेति शक्यं कर्तुर्निरूपणम् ॥ इति ॥ तत्राधिकारिविशेषणभूतां दैवीसम्पदमाह **अभयमिति** त्रिभिः ।

अथान्वयः— श्लोकक्रमेण । अभयं = संसाराद्भयाभावः यद्वा, 'द्वितीयाद्भयं भवति' इति श्रुतेः । विष्णोः सर्वान्तर्यामिणः प्रेरणां विना जीवस्य भयं न भवतीति ज्ञानिनो भयाभावत्वं[२], तथा भागवते— 'भयं द्वितीयाभिनिवेशतः स्याद्भीशान्तये तस्य विपर्ययो स्मृतिः ।' द्वितीयोऽहङ्कारः कर्मादि अहं कर्तेत्यभिमानः । तेन जन्मादि भयं भवति तस्मात् निरहङ्कारेण कर्माणि कृत्वा श्रीकृष्णार्पणं कृतश्चेत्संसारादभयं[२], सत्त्वसंशुद्धिः = सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता । यद्वा, सत्त्वगुणेन सम्यक् शुद्धिं प्राप्ता बुद्धिस्तथा । तत्र प्रत्यय उच्यते । सङ्कल्पविकल्पा-त्मकरजस्तमसी विहाय बुद्धिः वैराग्येन श्रीविष्णुचरणारविन्दे रमते तदा इन्द्रियवर्गेण सुखदुःखप्रदाः विषयाः प्रदर्शितापि मनसि विस्मयो न भवति । एवं निश्चला बुद्धिः[२], ज्ञानयोगव्यवस्थितिः = ज्ञानोपाये परिनिष्ठा यद्वा, ज्ञानयोगौ द्वौ मार्गौ । तयोर्यः सूक्ष्मः तस्मिन् पथि निष्कामतया मनोवृत्तेः समग्रा-वस्थितिः सैव तथा[३], दानं = न्यायार्जितधनादि-धान्य-पत्र-पुष्प-फल-जलान्तं यथा सम्पन्नं वस्तुजातं प्राणिमात्राय च कायकर्तृत्वाभिमाने फलापेक्षां च विहाय केवलेश्वरार्पणबुद्ध्या देशकाल-पात्रादि तारतम्येन यद्दीयते स्वभोज्यस्यान्नादेः यथोचितविभागः तद्दानं[४], दमश्च = मन आदी-न्द्रियाणि विषयोन्मुखानि यथा न भवन्ति तथा वैराग्यबलेन विषयेभ्यः इन्द्रियाणां प्रत्याहारो दमः[५], यज्ञश्च = दर्शपूर्णमासादि वैश्वदेवान्तः द्विजातीनामेव तदितरवर्णानां स्त्रीणामपि 'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे' इत्यादिना गीताप्रामाण्यात् यज्ञाः सन्ति । एवं सर्वेषां शास्त्रोक्तरीत्या स्वस्व-वर्णोचितकर्मभिः निरभिमानेन फलाभिसन्धिं विना श्रीविष्णुभक्तिद्वारा तोषणं यज्ञः[६], स्वाध्यायः = ऋग्वेदाद्यध्ययन-ब्रह्मयज्ञादि-स्वाध्यायो द्विजानामेव । तदितरपूर्वोक्तवर्णानां याजन-अध्यापन-दान-

परोपकार-ब्राह्मणसेवा-स्तोत्रं वा नाममन्त्रावृत्तिश्च स्वाध्यायः[७], तपः = श्रीविष्णुपरमात्मनि नवविधा भक्तिकरणप्रकरणे सशरीरप्राणेन्द्रियशोषणम् । यद्वा, ब्रह्मचर्यादिकं तप इत्युक्तेः । कृच्छ्रचान्द्रायणतीर्थयात्रा एकादश्युपवासादिकायक्लेशस्तपः[८], आर्जवं = सत्कार्यादौ सर्वप्राणिजातेषु च मन आदीन्द्रियैः ऋजुमार्गेण प्रवर्तनं आर्जवम्[९] ॥ १ ॥

**भाष्यम्**

**पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति ।**

**तपः ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः' इत्यभिधानात् ॥ १ ॥**

***प०टी०*— अध्यायार्थं दर्शयति **पुमर्थेति** । देवलक्षणानि **पुमर्थसाधनानि**, तदितराणि **तद्विरोधादीनीति** । स्वाध्यायादेरपि तपस्त्वात् कथं तपसः पृथगुक्तिः ? इत्यत आह **तप इति** ॥ १ ॥

***प्र०दी०*— अध्यायप्रतिपाद्यं दर्शयति **पुमर्थेति** । यद्यपि पूर्वयोरध्याययोः, साधनप्रतिपादन एव तात्पर्यम् । तथाऽपि तत्र प्रपञ्चितम् । किं नाम बन्धस्वरूपम् ? साधनमनुतिष्ठता च तद्विरोधिनां त्यागोऽवश्यं करणीयः । पूर्वाध्याये च 'निर्मान' इत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनं, 'यतन्तोऽप्यकृतात्मानः' इत्यादिना तद्विरोधि च सङ्क्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम् । सुरासुरलक्षणं च तथेति 'तद् अनेनाध्यायेन दर्शयति' इत्यर्थः ।

'तपो वक्ष्यमाणम्' इति कश्चित् । तदसत् । 'देवद्विज' इत्यादिनोक्तस्यात्र ग्रहणे शौचादेरपि तपोग्रहणेन गृहीतत्वात् पुनरुक्तिप्रसङ्गात् । अतो वक्ष्यमाणान्तर्गतं यदत्र पृथगुच्यते तद्व्यतिरिक्तमेव । तच्च प्रधानस्यैवोपलक्षणत्वोपपत्तेर्नोपवासादीति भावेन सप्रमाणकमाह **तप इति** ॥ १ ॥

***भा०दी०*— **बन्धस्वरूपमिति** । 'प्रपञ्चितम्' इत्यनुषङ्गः । **तद्विरोधि चेति** । अशुद्धबुद्धित्वादिकम् । **वक्ष्यमाणेति** । 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्' इत्यादिना 'उत्तराध्याये वक्ष्यमाणलक्षणमित्यर्थः । **पुनरुक्तीति** । आर्जवशौचादेरत्राप्युक्तेः 'तपः' इत्यनेन पुनरुक्तीत्यर्थः ॥ ॥ १ ॥

***भा०र०*— **अध्यायप्रतिपाद्यमिति** । उत्तरेषां पञ्चानामध्यायानां प्रतिपाद्यार्थस्य 'साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति' इति भाषितत्वाद् इदमध्यायावान्तरप्रतिपाद्यं अर्थमित्यर्थः । ननु 'पुमर्थ-

साधनविरोधीनि चैतदध्यायप्रतिपाद्यानि' इत्ययुक्तम् ? पुमर्थसाधनानाम् 'निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः' इत्यादिना, पुमर्थविरोधिनां च 'यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः', 'विमूढा नानुपश्यन्ति' इत्यादिना प्रागेव निरूपितत्वात् किमनेनाध्यायेन निरूपणीयमस्ति ? इत्याक्षिपति **यद्यपीत्यादिना** । **पूर्वयोः** चतुर्दश-पञ्चदशयोः । **तात्पर्यमिति** । 'साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति' इति भाषणादिति भावः । **बन्धस्वरूपम्** अत्ययसाधने जिज्ञासामुत्पादयितुं प्रपञ्चितम् । तर्ह्यावश्यकत्वात् साधनमेव निरूप्यताम्; किं तद्विरोधिप्रदर्शनेन ? इत्यत आह **साधनमिति** । बन्धात्ययसाधनमित्यर्थः । ततः किम् ? इत्यतः पूर्वाध्यायसङ्गतिं दर्शयन् भाष्यार्थमाह **पूर्वाध्याये चेति** । 'ज्ञानमवान्तरपुरुषार्थः' इति भावेन 'पुमर्थयोर्ज्ञानमोक्षयोः' इत्युक्तम् । **साधनम्** 'उक्तम्' इत्याकृष्यते । **तद्विरोधीति** । पुमर्थविरोध्यशुद्धबुद्धित्वादिकमित्यर्थः । **तदुभयम्** 'पुमर्थसाधनम्', 'तद्विरोधि' चेत्युभयमिति वदन् भाष्ये– 'पुमर्थसाधनानि च तद्विरोधीनि च' इति द्वन्द्वमभिप्रैति ।

ननु तर्हि साधन-तद्विरोधिनी प्रपञ्चनीये; किं देवासुरलक्षणवचनेन ? इत्यत आह **देवासुरेति**। तथा देवलक्षणम्; तत्साधनम्; असुरलक्षणं तद्विरोधीत्यर्थः । तथा च भावप्रदीपिका 'देवलक्षणानि पुमर्थसाधनानि तदितराणि तद्विरोधीनि' इति । **तद्** देवासुरलक्षणं **दर्शयति** प्रपञ्चयतीत्यर्थः । 'तपो वक्ष्यमाणलक्षणं शारीरादि' इति शङ्करभाष्ये दूष्यभागमनुवदति **तपो वक्ष्यमाणेति** । उत्तराध्याये "देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते" इत्यत्र वक्ष्यमाणेत्यर्थः । **पुनरुक्तिप्रसङ्गादिति** ॥ अत्रापि 'तेजः क्षमा धृतिः शौचमद्रोहः' इति शौचादेरभिधानाद् उत्तराध्याये तदुक्तौ तपःशब्दार्थस्य पुनरुक्तिप्रसङ्गादिति । **वक्ष्यमाणान्तर्गतम्** 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्' इति वक्ष्यमाणदेवपूजादावन्तर्गतं **यत्** शौचादि **अत्र** षोडशे **पृथगुच्यते तद्व्यतिरिक्तमेव** तपो वक्तव्यमित्यर्थः । ननु 'तप = सन्तापे' इति हि पठ्यते सन्तापश्चोपवासादिरूपः कायक्लेशो व्याख्यायत इति न पुनरुक्तिदोषः ? इत्यत आह **तच्चेति** ॥ तपः । तर्ह्युपवासाद्यसङ्ग्रहापत्तिः ? इत्यत उक्तम् **उपलक्षणत्वोपपत्तेरिति** । विनिगमनाविरहाद् उपवासादेरेवोपलक्षणत्वम् अस्तु ? इत्यत उक्तम् **प्रधानस्यैवेति** । उपवासाद्यपेक्षया प्रधानभूतस्य ब्रह्मचर्यादेरेवेत्यर्थः । 'राजा गच्छति' इत्यादौ प्रधानस्यैवेतरोपलक्षणत्वदर्शनाद् 'अमात्यो गच्छति' इत्यादौ तददर्शनाच्च । आवेदितं च ब्रह्मचर्यस्य प्राधान्यम् 'ऊर्ध्वरेतस्सु च शब्दो हि' इति भगवता सूत्रकारेणेति भावः ॥ १ ॥

**गीता**

# अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् । दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम्॥ २ ॥

***वि०वि०***— अक्रोधः परपीडाकरचित्तविकाराभावः । त्यागः औदार्यमात्महिंसकतदविरोधिवर्जनं वा । शान्तिर्भगवन्निष्ठा । पैशुनं परोपद्रवनिमित्तदोषाणां राजादेः कथनम् । 'परोपद्रवहेतूनां दोषाणां पैशुनं वचः । राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते' इत्यभिधानात् । तदभावोऽपैशुनम् । भूतेषु दया सज्जनदुःखासहिष्णुत्वम् । लोलुप्त्वं रागः । 'रागो लौल्यं तथा रक्तिः' इत्यभिधानात् । तदभावोऽलोलुप्त्वम् । मार्दवं अक्रूरत्वम् । ह्रीरकार्यकरणे व्रीडा । अचापल्यं स्थैर्यम् । 'चपलः चञ्चलो स्थिरः' इत्यभिधानात् ॥ २ ॥

***सा०सं०***— **अहिंसा** परप्राणावियोजनम् । **सत्यं** यथार्थवचनम् । **अक्रोधः** परपीडाकरचित्तविकाराभावः । **त्यागः** औदार्यम् । **शान्तिः** भगवन्निष्ठता । **अपैशुनं** परोपद्रवनिमित्तदोषाणां राजादेरकीर्तनम् । **भूतेषु** प्राणिषु । **दया** परहितकरश्चित्तगतो धर्मविशेषः । परदुःखासहिष्णुत्वं वा । **अलोलुत्वं** विषयेषु रागाभावः । आत्महिंसकेष्वप्यविरोधो **मार्दवम्** । अक्रौर्यं वा । **ह्रीः** अकार्यकरणे लज्जा । **अचापलं** स्थैर्यम् ॥ २ ॥

***अ०प्र०***— अहिंसा = हिंसा न भवतीत्यहिंसा । परपीडाभावः । किन्तु, सर्वप्राणिनां सुखाय मनोवाक्कायकर्मभिः व्यवहरणमहिंसा । तदुक्तम्— 'कायेन मनसा बुद्ध्या सर्वभूतेषु सर्वदा । अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः ॥'[१], सत्यं = यथार्थभाषणम् । तदुक्तम्— ''सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् । असत्यमपि तत्सत्यं उत्तमानां हितं वचः ॥'' सन्देहनिरसने शास्त्रवत्तीक्ष्णं श्राव्यत्वे मधुरं सुखाय प्रियं एवं श्रवणसुखे च तु तया आविष्कर्तुः याथार्थ्येनोक्तं वचः सत्यं[२], अक्रोधः = ताडितस्यापि चित्ते क्रोधानुत्पत्तिः । 'क्रोधश्चोक्तोऽसहिष्णुता' । यद्वा, परपीडाकरचित्तविकाराभावः । यद्वा, असहनवचोभिः इन्द्रियक्रियाभिश्च परैः पीड्यमानोऽपि क्रोधोर्मेरनुत्पत्तिरक्रोधः[३], त्यागः = औदार्यं अहं मदीयमिति अभिमन्यमानाऽहङ्कारविसर्जनं त्यागः[४], शान्तिः = चित्तोपरतिः भगवन्निष्ठा[५], अपैशुनं = परोक्षे परदोषप्रकाशनं पैशुन्यम् । तद्वर्जनमपैशुनम् । यद्वा, परोपद्रवार्थं राजादेः परदोषकथनाभावः । तदुक्तम्— 'परोपद्रवहेतूनां दोषाणां वैशुनं वचः । राजादेस्तु महद्भीतेरदृष्टिर्दर्प उच्यत ॥' इति ॥

अज्ञानप्रमादादिभिः ये अतीव निन्द्यास्तेषां वृत्तमपश्यन् सर्वान्तर्यामी भगवान् तत्रापि तिष्ठतीत्यवलोकनं अपैशुनं[६], दयाभूतेषु = दीनेषु भूतेषु सुखदुःखेषु जातेषु सत्सु आत्मन इव पश्यन् तद्दुःखनिवारणे यथा युक्त्युपायचिन्तनं तत्सुखेनात्मसन्तुष्टिश्चैषा भूतेषु दया[७], आलोलुपत्वं = वर्णलोपः आर्षः तदुक्तम्— 'रागो लोल्यं तथा रक्तिः । इत्युक्तेः'

यद्वा, इह परलौकिकविषयाय दृढया स्वाधीनाश्चेदपि तेषां भोगेषु मनस्यभिलाषो लोलुत्वं[८], मार्दवं = मृदुत्वं अक्रूरता । यद्वा, सर्वजनाभीष्टसिद्धये स्वकार्यमिव मनोवाक्कायकर्मभिः प्रवर्तमानं मार्दवं[९], ह्रीः = अकार्यकरणे लोकलज्जा यद्वा, सार्धत्रिहस्तपरिमितदेहे जन्ममरणादिदुःखं प्राप्य नामरूपतया अहं मदीयमिति देहात्मदृष्टिः जीवपरमतामनोरैक्यदृष्टिरेव लज्जा सैव ह्रीः[१०] अचापलम् = व्यर्थक्रियाराहित्यं स्थैर्यं वा अचञ्चलश्च यः स्थिरः इत्युक्तेः[११], यद्वा, प्राणजयेन कर्मेन्द्रियगतिनिरोधः । मनोजयेन ज्ञानेन्द्रियवृत्तिनिरोधश्च । एवं मनःप्राणनियमात् ज्ञानकर्मेन्द्रियाणि स्वस्वकर्मण्यक्षयाणि भवन्ति । तदचापलम् ॥ २ ॥

**भाष्यम्**

**पैशुनं परोपद्रवनिमित्तदोषाणां राजादेः कथनम् । "परोपद्रवहेतूनां दोषाणां पैशुनं वचः । राजादेस्तु मदाद् भीतेरदृष्टिर्दर्प उच्यते" इत्यभिधानात् । लौल्यं रागः । "रागो लौल्यं तथा रक्तिः" इत्यभिधानात् । अचापलं स्थैर्यम् । "चपलश्चञ्चलोऽस्थिरः' इत्यभिधानात् ॥ २ ॥**

***प०टी०***— न दोषोद्भावनमात्रं पैशुनमित्याह **पैशुनमिति** । **राजादेः** राजादिकं प्रति वचः । 'अलोलुत्व-अचापल'शब्दयोरर्थभेदमाह **लौल्यमिति** ॥ २ ॥

***प्र०दी०***— पैशुनाभावो अपैशुनम् । पैशुनं च परस्यापराधवचनम् इति । तदसत् । शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि तन्त्रप्राप्तेरित्याशयेनाह **पैशुनमिति** । राजादेः तच्छ्रावणम् । 'परोपद्रवनिमित्त' इति दोषेषूपचारः । अनेन परोपद्रवायेति सूचयति । **वचः** कथनम् । **मदात्** कारणात् । **भीतेरदृष्टिः** अनुत्पत्तिरिति यावत् । **भीतेः** भीतिकारणस्य, तथात्वेन **अदृष्टिः** इति वा । बालादीनां भीतेरदर्शनं व्यावर्तयितुं 'मदात्' इत्युक्तम् । अनेन धात्वर्थोऽप्यनुगतः ।

एतेनासुरलक्षणं दर्पोऽपि व्याख्यातः । अलोलुत्वाचापलत्वयोर्भेदं क्रमेण सप्रमाणकं दर्शयति **लौल्यमिति** । लोलुत्वपर्यायोऽयमित्यत एवमुक्तम् ॥ २ ॥

*भा०दी०*— राजादेः परकीयदोषश्रवणस्यैव परोपद्रवहेतुत्वात् दोषेषु कथं तद्धेतुत्वोक्तिरित्यत आह **राजादेस्तच्छ्रावणमिति** । अदृष्टिपदस्यार्थमाह **अनुत्पत्तिरित्यादिना** । यथाश्रुते भीतेः मनोधर्मस्य ज्ञातैकसत्त्वेनादृष्टेरयोगादिति भावः । **धात्वर्थोऽपीति** । **मदात्** इत्यादिना दर्पपदार्थ-व्याख्यानेनोक्तेऽर्थे दृपहर्षमोहनयोः इत्युक्तदृपधात्वर्थानुगत इत्यर्थः । विमोहनस्यादृष्टिरूपत्वादिति भावः । गीतायां त्वप्रत्ययान्तश्रवणात् भाष्ये 'अल्पम्' इति कथमुक्तम् ? इत्यत आह **लौल्य-मितीति** ॥ २ ॥

*भा०र०*— 'अपैशुनम् अपिशुनता । परस्मै पररन्ध्रप्रकटीकरणं पैशुनम्, तदभावोऽपैशुनम्' इति शङ्करभाष्ये दूष्यभागमनुवदति **पैशुनाभाव इत्यादिना** । अपैशुनशब्दार्थः **पैशुनाभाव इति** । इतरस्तु परभाष्यानुवाद इति वा । **तत्त्वप्राप्तेः** पैशुनत्वप्राप्तेः । ननु कथनं नाम वाक्यरचनं वक्तृ-व्यापारः; तत्र 'राजादेः' इति षष्ठ्यन्तपदस्य कर्तृसमर्पकत्वं कर्मसमर्पकत्वं वा न सम्भवति ? असाङ्गत्यापत्तेरित्याशङ्क्य; नात्र कथनं वचनमात्रं विवक्षितम्; किन्नाम राजादिकर्तृकश्रवणानुकूल-प्रेरणात्मकं श्रावणमेव । तत्र च राजादेः श्रवणकर्तृत्वेनान्वयस्याभिसंहितत्वात् श्रोतृत्वसम्बन्धे षष्ठी इति भावेन 'राजादेः कथनम्' इत्यत्र 'कथनम्' इत्यस्य तात्पर्यविषयीभूतार्थं दर्शयति **राजादे-स्तच्छ्रावणमिति** । परोपद्रवनिमित्तदोषश्रवणम् ।

नन्वेवं राजादेः शिष्यादिदोषश्रावणं शिक्षार्थमपि पैशुनं स्यात् ? इत्यत आह **परोपद्रवेति** । **उपचारः** दोषतच्छ्रावणयोः परोपद्रवप्रयोजकत्वधर्मसाम्येन परोपद्रवनिमित्तशब्दस्य गौणी वृत्तिरित्यर्थ इति **आहुः** । कथनशब्दस्य दोषश्रवणतात्पर्यकस्य श्रावणकर्मदोषेषु लक्षणाऽत्रोपचारशब्दार्थ इत्यपि **अपरे** । *भावप्रदीपे तु*— राजादेस्तच्छ्रावणं परोपद्रवनिमित्तमिति 'दोषेषु उपचारः' इति पाठा-नुसारेण व्याख्यातम् । नन्वेवं शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि पैशुनत्वप्रसङ्ग इति शङ्कितदोषः कथं परिहृतः ? इत्यत आह **अनेनेति** । 'परोपद्रवनिमित्तेन' इति **भाषणेन** । तथा च 'परोप-द्रवोद्देश्यकं राजादेः परदोषश्रावणं पैशुनम्' इति लक्षणं विवक्षितमिति शिष्यादिदोषानुवादे नाति-व्याप्तिः । तस्य शिष्यादिशिक्षामात्रपर्यवसायितया उपद्रवोद्देश्यकत्वाभावादिति भावः । ननु प्रमाणे वचो नाम वाक्यम्; तथा च परोपद्रवहेतूनां दोषाणां राजादेर्वाक्यं पैशुनम् इत्यनन्वितम् ? इत्यतो-ऽर्थमाह **वचः कथनमिति** । एवं च नान्वयः, नापि भाष्यविसंवाद इति भावः ।

*भावप्रदीपिकायां तु* 'स्वाध्यायादेरपि तपस्त्वात् कथं तपसः पृथगुक्तिः ? इत्यत आह **तप इति** । न दोषोद्भावनमात्रं पैशुनमित्याह **पैशुनमिति** । राजादेः राजादिकं प्रति वचः' इति व्याख्यातम् । 'मदात्' इति पञ्चमी भयहेताविति प्रतीतिनिरासायाह **मदात् कारणादिति** । 'विभाषा

गुणेऽस्त्रियाम्' इति पञ्चमीति भावः । 'ह्रीर्भीरित्येतत् सर्वं मन एव' इति श्रुतेः भीतेः मनोवृत्ति-विशेषस्य साक्षिगोचरस्य ज्ञातैकसत्त्वाद् 'अदृष्टिः' इत्यनुपपन्नम् ? इत्यतो दृष्टिशब्दतात्पर्यार्थमाह **अनुत्पत्तिरिति** । 'ञिभी = भये' इत्यतः करणे क्तिनि निष्पन्नो भीतिशब्दो भीतिकारणमाह । 'अदृष्टिरदर्शनमेव' इति सोपस्कारमाह **भीतिर्भीतिकारणस्येत्यादि** । 'मदात्' इत्यस्य प्रयोजनं दर्शयति **बालादीनामिति** । **अनेन** 'मदाद्भीतेरदृष्टिः' इत्यनेन । **धात्वर्थः** 'दृप = हर्षविमोहनयोः' इति धात्वर्थः विमोहनरूप इत्यर्थः । विमोहनमात्रादृष्टिरूपमिति भावः । **दर्पः** 'दम्भो दर्पोऽभि-मानश्च' इत्यत्रासुरलक्षणतया वक्ष्यमाणः । 'मदाद्भीतेरदृष्टिः' इति **व्याख्यातः** । अलोलुत्वशब्दे व्याख्यातव्ये गीतायामविद्यमानो लौल्यशब्दः किमिति व्याख्यायते ? इत्यत आह **लोलुपत्वपर्याय इति** । लोलुपत्वपर्यायो लोलुत्वशब्दः; पकारलोपस्त्वार्षः । लौल्यमेव च लोलुत्वम् इति भाष्ये(व्ये) एवं व्याख्यानं कृतमिति भावः ॥ २ ॥

**गीता**

## तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
## भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ ३ ॥

***वि०वि०***— तेजः परानभिभवत्वम् । क्रोधाभावेन सहापकर्तुरनपकृतिः । 'अक्रोधः दोष-कृच्छत्रोः क्षमावान् स निगद्यते' इत्यभिधानात् । अद्रोहः परवृत्त्यननुरोधः । नातिमानिता अहङ्कार-राहित्यम् । शेषं व्याख्यातम् । एते गुणाः दैवसम्पदमभिजातस्य भवन्ति ॥ ३ ॥

***सा०सं०***— **तेजः** परैरनभिभवः । **क्षमा** क्रोधाभावेन सहापकर्तुरनपकृतिः । **धृतिरनातङ्कः**। **शौचं** मृत्तिकादिभिर्बाह्यशौचम् । भगवत्स्मृत्यादिनाऽऽन्तरशौचम् । **अद्रोहः** परवृत्त्यननुरोधः । **नातिमानिता** अहङ्काराराहित्यम् । एते गुणाः **दैवीं** देवसम्बन्धिनीम् । **सम्पदमभिजातस्य** प्राप्तस्य **भवन्ति** । अभिरयं लक्षणा 'इत्थम्भूताख्याने' इत्युक्तलक्षणार्थकप्रत्यर्थे वर्तते इति, तस्य कर्मप्रव-चनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीयोपपत्तिः । तथा चैत एव गुणाः मुमुक्षुणा-ऽवश्यमुपादेया इति भावः ॥ ३ ॥

***अ०प्र०***— हे भारत !, पूर्वश्लोकद्वयोक्ताः अभयादिविंशतिगुणाः वर्तमानश्लोकोक्ताः तेजः[१], क्षमा[२], धृतिः[३], शौचं[४], अद्रोहः[५], नातिमानिता[६], एतानि षट् आद्यन्तषड्विंशन्ति गुणाः दैवीं सम्पदं अभिजातस्य भवन्तीत्यन्वयः ॥

हे भारत[१], तेजः = प्रागल्भ्यं, 'तेजः प्रभावे दीप्तौ चे'ति वचनात् । यद्वा, तेजः श्रीहरिभजनविधौ विषयसुखं विहाय ज्ञानसाधने प्रवृत्तमाने सति यदृच्छया सम्प्राप्ता सिद्धिः । परित्यज्य श्रीविष्णुध्याने मनसः प्रधावनं आध्यात्मिकं तेजः[२], क्षमा = अक्रोधः परिभवादिषूत्पद्यमानक्रोधप्रतिबन्धः 'अक्रोधदोषकृच्छत्रोः क्षमावान् स निगद्यते' इति वचनात् । क्रोधाभावेन सह अपकर्तुः शत्रोः अनपकृतिं क्षमा । यद्वा, प्राणिषु अगरिम्णा मनोवाक्काय-कर्मभिः सर्वसहिष्णुता क्षमा[३], धृतिः = धैर्यं कदाचिदिन्द्रियवेगाः प्रमत्ताः प्रारब्धवशात् रोगसम्प्राप्तौ अर्थहानौ बन्धूनां वियोगेष्वपि सम्पदः विपदश्च प्रियाप्रिययोर्योगवियोगौ जातावपि चित्तं एवमाध्यात्मिकाधिभौतिकाधिदैविकानां उपद्रवे प्राप्तेऽपि तद्ग्रसनं धृतिः[४], शौचं = तत् द्विविधम्— कर्मणा बाह्यशुद्धिः ज्ञानेनान्तश्शुद्धिः एवं बाह्यमन्तरञ्च[५], अद्रोहः = परनिन्दादिजिहांसाराहित्यम् । यद्वा, प्राणिनां सुखमुन्नतिं प्राप्य स्वकार्यप्रवृत्तिः कर्तव्या । कदाचिदपि स्वकार्याय परेषामहिते सङ्कल्पोऽपि न कार्यः । एषोऽद्रोहः[६], नातिमानिता = आत्मनोऽल्पत्वं ज्ञात्वाऽपि अतिमहत्त्वज्ञानं आत्मन्यतिपूज्यत्वाभिमानः अतिमानिता तदभावो नातिमानिता[७], एवं अभयादिकमारभ्य नातिमानितान्ताः षड्विंशतिगुणात्मिका गुणाः देवीं = सात्त्विकीं सम्पदं योग्यतां[८], अभिजातस्य = प्रान्ते जातस्य पुरुषस्य[९,१०] भवन्तीत्यर्थः[११], देवयोग्यां सात्त्विकां सम्पदं अभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः । यद्वा, यतः सात्त्विकस्वभावस्यैतानि स्वरूपलक्षणानि अतो ज्ञानसाधनानि । यतः तानि सम्पादयेदिति भावः ॥ ३ ॥

**भाष्यम्**

**क्षमा तु क्रोधाभावेन सहापकर्तुरनपकारः । "अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते" इत्यभिधानात् ॥ ३ ॥**

*प०टी०*— 'अक्रोध'पदागतार्थतया 'क्षमा'पदं व्याचष्टे **क्षमेति** । (अवतारिका?) **दैवीमिति** ॥ ३ ॥

*प्र०दी०*— **'अक्रोधः'** इत्युक्तत्वात् 'क्षमा' इति पुनरुक्तिरित्यत आह **क्षमा त्विति** । क्रोधं दोषमपकारं च न करोति **अक्रोधदोपकृत्** । शत्रोः अपकर्तुः ॥ ३ ॥

*भा०र०*— दोषशब्दार्थः **अपकारमिति** । क्रोधदोषकृन्न भवतीति अक्रोधदोषकृद् इत्यस्य फलितप्रदर्शनम् **न करोत्यक्रोधदोषकृदिति** । 'अपकर्तुः' इति भाष्याविसंवादाय शत्रुशब्दार्थमाह **शत्रोरपकर्तुरिति** ॥ ३ ॥

**गीता**

# दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
# अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४ ॥

***वि०वि०*—** असुरलक्षणमाह **दम्भ इति** । दर्पः सत्यपि भयकारणे मदाद्भयादर्शनम् । पारुष्यं निष्ठुरत्वम् । शिष्टं स्पष्टम् । एते दोषा आसुरीं सम्पदमभिमुखीकृत्य जातस्य भवन्ति ॥ ४ ॥

***सा०सं०*—** त्यागायासुरलक्षणमाह **दम्भ इति** । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं **दम्भः** । **दर्पः** सत्यपि भयकारणे मदात् तदभावदर्शनम् । **अभिमानः** प्रमाणातिक्रमः । **क्रोधः** परपीडाकरचित्तविकारः । **पारुष्यं** निष्ठुरत्वम् । **आसुरीं सम्पदमभिजातस्ये**त्यस्य प्रागिवार्थः । 'तेन जातस्य' इत्यकर्मकत्वात् सम्पदमिति न द्वितीयानुपपत्तिदोषः ॥ ४ ॥

***अ०प्र०*—** ज्ञानलक्षणान्युक्तानि । अथ असुरलक्षणमाह **दम्भ इति** ।

अथान्वयः— हे पार्थ ![१], आसुरीं[२], सम्पदं[३], अभिजातस्य पुंसः[४], दम्भादि पारुष्यान्तानि[५-९], षडेतानि भवन्तीत्यन्वयः ।

हे पार्थ ![१], आसुरीं = असुराणां राक्षसानां सम्बन्धी आसुरी । तां तथा[२], सम्पदं = सम्पत्तिं[३], अभिजातस्य = प्रान्ते जातस्य प्राणिनः[४], दम्भः = धर्मध्वजित्वं इह परफलप्रदः स्वकीयो धर्मो लोके प्रकटीकृतश्चेदधर्मो भवति । तस्य निष्फलत्वात् । एतच्छास्त्रमज्ञात्वा धर्मध्वजित्वं दम्भः[५], दर्पः = धनविद्यादिनिमित्तचित्तस्योत्सेकः कथं विद्यास्त्रीधनसम्पत्स्तुतिभिः मत्तोऽन्यो नास्तीति मनसि स्फुरणं दर्पः[६], अभिमानः = प्रसिद्धः अतिमान इति वा पाठः । देहाभिमानमोहेन कस्याप्यगणनं अभिमानः[७], क्रोधः = विद्या-विनोदविभवैः परेषां सुखं दृष्ट्वा मनस्यसहनं क्रोधः[८], पारुष्यमेव च = मनसि दोषचिन्तनं, नेत्रयोः क्रूरदर्शनं, वचसि कठिनोक्तिः, इतरेन्द्रियैः कर्कशक्रिया । एवं मन आदि सर्वेन्द्रियैः क्रूरतया निष्ठुरत्वं पारुष्यं[९], अज्ञानञ्च = कृत्याकृत्याविवेकः विशेषतो पापमेव पुण्यमिति येनाविवेकेन न मन्यते तदज्ञानं विष्णुभक्तौ मूढता[१०] भवन्तीति पूर्वेणान्वयः ।

अयं भावः— असुरयोग्यतावतो षडेतानि लक्षणानि । मिथ्याज्ञानसाधनत्वात् एते त्याज्या इति भावः ॥ ४ ॥

गीता

**दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

*वि०वि०*— सम्पद्द्वयस्य फलं दर्शयन् अर्जुनस्यासुरस्वभावशङ्कां निवारयति **दैवीति** । देवसम्बधिनी । सम्पद्विमोक्षाय मता । 'वि' इत्युपसर्गादेव मोक्षनानात्वं ज्ञायते । असुरसम्बन्धिनी सम्पत्, निबन्धनाय नीचस्थानेऽधे तमसि बन्धाय मता । तदुक्तम्— ''विकारेच्छादिभिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः । मुक्त इत्युच्यते जीवो मुक्तिश्च द्विविधा मता ॥ चिन्मात्रदोषदुःखे च देहो मिथ्यादृगात्मकः । निषिद्धेच्छा च यत्र स्यात् नित्या सा मुक्तिरासुरी ॥' इति । 'चिन्मात्रा वैष्णवी भक्तिर्देहः सम्यग्दृगात्मकः । सुखमिच्छानुकूला च धृतिर्दैवीति सा मता ॥' (इति च ।) त्वं तु दैवी सम्पदभिजातोऽसि । अतो मा शुचः शोकं मा कार्षीः । देवत्वादीनां स्वाभाविकत्वेन कदाचिदप्यनपायादिति भावः ॥ ५ ॥

*वा०ल०*— 'निबन्धायासुरी मता' इत्यत्र, 'निबन्धाय' नितरां बन्धो दुःखसम्बन्धः अन्धन्तमः तस्मै ॥ ५ ॥

*सा०सं०*— दैवसम्पदादेः फलं सन्दर्शयन् अर्जुनस्यासुरस्वभावशङ्कां वारयति **दैवीति** । **अभिजातोऽसि** प्रागिवार्थः । जातस्य तव **दैवीसम्पत्** । लक्षणमित्यर्थः । ''वृक्षं प्रति विद्योतते' इत्यत्र 'वृक्ष इव प्रद्योतस्य' इति । अतो **मा शुचः** । शोकं मा कार्षीः । निबन्धनं नीचस्थाने तमसि निवासः । **विमोक्षाय** विविधमोक्षायेत्युक्त्या मोक्षस्य नानात्वमुच्यते ॥ ५ ॥

*अ०प्र०*— उभयोः सम्पदोः फलं दर्शयन् अर्जुनस्यासुरस्वभावशङ्कां निवारयति **दैवीसम्पदिति** ।

दैवीसम्पत्[1], विमोक्षाय भवति[2], आसुरीसम्पत्[3], निबन्धाय[4], मता = भवति[5], एतच्छ्रुत्वा किमहमत्राधिकारी न वेति सन्देहव्याकुलमर्जुनमाश्वासयति हे पाण्डव ! मा शुचः यतः[6], त्वं दैवीं[7], सम्पदं[8], अभिजातोऽसि[9] इत्यन्वयः ।

दैवीसम्पत् = पूर्वोक्ताभयादिलक्षणा ज्ञानिनो ज्ञानादिद्वारा[1], विमोक्षाय = विशिष्टमोक्षाय संसारबन्धाद्विमुक्तये भवति । अनेन सङ्क्षेपतारतम्यं सूचितं[2], आसुरीसम्पत् = पूर्वोक्तदम्भादिलक्षणा मिथ्याज्ञानादि द्वारा[3], निबन्धाय = नितरां बन्धाय[4], मता = भवति मोहलोहशृङ्खलेव भवतीति

निश्चिता भवति[१], एतच्छ्रुत्वा किं अहं अत्र अधिकारी वा न वेति सन्देहव्याकुलं अर्जुनं आश्वासयति— हे पाण्डव ![६], मा शुचः = इदं श्रुत्वा मा भैषीः । शोकं मा कार्षीः । देवत्वादीनां स्वाभाविकत्वेन कदाचिदपि अनपायात् । तदुक्तम्— "देवासुनरत्वाद्या जीवानां तु निसर्गतः । निसर्गो नान्यथैतेषां केनचित्क्वचिदेव वा ॥ देवाः शापबलादेव प्रह्लादादित्वमागताः । अतः पुनश्च देवत्वं ते यान्ति निजमेव च ॥" तस्मात् मानुषादीनां एषा आसुरीसम्पत् । तस्यैव बन्धाय यो दम्भादि षट्दोषाणां आश्रयो भवति[१], अतस्त्वं दैवीं = दैवगुणनिधिं[७], सम्पदं = योग्यतां[८], अभिजातोऽसि = जन्मतः प्राप्तोऽसि[९], इत्यर्थः ॥ ५ ॥

**भाष्यम्**

## दैवीं सम्पदम् अभिजातः प्रतिजातः ॥ ५ ॥

*प्र०दी०*— 'सम्पदं दैवीमभिजातोऽसि' इत्यत्र अभिजातः उत्तमजन्मा । नायं धातुः सकर्मकः । तत् कथं द्वितीया ? इत्याशङ्क्य 'अभिलक्ष्य जातः' इति **केचित्** व्याचक्षते । तदसत् । अर्जुनस्य देवत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयवानाह **दैवीमिति** । अनेनैतद्व्याचष्टे ।

नायमभिरुपसर्गः । येन तस्य जनिसम्बन्धे द्वितीयाऽनुपपत्तिः स्यात्, लक्षिसम्बन्धे चोक्तानुपपत्तिः स्यात् । किं तु प्रत्यर्थलक्षणे कर्मप्रवचनीयः । तथा च 'कर्मप्रवचनीययुक्ते द्वितीया' उपपद्यते । यथा वृक्षमभि वृक्षं प्रति विद्योतत इत्यत्र वृक्षो विद्योतनस्य लक्षणमित्यर्थः । एवं **दैवीसम्पत्** जातस्य तव लक्षणमित्यर्थः सम्पद्यते । तथा च अर्जुनस्य प्राप्तदेवत्वाविरोध इति । अत एव 'सम्पदं दैवीं अभिजातस्य भारत', 'अभिजातस्य पार्थ सम्पदमासुरीम्' इत्येतद्विहाय इदं व्याख्यातम् । अर्जुनस्य देवत्वप्रसिद्धेः । एतत्साहचर्यात् तत्राप्येतदर्थत्वोपपत्तेः ॥ ५ ॥

*भा०दी०*— **प्रत्यर्थलक्षण इति** । 'लक्षणे इत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति प्रतीत्युपसर्गस्य लक्षणरूपेऽर्थे कर्मप्रवचनीयसंज्ञोक्तेरिति भावः । **अत एवेति** । देवत्वस्य अर्जुनलक्षणत्वज्ञापनार्थत्वादेवेत्यर्थः । प्रसिद्धस्यैव लक्षणत्वात् । षष्ठ्यन्तनिर्दिष्टस्थले च देवासुरत्वाप्रसिद्धेरिति भावः ॥ ५ ॥

*भा०र०*— **उत्तमजन्मा** कुलीनः **अयं धातुः** 'जातः' इत्यत्र प्रकृतिभूतो 'जनी = प्रादुर्भावे' इति धातोः । **तत्कथमिति** । 'कर्मणि द्वितीया' इत्युक्तेरिति भावः । **केचिदिति** । तथा च *शङ्करः* 'दैवीं देवादीनां या सम्पत् तामभिलक्ष्य जातस्य' इति । 'देवत्वेन' इति वदन् 'इन्द्रो ह्यर्जुनः' इत्यभिसन्धत्ते । 'जनिधातोरकर्मकत्वात् कथं द्वितीया' इति शङ्का कथं परिहृता ? इत्यतो भाष्य-

भावमाह **अनेनेति** । **येन** उपसर्गत्वेन । 'उपसर्गाः क्रियायोगे' इति वचनाद् अत्र जनिधात्वर्थः क्रियायोगो वा लक्षधात्वर्थक्रियायोगो वा उपसर्गत्वे निमित्तमिति विकल्पं मनसि निधाय आद्ये दोषमाह **तस्य जनिसम्बन्ध इति** । अन्तेऽप्याह **लक्षिसम्बन्ध इति** । 'लक्ष = दर्शनाङ्कयोः' इति धात्वर्थक्रियायोग इत्यर्थः । **उक्तानुपपत्तिः** 'अर्जुनस्य देवत्वेनसिद्धदेवत्वमुद्दिश्य जन्मायोगात्' इत्युक्तानुपपत्तिः । **प्रतेर्लक्षणाद्यनेकार्थत्वाद्** विवक्षितमर्थं दर्शयति **लक्षण इति** । चिह्न इत्यर्थः । 'लक्षणे इत्थम्भूताख्यान-भाग-वीप्सासु प्रतिपर्यनवः' इति सूत्रे येष्वर्थेषु प्रतेः कर्मप्रवचनीयत्व-मुक्तम्, तेषु भागमात्रं वर्जयित्वा 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वस्योक्तत्वाद् अत्र लक्षणेऽर्थे अभेः कर्मप्रवचनीयत्वं युक्तमिति तद्योगे द्वितीयोपपत्तेरिति भावः । अभेः प्रत्यर्थे लक्षणे कर्मप्रव-चनीयत्वेन तद्योगे द्वितीयेत्यत्र उदाहरणं दर्शयति **यथा वृक्षमभीति** । **तव लक्षणमिति** । विशेषणरूपं चिह्नमित्यर्थः । **विरोध इति** । इतिशब्दस्य 'व्याचष्टे' इति पूर्वेणान्वयः । 'नार्जुनस्य प्राप्तदेवत्वविरोधः' इत्युक्तेऽर्थे उपष्टम्भकमाह **अत एवेति** । दैव्याः सम्पदोऽर्जुनलक्षणज्ञाप-नार्थत्वादेवेत्यर्थः । एतेन 'सम्पदं दैवीमभिजातस्य', 'पार्थ सम्पदमासुरीम्' इति च वाक्यद्वये प्रथमोपस्थितेऽपि, तत्र 'अभिजातस्य = प्रतिजातस्य' इति व्याख्यानं किमिति न कृतम् ? किमिति च 'दैवीं सम्पदमभिजातोऽसि पाण्डव' इति चरमश्रुतवाक्यं भाष्ये व्याख्यातम् ? इति चोद्यं परिहृतं भवति । 'अत एव' इत्युक्तं हेतुं दर्शयति **अर्जुनस्येति** । **एतत्साहचर्यात्** प्रसिद्धदेवत्वार्जुनसम्प-त्साहचर्यात् । **तत्रापीति** । 'सम्पदं दैवीमभिजातस्य' इत्यत्र, 'पार्थ सम्पदमासुरीम्' इत्यत्र 'दैवीं सम्पदमभिजातस्य = प्रतिजातस्य' इति च व्याख्यानोपपत्तेरित्यर्थः ॥ ५ ॥

**गीता**

## द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
## दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

***वि०वि०—*** 'सर्गाणां सुबहुत्त्वेऽपि शुभाशुभफलाधिकौ । देवासुराख्यौ द्वावेव गन्धर्वाद्या-स्तदन्तरा' इत्यादि प्रमाणसिद्धं गन्धर्वादिसर्गाणां देवासुरसर्गयोरन्तर्भावं वदन् उक्तवक्ष्यमाणसङ्कीर्तन-पूर्वकं आसुरस्वभावं प्रपंचयति **द्वौ भूतसर्गावित्यादिना** । भूतसर्गौ भूतस्वभावौ ॥ ६ ॥

***सा०सं०—*** ननु सर्गाणामतिबहुत्वाद्देवासुरयोरेवोक्तिः कथमित्यतः शुभाशुभफलाधिक्यादि-भाक्त्वरूपपूर्वश्लोकोक्तोपाधिद्वयविवक्षया द्वयोरेवोक्तिरिति भावेनाह **द्वाविति** । दैव आसुरश्च इति

द्वावेव । प्राणिनां **सर्गौ** सृष्टिभूतसर्गौ प्राणिस्वभावाविति वा । तदुभयजिज्ञासायामाह **दैव इति** । **श्रुणिवति** । विस्तरश इत्यनुषङ्गः ॥ ६ ॥

***अ०प्र०***— सर्वात्मना वर्जयितव्येति तदर्थमासुरीं सम्पदं प्रपञ्चयितुमाह **द्वाविति** ।

हे पार्थ ![२], अस्मिन्[२], लोके[३], दैवः[४], आसुर एव चेति भेदेन[५], भूतसर्गौ[६], द्वौ[७], तत्र दैवो[८], प्रोक्तः[९], आसुरं[१०] विस्तरशः[११], मे[१२], शृणु[१३], ॥

हे पार्थ ![१], अस्मिन् लोके = अस्मिन् ब्रह्माण्डगोलके[३], दैवः = दैवगुणसर्गः[४], अन्य आसुर एव च = आसुरसर्गश्चेति भेदेन[५], भूतसर्गौ = भूतानां सर्गः स्वभावः तौ तथा भूतसृष्टी[६], द्वौ = द्विप्रकारौ तत्र दैवः = दैवीसम्पत्सर्गः[८], प्रोक्तः[९], आसुरं = आसुरसम्पद्भूतसर्गं[१०] विस्तरशः[११], मे = मत्सकाशात्[१२], शृणु = अवधानेन अवधारयेत्यभिप्रायः[१३], आसुरराक्षसप्रकृत्योरेकीकरणे द्वावित्युक्तम् । अतो 'राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इत्यादिना नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः ॥ ६ ॥

**गीता**

## प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
## न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

***वि०वि०***— असुरा विहिते प्रवृत्तिं प्रवृत्तिधर्मं वा, निषिद्धे निवृत्तिं निवृत्तिधर्मं वा न विदुः। तेषु शौचाचारसत्यानि न सन्ति ॥ ७ ॥

***सा०सं०***— तदाह **प्रवृत्तिमित्यादिद्वादशश्लोकैः** । **आसुरा जनाः** विहिते **प्रवृत्तिम्**, निषिद्धे **निवृत्तिं च न विदुः** । **तेषु** शौचाचारसत्यानि **न** विद्यन्ते । तात्पर्यद्योतनाय नञोक्तिः ॥ ७ ॥

***अ०प्र०***— आसुरीं विस्तरशो निरूपयति **प्रवृत्तिं चेत्यादि** द्वादशभिः ।

आसुराः[१], जनाः[२], प्रवृत्तिं[३], न विदुः[४], तथा निवृत्तिञ्च न विदुः[५], तेषां शौचं नास्ति[६], आचारोऽपि नास्ति[७], तेषु[८], सत्यं[९], न विद्यते इत्यन्वयः ।

आसुरस्वभावा जनाः[१-२], विहिते पुण्याय प्रवृत्तिं प्रवर्तनं[३], न विदुः = न जानन्ति[४], तथा अविहिते पापात् निवृत्तिं = निवर्तनं च न विदुः । न जानन्ति तेषां विधिनिषेधज्ञानं नास्तीति

भात्र:[९], शौचं = शुचित्वं नास्ति[६], तेषां आचारोऽपि नास्ति[७], तेषु[८], सत्यं च[९], न विद्यते[१०] यद्वा, प्रवृत्तिनिवृत्तिधर्मौ न विदुः । किञ्च तेषां पूर्वनिरुक्तं शौचं आचारः सत्यं च न विद्यते । तदुक्तम्— 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः' । शास्त्रश्रवणेन वा सतां आचरणं दृष्ट्वा वा तेषामाचारोऽपि न सम्भवति । किन्तु स्वैरेणैव प्रवर्तते ॥ ७ ॥

**गीता**

## असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
## अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

*वि०वि०*— किञ्च, जगतः सत्यं विष्णुः 'तस्योपनिषत् सत्यस्य सत्यम्' इति । 'एष ह्येव तत् सादयति यामयति चेति' इति श्रुतिः । प्रतिष्ठापक ईश्वरश्च स एव । तद्विवर्जितं च जगत् ते असुरा आहुः । 'अन्नाद्भवन्ति भूतानि' इत्यादिनोक्तः परस्परसम्भवोऽस्य नास्तीत्यपरस्परसम्भूतम् अन्यत्कारणं किमस्ति न किञ्चिदपीत्यर्थः । किं तर्हि कारणमित्यत उक्तं **कामहैतुकमिति** । हेतुतः प्राप्तं हैतुकम् । कामेन हैतुकं कामहैतुकम् स्त्रीपुंसम्भोगैककारणं कर्मफलकामनैककारणकं वेत्यर्थः ।

अथवा, असुराः जगदसत्यं मिथ्याभूतमाहुः । अत एव अप्रतिष्ठं ज्ञानबाध्यम् । तत एवानीश्वरम् । न च यतो यतो जातमसावीश्वर इति वाच्यम् । यतोऽपरस्परसम्भूतम् । एकस्मादेकस्य नोत्पत्तिरिति यावत् ।

यद्वा, परमेश्वराधीनायाः प्रकृतेर्महान् महतोऽहङ्कार इत्यादिक्रमेण परस्परसम्भूतं न भवतीत्यपरस्परसम्भूतम् । न चेत्किं तर्हि **कामहैतुकम्** । काम इति कार्येण कारणं मिथ्याज्ञानमुपलक्ष्यते ॥ ८ ॥

*वा०ल०*— 'असत्यमप्रतिष्ठम्' इत्यत्र, असत्यं मिथ्याभूतम् । अप्रतिष्ठम् अन्ते प्रतिष्ठारहितम्, ज्ञानबाध्यमित्यर्थः । अनीश्वरं सर्वभिदवादित्वादीश्वररहितम् । अपरस्परसम्भूतं 'मृत्पिण्डात् घटः, तन्तोः पटः' इत्यादिरूपेण परस्परं कार्यकारणभावरहितम् । किं किं तर्हि, कामहैतुकं कामः स्वेच्छानुसारेण परिकल्पितमज्ञानम्, स एव हेतुः कारणं यस्य तत् कामहैतुकम् । ब्रह्माश्रिताज्ञानमेव घटपटादिजगदाकारेण परिणमते, न तु तत्तदवयवपरम्परयाऽऽदिसृष्टौ तत्तत्कार्यमुत्पद्यते इति वदन्ति इति भावः । यद्वा – 'कापुरुषः' इत्यादाविव कुत्सिता 'अमा' अज्ञानं यस्य तत् कामम् अज्ञानशबलं ब्रह्म, तद्धेतुकमिति वा । अन्यत् सदसतोरन्यत् इति चाहुः ॥ ८ ॥

***सा०सं०***— किञ्च जगत् **असत्यम्** । अत्र सत्यप्रतिष्ठेश्वरशब्दा विष्णुपराः । नञ् बहुव्रीहिः । जगद्विशरणकर्तृतया सत्यपदवाच्यविष्णुहीनमाहुः । स्थितिहेतुतया प्रतिष्ठापदोक्तविष्णुहीनमाहुः । **अनीश्वरं** स्वामिहीनमाहुः । जगत्सृष्ट्यादिकर्तारं ये न जानन्ति त इति चाहुरासुरजना इत्यनुषङ्गः । 'अपरस्परसम्भूतम्', 'अन्नाद्भवन्ति भूतानि' इति तृतीयोक्तदिशा परस्परसम्भूतं न भवतीत्यर्थः ।

यद्वा, **जगदसत्यं** सत्यं न मिथ्येत्यर्थः । अत एव, शुक्तिरूप्यवन्न प्रतितिष्ठति । **अप्रतिष्ठं** ज्ञानबाध्यम् । **अनीश्वरं** नियन्तृहीनम् । **अपरस्परसम्भूतं** परेभ्यः सम्भवहीनम् । एकस्मादेकस्य जनिर्नेति यावत् । किं तर्हीति प्रश्नस्योत्तरम् **अन्यदिति** । सदसद्भ्यामिति शेषः । सदसद्विलक्षण-मित्यर्थः । केन जायत इत्यत उक्तम् **कामहैतुकम्** । कामहेत्वविद्यापरिणामरूपम् ॥ ८ ॥

***अ०प्र०***— कथमाचारादिविषयामीश्वराज्ञामतिवर्तेरन् ईश्वरानङ्गीकरणे च कुतो वा जगदुत्पत्तिः स्यादत आह **असत्यमिति** ।

ते[१], जगत् असत्यं इति आहुः[३], अप्रतिष्ठमाहुः[४], अनीश्वरं[५], आहुः[६], तर्हि कुतोऽस्य जगतः उत्पत्तिश्च वदन्तीत्याह अपरस्परसम्भूतं आहुः[७], अन्यत्किं[९], तर्हि किं कारणमित्यतः कामहैतुकं[१०] इति प्रवदन्तीति भावः ।

हे पार्थ !, ते = आसुरसर्गे उत्पन्नाः पूर्वोक्तदम्भादिसंयुक्ताः आसुरा जनाः[१], जगत् = अनादिमत् अत्र नियन्तेश्वरः अस्मिन् जगति पुण्य-पापरूपन्यायान्यायप्रद्योतकस्य वेदस्य प्रतिष्ठा वर्तते एव । मन आदि विश्वव्यवस्था वर्तते । ये तादृशं सत्यं जगत् तत् सर्वं जगत्[२], असत्य-मिति आहुः = सत्यं विष्णुः साधुगुणत्वात् सत् सत्त्वं यापयतीति वा सत्यं सत्पदार्थं यमयतीति वा । सृष्ट्यादिकर्तृत्वाद्विष्णुः सत्यं तन्न विद्यते यस्य तदसत्यम् । यद्वा, नास्ति सत्यं वेदपुरा-णादिप्रमाणं यस्मिन् तादृशमिति आहुः । विष्णुर्जगतो नोत्पत्त्यादि कर्तेति वेदादीनां प्रामाण्यमपि न मन्यन्त इत्यर्थः[३], अप्रतिष्ठमाहुः = धर्माधर्मयोः प्रतिष्ठापकत्वाद्विष्णुः प्रतिजीवं तिष्ठतीति वा । न विद्यते प्रतिष्ठा यस्येत्यप्रतिष्ठं जगतः प्रतिष्ठापको विष्णुर्न भवति । किन्तु तत्स्वाभाविकमेव जगद्वैचित्र्यमाहुरित्यर्थः[४], अनीश्वरं = न विद्यते ईश्वरो यस्येत्यनीश्वरं अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्य तादृशं जगत्[५], आहुः = जगतो नास्तीश्वर इत्यप्याहुरित्यर्थः[६], तर्हि कुतोऽस्य जगतः उत्पत्तिश्च वदन्तीत्याह अपरस्परसम्भूतं = अपरश्च परश्चेत्यपि परस्परं अन्योन्यतः स्त्रीपुरुष-मिथुनसम्भूतम् । यद्वा, अन्नाद्भवन्ति भूतानि इत्यादिना उक्तः परस्परसम्भवोऽस्य नास्तीत्यपरस्पर-सम्भूतं उत्पन्नमिति जगदाहुः[७], अन्यत्किं अत एवान्यत्कारणं किमस्ति न किमपीत्यर्थः[९], तर्हि किं

कारणमित्यतः 'कामहैतुकं' इति हेतुतः प्राप्तं हैतुकं स्त्रीपुंसभोगरूपकामैककारणकं अनेनेदं भूयादिति कर्मफलजन्यं वा । यद्वा, कामहेतुकमेव कामहैतुकं स्त्रीपुरुषयोः काम एव प्रवाहरूपेण हेतुरित्यर्थः" एतादृशं जगदिति आसुराः प्रवदन्तीति भावः ॥ ८ ॥

**भाष्यम्**

**जगतः सत्यं प्रतिष्ठा । ईश्वरश्च विष्णुः । तद् वैपरीत्येनाहुः । "तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यं, तेषामेष सत्यम्" इति हि श्रुतिः । "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च ...... स्थितं च यच्च सच्च त्यच्च" इति । "तस्योपनिषत् सत्यस्य सत्यमिति । एष ह्येवैतत् सादयति यामयति चेति" इति प्राचीनशालाश्रुतिः । परस्परसम्भवो ह्युक्तः 'अन्नाद् भवन्ति' इत्यादिना ॥ ८ ॥**

***प०टी०***— न केवलं जगदसत्यत्वादिवादिनोऽसत्यमित्यादिनोच्यन्ते । किन्त्वीश्वरस्यास्वातन्त्र्याद्यभ्युपगन्तारोऽपि इत्यभिप्रायेणाह **जगत इति** । जगतः सत्यं हरिरिति कोऽर्थः ? इत्यत आह **तस्येति** । ननु जगतः परस्परसम्भवे सत्येव तदभावोक्तिरयुक्ता । स एव कुतः ? इत्यत आह **परस्परेति** ॥ ८ ॥

***प्र०दी०***— न केवलं जगतो मिथ्यात्वादि वदतामसुरत्वं 'असत्यमप्रतिष्ठं ते' इत्यनेनोच्यते । किं तु जगज्जन्मादिकारणं विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेन आह **जगत इति** । **तद्वैपरीत्येनेति** । न विद्यते सत्यं अस्येत्यादि । 'जगतः सत्यं विष्णुः' इत्यत्र श्रुतिमाह **तस्येति** । **तस्य** विष्णोः'**सत्यस्य सत्यमिति उपनिषत्** रहस्यं नाम । कथम् ? **प्राणाः**, मूर्तामूर्तं, जगदिति यावत्, सत्यमित्युच्यते । **तेषां** प्राणानाम् **एषः** विष्णुः **सत्यं** इत्यर्थः ।

एवं चेज्जगतो मुख्यं सत्यत्वं न भवेत् । अन्यथा निर्धारणायोगादित्यतो मूर्तामूर्तात्मकस्य जगतः सत्यत्वं तावदन्यथा श्रुत्यैव व्याचष्टे **द्वे वावेति** । **रूपे** प्रतिमे । तत्र **मूर्तं** 'स्थितं' इति 'सत्' इति चोच्यते । **अमूर्तं** तु **यत्** इति **तत्** इति च उच्यत इत्यर्थः । तथा च **सच्च त्यच्च** सत्यमित्युक्तं भवति । इदानीं जगतः सत्यत्वं विष्णोः श्रुत्या व्याचष्टे **तस्येति** । सादयति विशरणादिकं प्रापयतीति **सत्** । **यामयति** नियच्छतीति **यत्** । सच्च तत् यच्च सत्यमित्यर्थः । **प्रतिष्ठा** ईश्वरश्चेति प्रसिद्धमेव ।

'अपरस्परसम्भूतम्' इत्यस्य 'अपरं परस्मात् सम्भूतम्' इति व्याख्यानमसत् । प्रतिषेधप्रकरणात् । अतः परस्परसम्भूतं न भवतीत्याहुरित्येवं व्याख्येयम् । स्यादेवं यदि परस्परसम्भवो

भगवतोऽभिमतः स्यात् इत्यत आह **परस्परेति** । यद्वाऽनेन परव्याख्यानासाधुत्वमुपपादयति । भगवता परस्परसम्भवस्योक्तत्वात् तद्वचनं कथमासुरमिति ? ईश्वराक्षेपे तात्पर्यमिति चेन्न । पुन-रुक्तिप्रसङ्गात् ॥ ८ ॥

*भा०दी०*— **न विद्यते सत्यमस्येत्यादीति** । अस्य जगतः सत्यं साधनरूपविशरणादि-प्रापकं नियामकं च न विद्यत इत्यस्य सत्यं न विद्यते प्रतिष्ठास्थितिहेतुरस्येति 'अप्रतिष्ठा' इत्यादि-रूपेण ध्येय इत्यर्थः । **विशरणादिकमिति** । 'षद्ऌ विशरणगत्यवसादनेषु' इति धातोरिति भावः । **प्रतिषेधेति** । 'असत्यम्' इत्यादिपदत्रये बहुव्रीहिप्रतिषेधस्य प्रक्रान्तत्वादित्यर्थः । **उक्त-त्वादिति** । 'तृतीये' इति योज्यम् । **पुनरुक्तीति** । 'अनीश्वरम्' इत्यनेनेति भावः ॥ ८ ॥

*भा०र०*— 'मिथ्यात्वादि' इत्यत्र आदिशब्देन अप्रतिष्ठत्वम् अनीश्वरत्वं च ग्राह्यम् । **न मन्यन्ते** 'जगज्जन्मादिकारणं न भवति' इति मन्यन्ते चेत्यपि ग्राह्यम् । 'न विद्यते सत्यम् = विशरणादिप्रापकम्, नियामकं चास्य जगतः' इति असत्यम्, 'न विद्यते प्रतिष्ठा = स्थितिहेतुरस्य' इत्यप्रतिष्ठम्, 'न विद्यते ईश्वरोऽस्य' इत्यनीश्वरम् इत्येवंरूपेणाहुरित्यन्वयः । 'उपनिषद्' इत्यनुवादः, 'रहस्यं नाम' इति व्याख्या । 'प्राणाः' इत्यनुवादः, 'मूर्तामूर्तम्' इति व्याख्या । प्रमाणे तथा वक्ष्यमाणत्वादियमुक्तिः । तद्विवक्षितार्थकथनम् **जगदितीति** । 'उच्यन्ते' इति बहुवचनम् 'प्राणाः' इत्येतदपेक्षया । **प्राणानां** मूर्तामूर्तात्मकजगत इति यावत् ।

अबाध्यत्वापरपर्यायमिह सत्यत्वमुक्तमिति मत्त्वा शङ्कते **एवं चेदिति** । भगवान् सत्यस्य सत्यं चेदित्यर्थः । **अन्यथा** सत्त्वेन अन्यत्वेन च मूर्तामूर्तात्मकत्वेनेति यावत् । **सच्च त्यच्च** मूर्तामूर्तं च । **जगतः सत्यत्वं** जगत् प्रति सत्यत्वम्, सत्यस्य सत्यत्वमित्यर्थः । 'विशरणादिकम्' इत्यत्र 'षद्ऌ = विशरणगत्यवसादनेषु' इत्युक्तगत्यादिः आदिपदार्थः । सदेरन्तर्णीतण्यर्थाद् 'अन्येभ्योऽपि दृश्यते' इति क्विपि 'सत्' इति रूपमिति भावः । **प्रसिद्धमेवेति** । 'सदायतनाः सत्प्रतिष्ठाः', 'ईश्वरः सर्वभूतानाम्' इत्यादौ प्रसिद्धमित्यतो नैतयोः प्रमाणोदाहरणमिति भावः । **प्रतिषेधेति** । 'असत्यम्-अप्रतिष्ठम्-अनीश्वरम्' इति नञा निषेधस्यैव प्रकृतत्वात् । 'अपरम् = पश्चात्कालीनं कार्यं परस्मात् = पूर्वकालीनात् कारणात् सम्भूतम्' इति व्याख्यानं प्रतिषेधप्रकरणाननुगुणमिति भावः । **तद्वचनं** भगवद्वचनम् । अपरं परस्मात् सम्भूतमिति वचनं वा। **ईश्वराक्षेप इति** । 'अपरं परस्मादेव सम्भूतम्, न तु ईश्वरात्' इति ईश्वरनिराकरण इत्यर्थः । **पुन-रुक्तिप्रसङ्गात्** 'अनीश्वरम्' इत्यनेन ॥ ८ ॥

गीता

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**

***वि०वि०***— एतां दृष्टिमाश्रित्य दुष्टचित्ताः अल्पज्ञानाः । घोरकर्मनिरताः । जगतः शत्रवः । क्षयायानिष्टप्राप्तये । कलियुगादौ प्रभवन्ति ॥ ९ ॥

***सा०सं०***— **एतां दृष्टिमा**श्रित्य । **नष्टात्मानः** दुष्टचित्ताः । **अल्पज्ञानाः** घोरकर्मनिरताः । **जगतः अहिताः** शत्रवः । **क्षयाय** अनिष्टप्राप्तये । कलियुगादौ **प्रभवन्ति** ॥ ९ ॥

***अ०प्र०***— ते असुराः नष्टात्मानः[1], अत एव अल्पबुद्धयः[2], एतां[3], दृष्टिं[4], अवष्टभ्य[5], उग्रकर्माणः सन्तः[6], अहिताः भूत्वा[7], जगतः[8], क्षयाय[9], प्रभवन्ति[10] ॥ यद्वा, जगतः अहिताः सन्तः उग्रकर्माणः भवन्ति ।

ते असुराः नष्टात्मानः = मलिनचित्ताः । यद्वा, नाशं गत आत्मा अन्तःकरणं युक्तायुक्तविवेको येषां ते तथा[1], अत एव अल्पबुद्धयः = दृष्टार्थमात्रमतयः । यद्वा, अमेध्योदकबुद्बुदात्मके देहे अहमिति अल्पबुद्धिर्येषां ते तथा[2], एतां = पाषण्डी, ईश्वरविषये नास्तिकीं दृष्टिं बुद्धिं[4], अवष्टभ्य = आश्रित्य तादृशशास्त्रं च कृत्वा[5], उग्रकर्माणः सन्तः = उग्रं हिंस्रं कर्म येषां ते तथा परोपद्रवकारिणः विरुद्धकर्माचरणाः सन्तः[6], अहिताः भूत्वा = स्वत एव वैरिणो भूत्वा[7], जगतः = विश्वस्य[8], क्षयाय = लोकानां नाशाय[9], प्रभवन्ति = उद्भवन्ति । यद्वा, जगतः विश्वस्य अहिताः सन्तः उग्रकर्माणः विरुद्धकर्माचरणाः भवन्ति ॥ ९ ॥

गीता

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥**

***वि०वि०***— किञ्च, काममाश्रित्य दम्भादियुक्ताः प्रवर्तन्ते । कामस्य प्रवर्तकत्त्वे हेतुः दुष्पूरमिति । कामस्य पूर्तौ सत्यां तत्र काम्ये प्रवृत्त्यभावः पूरयितुमशक्यत्वादेव । सर्वे प्रवर्तन्ते कथम्, मोहात् । मिथ्याज्ञानस्वाभाव्यात् । कुशास्त्राभ्यासजनिताद्विपर्ययाच्च । असद्ग्राहान् दुराग्रहान् गृहीत्वा । अशुचिव्रताः वेदबाह्याः कश्मलव्रताः क्षुद्रोदरभोगार्थं प्रवर्तन्ते ॥ १० ॥

*वा०ल०*— 'मोहाद्गृहीत्वा' इत्यत्र, 'असद्ग्राहान्' दुराग्रहान् ॥ १० ॥

*सा०सं०*— **दुष्पूरं** दुःखेन पूरणीयम् । **कामम्** इच्छाम् । **आश्रित्य** । दम्भमानमदैर्युक्ताः सन्तः । **मोहात्** मिथ्याज्ञानस्वभावात् । कुशास्त्राभ्यासजन्यविपरीतनिश्चयात् । **गृहीत्वा** आदाय । असदर्थान् ज्ञात्वेति वा । **अशुचिव्रताः** क्षुद्रभोगाय प्रवर्तन्ते ॥ १० ॥

*अ०प्र०*— अपि च **काममिति** ।

दम्भमानमदान्विताः अन्ये असुराः[१], दुष्पूरं[२], कामं[३], आश्रित्य[४], मोहात्[५], अशुचिव्रताः सन्तो[६], असद्ग्राहान् गृहीत्वा[७], प्रवर्तन्ते इत्यन्वयः ।

दम्भमानमदान्विताः = दम्भश्च मानश्च मदश्च तैः अन्विताः युक्ताः । यद्वा, दम्भश्च मानश्च दम्भमानौ ताभ्यां अन्विताः संयुक्ताः । तथा मदान्विताः आग्रहेण समन्विताः अन्ये असुराः[१], दुष्पूरं = पूरयितुमशक्यं दुर्भरं[२], कामं काम्यते अभिलाष्यते आभिरिति कामं[३], आश्रित्य शिश्नादीन्द्रिय-भोगार्थं कामं आश्रित्य[४], मोहात् = मिथ्याज्ञानजन्यमौढ्यस्वभावात् कुशास्त्राभ्यासजन्यविप-र्ययाद्वा[५], अशुचिव्रताः सन्तो = अशुचीनां मद्यमांसादीनां व्रतानि नियमाः येषां ते तथा वेद-विरुद्धमतवन्तः सन्तः[६], असद्गृहान् = पापनिश्चयान्[७], गृहीत्वा = मन्त्रेण एतां देवतां आराध्य महानिधिं साधयिष्यामः । यद्वा, कुशास्त्रोक्तमन्त्रव्रतादिभिरेव । तदुक्तम्—

'देवतामाराध्यैव ऐहिकामुष्मिकं साधयिष्याम' इत्यभिप्रायेण असदग्राहान् गृहीत्वा[८], प्रवर्तन्ते[९], क्षुद्रदेवताराधनादौ प्रवर्तन्ते इत्यर्थः ॥ १० ॥

**भाष्यम्**

**दुष्पूरो हि कामः । "पाताल इव दुष्पूरो मां हि क्लेशयते सदा" इति हि मोक्षधर्मे ॥ १० ॥**

*प०टी०*— विषयसम्पादनेन कामपूर्तेः कथमसौ दुष्पूरः ? इत्यत आह **दुष्पूरो हीति** ॥१०॥

*प्र०दी०*— 'काममाश्रित्य दुष्पूरम्' इति कामस्य दुष्पूरत्वं किं विशेषणम् ? नेति ब्रूमः । किं तर्हि ? कामस्य प्रवृत्तिहेतुत्वे हेतुरयमुच्यत इति भावेनाह **दुष्पूरो हीति** । विशेषणमेव किं न स्यात् ? कामस्य दुष्पूरत्वाव्यभिचारादिति भावेनाह **पाताल इवेति** ॥ १० ॥

*भा०दी०*— **अयमिति** । दुष्पूरत्वरूपो धर्मः कामस्य नानाविषयेषु प्रवर्तकत्वे बीजभूतोऽयमित्यर्थः ॥ १० ॥

*भा०र०*— 'दुष्पूरम् = अशक्यपूरणं कामम' इति यत् कामविशेषणत्वमुक्तं *शङ्करेण* तदाशङ्क्य परिहरति **किं विशेषणम् ? नेति ब्रूम इति** । *शङ्करपक्षं* दूषयितुं शङ्कते **विशेषणमेवेत्यादिना** । **अव्यभिचारादिति** । 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणम्' इति ह्यभियुक्ता इति भावः । प्रमाणे 'सदा दुष्पूरः सदा क्लेशयसे' इति सदाशब्दसम्बन्धः ॥ १० ॥

**गीता**

# चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
# कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

*वि०वि०*— अपि च मरणावधिकां परिमातुमशक्यां चिन्तामाश्रिताः केवलकामोपभोगनिरताः । एतावदैहिकमेव केवलं नान्यदामुष्मिकमिति निश्चयवन्तः ॥ ११ ॥

*सा०सं०*— किञ्च **प्रलयान्तां** मरणान्ताम् । **अपरिमेयां** परिमातुमशक्याम् । **चिन्तामुपाश्रिताः कामोपभोगपरमाः** काम्यमानवत् स्वानुभव एव परमो येषां ते । विषयभोगैकरताः । **एतावत्** ऐहिकमेव फलं नान्यदामुष्मिकमस्तीति निश्चयवन्तः ॥ ११ ॥

*अ०प्र०*— सा तावद् दुष्पूरो मां हि क्लेशयते सदेति । किञ्चान्ये **चिन्तामिति** ।

प्रलयान्तां[१], अपरिमेयां च[२], चिन्तां[३], उपाश्रिताः केचिदसुराः[४], कामोपभोगपरमाः सन्तः[५], एतावदिति निश्चिताः[६], पतन्ति नरके शुचौ इति पञ्चमेनान्वयः ॥

प्रलयान्तां = प्रलयो मरणं अन्तोऽवसानं यस्याः सा तां स्वस्य जीवितानां[१], अपरिमेयां च = विषयबाहुल्येन परिमातुमशक्यां परिमाणरहितां[२], चिन्तां[३], उपाश्रिताः = प्रवर्धयन्ति नित्यं चिन्तापरा इत्यर्थः[४], असारविषयादिकं चिन्तयन् धृताहुतिनाग्निरिव चिन्तां प्रवर्धयन्तीत्यभिप्रायः[४], किञ्च अत एव कामोपभोगपरमाः = सन्तः कामस्य उपभोगाः कामोपभोगाः कामोपभोगा एव स्याद्या एव परमाः पुरुषार्थाः येषां ते तथा कामोपभोग एव उद्देश्यः[५], एतावदिति निश्चिताः = कामोपभोग एव परमः पुरुषार्थो नान्यदस्तीति कृतनिश्चयाः[६], एतैर्गुणैः युक्ताऽसुराः अशुचौ नरके पतन्तीति पञ्चमेनान्वयः । तथा च बार्हस्पत्यसूत्रं 'काम एवैकः पुरुषार्थेति चैतन्यविशिष्टः कामपुरुष' इति वचनात् ॥ ११ ॥

**गीता**

## आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
## ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥

*वि०वि०*— आशा एव पाशास्तेषां शतैर्बद्धाः । कामक्रोधावेव परमयनं येषां ते तथोक्ताः। कामभोगार्थं धर्मादिरभावनिश्चयान्मिथ्यात्वनिश्चयाच्च स्तेयदुष्प्रतिग्रहपरसेवादिनाऽन्यायेनार्थसंचयान् । ईहन्ते वाञ्छन्ति ॥ १२ ॥

*वा०ल०*— आशापाशादयस्तु परापरतत्त्वद्रोहमूलाः । सांसारिकदोषाश्च तेष्वेवाप्यधिका इति भावः ॥ १२ ॥

*सा०सं०*— आशा एव पाशास्तेषां शतैर्बद्धाः । कामक्रोधा एव परम् अयनं येषां ते **कामक्रोधपरायणाः** । **कामभोगार्थं** काम्यविषयानुभवार्थम् । **अन्यायेन** चौर्यादिना । **अर्थसञ्चयान्** द्रव्यसमूहान् । **ईहन्ते** वाञ्छन्ति ॥ १२ ॥

*अ०प्र०*— अत एव **आशापाशेति** ।

आशापाशशतैर्बद्धाः = आशा एव पाशाः तेषां शतानि तैर्बद्धाः इतस्ततः आकृष्यमाणाः । वाञ्छितं नाप्नुवन्त्यपि शुष्काशापरम्परां धारयित्वा तस्यामेव निमग्ना भवन्तीत्यभिप्रायः[१], कामक्रोधपरायणाः = कामक्रोधौ परायणं आश्रयो येषां ते तथा तदधीना इत्यर्थः । विस्तृतः कामः अपूर्णश्चेत् स एव क्रोधः तावेव परं अयनं येषां ते तथा वा[२], कामभोगार्थं = यद्यपि मनसि विषयवासना धृता तथापि विषयोपभोगो द्रव्येन भवति तस्मात्कामभोगाय विषयभोगार्थं[३], अन्यायेन = शास्त्रविरुद्धदुष्प्रतिग्रहचौर्यादिवृत्त्या[४], अर्थसञ्चयान् = द्रव्यसमूहान् सम्भारान् वा[५], ईहन्ते = इच्छन्ति प्रयतन्ते वा । सम्पादयन्तीत्यर्थः । अदृष्टादेरभावात् सर्वस्य मिथ्यात्वाच्चेति 'भस्मीकृतस्य देहस्य पुनरागमनं कुतः' इत्यादि लौकिकमाभाणकमनुसरन्तो ते 'पतन्ति नरकेऽशुचौ' इति चतुर्थेनान्वयः ॥ १२ ॥

**गीता**

## इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
## इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

*वि०वि०*— चिन्ताप्रकारं दर्शयंस्तेषां फलमाह **इदमद्येत्यादिना** ॥ १३ ॥

*सा०सं०*— चिन्ताप्रकारं दर्शयति **इदमित्यादिना** त्रयेण । **इदं** धनम् । **अद्य मया लब्धम्** । **इमं मनोरथं प्राप्स्ये** । प्राप्स्यामि । **इदं** धनम् **अस्ति** । **इदमपि धनं मे पुनर्भविष्यति** ॥ १३ ॥

*अ०प्र०*— तेषां मनोराज्यं कथयन् नरकप्राप्तिमाह **इदमद्येति** चतुर्भिः ।

अन्वयः— मया[१], अद्य[२], इदं[३], लब्धं[४], पुन इमं[५], मनोरथं[६], प्राप्स्ये[७], इदं[८], अस्ति[९], इदमपि[१०] मे[११], पुनर्धनं[१२], भविष्यतीत्यन्वयः । इति मन्यमाना असुरा नरके पतन्तीति तृतीयेनान्वयः ।

मया[१], अद्य = इदानीं[२], इदं = पुरोवर्ति धनं[३], लब्धं = प्राप्तं हस्तगतं कृतं[४], अतः धन्योऽहमिति एवं स्वयमेव श्लाघमानः सन्[५], पुन इमं = अन्यद्रव्यापहरणशीलं[६], मनोरथं = मनस्तुष्टिकरत्वेन मनोगतो विषयो मनोरथः तं मनोरथं[७], प्राप्स्ये = रथगताविति धातोः[८], इदं अस्ति = बुद्धिस्थञ्च धनादिकं यथेष्टमस्ति । यद्वा, इदं सम्पादितं धनं यदस्ति तदाधारेण[९], इदमपि = लोकानां उर्वरीतं धनमपि अन्ययत्नेन[१०] मे = मम[११], पुनर्धनं = पुनः प्राप्तं धनं बहुधनं यथा[१२], भविष्यति = तथा करिष्ये[१३], तेन चाहं धनीति विख्यातः । असौ बाह्य ईश्वरसमर्थः परमेश्वरो धनदो वा भविष्यामि । एवं विश्वस्य धनस्याहमेव स्वामी भूत्वा अन्यान् मित्रान् हनिष्ये इति मन्यत इति भावः ॥ १३ ॥

**गीता**

## असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
## ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥ १४ ॥

*वि०वि०*— ईश्वरः समर्थः परमेश्वरो वा । भोगी ऐहिकामुष्मिकभोगसम्पन्नः । सिद्धः कृतकृत्यः ॥ १४ ॥

*वा०ल०*— 'ईश्वरोऽहम्' इत्यत्र, 'ईश्वरः' जगदीश्वरः अहं मदभिन्नः । 'मत्तोऽन्यो' जगदीश्वरो नास्तीति वदन्ति । परतत्त्वविचारे अहं ब्रह्मेति वादिनः, अपरतत्त्वविचारे जगन्मिथ्यात्ववादिन असुरा इति फलितार्थः ॥ १४ ॥

*सा०सं०*— **असौ शत्रुर्मया हतः** । **अपरान्** अन्यानपि । **शत्रून् हनिष्ये च** । **अहमीश्वरः** परमेश्वरः । **भोगी** ऐहिकामुष्मिकभोगसम्पन्नः । **सिद्धः** कृतकृत्यः । **बलवान्** समर्थः ॥ ॥ १४ ॥

*अ०प्र०*— किञ्च, **असाविति** ।

अन्वयः— मया[१], असौ[२], शत्रुः[३], हतः[४], अपरानपि = उत्कृष्टानपि[५], हनिष्ये च[६], चकारेण स्वाश्रितान् विहाय हनिष्ये इति भावः[६], अहं = ईश्वरः समर्थः[७], अहं भोगी = विषयभोगोऽस्यास्तीति भोगी[८], अहं सिद्धः = आज्ञासिद्धोऽहम् । यद्वा, मन्त्रादिसिद्धिमान् कृतकृत्यो वा[९], बलवान् = बलिष्ठोऽहं[१०] सुखी = विषयसुखमस्यास्तीति सुखी अहं[११], एवं कामभोगेषु प्रसक्ता असुराः नरके पतन्ति इति द्वितीयेनान्वयः ॥ १५ ॥

**गीता**

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

*वि०वि०*— आढ्यो धनादिसम्पन्नः । **अभिजनवान्** कुलीनः । यागादिधर्माननुष्ठास्यामि । मया सदृशः कोऽन्योऽस्तीत्येवमज्ञानेन विमोहिताः ॥ १५ ॥

*सा०सं०*— **आढ्यः** धनादिसम्पन्नः । **अभिजनवान्** कुलीनोऽस्मि । **मया सदृशोऽन्यः कोऽस्ति** न कोऽपि । **यक्ष्ये** यागादिधर्माननुष्ठास्यामि । भूरिदक्षिणान्नादि **दास्यामि** । **मोदिष्ये** सन्तोषं प्राप्स्यामि । इति एवं रूपेण । अज्ञानेन विमोहिताः ॥ १५ ॥

*अ०प्र०*— अहं आढ्यः = **धनादिसम्पन्नः**[१], अभिजनवान् = अस्मिन् बहुबन्धुजनः प्रसिद्धकुलजातिगोत्रादिसम्बन्धेन ब्रह्मापि मत्तो **न्यून इव** दृश्यते । तस्मादहमेव पुत्रपौत्रमित्रादिसम्पन्नोऽस्मि[२], कः[३], अन्यः[४], मया[५], सदृशो = समः[६], अस्ति = नास्तीत्यर्थः । यक्ष्ये = परघातेन यागं करिष्ये । यद्वा, यागादिना अन्यो न भविष्यामि । यो लोलुपोऽभिचारः तं उद्धरामि[८], दास्यामि = ये मां गायन्ति स्तुवन्ति नाट्यादिभिर्रञ्जयन्ति तैर्यत्प्रार्थितं तत्तेभ्यो दास्ये[९], मोदिष्ये = उन्मत्तान्नपानैः प्रमदालिङ्गनादिभिः आनन्दवान् भविष्यामि । यद्वा, गीतादिभिरस्सन्तोषं प्रापयामि[१०] इति अज्ञानविमोहिता = इत्येवं अज्ञानं आसुरप्रकृतिः तया विमोहिताः विवेकाभावमापन्नाः मूर्खीभूता-

स्सन्तोऽसम्भाव्यानि चिन्तयन्तीति भावः[१२], एतद्गुणविशिष्टाऽसुराः नरके पतन्तीति उत्तरेणान्वयः ॥ ॥ १५ ॥

गीता

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

*वि०वि०*— अनेकविषयचित्तेन विभ्रान्ताः । पुत्रमित्रादिमोहजालेन समावृताः । विषयभोगेष्वतितरां सक्ताः । अशुचौ नरके पतन्ति ॥ १६ ॥

*सा०सं०*— एवं चिन्ताप्रकारमुक्त्वा तेषां फलमाह **अनेकेति** । अनेकचिन्तायुक्तमनसा विशेषभ्रान्तिमन्तः । पुत्रमित्रादिविषयमोहाख्यजालेन समावृताः । विशेषभोगेष्वतितरामासक्ताः सन्तः । **अशुचौ नरके** । **पतन्ति** ॥ १६ ॥

*अ०प्र०*— एवंभूता यत्प्राप्नुवन्ति तच्छृणु **अनेकेति** ।

अथान्वयः— अनेकचित्तविभ्रान्ताः = अनेकधा चित्तस्य विभ्रान्तिर्येषां ते तथा । ज्वरेणावृतो रोगी यथा जल्पति तथाऽनेकधा कामान् कल्पयन्ति । यद्वा, अनेकेषु मनोरथेषु प्रवृत्तिं चित्तं अनेकचित्तं तेन विभ्रान्ताः विक्षिप्ताः[२], मोहजालसमावृताः = पुत्रमित्रादिविषयकमोहजालेन सम्यगावृताः अहं ममेति मिथ्यामतिपूर्वकस्नेहसमूहे समाच्छन्नाः मनसि वेष्टिताः मत्स्या इव सूत्रमयेन जालेन यन्त्रिताः[३], कामभोगेषु = शब्दादिविषयभोगेषु[३], प्रसक्ताः = प्रकर्षेण सक्ताः अतिसक्ता वा[४], अविहितनिषिद्धभोगान् कुर्वन्ति ते आसुराः अशुचौ कश्मले दारुणे[५], नरके[६], पतन्ति[७], एवं निषिद्धाद्याचरणोचितपापात् वैतरिण्याद्यशुचिमलमये नरके पतिष्यन्ति ॥ यक्ष्ये इति च यस्तेषां मनोरथो उक्तः स केवलं दम्भाहङ्कारादिप्रधानः ॥ १६ ॥

गीता

**आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

*वि०वि०*— आत्मनैव सम्भाविताः आराधिताः । वयमाराध्या इति मन्यमानाः । स्वयमेव स्वात्मानमाराधयन्ति । ननु तेषामन्यः कश्चित् विद्वान् पूजकः । अत एव स्तब्धाः अनम्राः ।

धननिबन्धनगर्वदर्पोपेताः । विधानदक्षिणादिवर्जं दीक्षितशब्दव्यवहार्यत्वराजसन्मानादिसिद्ध्यर्थमेव यज्ञैर्यजन्ते ॥ १७ ॥

*सा०सं०*— यागादिकुर्वतां कथं नरके पात इत्यत आह **आत्मेति** । आत्मनैव स्वेनैव **सम्भाविताः** बहुमताः । वयं पूज्या इति मन्यमाना इति यावत् । अत एव **स्तब्धाः** अनम्राः । धननिमित्तगर्वदर्पाभ्याम् उपेताः । **ते अविधिपूर्वकम्** । **दम्भेन** स्वमहिमत्वप्रदर्शननिमित्तेन । **यज्ञैः** ज्योतिष्टोमादिभिः **यजन्ते नाम** । न कृतार्थबुद्ध्या । अतो नरकप्राप्तिस्तेषाम् इति भावः ॥ १७ ॥

*अ०प्र०*— एवं न् तु सात्त्विक इत्यभिप्रायेणाह **आत्मसम्भाविता** इति द्वाभ्याम् ।

अथान्वयः— पूर्वार्धविशेषणत्रययुक्तास्ते केचिदसुराः[१-३], दम्भेन[४], अविधिपूर्वकं = यथा तथा[५], नामयज्ञैः[६], यजन्ते[७] ।

आत्मसम्भाविताः = वयं महन्त इति आत्मना स्वेनैव स्वयं सम्भाविताः पूज्यतां नीताः सन्तोऽसाधारणगर्वेण विवर्धन्ते । तेन तु साधुभिः कैश्चित्पूज्यतां नीताः[१], अत एव स्तब्धाः = अनम्राः आत्मनोऽन्यं सर्वं तृणादपि नीचं मन्यन्ते[२], धनमानमदान्विताः = धनमानयोर्मदेन अन्विताः । यद्वा, धनेन यो मानश्च मदश्च ताभ्यां अन्विताः । यद्वा, धनेन जातौ मानमदौ गर्वदर्पौ ताभ्यां अन्विताः सन्तः[३], ते = असुराः[३], दम्भेन = न तु श्रद्धया[४], अविधिपूर्वकं = यथा भवति तथा[५], कथं वेदोक्तमन्त्रतन्त्रोपकरणेत्यादिना श्रीकृष्णार्पणं विधिः । विधिपूर्वकं न भवतीत्यविधि-पूर्वकं यथा भवति तथा[५], नामयज्ञैः = नाममात्रेण ये यज्ञास्ते नामयज्ञाः । नाहं कर्ता हरिः कर्ता तत्प्रसादेन तत्प्रीत्यर्थं मुख्याङ्गदक्षणा ब्राह्मणसन्तर्पणाद्यङ्गवर्जा इत्यर्थः । एवं यज्ञैः[६], यद्वा, दीक्षिताः = सोमयाजी वाजपेयीत्यादि नाममात्रसिद्धये राजादिसन्मानसिद्ध्यर्थं ये यज्ञास्ते नामयज्ञास्तैः[६], यजन्ते ॥ १७ ॥

गीता

## अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
## मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः॥ १८ ॥

*वि०वि०*— अहङ्कारादिकमाश्रिताः आत्मपरदेहेषु च नियामकत्वेन स्थितं माम्, यदीश्वरः कारयिता इदानीमकुर्वाणं मामपि कारयतु, कुर्वाणं च निवारयतु इति प्रद्विषन्तः । अभ्यसूयकाः निर्दोषगुणपूर्णे मयि दोषानाविष्कुर्वन्तः ॥ १८ ॥

*वा०ल०*— 'मामात्मपरदेहेषु' इत्यत्र, आत्मदेहे प्रद्वेषो नाम मम ब्रह्मरूपत्वात् मया अनुभूयमानं दुःखादिकं हरेरेवेति स्वदोषाणां भगवत्यारोपणम् । परदेहेषु प्रद्वेषो नाम तेषां सर्वेषां ब्रह्मत्वाभिमानेन तत्तद्दोषाणां हरावारोपणम् ॥ १८ ॥

*सा०सं०*— सर्वकर्मकारयितारं सर्वान्तर्यामिणं त्वां कुतो न यजन्त इत्यत आह **अहङ्कारमिति** । अहङ्कारादि**संश्रिताः** सन्तः । आत्मदेहे परदेहेषु च नियामकतया स्थितं **मां प्रद्विषन्तः**। यदि ईश्वरः कारयिताऽस्ति तर्हीदानीमकुर्वाणं मां कारयतु, कुर्वाणं च विघातयतु इत्येवं भगवदपलापरूपप्रद्वेषं कुर्वन्तः । **अभ्यसूयकाः** निर्दोषे दोषान् वदन्तः । गुणपूर्णे गुणहीनतां वदन्तः । यजन्त इत्यनुषज्यते ॥ १८ ॥

*अ०प्र०*— अविधिपूर्वकत्वमेव प्रपञ्चयति **अहङ्कारमिति** ।

अन्वयः— अहङ्कारादिक्रोधान्तपञ्चदुर्गुणैः[१-५], संश्रितास्ते[६], असुराः याजिनः आत्मपरदेहेषु स्थितं[७], मां[८], अजानन्तः प्रद्विषन्तः[९], अभ्यसूयकाः[१०], यजन्ते = ते नरके पतन्तीति पूर्वेणान्वयः॥

अहङ्कारादिक्रोधान्ताः पञ्च सर्वाधमदोषरूपदुर्गुणा येषु संश्रितास्ते दम्भादियुक्तनामयज्ञयाजिनः[६], आत्मपरदेहेषु = आत्मनः स्वस्य देहे परेषां देहेषु च नियामकत्वेन स्थितं[७], मां = विष्णुं अजानन्तः सन्तः[८], प्रद्विषन्तः = प्रकर्षेण द्वेषं कुर्वन्तः । द्वेषप्रकारश्चेत्थम्— यदीश्वरः सर्वप्रेरकः सर्वं कारयति तर्हि नियमं कुर्वाणं मामपि कारयितुं कुर्वाणं वा मां निवारयतु । मां न कारयति तस्मान्न सर्वत्र कारयितेति । यद्वा, दम्भयज्ञेषु श्रद्धाया अभावात् आत्मनो वृथैव पीडा भवति तथाप्यश्वादीनामपि अविधिना हि सा यां जीवद्रोहमात्रमेवावशिष्यतेति प्रद्विषन्त इत्युक्तं[९], अभ्यसूयकाः = सन्मार्गवर्तिनां गुणेषु दोषारोपकाः । यद्वा, अभिचारक्रियाभिः ये वश्या न भवन्ति तान् द्वेषरूपकालकूटसंसिक्ततीक्ष्णदुर्वाक्यबाणैः सन्ताडयन्ति एव अभ्यसूयां कुर्वन्ति ॥ १८ ॥

**मामात्मपरदेहेष्विति** । "**न कस्यचिद् विष्णुः कारयिता, यदि स्यात् ममापि इदानीं कारयतु**" **इत्यादि** । "**ईश्वरो यदि सर्वस्य कारकः कारयीत माम् । अद्येति वादिनं ब्रूयात् सदाऽधो यास्यसीति तु**" **इति हि सामवेदे यास्कश्रुतिः** ॥ ॥ १८ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*

*श्रीभगवद्गीताभाष्ये षोडशोऽध्यायः ॥*

*प०टी०*— आत्मपरदेहेषु ईश्वरद्वेषो नाम कीदृशः ? इत्यत आह **मामिति** ॥ १८ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां षोडशोऽध्यायः ॥*

*प्र०दी०*— भगवद्द्वेषस्यात्मपरदेहाधिकरणत्वं कथमित्यत आह **मामिति** । कुतो न ? **कारयिता यदि स्यात्** तर्हि इदानीमकुर्वाणं **मामपि कारयतु** । कुर्वाणं च निवारयत्वित्यर्थः । **सदाऽधः** नित्यनरकम् ॥ १८ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षोडशोऽध्यायः ॥ १६ ॥*

*भा०दी०*— भाष्यमवतार्य शेषोक्त्या व्याचष्टे **कुत इति** । आदिपदार्थोक्तिः **कुर्वाणं चेति** ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां राघवेन्द्रयतिकृतायां भावदीपे षोडशोऽध्यायः ॥*

*भा०र०*— 'इदानीम्' इत्यस्य तात्पर्यम् **अकुर्वाणमिति** । आदिपदार्थः **कुर्वाणं चेति** । 'अधमां गतिम्' इति गीतानुसारेण 'सदाऽधः' इत्यस्यार्थमाह **नित्यनरकमिति** । तामिस्र-अन्धतामिस्ररूपमित्यर्थः ॥ १८ ॥

*गीताक्षरार्थस्तु*—

पूर्वाध्याये 'निर्मानमोहाः' इत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनम्, 'यततोऽप्यकृतात्मानः' इत्यादिना तद्विरोधि सङ्क्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम्, देवासुरलक्षणं च तथेति तदनेनाध्यायेन प्रपञ्च्यते । साधनमनुतिष्ठता तद्विरोधित्यागस्य अवश्यं करणीयत्वाद्, विरोधित्यागसमुचितस्यैव साधनस्य साध्यनिष्पत्त्यनुकूलस्य प्रतिपादकोऽयमध्यायः, एकमेव वाक्यं च । तत्र पुमर्थयोर्ज्ञानमोक्षयोः साधनं मुमुक्षुलक्षणं तावदुच्यते **भगवानुवाच– अभयमित्यादित्रिश्लोक्या** । **अभयं** भागवतधर्मज्ञानानुनिष्पादने भगवद्द्वेषिकृतोपप्लवाद् भयाभावः । स्वतोऽन्यस्माच्च भयाभावः 'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः' इत्युक्तेरित्यपि **आहुः** । **सत्त्वसंशुद्धिः** सत्त्वस्य = अन्तःकरणस्य रागादिदोषाभावः । **ज्ञानयोगव्यवस्थितिः** ज्ञानं = शास्त्रत आचार्यतश्च प्राप्तः तत्त्वावगमः, योगः = भगवति चित्तनिरोधः, तयोर्व्यवस्थानं = परिनिष्ठा, ज्ञानोपाये निष्ठेति वा ।

**दानं** न्यायार्जितवित्तादेः पात्रेषु यथोचितं संविभागः । **दमः** इन्द्रियनिग्रहः । **यज्ञः** देवतोद्देशेन द्रव्यपरित्यागरूपो यागः । **स्वाध्यायः** वेदशास्त्राध्ययनम् । **तपः** ब्रह्मचर्यादि । **आर्जवम्** सत्सु मनोवाक्कायवृत्तीनाम् अवैपरीत्यम् ॥ १ ॥

**अहिंसा** मनोवाक्कायैः सर्वभूतेषु सर्वदाऽपि क्लेशाजननम्, प्राणिनां पीडावर्जनं वा । **सत्यं** भूतहितयथार्थभाषणम्, अप्रियानृतवर्जितभाषणमिति एके । **अक्रोधः** प्रतिहतस्यापि चित्ते क्षोभानुत्पत्तिः । **त्यागः** कर्मफलाभिसन्धिवर्जनम्, औदार्यम् इति एके । **शान्तिः** शमो भगवन्निष्ठता । **अपैशुनं** पैशुनाभावः, पैशुनं च परोपद्रवोद्देश्यकं राजादेः परदोषश्रावणम् । भूतेषु प्राणिषु **कृपा** दया **अलोलुत्वम्** 'लुप = विमोहने' इत्यस्य हि इदं रूपम्, पकारलोप आर्षः । पुत्रकलत्रादिषु अभिषङ्गाभावः । इन्द्रियाणां विषयसन्निधावपि अविक्रिया इति एके । **मार्दवम्** मृदुता **अक्रौर्यं** **ह्रीः** निषिद्धाचरणे लज्जा **अचापलं** स्थैर्यम् ॥ २ ॥

**तेजः** प्रागल्भ्यम् । **क्षमा** क्रोधाभावेन सह अपकर्तुः अनपकृतिः । **धृतिः** देहेन्द्रियादिषु अवसादप्राप्तावपि तन्निरोधकोऽन्तःकरणवृत्तिविशेषः । **शौचम्** द्विविधम् = मृज्जलाभ्यां कायमलशोधनं बाह्यम्, भगवद्ध्यानादिना मनःकालुष्यापकर्षणम् आन्तरमिति । **अद्रोहो** जिघांसाभावः । **नातिमानिता** अत्यर्थं मानोऽतिमानः, सोऽस्यास्तीति अतिमानी, तस्य भावः तत्ता, नसमासः तदभावः = नातिमानिता । आत्मनः पूज्यतातिशयभावनाऽभावः । अहङ्कारराहित्यमिति तु विवृतिकृतः । एते च 'अभयं सत्त्वसंशुद्धिः' इत्यादिनोपदिष्टाः षड्विंशतिर्गुणाः **दैवीं सम्पदमभिजातस्य** प्रतिजातस्य **भवन्ति** । अभिरयं प्रत्यर्थे लक्षणे कर्मप्रवचनीयः । कर्मप्रवचनीययुक्ते च द्वितीयोपपद्यते । मुमुक्षुवर्गे जातस्य दैवीसम्पल्लक्षणम् इत्येते धर्मा मुमुक्षुणाऽवश्यमापादनीया इति भावः ॥ ३ ॥

मुमुक्षुणा त्यक्तव्यान्यासुरलक्षणान्युच्यन्ते । **दम्भो दर्पोऽभिमानश्चेत्यादिना** । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं **दम्भः** । **दर्पः** धनाभिजात्यादिमदात् समुपनतस्यापि भयकारणस्यादर्शनम् । अभिमानक्रोधौ व्याख्यातप्रायौ । **पारुष्यं** परुषत्वम् = निष्ठुरभाषणम् । **अज्ञानं** कर्तव्यताकर्तव्यविवेकाभावः । एवशब्दो जातस्यैवेति सम्बद्ध्यते । एते च धर्माः **आसुरीम्** असुरसम्बन्धिनीं **सम्पदं** योग्यताम् **अभिजातस्य** प्रतिजातस्यैव पुंसो भवन्ति । अमुमुक्षुवर्गजातस्यैव आसुरीसम्पल्लक्षणमिति दम्भादयो मुमुक्षुणा त्यक्तव्या इति भावः ॥ ४ ॥

दैवासुरसम्पदोः फलप्रदर्शनेन दैवसम्पत्फलयोग्यस्य अर्जुनादिसाधकवर्गस्य असुरस्वभावत्वाशङ्का निवार्यते **दैवीति** । **दैवी** देवसम्बन्धिनी **सम्पत्** 'अभयं सत्त्वसंशुद्धिः' इत्यादिरूपो धर्मः

**विमोक्षाय** तत्तद्योग्याय विविधमोक्षाय **मता** । **आसुरी तु निबन्धाय** नीचस्थाने अन्धतमसे बन्धाय तत्र अनिवर्त्यदुःखानुभवितुम् इति यावत्, **मता** । **दैवीं सम्पदमभिजातः** प्रतिजातोऽसीति **मा शुचः** शोकं मा कार्षीः । दैव्याः सम्पदः स्वाभाविकत्वेन कदाचिदप्यनपायात् मा भैषीरिति अर्जुनोपलक्षितसज्जने भगवतोऽनुक्रोशः ॥ ५ ॥

आसुरीं सम्पत् सर्वात्मना परित्यजनीयेति भावनाय उक्तानुवादपूर्वकं सैव प्रपञ्चयितुं प्रतिज्ञायते **द्वाविति** । अस्मिन् लोके **द्वौ** द्विप्रकारौ **भूतसर्गौ** भूतानां प्राणिनां सर्गौ निसर्गौ = स्वभावौ ता उच्येते **दैव आसुरश्चेति** । तत्र **दैवः सर्गः विस्तरशः** विस्तरप्रकारैः प्रोक्तः 'अभयं सत्त्वसंशुद्धिः' इत्यादिना परिभाषितः । **आसुरं सर्गं मे** मम सकाशाद् विस्तरशः **शृणु** अवधारय । अत्र सर्गाणां सुबहुविधत्वाद् 'द्वाविति कथमुच्यते ?' इति शङ्का 'सर्गाणां सुबहुत्वेऽपि शुभाशुभफलादिकौ । देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तरा' इति प्रमाणेन सर्गाणां सुबहुप्रकारत्वेऽपि 'द्वौ' इति वक्तुं शक्यते । शुभाशुभफलाधिक्यविवक्षायां गन्धर्वमनुष्याधमादयोऽपि तदुभयफलान्तर्वर्तमाना एवेति उत्तरप्रस्थाने परिहृता ॥ ६ ॥

एवं प्रतिज्ञाता आसुरी सम्पदेव परिवर्जनाय आ अध्यायपरिसमाप्तेः प्रपञ्चेनोच्यते **प्रवृत्तिं निवृत्तिं चेत्यादिना** । **आसुराः** असुरस्वभावाः **जनाः प्रवृत्तिं** यस्मिन् पुरुषार्थसाधने ज्ञानकर्मादौ कर्तव्या प्रवृत्तिः तां **निवृत्तिं** यस्माद् अनर्थहेतोः दम्भादेः निवर्तितव्यं सा निवृत्तिः, ताम्, चशब्दावितरेतरसमुच्चये । **न विदुः न** जानते । 'प्रवृत्तिं विहिते, निवृत्तिं निषिद्धे' इत्यध्याहरन्ति एके । प्रवृत्तिनिवृत्तिशब्दौ विधिनिषेधलक्षकौ । प्रवृत्तिनिवृत्तिधर्मार्थाविति अन्ये । नैतावदेव तेषु किन्तु **शौचं** बाह्याभ्यन्तरमलक्षालनम्, **आचारः** कर्माङ्गत्वेन शुद्धिप्रदो व्यापारः **सत्यं** यथार्थभाषणं च न विद्यते । प्रत्येकं नञोऽनुबन्धः सर्वथा परिवर्जनीयत्वे तात्पर्यद्योतनार्थः ॥ ७ ॥

किञ्च **ते** आसुरा जनाः **जगत् असत्यं** न सत्यं असत्यं, तत्, असत्यत्वाद् **अप्रतिष्ठं** ज्ञानबाध्यं तत एव **अनीश्वरं** अस्वामिकं आहुः । न च यतो जातं असौ ईश्वर इति वाच्यम् । यतः **अपरस्परसम्भूतं** एकस्मादेकस्य नोत्पत्तिरिति यावत् । न चैतावन्मात्रेण कथामसुरत्वमिति वाच्यम् 'अन्नाद् भवन्ति भूतानि' इत्यादावुक्तः परस्परसम्भवो हि मत्सिद्धान्तः, तद्विरुद्धत्वादित्याशयात् । सत्यं न चेत् किमसदेव ? परस्परसम्भूतं न चेत् किं नित्यम् ? स्वतो वा जातम् ? आद्यस्योत्तरम् **अन्यत्** 'सदसद्भ्याम्' इति शेषः । द्वितीयस्योत्तरम् **कामहैतुकम्** । 'कामः' इति तत्कारणम् अविद्या लक्ष्यते । कामहेतुकमेव कामहैतुकम्, अविद्या कल्पितम् इत्येकोऽर्थः । 'मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति । मिथ्यात्वान्नेश्वरोऽस्यास्ति' इति तात्पर्यनिर्णयमूलेन 'न केवलं

जगतो मिथ्यात्वादि वदतां आसुरत्वं 'असत्यमप्रतिष्ठं ते' इत्यनेनोच्यते, इत्यत्रत्यटीकया, तत्त्वोद्योतटीकया चावगम्यते । भाष्ये तु 'न विद्यते सत्यमस्य तद् असत्यम्, न विद्यते प्रतिष्ठापकोऽस्य तद् अप्रतिष्ठम्, न विद्यत ईश्वरोऽस्य तद् अनीश्वरम्' इति अपरार्थ उक्तः । तत्र टीकायाम् 'सादयति = शरणादिकं प्रापयतीति सत्, यामयति = नियच्छतीति यम्, सच्च तद् यं चेति सत्यम्' इति सत्यशब्दं विष्णौ व्युत्पाद्य, 'प्रतिष्ठेश्वरश्च प्रसिद्धमेव' इति प्रसिद्ध्यैव प्रतिष्ठेश्वरशब्दयोर्विष्ण्वर्थकत्वमुक्तम् ॥ ८ ॥

**एतां** 'जगदसत्यम्' इत्यादिनोक्तां **दृष्टिं** मिथ्याऽध्यवसायम् **अवष्टभ्य** आश्रित्य **नष्टात्मानः** दुष्टचित्ताः आगामिनिश्चितनाशस्वरूपा वा अल्पा = अल्पविषया, महति भगवति अल्पजीवाभेदावगाहिनी वा बुद्धिर्येषां ते तथोक्ताः, उग्रं = क्रूरं = मिथ्याशास्त्रनिर्माण-तदुपदेशादिरूपं कर्म = व्यापारो येषां ते **उग्रकर्माणः जगतोऽहिताः** शत्रवः कथम् ? **जगतः क्षयाय** नाशाय नरकप्राप्त्याद्यनिष्टाय **प्रभवन्ति** समर्था भवन्ति, कलियुगादावुद्भवन्ति वा ॥ ९ ॥

किञ्च **दुष्पूरं** पूरयितुमशक्यमिति कामस्य नानाविधविषयेषु प्रवर्तकत्वे 'दुष्पूरो हि कामः' इति हेत्वर्थसमर्पकं विशेषणम्, न तु व्यावर्तकविशेषणम् 'कामस्य दुष्पूरत्वाव्यभिचारात्' इति भाष्यटीकयोः स्फुटम् । **कामम्** आश्रित्य **दम्भमानमदान्विताः** परवञ्चनार्थं धर्माभासानुष्ठानप्रदर्शनरूपं धर्मध्वजित्वं = दम्भः, 'अहं कर्ता' इत्यहङ्कारः = मानः, धर्माभिजात्यादिनिबन्धन उत्सेकः = मदः, तैरन्विताः, **मोहात्** मिथ्याज्ञानस्वभावाद् असद्ग्रहादीन् अशुभाध्यवसायान् दुष्टपक्षान् वा गृहीत्वा **अशुचिव्रताः** अशुद्धक्षुद्रदेवताराधनादिनियमयुक्ताः **प्रवर्तन्ते** कामे दुष्पूरत्वाज्ञानेन नानाविधशुभक्षुद्रविषयभोगाय व्याप्रियन्ते ॥ १० ॥

किञ्च **अपरिमेयाम्** परिमातुम् = इयत्तया परिच्छेत्तुमशक्यम्, **प्रलयान्तां** मरणावसानां **चिन्ताम् उपाश्रिताः** मरणावधि दुर्विषयचिन्तापराः **कामोपभोगपरमाः** 'काम्यन्ते' इति कामाः = विषयाः शब्दाद्याः, तेषामुपभोग एव परमः = मुख्योऽर्थो येषां ते तथा, **एतावदिति निश्चिताः** एतत्परिमाणम् ऐहिकविषयसुखमेव श्रेयः, न आमुष्मिकमन्यच्छ्रेयं इति कृतनिश्चयाः, 'प्रवर्तन्ते' इति पूर्वेण 'अर्थसञ्चयान् ईहन्ते' इति परेणान्वयः ॥ ११ ॥

**आशापाशशतैरिति** । आशाः = अभिलाषाः, पाशा इव तेषां शतैः, बहुविषयावगाहिभिः अभिलाषैरिति यावत्, **बद्धाः** इतस्तत आकृष्यमाणाः कामक्रोधौ परमयनं येषां ते **कामक्रोधपरायणाः** कामभोगार्थं विषयानुभवप्रयोजनाय **अन्यायेन** परस्वापहारादिरूपेण **अर्थसञ्चयान्** द्रविणराशीन् **ईहन्ते** इच्छन्ति । अर्थसञ्चयान् ईहन्ते चेष्टन्ते व्याप्रियन्त इति अन्ये ॥ १२ ॥

**विमोक्षाय** तत्तद्योग्याय विविधमोक्षाय **मता** । **आसुरी तु निबन्धाय** नीचस्थाने अन्धतमसे बन्धाय तत्र अनिवर्त्यदुःखानुभवितुम् इति यावत्, **मता** । **दैवीं सम्पदमभिजातः** प्रतिजातोऽसीति **मा शुचः** शोकं मा कार्षीः । दैव्याः सम्पदः स्वाभाविकत्वेन कदाचिदप्यनपायात् मा भैषीरिति अर्जुनोपलक्षितसज्जने भगवतोऽनुक्रोशः ॥ ५ ॥

आसुरीं सम्पत् सर्वात्मना परित्यजनीयेति भावनाय उक्तानुवादपूर्वकं सैव प्रपञ्चयितुं प्रतिज्ञायते **द्वाविति** । अस्मिन् लोके **द्वौ** द्विप्रकारौ **भूतसर्गौ** भूतानां प्राणिनां सर्गौ निसर्गौ = स्वभावौ ता उच्येते **दैव आसुरश्चेति** । तत्र **दैवः सर्गः विस्तरशः** विस्तरप्रकारैः प्रोक्तः 'अभयं सत्त्वसंशुद्धिः' इत्यादिना परिभाषितः । **आसुरं सर्गं मे** मम सकाशाद् विस्तरशः **शृणु** अवधारय । अत्र सर्गाणां सुबहुविधत्वाद् 'द्वाविति कथमुच्यते ?' इति शङ्का 'सर्गाणां सुबहुत्वेऽपि शुभाशुभफलादिकौ । देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तरा' इति प्रमाणेन सर्गाणां सुबहुप्रकारत्वेऽपि 'द्वौ' इति वक्तुं शक्यते । शुभाशुभफलाधिक्यविवक्षायां गन्धर्वमनुष्याधमादयोऽपि तदुभयफलान्तर्वर्तमाना एवेति उत्तरप्रस्थाने परिहृता ॥ ६ ॥

एवं प्रतिज्ञाता आसुरी सम्पदेव परिवर्जनाय आ अध्यायपरिसमाप्तेः प्रपञ्चेनोच्यते **प्रवृत्तिं निवृत्तिं चेत्यादिना** । **आसुराः** असुरस्वभावाः **जनाः प्रवृत्तिं** यस्मिन् पुरुषार्थसाधने ज्ञानकर्मादौ कर्तव्या प्रवृत्तिः तां **निवृत्तिं** यस्माद् अनर्थहेतोः दम्भादेः निवर्तितव्यं सा निवृत्तिः, ताम्, चशब्दावितरेतरसमुच्चये । **न विदुः** न जानते । 'प्रवृत्तिं विहिते, निवृत्तिं निषिद्धे' इत्यध्याहरन्ति एके । प्रवृत्तिनिवृत्तिशब्दौ विधिनिषेधलक्षकौ । प्रवृत्तिनिवृत्तिधर्मार्थाविति अन्ये । नैतावदेव तेषु किन्तु **शौचं** बाह्याभ्यन्तरमलक्षालनम्, **आचारः** कर्माङ्गत्वेन शुद्धिप्रदो व्यापारः **सत्यं** यथार्थभाषणं च **न विद्यते** । प्रत्येकं नञोऽनुबन्धः सर्वथा परिवर्जनीयत्वे तात्पर्यद्योतनार्थः ॥ ७ ॥

किञ्च **ते** आसुरा जनाः **जगत् असत्यं** न सत्यं असत्यं, तत्, असत्यत्वाद् **अप्रतिष्ठं** ज्ञानबाध्यं तत एव **अनीश्वरं** अस्वामिकं आहुः । न च यतो जातं असौ ईश्वर इति वाच्यम् । यतः **अपरस्परसम्भूतं** एकस्मादेकस्य नोत्पत्तिरिति यावत् । न चैतावन्मात्रेण कथामसुरत्वमिति वाच्यम् 'अन्नाद् भवन्ति भूतानि' इत्यादावुक्तः परस्परसम्भवो हि मत्सिद्धान्तः, तद्विरुद्धत्वादित्याशयात् । सत्यं न चेत् किमसदेव ? परस्परसम्भूतं न चेत् किं नित्यम् ? स्वतो वा जातम् ? आद्यस्योत्तरम् **अन्यत्** 'सदसद्भ्याम्' इति शेषः । द्वितीयस्योत्तरम् **कामहैतुकम्** । 'कामः' इति तत्कारणम् अविद्या लक्ष्यते । कामहेतुकमेव कामहैतुकम्, अविद्या कल्पितम् इत्येकोऽर्थः । 'मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति । मिथ्यात्वान्नेश्वरोऽस्यास्ति' इति तात्पर्यनिर्णयमूलेन 'न केवलं

जगतो मिथ्यात्वादि वदतां आसुरत्वं 'असत्यमप्रतिष्ठं ते' इत्यनेनोच्यते, इत्यत्रत्यटीकया, तत्त्वोद्योतटीकया चावगम्यते । भाष्ये तु 'न विद्यते सत्यमस्य तद् असत्यम्, न विद्यते प्रतिष्ठापकोऽस्य तद् अप्रतिष्ठम्, न विद्यत ईश्वरोऽस्य तद् अनीश्वरम्' इति अपरार्थ उक्तः । तत्र टीकायाम् 'सादयति = शरणादिकं प्रापयतीति सत्, यामयति = नियच्छतीति यम्, सच्च तद् यं चेति सत्यम्' इति सत्यशब्दं विष्णौ व्युत्पाद्य, 'प्रतिष्ठेश्वरश्च प्रसिद्धमेव' इति प्रसिद्धचैव प्रतिष्ठेश्वरशब्दयोर्विष्ण्वर्थकत्वमुक्तम् ॥ ८ ॥

**एतां** 'जगदसत्यम्' इत्यादिनोक्तां **दृष्टिं** मिथ्याऽध्यवसायम् **अवष्टभ्य** आश्रित्य **नष्टात्मानः** दुष्टचित्ताः आगामिनिश्चितनाशस्वरूपा वा अल्पा = अल्पविषया, महति भगवति अल्पजीवाभेदावगाहिनी वा बुद्धिर्येषां ते तथोक्ताः, उग्रं = क्रूरं = मिथ्याशास्त्रनिर्माण-तदुपदेशादिरूपं कर्म = व्यापारो येषां ते **उग्रकर्माणः जगतोऽहिताः** शत्रवः कथम् ? **जगतः क्षयाय** नाशाय नरकप्रास्त्याद्यनिष्टाय **प्रभवन्ति** समर्था भवन्ति, कलियुगादावुद्भवन्ति वा ॥ ९ ॥

किञ्च **दुष्पूरं** पूरयितुमशक्यमिति कामस्य नानाविधविषयेषु प्रवर्तकत्वे 'दुष्पूरो हि कामः' इति हेत्वर्थसमर्पकं विशेषणम्, न तु व्यावर्तकविशेषणम् 'कामस्य दुष्पूरत्वाव्यभिचारात्' इति भाष्यटीकयोः स्फुटम् । **कामम्** आश्रित्य **दम्भमानमदान्विताः** परवञ्चनार्थं धर्माभासानुष्ठानप्रदर्शनरूपं धर्मध्वजित्वं = दम्भः, 'अहं कर्ता' इत्यहङ्कारः = मानः, धर्माभिजात्यादिनिबन्धन उत्सेकः = मदः, तैरन्विताः, **मोहात्** मिथ्याज्ञानस्वभावाद् असद्ग्रहादीन् अशुभाध्यवसायान् दुष्टपक्षान् वा गृहीत्वा **अशुचिव्रताः** अशुद्धक्षुद्रदेवताराधनादिनियमयुक्ताः **प्रवर्तन्ते** कामे दुष्पूरत्वाज्ञानेन नानाविधशुभक्षुद्रविषयभोगाय व्याप्रियन्ते ॥ १० ॥

किञ्च **अपरिमेयाम्** परिमातुम् = इयत्तया परिच्छेत्तुमशक्यम्, **प्रलयान्तां** मरणावसानां **चिन्ताम् उपाश्रिताः** मरणावधि दुर्विषयचिन्तापराः **कामोपभोगपरमाः** 'काम्यन्ते' इति कामाः = विषयाः शब्दाद्याः, तेषामुपभोग एव परमः = मुख्योऽर्थो येषां ते तथा, **एतावदिति निश्चिताः** एतत्परिमाणम् ऐहिकविषयसुखमेव श्रेयः, न आमुष्मिकमन्यच्छ्रेय इति कृतनिश्चयाः, 'प्रवर्तन्ते' इति पूर्वेण 'अर्थसञ्चयान् ईहन्ते' इति परेणान्वयः ॥ ११ ॥

**आशापाशशतैरिति** । आशाः = अभिलाषाः, पाशा इव तेषां शतैः, बहुविषयावगाहिभिः अभिलाषैरिति यावत्, **बद्धाः** इतस्तत आकृष्यमाणाः कामक्रोधौ परमयनं येषां ते **कामक्रोधपरायणाः** कामभोगार्थं विषयानुभवप्रयोजनाय **अन्यायेन** परस्वापहारादिरूपेण **अर्थसञ्चयान्** द्रविणराशीन् **ईहन्ते** इच्छन्ति । अर्थसञ्चयान् ईहन्ते चेष्टन्ते व्याप्रियन्त इति अन्ये ॥ १२ ॥

तेषां मनोराज्यं कथ्यते **इदमद्येत्यादिना** । **इदं** धनादि **अद्य** इयताकालेनेति यावत् **मया लब्धमिदम्** अन्यत् **मनोरथं** मनोगतं मनस्तुष्टिकरं वस्तु **प्राप्स्ये** प्राप्स्यामि 'इमं प्राप्स्ये मनोरथम्' इत्यपि पठन्ति । **इदं** च अद्य **अस्ति इदमपि मे भविष्यति** । आगामिसंवत्सरे **पुनर्धनम्** ॥१३॥

**असौ** परोक्षः शत्रुः मया हतः **अपरानपि शत्रून् हनिष्ये** । **ईश्वरोऽहं** ब्रह्माहमस्मि **भोगी** आतिश(ा)यनिक इनिः, सर्वातिशायी भोगशाली **सिद्धः** कृतकृत्यः न साधारणोऽहम्, किं **बलवान् सुखी चाहमेव** ॥ १४ ॥

**आढ्यः** सम्पन्नो धनेन **अभिजनवान्** परिजनवान् कुलीनो वा **मया** 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' इति तृतीया । **सदृशः** तुल्यः **अन्यः कोऽस्ति यक्ष्ये** यागं करिष्यामि, इतरदीक्षितेभ्यो महतीं प्रतिष्ठां प्राप्स्यामीति यावत् । **दास्यामि** स्थावकेभ्यः । ततो **मोदिष्ये** सन्तोषं प्राप्स्यामि । इत्येवमज्ञानेन विमोहिताः विविधं वैचित्र्यमापादिताः ॥ १५ ॥

एवं चिन्ताप्रकार उक्तः । अथ तत्फलमुच्यते **अनेकेति** । **अनेकचित्तविभ्रान्ताः** अनेकार्थविषयकचित्तवृत्तिभिः विविधं भ्रान्ताः अनवस्थिताः **मोहजालसमावृताः** मोहः = मिथ्याप्रत्ययः, पुत्रादिस्नेहो वा, स जालमिव तेन नियन्त्रिताः **कामभोगेषु** विषयानुभवेषु **प्रसक्ताः** प्रकर्षेण सक्तहृदयाः सन्तः तेनोपचितकल्मषाः **अशुचौ** नानाप्रकारैः मनसः क्लेशकरे **नरके** रौरववैतरण्याद्यौ **पतन्ति** ॥ १६ ॥

'यक्ष्ये' इति यस्तेषां मनोरथ उक्तस्तत्र यागादानादिकुर्वतां कथं नरकप्राप्तिरुच्यते ? इति शङ्कापराकरणाय स तेषां मनोरथः केवलं दम्भाहङ्कारादिदोषप्रधान एव, न तात्त्विक इति भावेनोच्यते **आत्मसम्भाविता इति** । **आत्मसम्भाविताः** 'स्वयं श्रोत्रियत्वादिसकलगुणसम्पन्नाः' इति आत्मनैव पूज्यतां नीताः, न तु साधुभिः, **स्तब्धाः** अप्रणतात्मानः **धनमानमदान्विताः** धननिमित्तो मानः = चित्तसमुन्नतिः, तन्निमित्तो मदश्च ताभ्यामन्विताः **दम्भेन** धर्मध्वजितया, न तु श्रद्धया **अविधिपूर्वकं** विहिताङ्गेतिकर्तव्यतारहितं यथा तथा **नामयज्ञैः** नाममात्रैः देवताप्रीत्यनुद्देश्यकैः यज्ञैः **यजन्ते** 'दीक्षितोऽयम्' 'सोमयाजी अयम्' इत्यादिनाममात्रनिर्वाहकप्रयोजनकाः ये यज्ञाः ते नामयज्ञाः तै यजन्त इत्यर्थ इति **अन्ये** । 'नाम' इति पृथक् पदमिति **अपरे** ॥ १७ ॥

अविधिपूर्वकत्वमेव विविच्यते **अहङ्कारमिति** । क्रियासु 'अहमेव कर्ता' इति मिथ्याऽध्यवसायः अहङ्कारः, तं **बलं** परधनवनिताद्यपहारसामर्थ्यं **दर्पं** धनाभिजात्यादिमदात् समुपनतस्यापि भयकारणस्य प्रदर्शनम्, **कामं क्रोधं च संश्रिताः** । **आत्मपरदेहेषु** च नियामकतया अन्तःस्थितं

**मां प्रद्विषन्तः** 'न कस्यचिद् मम परस्य वा विष्णुः कारयिताऽस्ति, यदि स्यात् कारयिता तर्हीदानीम् अकुर्वाणं मामपि कारयतु, कुर्वाणं च निवारयतु' इत्यादिकुतर्कैरपलपन्तः **अभ्यसूयकाः** मद्गुणेषु मद्भक्तगुणेषु वा दोषारोपकाः नामयज्ञैर्यजन्ते ॥ १८ ॥

**गीता**

## तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
## क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

***वि०वि०—*** यजन्ते तान् मद्द्वेषिणः संसारेषु तत्राप्यासुरीष्वेव योनिषु क्षिपामि ॥ १९ ॥

***सा०सं०—*** नरके पतन्तीत्येतावदेव न तेषां फलम्, किन्तु किञ्चित् कालं संसारमनुभूय पश्चान्नित्यनरकमपि मयैव प्राप्नुवन्तीत्याह **तानिति** द्वाभ्याम् । **तान्** 'प्रवृत्तिं च' इत्यादिनोक्तान् । **द्विषतः क्रूरान्** । अत एव **अशुभान् नराधमान् संसारेषु** । तत्रापि आसुरयोनिषु । **अजस्रं** पुनः पुनः । **क्षिपामि** स्थापयामि ॥ १९ ॥

***अ०प्र०—*** अहं[१], क्रूरान्[२], नराधमान्[३], अशुभान्[४], तान्[५], द्विषन्तः[६], संसारेष्वपि[७], आसुरीष्वेव[८], योनिषु[९], अजस्रे[१०] क्षिपामीत्यन्वयः ॥

अहं = कर्मानुरूपफलदाता श्रीकृष्णोऽहं[१], क्रूरान् = क्रूरकर्मकारिणः[२], अत एव नराधमान्[३], अशुभानासुरान्[४], तान् = सर्वप्रकारैः मद्वैरे प्रवृत्तान् प्रसिद्धान्[५], द्विषन्तः = मद्द्वेषं कुर्वन्तः[६], तदुक्तम्— "जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा । साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥ प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च । तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः ॥" इत्युक्तरीत्या द्विषन्तः[६], एतादृशान् संसारेष्वपि = जन्ममृत्युमार्गेषु तत्रापि । यद्वा, येषु मानुषदेहेषु समुत्पद्य जाताः अहितं कुर्वन्ति तेषां तां पदवीं हत्वा[७], आसुरीष्वेव योनिषु = आसुरसम्बन्धिषु क्रूरासु व्याघ्रसर्पवृश्चिकादिषु[८], योनिषु[९], एव = अजस्रं अनवरतं[१०] क्षिपामि = अहं तमो योनिवृत्तिं ददामि इत्यर्थः । प्रतिजन्मकृतपापकर्मणां तादृशमेव फलं ददामीत्यर्थः ॥ १९ ॥

**गीता**

## आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
## मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

***वि०वि०***— ततोमूढास्तामसस्वभावाज्जन्मनि जन्मनि आसुरीं योनिमेवापन्नाः मामप्राप्यैव मत्प्राप्तिशङ्काशून्याः । अधमां नित्यनिरयलक्षणां गतिं यान्ति । उक्तं च— "येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि । मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ॥ मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते । स्वस्मिन्नपि तथाऽन्यस्मिन्नियन्ताऽन्य इतीरिते ॥ प्रद्विषन्त्यसुरास्तेऽपि (तु) सर्वे यान्त्यधरं तमः ॥" इति । 'प्रवृत्तिं च' इत्यादिना योऽयमासुरस्वभाव उक्तः, स तेषु तेषु वादिषु यथास्वभावं योजनीयः । तदनुसारेणाऽनर्थतारतम्यं चावगन्तव्यम् । अत एव मध्येऽपि नरके पतन्तीत्युक्तम् ॥ २० ॥

***वा०ल०***— 'तानहं द्विषतः' इत्यत्र, संसारे अजस्रं क्षिपामि । 'क्षिपु निरसने' इति धातोः निरस्तज्ञानादिगुणान् करोमि । अजस्रं क्षिपामि, "आसुरीष्वेव योनिषु, मूढा जन्मनिजन्मनि" इत्युक्त्या आसुरस्वभावानां जीवानां संसारदशायां नियमेनाधमयोनिष्वेवोत्पत्तिः, मिथ्याज्ञानद्वेषादि-दोषाणां जन्मनि जन्मनि अभिवृद्धिरेव भवति, अतस्ते तमःसाधनेष्वेव निरताः, मोक्षसाधनप्रयत्न-स्त्वष्टमरसायित एव तेषामितिनियमप्रतिपादकपदत्रयेण सूचितम् । "मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" इत्यनेन मोक्षाभावे नियमः, तमःप्राप्तिनियमश्च निरूपित इति ज्ञेयम् । तस्मादुत्तमाधमभेदेन जीवद्वैविध्यस्य न कदाऽपि व्यत्यास इति भावः ॥ २० ॥

***सा०सं०***— ततो **मूढाः** तामसस्वभावाः । **जन्मनि जन्मनि** अनेकजन्मसु । **आसुरीं योनिमापन्नाः** । **मामप्राप्यैव** । **अधमां** नित्यनरकलक्षणां गतिं । **यान्ति** ॥ २० ॥

***अ०प्र०***— ते च **आसुरीमिति** ।

अथान्वयः— हे कौन्तेय ![१], आसुरीं[२], योनिं[३], आपन्नाः ते असुराः[४], जन्मनि[५], जन्मनि[६], मूढाः सन्तो[७], अत एव मां[८], अप्राप्यैव[९], ततः[१०] अधमां[११], गतिं[१२], यान्तीत्यन्वयः ॥

हे कौन्तेय ![१], आसुरीं योनिं = अधोगतिं[२,३], आपन्नाः = सन्तस्ते असुराः[४], जन्मजन्मनि[५,६], मूढाः सन्तो[७], अत एव मां[८], अप्राप्यैव = एवकारेण मत्प्राप्तिशङ्कापि कुतः ? तेषां मत्प्राप्त्युपायं सन्मार्गमप्राप्यैव[९], यद्वा, मां अप्राप्यैव = अनवाप्यैव इत्युक्ते को विशेषः ? तेषां दुष्कर्मातिशयेन तामसयोनिमापन्नत्वात् पुनः व्याघ्रादितामसयोनिमपि प्राप्नुवन्ति इत्यभिप्रायः[९], ततः अनन्तरं अधमां गतिं = अन्धतमसाख्यां गतिं[१२], प्राप्नुवन्ति, यद्वा, अधमां = कृमिकीटादियोनिं गतिं नित्यनिरयं च[१२], यान्ति = प्राप्नुवन्ति[१३], इति श्लोकार्थः ॥

अत्रेदं तत्त्वम्— 'प्रवृत्तिं च निवृत्तिं चे'त्यादिनोक्तेषु बहुष्वासुरलक्षणेषु मध्ये यथायोग्यं अक्षपाद-काणाद-साङ्ख्ययोग-चतुर्विधबौद्ध-चार्वाक-पाशुपतं सौर-शाक्त-मायावाद्यादि पुरुषाणां

कतिपयलक्षणानि सन्तीति ज्ञेयम् । तत्र बहुदोषवत्सु बह्वनर्थफलमल्पदोषवत्सु अल्पं अनर्थफलम् । तत्रैकैको दोषो महादुःखफलहेतुः । किमु समुदितमिव तदुक्तम्— "येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि । मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ॥ मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते । स्वस्मिन्नपि तथाऽन्यस्मिन्नियन्ताऽन्य इतीरिते ॥ प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः ॥" इति द्योतयितुं पतन्ति नरक इति मध्येऽपि फलमुक्तम् ॥ २० ॥

**गीता**

## त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
## कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

***वि०वि०***— उक्तेषु पुमर्थविरोधिषु प्रधानं दोषत्रयमवश्यं त्याज्यमित्याह **त्रिविधमिति** । कामक्रोधलोभा इतीदं त्रिविधं नरकद्वारम् । अत एव आत्मनो नाशनमनर्थप्रापकम् । तस्मादेतत् त्रयमवश्यं त्यजेत् । ततश्च कारणाभावान्न नरकप्राप्तिरिति भावः ॥ २१ ॥

***वा०ल०***— 'तमोद्वारैस्त्रिभिर्नरः' इति वक्ष्यमाणत्वात् कामो न यत्किञ्चित्काममात्रम्, किन्त्वच्युतोऽहं शिवोऽहमित्यादिभावनया जगन्मातृभूततत्पत्नीष्वेव कामः । 'क्रोधः' विष्णुवैष्णवद्वेषः । 'लोभः' निरवधिकभगवदानन्दज्ञानादिगुणेषु लोभः ॥ २१ ॥

***सा०सं०***— उक्तेषु पुमर्थविरोधिषु प्रधानदोषत्रयमवश्यं त्याज्यमित्याह **त्रिविधमिति** । **कामः क्रोध लोभ इति इदं त्रिविधं नरकद्वारं** नरकसाधनम् । अत एव **आत्मनो नाशनम्** अनर्थप्रापकम् । **तस्मादेतत् त्रयं त्यजेत्** । ततश्च कारणाभावान्नरकाणामप्राप्तिरिति भावः ॥२१॥

***अ०प्र०***— हे कौन्तेय !, कामः[२], क्रोधः[३], लोभश्च[४], इदं[५], त्रिविधं[१], नरकस्य द्वारं[६], तथा आत्मनः[८], यस्मान्नाशनं[९], तस्मात्[१०] एतत्त्रयं[११], त्यजेत् इत्यन्वयः ।

आसुरत्वलक्षणत्वेनोक्तानां दम्भादि अज्ञानान्तषण्णां मध्ये सकलदोषमूलभूतं दोषत्रयं कामादिकं अवश्यं त्याज्यं पुमर्थविरोधित्वात्सर्वथा वर्जनीयमित्याह **त्रिविधमिति** । हे कौन्तेय !, कामः, क्रोधः, लोभश्च इदं त्रिविधं नरकस्य द्वारं = नरकरूपगृहस्य द्वारं कारणं नरकगृहप्रवेशहेतुं[७], तथा आत्मनः = स्वस्य[८], यस्मात् = कारणात् नाशनं = विनाशकरं अनर्थप्रापकं वा । यद्वा, नीचयोनिप्रापकं वा[९], तस्मादेतत्त्रयं = सर्वात्मना त्यजेत् इत्यर्थः ॥ २१ ॥

गीता

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥**

***वि०वि०***— न केवलं कामादित्यागेन नरकावाप्त्यभावः । किं तर्हि ? इत्यत आह **एतैरिति** । तमसो नरकस्य द्वारैरुपायैरेतैः । त्रिभिः कामादिभिर्विमुक्तो नरः आत्मनः श्रेयः साधनमाचरति । ततः परां गतिं मोक्षं याति ॥ २२ ॥

***सा०सं०***— न केवलं कामादित्यागे नरकाप्राप्तिः परमपुमर्थप्राप्तिश्चास्तीत्याह **एतैरिति** । **तमोद्वारैः** नरकहेतुभिः । **त्रिभिरेतैः** कामक्रोधलो**भैर्विमुक्तो नरः** । **आत्मनः श्रेयः** साधनमाचरति । **आचरति** । **ततः परां गतिं** मोक्षम् । **याति** ॥ २२ ॥

***अ०प्र०***— पूर्वोक्तं कर्मादिः फलं विशदयन् यागस्य फलमाह **एतैरिति** ।

अथान्वयः— हे कौन्तेय ![१], तमोद्वारैः[२], एतैः[३], त्रिभिः[४], नरः[५], विमुक्तः सन्[६], आत्मनः[७], श्रेयः[८], आचरति[९], ततः[१०] परां[११], गतिं[१२], यातीत्यन्वयः ।

हे कौन्तेय ![१], तमोद्वारैः = तमसो नरकस्य द्वारभूतैः यद्वा, न केवलं नरकस्य । किन्तु, तमसोऽपि हेतुभिः । यद्वा, तमसो मार्गैः[२], एतैः = पूर्वोक्तैः[३], त्रिभिः = कामादि दृढशृङ्खलारूपदोषैः[४], विमुक्तो = नरः विशेषेण मुक्त एव नरः[५], सन्त्यक्तश्चेत्साधकः आत्मनः = स्वस्य[७], श्रेयः = साधनं श्रवणादि-योगादिसाधनं वा मोक्षमार्गसाधनं वा[८], आचरति = सुखेनानुतिष्ठति[९], ततः = श्रीविष्णुस्सर्वोत्तमः, जीवस्तदधीन इति ज्ञानं जायते तदनन्तरं[१०] परां = उत्कृष्टां[११], गतिं = मोक्षं[१२], याति = प्राप्नोति[१३] । अत्रायं विभागो विभाव्यः— निषिद्धेच्छात्रः, 'स द्विविधः', एको ब्रह्मैक्यं, देवस्त्रियादि विषयः, अपरः परस्परस्त्रियादि विषयः, जलात्मा क्रोधोऽपि द्विविधः— परब्रह्मादिविषयो, मनुष्यादि विषयश्चेति । त्यागेच्छाभावो लोभोऽपि द्विविधः— आत्मादिविषयो, धनस्त्रीविषयश्चेति । तत्राद्यानां कामादीनां तमःसाधनत्वं द्वितीयानां नरकसाधनत्वमिति । तदुक्तम्— "अयोग्येशत्वकामाच्च लोभाच्चात्मसमर्पणे । तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम् ॥ अक्षागमानुमानां च स्वोक्तेरपि विरोधिनः । यस्मात्ततोऽसुरा ज्ञेया एवमन्येऽपि तादृशाः ॥" इत्यादि प्रयतोऽहं ब्रह्मैव भवामि इति ईशत्वं कामः, चोदेवता, यादि कामं समुच्चिनोति । परमात्मनि स्वात्मसमर्पणं

विषयलोभात् लोभजन्यात्मसमर्पणाभावादित्यर्थः । तदेतेषु विष्णुवैष्णवस्वोत्तमेषु न त्वैक्योपासनेनापि फलं श्रूयते । तथा हि— अहं ब्रह्मास्मीति ह्यैक्योपासनं यतोऽहं ग्रहोपासनेन फलाधिक्यं श्रूयते । अहं ग्रहणोपासकस्य भ्रमादीन् (नरकाख्यान्) ह वा अश्नुतेनात्रशकेति श्रुतौ। तथा सत्कारेण विशेत्पुनः प्राणस्तत्र एवाहमहं सख्येन सोऽस्मि भृत्यश्चाहमिति भावेनैवाहं ग्रहोपासनं न तु निरुपचरिततमैक्यम् । तदुक्तम्— "भृत्यश्चाहं प्रतिबिम्बेन सोऽस्तीति एव ह्युपास्यः परमपुमान् सति तदीयोऽहमिति ज्ञानमहं ग्रह इतीरितः" इति च तद्वशत्वात्तु सोऽस्मीति भृत्यमेव न तु स्वतः सोऽस्मीत्येवं भृत्यैरुपास्य इत्यर्थः । प्रतिबिम्बेन सोऽस्मीत्यस्य प्रतिबिम्बोऽस्मीत्यर्थः। 'तदधीनत्वे सति तत्सदृशत्वं प्रतिबिम्बत्वं' यथायोग्यचिदानन्दस्वरूपत्वेन तत्सदृशः, तदधीनत्वेन तद्भृत्योऽहमिति ज्ञानमेवाहं ग्रहः । न स्वरूपैक्यं उभयोरहं ग्रहः । 'द्वासुपर्णे'त्यादि बहुभेदप्रमाणविरोधात् इति भावः । परस्त्रियादिविषयकामानां नरकफलत्वं ग्रन्थान्तरे द्रष्टव्यम् ॥ २२ ॥

*गीताक्षरार्थस्तु—*

एवमासुरस्वभावमापन्ना नरके पतन्तीति नरकानुभवः फलमुक्तः । नैतावदेव, किन्नाम कञ्चित्कालं मयैव प्रापितं संसारमनुभूय ततो नित्यनरकप्राप्तिरपीत्युच्यते **तानहमिति द्वाभ्याम्** । **तान्** उक्तासुरभावमापन्नान् अत एव **द्विषन्तः क्रूरान्** घोरान् अमङ्गलस्वभावान् **आसुरीष्वेव**, न कदापि साध्वीषु **योनिषु** संसारेषु जननमरणमार्गेषु **क्षिपामि** निरस्यामि परिवर्तयामि ॥ १९ ॥

ते च **आसुरीं योनिमापन्नाः** प्राप्तवन्तः **जन्मनि जन्मनि** सर्वेष्वपि जन्मसु **मूढाः** मिथ्याध्यवसायवन्तः सन्तः **मामप्राप्य** अनासाद्य **एव अधमां** नित्यनिरयलक्षणां **गतिं यान्ति** ॥२०॥

पुमर्थविरोधिषु दोषेषु सर्वथा परिवर्जनीयं दोषत्रयमुच्यते **त्रिविधमिति** । **कामक्रोधस्तथा लोभः** इतीदं **त्रिविधं नरकस्य** प्राप्तौ **द्वारमात्मनो नाशनं** महानर्थरूपनित्यनिरयप्रापकं च । एवं सति आत्मा नष्ट इव शून्यतां नीत इवेति आत्मनाशनत्वं दोषत्रयस्य । तस्माद् अनर्थहेतुत्वात् **त्रयं** कामादित्रिकं **त्यजेत्** ॥ २१ ॥

एतत्त्यागे किं स्यात् ? इत्यत उच्यते **एतैरिति** । **तमोद्वारैः** तमःप्रापकैः **एतैः** कामक्रोधरूपैः **त्रिभिः** दोषैः **विमुक्तो** विशेषेणास्पृष्टः, स च **आत्मनः श्रेयः** निःश्रेयसः साधनं श्रवणमननादिजन्यज्ञानरूपम् **आचरति** सम्पादयति । **ततः पराम्** अखिलक्लेशनिवृत्तिविशिष्टपरमानन्दानुभवरूपां **गतिं यान्ति च** ।

अत्रेदं वेदितव्यम्— 'अभयं सत्त्वसंशुद्धिः' इत्यादिना यानि देवलक्षणानि, यानि च 'दम्भो दर्पोऽभिमानश्च' इत्यादिना असुरलक्षणान्यभिहितानि, अभिहिते च प्रातिस्विके फले 'मा शुचः सम्पदं दैवीम्' इति, 'निबन्धायासुरी' इति, 'ततो यान्त्यधमां गतिम्' इति चापवर्गान्धितमसे, तत्र कानिचिद् देवलक्षणान्यसुरेषु, असुरलक्षणानि देवेषु च दृश्यन्त इति च तत्तत्फलं तत्र तत्र विनिमयेन स्यात् । तदयुक्तम् । दानवास्तु तमो........(?) इति, 'देवानां निरयो नास्ति तमश्चाकथञ्चन' इत्यादिवचनविरोधात् । किञ्च कामक्रोधलोभानाम् आत्मनाशापरपर्यायनित्यनिरयप्रापकत्वम् उच्यमानमयुक्तम् । देवेष्वपि कामादिदर्शनेन तेषामपि आत्मनाशाख्यफलापत्तेः, इति चेत्,

अत्रोच्यते— यत्तावदुक्तम् 'देवेष्वासुरलक्षणं दृश्यते' इति, सत्यं दृश्यत इति । किन्तु नासुरभावः तेषां देवत्वस्वभावनिवर्तकः । स्फटिकशौक्ल्यानिवर्तकलौहित्यवत् दुर्जनसङ्गादिना प्राप्तस्य तस्य औपाधिकत्वात्, औपाधिकस्य च तस्य सच्छास्त्रोपदेष्टृसज्जनसङ्गत्यादिशुभकारणेन दुष्टलक्षणस्य प्रहाणे देवत्वमेव युक्तम् । श्रूयते च शापादिना प्राप्तासुरभावादीनामपि प्रल्हादादीनां स्वतो देवानाम् औपाधिकसुखप्रहाणेन नैजो देवभावः, एवमेव असुरेष्वपि यत्किञ्चित् दयादि देवलक्षणं दृश्यते तस्यापि मनोगतस्य औपाधिकस्य सर्वथा प्रहाण एव नैजासुरत्वप्राप्त्या तमःप्रवेशः 'इतरस्याप्येवमसंश्लेशः पाते तु' इति भगवता सूत्रकारेणाभिहितः ।

यदपि 'किञ्च कामक्रोधलोभानाम्' इत्याद्युक्तम्, तत्र ब्रूमः— न यादृशतादृशकामादीनाम् आत्मनाशलक्षणतमःप्रापकत्वम्, किन्तु 'अयोग्येशत्वकामाच्च लोभाच्चात्मसमर्पणे । तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम्' इति शास्त्रावेदितदुष्टकामानामेव । तत्र 'ब्रह्मभावो ममास्तु' इति दुष्टेच्छा गीतोक्तकामशब्दार्थः । 'अनाद्यनन्तकालेषु मुक्तौ संसार एव च । मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु । इति सप्रीतिकं ज्ञानं विद्या आत्मसमर्पणम्' इति शास्त्रावेदितात्मसमर्पणे अकरणेच्छालोभशब्देन विवक्षितः(?) । 'स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ता भगवानस्ति' इति जानन्तः तत्त्ववेदिनः, तेषु कोपः क्रोधशब्दार्थतयाऽभिमत इति तेषामेवान्धतमसः प्रापकत्वम् । सज्जनेषु दृश्यमानकामक्रोधलोभानां तु औपाधिकानां नरकमात्रप्रापकत्वम् । तथाविधानां च तेषां निःशेषतया निवृत्तावेव भगवान् स्वात्मानं प्रदर्श्य तान् मोचयति, इत्ययमर्थः । 'निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हरेः', 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति', 'स बिम्बदर्शन एवैनं मोचयति' इत्यादि शास्त्रसिद्ध इति मा शुचः । 'सम्पदं दैवीम्', 'एतैर्विमुक्तस्ततो यान्ति परां गतिम्' इति च गीताचार्येणोपदिष्टमिति ॥ २२ ॥

गीता

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

***वि०वि०*—** श्रेयः साधनानुष्ठान अङ्गान्तरं विधातुं तदकरणे बाधकं तावदाह **य इति** । यः शास्त्रविधानमुत्सृज्य स्वेच्छामात्रेण यत्र कुत्रापि प्रवर्तते, सः तत् कर्मनिष्पत्त्यादिकं नाप्नोति ॥२३॥

***वा०ल०*—** कामकारतः स्वेच्छया करणेन ॥ २३ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे षोडशोऽध्यायः ॥ १६ ॥*

***सा०सं०*—** श्रेयः साधनानुष्ठाने अङ्गान्तरं विधातुं तदकरणे बाधकं तावदाह **य इति** । यः शास्त्रोक्तविधान**मुत्सृज्य** । **कामकारतः** स्वेच्छामात्रेण । यत्र क्वचित् **प्रवर्तते स सिद्धिं** पुमर्थोपायम् । **नावाप्नोति** । **सुखम्** ऐहिकम् । **परां गतिं** मोक्षं वा । **नाप्नोति** ॥ २३ ॥

***अ०प्र०*—** कामादित्यागश्च स्वधर्माचरणं विना न भवतीत्याह **य इति** ।

अथान्वयः— स्पष्टः ॥

हे कौन्तेय !, यः = आत्मरिपुः पुरुषः[२], शास्त्रविधिं = जगति यः समानसकृपः हिताहित-प्रदर्शने दीपः, स वेदः शास्त्रं तस्मिन् कामादिनिग्रहो विधिः । तं वेदविधिम् । यद्वा, वेदशास्त्र-विहितधर्मं वा[२], उत्सृज्य = परित्यज्य त्यक्त्वा वा । स्वविहितमविचार्य विषयवासनायाः इन्द्रिया-रूढः सन्[३], कामकारतः = कामाद्यनुसारान्यायाचरणेन यथेच्छम् । यद्वा, कामेन प्रचोदितः स्वैरेण विषयेषु[४], वर्तन्ते सञ्चरति[५], न स सिद्धिमवाप्नोति = सः सिद्धिं तत्त्वज्ञानं यद्वा, कामादिबन्धनान्मोक्षं निष्कामत्वं न अवाप्नोति[९], परां गतिं न अवाप्नोति = परलोकसम्बन्धिनीं गतिं प्राप्तिं न अवाप्नोति[१२], कुतस्तस्य परां गतिमिति भावः[१२], न सुखं = दुःखस्य बाहुल्यात् आमुष्मिकं सुखं उपशमनं च न अवाप्नोति[१४], इह लोकेऽपि विषयभोगसुखं न प्राप्नोतीति भावः ॥ २३ ॥

गीता

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ॥*

***वि०वि०—*** कुतः शास्त्रविधानातिक्रमे कर्मसिद्ध्याद्यभाव इत्याशङ्कां परिहरन् अङ्गान्तरं विधत्ते **तस्मादिति** । यस्मादिदं कार्यमिदमकार्यमिति व्यवस्थायां ते विवेकिनः । शास्त्रं प्रमाणम् । तदतिक्रमे च दोषः । तस्मादिह लोके । शास्त्रविधानोक्तं कर्म कर्तुमर्हसीत्यर्थः ॥ २४ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां षोडशोऽध्यायः ॥*

***सा०सं०—*** कुतः शास्त्रविध्यतिक्रमे संसिद्धिसुखाद्यभाव इति शङ्कां निरस्यन् अङ्गान्तरं विधत्ते **तस्मादिति** । यस्मादिदं कार्यमिदमकार्यमिति व्यवस्थायां ते तव विवेकिनः । **शास्त्रं प्रमाणम्** । तदतिक्रमे च दोषः । **तस्मादिह** लोके । **शास्त्रविधानोक्तं कर्म कर्तुमर्हसि** इति ॥ ॥ २४ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते षोडशोऽध्यायः ॥ १६ ॥*

***अ०प्र०—*** व्याख्यानं अध्यायान्तस्य श्लोकस्य फलितमाह **तस्मादिति** ।

अथान्वयः— हे कौन्तेय !, ते = तव[१], यतः = कारणात् कार्या-कार्यव्यवस्थितौ[२], शास्त्रं[३], प्रमाणं[४], तस्मात्[५], शास्त्रविधानोक्तं कर्म[६], ज्ञात्वा[७], इह[८], कर्म[९], कर्तुं[१०] अर्हसीत्यन्वयः ॥

यस्मादात्मरिपुः कामकारतो दुर्गतिं प्राप्तः तस्मात् हे कौन्तेय !, हे आत्मबन्धो ! ते = तव[१], कार्याकार्यव्यवस्थितौ = इदं कार्यं इदमकार्यं इत्यस्यां व्यवस्थायां[२], शास्त्रं = श्रुतिस्मृतिपुराणादिकमेव[३], प्रमाणं = प्रमापकं[४], तदुक्तं धर्माद्यनादाने दोषः तस्मात्[५], शास्त्रविधानोक्तं = शास्त्रस्य विधानं विधिः तेन उक्तं तत्तथा उक्तं कर्म[६], ज्ञात्वा = बुद्ध्वा[७], इह = इदानीं कर्माधिकारे वर्तमानः त्वं[८], कर्म[९], कर्तुं[१०], अर्हसि[११], कर्ममूलत्वाद् ज्ञानादेः पुमर्थस्येति भावः । तन्मूलत्वात् सत्त्वशुद्धिसम्यक्ज्ञानमुक्तीनामित्यर्थः ॥ २४ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां षोडशोऽध्यायः ॥*

*शिष्टगीताक्षरार्थस्तु*—

सर्वस्यैतस्यासुरसम्पत्परिवर्जनस्य श्रेष्ठाचरणस्य च शास्त्रं कारणम् । शास्त्रप्रमाणाद्धि उभयं शक्यं कर्तुम्, नान्यथेत्युच्यते **यः शास्त्रविधिमित्यादिना** । **यः** पुमान् **शास्त्रविधिं** कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यं शास्त्रविधानम् **उत्सृज्य** अपरिज्ञाय **कामकारतः** स्वेच्छामात्रेण **वर्तते** प्रवर्तते । **स न सिद्धिं** ज्ञानम् **अवाप्नोति, न सुखम्** ऐहिकामुष्मिकं वा स्वर्गादिकं अवाप्नोति । **परां गतिं** मोक्षं न अवाप्नोतीति किमु ? ॥ २३ ॥

**तस्मादिति** । यस्माच्छास्त्रविहितधर्मानुष्ठाने ज्ञानादिश्रेयःप्राप्तिः तदतिक्रमे नैहिकपारत्रिकसुखप्राप्तिः, **तस्माद्** 'इदं कार्यम्', 'इदमकार्यम्' इत्यस्यां व्यवस्थितौ = व्यवस्थायां **शास्त्रं** श्रुति-स्मृति-इतिहास-पुराणादिरूपं **ते** तव **प्रमाणं** प्रमितिजनम्, अतः **शास्त्रविधानोक्तं** शास्त्रस्य विधानं = 'कुर्यात्', 'न कुर्यात्' इत्येवं रूपं नियोजनं तेनोक्तं प्रमापितं ज्ञात्वा **इह** कर्माधिकारवर्गे स्थितः त्वं **कर्म** भगवत्प्रास्त्युद्देश्यकं स्वयं कर्तृत्वाध्यवसायहीनं **कर्तुमर्हसि** । तन्मूलत्वात् सत्त्वशुद्धि-तत्त्वज्ञान-भक्ति-मुक्तीनामिति ॥ २४ ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां षोडशोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

## देवासुरलक्षणम् ।

***प्रका०***— अस्मिन्नध्याये देवासुरलक्षणं निरूप्यते ।

***न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति देवेति । अभयादिदेवतालक्षणानां मोक्षहेतुत्वात् तदापादनाय दम्भाद्यसुरलक्षणानां तद्विरोधित्वात् तत्परित्यागाय तदुभयमस्मिन्नध्याये निरूप्यत इति भावः ।**

*भा०दी०*— **तदुभयमस्मिन्नध्याये निरूप्यत इति** । एतेन पूर्वाध्याये "निर्मानमोहा" इत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनस्य, "यतन्तोऽप्यकृतात्मान" इत्यादिना पुमर्थविरोधिनश्च सङ्क्षेपेणोक्तस्य देवासुरलक्षणरूपस्यात्र विस्तरणात् पूर्वानन्तर्यमस्य सूचितं भवति ॥

**गीतातात्पर्यनिर्णयः**

**"येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि ।**
**मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ॥**
**मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते ।**
**स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ताऽन्य इतीरिते ॥**
**प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः ।**
**अयोग्येशत्वकामाच्च लोभाच्चात्मसमर्पणे ।**
**तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम् ॥**

*प्रका०*— तत्र तावदसुरलक्षणं निरूपयति **येऽतिमानेनेत्यादिना** । अनेन ईश्वरोऽहं इत्यादिना "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतं", "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभ" इत्येतदन्तं वचनं विवृतं भवन्ति ।

***न्या०दी०*— तत्र "अभिमानश्च", "ईश्वरोऽहं", "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतम्", "मामात्मपरदेहेषु प्रद्विषन्तः", "ततो यान्त्यधमां गतिम्", "त्रिविधं नरकस्येदं" इत्यादिना चार्वाकाणामसुरत्वमुच्यत इति अन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे य इति ॥ परेभ्यो न च जायते । भ्रमजत्वादेव ।**

*भा०दी०*— **तत्रेति** । देवासुरलक्षणोक्तिपरेऽध्याये इत्यर्थः ॥ **तत्स्मृत्यैवेति** । उदाहृतवाक्यजातमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अक्षागमानुमानां च स्वोक्तेरपि विरोधिनः ।**
**यस्मात् ततोऽसुरा ज्ञेया एवमन्येऽपि तादृशाः ॥**

*प्रका०*— "मायावादिवत् प्रत्यक्षागमादिविरुद्धवक्तारः स्वोक्तविरुद्धवक्तारो येऽन्ये वादिनः तेप्यासुराः ज्ञातव्याः" इत्येतदुच्यते **एवमन्येऽपि तादृशा इत्यनेन** ॥

***न्या०दी०*— कुत एतेऽसुरा इत्यत आह अक्षेति ॥ सती पृथिवीत्यादिप्रत्यक्षस्य, विश्वं सत्यमित्याद्यागमस्य, प्रमाणदृष्टत्वाद्यनुमानस्य सर्वस्य मिथ्यात्वे सर्वमिथ्यात्वस्यापि मिथ्यात्वप्राप्त्या सर्वस्य त्वमिति स्वोक्तिविरोधः । न केवलं परमेश्वरोऽहमित्यादि मन्वाना असुराः, किन्तु येऽन्ये प्रत्यक्षादिविरुद्धवादिनस्ते सर्वेऽप्यसुरा इत्याह एवमिति** ॥

*भा०दी०*— अक्षादिविरोधं स्वोक्तिविरोधं च व्यनक्ति **सतीत्यादिना** । सती सद्रूपेत्यर्थः । सर्वमिथ्यात्वस्यापि मिथ्यात्वादिति । सर्वं मिथ्येत्युक्ते सर्वशब्देन वियदादिजगत इव तन्मिथ्यात्वस्यापि सर्वशब्दार्थमध्ये पतितत्वादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**ये तु विष्णुं परं ज्ञात्वा यजन्तेऽनन्यदेवताः ।**
**प्रत्यक्षाद्यविसंवादिज्ञानादेव विमुक्तिगाः ॥" इति ब्रह्मवैवर्ते ।**

*प्रका०*— **ये तु** इत्यादिना देवलक्षण इत्युच्यते ।

***न्या०दी०*— देवलक्षणमाह ये त्विति ॥ अनेन "ज्ञानयोगव्यवस्थितिर्दानं" इत्यादि व्याख्यातं भवति । कुत एवंविधानां देवत्वमित्यत आह प्रत्यक्षेति ॥ विमुक्तिगा इत्यनेनैव दैवीत्युक्तार्थं भवति ।**

*भा०दी०*— **दैवीतीति** । "दैवी सम्पद्विमोक्षाये"त्येतदित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**निबन्धाय** नीचस्थानेऽन्धे तमसि बन्धाय ।

"सर्गाणां सुबहुत्वेऽपि शुभाशुभफलाधिकौ ।
देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तराः ।
मुक्तिगा एव विज्ञेया देवा एव विमुक्तिगाः ॥ इति च ।

*प्रका०*— जगत्सत्यत्वाद्यङ्गीकारेण प्रत्यक्षाद्यविसंवादिज्ञाना देवा इत्युक्तम् । ''दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता । द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव चे''त्येतत् घटयति **निबन्धायेत्यादिना** ।

***न्या०दी०***— **ननु ''ततो यान्त्यधमां गतिम्'' इत्यासुरसम्पदोऽन्धतमसहेतुत्वस्य वक्ष्यमाणत्वात् कथं ''निबन्धायासुरी मता'' इति बन्धहेतुत्वमुच्यत इत्यत आह निबन्धाय नीचेति ॥ नात्र संसारहेतुत्वमुच्यते, किन्त्वतिनीचान्धतमससाधनत्वमेवेति भावः । ननु भूतसर्गाणामतिबहुप्रकारत्वात् ''द्वौ भूतसर्गौ'' इत्यादि कथमुच्यत इत्यत आह सर्गाणामिति ॥ सर्गाणां सुबहुत्वेऽपि द्वाविति वक्तुं शक्यते । शुभाशुभफलाधिक्यविवक्षयेति भावः । गन्धर्वमनुष्याधमादीनामपि शुभाशुभफलाधिकत्वात् को विशेषो देवादीनामित्यत आह गन्धर्वेति ॥ तदुभयफलान्तर्वर्तमाना एवेत्यर्थः । तद्विवृणोति मुक्तिगा इति ॥ एवं तमोगा एवेति च द्रष्टव्यम् । तर्हि देवादीनामपि मुक्त्यादिगत्वादेभ्यः को विशेष इत्यत आह देवा इति ॥ एवमसुरा एवातिदारुणतमोगा इति द्रष्टव्यम् ।**

*भा०दी०*— **अन्धतमोहेतुत्वमिति** । समासान्तविधेरनित्यत्वादेव समन्धेभ्य इति समासान्तो नाश्रितः । तेन अन्धतमस इति भाव्यमिति नाशङ्क्यम् ॥ **तदुभयफलान्तर्वर्तमाना इति** । तेषां तादृशशुभाशुभफले न स्त इत्यर्थः । यद्वा तदुभयफलत्वात् देवासुरग्रहणेनैव तेऽपि गृहीता इत्यर्थः ॥ **देवादीनामपीति** । देवासुराणामपि मुक्तितमोगत्वाद्देवेभ्योऽसुरेभ्यः को विशेषो देवानामित्यर्थः । यद्वा देवादीनां देवगन्धर्वप्रभृतीनां मुक्तिगत्वाद्देवेभ्यो गन्धर्वादिभ्यो देवानां को विशेष इत्यर्थः । तथा मनुष्याधमानामपि तमोगत्वाद्देवेभ्यः असुराणां को विशेष इति चार्थः ॥

**गीतातात्पर्यनिर्णयः**

**विमोक्षाय इत्यत्र वीत्युपसर्गादेव च मोक्षनानात्वं ज्ञायते ।**

**''देवासुरनरत्वाद्या जीवानां तु निसर्गतः ।**
**निसर्गो नान्यथैतेषां केनचित् क्वचिदेव वा ॥**

*प्रका०*— यदेतत् देवत्वासुरत्वादि तत्स्वरूपं निरूपयति **देवासुरेत्यादिना** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां षोडशोऽध्यायः ॥*

***न्या०दी०***— यदुक्तं द्वावित्युक्तिघटनाय मोक्षस्यानेकविधत्वात् देवानामेवाधिकमोक्षो नान्येषामिति तद्गीतायामपि ज्ञायत इत्याह **विमोक्षायेति** ॥ ननु देवत्वादेः कारणविशेषेण हानोपादानदर्शनात् द्वौ भूतसर्गाविति निसर्गत्वोक्तिः कथमित्यत आह **देवेति** ॥ निसर्गत्वादेव नान्यथा भवतीत्यर्थः ।

***भा०दी०***— **यदुक्तमिति** । विमुक्तिगा इति शब्देनेति भावः ॥ **निसर्गत्वोक्तिरिति** । स्वभावत्वोक्तिरित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

देवाः शापबलादेव प्रह्लादादित्वमागताः ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ॥

***न्या०दी०***— ननु प्रह्लादाद्यसुराणां देवत्वदर्शनात् कथमन्यथाभावाभाव इत्यत आह **देवा इति** ॥ प्रह्लादादीनां स्वतो देवानामेव कारणविशेषेणैवासुरत्वम् । अतस्तद्विहाय देवत्वं युक्तमिति भावः ।

***भा०दी०***— **अन्यथाभावाभाव इति** । अन्यथात्वाभाव इत्यर्थः । **तत** इत्यनुवादः **देवाना**मित्यादि व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ।
अतो नित्यश्च नाप्येष स्वभावविनिवर्तकः ॥

***न्या०दी०***— ननु तत्राप्यसुरत्वं नष्टमित्यस्त्येवेत्यत आह **हेतुत इति** ॥ औपाधिकत्वादसुरत्वस्य नाशो युक्त एव । न तेन स्वाभाविकासुरत्वानाशमतस्य विरोध इति भावः । माऽस्त्वसुराणां देवत्वं, देवानां तु देवत्वपरित्यागेनासुरत्वं प्राप्तमित्यत आह **नापीति** ॥ नासुरभावः प्रह्लादादीनां देवत्वस्वभावनिवर्तकः । औपाधिकत्वात् । स्फटिकशौक्ल्यानिवर्तकलौहित्यवदिति भावः ।

*प्रका०*— जगत्सत्यत्वाद्यङ्गीकारेण प्रत्यक्षाद्यविसंवादिज्ञाना देवा इत्युक्तम् । "दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता । द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च"त्येतत् घटयति **निबन्धायेत्यादिना** ।

***न्या०दी०*— ननु "ततो यान्त्यधमां गतिम्" इत्यासुरसम्पदोऽन्धतमसहेतुत्वस्य वक्ष्यमाणत्वात् कथं "निबन्धायासुरी मता" इति बन्धहेतुत्वमुच्यत इत्यत आह निबन्धाय नीचेति ॥ नात्र संसारहेतुत्वमुच्यते, किन्त्वतिनीचान्धतमससाधनत्वमेवेति** भावः । **ननु भूतसर्गाणामतिबहुप्रकारत्वात् "द्वौ भूतसर्गौ" इत्यादि कथमुच्यत इत्यत** आह **सर्गाणामिति ॥ सर्गाणां सुबहुत्वेऽपि द्वाविति वक्तुं** शक्यते । शुभाशुभफलाधिक्यविवक्षयेति भावः । **गन्धर्वमनुष्याधमादीनामपि** शुभाशुभफलाधिकत्वात् **को विशेषो देवादीनामित्यत** आह **गन्धर्वेति ॥ तदुभयफलान्तर्वर्तमाना एवेत्यर्थः । तद्विवृणोति मुक्तिगा इति ॥ एवं तमोगा एवेति च द्रष्टव्यम् । तर्हि देवादीनामपि मुक्त्यादिगत्वादेभ्यः को** विशेष **इत्यत** आह **देवा इति ॥ एवमसुरा एवातिदारुणतमोगा इति द्रष्टव्यम्** ।

*भा०दी०*— **अन्धतमोहेतुत्वमिति** । समासान्तविधेरनित्यत्वादेव समन्धेभ्य इति समासान्तो नाश्रितः । तेन अन्धतमस इति भाव्यमिति नाशङ्क्यम् ॥ **तदुभयफलान्तर्वर्तमाना इति** । तेषां तादृशशुभाशुभफले न स्त इत्यर्थः । यद्वा तदुभयफलत्वात् देवासुरग्रहणेनैव तेऽपि गृहीता इत्यर्थः ॥ **देवादीनामपीति** । देवासुराणामपि मुक्तितमोगत्वाद्देवेभ्योऽसुरेभ्यः को विशेषो देवानामित्यर्थः । यद्वा देवादीनां देवगन्धर्वप्रभृतीनां मुक्तिगत्वाद्देवेभ्यो गन्धर्वादिभ्यो देवानां को विशेष इत्यर्थः । तथा मनुष्याधमानामपि तमोगत्वाद्देवेभ्यः असुराणां को विशेष इति चार्थः ॥

**गीतातात्पर्यनिर्णयः**

**विमोक्षाय इत्यत्र वीत्युपसर्गादेव च मोक्षनानात्वं ज्ञायते ।**

**"देवासुरनरत्वाद्या जीवानां तु निसर्गतः ।**
**निसर्गो नान्यथैतेषां केनचित् क्वचिदेव वा ॥**

*प्रका०*— यदेतत् देवत्वासुरत्वादि तत्स्वरूपं निरूपयति **देवासुरेत्यादिना** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां षोडशोऽध्यायः ॥*

***न्या०दी०***— यदुक्तं द्वावित्युक्तिघटनाय मोक्षस्यानेकविधत्वात् देवानामेवाधिक-मोक्षो नान्येषामिति तद्गीतायामपि ज्ञायत इत्याह **विमोक्षायेति** ॥ ननु देवत्वादेः कारण-विशेषेण हानोपादानदर्शनात् द्वौ भूतसर्गाविति निसर्गत्वोक्तिः कथमित्यत आह **देवेति** ॥ निसर्गत्वादेव नान्यथा भवतीत्यर्थः ।

***भा०दी०***— **यदुक्तमिति** । विमुक्तिगा इति शब्देनेति भावः ॥ **निसर्गत्वोक्तिरिति** । स्वभावत्वोक्तिरित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

देवाः शापबलादेव प्रह्लादादित्वमागताः ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ॥

***न्या०दी०***— ननु प्रह्लादाद्यसुराणां देवत्वदर्शनात् कथमन्यथाभावाभाव इत्यत आह **देवा इति** ॥ प्रह्लादादीनां स्वतो देवानामेव कारणविशेषेणैवासुरत्वम् । अतस्तद्विहाय देवत्वं युक्तमिति भावः ।

***भा०दी०***— **अन्यथाभावाभाव इति** । अन्यथात्वाभाव इत्यर्थः । तत इत्यनुवादः देवानामित्यादि व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ।
अतो नित्यश्च नाप्येष स्वभावविनिवर्तकः ॥

***न्या०दी०***— ननु तत्राप्यसुरत्वं नष्टमित्यस्त्येवेत्यत आह **हेतुत इति** ॥ औपाधि-कत्वादसुरत्वस्य नाशो युक्त एव । न तेन स्वाभाविकासुरत्वानाशमतस्य विरोध इति भावः । माऽस्त्वसुराणां देवत्वं, देवानां तु देवत्वपरित्यागेनासुरत्वं प्राप्तमित्यत आह **नापीति** ॥ नासुरभावः प्रह्लादादीनां देवत्वस्वभावनिवर्तकः । औपाधिकत्वात् । स्फटिक-शौक्ल्यानिवर्तकलौहित्यवदिति भावः ।

**गीतातात्पर्यनिर्णयः**

**किन्त्वाक्रम्यैव तं तिष्ठेद् देवसर्गस्ततो हि सः ।**
**अशोच्य एव विज्ञेयो मोक्षयोग्यो हरेः प्रियः ॥"**

**—इति च ॥ १-२४ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये षोडशोऽध्यायः ॥*

***न्या०दी०*—** तर्हि शापादिवैयर्थ्यमित्याशङ्क्य परिहरति **किन्त्विति** ॥ ततो देवानामसुरत्वाभावात् देवत्वस्यानपगमेऽपि कुतोऽशोच्यत्वमित्यत आह **मोक्षेति** ॥ तदुपपादयति **हरेरिति** ॥ अनेनैव मा शुच इत्यस्य तात्पर्यं चोक्तं भवति ॥ १-२४ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां षोडशोऽध्यायः समाप्तः ॥*

***भा०दी०*—** **तात्पर्यं चेति** । न केवलं कुतोऽशोच्यत्वमिति शङ्कानिरास इति चार्थः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते षोडशोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ सप्तदशोऽध्यायः

गीता

**अर्जुन उवाच—**

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

*वि०वि०*— हानोपादानार्थं गुणनिमित्तश्रद्धाभेदोऽत्र प्रपंच्यते । 'कार्याकार्यव्यवस्थितौ शास्त्रं प्रमाणम्' इत्युक्तम् । तत्र 'तपोविशेषैर्विविधैर्व्रतैः श्रुतिचोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥' इति शास्त्रोक्तविधिमज्ञात्वा श्रद्धामात्रेण यजतां सात्त्विकादिषु कीदृशी स्थितिरिति जिज्ञासुरर्जुन उवाच ये **शास्त्रविधिमिति** ॥ १ ॥

*वा०ल०*— 'सत्त्वमाहो रजस्तमः' इत्यत्र, आहो आहोस्वित् ॥ १ ॥

*सा०सं०*— चतुर्दशाध्याये 'नान्यं गुणेभ्यः कर्तारम्' (१४-१९) इत्यादिना सर्वोऽपि परिणामो गुणकृत इति सामान्यत उक्तस्यात्र सत्त्वादिगुणकृतानां श्रद्धानामाहारस्य तपःप्रभृतिकर्मणां च सदसद्रूपाणां भेदोक्त्या प्रपञ्चनं क्रियते । पूर्वत्र शास्त्रविधानोक्तं ज्ञात्वा कर्म कार्यम्, इत्युक्ते लब्धावसरो अर्जुनः शास्त्रविध्यज्ञानिनां का स्थितिरिति पृच्छति **य इति** । **ये** जनाः । **शास्त्रविधिमुत्सृज्य** अज्ञात्वा । **श्रद्धयाऽन्विताः** श्रद्धामात्रेण यजन्ते । **तेषां निष्ठा तु** स्थितिस्तु । **का** कीदृशी । तामेव विविच्याह **सत्त्वमित्यादिना** । किं सात्त्विकी राजसी तामसी वा स्थितिरित्यर्थः । ते किं सात्त्विका राजसास्तामसा वेति यावत् ॥ १ ॥

**अ०प्र०— अ०प्र०**— पूर्वाध्याये षोडशान्ते 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोती'त्यनेनोक्तं शास्त्रोक्तविधिमुत्सृज्य कामकारेण वर्तमानस्य ज्ञानेऽधिकारो नास्तीत्युक्तं तत्र शास्त्रविधिमुत्सृज्य कामकारं विना श्रद्धया वर्तमानस्य किमधिकारोऽस्ति नास्ति वेति बुभुत्सया अर्जुनः प्रश्नं करोति । यद्वा, श्रद्धादेः सर्वस्यापि नान्यं 'गुणेभ्यः कर्तारम्' इति गुणात्मकत्वेन त्रैविध्यं सूचितम् । तत्र सात्त्विकश्रद्धादीनां भेदोऽत्र सप्तदशे प्रपञ्च्यते **ये शास्त्रविधिमिति** ।

अथान्वयः— हे कृष्ण ![1], ये[2], शास्त्रविधिं[3], उत्सृज्य[4], श्रद्धयाऽन्विताः सन्तः[5], यजन्ते[6], तेषां[7], का[8], निष्ठा[9], तुशब्देन का स्थितिः कः आश्रयः[10], किं सत्त्वं[11], अहो रजः[12], अथवा किं तमः[13], कां निष्ठां संश्रिता इति प्रश्नः ॥

हे कृष्ण ! = परब्रह्मन् !, शास्त्रादन्यत्र प्राणिनां मोक्षो न विद्यत इति पूर्वाध्यायान्ते त्वयोक्तम् । एवं सति येषां देशकालौ शास्त्राभ्यासप्रवर्तयिताऽपि अभ्याससहायाः पदार्थाश्च न सम्भवन्ति । प्रथमं प्रज्ञा ऋजुतां नाऽऽयाति । एवं शास्त्रोक्तविधानमप्राप्तं तस्मात्[1], ये जनाः[2], शास्त्रविधिं = शास्त्रोक्तविधानं ज्ञातुं कठिणमिति ज्ञात्वा दुःखबुद्ध्या वा आलस्याद्वा । यद्वा, शास्त्रविधिं शास्त्रार्थं श्रीकृष्णं[3], उत्सृज्य = तद्विचारं विहाय शास्त्रोक्तकर्माचरणमकृत्वा अज्ञात्वा[4], श्रद्धयान्विताः सन्तः = लोकाचाराद्वा केवलं आचारप्रामाण्येन वा युक्ताः सन्तः । यद्वा, ये शास्त्राणि निर्धार्य पवित्रानुष्ठानं कुर्वन्ति तेषामाचरणानुरूपं कर्म कृत्वा तथा वयं भवाम इति श्रद्धा । सर्वशास्त्रनिपुणानामाचरणमेव प्रमाणं यस्यां तया तथा[5], यजन्ते शिवादिपूजनेन भूम्यादिमहादानेन अग्निहोत्रादियजनेन एवं देवादीन् यजन्ते श्रद्धया तर्पयन्तीत्यर्थः[6], तेषां का निष्ठा = देवाद्युद्देशेन यज्ञादिकर्मणि का निष्ठा[9], तुशब्देन योजनीयं का स्थितिः कः आश्रयः[10] तामेव विशेषेण पृच्छति अर्जुनः **सत्त्वमिति** । किं सत्त्वं सत्त्वमाश्रिता निष्ठा वा[11], अहो रजः उत रज आश्रिता निष्ठा वा[12], अथवा किं तमः = तम अश्रिता निष्ठा वा[13], कां निष्ठां संश्रिता इति प्रश्नः । अत्र च शास्त्रविधिमुत्सृज्य यजन्ते इत्यनेन शास्त्रार्थं बुद्ध्वा तमुल्लङ्घ्य वर्तमाना गृह्यन्ते तेषां श्रद्धया यजनानुपपत्तेः । आस्तिक्यबुद्धिर्हि श्रद्धा न चासौ शास्त्रज्ञानवतां शास्त्रविरुद्धेऽर्थे सम्भवति तानेवाधिकृत्य 'त्रिविधा भवति श्रद्धा', 'यजन्ते सात्त्विका देवान्' इत्याद्युत्तरानुत्पत्तेश्च । अतो नात्र शास्त्रातिलङ्घिनो गृह्यन्ते । अपि तु क्लेशबुद्ध्या वा आलस्याद्वा शास्त्रार्थज्ञाने प्रयत्नमकृत्वा केवलमाचारपरम्परावशेन श्रद्धया क्वचिद्देवताराधनादौ प्रवृत्तमाना गृह्यन्ते अतोऽयमर्थः । ये शास्त्रविधि-

मुत्सृज्य दुःखबुद्ध्या आलस्याद्वाऽनादृत्य केवलमाचारप्रामाण्येन श्रद्धयान्विताः सन्तो यजन्ते तेषां तु का निष्ठा ?, का स्थितिः ?, क आश्रयः ?, तामेव विशेषणं पृच्छति किं सत्त्वं ?, अहो किं वा रजः ? अथवा तम ? इति तेषां यादृशी देवपूजादिप्रवृत्तिः ?, किं सत्त्वतमांसि ?, रजः-संश्रिता वा तमःसंश्रिता वेत्यर्थः । श्रद्धाया = सात्त्विकत्वात् क्लेशबुद्ध्या आलस्यवशात् न च शास्त्रादनादरस्य च राजसतामससत्त्वात् त्रेधा सन्देहः । यदि सत्त्वभावसंश्रिताः तर्हि तेषामपि सात्त्विकत्वाद्यथोक्तश्रीविष्णुभक्तौ अधिकारः स्यात् । अन्यथा नेति प्रश्नतात्पर्यार्थः । यद्वारा अत्रो-त्सृज्येत्यत्र नाप्रामाण्यबुद्ध्या त्यागो विवक्षितः । तथात्वे त्यागिनां तामसत्वं स्यात् । तथा तेषामुत्तरग्रन्थे त्रैविध्यकथनं विरुध्येतेति । किन्तु ज्ञानमेव 'स्वाध्यायोऽध्येतव्यः', 'वेदः कृत्स्नेऽधि-गन्तव्यः सरहस्यो द्विजन्मने'ति श्रुतिस्मृतीत्युक्तविधिज्ञानस्य अज्ञानिभिरपीत्युक्तत्वात् विधिमुत्सृजे-त्युक्तम् । ज्ञानं न भेदकानां सात्त्विकादि त्रिविधानां अपि ज्ञानसत्त्वेन साधारणत्वात् । न चाज्ञानस्य भेदाः सन्ति येन तद्भेदेन नराः भिन्ना भवेयुः । अतः श्रद्धान्विता इति पुरुषविशेषणत्वेनोक्तम् ॥१॥

**भाष्यम्**

**गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन । शास्त्रविधिमुत्सृज्य अज्ञात्वा एव । "वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति विधिरुत्सृष्टो हि तैः ।**

***प०टी०***— एतदध्यायप्रतिपाद्यं दर्शयति **गुणेति** । गुणभेदज्ञानमन्तरेण साधनानुष्ठानसम्भवात् साधनमेवोक्तं भवति । 'ये शास्त्रविधिमुत्सृज्य' इत्यत्र हेयताबुद्ध्या 'विसर्ग' इत्यन्यथाप्रतीतिनिरा-सायाह **शास्त्रेति** । प्राप्तस्यैव त्याज्यत्वात् कथमज्ञाने 'विसर्ग'शब्दः ? इत्यत आह **वेद इति** । अध्ययनविधिः सर्वानपि प्राप्त एवेत्यर्थः ।

***प्र०दी०***— अध्यायार्थमाह **गुणेति** । गुणनिमित्ताः श्रद्धादीनां भेदाः । 'नान्यं गुणेभ्यः कर्तारम्' इत्युक्तत्वात् **प्रपञ्चयति** इत्युक्तम् । 'सात्त्विकानां पुमर्थसाधनत्वादनुष्ठेयत्वम्, अन्येषां तद्विरुद्धत्वाभावः, त्याज्यत्वं च ज्ञापयितुम्' इति शेषः । 'शास्त्रविधिमुत्सृज्य' इत्यस्य 'वेदविधान-मप्रामाण्यबुद्ध्या परित्यज्य' इत्यर्थप्रतीतिं निवारयितुमाह **शास्त्रेति** । अज्ञानमेवात्रोत्सर्गः, न तु अप्रामाण्यबुद्ध्या त्याग इत्यर्थः ॥ ननु प्राप्तपरित्याग उत्सर्गः । एवं च प्रतीतार्थ एव युक्तः । न तु 'अज्ञात्वा' इति । तत्राह **वेद इति** । अर्थज्ञानपर्यन्तोऽयं विधिः । अयं च सर्वान् द्विजन्मनः प्राप्तः, **तैः** अज्ञानिभिः **उत्सृष्टः** च । अतः **अज्ञात्वा** इति युक्तमित्यर्थः ।

*भा०दी०*— गुणैर्भेदाः श्रद्धाऽऽहारयज्ञतपःप्रभृतीनामिति विग्रहमुपेत्याह **गुणनिमित्ता इति**। **इत्युक्तत्वादिति**। 'परिणामः सर्वोऽपि गुणकृतः' इत्युक्तत्वात् चतुर्दश इत्यर्थः। प्रपञ्चनं किमर्थम्? इत्यत आह **सात्त्विकानामिति**। धर्माणामित्यर्थः।

*भा०र०*— **अध्यायार्थमिति**। सप्तदशाध्यायावान्तराभिधेयमित्यर्थः। ननु सप्तदशेऽध्याये श्रद्धा-आहार-यज्ञ-तपःप्रभृतीनामेव विभागस्य वक्ष्यमाणत्वावभासात् कथं 'गुणभेदान्' इति भाषणम्? इत्यतो भाष्यं व्याचष्टे **गुणनिमित्ता इति**। 'गुणैर्भेदः' इत्येव विग्रहः, तृतीया हेतौ, योग्यतया च श्रद्धादीनां सम्बन्ध इति, सत्त्व-रजः-तमोगुणभेदहेतुकः श्रद्धाऽऽहारादिभेद एतदध्यायप्रतिपाद्य इति भाष्यार्थ इति भावः। 'गुणभेदान्' इत्यत्र शाकपार्थिवादिवत् मध्यमपदलोपी समास इति भावेनैवमुक्तम् इत्यपि आहुः। **इत्युक्तत्वादिति**। 'परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यन्ति' इति चतुर्थाध्याय उक्तत्वात् श्रद्धादीनामपि गुणपरिमाणत्वाद् अपौनरुक्त्याय 'प्रपञ्चयति' इति भाषितमित्यर्थः। प्रपञ्चनप्रयोजनमाह **सात्त्विकानामिति**। श्रद्धाऽऽहारयज्ञादीनाम्। **अन्येषां** राजस-तामसश्रद्धादीनाम्। **तद्विरुद्धत्वात्** पुमर्थविरुद्धत्वात्। चशब्दस्य 'त्याज्यत्वं च' इति सम्बन्धः।

*भावदीपिकायां तु*– 'गुणभेदज्ञानमन्तरेण श्रद्धादिसाधनानुष्ठानसम्भवात् साधनमेवोक्तं भवती'-त्यध्यायार्थप्रतिपादकभाष्यभाव उक्तः। 'शास्त्रविधिम् = वेदविधानं श्रुतिस्मृतिचोदनां परित्यज्य' इति शङ्करभाष्यं सपरिकरं हृदि कृत्वोक्तम् **इत्यर्थप्रतीतिमिति**। भाष्यस्यैवकारतात्पर्यमाह **अज्ञानमेवेति**। **एवं च** सति चैवं **प्रतीतार्थः** त्यागरूपोऽर्थः। **नाज्ञात्वेतीति**। 'अर्थः' इति शेषः।

**अर्थज्ञानपर्यन्तोऽयं विधिरिति**। तथा च चिन्तितं पूर्वतन्त्रे 'अथातो धर्मजिज्ञासा' इति प्रथमाधिकरणे 'स्वाध्यायोऽध्येतव्यः' इति विधिः किं स्वर्गफलकः? आहोस्वित् अर्थज्ञानफलकः? इति संशयः। *पूर्वपक्षस्तु*— अर्थज्ञानाय अध्ययनविधिः इति वदन् प्रष्टव्यः— किमयमपूर्वविधिरुत नियमविधिरिति। न तावदपूर्वविधिरिति पक्षः। गुरूच्चारणानूच्चारणरूपाध्ययनस्य अर्थज्ञानार्थताया अन्वयव्यतिरेकसिद्धत्वात्, 'विमतं वेदाध्ययनम् अर्थज्ञानहेतुः अध्ययनत्वाद् भारताध्ययनवत्' इत्यनुमानसिद्धत्वाच्च। यद्विध्यभावे विधेयत्वाभिमतस्य मानान्तरेण कालत्रयेऽपि न प्राप्तिः तस्यैवापूर्वविधित्वात्। यथा 'व्रीहीन् प्रोक्षति' इति। नापि नियमविधिः। प्रकृते तन्नियमनासम्भवात्। न च लिखितपाठेन गुरुपूर्वकाध्ययनेन वा नखैः अवघातेन वैतुष्यस्येव अर्थज्ञानस्य सम्भवात् पक्षे प्राप्तमध्ययनं विधिना नियम्यत इति वाच्यम्। वैषम्यात्। अवघातनिष्पन्नैरेव

तण्डुलैः अवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः, नान्यथा इति दर्शाद्यपूर्वम् अवघात-नियमे हेतुः । अत्र लिखितपाठेन अध्ययनेन वा अर्थज्ञानसिद्धेः नाध्ययननियमे हेतुरस्तीति । अत एव 'यद्विध्यभावे पाक्षिकी प्राप्तिः अप्राप्तिश्च, विधिसत्त्वे प्राप्तिरेव, न कदापि अप्राप्तिः स एव नियमविधिः' । यथा— 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादिः । तथा च द्विविधस्यापि विधे-रसम्भवात् नार्थज्ञानहेतुरयं विधिरिति । न चैवं श्रूयमाणस्य 'स्वाध्यायोऽध्येतव्यः' इति विधेरान-र्थक्यं स्यादिति वाच्यम् । स्वर्गार्थमध्ययनमत्र विधीयत इति सार्थक्योपपत्तेः । अश्रुतोऽपि स्वर्गो विश्वजिन्नायेन कल्पनीयः । 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इति सूत्रे विश्वजिति अश्रूय-माणमप्यधिकारिणं सम्पादयितुं तद्विशेषणं स्वर्गफलं युक्त्या निर्णीतं तद् अध्ययनेऽप्यस्तु । तदाहुः— 'विनाऽपि विधिनाऽदृष्टलाभान्न हि तदर्थता । कल्प्यस्तु विधिसामर्थ्याद् स्वर्गो विश्व-जिदादिवत्' इति ।

**सिद्धान्तस्तु**— यदुक्तम्– 'अध्ययनविधिः नापूर्वविधिः' इति, तत्तथैव । नियमविधिस्तु स्यादेव । यथा दर्शपूर्णमासजन्यं परमापूर्वम् अवघातजन्यस्य अवान्तरपूर्वस्य कल्पकं भविष्यतीति वक्तुं शक्यत्वात् । ..... नियमाद् अदृष्टाङ्गीकारे श्रूयमाणो विधिरनर्थक एव स्यात् । न च 'अध्य-यनेनैव क्रतुः' इति वा, 'अध्ययनसम्पादितज्ञानेनैव क्रतुः' इति वा तत्र नियमार्थः । येनोक्तदोषः स्यात् । किन्तु 'अध्ययनसम्पादितमेव अर्थज्ञानं फलवत्क्रतुसाधनम्' इति नियमशरीराङ्गीकारे दोषा-भावात् । न च क्रतुप्रकरणाभावे कथं क्रतुविशेषितं अर्थज्ञानं उद्दिश्य अध्ययननियमनम् ? कथं वा विध्यानर्थक्यपरिहाराय अध्ययनसाध्यतावच्छेदकश्च विशेषः शक्तिरूपो नियमोऽदृष्टाभिधानः कल्प्येत ? ततश्चाध्ययनसम्पादितमेव अर्थज्ञानं फलवत्कर्मानुष्ठानहेतुरिति पर्यवस्यति । अन्यथा-ऽनध्ययनविधितः फलवदर्थावबोधसाधनत्वेन स्वाध्यायाक्षरयोरनवगमे कुतोऽवघातादावपि नियम-विधिवार्ता ? विध्यानर्थक्येऽपि क्षतेरभावात् । न च विश्वजिन्न्यायेन स्वर्गार्थत्वं अध्ययनविधे-र्युक्तम् ? दृष्टे फलेऽर्थज्ञाने सम्भवति अदृष्टस्य तत्फलकत्वकल्पनायोगात् । तदाहुः— ''लभ्यमाने फले दृष्टे नादृष्टफलकल्पना । विधेश्च नियमार्थत्वात् नानर्थक्यं भविष्यति'' इति 'अर्थज्ञानपर्यन्तोऽयं विधिः' इति साधूक्तम् । अत एव 'वेदः कृत्स्नः' इत्यत्र अधिगन्तव्यशब्दः । अधिपूर्वस्य गमेः अवगत्यपरनामकज्ञानार्थत्वादिति ज्ञातव्यपरः । 'सरहस्यः' इति भाष्यपदस्य 'उपनिषद्भिः सहितः' इत्यर्थः । **द्विजन्मनः** ब्राह्मण-क्षत्रिय-वैश्यानित्यर्थः । तैः इत्यनुवादः, **अज्ञानिभिः** इति व्याख्या । **इत्युक्तमिति** । अर्थज्ञानपर्यन्तप्राप्तविध्युत्सर्गो नाम विध्यज्ञानमेव पर्यवस्यतीति भावः ।

### भाष्यम्

**"ये वै वेदं न पठन्ते न चार्थं वेदोज्झितांस्तान् विद्धि सानूनबुद्धीन्" इति माधुच्छन्दसश्रुतिः । अन्यथा 'तामसाः' इत्येवोच्येत । न तु विभज्य । यदि सात्त्विकाः, तर्हि नोत्सृष्टशास्त्राः । न हि वेदविरुद्धो धर्मः । "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्" इति हि स्मृतिः । "वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः" इति च भागवते ॥ १ ॥**

*प०टी०*— वेदानध्ययनमपि तद्विसर्ग इत्यत्र श्रुतिं चाह **य इति** । ननु हेयबुद्ध्या वेदत्याग एवात्र विवक्षितः किं न स्यात् ? इत्यत आह **अन्यथेति** । यदि हेयबुद्ध्या वेदत्यागिनः प्रश्नेऽभिप्रेताः, तर्हि परिहारे तामसा इत्येव वक्तव्यम् । न तु सात्त्विकराजसतामसभेदात् ते त्रिविधा अपि सन्तीति विभज्येत्यर्थः । सात्त्विकत्वादिकं यदि तेषामुच्यते, तर्हि को विरोधः ? इत्यत आह **यदीति** । यदि तेषां सात्त्विकत्वं, तर्हि हेयबुद्ध्या न शास्त्रत्यागित्वं कुतः ? इत्यत आह **न हि** इति । सात्त्विका हि धर्मनिष्ठा । तेषां च उत्सृष्टशास्त्रत्वे धर्मस्य शास्त्रविरुद्धत्वं स्यात् । न च तद्युक्तं स्मृतिविरोधादित्यर्थः ॥ १ ॥

*प्र०दी०*— अत्र श्रुतिसम्मतिं चाह **य इति** । न च अर्थमधिगच्छन्ति । सहानूनया वेदतदर्थाधिगतियोग्यया बुद्ध्या वर्तमानान् । सानूनबुद्धयोऽपि 'ये वेदं न पठन्ते' इति योज्यम् । अप्रामाण्यबुद्ध्या परित्यज्य इत्येवार्थः किं न स्यात् ? इत्यत आह **अन्यथेति** ।

यद्यत्र वेदविरोधिनां बौद्धादीनां निष्ठा पृच्छ्येत तदा ते **तामसाः इत्येव** उत्तरम् **उच्येत** । तदीयतामसत्वस्याविकल्पितत्वादिति भावः । न केवलं वक्तव्यानुक्तिरेव दोषः । किं तु तद्विरुद्धोक्तिश्च स्यादिति भावेनाह **न त्विति** । 'त्रिविधा भवति श्रद्धा' इत्यादिना श्रद्धां **विभज्य** उत्तरं नोच्येतेत्यर्थः । एवमुत्तरवचनेऽपि किं स्यात् ? इति चेत्, वेदाप्रामाण्यवादिनामपि पाक्षिकं सात्त्विकत्वं स्यात् । तथा च वक्ष्यामः । तदपि स्यादिति चेन्न । सात्त्विकत्ववेदविरोधित्वयोः सहानवस्थानादित्याह **यदीति** । सहानवस्थानमपि कुतो निश्चेयम् ? इति चेत् । सात्त्विकाः हि धर्ममाचरन्ति । 'सत्त्वात् धर्मो भवेत् पुंसाम्' इति वचनात् । तथा च वेदविरोधिनो धर्मिणश्च इत्युक्तं भवति । एवं च वेदविरोधी धर्म इत्याद्यापद्येत । तच्चानुपपन्नमित्याह **न हीति** । कुतो न ? इत्यत आह **वेद इति** ॥ १ ॥

*भा०दी०*— शेषमाह **अधिगच्छन्तीति** । **विकल्पितत्वादिति** । 'सत्त्वमाहो रजस्तमः' इत्यनेनेति योज्यम् । **तथा च वक्ष्याम इति** । **एवं चेति** । 'वेदविरोधिनश्च धर्मिणश्च' इत्युक्ते सतीत्यर्थः ॥ १ ॥

*भा०र०*— **अत्र** 'अज्ञानमेवोत्सर्गः' इत्यत्र । **सम्मतिं चेति** । साकाङ्क्षं अध्याहारेण पूरयति **अधिगच्छन्तीति** । 'अज्ञात्वा' इति भाष्यानुरोधेन 'जानन्ति' इति वाच्येऽपि 'अधिगच्छन्ति' इत्युक्तिः 'अधिगन्तव्यः' इति वचनानुसारादिति द्रष्टव्यम् ।

'सा' इति स्त्रीलिङ्गतत्पदत्वे, अन्वयाभावः ? द्वितीयाश्रवणाद् 'वेदोज्झितान्' इत्येतद् विशेषणत्वे अनूनबुद्धिसहितशब्दोदितानां उत्तमबुद्धियुक्तानां वेदोज्झितत्वमनुचितम् ? इति शङ्कापनोदाय 'सानूनबुद्ध्योऽपि ये न वेदं पठन्ति, न वेदार्थमधिगच्छन्ति च,ताननूनबुद्धीनामपि वेदोज्झितान् विद्धि' इत्येवमर्थतात्पर्यकं 'सानूनबुद्धीन्' इति विशेषणं इति मनसि निधाय **बुद्धौ** अनूनत्वं व्याकुर्वन् विग्रहं दर्शयति **सहानूनयेति** । **न पठन्ते** 'न पठन्ति, नार्थमधिगच्छन्ति च, तान् = तथाविधान् अनूनबुद्धीनामपि वेदोज्झितान् विद्धि' इति भाष्यं योज्यमित्यर्थः । बुद्धौ विद्यमानाऽपि वेदरूप-वर्णराशितदर्थावगाहनयोग्यता न फलोपहिता इत्यतः तेषां बुद्धिरकिञ्चित्करी इति वेदोज्झितान् = वेदादिशब्दितशास्त्रविध्यज्ञानिन एवेति तात्पर्यतः सिद्ध्यतीति 'महाबुद्धीनां कथं वेदोज्झितत्वम्' इति चोद्यानवकाशः ।

**उत्तरमिति** । शेषोक्तिः । **तदीयतामसत्वस्याविकल्पितत्वादिति** । वेदविरोधिबौद्धादिगतस्य तामसत्वस्य अविकल्पितत्वात् = निश्चितत्वादित्यर्थः । **विरुद्धोक्तिश्च** 'दोषः' इत्यनुवर्तते । 'उत्तरम्' इति शेषोक्तिः । 'उच्यते' इत्यनुवृत्तिः । विरुद्धोक्तित्वं विशदयितुं शङ्कते **एवमुत्तरेति** । तत्कथम् ? इत्यत आह **तथा चेति** । 'अतो विभज्य' इति भाष्यव्याख्यावसरे 'वेदविधिमजानतां विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयणेन तेषां स्वरूपमुच्यते' इति 'त्रिविधा' इत्यादेः तात्पर्यं वक्ष्यामः । एवं च 'ये शास्त्रविधिमुत्सृज्य' इत्यनेन वेदाप्रामाण्यादिवादिनामपि ग्रहणे तेषां पाक्षिकं सात्त्विकत्वं स्यादिति दोषः स्यादेवेति भावः ।

**केचित्तु** यथा तेषां पाक्षिकं सात्त्विकत्वं स्यात् तथा 'यो यच्छ्रद्धः स एव सः' इत्यत्र वक्ष्यामः । तत्र वेदोक्तं अप्रामाण्यबुद्ध्या परित्यज्य श्रद्धयाऽन्विता ये यजन्ते तेषां का निष्ठा ? इति प्रश्ने, यष्टृविशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयणेन सात्त्विकत्वादिस्वरूपकथनेन पाक्षिकं वेदाप्रामाण्यवादिनामपि सात्त्विकत्वं स्पष्टमायातीति व्याचक्षते । पाक्षिकं सात्त्विकत्वं

स्यादित्यत्र इष्टापत्तिं शङ्कते **तदपीति** । **वेदविरोधित्वम्** वेदाप्रामाण्यवादित्वम् । **सत्त्वात्** सत्त्वगुणात् । **धर्मिणः** धर्मानुष्ठातारः । **धर्ममूलं** धर्मप्रमितेः कारणम् । **तद्विदां** वेदार्थज्ञानिनां मन्वादीनां च स्मृतिः = ग्रन्थः, शीलं = मनोगतिश्च धर्ममूलम् । 'धर्मस्वरूपचित्रत्वाद् यो यो देवमनोगतः । स एव धर्मो विज्ञेयः.....' इति वचनात् । **वेदप्रणिहितः** वेदेन कर्तव्यत्वेन उक्त एव धर्मः । **तद्विपर्ययः** वेदेनाकर्तव्यतया उक्त इति यावत्, स ह्यधर्म इति भाष्यार्थः ॥ १ ॥

**गीता**

## श्रीभगवानुवाच—

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

***वि०वि०***— तत्र अज्ञानस्य साधारण्यात् प्रभेदाभावाच्च यजनाङ्गत्त्वेनोक्तां श्रद्धां सात्त्विकादिना विभज्य तदाश्रयेण तेषां स्वरूपं भगवानुवाच **त्रिविधेति** ॥ २ ॥

***वा०ल०***— 'त्रिविधा भवति श्रद्धा' इत्यत्र, सा त्रिविधा श्रद्धा देहिनां स्वभावजेति कथनात् स्वभावत एव जीवाः सात्त्विकादिविभागवन्तः । कथमन्यथा दैत्या एव तामसाः, मानुषा एव राजसाः, देवा एव सात्त्विका इति नियमेन विभागः स्यादिति भावः ॥ २ ॥

***सा०सं०***— ते त्रिविधा अपि सन्तीति भावेन प्राक् यागाङ्गतया यष्टृविशेषणत्वेनोक्तश्रद्धां सात्त्विकत्वादिना विभज्य, तदाश्रयेण तेषां सात्त्विकत्वादिस्वरूपमाह **त्रिविधेति** द्वाभ्याम् । **श्रद्धा** आस्तिक्यनिष्ठा **स्वभावजैव** इत्यन्वयः । मनोवृत्तिश्रद्धाव्यावृत्तये स्वभावजैवेत्युक्तम् । **तां** त्रिविधाम् । **शृणु** श्रुत्वा तत्र निष्ठां कुर्वित्यर्थः । तदन्वितैः क्रियमाणयजनप्रकारं श्रुणिवत्यर्थः ॥ २ ॥

***अ०प्र०***— श्रद्धां सात्त्विकादिना विभज्य तदाश्रयेण तेषां स्वरूपभेदमाह **त्रिविधा इति** । अत्रोत्तरम्—

अथान्वयः— हे अर्जुन !, देहिनां[१], स्वभावजा[२], या सा[३], श्रद्धा त्रिविधा भवति[४], तत्कथं सात्त्विकी[५], राजसी चैव[६], तामसी चेति[७], त्रिविधा[८], भवति[९], तां[१०] शृणु[११] इत्यन्वयः ।

देहिनां = त्रिगुणात्मरूपाः प्राणिनां[१], स्वभावजा = अन्तःकरणसंयोगात् स्वभावजा स्वभावः प्रकृतिः तस्माज्जातेति तथा स्वभावजा । सर्वस्य जीवस्य श्रद्धा सत्त्वानुरूपा जीवचैतन्यानुकूला[२],

सा या[३], विशेषणत्वेनोक्ता सा श्रद्धा त्रिविधा भवति[४], तत्कथं सात्त्विकी = शास्त्रतत्त्वज्ञान-तद्वद्वर्तमानानां परमेश्वरपूजाविषया सात्त्विकी एकविधैव श्रद्धा । लोकाचारमात्रेण प्रवृत्तमानानां देहिनां या श्रद्धा सा तु सात्त्विकी(का) ज्ञानपरा[५], राजसी = राजसी चैव कर्म परा स्यात् तामसी चेति[८], त्रिविधा = त्रैविध्ये जीवानां त्रिविधा श्रद्धा भवति[९], तान्त्रिकप्रकारां श्रद्धा[१०] शृणु[११], ज्ञानपरा इत्यर्थः । 'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दने'त्यादिना पूर्वजन्मसंस्कारः तस्माज्जाता स्वभावजा स्वभावमन्यथाकर्तुं समर्थं हि शास्त्रोक्तविवेकज्ञानं तत्तु तेषां नास्ति । अतः केवलं पूर्वस्वभावेन कार्यत्वेनैव । ननु च श्रद्धासात्त्विक्येन भवतीति श्रद्धा त्रिविधा भवति तामिमां त्रिविधां श्रद्धां शृणु । श्रीभगवता उद्धवं प्रति निर्दिष्टत्वात् । तथोक्तम्— शमो दमस्तितिक्षा तु तपः सत्यं दया स्मृतिः । तुष्टिस्त्यागो स्पृहा श्रद्धा ह्रीर्दयादिस्वनिर्वृतिः ॥ इत्येताः सत्त्वस्ववृत्तयः ॥

अथ कथं तस्यास्त्रैविध्यमुच्यते । सत्यं तथापि रजस्तमोयुक्तपुरुषाश्रयत्वेन रजस्तमोमिश्रत्वेन सत्त्वस्य त्रैविध्यात् ॥ २ ॥

**भाष्यम्**

## अतो विभज्य आह **त्रिविधेत्यादिना** ॥ २ ॥

***प०टी०***— यत एवमुत्सृष्टशास्त्रत्वं नामापाठाद्येव । अतस्तेषां सात्त्विकत्वादिभेदेन त्रैविध्यं वक्ति परिहार इत्याह **अत इति** ॥ २ ॥

***प्र०दी०***— ननु 'तेषां निष्ठा का' इति पृष्टे सात्त्विकत्वादिकं वक्तव्यम् । 'त्रिविधा' इत्यादिकं किमर्थमुच्यते ? इत्यत आह **अत इति** । यत एवं अर्जुनेन वेदविधिमजानतां निष्ठा पृष्टा, अज्ञानं च भेदकम्; त्रयाणामपि सम्भवात् । न च अज्ञानस्य (प्र)भेदाः सन्ति । अतः 'श्रद्धयान्विताः' इति तद्विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना **विभज्य** तदाश्रयेण तेषां स्वरूपम् **आह** इत्यर्थः ॥ २ ॥

***भा०दी०***— **त्रयाणामिति** । सात्त्विकराजसतामसानामित्यर्थः । **तद्विशेषणत्वेनेति** । वेदविध्यज्ञविशेषणत्वेनेत्यर्थः । **तेषां** सात्त्विकादीनां वेदार्थाज्ञानामिति **च** अर्थः ।

***भा०र०***— **किमर्थमुच्यते** असङ्गतत्वादिति भावः । **निष्ठा** स्थितिः । ननु वेदविध्यज्ञानि-विशेषणं अज्ञानं विभज्य निष्ठोच्यताम् ? इत्यत आह **अज्ञानं चेति** । **त्रयाणां** सात्त्विक-राजस-तामसानां **सम्भवात्** अज्ञानस्य । नन्वज्ञानावान्तरभेदात् तदाश्रयाणां विभाग उच्यताम् ? इत्यत

आह **न चेति** । **तद्विशेषणत्वेन** वेदविध्यज्ञानिविशेषणत्वेन । *भावप्रदीपिकायाम्* "ननु हेयबुद्ध्या वेदत्याग एवात्र विवक्षितः किं न स्यात् ? इत्यत आह 'अन्यथे'ति । यदि हेयबुद्ध्या वेदत्यागिनः प्रश्नेऽभिप्रेताः स्युः, तर्हि परिहारे 'तामसाः' इत्येव वक्तव्यम्, न तु 'सात्त्विक-राजस-तामसभेदात् त्रिविधा अपि सन्ति' इति विभज्येत्यर्थः । सात्त्विकत्वादिकं यदि तेषामप्युच्यते तर्हि को विरोधः? इत्यत आह 'यदी'ति । यदि तेषां सात्त्विकत्वं तर्हि न हेयबुद्ध्या शास्त्रत्यागित्वम्, कुतः ? इत्यत आह 'न ही'ति । सात्त्विका हि धर्मनिष्ठाः, तेषां चोत्सृष्टशास्त्रत्वे धर्मस्य शास्त्रविरुद्धत्वं स्यात् । न च तद्युक्तम्, स्मृतिविरोधादित्यर्थः । यत एवं उत्सृष्टशास्त्रत्वं नाम वेदाद्यपाठाद्येव, अतस्तेषां सात्त्विकत्वादिना त्रैविध्यं वक्ति भगवान् परिहारे, इत्याह 'अत इति' ।" इति व्याख्यातम् ॥२॥

**गीतातात्पर्यनिर्णयः**

**सदसत्कर्मविवेकः ॥ १-२ ॥**

*प्रका०*— अस्मिन्नध्याये सत्कर्मासत्कर्मविवेको निरूप्यते ।

***न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति सदिति ॥ सत्कर्मण एव पुरुषार्थ-साधनत्वेनानुष्ठेयत्वात् असत्कर्मणस्तद्विरुद्धत्वेन त्याज्यत्वात् अनुष्ठानत्यागयोश्च विविच्य अज्ञानेऽसम्भवात् सदसत्कर्मणी विविच्य अत्रोच्येते इति भावः ॥**

*भा०दी०*— **अनुष्ठानत्यागयोश्चेति** । असम्भवादित्यनेनान्वयः ।

**गीता**

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥ ३ ॥**

*वि०वि०*— श्रद्धात्रैविध्ये जीवानां किमागतमित्यत आह **सत्त्वानुरूपेति** । जीवानुरूप-श्रद्धोऽयं जीवः श्रद्धामयः श्रद्धास्वरूपः। अतो यः सात्त्विकश्रद्धः स सात्त्विकः, राजसश्रद्धो राजसः, तामसश्रद्धस्तामस इत्यर्थः । यद्यपि मनोवृत्तिरूपत्रिविधा श्रद्धा क्वचित्कदाचित्त्रिविधेष्वपि जीवे-ष्वस्ति, तथापि स्वरूपश्रद्धाया एवाधिक्येनाभिव्यक्तेर्ज्ञातुं शक्यत्वात् तयैव जीवस्वरूपं विवेक्त-व्यम् । उक्तं च— 'सात्त्विकस्य तमोरूपा श्रद्धान्तःकरणात्मिका । सात्त्विकी तामसस्यापि

भूयस्त्वात्तद्विविच्यते ॥', 'श्रद्धा स्वरूपं जीवस्य तस्माच्छ्रद्धाविभेदतः । उत्तमाधममध्यास्तु जीवा ज्ञेयाः पृथक् पृथक् ॥' इति ॥ ३ ॥

***वा०ल०***— 'सत्त्वानुरूपा' इत्यत्र, सर्वस्य उत्तमजीवसमूहस्य ॥ ३ ॥

***सा०सं०***— अस्तु श्रद्धा त्रिविधा । तेषां का निष्ठेति प्रश्नस्य किमुत्तरमित्यत आह **यो यच्छ्रद्धः स एव स** इति । **यो** यजमानः । सात्त्विकश्रद्धः **स** सात्त्विकः । यो राजसश्रद्धः स राजसः । यस्तामसश्रद्धः स तामस इत्यर्थः । कुत एवमित्यतस्तदुपपादनायोक्तम् **सत्त्वेति** । **सर्वस्य** जन्तोः । **श्रद्धा सत्त्वानुरूपा** जीवस्वरूपानुरूपा भवति । 'सत्त्वं जीवः क्वचित् प्रोक्तः' इत्यादिवचनात् । श्रद्धायाः जीवस्वरूपानुरूपत्वात् तया तत्स्वरूपं ज्ञेयमित्यर्थः । श्रद्धायाः जीवानुरूपत्वमेव कुत इत्यत उक्तम् **श्रद्धेति** । **अयं पुरुषो** जीवः । **श्रद्धामयः** तादात्म्यार्थे मयट् । श्रद्धास्वरूप इत्यर्थः ॥ ३ ॥

***अ०प्र०***— श्रद्धाया अपि त्रैविध्यं घटत इत्याह **सत्त्वेति** ।

अथान्वयः— हे भारत ![१], सर्वस्य[२], सत्वानुरूपा[३], श्रद्धा[४], भवति[५], यस्मात् तस्मात् अयं पुरुषः[७], श्रद्धामयः[८], यः[९], यच्छ्रद्धः[१०] सः[११], स एव[१२] इत्यन्वयः ।

हे भारत ![१], सर्वस्य = विवेकिनो वा अविवेकिनो वा लोकस्य[२], सत्त्वानुरूपा = जीवचैतन्यानुकूला सत्वतारतम्यानुसारिणी सत्त्वादि-त्रिगुणानुरूपा[३], यस्मात् श्रद्धा भवति[४-५], तस्मात् अयं पुरुषः[७], लौकिकः[७], श्रद्धामयः = श्रद्धास्वरूपः श्रद्धाविकारः त्रिधया विक्रीयते अतः कारणात्[८], यः = जीवः[९], यच्छ्रद्धः = यादृशश्रद्धावान्[१०] सः = पुरुषः[११], स एव = तादृश-श्रद्धायुक्त एव[१२], सात्त्विकश्रद्धो जीवः सात्त्विकः, राजसश्रद्धो राजसः, तामसश्रद्धस्तामसः । अत्रेदं विवेचनीयम् । लोकाचारमात्रेण प्रवृत्तमानेष्वेवं सात्त्विको राजसस्तामसः श्रद्धाव्यवस्था शास्त्रजनितविवेकज्ञानयुक्तानां तु स्वस्वभावजेन सात्त्विक्येनैव श्रद्धेति प्रमाणार्थः । यद्वा, राजसश्रद्धा द्वेधा— जीवस्वरूपभूता मनोवृत्तिरूपा चेति। सज्जीवानां स्वरूपश्रद्धा सात्त्विकी। मध्यमानां राजसी । तमोयोग्यानां तामसी। त्रिविधजीवानामपि मनोवृत्तिरूपा श्रद्धा त्रिविधा । तथाप्यत्र बाहुल्यापेक्षया सात्त्विकत्वादिव्यवहारः । तदुक्तम्— "श्रद्धा स्वरूपं जीवस्य तस्माच्छ्रद्धाविभेदतः । उत्तमाधममध्यास्तु जीवा ज्ञेया पृथक् पृथक् ॥ स्वरूपभूता श्रद्धैव तमोगानां च मोक्षिणाम् । शिष्यते संसृतिस्थानां श्रद्धारूपं मनोऽपरम् ॥ तत्र स्वरूपश्रद्धैव व्यज्यते प्रायशो क्वचित् । सात्त्विकस्य तमोरूपा श्रद्धाऽन्तःकरणात्मिका ॥ सात्त्विकी तामसस्यापि भूयस्त्वात्तद्विविच्यते । श्रद्धेत्यास्तिक्यनिष्ठोक्ता सा येषां देव-

तोत्तमे ॥ विष्णौ तद्भक्तबुद्ध्यैव रमाब्रह्मादिकेषु च । ते सात्त्विका इति ज्ञेयास्तैरिष्टं विष्णुरेव तु ॥ श्रीश्च साध्याक्षविद्याख्या ब्रह्मेन्द्राद्याश्च देवताः ।''

कृतयाऽङ्गविष्ण्वादयो भुञ्जते इत्युत्तरेणान्वयः । ''विबुधत्वात्तु मन्वाख्या भुञ्जते प्रीतिपूर्वकम्। व्यामिश्रयाजिनो ये तु विष्ण्वाधिक्ये ससंशयाः ॥ स्वरूपमात्रे देवानां श्रद्धायुक्ताश्च सर्वदा । राजसास्ते तु विज्ञेयाः तैरिष्टा यक्षराक्षसाः ॥ दिनत्वाद्देवनामानो ब्रह्मेन्द्रादिसनामकाः । गृह्णन्ति ये हरिं त्वन्यदेवादिसममेव वा ॥ नीचं ब्रह्माद्यनन्यं वा मन्यन्ते नेति चाखिलम् । तच्छ्रद्धायुतास्ते तु तामसाः परिकीर्तिताः ॥ भूतप्रेतास्तु तैरिष्टं शिवस्कन्दादिनामकाः । साक्षाच्छिवपरीवारा भुञ्जते ह्यतितामसाः ॥ मोक्षः सङ्कल्पिकः सर्गो भूतादित्वं फलं क्रमात् । यागात्तु राजसात् स्वर्ग साङ्कल्पिक उदाहृतः ॥ लोकः स दीनदेवानां सन्नाम्नां वासवादिभिः ।'' इति प्रमाणानुसारेणोक्तवक्ष्यमाणक्रमादर्थो ज्ञेयः ॥ ३ ॥

**भाष्यम्**

**सत्त्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः सात्त्विकश्रद्धः सात्त्विक इत्यादि ॥ ३ ॥**

***प०टी०—*** नोत्सृष्टशास्त्रत्वेन पुरुषभेदो ज्ञायते किन्तु तच्छ्रद्धयैव, श्रद्धायास्त्रिरूपत्वात् श्रद्धायाः स्वरूपान्तःकरणानुरूपत्वात् । अतः सात्त्विकादिश्रद्धावतां सात्त्विकादि इत्याशयेनाह **सत्त्वेति** ॥ ३ ॥

***प्र०दी०—*** सात्त्विकत्वादिभेदेन श्रद्धा त्रिविधा इत्युक्ता । पुनः 'सत्त्वानुरूपा सर्वस्य श्रद्धा भवति' इति वचनं कथं न व्याहतम् ? इत्यत आह **सत्त्वेति** । **चित्तं** चैतन्यम् । जीव इति यावत्। ननु श्रद्धास्वरूपमेव निरूपितम् । न तु तदाश्रित्य जीवस्वरूपम्, अतो नासङ्गतमुत्तरम् इत्यतो येन तदुच्यते तत्पठित्वा व्याचष्टे **य इति** । **इत्यादि** 'ज्ञातव्यम्' इति शेषः । **राजसश्रद्धः** राजसः । **तामसश्रद्धः** तामस इत्यर्थः ॥ ३ ॥

***भा०दी०—*** **कथं न व्याहतमिति** । सात्त्विकादिस्वरूपानुरूपेति न वक्तव्यमिति भावः ।

***भा०र०—*** **कथं न व्याहतमिति** । 'सात्त्विकी राजसी तामसी चेति त्रिविधा सर्वस्य श्रद्धा भवति' इति वचनस्य, सत्त्वानुरूपा— सत्त्वं = सत्त्वगुणः, तदनुरूपा सात्त्विकीति यावत्, 'सर्वस्य पुंसः सात्त्विक्येव श्रद्धा' इति श्रद्धाया एकविधत्ववचनेन विप्रतिषेधात् त्रिविधत्वोक्ति-एकत्वोक्त्यो-

व्र्याघातो दुष्परिहर एवेत्यर्थः । ननु 'यो यच्छ्रद्धः स एव' इति श्रद्धयैव सात्त्विकादिजीवस्वरूपज्ञानं इत्यस्योपपादनयोक्तम् **सत्त्वानुरूपेति** । तत्र सत्त्वशब्दार्थो भाषितः **सत्त्वेति** । अनेनापि कथं 'यो यच्छ्रद्धः स एव' इत्यस्योपपादनम् ? इत्यतश्चित्तशब्दार्थमाह **चित्तं चैतन्यमिति** ।

एवमपि 'चेतनश्चेतनानाम्' इत्यादिशास्त्रसिद्धमुख्यचैतन्यस्य ईश्वरस्य ग्रहणे उपपादनालाभ एव ? इत्यतः 'सत्त्वं जीवः क्वचित् प्रोक्तः' इत्यभिधानमूलम् 'सत्त्वानुरूपा = जीवानुरूपा' इति तात्पर्यं हृदि कृत्वाऽऽह **जीव इति यावदिति** । तथा च सत्त्वशब्दस्य जीवार्थत्वान्न व्याहतिशङ्का, नाप्युक्तोपपादनालाभ इति चोद्यमिति भावः । **तदाश्रित्य** श्रद्धास्वरूपविभेदमाश्रित्य **जीवस्वरूपं** निरूपितम् । 'तदाश्रितं जीवस्वरूपम्' इति पाठे 'श्रद्धाऽऽश्रितं जीवस्वरूपम्' इत्यर्थः । **उत्तरम्** 'त्रिविधा भवति श्रद्धा' इत्यादिना उच्यमानम् । **येन** वाक्येन **तत्** सात्त्विकादिश्रद्धाश्रितजीवस्वरूपम् । आदिपदार्थोक्तिः **राजसश्रद्ध** इत्यादि । 'राजसी श्रद्धा यस्यासौ' इत्युभयत्रापि राजसतामसशब्दयोः पुंवद्भावः, श्रद्धाशब्दे 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वश्च द्रष्टव्यः ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**सत्त्वानुरूपा** जीवानुरूपा । अतो ये सात्त्विकश्रद्धाः ते सात्त्विका इति ज्ञेया अन्येभ्य इति । **श्रद्धामयः** श्रद्धास्वरूपः ।

*प्रका०*— "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । तेषां निष्ठा तु का कृष्ण सत्त्वमाहोरजस्तम" इत्यस्य यदुत्तरवाक्यं "सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत । श्रद्धामयोऽयं पुरुष" इति, तदर्थमाह **जीवानुरूपेत्यादिना** । सात्त्विक्यां श्रद्धया युक्ता यजन्ते चेदपरिज्ञानात् शास्त्रविध्युत्सर्गेऽपि सात्त्विकाः । राजस्या श्रद्धयाऽन्विता यजन्ते चेद्राजसाः । तामस्या श्रद्धयाऽन्विता यजन्ते चेत्तामसा इत्यर्थः ।

**न्या०दी०**— "ये शास्त्रविधिमुत्सृज्य" इति प्रश्नस्योत्तरमुच्यते **त्रिविधेति** ॥ तत्र नाज्ञानाच्छास्त्रविधिमुत्सृज्य यजनं सात्त्विकत्वादिज्ञापकम् । किन्तु सात्त्विकत्वादिभेदेन श्रद्धा त्रिविधा भवति । तत्र यो यजमानो यादृशश्रद्धः स तादृश इति श्रद्धयैव तज्ज्ञानमित्युक्तस्योपपादनायोक्तं **सत्त्वानुरूपेति** ॥ तत्र श्रद्धायाः सत्त्वगुणानुरूपत्वोक्त्या कथं यो यच्छ्रद्धः स एव स इत्यस्योपपादनमित्यत आह **सत्त्वेति** ॥ सत्त्वशब्दस्य जीववाचित्वं पूर्वमेव साधितम् । किमतो यद्येवमित्यत आह **अत इति** ॥ श्रद्धाया जीवानुरूपत्वात् तया

**तत्स्वरूपं ज्ञायत इत्यर्थः । श्रद्धाया जीवस्वरूपत्वं कुत इत्यत आह श्रद्धामय इति ॥ तत्र मयट्शब्दस्यानेकार्थत्वादत्रोपयुक्तमर्थमाह श्रद्धेति ॥**

***भा०दी०***— ननु 'ये शास्त्रविधिमुत्सृज्ये'त्यत्र 'तेषां निष्ठा तु के'ति पृष्टे सात्त्विकत्वादिकमेव वाच्यम् ॥ त्रिविधेत्यादिकं किमुच्यत इत्यत आह **इति प्रश्नस्यैवेति** । शास्त्रविधिं अजानतां निष्ठायाः तदज्ञानस्य सात्त्विकादित्रयाणां सम्भवेनाज्ञानमुखेन सात्त्विकादिभेदस्य वक्तुमशक्यत्वात् । प्राक् यष्टृविशेषणतया यागाङ्गत्वेनोक्तश्रद्धां विभज्य तदाश्रयेण तेषां सात्त्विकत्वादिस्वरूपं उच्यत इति भवति तत्प्रश्नस्येदमुत्तरमिति नासङ्गतमिति भावेन तदुत्तरं विवृण्वन् उत्तरश्लोकमवतारयति **तत्रे-त्यादिना भवतीत्यन्तेन** । त्रिविधेति श्लोकार्थ उक्तः । यो यच्छ्रद्ध इत्यस्यार्थस्तत्रेत्यादिनोच्यते ॥ **तज्ज्ञानमिति** । सात्त्विकत्वादिज्ञानम् । **इत्युक्तस्येति** चतुर्थपादोक्तस्येत्यर्थः ॥ **पूर्वमेवेति** । "सत्वं जीवः क्वचित्प्रोक्त" इत्यादिना त्रयोदशाध्याये ॥ **अनेकार्थत्वादिति** । "तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधे"त्युक्तेरिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"श्रद्धा स्वरूपं जीवस्य तस्माच्छ्रद्धाविभेदतः ।**
**उत्तमाधममध्यास्तु जीवा ज्ञेयाः पृथक् पृथक् ॥**
**स्वरूपभूता श्रद्धैव तमोगानां च मोक्षिणाम् ।**
**शिष्यते संसृतिस्थानां श्रद्धारूपं मनोऽपरम् ॥**
**तत्र स्वरूपश्रद्धैव व्यज्यते प्रायशः क्वचित् ।**
**सात्त्विकस्य तमोरूपा श्रद्धाऽन्तःकरणात्मिका ।**
**सात्त्विकी तामसस्यापि भूयस्त्वात् तद् विविच्यते ॥"** ॥ ३ ॥

***प्रका०***— या प्राकृतमनसि बाहुल्येनाभिव्यज्यते श्रद्धा, सा जीवस्य न स्वरूपभूता । या क्वचिज्जायते सा प्राकृतमनोधर्म इत्येतदुच्यते "**भूयस्त्वात्तद्विविच्यत**" इत्यनेन ।

***न्या०दी०***— **"तां शृणु" इति प्रतिज्ञातं "यो यच्छ्रद्धः" इत्यस्य विवरणेनोच्यते यजन्त इति ॥ तत्रान्तःकरणवृत्तिश्रद्धाया अपि विद्यमानत्वेन स्वरूपभूताया विवेक्तु-मशक्यत्वात् तया कथं जीवस्वरूपज्ञानम् ? सर्वेषामपि देवतायाजित्वात् कथं यक्ष-रक्षांसीत्यादि ? कथं च नित्याकृशमीश्वरं तामसाः कर्शयन्ति ? इत्यादिशङ्कापरिहाराय**

सत्त्वानुरूपेत्यादि प्रमाणवाक्येनैव व्याचष्टे **श्रद्धेति** ॥ किं श्रद्धा स्वरूपभूतैव उत भिन्नाऽप्यस्तीत्यत आह **स्वरूपेति** ॥ तर्हि स्वरूपश्रद्धाया एव ज्ञातुमशक्यत्वात् न तया जीवस्वरूपविवेक इत्यत आह **तत्रेति** ॥ व्यज्यतेऽन्तःकरणे । एवं राजसत्यापि सात्त्वकी तामसी क्वचिदेव भवतीति ज्ञातव्यम् । किं तत इत्यत आह **भूयस्त्वादिति** ॥ एवं स्वरूपश्रद्धाया एवाधिक्येनाभिव्यक्तेर्ज्ञातुं शक्यत्वात् तया जीवस्वरूपं विविच्यत इत्यर्थः ॥

*भा०दी०*— **तामिति** । सात्त्विकादिश्रद्धां सात्त्विकादिश्रद्धावद्भिः क्रियमाणयजनमिति यावत् ॥ **इत्यस्य विवरणेनेति** । य इत्यत्र सात्त्विकादिश्रद्धः सात्त्विकादिरित्युक्ते कः सात्त्विकश्रद्धादिरिति जिज्ञासायां देवादियाजी सात्त्विकश्रद्धादिरिति विवरणेनेत्यर्थः ॥ **एवमिति** । सात्त्विकी तामसस्यापीति एवं राजसस्यापीत्यादि ध्येयमित्यर्थः । उभयत्रान्तःकरणात्मिकेत्यनुषङ्गो मूले ध्येय इति भावः ।

**गीता**

## यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
## प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

*वि०वि०*— 'यो यच्छ्रद्धः' इत्यस्य विवरणाय 'तां शृणु' इति प्रतिज्ञातमाह **यजन्त इति** । सात्त्विकश्रद्धाः शास्त्रविधिमजानन्तोऽपि देवान् ब्रह्मादिविष्णुरूपाणि यजन्ते । उक्तं च— "त्यक्त्वाऽपि शास्त्रविहितं मिथ्याज्ञानविवर्जिताः। भक्त्या विष्णुं यजन्ते ये निषिद्धाचरणोज्झिताः॥ तेऽपि यान्ति हरिं शास्त्रविधानस्थाः कुतः पुनः ॥" इति । राजसतामसश्रद्धास्त्वजानन्त एव 'यजन्ते' इत्यादि व्याख्येयम् । राजसतामसा अपि यद्यपि देवयाजिनः । तथापि यक्षादीनां यजनोक्तत्वात् तेषामेव यष्टारो भवन्तीति यक्षादीन् यजन्त इत्युक्तम् । तदुक्तम्— "दीनत्वाद्देवनामानस्त्वन्ये ब्रह्मादिनामकाः । अवैष्णवकृतो यज्ञो दीनैर्देवैश्च भुञ्जते ॥" इति ॥ ४ ॥

*सा०सं०*— 'यो यच्छ्रद्धः' इत्यत्र सात्त्विकादिश्रद्धः सात्त्विकादिरित्युक्तम् । तत्र सात्त्विकश्रद्धादिः किं कर्मवानिति जिज्ञासायां 'तां शृणु' इति प्रतिज्ञातमाह **यजन्त** इति ॥ **सात्त्विकाः** सात्त्विकश्रद्धावन्तः । शास्त्रविधानमजानन्तोऽपि सात्त्विकश्रद्धामात्रान्विता जना इति यावत् । **देवान् यजन्ते** । **राजसा** राजसश्रद्धावन्तः । शास्त्रविधानमजानन्त इति सर्वत्र ज्ञेयम् । **यक्षरक्षांसि यजन्ते** । **तामसाः** तामसश्रद्धावन्तः प्रेतादीन् **यजन्ते** । यद्यपि यागविधिषु 'ऐन्द्रं दधि' इत्यादिषु

इन्द्रादिदेवता एवोद्देश्यतया श्रुताः इति राजसादिरपि तत्र श्रुतदेवतोद्देशेनैव यजनं करोति । तथापि 'तैरिष्टं यक्षराक्षसाः । दीनत्वाद्देवनामानो ब्रह्मेन्द्रादिसनामकाः । गृह्णन्ति' (महाविष्णुपुराण) इति स्मृत्या तत्तन्नामकयक्षादीनामेव तत्तद्यज्ञभोक्तृत्वात् 'यक्षरक्षांसि यजन्ते' इत्याद्युक्तमिति ज्ञेयम् । अत्र देवयाजिनां विष्णुभक्त्यादिमत्त्वान्मोक्ष एव फलम् । राजसानां तु स्वर्गप्रतिनिधित्वेन कल्पितः साङ्कल्पिकः स्वर्गः । तामसानां तु शिवपरिवारभूतादित्वप्राप्तिः फलं ज्ञेयम् । 'मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वं फलं क्रमात्' (महाविष्णुपुराणम्) इति स्मृतेः ॥ ४ ॥

***अ०प्र०***— यो यच्छ्रद्ध इत्येतद्विवृण्वतां शृण्विति प्रतिज्ञातं कार्यभेदेन सात्त्विकादिभेदमेव प्रपञ्चयति **यजन्त इति** ।

यजन्त इत्यस्यान्वयः । सात्त्विकाः[१], देवान्[२], यजन्ते[३], राजसाः[४], यक्षरक्षांसि यजन्ति[५], अन्ये[६], तामसाः जनाः[८], प्रेतान्[९], भूतागणांश्च[१०] यजन्ते[११] ।

सात्त्विकाः = सात्त्विकश्रद्धायुक्ताः शास्त्रविधिमज्ञात्वापि तत्संस्कारवशादेव[१], देवान् = स्वप्रकृतिरूपब्रह्मादिदेवनामकविष्णुरूपाणि विष्णुभक्तत्वेन मनु नाम ब्रह्मादीन् वा[२], यजन्ते = यज्ञक्रियाभिर्यजन्ते[३], एवं राजसाः राजसश्रद्धायुक्ताः[४], यक्षरक्षांसि = शास्त्रविधिमजानन्त एव ब्रह्मेन्द्रनामक यक्षरक्षादीन् यजन्ते[५], अन्ये तामसाः = तामसश्रद्धायुक्ताः जनाः शास्त्रविधिमजानन्त एव शैवादिनामकभूतान् प्रेतगणान् च[१०] यजन्ते[११] । तदुक्तम्— "ये कापि शास्त्रविहितं मिथ्याज्ञानविवर्जिताः । भक्त्या विष्णुं यजन्तो ये निषिद्धाचरणोज्झिताः ॥ तेऽपि यान्ति हरिं शास्त्रविधानस्था कुतः पुनः । दानवा देवनामानस्त्वन्ये ब्रह्मादिनामकाः ॥ अवैष्णवकृतो यज्ञो दीने देवैस्तु भुञ्जते ।" इति वचनात् त्रिविधैरपि स्वर्गाद्युद्देशेन 'इन्द्राय स्वाहे'त्यादि मन्त्रपूर्वं कृतेषु यज्ञेषु भक्तिपूर्वं सात्त्विकयज्ञं विष्ण्वादिदेवा भुंक्त्वा स्वर्गं ददति । राजसादेरभक्तियज्ञं यक्षादीन् भोजयित्वा यथाक्रमं साङ्कल्पितं स्वर्गभूतादित्वं ददति इति ज्ञातव्यम् ॥ ४ ॥

भाष्यम्

## कः सात्त्विकश्रद्धः ? इत्यादि विभज्य आह **यजन्त इत्यादिना** ॥ ४ ॥

***प०टी०***— त्रिविधा भवति श्रद्धा, तयैव जीवो ज्ञायते । 'तां च शृणु' इत्युक्तं कीदृशं सात्त्विकादिश्रद्धावत्त्वम् ? इत्याशङ्क्य, उत्तरश्लोकानवतारयति **क इति** । **इत्यादि** प्रश्ने सति इत्यर्थः । 'सात्त्विकाः' इत्यादिना सात्त्विकश्रद्धा इत्यादि ज्ञेयम् ॥ ४ ॥

*प्र०दी०*— 'तां शृणु' इति प्रतिज्ञातं नोच्यते, 'यजन्ते सात्त्विकाः' इत्यप्रस्तुतं च उच्यत इत्यत आह **क इति** । **इत्यादि** 'जिज्ञासायाम्' इति शेषः । **विभज्य** श्रद्धास्वरूपं प्रतिज्ञातं श्रद्धात्रैविध्यमेवोच्यते । अतो नासङ्गतिरिति भावः । एतेन 'सात्त्विकाः' इत्यादेः 'सात्त्विकश्रद्धाः' इत्यादिरर्थ उक्तो भवति ॥ ४ ॥

*भा०दी०*— विभज्य इत्यनूद्य कर्मकारकमाह **विभज्य श्रद्धास्वरूपमिति** ॥ ४ ॥

*भा०र०*— न केवलं वक्तव्यानुक्तिः, असङ्गतोक्तिश्चेत्याह **यजन्त इति** । भाष्यपदमनूद्य विभागकर्म दर्शयति **विभज्य श्रद्धास्वरूपमिति** । प्रतिज्ञातानुक्तिः, अप्रतिज्ञातोक्तिश्चेति दोषद्वयं भाष्यभावोक्त्योद्धरति **प्रतिज्ञातमिति** ॥ ४ ॥

**गीता**

# अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
# दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

*वि०वि०*— सात्त्विकादीनां याजकानां मोक्षः, साङ्कल्पिकः स्वर्गो, भूतादित्वं फलं क्रमादित्युक्तानि फलानि । तत्र तामसादीनां भूतादित्वमवान्तरफलमेव । मुख्यं तु तम एवेत्याशयेनाह **अशास्त्रविहितमित्यादिना** । यत् तपः कुर्वन्तीत्युपलक्षणार्थम् । यज्ञादिकमपि कुर्वन्ति । कामरागबलान्विताः । इच्छाशक्त्याग्रहयुक्ताः ॥ ५ ॥

*सा०सं०*— न केवलं तामसानां भूतादित्वम्, तमःप्राप्तिरपीत्याह **अशास्त्रेत्यादि** द्वाभ्याम् । ये जनाः । शास्त्रादन्येन दुरागमादिना **विहितम्** । **घोरं** महाकष्टरूपम् । **तपः** । **दम्भाहङ्कारसंयुक्ताः** । **कामरागबलान्विताः** इच्छाशक्त्याग्रहयुक्ताः सन्तः । **तप्यन्ते** कुर्वन्ति ॥ ५ ॥

*अ०प्र०*— 'तं यथायथोपासते तदेव भवतीति' श्रुतेः प्रेतादियाजिनां प्रेतादित्वं प्राप्तिस्त्ववान्तरफलं मुख्यफलं तु तम एवेत्याशयेनाह **अशास्त्रेति** ।

पुनर्विशेषमाह । अथान्वयः— ये[1], तपोजनाः[2], अशास्त्रविहितं[3], अत एव घोरं तपः[4], तप्यन्ते[5], कथम्भूताः दम्भाहङ्कारसंयुक्ताः[6], कामरागबलान्विताः सन्तः[7], तान् आसुरनिश्चयान् विद्धीति उत्तरेणान्वयः ॥

ये तपोजनाः = ये अत्यन्तमन्दभाग्यास्ते तु गतानुगत्या पाषण्डसङ्गेन तदाचारानुवर्तिनः[2], दम्भाहङ्कारसंयुक्ताः = दम्भाहङ्कारौ प्रसिद्धौ ताभ्यां सम्यक्युक्ताः[3], कामरागबलान्विताः = कामो

अभिलाषः रागः आसक्तिः बलं आग्रहः एतैः अन्विताः सन्तः[४], अशास्त्रविहितं = भगवच्छब्द-रहितत्वात् शास्त्ररहितं विष्णुभक्तिविधानार्थं सर्वशास्त्रं प्रवर्तते इति वचनात् शास्त्रे यदविहितं तत् अशास्त्रविहितं[५], अत एव घोरं = भयङ्करं पाषण्डं तपः[६], तप इत्युपलक्षणम् । यज्ञादिकमपि ग्राह्यम् । तप्यन्ते[७], तान् असुरनिश्चयान्विद्धीति उत्तरेणान्वयः ॥ ५ ॥

**गीता**

## कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
## मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

***वि०वि०***— शरीरस्थं भूतग्रामं लक्ष्म्यादिदेवतासमुदायम् । अन्तर्नियामकत्वेन स्थितं मां च कर्शयन्तः । अल्पत्वेन पश्यन्तः । अचेतसोऽविवेकिनः । तान् । आसुरो निश्चयो येषां ते आसुर-निश्चयाः । तान् । नित्यनरकयोग्यान् विद्धि । तदुक्तम्— "अकृशानपि लक्ष्म्यादीन् देवान्विष्णु-परायणान् । विष्णुं च सर्वदेहस्थं कृशत्वेन विजानते ॥ तेषामल्पगुणत्वेन कल्पनात्ते तमो ध्रुवम् । यान्ति ज्ञेयाश्च ते दैत्याः पिशाचा वाऽथ राक्षसाः ॥" इति ॥ ६ ॥

***वा०ल०***— 'कर्शयन्तः शरीरस्थम्' इत्यत्र, 'भूतग्रामं' पञ्चमहाभूतानां समूहं कर्शयन्तः आतपोपवासादिना कृशं कुर्वन्तः । अथवा 'भूतग्रामं' तत्त्वाभिमानिभूतं देवतासमूहम्, अतः शरीरस्थं मां च कर्शयन्तः स्वविहितप्राणाग्निहोत्राकरणेन चित्तक्षोभयुक्तं कुर्वन्तः ॥ ६ ॥

***सा०सं०***— किञ्च **शरीरस्थं भूतग्रामं** लक्ष्म्यादिदेवतासमुदायम् । **मां च** तन्नियामक-त्वेन । **शरीरस्थं कर्षयन्तो**ऽल्पगुणत्वेन पश्यन्तः । **अचेतसः** अविवेकिनः । **तान् आसुर-निश्चयान्** असुरसम्बन्धिनिश्चयान् । **विद्धि** जानीहि । ते दैत्यरक्षःपिशाचा इत्यर्थः । तमः प्राप्ति-योग्या इति भावः ॥ ६ ॥

***अ०प्र०***— अचेतसः[१], शरीरस्थं[२], भूतग्रामं[३], कर्षयन्तः[४], तथा अन्तःशरीरस्थं[५], मां चैव कर्षयन्तः[६], एवं ये तपस्यन्ति तान्[७], असुरनिश्चयान्विद्धीति[८], अन्वयः ।

अचेतसो = ज्ञानिनः[१], भूतग्रामं = लक्ष्म्यादिदेवतासमूहम् । यद्वा, पृथिव्यादीनां समूहं[२], शरीरस्थं = जीवशरीरस्थं चकारेण परेषां शरीरस्थं च इन्द्रियसमूहं वा[३], कर्षयन्तः = कृशीकुर्वन्तः दुःखीकुर्वन्त इत्यर्थः[४], तथा अन्तःशरीरस्थनियामकत्वेन शरीरान्तस्थितम् । यद्वा, अन्तःशरीरं सूक्ष्मशरीरं लिङ्गदेहः । तस्मिन् अन्तर्यामित्वेन तिष्ठन्तं[५], माञ्चैव कर्षयन्तः = अनन्तगुणमपि कृश-

त्वेनांसत्वेन जानन्तः कृशं जानन्तीति कर्षयन्तः याति 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेति' सूत्रेण कृशशब्दात् ज्ञानार्थे णिच् कृते धातुसंज्ञायां लडादेशः । शत्रन्तोऽयं शब्दः मदाज्ञालङ्घनेनैव कर्षयन्तः सन्तः[६], अविवेकिनः एवं ये तपस्यन्ति तान्[७], आसुरनिश्चयान् = आसुरो अतिक्रूरो निश्चयो येषां तान् । यद्वा, आसुरकृत्यं निश्चयो येषां ते तान् विपरीतनिश्चयानित्यर्थः[८], एतादृशान् विद्धि = जानीहीत्यर्थः ॥ ६ ॥

भाष्यम्

## भगवत्कर्शनं नामाल्पत्वदृष्टिरेव ।

*प्र०दी०*— ननु निर्विकारस्य भगवतः कथं 'मां चैवान्तःशरीरस्थं कर्शयन्तः' इति कर्शनमुच्यते ? इत्यत आह **भगवदिति** । 'प्रातिपदिकात् धात्वर्थे बहुलं इष्टवच्च' इति वचनात् दृष्टिरपि णेरर्थ इति भावः । 'मां चैव जीवरूपेणान्तःशरीरस्थम्' इति व्याख्यानं तु सम्यग्-व्याख्यानेनैव परास्तम् । जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात् । 'मदनुशासनाकरणमेव मत्कर्शनम्' इति व्याख्याननिरासार्थं 'एव' इत्युक्तम् । अशाब्दत्वात् ।

*भा०दी०*— **प्रातिपदिकादिति** । तृच्प्रातिपदिकात् । दृशिरूपधात्वर्थेन बहुलं णिच् भवतीत्यर्थलाभात् गुणावादेशादौ सति 'कर्षयन्तः' इति रूपसिद्धेः **कर्शयन्तः** अल्पतां पश्यन्त इति गीतार्थ इत्यर्थ इति भावः । **सम्यगिति** । अल्पत्वदृष्टिरेवेति व्याख्यानेनैवेत्यर्थः । **अन्तःशरीरस्थमितीति** ।[१] कर्शयन्तः तदनुशासनमकुर्वन्त इति परव्याख्यानमित्यर्थः ।

*भा०र०*— ननु 'हेतुमति च', 'तत्करोति तदाचष्टे' इति वचनात् प्रयोजकव्यापारस्य करणआख्यानयोश्चैव णिजर्थत्वात् कथं भाष्ये दृष्टिः णिजर्थतयोक्ता ? इत्यत आह **प्रातिपदिकादिति**। 'प्रातिपदिकाद् धात्वर्थे बहुलं इष्टवच्च' इति योगस्यायमर्थः । यस्मात्कस्माच्चित् प्रातिपदिकाद् यस्मिंस्कस्मिंश्चित् धात्वर्थे वाच्ये बहुलं णिच्प्रत्ययो भवति, इष्टवच्च = इष्ठन्प्रत्यये परे यथा कार्यं तथा णिच्परेऽपि स्यात् । तथा चात्र कृश्यतीत्यर्थे कर्शः पचाद्यच् ।

न च 'कृश = तनूकरणे' इति धातोः इगुपधत्वाद् 'इगुपध-ज्ञा-प्री-किरः कः' इति कप्रत्यय एव स्यात्, सति चैवं 'कृशः' इत्येव रूपं भवति । ततः 'प्रातिपदिकाद्धात्वर्थे' इति णिचि 'कृशयन्तः' इत्येव स्यात्, न तु 'कर्शयन्तः' इति ? इति वाच्यम् । वाऽसरूपन्यायेन पचाद्यच एवात्रोत्पाद्यतयेष्टत्वात् । ततः कर्शप्रातिपदिकाद् दृशिधात्वर्थे णिचि, णौ इष्ठवत् प्रातिपदिकस्यैव

अभिलाषः रागः आसक्तिः बलं आग्रहः एतैः अन्विताः सन्तः[४], अशास्त्रविहितं = भगवच्छब्द-रहितत्वात् शास्त्ररहितं विष्णुभक्तिविधानार्थं सर्वशास्त्रं प्रवर्तते इति वचनात् शास्त्रे यदविहितं तत् अशास्त्रविहितं[१], अत एव घोरं = भयङ्करं पाषण्डं तपः[६], तप इत्युपलक्षणम् । यज्ञादिकमपि ग्राह्यम् । तप्यन्ते[७], तान् असुरनिश्चयान्विद्धीति उत्तरेणान्वयः ॥ ५ ॥

**गीता**

## कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
## मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

***वि०वि०—*** शरीरस्थं भूतग्रामं लक्ष्म्यादिदेवतासमुदायम् । अन्तर्नियामकत्वेन स्थितं मां च कर्शयन्तः । अल्पत्वेन पश्यन्तः । अचेतसोऽविवेकिनः । तान् । आसुरो निश्चयो येषां ते आसुर-निश्चयाः । तान् । नित्यनरकयोग्यान् विद्धि । तदुक्तम्— "अकृशानपि लक्ष्म्यादीन् देवान्विष्णु-परायणान् । विष्णुं च सर्वदेहस्थं कृशत्त्वेन विजानते ॥ तेषामल्पगुणत्वेन कल्पनात्ते तमो ध्रुवम् । यान्ति ज्ञेयाश्च ते दैत्याः पिशाचा वाऽथ राक्षसाः ॥" इति ॥ ६ ॥

***वा०ल०—*** 'कर्शयन्तः शरीरस्थम्' इत्यत्र, 'भूतग्रामं' पञ्चमहाभूतानां समूहं कर्शयन्तः आतपोपवासादिना कृशं कुर्वन्तः । अथवा 'भूतग्रामं' तत्त्वाभिमानिभूतं देवतासमूहम्, अतः शरीरस्थं मां च कर्शयन्तः स्वविहितप्राणाग्निहोत्राकरणेन चित्तक्षोभयुक्तं कुर्वन्तः ॥ ६ ॥

***सा०सं०—*** किञ्च **शरीरस्थं भूतग्रामं** लक्ष्म्यादिदेवतासमुदायम् । **मां च** तन्नियामक-त्वेन । **शरीरस्थं कर्षयन्तो**ऽल्पगुणत्वेन पश्यन्तः । **अचेतसः** अविवेकिनः । **तान् आसुर-निश्चयान्** असुरसम्बन्धिनिश्चयान् । **विद्धि** जानीहि । ते दैत्यरक्षःपिशाचा इत्यर्थः । तमः प्राप्ति-योग्या इति भावः ॥ ६ ॥

***अ०प्र०—*** अचेतसः[१], शरीरस्थं[२], भूतग्रामं[३], कर्षयन्तः[४], तथा अन्तःशरीरस्थं[५], मां चैव कर्षयन्तः[६], एवं ये तपस्यन्ति तान्[७], असुरनिश्चयान्विद्धीति[८], अन्वयः ।

अचेतसो = ज्ञानिनः[१], भूतग्रामं = लक्ष्म्यादिदेवतासमूहम् । यद्वा, पृथिव्यादीनां समूहं[२], शरीरस्थं = जीवशरीरस्थं चकारेण परेषां शरीरस्थं च इन्द्रियसमूहं वा[३], कर्षयन्तः = कृशीकुर्वन्तः दुःखीकुर्वन्त इत्यर्थः[४], तथा अन्तःशरीरस्थनियामकत्वेन शरीरान्तस्थितम् । यद्वा, अन्तःशरीरं सूक्ष्मशरीरं लिङ्गदेहः । तस्मिन् अन्तर्यामित्वेन तिष्ठन्तं[५], माञ्चैव कर्षयन्तः = अनन्तगुणमपि कृश-

त्वेनांसत्वेन जानन्तः कृशं जानन्तीति कर्षयन्तः याति 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेति' सूत्रेण कृशशब्दात् ज्ञानार्थे णिच् कृते धातुसंज्ञायां लडादेशः । शत्रन्तोऽयं शब्दः मदाज्ञालङ्घनेनैव कर्षयन्तः सन्तः[६], अविवेकिनः एवं ये तपस्यन्ति तान्[७], आसुरनिश्चयान् = आसुरो अतिक्रूरो निश्चयो येषां तान् । यद्वा, आसुरकृत्यं निश्चयो येषां ते तान् विपरीतनिश्चयानित्यर्थः[८], एतादृशान् विद्धि = जानीहीत्यर्थः ॥ ६ ॥

**भाष्यम्**

## भगवत्कर्शनं नामाल्पत्वदृष्टिरेव ।

***प्र०दी०***— ननु निर्विकारस्य भगवतः कथं 'मां चैवान्तःशरीरस्थं कर्शयन्तः' इति कर्शनमुच्यते ? इत्यत आह **भगवदिति** । 'प्रातिपदिकात् धात्वर्थे बहुलं इष्टवच्च' इति वचनात् दृष्टिरपि णेरर्थ इति भावः । 'मां चैव जीवरूपेणान्तःशरीरस्थम्' इति व्याख्यानं तु सम्यग्-व्याख्यानेनैव परास्तम् । जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात् । 'मदनुशासनाकरणमेव मत्कर्शनम्' इति व्याख्याननिरासार्थं 'एव' इत्युक्तम् । अशाब्दत्वात् ।

***भा०दी०***— **प्रातिपदिकादिति** । तृच्प्रातिपदिकात् । दृशिरूपधात्वर्थेन बहुलं णिच् भवतीत्यर्थलाभात् गुणावादेशादौ सति 'कर्षयन्तः' इति रूपसिद्धेः **कर्शयन्तः** अल्पतां पश्यन्त इति गीतार्थ इत्यर्थ इति भावः । **सम्यगिति** । अल्पत्वदृष्टिरेवेति व्याख्यानेनैवेत्यर्थः । **अन्तःशरीरस्थमितीति** ।' कर्शयन्तः तदनुशासनमकुर्वन्त इति परव्याख्यानमित्यर्थः ।

***भा०र०***— ननु 'हेतुमति च', 'तत्करोति तदाचष्टे' इति वचनात् प्रयोजकव्यापारस्य करण-आख्यानयोश्चैव णिजर्थत्वात् कथं भाष्ये दृष्टिः णिजर्थतयोक्ता ? इत्यत आह **प्रातिपदिकादिति**। 'प्रातिपदिकाद् धात्वर्थे बहुलं इष्टवच्च' इति योगस्यायमर्थः । यस्मात्कस्माच्चित् प्रातिपदिकाद् यस्मिंस्कस्मिंश्चित् धात्वर्थे वाच्ये बहुलं णिच्प्रत्ययो भवति, इष्टवच्च = इष्ठन्प्रत्यये परे यथा कार्यं तथा णिच्परेऽपि स्यात् । तथा चात्र कृशयतीत्यर्थे कर्शः पचाद्यच् ।

न च 'कृश = तनूकरणे' इति धातोः इगुपधत्वाद् 'इगुपध-ज्ञा-प्री-किरः कः' इति कप्रत्यय एव स्यात्, सति चैवं 'कृशः' इत्येव रूपं भवति । ततः 'प्रातिपदिकाद्धात्वर्थे' इति णिचि 'कृशयन्तः' इत्येव स्यात्, न तु 'कर्शयन्तः' इति ? इति वाच्यम् । वाऽसरूपन्यायेन पचाद्यच एवात्रोत्पाद्यतयेष्टत्वात् । ततः कर्शप्रातिपदिकाद् दृशिधात्वर्थे णिचि, णौ इष्ठवत् प्रातिपदिकस्यैव

अतिदेशात् टिलोपे, ततः 'कर्शि' इत्यस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायाम्, तस्मात् लटः शत्रादेशे, शपि, सार्वधातुकलक्षणे गुणे, अयादेशे, शपोऽकारस्य 'अतो गुणे इति पररूपत्वे, स्वाद्युत्पत्तौ च 'कर्शयन्तः' इति रूपम्, तस्यार्थः 'अल्पत्वं पश्यन्ति' इति हृदि निधाय भाष्ये 'अल्पत्वदृष्टिः' इत्युक्तमिति भावः ।

ननु 'तत्करोति तदाचष्टे' इत्यादिना धात्वर्थस्य नियमितत्वात् कथं दृष्टिः धात्वर्थः स्यात् ? अत एव शङ्करः 'कर्शयन्तः = कृशं कुर्वन्तः' इति व्याचख्यौ, इति चेन्न । 'कूलं उल्लङ्घयति उत्कूलयति' इत्यादौ 'प्रातिपदिकाद् धात्वर्थे' इत्यनेन णिचं उत्पादयद्भिः वैयाकरणैः तत्करोतीत्यादेः तत्प्रपञ्चनार्थत्वस्याङ्गीकृतत्वेन नियमार्थत्वाभावात् – इत्यभियुक्ताः । **मां चैवेति** । मां चैव तत्कर्म बुद्धिसाक्षिभूतं अन्तःशरीरस्थम्' इति *शङ्कर*भाष्यस्यायं तात्पर्यानुवादः । **इति व्याख्यानं त्विति। जीवस्वरूपत्वदर्शनस्य** भगवतो जीवस्वरूपभावनस्य, जीवस्वरूपस्याल्पत्वादिति भावः। *शङ्कर*भाष्याक्षरानुवादः **मदनुशासनेति** । तल्लब्धां युक्तिमाह **अशाब्दत्वादिति** ।

**भाष्यम्**

**"यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी" इति अनभिम्लातश्रुतिः । आसुरो निश्चयो येषां त आसुरनिश्चयाः । "देवास्तु सात्त्विकाः प्रोक्ताः दैत्या राजसतामसाः" इति ह्याग्निवेश्यश्रुतिः ॥ ६ ॥**

***प०टी०***— ननु कथं नित्यपूर्णभगवतोऽन्यैः कृशीभावः 'कर्शयन्तः' इत्यनेनोच्यते ? इत्यत आह **भगवदिति** । 'आसुरनिश्चय'पदं व्याचष्टे **आसुर इति** । तांस्तामसानेव विद्धीत्येव वक्तव्यमित्यत आह **देवास्त्विति** ॥ ६ ॥

***प्र०दी०***— उक्तव्याख्याने श्रुतिसम्मतिं चाह **य इति** । **नैवं** महत्त्वविरुद्धम् । **द्रष्टा** इति तृन्नन्तम् । **कर्शकः** 'तस्योच्यते' इति शेषः । कर्मधारयत्वशङ्कानिरासार्थमाह **आसुर इति** । **निश्चयः** श्रद्धा । कर्मधारयपक्षे हि सामानाधिकरण्यं गौणमिति कल्प्यम्, मत्वर्थीयप्रत्ययो वा । तथा च गौरवमिति भावः ।

ननु प्रकरणात् 'तामसनिश्चयान्' इति वक्तव्यम् । 'आसुरनिश्चयान्' इति कथमुक्तम् ? इत्यत आह **देवास्त्विति** । **सात्त्विकाः देवाः** देवपर्यायवाच्याः प्रोक्ताः । **राजसाः** तामसाश्च **दैत्याः** दैत्यपर्यायवाच्याः **प्रोक्ताः** इत्यर्थः ॥ ६ ॥

*भा०दी०*— **श्रुतिसम्मतिं चेति** । व्याख्यार्थस्य शाब्दत्वसमुच्चयार्थश्चशब्दः । श्रुतौ **नैवमिति** । महत्त्वाद्यज्ञानप्रतीतिनिरासाय तद्विरुद्धाल्पत्वज्ञानलाभाय आह महत्त्वविरुद्धमिति । अल्पत्वं दृष्ट्वेत्यर्थः । **तृन्नन्तमिति** । तृजन्तत्वे सति 'कर्तृकर्मणोः कृति' इति षष्ठी स्यादिति भावः । **तस्येति** महतः परमपुंसमित्यर्थः । त्रिविधा भवति श्रद्धा इत्युपक्रमविरोधायाह **निश्चयः श्रद्धेति** । **गौणमिति** । असुरसम्बन्धिश्रद्धारूपत्वस्य तामसजनेषु मुख्यस्यासम्भवादित्यर्थः ।

**मत्वर्थीय इति** । 'अर्श आदिभ्योऽच्' इत्युक्तमत्वर्थक-अच्प्रत्ययान्तो वा कर्तव्य इत्यर्थः। **तामसनिश्चयानिति** । तामसश्रद्धानित्यर्थः । 'सात्त्विकाः सुराः' इत्यादि यत्र क्वचित् श्रुतप्रयोगनिर्वाहायाह **देवपर्यायेति** । 'राजसादेः इति श्रुतत्वाभावात् प्रकृते असुरशब्दस्यैव भावाच्चाह **दैत्यपर्यायेति** ॥ ६ ॥

*भा०र०*— **उक्तव्याख्याने** 'अल्पदर्शनमेव कर्शनम्' इति व्याख्याने । न केवलं अस्मद्व्याख्याने उक्तरीत्या शाब्दत्वमिति चशब्दः । ननु प्रमाणे नञो 'द्रष्टा' इति क्रियापदेनान्वये महत्त्वदर्शनाभाव एव लभ्यते, न पुनरल्पत्वदर्शनम् । तत्कथम् 'अल्पत्वद्रष्टा कर्शयन्' इत्यत्र सम्मतित्वम् ? इत्यतो 'नैवम्' इत्येकं पदम् इति भावेन तस्य प्रकृतसिद्ध्येऽर्थमाह **नैवं महत्त्वविरुद्धमिति** । महत्त्वस्य विरुद्धं = महत्त्वासामानाधिकरणं अल्पत्वम्, तद्वन्तं पुमांसं द्रष्टेत्यर्थः । दृशेः तृचि 'द्रष्टा' इति रूपत्वे तृचः कृत्त्वात् 'कर्तृकर्मणोः कृति' इति कर्मकारके षष्ठी स्यात् ? इत्यत आह **तृन्नन्तमिति** । ताच्छील्यविशिष्टार्थकतृन्रूपकृत्प्रत्ययान्तत्वे 'द्रष्टा' इति पदमिति कर्मणि द्वितीयोपपत्तिरिति भावः । अनेन 'सात्त्विकानामपि कदाचित् भगवति अल्पदृष्टिसम्भवात्, तेषामपि अतिपापशब्दितं तामसत्वं स्यात् ?' इत्यपास्तम् । तृन्प्रत्ययेन अल्पत्वदृष्टेः शीलत्वाभिधानात्, सात्त्विकानां अल्पत्वदृष्टिः न सहजा, इति नातिप्रसङ्ग इत्यपि सूचितम् । 'कर्शकः = अल्पत्वस्य द्रष्टा' इति भाष्यपदमनूद्य तत्र पदद्वयं शेषमाह **तस्योच्यत इति** । **तस्य** महतः पुंसः । 'त्रिविधा भवति श्रद्धा' इत्युपक्रमात् 'तान्' इति परामर्शाच्च 'आसुरश्रद्धान्' इति वक्तव्ये कथं निश्चयशब्दः ? इत्यत आह **निश्चयः श्रद्धेति** । श्रद्धाया निश्चयविशेषरूपत्वादियमुक्तिः ।

समासप्राबल्याद् 'आसुरनिश्चयान्' इत्यत्र कर्मधारय एवास्तु, तद्वत्त्वविवक्षायामपि कर्मधारयाद् अर्शआदिलक्षणं उत्पादयिष्यामः। बहुव्रीहिस्तु अन्यपदार्थप्रधानो जघन्य इति, न स आश्रयणीयः ? इत्याशङ्क्य पक्षद्वयेऽपि शेषमाह **कर्मधारयपक्षे हीति** । **सामानाधिकरण्यं** आसुरपुरुषाणां निश्चयाभेदः । द्वितीयपक्षे शेषमाह **मत्वर्थीयो वेति** । 'परेण कल्पनीयः' इति शेषः । **गौरवमिति**। आदौ कर्मधारयत्वकल्पनम्, ततो मत्वर्थीयाच्प्रत्ययकल्पनं चेति कल्पनागौरवमित्यर्थः । **केचित्तु**

'तान्' इति अशास्त्रविहितं घोरं तपः तप्यमानान् जनान् परामृश्य, तेषां आसुरनिश्चयात्मता वेदितव्या । तेषां च पुरुषाणां धर्मिभूतानां धर्मभूतनिश्चयात्मकत्वलक्षणं सामानाधिकरण्यं मुख्यमसम्भवीति गौणमेव वक्तव्यम् । कर्मधारयात् मत्वर्थीयप्रत्ययकल्पनपक्षे कल्पनाद्वयमिति गौरवमित्यर्थ इत्याहुः ।

**प्रकरणात्** 'तामसा जनाः' इति केषाञ्चिज्जनानां तामसपदेनैव प्रकृतत्वात् । 'तामसनिश्चयान् इति वक्तव्यम्' इति प्रश्नं प्रति उत्तरवाक्यं सङ्गमयितुं व्याख्याति **सात्त्विका इति** । 'सात्त्विकाः सुराः' इत्यादिरूपेण **यत्र** क्वापि श्रुतस्य प्रयोगस्य निर्वाहाय 'देवपर्यायवाच्याः' इत्युक्तमिति *स्वामिनः* । सहपाठविरोधपरिहारायैवमुक्तिः इति *अन्ये* । कर्मधारयप्रतीतिव्युदासायाह **राजसास्तामसाश्चेति** । **दैत्यपर्यायवाच्याः** दैत्यशब्ददैत्यपर्यायासुरादिशब्दवाच्या इति प्रकृतप्रश्नोत्तरमिति हृदयम् ॥ ६ ॥

*गीताक्षरार्थस्तु*—

चतुर्दशाध्याये **'नान्यं गुणेभ्यः कर्तारम्'** इति सर्वस्यापि कार्यवर्गस्य गुणपरिणामत्वमुक्तम् । श्रद्धादयश्च कार्यवर्गे प्रविष्टा इति तेऽपि गुणपरिणामा एव । ततश्च सत्त्वादिगुणपरिणामरूपाणां श्रद्धा-आहार-यज्ञ-तपःप्रभृतीनां भेदः प्रपञ्च्यते । 'सात्त्विकानामेतेषां पुमर्थसाधनत्वाद् अनुष्ठेयत्वम्, अन्येषां तद्विरुद्धत्वात् त्याज्यत्वम्' इति ज्ञापयितुमिति गुणनिमित्तश्रद्धादिभेदप्रपञ्चनं सप्तदशाध्यायावान्तरप्रतिपाद्योऽर्थः । चतुर्दशाध्यायादिपञ्चाध्यायानां कर्मध्यानलक्षणज्ञानसाधनेतिकर्तव्यतांशप्रतिपादकत्वस्य 'साधनं प्राधान्येनोत्तैरध्यायेर्वक्ति' इति प्रधानप्रतिपाद्यार्थस्य प्राग् भाषितत्वात्, समनन्तरातीताध्यायान्ते 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इति शास्त्रविधानोक्तं ज्ञात्वैव कर्म कर्तव्यमित्युक्त्या लब्धावसरोऽर्जुनः पप्रच्छेत्युच्यते **अर्जुन उवाच– ये शास्त्रविधिमिति** । ये जनाः **शास्त्रविधिं** श्रुतिस्मृतिचोदनां **उत्सृज्य** अज्ञात्वैव **श्रद्धयाऽन्विताः** केवलं लोकाचारप्रामाण्येन रिक्ता आस्तिक्यबुद्ध्या संयुक्ताः सन्तो **यजन्ते** देवादीन् पूजयन्ति **तेषां** एवम्भूतानां **तु निष्ठा** स्थितिः **का** कीदृशी ? सैव विविदिषया विविच्यते **सत्त्वमाहो रजस्तम इति** । 'आश्रिता' इति शेषः । किं सा निष्ठा सात्त्विकी ? आहोस्विद् राजसी ? उत तामसी ? इति यावत् ॥ १ ॥

एवमर्जुनेन वेदविधिमजानतां निष्ठाभेदः पृष्टः । अज्ञानं च न भेदकम् । सात्त्विक-राजस-तामसानां त्रयाणामपि तत्सम्भवात् । न चाज्ञानवैचित्र्यात् तद्वैचित्र्यं शङ्क्यम् । अज्ञानस्य ज्ञान-

प्रागभावरूपस्य वैचित्र्यायोगात् । अतः 'श्रद्धयाऽन्विताः' इति यजनाङ्गतया अज्ञानिविशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयणेन तेषां स्वरूपं ज्ञातव्यमिति भावेन भगवतोत्तरमुच्यते **श्रीभगवानुवाच– त्रिविधा भवति श्रद्धेति** । या त्वया यजनाङ्गतया शास्त्रविध्यज्ञानिपुरुषविशेषणत्वेनोक्ता **श्रद्धा सात्त्विकी राजसी तामसी** सत्त्व-रजः-तमोगुणनिमित्तेति **त्रिविधा** त्रिप्रकारा । चशब्दौ इतरेतरसमुच्चये । एवशब्दस्तु 'स्वभावज एव' इत्यन्वेति । सा चैवंविधा त्रिविधा श्रद्धा **स्वभावजैव** जीवस्वरूपभूतैव इत्युक्तिः मनोवृत्तिभूतश्रद्धाव्यावर्तनाय । **तां** एतां त्रिविधां श्रद्धां **शृणु** श्रुत्वा तत्र निष्ठां कुरु ॥ २ ॥

ननु श्रद्धास्वरूपमेव निरूपितम्, न तु तदाश्रितजीवस्वरूपम् । अतो न सङ्गतम् ? इत्यत उच्यते **सत्त्वानुरूपेति** । तत्र **यो** यजमानो **यच्छ्रद्धः** यादृशश्रद्धायुक्तः **स एव सः** तादृशः सात्त्विकश्रद्धः सात्त्विकः, राजसश्रद्धो राजसः, तामसश्रद्धः तामस इति श्रद्धयैव जीवस्वरूपं ज्ञातव्यं इत्यस्योपपादनायोक्तम् **सत्त्वानुरूपेति** । 'सत्त्वं जीवः क्वचित् प्रोक्तः' इति वचनात् सत्त्वशब्दोऽत्र जीववाची । **सर्वस्य** देहिजातस्य **श्रद्धा** तत्तज्जीवस्वरूपानुसारिणी भवति । श्रद्धाया जीवस्वरूपानुसारित्वात् तया तत्स्वरूपं ज्ञायत इत्यर्थः । श्रद्धाया जीवानुरूपत्वं कुतः ? इत्यत उक्तम् **श्रद्धामय इति** । मयट्प्रत्ययस्तादात्म्यार्थ इति श्रद्धारूपः **अयं पुरुषो** जीवः । जीवस्य श्रद्धानुरूपत्वात् श्रद्धया जीवानुरूपत्वं युक्तमिति भावः ॥ ३ ॥

कः सात्त्विकश्रद्धः ? कश्च राजसश्रद्धः ? इत्यादिजिज्ञासायां 'तां शृणु' इति प्रतिज्ञातं च श्रद्धात्रैविध्यमेव 'यो यच्छ्रद्धः' इत्यस्य विवरणेनोच्यते **यजन्त इति** । **ये** जनाः **देवान्** इन्द्रादीन् **तदन्तर्गतान्** तत्तन्नामकान् भगवद्रूपविशेषांश्च **यजन्ते** पूजयन्ति ते **सात्त्विकाः** सात्त्विकश्रद्धाः । **ये** तु जनाः **यक्षरक्षांसि यजन्ते** ते **राजसाः** राजसश्रद्धाः, **ये च** सात्त्विकराजसेभ्यः **अन्ये तु प्रेतान् भूतगणांश्च यजन्ते** ते **तामसाः** तामसश्रद्धाः ।

अत्र श्लोके 'यजन्ते सात्त्विका देवान्' इति 'देवान् यजन्तः सात्त्विकश्रद्धाः' इति वदन् गीताचार्यः शास्त्रविधिमजानन्तोऽपि श्रद्धापारवश्याद् देवान् यजन्तः सात्त्विकश्रद्धाः ? किमुत शास्त्रविधिं परिजानन्तः सन्तो देवान् यजन्त इत्यभिसन्धत्ते । यद्यपि राजस-तामसाश्च 'ऐन्द्रं चरं रौद्रं गावीधुकं चरुम्' इत्यादिशास्त्रोक्ता इन्द्रादिदेवता एव यजन्ते, न तु यक्षादीन् । तथापि राजसैः क्रियमाणे यज्ञे ब्रह्मेन्द्रादिसमानानामका यक्षरक्षसा एव हविर्भुञ्जते । तामसैः क्रियमाणे तु यज्ञे साक्षात् शिवपरिवाराः शिव-स्कन्दादिनामानो भूताः प्रेतगणाश्च हविर्भुञ्जत इति भोक्तृभेदविवक्षया 'यक्षरक्षांसि' इति, 'भूतान् प्रेतगणांश्च' इति चोक्तिरुपपद्यत इति ज्ञातव्यविशेष उत्तरप्रस्थानतोऽवगन्तव्यः ॥ ४ ॥

यक्ष-रक्षो-भूत-प्रेतगणयाजिनो राजसास्तामसा इत्युक्तम् । इतोऽपि तन्निष्ठैव विविच्योच्यते **अशास्त्रविहितमिति द्वाभ्याम्** । **ये जनाः** वेदादिशास्त्रविरुद्धम् = अशास्त्रम् = दुरागमः, तद्विहितं = तत्र कर्तव्यत्वेनोक्तं भगवच्छ्रद्धाविरहितत्वात् शास्त्रविहितमपि अशास्त्रविहितमिति वा **घोरं** भूतभयङ्करं **तपस्तप्यन्ते** निर्वर्तयन्ति । तत्र हेतूक्तिः **दम्भाहङ्कारसंयुक्ताः** । दम्भः = लोकवचनम्, अहङ्कारः = 'अहमेव क्रियाकर्ता' इत्यभिमानः, ताभ्यां संयुक्ताः **कामरागबलान्विताः** कामः = दुष्टविषयाभिलाषः, रागः = आसक्तिः, तद् बलं तेन अन्विताः । बलम् = आग्रहः, तैरन्विता इति वा । 'तपस्तप्यन्ते' इत्युपलक्षणम् 'यज्ञदानजपादि कुर्वन्ति' इत्यपि ग्राह्यम् ॥ ५ ॥

किञ्च **शरीरस्थं** प्राणिशरीरे च नियामकतया स्थितं भूतग्रामं लक्ष्मी-विरिञ्चि-वाणी-ईशादि-देवतासमूहं नियामकतया सर्वशरीरे स्थितं **मां च कर्शयन्तः** अल्पत्वेन पश्यन्तः = अनन्तगुणं भगवन्तं मां, बहुगुणान् रमादींश्च अल्पगुणत्वेन पश्यन्तः । किमिति तथा पश्यन्ति ? **अचेतसः** असम्यग्ज्ञानाः, एतान् आसुरो निश्चयः = श्रद्धा येषां ते आसुरनिश्चयाः तान् । अत्रासुरशब्दो राजसतामसशब्दितसात्त्विकशब्दार्थसुरविरुद्धजनार्थः सम्पद्यते । **विद्धि** जानीहीति ॥ ६ ॥

**गीता**

# आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
# यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

***वि०वि०***— श्रद्धाभेदात् सात्त्विकादिजीवस्वरूपं ज्ञातव्यमित्युक्तम् । आहारादिभेदादपि ज्ञातव्यमित्याशयेनाह **आहारस्त्वपीत्यादिना** । आहारः अन्नादिः **सात्त्विकादिभेदेन** त्रिविधः । त्रिविधानां प्रियः । **यथा यज्ञादीनि** त्रिविधानि । तेषामाहारादीनां **वक्ष्यमाणभेदं** शृणु ॥ ७ ॥

***सा०सं०***— श्रद्धाभेदात् सात्त्विकादिभेदः तत्तदीयसदसत्कर्मविवेकेन सात्त्विकादिस्वरूपविवेक उक्तः । आहारादिभेदेनापि तेषां विवेकं प्रतिज्ञापूर्वमाह **आहारस्त्वित्यादि** सप्तभिः । **सर्वस्येति** । सात्त्विकादिजनस्येत्यर्थः । **यज्ञस्तपोदानं** तथा त्रिविधमित्यर्थः । **तेषामिति** । आहारादीनामित्यर्थः ॥ ७ ॥

***अ०प्र०***— एवं श्रद्धाभेदाज्जीवभेदमुक्त्वा आहारादिभेदानपि वक्तुमाह **आहारस्त्वपि** इति चतुर्भिः ॥

सर्वस्य[१], आहारोऽपि[२], त्रिविधा[३], प्रियः[४], भवति[५], यज्ञः[६], तपः[७], तथा दानं[८], एतान्यपि तु त्रिविधानि[९], तेषां[१०] इमं[११], भेदं[१२], शृणु[१३] ।

सर्वस्य = प्राणिमात्रस्य[१], आहारो = अन्नादिरपि[२], त्रिविधा = त्रिप्रकारः सात्त्विकादिभेदेन त्रैविध्यस्य जीवस्य क्रमात् त्रिविधा[३], प्रियः = अभीष्टः भवति[५], एवं यज्ञः[६], तपः[७], तथा दानं[८], तुशब्देन एतान्यपि त्रिविधानि[९], तेषां इमं[११], भेदं[१२], शृणु[१३], आज्ञापयामीत्यर्थः ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**श्रद्धेत्यास्तिक्यनिष्ठोक्ता सा येषां देवतोत्तमे ।**
**विष्णौ तद्भक्तबुद्ध्यैव रमाब्रह्मादिकेषु तु (च) ॥**

**ते सात्त्विका इति ज्ञेयास्तैरिष्टं विष्णुरेव तु ।**
**श्रीश्च साऽध्यक्षविद्याख्या ब्रह्मेन्द्राद्याश्च देवताः ॥**

**विबुधत्वात्तु मन्वाख्या भुञ्जते प्रीतिपूर्वकम् ।**
**व्यामिश्रयाजिनो ये तु विष्ण्वाधिक्ये ससंशयाः ॥**

**स्वरूपमात्रे देवानां श्रद्धायुक्ताश्च सर्वदा ।**
**राजसास्ते तु विज्ञेयास्तैरिष्टं यक्षराक्षसाः ॥**

**दीनत्वाद् देवनामानो ब्रह्मेन्द्रादिसनामकाः ।**
**गृह्णन्ति ये हरिं त्वन्यदेवादिसममेव तु (वा) ॥**

**नीचं ब्रह्माद्यनन्यं वा मन्यन्ते नेति चाखिलम् ।**
**तत्तच्छ्रद्धायुतास्ते तु तामसाः परिकीर्तिताः ॥**

**भूतप्रेतास्तु तैरिष्टं शिवस्कन्दादिनामकाः ।**
**साक्षाच्छिवपरीवारा भुञ्जते ह्यतितामसाः ॥**

***प्रका०*— "यजन्ते सात्त्विका" इत्यादेरर्थमाह **श्रद्धेत्यास्तिक्यनिष्ठोक्तेत्यादिना** ।

***न्या०दी०*— कथं श्रद्धया जीवस्वरूपविवेक इत्यत आह **श्रद्धेति** ॥ अनेन यजन्त इत्युक्तार्थं भवति । व्यामिश्रयाजिनोऽक्रमेण याजिनः (यजमानाः) । अखिलं जगन्मिथ्येति

यक्ष-रक्षो-भूत-प्रेतगणयाजिनो राजसास्तामसा इत्युक्तम् । इतोऽपि तन्निष्ठैव विविच्योच्यते **अशास्त्रविहितमिति द्वाभ्याम्** । **ये जनाः** वेदादिशास्त्रविरुद्धम् = अशास्त्रम् = दुरागमः, तद्विहितं = तत्र कर्तव्यत्वेनोक्तं भगवच्छ्रद्धाविरहितत्वात् शास्त्रविहितमपि अशास्त्रविहितमिति वा **घोरं** भूतभयङ्करं **तपस्तप्यन्ते** निर्वर्तयन्ति । तत्र हेतूक्तिः **दम्भाहङ्कारसंयुक्ताः** । दम्भः = लोकवचनम्, अहङ्कारः = 'अहमेव क्रियाकर्ता' इत्यभिमानः, ताभ्यां संयुक्ताः **कामरागबलान्विताः** कामः = दुष्टविषयाभिलाषः, रागः = आसक्तिः, तद् बलं तेन अन्विताः । बलम् = आग्रहः, तैरन्विता इति वा । 'तपस्तप्यन्ते' इत्युपलक्षणम् 'यज्ञदानजपादि कुर्वन्ति' इत्यपि ग्राह्यम् ॥ ५ ॥

किञ्च **शरीरस्थं** प्राणिशरीरे च नियामकतया स्थितं भूतग्रामं लक्ष्मी-विरिञ्चि-वाणी-ईशादि-देवतासमूहं नियामकतया सर्वशरीरे स्थितं **मां च कर्शयन्तः** अल्पत्वेन पश्यन्तः = अनन्तगुणं भगवन्तं मां, बहुगुणान् रमादींश्च अल्पगुणत्वेन पश्यन्तः । किमिति तथा पश्यन्ति ? **अचेतसः** असम्यग्ज्ञानाः, एतान् आसुरो निश्चयः = श्रद्धा येषां ते आसुरनिश्चयाः तान् । अत्रासुरशब्दो राजसतामसशब्दितसात्त्विकशब्दार्थसुरविरुद्धजनार्थः सम्पद्यते । **विद्धि** जानीहीति ॥ ६ ॥

**गीता**

## आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
## यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

***वि०वि०—*** श्रद्धाभेदात् सात्त्विकादिजीवस्वरूपं ज्ञातव्यमित्युक्तम् । आहारादिभेदादपि ज्ञातव्यमित्याशयेनाह **आहारस्त्वपीत्यादिना** । आहारः अन्नादिः सात्त्विकादिभेदेन त्रिविधः । त्रिविधानां प्रियः । यथा यज्ञादीनि त्रिविधानि । तेषामाहारादीनां वक्ष्यमाणभेदं शृणु ॥ ७ ॥

***सा०सं०—*** श्रद्धाभेदात् सात्त्विकादिभेदः तत्तदीयसदसत्कर्मविवेकेन सात्त्विकादिस्वरूपविवेक उक्तः । आहारादिभेदेनापि तेषां विवेकं प्रतिज्ञापूर्वमाह **आहारस्त्वित्यादि** सप्तभिः । **सर्वस्येति** । सात्त्विकादिजनस्येत्यर्थः । **यज्ञस्तपोदानं** तथा त्रिविधमित्यर्थः । **तेषामिति** । आहारादीनामित्यर्थः ॥ ७ ॥

***अ०प्र०—*** एवं श्रद्धाभेदाजीवभेदमुक्त्वा आहारादिभेदानपि वक्तुमाह **आहारस्त्वपि** इति चतुर्भिः ॥

सर्वस्य[१], आहारोऽपि[२], त्रिविधा[३], प्रियः[४], भवति[५], यज्ञः[६], तपः[७], तथा दानं[८], एतान्यपि तु त्रिविधानि[९], तेषां[१०] इमं[११], भेदं[१२], शृणु[१३] ।

सर्वस्य = प्राणिमात्रस्य[१], आहारो = अन्नादिरपि[२], त्रिविधा = त्रिप्रकारः सात्त्विकादिभेदेन त्रैविध्यस्य जीवस्य क्रमात् त्रिविधा[३], प्रियः = अभीष्टः भवति[५], एवं यज्ञः[६], तपः[७], तथा दानं[८], तुशब्देन एतान्यपि त्रिविधानि[९], तेषां इमं[११], भेदं[१२], शृणु[१३], आज्ञापयामीत्यर्थः ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**श्रद्धेत्यास्तिक्यनिष्ठोक्ता सा येषां देवतोत्तमे ।**
**विष्णौ तद्भक्तबुद्ध्यैव रमाब्रह्मादिकेषु तु (च) ॥**
**ते सात्त्विका इति ज्ञेयास्तैरिष्टं विष्णुरेव तु ।**
**श्रीश्च साऽध्यक्षविद्याख्या ब्रह्मेन्द्राद्याश्च देवताः ॥**
**विबुधत्वात्तु मन्वाख्या भुञ्जते प्रीतिपूर्वकम् ।**
**व्यामिश्रयाजिनो ये तु विष्ण्वाधिक्ये ससंशयाः ॥**
**स्वरूपमात्रे देवानां श्रद्धायुक्ताश्च सर्वदा ।**
**राजसास्ते तु विज्ञेयास्तैरिष्टं यक्षराक्षसाः ॥**
**दीनत्वाद् देवनामानो ब्रह्मेन्द्रादिसनामकाः ।**
**गृह्णन्ति ये हरिं त्वन्यदेवादिसममेव तु (वा) ॥**
**नीचं ब्रह्माद्यनन्यं वा मन्यन्ते नेति चाखिलम् ।**
**तत्तच्छ्रद्धायुतास्ते तु तामसाः परिकीर्तिताः ॥**
**भूतप्रेतास्तु तैरिष्टं शिवस्कन्दादिनामकाः ।**
**साक्षाच्छिवपरीवारा भुञ्जते ह्यतितामसाः ॥**

*प्रका०*— "यजन्ते सात्त्विका" इत्यादेरर्थमाह **श्रद्धेत्यास्तिक्यनिष्ठोक्तेत्यादिना** ।

***न्या०दी०*— कथं श्रद्धया जीवस्वरूपविवेक इत्यत आह श्रद्धेति** ॥ अनेन यजन्त इत्युक्तार्थं भवति । व्यामिश्रयाजिनोऽक्रमेण याजिनः (यजमानाः) । अखिलं जगन्मिथ्येति

**मन्यन्त** इत्यर्थः । अनेन सर्वयाजिनां देवतायाजित्वसाम्येऽपि भोक्तृत्वविवक्षया देवानित्याद्युक्तिरित्युक्तं भवति ।

*भा०दी०*— **व्यामिश्रयाजिन** इत्यनुवादः **अक्रमेणेत्यादि** व्याख्या । यजमानाः यागं कुर्वाणा इत्यर्थः । नेति चाखिलमित्यस्यार्थः **अखिलमित्यादि** ॥

**गीतातात्पर्यनिर्णयः**

**मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वं फलं क्रमात् ।**
**त्यक्त्वाऽपि शास्त्रविहितं मिथ्याज्ञानविवर्जिताः ॥**
**भक्त्या विष्णुं यजन्ते ये निषिद्धचरणोज्झिताः ।**
**तेऽपि यान्ति हरिं शास्त्रविधानस्थाः कुतः पुनः ॥**

*प्रका०*— सात्त्विकानां राजसानां तामसानां च क्रमेण फलमाह **मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वमिति** । स्वर्गप्रतिनिधित्वेन कल्पितसाङ्कल्पिका स्वर्गोदितः । "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । तेषां निष्ठा तु के"त्यस्य परिहारत्वेनोक्तं ये सात्त्विकश्रद्धास्ते सात्त्विका इति, तद्विवृणोति **त्यक्त्वेत्यादिना** ।

*न्या०दी०*— **"अध्यक्षविद्याख्या", "दीनत्वात्", "शिवस्कन्दादि" इत्यनेन क्वचित्तथोक्तीनां गतिरुक्ता स्यात् । त्रिविधानां तेषां यजनफलमाह मोक्ष इति ॥ स्वर्गप्रतिनिधित्वेन कल्पितः साङ्कल्पिकः स्वर्गः । उक्तरीत्या सात्त्विकानां किं शास्त्रविधिं जानतामजानतामपि मोक्ष इत्यत आह त्यक्त्वेति ॥ अनेन शास्त्रविध्युत्सर्गाद्यप्रयोजकीकृत्य श्रद्धाया एव प्रयोजकत्वकथनस्याभिप्रायोऽपि वर्णितो भवति ।**

*भा०दी०*— **क्वचित्तथोक्तीनामिति** । क्वचिद्ग्रन्थे अध्यक्षविद्या भुङ्क्ते, देवा भुञ्जते, शिवस्कन्दादयो भुञ्जन्त इत्युक्तेर्गतिरुक्ता भवतीत्यर्थः ॥ **अनेनेति** । त्यक्त्वापि शास्त्रविहितमित्यादिनेत्यर्थः ॥ **शास्त्रविध्युत्सर्गादीति** । शास्त्रविध्यज्ञानज्ञानेत्यर्थः । **प्रयोजकत्वकथनस्येति** । गीतायां त्रिविधेत्यादिनेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥**

अकृशानपि लक्ष्म्यादीन् देवान् विष्णुपरायणान् ।
विष्णुं च सर्वदेहस्थं कृशत्वेन विजानते ॥
तेषामल्पगुणत्वेन कल्पनात्ते तमो ध्रुवम् ।
यान्ति ज्ञेयाश्च ते दैत्याः पिशाचा वाऽथ राक्षसाः ।
अन्नैश्चैवाथ यज्ञाद्यैः प्रायो ज्ञेया इमे नराः ॥

*प्रका०*— **दैत्याः पिशाचा वाऽथ राक्षसाः** ॥ कर्शयन्तः शरीरस्थं भूतग्राममचेतसः । माञ्चैवान्तश्शरीरस्थं तान्विद्ध्यासुरनिश्चयानित्यस्यार्थ उच्यते **अकृशानपीत्यादिना** । आहारस्त्वपी-त्यादेरर्थमाह **अन्नैरित्यादिना** ।

*न्या०दी०*— तामसानां भूतादित्वमवान्तरफलमेव । मुख्यं तु तम एवेत्युपपादयति **अशास्त्रेति** ॥ ज्ञेयाश्चेत्यनेन "तान् विद्धि" इत्युक्तार्थं भवति । अन्नैश्चेत्यनेन 'आहारः' इत्यादेस्तात्पर्यमुक्तं भवति ।

**गीतातात्पर्यनिर्णयः**

सात्त्विकाः सात्त्विकान् कुर्युर्यस्मादन्ये तथेतरान् ॥
ॐतत्सदिति यद् विष्णोर्नामत्रयमुदाहृतम् ।
प्रसिद्धं वैदिकं यस्मात् कर्म तद्विषयं हि सत् ।
तत्राश्रद्धाकृतं तस्मादसदित्येव कीर्त्यते ॥

*प्रका०*— इमे नरा इति सात्त्विकराजसादय उच्यन्ते **ॐ तत्सदित्यादिना** ।

*न्या०दी०*— श्रद्धाया जीवस्वरूपत्वेन तथा तज्ज्ञानमुपपद्यते । आहाराद्यैस्तत्कथ-मित्यत आह **सात्त्विका इति** ॥ अत्र जीवानां सात्त्विकत्वादि उत्तमत्वादीति ज्ञेयम् । सात्त्विकयज्ञादीनामित्थंभावान्तरविधानायाह **ओमिति** ॥ अनेन "ॐ तत्सत्", "कर्म च" इत्यादि व्याख्यातं भवति ।

*भा०दी०*— **तज्ज्ञाने तज्ज्ञानमिति** । सात्त्विकादिश्रद्धाज्ञाने सात्त्विकादिजीवस्वरूपज्ञान-मित्यर्थः ॥ **सात्त्विकादीति** । सात्त्विकत्वमुत्तमत्वं राजसत्वं मध्यमत्वं तामसत्वमधमत्वमिति ज्ञातव्यमित्यर्थः ।

**मन्यन्त इत्यर्थः । अनेन सर्वयाजिनां देवतायाजित्वसाम्येऽपि भोक्तृत्वविवक्षया देवानित्याद्युक्तिरित्युक्तं भवति ।**

***भा०दी०*— व्यामिश्रयाजिन** इत्यनुवादः **अक्रमेणेत्यादि** व्याख्या । यजमानाः यागं कुर्वाणा इत्यर्थः । नेति चाखिलमित्यस्यार्थः **अखिलमित्यादि** ॥

**गीतातात्पर्यनिर्णयः**

**मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वं फलं क्रमात् ।**
**त्यक्त्वाऽपि शास्त्रविहितं मिथ्याज्ञानविवर्जिताः ॥**
**भक्त्या विष्णुं यजन्ते ये निषिद्धचरणोज्झिताः ।**
**तेऽपि यान्ति हरिं शास्त्रविधानस्थाः कुतः पुनः ॥**

***प्रका०*—** सात्त्विकानां राजसानां तामसानां च क्रमेण फलमाह **मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वमिति** । स्वर्गप्रतिनिधित्वेन कल्पितसाङ्कल्पिका स्वर्गोदितः । "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । तेषां निष्ठा तु के"त्यस्य परिहारत्वेनोक्तं ये सात्त्विकश्रद्धास्ते सात्त्विका इति, तद्विवृणोति **त्यक्त्वेत्यादिना** ।

***न्या०दी०*— "अध्यक्षविद्याख्या", "दीनत्वात्", "शिवस्कन्दादि" इत्यनेन क्वचित्तथोक्तीनां गतिरुक्ता स्यात् । त्रिविधानां तेषां यजनफलमाह मोक्ष इति ॥ स्वर्गप्रतिनिधित्वेन कल्पितः साङ्कल्पिकः स्वर्गः । उक्तरीत्या सात्त्विकानां किं शास्त्रविधिं जानतामजानतामपि मोक्ष इत्यत आह त्यक्त्वेति ॥ अनेन शास्त्रविध्युत्सर्गाद्यप्रयोजकीकृत्य श्रद्धाया एव प्रयोजकत्वकथनस्याभिप्रायोऽपि वर्णितो भवति ।**

***भा०दी०*— क्वचित्तथोक्तीनामिति** । क्वचिद्ग्रन्थे अध्यक्षविद्या भुङ्क्ते, देवा भुञ्जते, शिवस्कन्दादयो भुञ्जन्त इत्युक्तेर्गतिरुक्ता भवतीत्यर्थः ॥ **अनेनेति** । त्यक्त्वापि शास्त्रविहितमित्यादिनेत्यर्थः ॥ **शास्त्रविध्युत्सर्गादीति** । शास्त्रविध्यज्ञानज्ञानेत्यर्थः । **प्रयोजकत्वकथनस्येति** । गीतायां त्रिविधेत्यादिनेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥**

अकृशानपि लक्ष्म्यादीन् देवान् विष्णुपरायणान् ।
विष्णुं च सर्वदेहस्थं कृशत्वेन विजानते ॥
तेषामल्पगुणत्वेन कल्पनात्ते तमो ध्रुवम् ।
यान्ति ज्ञेयाश्च ते दैत्याः पिशाचा वाऽथ राक्षसाः ।
अन्नैश्चैवाथ यज्ञाद्यैः प्रायो ज्ञेया इमे नराः ॥

*प्रका०*— **दैत्याः पिशाचा वाऽथ राक्षसाः** ॥ कर्शयन्तः शरीरस्थं भूतग्राममचेतसः । माञ्चैवान्तश्शरीरस्थं तान्विद्ध्यासुरनिश्चयानित्यस्यार्थ उच्यते **अकृशानपीत्यादिना** । आहारस्त्वपी-त्यादेरर्थमाह **अन्नैरित्यादिना** ।

*न्या०दी०*— तामसानां भूतादित्वमवान्तरफलमेव । मुख्यं तु तम एवेत्युपपादयति **अशास्त्रेति** ॥ **ज्ञेयाश्चेत्यनेन** "तान् विद्धि" इत्युक्तार्थं भवति । **अन्नैश्चेत्यनेन** 'आहारः' इत्यादेस्तात्पर्यमुक्तं भवति ।

**गीतातात्पर्यनिर्णयः**

सात्त्विकाः सात्त्विकान् कुर्युर्यस्मादन्ये तथेतरान् ॥
ॐतत्सदिति यद् विष्णोर्नामत्रयमुदाहृतम् ।
प्रसिद्धं वैदिकं यस्मात् कर्म तद्विषयं हि सत् ।
तत्राश्रद्धाकृतं तस्मादसदित्येव कीर्त्यते ॥

*प्रका०*— इमे नरा इति सात्त्विकराजसादय उच्यन्ते **ॐ तत्सदित्यादिना** ।

*न्या०दी०*— श्रद्धाया जीवस्वरूपत्वेन तया तज्ज्ञानमुपपद्यते । आहाराद्यैस्तत्कथ-मित्यत आह **सात्त्विका इति** ॥ अत्र जीवानां सात्त्विकत्वादि उत्तमत्वादीति ज्ञेयम् । सात्त्विकयज्ञादीनामित्थंभावान्तरविधानायाह **ओमिति** ॥ अनेन "ॐ तत्सत्", "कर्म च" इत्यादि व्याख्यातं भवति ।

*भा०दी०*— **तज्ज्ञाने तज्ज्ञानमिति** । सात्त्विकादिश्रद्धाज्ञाने सात्त्विकादिजीवस्वरूपज्ञान-मित्यर्थः ॥ **सात्त्विकादीति** । सात्त्विकत्वमुत्तमत्वं राजसत्वं मध्यमत्वं तामसत्वमधमत्वमिति ज्ञातव्यमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**विप्रा वेदाश्च यज्ञाश्च यस्मादोताः परस्परम् ॥**

**विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः ।**
**ओतमस्मिन्निदं सर्वमिति चोक्तः स ओमिति ॥**

**तस्मादोमिति यज्ञादीन् प्रवर्तन्ते हि वैदिकाः ।**

*प्रका०*— **यज्ञादीन् प्रवर्तन्त** इति । प्रवर्तयन्त इत्यर्थः ।

*न्या०दी०*— केन हेतुना विष्णोरोमिति नामेत्यत आह **विप्रा इति** ॥ तस्मादोङ्कारस्य भगवन्नामत्वात्, ओमित्युच्चार्येति शेषः । **प्रवर्तन्त इति** । प्रवर्तयन्तीत्यर्थः । अनेन ब्राह्मणा इत्याद्युक्तार्थं भवति ।

*भा०दी०*— तस्मादित्यनुवादः ॐकारस्येत्यादि व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

**अनोङ्कृतं ह्यासुरं स्याद् यत्तस्मादोङ्कृतं त्वपि ।**
**ॐकारार्थहरेः सम्यग्ज्ञानादासुरं भवेत् ।**
**फलं त्वनभिसन्धाय तद् ब्रह्म स्यान्ममास्पदम् ॥**

**इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः ।**
**अभिसन्धितं हि तत् प्रोक्तं ततं वा स्वगुणैः सदा ॥''**

**—इत्यादि च ।**

*न्या०दी०*— भगवन्नामान्तरसद्भावात् कथमेतदुच्चारणनियतिरित्यतोऽस्य विशेषमाह **अनोङ्कृतमिति** ॥ ओङ्कारोच्चारणं तदर्थज्ञानपूर्वकमेव कार्यमिति भावेनाह **ओङ्कृतं त्विति** ॥ किंनिमित्तं विष्णोस्तदिति नामेत्यत आह **फलमिति** ॥ अनेन तदित्युक्तार्थं भवति ।

**गीतातात्पर्यनिर्णयः**

**''मयं प्रधानमुद्दिष्टं स्वरूपं कार्यमेव च ॥'' इति शब्दनिर्णये ।**

***प्रका०***— "श्रद्धामयोऽयं पुरुष" इत्यत्र मयब्रह्मशब्दस्यानेकार्थत्वात् । श्रद्धास्वरूप इति यदुक्तं तदुपपादयति **मयं प्रधानमिति** ।

***न्या०दी०***— **ननु मयट्प्रत्ययस्य** विकारैकार्थत्वात् **कथं श्रद्धामय इत्यस्य श्रद्धास्वरूप इति व्याख्येत्यत आह मयमिति** ॥

**गीतातात्पर्यनिर्णयः**

**शास्त्रविहितमपि भगवच्छ्रद्धाविहीनमसदेवेति वक्ष्यति अश्रद्धया हुतमिति ।**

***प्रका०***— "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता" इत्यस्य परिहारत्वेनोक्तं "ये सात्त्विकश्रद्धास्ते सात्त्विका इति । तद्युक्तियुक्तमित्याह **शास्त्रविहितमपीत्यादिना** ।

***न्या०दी०***— **श्रद्धैव प्रयोजिका न तु शास्त्रविधानानुसारित्वादीति यत्परिहारवाक्याभिप्रायवर्णनं तत्कुत इत्यत आह शास्त्रेति** ॥ भगवतैव श्रद्धाभावे शास्त्रविधानानुसारिणोऽप्यसत्त्वस्यैवोक्तत्वात् **श्रद्धैव प्रयोजिका नान्यदिति** ज्ञायत इति भावः । हुतमित्यत्र शास्त्रविधानानुसारेणेति सिद्धम् । विधानोक्तिप्रसङ्गात् । अङ्गीकृत्य चेदमुक्तम् ।

***भा०दी०***— इति सिद्धमिति कथमेतज्ज्ञायत इत्यत आह **उक्तिप्रसङ्गादिति** । प्रकरणबलादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**भगवच्छ्रद्धाविरहितत्वादेव चाशास्त्रविहितं भवति ।**

**"विष्णुभक्तिविधानार्थं सर्वं शास्त्रं प्रवर्तते ॥"**

**—इति पैङ्गिश्रुतिः ॥ ४-७ ॥**

***न्या०दी०***— भगवच्छ्रद्धाभावे शास्त्रविधानानुसारित्वं च नास्ति । ततोऽपि श्रद्धैव सात्त्विकत्वादौ प्रयोजिकेत्याशयेनाह **भगवदिति** ॥ तत्कुत इत्यत आह **विष्णुभक्तीति** ॥ विष्णुभक्तिविधानार्थमेव शास्त्रप्रवृत्तिश्रुतेः तदभावे न शास्त्रविधानानुसारित्वं भवतीत्यर्थः । शास्त्रविधानस्याप्रयोजकत्वे कथमशास्त्रविहितमिति तामसत्वे प्रयोजकत्वमुच्यत इत्यतो वाऽऽह **भगवदिति** ॥

**गीतातात्पर्यनिर्णयः**

**विप्रा वेदाश्च यज्ञाश्च यस्मादोताः परस्परम् ॥**

**विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः ।**
**ओतमस्मिन्निदं सर्वमिति चोक्तः स ओमिति ॥**

**तस्मादोमिति यज्ञादीन् प्रवर्तन्ते हि वैदिकाः ।**

*प्रका०*— **यज्ञादीन् प्रवर्तन्त** इति । प्रवर्तयन्त इत्यर्थः ।

***न्या०दी०*— केन हेतुना विष्णोरोमिति नामेत्यत आह विप्रा इति ॥ तस्मादोङ्कारस्य** भगवन्नामत्वात्, ओमित्युच्चार्येति शेषः । **प्रवर्तन्त इति** । प्रवर्तयन्तीत्यर्थः । अनेन ब्राह्मणा इत्याद्युक्तार्थं भवति ।

*भा०दी०*— तस्मादित्यनुवादः ॐकारस्येत्यादि व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

**अनोङ्कृतं ह्यासुरं स्याद् यत्तस्मादोङ्कृतं त्वपि ।**
**ॐकारार्थहरेः सम्यगज्ञानादासुरं भवेत् ।**
**फलं त्वनभिसन्धाय तद् ब्रह्म स्यान्ममास्पदम् ॥**

**इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः ।**
**अभिसन्धितं हि तत् प्रोक्तं ततं वा स्वगुणैः सदा ॥''**

—इत्यादि च ।

***न्या०दी०*—** भगवन्नामान्तरसद्भावात् कथमेतदुच्चारणनियतिरित्यतोऽस्य विशेषमाह **अनोङ्कृतमिति** ॥ ओङ्कारोच्चारणं तदर्थज्ञानपूर्वकमेव कार्यमिति भावेनाह **ओङ्कृतं त्विति** ॥ किंनिमित्तं विष्णोस्तदिति नामेत्यत आह **फलमिति** ॥ अनेन तदित्युक्तार्थं भवति ।

**गीतातात्पर्यनिर्णयः**

**''मयं प्रधानमुद्दिष्टं स्वरूपं कार्यमेव च ॥''** इति शब्दनिर्णये ।

*प्रका०*— "श्रद्धामयोऽयं पुरुष" इत्यत्र मयब्रह्मशब्दस्यानेकार्थत्वात् । श्रद्धास्वरूप इति यदुक्तं तदुपपादयति **मयं प्रधानमिति** ।

***न्या०दी०*— ननु मयट्प्रत्ययस्य** विकारैकार्थत्वात् कथं **श्रद्धामय इत्यस्य श्रद्धास्वरूप इति व्याख्येत्यत आह मयमिति** ॥

**गीतातात्पर्यनिर्णयः**

**शास्त्रविहितमपि भगवच्छ्रद्धाविहीनमसदेवेति वक्ष्यति अश्रद्धया हुतमिति ।**

*प्रका०*— "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता" इत्यस्य परिहारत्वेनोक्तं "ये सात्त्विकश्रद्धास्ते सात्त्विका इति । तद्युक्तियुक्तमित्याह **शास्त्रविहितमपीत्यादिना** ।

***न्या०दी०*— श्रद्धैव प्रयोजिका न तु शास्त्रविधानानुसारित्वादीति यत्परिहारवाक्याभिप्रायवर्णनं तत्कुत इत्यत आह शास्त्रेति ॥ भगवतैव श्रद्धाभावे शास्त्रविधानानुसारिणोऽप्यसत्त्वस्यैवोक्तत्वात् श्रद्धैव प्रयोजिका नान्यदिति ज्ञायत इति भावः । हुतमित्यत्र शास्त्रविधानानुसारेणेति सिद्धम् । विधानोक्तिप्रसङ्गात् । अङ्गीकृत्य चेदमुक्तम् ।**

*भा०दी०*— इति सिद्धमिति कथमेतज्ज्ञायत इत्यत आह **उक्तिप्रसङ्गादिति** । प्रकरणबलादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**भगवच्छ्रद्धाविरहितत्वादेव चाशास्त्रविहितं भवति ।**

**"विष्णुभक्तिविधानार्थं सर्वं शास्त्रं प्रवर्तते ॥"**

**—इति पैङ्गिश्रुतिः ॥ ४-७ ॥**

***न्या०दी०*—** भगवच्छ्रद्धाभावे शास्त्रविधानानुसारित्वं च नास्ति । ततोऽपि श्रद्धैव सात्त्विकत्वादौ प्रयोजिकेत्याशयेनाह **भगवदिति** ॥ तत्कुत इत्यत आह **विष्णुभक्तीति** ॥ विष्णुभक्तिविधानार्थमेव शास्त्रप्रवृत्तिश्रुतेः तदभावे न शास्त्रविधानानुसारित्वं भवतीत्यर्थः । शास्त्रविधानस्याप्रयोजकत्वे कथमशास्त्रविहितमिति तामसत्वे प्रयोजकत्वमुच्यत इत्यतो वाऽऽह **भगवदिति** ॥

**गीतातात्पर्यनिर्णयः**

**विप्रा वेदाश्च यज्ञाश्च यस्मादोताः परस्परम् ॥**

**विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः ।**
**ओतमस्मिन्निदं सर्वमिति चोक्तः स ओमिति ॥**

**तस्मादोमिति यज्ञादीन् प्रवर्तन्ते हि वैदिकाः ।**

*प्रका०*— **यज्ञादीन् प्रवर्तन्त** इति । प्रवर्तयन्त इत्यर्थः ।

***न्या०दी०***— केन हेतुना विष्णोरोमिति नामेत्यत आह **विप्रा इति** ॥ तस्मादोङ्कारस्य भगवन्नामत्वात्, ओमित्युच्चार्येति शेषः । **प्रवर्तन्त इति** । प्रवर्तयन्तीत्यर्थः । अनेन ब्राह्मणा इत्याद्युक्तार्थं भवति ।

*भा०दी०*— तस्मादित्यनुवादः ॐकारस्येत्यादि व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

**अनोङ्कृतं ह्यासुरं स्याद् यत्तस्मादोङ्कृतं त्वपि ।**
**ॐकारार्थहरेः सम्यगज्ञानादासुरं भवेत् ।**
**फलं त्वनभिसन्धाय तद् ब्रह्म स्यान्ममास्पदम् ॥**

**इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः ।**
**अभिसन्धितं हि तत् प्रोक्तं ततं वा स्वगुणैः सदा ॥"**

**—इत्यादि च ।**

***न्या०दी०***— भगवन्नामान्तरसद्भावात् कथमेतदुच्चारणनियतिरित्यतोऽस्य विशेषमाह **अनोङ्कृतमिति** ॥ ओङ्कारोच्चारणं तदर्थज्ञानपूर्वकमेव कार्यमिति भावेनाह **ओङ्कृतं त्विति** ॥ किंनिमित्तं विष्णोस्तदिति नामेत्यत आह **फलमिति** ॥ अनेन तदित्युक्तार्थं भवति ।

**गीतातात्पर्यनिर्णयः**

**"मयं प्रधानमुद्दिष्टं स्वरूपं कार्यमेव च ॥" इति शब्दनिर्णये ।**

*प्रका०*— "श्रद्धामयोऽयं पुरुष" इत्यत्र मयब्रह्मशब्दस्यानेकार्थत्वात् । श्रद्धास्वरूप इति यदुक्तं तदुपपादयति **मयं प्रधानमिति** ।

*न्या०दी०*— ननु मयट्प्रत्ययस्य विकारैकार्थत्वात् कथं श्रद्धामय इत्यस्य श्रद्धास्वरूप इति व्याख्येत्यत आह **मयमिति** ॥

**गीतातात्पर्यनिर्णयः**

**शास्त्रविहितमपि भगवच्छ्रद्धाविहीनमसदेवेति वक्ष्यति अश्रद्धया हुतमिति ।**

*प्रका०*— "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता" इत्यस्य परिहारत्वेनोक्तं "ये सात्त्विकश्रद्धास्ते सात्त्विका इति । तद्युक्तियुक्तमित्याह **शास्त्रविहितमपीत्यादिना** ।

*न्या०दी०*— श्रद्धैव प्रयोजिका न तु शास्त्रविधानानुसारित्वादीति यत्परिहारवाक्याभिप्रायवर्णनं तत्कुत इत्यत आह **शास्त्रेति** ॥ भगवतैव श्रद्धाभावे शास्त्रविधानानुसारिणोऽप्यसत्त्वस्यैवोक्तत्वात् श्रद्धैव प्रयोजिका नान्यदिति ज्ञायत इति भावः । हुतमित्यत्र शास्त्रविधानानुसारेणेति सिद्धम् । विधानोक्तिप्रसङ्गात् । अङ्गीकृत्य चेदमुक्तम् ।

*भा०दी०*— इति सिद्धमिति कथमेतज्ज्ञायत इत्यत आह **उक्तिप्रसङ्गादिति** । प्रकरणबलादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**भगवच्छ्रद्धाविरहितत्वादेव चाशास्त्रविहितं भवति ।**

**"विष्णुभक्तिविधानार्थं सर्वं शास्त्रं प्रवर्तते ॥"**

**—इति पैङ्गिश्रुतिः ॥ ४-७ ॥**

*न्या०दी०*— भगवच्छ्रद्धाभावे शास्त्रविधानानुसारित्वं च नास्ति । ततोऽपि श्रद्धैव सात्त्विकत्वादौ प्रयोजिकेत्याशयेनाह **भगवदिति** ॥ तत्कुत इत्यत आह **विष्णुभक्तीति** ॥ विष्णुभक्तिविधानार्थमेव शास्त्रप्रवृत्तिश्रुतेः तदभावे न शास्त्रविधानानुसारित्वं भवतीत्यर्थः । शास्त्रविधानस्याप्रयोजकत्वे कथमशास्त्रविहितमिति तामसत्वे प्रयोजकत्वमुच्यत इत्यतो वाऽऽह **भगवदिति** ॥

**गीता**

## आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
## रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥

***वि०वि०***— तत्राऽऽहारभेदं तावदाह **आयुरित्यादिना** । आयुर्जीवनम् । सत्त्वं साधुत्वम् । सात्त्विकान्नभोजनाच्चित्तशुद्धिः । बलं शक्तिः, आरोग्यं रोगराहित्यम्, सुखं सकृदुपभोगेऽपि दीर्घकालीनम् उपभोगकालीनम् सुखं प्रीतिः । एतेषां विवर्धनाः रस्याः रससंयुताः, स्निग्धाः स्नेहवन्तः, स्थिराः बहुकालं गुणप्रदाः, घृतादयः हृद्याः । सेवनानन्तरमपि पुनर्भूयादिति मनो हरन्तः । ''हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम् । सुखदं दीर्घसुखदं रस्यमभ्याससौख्यदम् ॥'' इत्यभिधानात् । एते आहाराः सात्त्विकानां प्रियाः 'आयुरादिविवर्धनाः' इति वचनात् । तद्विपरीतत्वे रस्यादीनामपि राजसत्वमेव ॥ ८ ॥

***वा०ल०***— 'रस्याः स्निग्धाः' इत्यत्र, रस्याः मधुररसप्रधानाः ॥ ८ ॥

***सा०सं०***— आहारभेदं तावत् त्रिभिराह **आयुरित्यादिना** । **आयुः** जीवनम् । सत्वं साधुत्वम् । सात्त्विकवस्तुसेवनेन चित्तशुद्धेः । **बलं** शक्तिः । **आरोग्यं** रोगराहित्यम् । **सुखं** सकृदुपभोगेऽपि बहुकालीनम् । **प्रीतिः** उपभोगकालीनं सुखम् । एतेषामायुरादीनां **विवर्धनाः** विशेषेण बुद्धिहेतवः । **रस्याः** रसयुक्ताः । **स्निग्धाः** स्नेहवन्तः । **स्थिराः** सेवनेन बहुकालगुणप्रदाः आज्यादयः । अनुभवे सति पश्चादपि भूयादिति मनोहारिणो **हृद्याः** । एते आहाराः । कर्मणि घञ् । भक्ष्यपदार्थाः । सात्त्विकानां सत्त्वगुणयुक्तानां प्रियाः । 'आयुरादिविवर्धनाः' इति विशेषणोक्त्या तद्विपरीतत्वे रस्यादीनामपि राजसत्वमेवेति ज्ञेयम् ॥ ८ ॥

***अ०प्र०***— राजसतामसआहारादिकं त्यक्त्वा सात्त्विकाहारादिसेवया सत्त्वशुद्धौ कार्यो यत्न इत्येतदर्थमेतत्कथ्यते । तत्र आहारत्रैविध्यं त्रिभिराह **आयुरिति** ।

अन्वयः स्पष्टः । आयुश्च सत्त्वं च बलं च आरोग्यं च प्रीतिश्च आयुस्सत्त्वबलारोग्यप्रीतयः । तासां षण्णां विवर्धनं विवृद्धिर्येभ्यः आहारेभ्यः ते तथा । यद्वा, आयुषस्त्राणं बलं विवर्धयन्तीति विवर्धनाः । बलारोग्यविवर्धनाः विवरणं आयुः = जीवनं[1], सत्त्वं = उत्साहः विशुद्धिर्वा । सात्त्विका-न्नभोगान्मनःशुद्धिर्भवति । 'अन्नमयं हि सौम्यमन' इति श्रुतेः[2], बलं = शक्तिः युक्तिर्वा[3], आरोग्यं = रोगाभावः[4], सुखं = चित्तप्रसादः सकृदुपभोगेऽपि दीर्घकालीनं यत्सुखं

तत्सुखमित्युच्यते[७], प्रीतिः रुचिः । यद्वा, उपभोगकालीनं यत्सुखं सा प्रीतिः[६], विवर्धनाः = आयुरादीनां विवृद्धिकराः तथा[७], ते च रस्याः = रसवन्तः बहुवारोपभोगे सौख्यदा इत्यर्थः । स्वादुत्वोपेता वा[८], स्निग्धाः = अत्यन्तस्नेहयुक्ताः स्थिरो देहरसांशेन चिरकालावस्थायिनः । यद्वा, स्नेहाख्यचिक्कणतोपेताः अजीर्णा इत्यर्थः[९], स्थिराः = बहुकालं पाकं विना देहे स्थित्वा गुणप्रदाः । यद्वा, देहसारांशेन चिरकालावस्थायिनः[१०] हृद्याः = सेवनानन्तरमपि पुनरिदं मे भूयादिति मनोहरतया हृद्याश्च । यद्वा, हृदयङ्गमाः[११], आहाराः = भक्ष्यभोज्यादयः[१२], सात्त्विकस्य[१३], प्रियाः[१४] ॥ ८ ॥

**भाष्यम्**

**प्रीतिः आनन्तरिका । हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्का भवन्ति । तथा ह्याज्यादयः ॥ ८ ॥**

***प०टी०***— 'प्रीतिविवर्धनाः' 'हृद्याः' इत्यनयोरर्थभेदमाह **प्रीतिरिति** । अन्नानां स्थैर्यं नाम किम् ? इत्यत आह **स्थिराश्चेति** ॥ ८ ॥

***प्र०दी०***— 'प्रीतिविवर्धनाः' 'हृद्याः' इत्येतयोः अर्थभेदमाह **प्रीतिरिति** । **आनन्तरिकेति** । ठन् प्रत्ययान्तम् । सेवाव्यवहितकाल इत्यर्थः । 'प्रियं तत्कालसौख्यमिदम्' इति वचनात् ।

दर्शनेऽनुभवे सति पश्चादपि यन्मनोहारित्वं तत् **हृद्यत्वम्** । 'हृद्यं पश्चात् मनोहारि' इति वचनादित्यर्थः । आहाराणां क्षणिकानामभावात् कथं 'स्थिराः' इति विशेषणम् ? इत्यत आह **स्थिराश्चेति** । चस्त्वर्थः प्रसिद्धं स्थैर्यं व्यावर्तयति । **तदैव** अचिरकाल एव । **पक्काः** निवृत्तपाकाः चिरकालं देहे गुणप्रदा इत्यर्थः । असम्भवपरिहाराय तानुदाहरति **तथा हीति** ॥ ८ ॥

***भा०दी०***— ननु ठक्प्रत्ययान्तत्वे 'टिड्ढाणञ्' इत्यादिना ङीप्प्रत्यये सति आनन्तरिकी इति भाव्यमित्यतो नायं ठगन्तः, अपितु 'तद्धिताः' इति बहुवचननिर्देशादन्य एवेत्याह **ठन्प्रत्ययान्तमिति** । तथा च टाबन्तः साधुरिति भावः । **इति वचनादिति** । 'हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम्' इति तात्पर्यवचनादित्यर्थः । **निवृत्तेति** । निष्फला इत्यर्थः । रसाद्यर्थमित्यत्र रसपदस्यार्थमाह **रसो रसायनमिति** ॥ ८ ॥

***भा०र०***— 'आनन्तरिक' इति शब्दस्य ठक्प्रत्ययान्तत्वे ठञ्प्रत्ययान्तत्वे वा 'टिड्ढाणञ्....' इत्यादिना ङीपि, 'आनन्तरिकी' इति भाष्ये निर्देशः स्यात् ? इत्यतः तस्य रूपं निर्धारयति **आनन्तरिकेति ठन्प्रत्ययान्तमिति** । न विद्यते अन्तरं = व्यवधानं यस्य तद् अनन्तरम् । 'पौरुषम्' इत्यादाविव भावेऽण्प्रत्यये अनन्तरस्य भावः आनन्तरम् । ततः 'तदस्यास्ति' इत्यर्थे

'अत इनिठनौ' इति ठन्, 'ठस्येकः', 'यस्येति च' इति अकारलोपः, ततः स्त्रियाम् टापि सति चैवम् 'आनन्तरिका' इति सुब्निष्पत्तिरिति भावः । 'आनन्तरिकेति इकक्प्रत्ययान्तम्' इति पाठे अनन्तरशब्दात् 'तद्धिताः' इति बहुवचनज्ञापित-इकक्प्रत्ययः, 'यस्येति च' इति अकारलोपः, कित्त्वात् 'किति च' इति वृद्धिश्च इति व्याकुर्वन्तः *स्वामिनः* । तदर्थमाह **सेवेति** । अनुभवाव्यवहितसमयभाविनी । उक्तार्थे तात्पर्यनिर्णयवचनं प्रमाणयति **प्रियमिति** । सेवाऽव्यवहितकाल एव सौख्यप्रदं अभ्यवहार्यं वस्तु प्रियमित्युक्त्यैव 'तत्सेवाऽव्यवहितकालभावि सुखं प्रीतिः' इति विभावितमिति प्रकृतसिद्धिः । भाष्यपदं व्याकुर्वंस्तत्र शेषमाह **दर्शनेऽनुभवे सतीति** । **पश्चादपि** न केवलं तत्काले इति अपिशब्दः । क्षणिकानाम् = आशुविनाशिनाम् अभावात् = स्थायित्वाभावात् । 'भावात्' इति पाठे 'सत्त्वात्' इत्यर्थः । **त्वर्थः** सन् = तुशब्दार्थकः सन् **प्रसिद्धं** स्थायित्वाख्यम् । 'पक्वाः = निष्पन्नपाकाः' इत्यत्र विवक्षितं पाकशब्दार्थमाह **निर्वृत्तेति** । तदैव = उपहितकाले न चेत् किं तर्हि ? इत्यतो भाष्यभावमाह **चिरकालमिति** । गुणाः = पुष्ट्यादयः । *भाष्ये*— आज्यादयः आज्यरसायनादयः ॥ ८ ॥

### गीतातात्पर्यनिर्णयः

**स्थिराः** स्थिरगुणाः घृतादयः । **कट्वादीनामप्यारोग्यरसाद्यर्थत्वेन सात्त्विकत्वमेव । रस्यादीनामपि राजसत्वमनारोग्यादिहेतुत्वे । "दुःखशोकामयप्रदाः" इत्युक्तेः । सत्त्वं साधुभावः । भवति हि सोऽपि शुच्यन्नात् ।**

***प्रका०***— "आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाख्याः स्निग्धा स्थिरा हृद्या आहाराः सात्त्विकप्रियः । कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः । यातयामं गतरसमि"त्यस्यार्थमाह **स्थिरा** इत्यादिना ।

***न्या०दी०***— "रस्याः स्निग्धाः स्थिरा हृद्याः" इत्याहाराणां किंनाम स्थिरत्वं, केषां चोच्यत इत्यत आह **स्थिरा इति** ॥ बहुकालं गुणप्रदा इत्यर्थः । कट्वाम्ललवणेति कट्वादीनां यद्राजसत्वमुक्तं तन्न नियतं, कदाचित् सात्त्विकत्वमपि स्यादित्याह **कट्वादीनामिति** ॥ **रसो** रसायनम् । एवं रस्याः स्निग्धाः स्थिरा हृद्या इति सात्त्विकत्वेनोक्तानां रस्यादीनां सात्त्विकत्वं न नियतम्, कदाचित् राजसत्त्वमपि भवतीत्याह **रस्येति** ॥ कट्वादीनां राजसत्त्वनियमः किं न स्यात् ? कदाचित् सात्त्विकत्वं कुत इत्यत आह **दुःखेति** ॥ दुःखादिप्रदाश्चेत् राजसा इत्युक्तत्वात् आरोग्यादिहेतुत्वे कट्वादीनां सात्त्विकत्वावगतेर्न

राजसत्वनियम इत्यर्थः । रस्यादीनां सात्त्विकत्वानियमे चायुःसत्त्वेत्याद्युदाहर्तव्यम् । बलशब्दात् सत्त्वशब्दस्यानतिभिन्नार्थत्वात् पुनरुक्तिरित्यत आह **सत्त्वमिति** ॥ नात्रायं सत्त्वशब्दार्थः साधुभावः । तस्मा(स्या)न्नोत्पन्नत्वाभावादित्यत आह **भवतीति** ॥

***भा०दी०***— मूले कट्वादीनां राजसत्वनियमे दुःखशोकेत्यादिविशेषणं ज्ञापकतया यथोदाहृतं तथा रस्यादीनां सात्त्विकत्वनियमे आयुरित्यादि विशेषणं ज्ञापकतया उदाहर्तव्यमित्यर्थः । तथाच दुःखशोकाद्यहेतुत्वे यथा न राजसत्वं तथा आयुरादिविवर्धनाहेतुत्वे सात्त्विकत्वं रस्यादीनां नेति ज्ञातव्यमिति भावः । शङ्कते **नात्रायमिति** ॥ **अन्नोत्पन्नत्वेऽपीति** । विवर्धत इत्यनेन सत्त्वस्य तदुत्पन्नश्रवणादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

"हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम् ।
सुखदं दीर्घसुखदं रस्यमभ्याससौख्यदम् ॥"

—इति शब्दनिर्णये ॥ ८ ॥

***न्या०दी०***— "सुखप्रीतिविवर्धनाः", "हृद्याः" इति शब्दस्यैकार्थत्वप्रतीतिनिरासायाह **हृद्यमिति** ॥ सेवानन्तरमपि यत्पुनर्भूयादिति मनो हरति तद् हृद्यम् । उपयोगकाल एव सौख्यप्रदं प्रियम् । सकृदुपयुक्तं दीर्घकालं सुखं ददत् सुखदम् । बहुवारोपभोग एव सौख्यदं रस्यमित्यर्थः ॥

**गीता**

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**

***वि०वि०***— कटुर्मरीचादिः । आम्लो जम्बीरनीरादिः । लवणोष्णौ प्रसिद्धौ । अतिशब्दः सर्वत्र सम्बध्यते । तीक्ष्णः सर्षपादिः । रूक्षः स्वत एव नीरसः । विदाही सन्तापकरः । एते आहारा राजसस्येष्टाः प्रियाः । दुःखं सन्तापः । शोको दौर्मनस्यम् । आमयो रोगः, तत्प्रदाः । कट्वादीनामपि आरोग्यरसाद्यर्थत्वेन सात्त्विकत्वमेव । दुःखशोकामयप्रदा इत्युक्तेः ॥ ९ ॥

***सा०सं०***— **कटुः** मरीचिकादिः । **आम्लो** जम्बीररसादिः । **लवणं** प्रसिद्धम् । **अत्युष्णम्** । अतिशब्दः सर्वत्र सम्बध्यते । **उष्णम्** । **तीक्ष्णं** सर्षपादि । **रूक्षं** स्वतो नीरसम् । **विदाहि** विशेषेण दग्धम्, सन्तापकरं वा । एते **आहाराः राजसस्येष्टाः** प्रियाः । **दुःखं शोको** दौर्मनस्यम् । **आमयो** रोगः । एतत्त्रयप्रदाः । दुःखादिदत्वविशेषणोक्त्या तदभावे कट्वादीनां सात्त्विकत्वमेवेति ज्ञेयम् ॥ ९ ॥

***अ०प्र०***— किञ्च राजसाहाराः वदति **कट्वाम्ल इति** ।

अथ अन्वयः— कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः[१], दुःख-शोकामयप्रदाः[२], आहाराः[३], राजसस्य[४], इष्टा भवन्ति[५], सर्वत्र अतिशब्दो योजनीयः । आयुरादिविवर्धना इत्युक्तत्वाद्विपरीतत्वे रस्यादिनामपि राजसत्वं ज्ञेयम् । अतिकटुश्च आम्लश्च लवणश्च अत्युष्णश्च तीक्ष्णञ्च रूक्षश्च विदाही च तथा विदाहिनः कटु मरीच्यादिः निम्बादिर्वा[२], आम्लं जम्बीरादिः[२], तीक्ष्णं सर्षपादिः[३], रूक्षः = स्वत एव नीरसः[४], विदाही = सन्तापकरः[५], सर्वत्रातिशब्दो योज्यः । एतादृशा आहाराः किञ्च दुःखशोकामयप्रदाः = तात्कालिकं हृदयसन्तापादिकं दुःखमुच्यते । शोकं पश्चाद्भाविदौर्मनस्यम् । आमयो = रोगः दुःखञ्च शोकश्च आमयश्च तान् प्रयच्छतीति प्रददातीति वा दुःख-शोकामयप्रदाः[६], एतादृशाऽऽहाराः[७], राजसस्य[८], इष्टाः भवन्ति[९], अतिकट्वादयः दुःखादिप्रदत्वात् राजसा इत्यर्थः ॥९॥

**गीतातात्पर्यनिर्णयः**

**रूक्षं नीरसम् । तीक्ष्णं सर्षपादि ॥ ९ ॥**

***न्या०दी०***— **रूक्षशब्दस्यानेकार्थत्वादत्र विवक्षितमर्थमाह रूक्षमिति ॥ अन्नस्य तीक्ष्णत्वं घटयन्नाह तीक्ष्णमिति ॥**

**गीता**

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

***वि०वि०***— यो वा को वा यस्य रसस्तदपगमे यातयामम् । "यामान्तरितपाकं तु यातयाममितीर्यते । क्वचिच्च गतसारं स्यान्नियम्यं यातमस्य यत् ॥" इति वचनात् । पूर्वं स्वादु, पश्चादन्यथाजातं गतरसम् । पूति दुर्गन्धि । पर्युषितं दिनान्तरपक्वम् । उच्छिष्टम् अन्यभुक्ताव-

शिष्टम् । अमेध्यं स्वभावतः अभक्ष्यम् । भुज्यत इति भोजनम् अन्नादि । तामसानां प्रियम् । स्वादुत्वादेः पुरुषभेदेनाव्यवस्थावस्थायामपि— "शुद्धभागवतानां तु स्वभावापेक्षयैव तु । स्वादुत्वादि विजानीयात्पदार्थानां न चान्यथा ॥" इति वचनाद्विवेकः ॥ १० ॥

*वा०ल०*— 'यातयामम्' इत्यत्र, गतरसं त्यक्तान्नरसम्, अन्नरसेन सहैव पक्वचरोः यज्ञयोग्यत्वादिति भावः । पूति दुर्गन्धियुक्तं लशुनादि । पर्युषितम् एकरात्रोषितम् । उच्छिष्टं कामुकतया भार्यादिभिः सह भुज्यमानम् । अमेध्यम् अपवित्रम् अलाम्बुवृन्ताकादि ॥ १० ॥

*सा०सं०*— **यातयामं** यामान्तरितपाकम् । पूर्वं स्वादु पश्चादन्यथाजातं रसं **गतरसम्** । **पूति** दुर्गन्धम् । **पर्युषितं** दिनान्तरितपक्वम् । अन्यभुक्तावशिष्टम् **उच्छिष्टम्** । **अमेध्यम्** अपवित्रम् । **भोजनम्** । कर्मणि ल्युट् । भोज्यम् । यातयामादि भोज्यं वस्तु । **यत्** तत् **तामसप्रियम्** । तादृशं वस्तु भोजनविषयतया तामसप्रियमित्यर्थः । स्वादुत्वादेः पुरुषभेदेन व्यवस्थितत्वेऽपि शुद्धभागवतस्वभावापेक्षया स्वादुत्वादिकं ध्येयम् ॥ १० ॥

*अ०प्र०*— यातयामं = यातो यामः प्रहरो यस्य पक्वस्योदनादेः तद्यातयामं शैत्यावस्थां प्राप्तमित्यर्थः[१], गतरसं = निष्पीडितसारं[२], पूति = दुर्गन्धियुक्तं[३], पर्युषितं = गतदिने पक्वं बहुदिवसान्नं पर्युषितमिति वा[४], उच्छिष्टं = अन्यभुक्तावशिष्टं[५], आमेध्यं = स्वत एव अपवित्रं कलञ्जादिर्वा अयोग्यमित्यर्थः[६], भोजनं = भुज्यत इति भोजनम् । मद्यपानमीदृशं[७], तामसं = शास्त्रासिद्धत्वात् तामसपुरुषस्य प्रियं भवति[८], अत्र स्वादुत्वादेः पुरुषभेदेन अव्यवस्थायामपि सज्जीवापेक्ष्ययैव स्वादुत्वादिकं ज्ञेयम् । तथा चोक्तम्— "शुद्धभागवतानां तु स्वभावापेक्ष्ययैव तु । स्वादुत्वादि विजानीयात् पदार्थानां न चान्यथे'ति ॥ मिताः स्युः सात्त्विकाऽऽहाराः राजसाः पूर्णभोजनाः । तामसास्त्वधिकाऽऽहाराः क्रमादेव प्रकीर्तिताः ॥" कट्वादीनामपि आरोग्यसुखप्रदत्वे रसायनाद्यर्थत्वे च सात्त्विकत्वं ज्ञेयम् ॥ १० ॥

**गीता**

## अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
## यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

*वि०वि०*— यज्ञभेदमाह **अफलाकाङ्क्षिभिरित्यादिना** । विधिदृष्टः शास्त्रज्ञानपूर्वकम् ॥ ॥ ११ ॥

*सा०सं०*— यज्ञभेदेन सात्त्विकादिभेदमाह **अफलेति** । फलाकाङ्क्षारहितैः । **यो यज्ञो विधिदृष्टो** विधिज्ञानपूर्वकः । **यष्टव्यमेवेति मनः**समा**धाय इज्यते** अनुष्ठीयते । **स सात्त्विक** इत्यर्थः ॥ ११ ॥

*अ०प्र०*— अतीवदुःखादिप्रदा इति विशेषणात् यज्ञभेदमाह त्रिधा । तत्र **अफलेति** ।

अथान्वयः— अफलाकाङ्क्षिभिः[२], विधिदृष्टः[३], यज्ञः[३], यष्टव्यमेवेति[४], यः[१], मनः समाधाय[५], ईज्यते[७], स यज्ञः[८], सात्त्विकः[९] इत्यन्वयः ।

अफलाकाङ्क्षिभिः = फलाकाङ्क्षारहितैः पुरुषैः विष्णुप्रीतये मया यज्ञः कर्तव्य एव । न त्याज्यमिति फलमनपेक्ष्य[२], विधिदृष्टः = आवश्यकतया विहितः । यद्वा, वेदेषु दृष्टः वेदोक्तदृष्टः[२], यज्ञः = नित्ययागः तेन मनःशुद्धिः । तया ज्ञानम् । तस्मात् यज्ञः[३], यष्टव्यमेवेति = यज्ञानुष्ठानमेव कार्यम् । नान्यत्फलं साधनीयमित्येवं[४], यः = पुरुषः[१], मनःसमाधाय = मनोवृत्तिं निक्षिप्य एकाग्रं कृत्वा[६], ईज्यते = अनुष्ठीयते[७], सः यज्ञः[८], सात्त्विकः = सात्त्विकयज्ञोक्त इत्यर्थः ॥ ११ ॥

**गीतातात्पर्यनिर्णयः**

**"यामान्तरितपाकं तु यातयाममितीर्यते ।**
**क्वचिच्च गतसारं स्यान्नियम्यं यातमस्य यत् ॥" इति च ।**

***न्या०दी०*— पङ्क्तिपावनपुरुषशेषान्नस्य सात्त्विकत्वप्रसिद्धेः कथं यातयामं तामस-मित्यतः प्रकारान्तरेण प्रमाणत एव व्याचष्टे यामेति ॥ यामं याम्यं नियम्यम्** अपेक्षितांशः **सार इति यावत् ।**

*भा०दी०*— कर्मणि घञन्तं यामपदमित्युपेत्याह **यामं याम्यमिति** ॥

**गीतातात्पर्यनिर्णयः**

**पूर्वं स्वादु पश्चादन्यथाजातं गतरसम् ।**

***न्या०दी०*— तर्हि गतरसमिति पुनरुक्तिरित्यत आह पूर्वमिति ॥ यो वा को वा यस्य रसस्तदपगमे यातयामं, स्वादुत्वापगमे गतरसमित्यर्थभेद इति भाव**ः । **रूक्षशब्देन राजसतयोक्तनीरसस्य कथं तामसत्वमुच्यत इत्यतो वाऽऽह पूर्वमिति ॥ स्वत एव नीरसं रूक्षम्, पूर्वं स्वाद्वेव पश्चादन्यथा जातं गतरसमित्यदोष इति भाव**ः ।

**गीतातात्पर्यनिर्णयः**

"शुद्धभागवतानां तु स्वभावापेक्षयैव तु ।
स्वादुत्वादि विजानीयात् पदार्थानां न चान्यथा ॥"

—इति सूदशास्त्रे ॥ १०-११ ॥

***न्या०दी०***— अपगतस्वादुत्वं तामसत्वमिति दुर्गमम् । एकस्यैव वस्तुनः पुरुषभेदेन स्वादुत्वास्वादुत्वसम्भवेन स्वाद्वादेरनिश्चयादित्यत आह **शुद्धेति** ॥

**गीता**

## अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
## इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

*वि०वि०*— दम्भार्थं महत्वख्यापनाय ॥ १२ ॥

***सा०सं०***— **फलमभिसन्धाय** मे भूयादिति कामयमान एव । **अपि दम्भार्थमे**व आत्म-महत्त्वप्रदर्शनार्थमेव । **यदिज्यते तं यज्ञं** राजसं **विद्धि** ॥ १२ ॥

***अ०प्र०***— अथ राजसयज्ञमाह **अभिसन्धायेति** ।

हे भरतश्रेष्ठ ![१], यः फलं[२], अभिसन्धाय[३], यत्[४], ईज्यते[५], तु = पुनः[६], दम्भार्थमपि[७], एव इत्यनेन यत् ईज्यते[८], तं[९], यज्ञं[१०], राजसं[११], विद्धि इत्यन्वयः ।

हे भरतश्रेष्ठ ![१], फलं = फलरूपान् स्वर्गविषयभोगान्[२], अभिसन्धाय = तु उद्दिश्य तुकारेण दीक्षितत्वान्मान्यो भवामीति[३], यत् ईज्यते = यज्ञः क्रियते[४], पुनः दम्भार्थमपि चैव परवञ्चनेन स्वमहत्त्वख्यापनाय यज्ञः क्रियते[८], तं यज्ञं राजसं विद्धीत्यर्थः ॥ १२ ॥

**गीता**

## विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
## श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

*वि०वि०*— असृष्टान्नम् अन्नत्यागशून्यम् । मन्त्रोच्चारणतदर्थज्ञानरहितं परिचक्षते कथयन्ति ॥ ॥ १३ ॥

*वा०ल०*— 'विधिहीनम्' इत्यत्र, विधिहीनं वेदे अविहितं यक्षराक्षसपूजादि ॥ १३ ॥

*सा०सं०*— **असृष्टान्नम्** अन्नदानहीनम् । शिष्टं व्यक्तम् ॥ १३ ॥

*अ०प्र०*— तामसयज्ञमाह **विधिहीनमिति** ।

अथान्वयः— स्पष्टः ।

विधिहीनं = विष्णुभक्तिरेव विधिः । तद्रहितं वैष्णवहीनम् । यद्वा, वेदशास्त्रोक्तविधिशून्यं[१], असृष्टान्नं = असृष्टं न त्यक्तं अहितकालेऽन्नं येन सोऽसृष्टान्नः । तं ब्रह्मादिभ्यो विष्णुनैवेद्यद्वारा न निष्पादितमन्नं तस्मात् अन्नदानरहितं[२], मन्त्रहीनं = मन्त्रमन्त्रार्थज्ञानं विष्णुसर्वोत्तमत्वज्ञानं तद्धीनं[३], अदक्षिणं = विष्णुप्रीत्यर्थं कल्पोक्तदक्षिणाहीनं[४], श्रद्धाविरहितं = विष्णुः सर्वोत्तमः, जीवस्तदधीन एवं दृढज्ञानमेव श्रद्धा । तद्धीनं[५], एतादृशो यो यज्ञः तं यज्ञं[६], तामसं[७], परिचक्षते = कथयन्ति शिष्टाः ॥ १३ ॥

**गीता**

## देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
## ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

***वि०वि०***— तपसः सात्त्विकादिभेदं दर्शयितुं शरीरादिभेदेन त्रैविध्यं तावदाह **देवद्विजेत्यादिना** । शारीरं शरीरसम्पाद्यम् ॥ १४ ॥

*सा०सं०*— प्राक् प्रतिज्ञातं तपोभेदेन सात्त्विकादिभेदं दर्शयितुं शारीरादिभेदेन तत्त्रैविध्यं तावदाह **देवेति** । देवादिपूजनं यथायोग्यं ध्येयम् । **शौचं** बाह्याभ्यन्तररूपम् । **ब्रह्मचर्यम्** ऊर्ध्वरेतस्त्वम् । **शारीरं शरीरसम्बन्धि** ॥ १४ ॥

*अ०प्र०*— तपसः सात्त्विकादिभेदेन त्रैविध्यं दर्शयिष्यन् आदौ शारीरादिभेदेन त्रैविध्यमाह **देवेति** त्रिभिः । तत्रादौ **देवेति** ।

अन्वयः स्पष्टः । देवद्विजगुरुप्राज्ञपूजनं = देवश्च द्विजश्च गुरुश्च प्राज्ञौ मातापितरौ च एतद्व्यतिरिक्ता अन्येऽपि तत्त्वविदः । तेषां पूजनं देवद्विज-गुरुप्राज्ञपूजनं[१], शौचं = बाह्यान्तर-शौचादिकं[२], आर्जवं = अवक्रता नाम नित्यमेकप्रकारता[३], ब्रह्मचर्यं = गुह्येन्द्रियनियमनं उपवासादि

च[४], अहिंसा च = हस्तादिना परस्य हिंसाराहित्यम् । चकारेण परोपकारादिः सर्वभूतदया च[४], इत्यादिकं शारीरं = शरीरजन्यं शरीरनिवर्त्यं वा[६], तप इति सद्भिः[७], उच्यते इत्यर्थः ॥ १५ ॥

**गीता**

## अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
## स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

*वि०वि०*— अनुद्वेगकरं अभयङ्करम् । श्रवणसमये प्रियं हितं परिणामे सुखकरम् ॥ १५ ॥

*सा०सं०*— **अनुद्वेगकरं** परस्यातङ्को यथा न भवति तादृशं वाक्यम् । **सत्यं** यथार्थवाक्यमिति सर्वत्रान्वेति । **प्रियम्** श्रवणसमये पुनः पुनः श्रवणेच्छाकरम् । **हितं** कालान्तरे सुखकरं च । **स्वाध्यायाभ्यसनं च यत्** । तदिति शेषः । **वाङ्मयं** वागात्मकं तपः ॥ १५ ॥

*अ०प्र०*— वाचिकं तप आह **अनुद्वेगकरमिति** ।

अन्वयः स्पष्टः । अनुद्वेगकरं वाक्यं = उद्वेगं भयं दुःखं वा तन्न करोतीति तथा । यद्वा, चाञ्चल्यं तदजनकं वा सुखकरवाक्यमित्यर्थः[१], सत्यं = येन सत्यस्वरूपो विष्णुः प्राप्यते तत्सत्यं[२], प्रियं = परार्थं श्रोतुः श्रवणकाले प्रियं श्राव्यमित्यर्थः[३], यत् हितं च = परिणामे सुखकरं चकारेण देहान्ते मोक्षप्रदं[४], स्वाध्यायाभ्यसनं चैव = भगवद्ध्यानादिरूप एव स्वाध्यायः तस्य अभ्यसनं स्तोत्रनाम्नावृत्तिः । यद्वा, वेदवेदार्था वृत्तिः । वेदाभ्यासो वा[५], एतत् वाङ्मयं = वाग्भवं[६], तप इति[७], उच्यते = प्राज्ञैरुच्यते इत्यर्थः ॥ १५ ॥

**गीतातात्पर्यनिर्णयः**

"यागात्तु राजसात् स्वर्गः साङ्कल्पिक उदाहृतः ।
लोकः सदीनदेवानां सनाम्नां वासवादिभिः ॥

विष्णावश्रद्धयाऽयोग्यकामाच्चैषां पुनर्भवेत् ।
नरकं च विना यज्ञं राजसा नरलोकगाः ॥

निषिद्धं कर्म कुर्युश्चेदीयुस्ते नरकं ध्रुवम् ।
कदाचित् सात्त्विकाः कुर्युः कर्म राजसतामसम् ॥

*प्रका०*— "अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसमि"त्युक्तं यज्ञफलमाह **यागादित्यादिना** । यद्यस्य सात्त्विकं राजसं तामसं वा बहुकर्म तत्तस्य स्वाभाविकमित्येदुच्यते । बाहुल्यं तेन लक्षणमित्यनेन "मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यत" इति मानसत्वोक्तः । अन्यत्र मौनं मननम् ।

***न्या०दी०*— यदुक्तं राजसयजनेन साङ्कल्पिकः स्वर्ग एवेति तन्न युज्यते । "अभिसन्धाय तु फलं" इति तत्र फलाभिसन्धिना प्रवृत्तेः, राजसयागेन इन्द्रादिदेवलोकः स्वर्गो भवतीति क्वचिद्वचनाच्चेत्याशङ्कां स्मृत्यन्तरेण परिहरति यागादिति ॥ स्वर्गाभिसन्धानात् तत्र प्रवृत्तेः कथं तदभाव इत्यत आह विष्णाविति ॥ स्वर्गकामनेन प्रत्युत नरक एव भवति, न स्वर्गः । तेषां विष्णावश्रद्धासद्भावेन स्वर्गयोग्यानां तत्कामस्यायोग्यत्वादिति भावः । राजसानां सकामयज्ञाभावेऽपि नरकसद्भावात् कथमयोग्यकामादि तत्कारणमित्यत आह विनेति ॥ क्वचिन्नरकदर्शनस्य गतिमाह निषिद्धमिति ॥ अत्र नरलोकप्रचुरत्वोक्त्या राजसेषु मध्यमा विवक्षिताः न तु नित्यत्रैविद्या इति ज्ञातव्यम् । यदि राजसकर्मणा नरकः स्यात् तर्हि सात्त्विकानामपि तत्करणसम्भवात् नरकप्राप्तिः स्यादित्यत आह कदाचित् इति ॥ यद्यपि सात्त्विका राजसतामसे, राजसाः सात्त्विकतामसे, तामसाश्च सात्त्विकराजसे कर्मणी यद्यपि कुर्वन्ति, तथापि तत्कदाचिदेव । स्वाभाविककर्मण्येव प्राधान्येन स्थितिः । महता चाल्पाभिभव इति न फलसङ्कर इति भावः ।**

*भा०दी०*— **तत्रेति** । याग इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**अन्येऽन्यच्च तथाऽप्येषां स्थितिः स्वाभाविकी पुनः ।<br>स्वं स्वं कर्म तु सर्वेषां सदैव स्यान्महत्फलम् ।<br>अन्यदल्पफलं चैव बाहुल्यं तेषु लक्षणम् ॥"**

**—इति पाद्मे ॥ १२–१५ ॥**

***न्या०दी०*— स्वाभाविकं महाफलमस्वाभाविकम् अल्पफलमित्यतोऽपि स्वाभाविकेनान्याभिभवसम्भवान्न फलसङ्कर इत्याह स्वमिति ॥ यदि सात्त्विकादीनां स्वाभाविकास्वाभाविककर्मकरणं स्यात् तर्हि इदं स्वाभाविकं कर्म, इदं नेति कथं ज्ञायत इत्यत**

आह **बाहुल्यमिति** ॥ स्वाभाविकादिकर्मसु यद् बहुलं तत् स्वाभाविकम्, अल्पमस्वाभाविकमिति बाहुल्यादिज्ञापकमिति भावः ॥

**गीता**

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

***वि०वि०***— मनःप्रसादो बुद्धिवैशद्यम् । सौम्यत्वमक्रौर्यम् । 'अक्रूरः सौम्य उच्यते' इत्यभिधानात् । मौनं मननशीलत्वं नत्वभाषणम् । तस्य मानसत्वाभावात् । आत्मविनिग्रहः परमात्मनि मनोवृत्तेरवस्थानम् । भावसंशुद्धिरितरविषयचिन्ताराहित्यम् ॥ १६ ॥

***सा०सं०***— **मनःप्रसादः** विषयेष्वप्रयासेनाप्रवृत्तिः । **सौम्यत्वम्** अक्रौर्यम् । **मौनं** मननशीलत्वम् । **आत्मविनिग्रहः** आत्मनि परमात्मनि मनसो विशिष्यावस्थानम् । भावे आशये **संशुद्धिः** नानाकामराहित्यम् । **इत्येतन्मानसं** तपः **उच्यते** ॥ १६ ॥

***अ०प्र०***— मानसं तप आह **मनःप्रसाद इति** ।

मनःप्रसादः = मनसः प्रसादः स्वच्छता प्रसन्नता वा । विकल्पैस्त्यक्तं मन एव मनःप्रसादः[२], सौम्यत्वं = अक्रूरत्वं अक्रूरः सौम्य उच्यते विषयत्यागार्थं वैराग्यवह्निना प्रतप्तं मनःसौम्यत्वं, मौनं = मननशीलत्वं मुनेर्भावो वा । न त्वभाषणम् । भगवद्विषयैकवार्तां विना प्रापञ्चिकपरनिन्दादिप्रवचनाभावः[३], आत्मविनिग्रहः = विषयेभ्यः प्रत्याहृत्य परमात्मनि मनःस्थापनं विशेषेण नियमो वा[४], भावसंशुद्धिः = विषयभोगेच्छारूपा मनोभावास्तेषां निवृत्तिः रागादि क्षालनं[५], इति एतत् तपः मानसमुच्यते इत्यर्थः ॥ १६ ॥

**भाष्यम्**

**सौम्यत्वम्** अक्रौर्यम् । 'अक्रूरः सौम्य उच्यते' इत्यभिधानम् । **मौनं मनन**-शीलत्वम् । "बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इति हि श्रुतिः । "एतेन हीदं सर्वं मतम् । यदनेन हीदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते" इति भाल्लवेयश्रुतिः । कथं चान्यथा मानसं तपः स्यात् ? इति भावः ॥ १६ ॥

***प०टी०***— मौनादिमत्त्वं कथं मानसं तपः ? इत्याह **कथमिति** ॥ १६ ॥

*प्र०दी०*— नन्वङ्गसौष्ठवं सौम्यत्वम् । तत्कथं मानसं तप उच्यत इत्यत आह **सौम्यत्वमिति** । मौनं वाङ्नियमनम् इत्यन्यथाप्रतीतिनिरासार्थमाह **मौनमिति** ।

कुत एतत् ? इत्यत आह **बाल्यमिति** । युक्तिबलोपेतत्वं **बाल्यम्** । **आगमज्ञत्वं** पाण्डित्यम् । **अथ मुनिः** मननशीलो भवतीत्यर्थः । 'एतेन हीदम्' इत्युक्तमर्थं 'यदनेन' इति हेतुत्वेनोपादत्ते । यस्मादेवं मुनिस्तस्मात् तं **मुनिरित्याचक्षते** । 'मन ज्ञाने' इत्यतः इकारप्रत्ययः । उपधाया उकारश्च । मुनेः भावश्च मौनम् । तच्च मननशीलत्वम् आगमार्थस्य युक्तिभिरनुसन्धानम् । उक्तार्थानङ्गीकारे बाधकमाह **कथमिति** । 'मौनम्' इति शेषः ।

'वाङ्नियम एव न मौनम् । किन्त्वत्र तत्कारणमनोनियमो लक्ष्यते' इति **कश्चित्** । तदसत् । 'आत्मविनिग्रहः' इति पुनरुक्तिदोषात् । कथञ्चित् तत्परिहारेऽपि मुख्यार्थसम्भवे लक्षणाश्रयणस्यैव दोषत्वात् ॥ १६ ॥

*भा०दी०*— 'तस्मान्मुनिः' इत्ययं विधिरित्युपेत्य तदनन्तरमपेक्षितमध्याहृत्य उत्तरवाक्यं संयोजयति **यस्मादेवं मुनिस्तस्मादित्यादिना** । 'मौनं मननशीलत्वम्' इति भाष्यं कार्यकारणभावाभिप्रायमिति भावेनाह **तच्चेत्यादिना** । ननु वाङ्नियमकारणमनोनिग्रहो मौनपदेन, आत्मनिग्रहपदेन तु चक्षुरादीन्द्रियनियमनहेतुमनोनिग्रहो गृह्यत इत्यत आह **कथञ्चित्परिहारेऽपीति** । **एवेति** । अस्मदुक्तार्थ एवेत्याहेत्यार्थः ॥ १६ ॥

*भा०र०*— **अङ्गसौष्ठवमिति** । 'सौम्यं तु सुन्दरे सौमदैवते' इत्यमरेण 'उपाध्याये तु ना सौम्यः पुनः स्त्रीसोमदैवते । सुन्दरे च पुमांस्त्वेष वत्सरे च बुधग्रहे' इति केशवेन च सौम्यशब्दस्य अङ्गसौष्ठवशब्दितसौन्दर्यशालिवचनत्वाभिधानाद् अङ्गसौष्ठवमेव सौम्यत्वमिति भावः । *केचित्तु* सोमः = चन्द्र इव आल्हाददायकः सोमशब्दाद् इवार्थे 'शाखाऽऽदिभ्यो यत्' इति यत्प्रत्ययः । स एव प्रज्ञादिभावेन स्वार्थेऽणि सौम्यः = सुन्दरः = स हि आल्हादको भवति, तस्य भावः सौम्यत्वम् इत्यनेन अङ्गसौष्ठवं लभ्यत इति भावेन एवमुक्तमित्याहुः । *भाष्ये*— अक्रौर्यं मनसः क्रोधात्मना परिणामाभावोऽभिमत इति मानसतपस्त्वोपपत्तिरिति द्रष्टव्यम् । बलशब्दाद् 'उपेतम्' इत्यर्थे ष्यञि बाल्यम् । बलं चात्र युक्तिरूपं विवक्षितम् । 'बाल्यं युक्तिसहायता' इति वचनादिति भावेनाह **युक्तीति** । 'पाण्डित्यं आगमज्ञानम्' इति वचनानुसारेण व्याचष्टे **आगमज्ञत्वमिति** ।

भाष्ये 'निर्विद्य' इत्यत्र 'नितरां लब्ध्वा' इत्यर्थः । 'मननशीलत्वम्' इति भाष्यानुसारेणाह **मुनिर्मननशील इति** । 'उपादत्ते' इत्युक्तमेवाह **यस्मादेवमिति** । एवं सर्वमन्तृत्वप्रकारेण मननं

मुनिशब्देन यथा लभ्येत तथा व्युत्पादयति **मन ज्ञान इति**। 'मनेरुच्च' इति सूत्रेण मनेरिन्प्रत्ययः, उपधाया अकारस्योकार इति भावेन 'इकारप्रत्ययः उकारश्च' इत्युक्तम्। मुनिशब्देन ज्ञानित्वमात्र-प्राप्तावपि मननशीलत्वलाभप्रकारमाह **मुनेर्भावश्च मौनम्, तच्च मननशीलत्वाख्यम् आगमार्थस्य वेदवैदिकग्रन्थार्थस्य**। आचार्योपदेशाद् उपजायमानं ज्ञानं आगमजन्याख्यं श्रावणं तदेव पाण्डित्यं नाम। आगमार्थस्य श्रुतस्य युक्त्यनुगृहीतं ज्ञानं मननम्। तस्यैव मननस्य नैरन्तर्येण आपादनं मननशीलत्वाख्यं मौनमुच्यते। तदिदं वाङ्नियमनाद् अन्यत् मनःकार्यं मानसं तप इति युक्त-मुक्तमिति भावः।

यद्यपि 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्य अथ मुनिः' इति **बृहदारण्यकश्रुतिः**। 'ब्राह्मणः = ब्रह्म अणितुं योग्यः, पाण्डित्यम् = आगम-ज्ञानम्, बाल्यं = युक्तिसहितम्, बलयुक्तत्वात् मौनं उपासनाजनितम्' इति तद्भाष्यानुसारेण *तत्त्व-प्रकाशिकायाम्* यो ब्रह्मप्राप्तियोग्योऽसौ आगमजं ज्ञानं लब्ध्वा युक्तिजज्ञानमापादयेत्। तदुभय-लाभानन्तरं ध्यानी भवतीति मुनिशब्देन ध्यानी व्याख्यातः। तथापि मुनिशब्दस्य मननशीलत्वं अर्थान्तरमप्यत्राभिमतम्। अत एव 'मननशीलत्वम्' इति भाषितेऽर्थे 'अथ मुनिः' इति श्रुतिः सम्मतित्वेनोदाहृता। अत एव 'सर्वं हीदं मतम्' इति श्रुतिरपि मननशीलत्वमेव मुनिशब्दप्रवृत्तौ निमित्तमाहेति तदनुसारेणैव व्याख्यातमिति न विसंवादशङ्कावकाशः।

*केचित्तु* 'मननशीलः' इत्यत्र मननशब्देन ध्यानमेव ग्राह्यम्, तत्त्वप्रकाशिकाऽनुसारात्। ध्यान-मननयोरुभयोरपि मानसतपस्त्वसम्भवेन ध्यानग्रहणे बाधकाभावाच्च। बाल्यशब्देन युक्तिभिरनु-चिन्तनरूपं प्रसिद्धं मननमेव विवक्षितम्। 'आगमार्थस्य युक्तिभिरनुसन्धानम्' इति टीकाऽपि। युक्तिभिरनु = पश्चाद् = युक्तिभिरनुचिन्तनरूपमननानन्तरम्, आगमार्थस्य भगवतो विषये सन्धानं = मनसः सम्यङ्निधानम् इति यावदिति व्याख्येयम्। एवं च न तत्त्वप्रकाशिकादिविरोध इत्याहुः। तत्र भाल्लवेयश्रुत्युदाहरणं भाष्यकारीयं मननमेव प्रसिद्धं मुनिशब्दप्रवृत्तिनिमित्तम् इत्यर्थे क्रियमाणं नातीव चतुरस्रम् इति **अपरे**। एवं मननशीलत्वमेव मौनशब्दार्थः तर्हि तस्य मानसतपस्त्वं कथं स्यात्? इति पृच्छति **किन्त्विति**। उत्तरमाह **अत्रेति**। 'मौनमात्मविनिग्रहः' इति गीतायाम्। **लक्ष्यते** मौनशब्देन। लक्षणाबीजसम्बन्धस्फोरणाय उक्तम् **तत्कारणमिति**। 'मनसा वा अग्रे सङ्कल्पयति, अथ वाचा व्याहरति, तस्मात् मन एव पूर्वरूपम्, वागुत्तररूपम्' इत्यादिना मनो-व्यापारपूर्वकत्वावगमाद्वा व्यापारस्य तन्नियमे साऽपि नियता भवतीति भावः। **कश्चित्** शङ्करः। तथा च तदीयं भाष्यम्— 'वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुपलक्ष्यते

मनःसंयमो मौनमिति' इति । 'सर्वतः सामान्यरूप आत्मविनिग्रहः, वाग्विषयस्यैव मनसः संयमो मौनमिति विशेषः' इति शङ्करेण भाषितत्वान्न पुनरुक्तिः ? इत्यत आह **कथञ्चित् परिहारेऽपीति** । आत्मनिग्रहपदेनैव मौनग्रहणे सम्भवति सामान्यविशेषाभावे पुनरुक्तिं परिहरतोऽकौशलमेवेति भावेन 'कथञ्चित्' इत्युक्तम् ॥ १६ ॥

*गीताक्षरार्थस्तु*—

एवं श्रद्धाभेदः सात्त्विकादिजीवस्वरूपभेदज्ञापक इत्युक्तम् । इदानीं आहार-यज्ञ-तपो-दान-भेदोऽपि तद्भेदज्ञापक इत्युच्यते **आहार** इत्यादिभिः श्लोकैः ।

तुशब्दश्चशब्दार्थः । **सर्वस्यापि** प्राणिसमूहस्य **प्रियः** इष्ट **आहारः** अन्नादिः **त्रिविधः** सात्त्विकादिभेदेन त्रिप्रकारः । **तथा यज्ञो दानं तपः** च त्रिविधमेव । **तेषां** आहारादीनां **भेदं** सात्त्विकादि इति भावः । **इमं** वक्ष्यमाणं **शृणु** ॥ ७ ॥

स एव भेद उच्यते— **आयुरित्यादिभिस्त्रिभिः** । **आयुः** जीवनं **सत्त्वं** साधुभावः, भवति हि सोऽपि शुच्यन्नाद् । **बलं** शक्तिः **आरोग्यं** रोगराहित्यं सकृदुपयुक्तेनापि विषयेण यत् सुखं भवति तदिह सुखशब्देन विवक्षितम् । विषयसेवाऽव्यवहितकाले भवं सुखं **प्रीतिः** तासां **विवर्धनाः** विशेषेण वृद्धिं कुर्वन्तः ते च **रस्याः** रसोपेताः = बहुवारोपयोग एव सौख्यप्रदाः **स्निग्धाः** स्नेहयुक्ताः **स्थिराः** चिरकालं देहे गुणप्रदा आज्यादयः **हृद्याः** सेवानन्तरमपि ये 'पुनर्भूयासुः' इति मनोहरन्ति ते । एवंविधा **आहाराः** कर्मणि घञ् अभ्यवहर्तव्याः । सात्त्विकानां प्रियाः शब्दाः ॥ ॥ ८ ॥

राजसप्रियाहारोक्तिः **कट्वम्लेति** । कटवः मरीचिकादयः, आम्लाः जम्बीरनीरादयः, लवणा अत्युष्णाश्च प्रसिद्धाः । तीक्ष्णाः सर्षपादयः, रूक्षाः स्वत एव नीरसाः क्रोद्रवादयः विदाहिन उदन्योत्पादकाः सन्तापजननशीला वा । एते **आहारा दुःखशोकामयप्रदाः** दुःखं = तात्कालिकचित्ततोदः, शोकः = पश्चाद्भावि दौर्मनस्यम्, आमयः = रोगः, एतान् प्रददति = प्रयच्छन्तीति तथोक्ताः, आहाराः राजसस्य **इष्टाः** प्रियाः, एते राजसा आहारा इत्यर्थः ।

अत्र सात्त्विक-राजसेषु 'रस्याः', 'स्निग्धाः' इति सात्त्विकत्वेनोक्तानां रस्यादीनां सात्त्विकत्वं न नियतम् । तथा कट्वादीनां राजसत्वमपि । तेषामेव कदाचित् सात्त्विकत्वम्, कदाचित् राजसत्वमपि भवतीत्ययमर्थः 'कट्वादीनामपि आरोग्यरसाद्यर्थत्वेन सात्त्विकत्वमेव । रस्यादीनामपि

राजसत्वं अनारोग्यहेतुत्वे । " 'दुःखशोकामयप्रदाः' इति 'दुःखादिप्रदाश्चेद् राजसाः' इत्युक्तत्वाद् अनारोग्यहेतुत्वे न सात्त्विकत्वनियमः" इत्युत्तरप्रस्थानतोऽवगन्तव्यः ॥ ९ ॥

**यातयाममिति** । यातो यामः = प्रहरो यस्य तथा । यामाद् उपरिगतप्रहरमित्यर्थः । यामं = नियम्यम्, अपेक्षितांशः = सार इति यावत् । **गतरसम्** पूर्वं स्वाद्वेव, पश्चाद् अन्यथाजातं गतरसम् । यो वा को वा यस्य रसः तदपगमे यातयामम्, स्वादुत्वापगमे गतरसमित्यर्थभेद इति *न्यायदीपिका* । एतेन 'पङ्क्तिपावनपुरुषान्नस्य सात्त्विकत्वप्रसिद्धेः कथं यातयामं गतरसम् ? इति शङ्का निरस्ता । **पूति** स्वतः परिणामतो वा दुर्गन्धोपेतम्, **पर्युषितम्** पक्कम् सद् रात्र्यन्तरित-दिनान्तरितपाकमित्यपि आहुः । **उच्छिष्टं** अन्यभुक्तावशिष्टम् **अमेध्यं** अयज्ञार्हं अपवित्रं **भोजनं** कर्मणि ल्युट् अभ्यवहर्तव्यं **तामसप्रियं** तामसजनस्येष्टम् ॥ १० ॥

अथ सात्त्विकादिजीवस्वरूपज्ञापकं यज्ञत्रैविध्यमुच्यते **अफलाकाङ्क्षिभिरिति** त्रिभिः । **अफलाकाङ्क्षिभिः** फलाभिलाशरहितैः पुम्भिः **विधिदृष्टः** शास्त्रचोदनया कर्तव्यतयाऽवगतः **यो** यज्ञः **यष्टव्यमेव** यज्ञानुष्ठानं कर्तव्यमेव । भगवत्प्रीत्युद्देशेन नान्यत् फलं साधनीयम् **इति** एवं **मनः समाधाय** एकाग्रं कृत्वा **इज्यते** यजिरत्र करणार्थः, क्रियते । विष्णौ मनः समाधाय सर्वयज्ञ-भोक्तृत्वेन इज्यमानदेवतान्तर्यामित्वेन विष्णुं अनुसन्धायेति वा । **सः** यज्ञः **सात्त्विकः** सात्त्विक-जीवस्वरूपज्ञापक उच्यते ॥ ११ ॥

**अभिसन्धायेति** । हे **भरतश्रेष्ठ यत्** कर्मफलं **अभिसन्धाय** 'मम भूयात्' इति कामयित्वैव, तुशब्दः सात्त्विकयज्ञवैलक्षण्यद्योतनार्थः । **दम्भार्थमपि** परवञ्चनेन महत्त्वख्यापनायापि य **इज्यते** क्रियते **तं यज्ञं राजसं** राजसजीवस्वरूपज्ञापकं विद्धि ॥ १२ ॥

**विधिहीनमिति** । **विधिहीनं** यथाशास्त्रचोदितविपरीतम्, **असृष्टान्नं** ब्राह्मणेभ्यो न दत्तमन्नं यस्मिन् तथा, **मन्त्रहीनं** तत्तद्देवतादिप्रकाशकमन्त्रशून्यम्, स्वरतो वर्णतो वा वियुक्तं अमन्त्रकं इत्यपि *आहुः* । **अदक्षिणं** कल्पोक्तदक्षिणारहितं **श्रद्धाविरहितं** आस्तिक्यनिष्ठया विशेषेण हीनं **यज्ञं तामसं** तमोगुणनिर्वृत्तं तामसजीवस्वरूपज्ञापकं **परिचक्षते** कथयन्ति प्राज्ञाः ॥ १३ ॥

तपोभेदेनापि सात्त्विकादिजीवस्वरूपभेदं ज्ञापयितुं शरीरादिभेदेन तपसस्त्रैविध्यं तावदुच्यते **देवद्विजगुरुप्राज्ञ इत्यादिभिस्त्रिभिः** । **देवाः** विष्णु-लक्ष्मी-विरिञ्च-वाणी-ईश-गिरिजा-इन्द्रादयः **द्विजाः** ब्राह्मणाः **गुरवः** तत्त्वस्योपदेष्टारः **प्राज्ञाः** तदन्ये तत्तत्त्वविदः, तेषां पूजनम् । **शौचं**

बाह्यमाभ्यन्तरं च **आर्जवं** सदाचारे नित्यमेकप्रकारकत्वरूपम् ऋजुत्वम् । **ब्रह्मचर्यं** गुह्येन्द्रियनियमनं **शारीरं** शरीरनिर्वर्त्यं तप उच्यते ॥ १४ ॥

**अनुद्वेगेति** । उद्वेगं = भयं न कर्तुं शीलमस्येति **अनुद्वेगकरम्** । करोतेः ताच्छील्ये टः । **सत्यं** यथा श्रोतुः प्रियं हितं च परिणामे सुखकरं च **वाक्यं स्वाध्यायाभ्यसनं च वाङ्मयं** वाचा निर्वर्त्यं **तप उच्यते** ॥ १५ ॥

**मनःप्रसाद इति** । **मनःप्रसादः** प्रसन्नता = प्रायेण विषयेष्वप्रवृत्तिः । **सौम्यत्वं** अक्रौर्यं **मौनं** मननशीलत्वम्, न त्वभाषणत्वम् । तस्य मानसत्वाभावादिति भाष्ये स्पष्टम् । **आत्मविनिग्रहः** विषयेभ्यो मनसः प्रत्याहारशब्दितो निरोधः । विषयेभ्यः प्रत्याहृतस्य मनसो हरौ स्थापनमित्यपि **आहुः** । **भावसंशुद्धिः** आशये नानारागराहित्यम् । व्यवहारे मायाराहित्यमिति अन्ये । **इत्येतन्मानसं तप उच्यते** ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

**मौनं मननम् ॥ १६ ॥**

*प्रका०*— "अफलाङ्क्षिभिर्यज्ञो विधिदृष्टो न इज्यते । युक्तैरि"त्यनुषञ्जनीयं तदाह **मौनमित्यादिना** ।

***न्या०दी०*— "मनःप्रसादः सौम्यत्वं मौनम्" इत्यत्र मौनशब्दस्यान्यार्थत्वप्रतीतिनिरासायाह मौनमिति ॥ कथमन्यथा मानसं तपः स्यादिति भावः ॥**

**गीता**

## श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
## अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

*वि०वि०*— इदानीं सात्त्विकादिभेदेन त्रैविध्यं प्रतिज्ञापूर्वकमाह **श्रद्धयेत्यादिना** । युक्तैः भगवदर्पणादियोगयुक्तैः । तप्तं तपः । पाकः पक्व इतिवत् युक्तैः । एतत्सात्त्विकयज्ञादिष्वप्यनुषञ्जनीयम् ॥ १७ ॥

*सा०सं०*— इदानीं सात्त्विकादितपोभेदेन सात्त्विकादिजीवभेदं प्रतिज्ञापूर्वमाह **श्रद्धयेत्यादिभिस्त्रिभिः** । **नरैस्तप्तं** कृतम् । **तपः** यत् तत् **त्रिविधमित्यर्थः** ॥ **तत्कथमित्यत** आह **अफलेति** । **युक्तैः** भगवदर्पणादियोगयुक्तैः । तप्तं तप इत्यनुषज्यते ॥ १७ ॥

*अ०प्र०*— तदेवं शरीरवाङ्मनोभिः निवर्त्यं त्रिविधं तपो दर्शितम् । तस्य त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह **श्रद्धयेति** त्रिभिः ।

तत्[१], त्रिविधं[२], तपः[३], अफलाकाङ्क्षिभिः[४], युक्तैः[५], नरैः[६], परया[७], श्रद्धया[८], तप्तं सत्[९], सात्त्विकं[१०] परिचक्षते[११] इत्यन्वयः ।

तत् = पूर्वोक्तं[१], त्रिविधमपि[२], तपः[३], अफलाकाङ्क्षिभिः = फला-काङ्क्षाशून्यैः[४], युक्तैः = एकाग्रचित्तैः[५], नरैः = पुरुषैः[६], परया = सात्त्विकया श्रेष्ठया वा आस्तिक्यबुद्ध्या वा[७], श्रद्धया = विष्णुःसर्वोत्तमत्वादि श्रद्धया[८], तप्तं सत् = आचरितं सत्[९], एवं कृतं तपः सात्त्विकं परिचक्षते ॥ १७ ॥

**गीता**

## सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
## क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

*वि०वि०*— मनसा आदरः सत्कारः । वाचा प्रशंसा मानः । शरीरो नमस्कारादिः पूजा । चलं पातभयेन चलनहेतुः । अध्रुवं क्षयिष्णु ॥ १८ ॥

*सा०सं०*— **सत्कारो** मनसा आदरः । **मानो** वाचा प्रशंसा । **पूजा** अर्चनम् । एतदर्थं **दम्भेन च** आत्मनो **महत्त्व**प्रदर्शनार्थं वा । **यत् तपः क्रियते तत्** तपः । **इह** लोके । **राजसं प्रोक्तम्** । **चलं** पातभयेन चलनहेतुः । **अध्रुवं** क्षयिष्णु ॥ १८ ॥

*अ०प्र०*— राजसतप आह **सत्कारमानपूजार्थमिति** ।

सत्कारमानपूजार्थं[१], अत एव चलं[२], अध्रुवं च[३], दम्भेन चैव[४], यत्तपः[६], क्रियते[७], तत्तपः[८], इह[९], राजसं[१०] प्रोक्तम्[११] ।

सत्कारमानपूजार्थं = सत्कारः साधुकारः तदर्थं अयं तपस्वी महान् वरिष्ठ इत्यादि । यद्वा, आत्मनोऽन्येभ्यः सत्कारः साधुकारः इत्यादि सत्कारार्थम् । मानः = प्रत्युत्थानाभिवन्दनोन्नता-सनादिमानार्थं पूजार्थं पादप्रक्षालनचन्दनार्चनाद्यनेकभोगोपचारादि दैहिकपूजा अर्थलाभाद्यर्थं च[२], अत एव चलं = अनियतं पापभयेन चलहेतुर्वा[२], अध्रुवं = क्षयिष्णुफलकं[३], दम्भेन चैव = धनमानार्थं यत्कृतं स दम्भः । यद्वा, सत्काराद्यर्थदम्भेन चैव[४], एवंभूतं यत्तपः[६], क्रियते[७], तत्तपः[८], इह[९],

राजसमिति प्रोक्तम् । यद्वा, दम्भेन क्रियमाणत्वात् अध्रुवं निष्फलं दृष्ट्वा तत्तपः प्रजहाति तस्माच्चलमित्यपि पाठान्तरम् ॥ १८ ॥

**गीता**

## मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
## परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

*वि०वि०*— मूढग्राहेण अविवेकदुराग्रहेण । आत्मनः पीडया । शक्त्यादिकमनपेक्ष्य उत्सादनार्थम् ॥ १९ ॥

*वा०ल०*— 'मूढग्राहेण' इत्यत्र, मूढग्राहेण मूढेषु पिशाचादिषु ग्राहेण दुराग्रहेण ॥ १९ ॥

*सा०सं०*— **मूढग्राहेण** अविवेकदुराग्रहेण । **आत्मनः पीडया** । **परस्य** शत्रोः । **उत्सादनार्थं वा यत् तपः क्रियते तत् तामसम्** ॥ १९ ॥

*अ०प्र०*— तामसं तप आह **मूढग्राहेणेति** ।

अन्वयः स्पष्टः । मूढग्राहेण = अविवेककृतदुराग्रहेण तादृशशक्त्यभावेन[१], आत्मनः पीडया = स्वदेहपीडया[२], परस्योत्सादनार्थं वा = अन्यस्य विनाशार्थं अभिचारिकं हिंसादिकं वा[३], यत्[४], तपः[५], क्रियते[६], तत्तपः[७], तामसं तमोगुणात्मकं[८], उदाहृतं कथितम्[९] ॥ १९ ॥

**गीता**

## दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
## देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

*वि०वि०*— दानभेदमाह दातव्यमित्यादिना । पुण्यदेशे काले पात्रे च प्रत्यासन्ने सति । तस्मै अनुपकारिणे पात्राय दीयते यद्दानं तत् सात्त्विकम् ॥ २० ॥

*सा०सं०*— प्राक् प्रतिज्ञातदानभेदेन सात्त्विकादिभेदमाह **दातव्यमित्यादित्रिभिः** । **दातव्यमित्या**स्तिक्यबुद्ध्या **दानम्** । कर्मणि ल्युट् । दातव्यं वस्तु । पुण्यदेशे पुण्यकालेऽनुपकारिणे उपकारमनपेक्ष्य । **सत्पात्रे** च पात्राय । **दीयते इति यत् तद्दानं सात्त्विकम्** ॥ २० ॥

*अ०प्र०*— पूर्वं प्रतिज्ञातमेव दानस्य त्रैविध्यमाह **दातव्यमिति** ।

अनुपकारिणे[१], देशे[२], काले[३], पात्रे च[४], दातव्यमिति[५], यद्दानं[६], दीयते[७], तद्दानं[८], सात्त्विकं[९], स्मृतं[१०] इत्यन्वयः ।

अनुपकारिणे = प्रत्युपकारासमर्थाय । यद्वा, प्रत्युपकारमकुर्वाणाय । यद्वा, पूर्वकाले स्वस्योपकारस्याकर्ता । उत्तरकाले वा एतादृशायानुपकारिणे[१], देशे = कुरुक्षेत्रादौ तत्समानदेशे वा[२], काले च = ग्रहणादिपुण्यकाले च[३], पात्रे तु = सत्पात्रे प्राप्ते सति पात्रभूताय तपःश्रुतादिसम्पन्ना इति । चतुर्थी-सप्तम्यन्तेन वा । पात्रपदं पातृपदं वा वेदितव्यं[४], देशाद्यपेक्षया पात्रस्योत्तमत्व-सूचनाय तुमन्ते प्रयोगः । पापादुद्धृत्य रक्षकायेत्यर्थः[४], तदुक्तम्— "पाति त्राति हरिः साक्षात् पात्रशब्दोदितस्ततः । तस्मात्पात्रं हि मुख्यानि विष्णुपादाम्बुजाश्रयाः ॥" पाति पिबत्यनुभवति देयं वस्तु दातारं च त्राति इति स्मृत्यर्थः[४] । दातव्यमिति निष्कामनया दातृत्वाभिमानं विहाय विहित-त्वाद्विष्णुप्रीतये स्वधर्मेनोपार्जितं भूम्यादि दातव्यमेवेति निश्चयेन[५], यद्दानं[६], दीयते = अर्प्यते[७], तद्दानं = यत्पूर्वोक्तरीत्या यद्दानं सत्त्वसम्बन्धि सर्वेषां दानानां वरिष्ठं तद्दानं[८], सात्त्विकं[९], स्मृतं = कथितं निश्चितं जानीहीत्यर्थः[१०] ॥ २० ॥

**गीता**

## यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
## दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

*वि०वि०*— परिक्लिष्टं चित्तक्लेशयुक्तम् । अशुभद्रव्यं वा ॥ २१ ॥

*बा०ल०*— 'परिक्लिष्टम्' इत्यत्र, परिक्लिष्टं परिक्लेशसहितम् ॥ २१ ॥

*सा०सं०*— **परिक्लिष्टम्** अन्यायार्जितं द्रव्यम् ॥ २१ ॥

*अ०प्र०*— राजसदानमाह **यत्त्विति** ।

प्रत्युपकारार्थं[१], पुनः[२], फलं[३], उद्दिश्य वा[४], परिक्लिष्टं[५], यत् दानं[६], दीयते[७], तत्[८], राजसं उदाहृतम्[१०] ॥

प्रत्युपकारार्थे पूर्वकाले भूतं वा उत्तरत्र भाविनं च उपकारमपेक्ष्य तस्य प्रत्युपकारार्थम् । यद्वा, अस्मै दानं दत्तं चेत् अयं पुनः प्रत्युपकारं करिष्यतीति अभिलाषेण प्रत्युपकारार्थं[१], पुनः = फलं

उद्दिश्य वा स्वर्गादिकफलमुद्दिश्य वा[४], परिक्लिष्टं = चित्तक्लेशयुक्तं यथा भवत्येवं यद्वा दानसमये वा पश्चाद्वा क्लेशयुक्तं यथा भवति तथा चौर्याद्यवहितक्लेशसम्पादितं वा । यद्वा, वेदनायुक्तं सर्वस्वं चोरेण अपहृतमिव[५], यद्दानं[६], दीयते[७], तद्राजसं[८], उदाहृतं = कथितं सद्भिः ॥ २१ ॥

**गीता**

# अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
# असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

***वि०वि०***— अदेशकाले अशुचौ देशे काले च । असत्कृतं नमस्कारादिसत्काररहितम् । अवज्ञातं तिरस्कारयुक्तम् ॥ २२ ॥

***वा०ल०***— 'असत्कृतम्' इत्यत्र, असत्कृतं सत्काररहितम् ॥ २२ ॥

***सा०सं०***— **अदेशकाल** इति द्वन्द्वैकवद्भावः । अशुचिदेशकालयोः **असत्कृतम्** । नमस्कारादिसत्काररहितम् । **अवज्ञातम्** अवज्ञाकरणयुक्तं यथा तथा । **अपात्रेभ्यः यद्दीयते तत् तामसमित्यर्थः** ॥ २२ ॥

***अ०प्र०***— तामसदानमाह **अदेशेति** ।

अदेशे[१], अकाले[२], अपात्रेभ्यश्च[३], असत्कृतं[४], अवज्ञातं[५], यद्दानं[६], दीयते[७], तत् तामसं[८], उदाहृतं[१०] इत्यन्वयः ।

अदेशे = अशुचिस्थाने[१], अकाले = अशौचसमये । यद्वा, अदेशकाले निषिद्धकालदेशयोः[२], अपात्रेभ्यश्च = पात्रलक्षणशून्येभ्यः भटनटविटगायकेभ्यो वा[३], असत्कृतं = देशकालपात्रसम्पन्नावपि पादक्षालनादिसत्कारशून्यम् । यद्वा, आर्यादिवन्दनादि पूजाहीनं[४], अवज्ञातत्वमित्यादि हीनोक्त्या निर्भर्त्स्य कुत्सितवचनादिभिः तिरस्कारयुक्तं[५], यद्दानं[६], दीयते[७], एवंभूतं तद्दानं[८], तामसं[९], उदाहृतम्[१०] ॥ २२ ॥

*गीताक्षरार्थस्तु*—

एवं शरीरादिभेदेन त्रिविधमपि तपः सात्त्विकादिभेदेन त्रिविधमित्युच्यते **श्रद्धयेत्यादिभिस्त्रिभिः** । **तत्** शरीरादिभेदेन त्रिविधमपि **तपः** सात्त्विकादिभेदेन त्रिविधं कृतम् । त्रिविधमपि तपः **परया** प्रकृष्टया **श्रद्धया** आस्तिक्यनिष्ठया **अफलाकाङ्क्षिभिः** फलाकाङ्क्षारहितैः **युक्तैः** भगवदर्पणादियोगयुक्तैः । न केवलं तपस एवैतदुच्यते, किन्तु यज्ञदानयोरप्येतदनुसन्धेयं इत्यन्यतोऽवसेयम् ।

**नरैः** पुरुषैः **तप्तं** अनुष्ठितं **तपः सात्त्विकं** सात्त्विकजीवस्वरूपज्ञापकं **परिचक्षते** कथयन्ति शिष्टाः ॥ १७ ॥

**सत्कारेति** । सत्कारः = 'साधुरयं तपस्वी ब्राह्मणः' इत्यादिवाक्पूजारूपः साधुकारः । मानः = प्रत्युत्थानाभिवन्दनादि रूपं माननम् । पूजा = पादप्रक्षालन-अर्चनादिरूपा गौरवितप्रीतिहेतुक्रिया, एता एव अर्थः = प्रयोजनं यस्य तत् **सत्कारमानपूजार्थं दम्भेनैव** परवञ्चनेनैव **यत्** तपः **क्रियते तदिह** विद्वत्सदसि **राजसं प्रोक्तम्** । तस्यैव गर्हिततत्वं दर्शयितुमुक्तम् **चलं** कादाचित्कफलं **अध्रुवं** क्षयिष्णुफलकं चेति । मोक्षसाधनातिरिक्तफलकं सर्वं तपो राजसमिति भावः ॥ १८ ॥

**मूढेति** । **मूढग्राहेण** अविवेककृतेन दुराग्रहेण, मूढोपदेशेनेति एके । **आत्मनः पीडया** कायस्य कर्शनेन केशोल्लुण्ठनादिरूपेण **यत् तपः क्रियते परस्योत्सादनार्थं** नाशार्थं आभिचारादिरूपं वा **तत्तामसमुदाहृतम्** ॥ १९ ॥

इदानीं प्रतिज्ञातो दानभेद उच्यते **दातव्यमित्यादिभिस्त्रिभिः** । **देशे** पुण्यदेशे **काले** पुण्यकाले **पात्रे** 'अक्षय्यं ब्राह्मणे दानम्' इत्यत्रेव पात्रे इति सप्तमी । समुपनत एव विहितत्वाद् विष्णुप्रीतये **दातव्यमिति** एवं श्रद्धया **यद् अनुपकारिणे** प्रत्युपकारमकुर्वते ब्राह्मणाय **दीयते** क्रियते **तद् दानं सात्त्विकं** सात्त्विकजीवस्वरूपज्ञापकं **स्मृतं** धर्मग्रन्थेषु निबद्धम् ॥ २० ॥

'यत्तु' इत्यत्र सात्त्विकदाने वैलक्षण्यद्योतनाय तुशब्दः । **यत्तु** दानं **प्रत्युपकारार्थं** 'काले प्रसक्तोऽयं मां प्रत्युपकरिष्यति' इत्येवं बुद्ध्या इति यावत् । **फलं** स्वर्गादिकं **उद्दिश्य वा पुनः** दीयते **परिक्लिष्टं** चित्तखेदयुक्तं यथा भवति तथा **तद्राजसमुदाहृतं** शास्त्रेषु ॥ २१ ॥

**अदेशेति** । **अदेशकाले** द्वन्द्वैकवद्भावात्, म्लेच्छाशुच्यादिसङ्कीर्णदेशे अकाले पुण्याहेतुत्वेन अप्रख्याते निषिद्धदेशे निषिद्धकाले वा **अपात्रेभ्यः** मूर्ख-नट-विटादिभ्यः, चशब्दः तुशब्दार्थस्सन् सात्त्विक-राजसवैलक्षण्यद्योतकः । **दीयते** क्रियते **असत्कृतं** देशकालपात्रसम्पत्तौ वा प्रियवन्दन-पादप्रक्षालनादिसत्काररहितं **अवज्ञातं** पात्रपरिभवयुक्तं **तद्** एवंभूतं दानं **तामसं** तामसजीवस्वरूपज्ञापकं **उदाहृतं** आर्यैः ॥ २२ ॥

**गीतातात्पर्यनिर्णयः**

**युक्तैः** भगवदर्पणादियुक्तैः । युक्तैरिति दानादिषु सर्वत्र समम् । सत्सम्बन्धित्वादेव कर्मादि सत् ॥ १७-२२ ॥

*प्रका०*— "श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः" इत्यत्र युक्तैरित्येतत्पदार्थमाह **भगवदर्पणादियोगयुक्तैरिति** । ॐतत्सदित्यादेरर्थं विवेचयन् अध्यायार्थमुपसंहरति **सत्सम्बन्धित्वादिना** ।

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां सप्तदशोऽध्यायः ॥*

***न्या०दी०***— **"अफलाकाङ्क्षिभिर्युक्तैः" इत्यत्र युक्तत्वं नाम किमित्यत आह युक्तैः इति ॥ ननु सात्त्विकयज्ञदानयोर्भगवदर्पणमनुक्त्वा तमस्येव किमुच्यत इत्यत आह युक्तैः इति ॥ न केवलं तपस्येवैतदुच्यते किन्तु यज्ञदानतपःस्वपि एतदनुषञ्जनीयमिति भावः । "ॐ तत्सदिति निर्देशः" इत्येतद्वाक्यान्तरेण व्याख्यातम् । तद्वाक्यविवरणेनैतद्वाक्यं विवृणोति सदिति ॥**

*भा०दी०*— **वाक्यान्तरेणेति** । "ॐतत्सदिति", "यद्विष्णोरि"त्यादिवाक्यान्तरेणेत्यर्थः ॥ **तद्वाक्येति** । प्रागुक्तस्मृतिवाक्यविवरणेन एतद्वाक्यं गीतावाक्यमित्यर्थः ॥

**गीता**

## ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
## ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

*वि०वि०*— सात्त्विकानां यज्ञादीनामसाधारणेत्थम्भावविधानार्थमाह **ॐ तत्सदित्यादिना** । ब्रह्मणः परमात्मनः । निर्दिश्यतेऽनेनेति निर्देशो नाम ॐ तत्सदिति त्रिविधः । ओतं प्रविष्टं जगद्यत्र जगति च स्वयमोतमित्योमित्युच्यते तदिति नित्यपरोक्षमुच्यते ब्रह्म च प्रत्यक्षानुमानागम्यम् । वेदैकवेद्यमिति तदित्युच्यत निर्दोषसर्वशुभत्वात् सदित्युच्यते । तथा च श्रुतिः— "ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभियुतो न चान्यैरोन्तत्सदित्येनमतो वदन्ति ॥" इति । एतैर्नामभिरात्मपूजया प्राणिनां शुभार्थम् । तेन ब्रह्मणा । ब्राह्मणादयो विहिताः । वेदानां विधानं नाम व्यञ्जनमेव । तेषामपौरुषेयत्वात्तस्य च प्रमितत्त्वात् । परमेश्वरस्य वेदव्यञ्जनं नाध्यापकवत् । किन्तु, वेदे नियोगादीनां सद्भावाच्छब्दादीनां च नियोक्तृत्वासम्भवादनादिसिद्धेनैव शब्दार्थसम्बधेनेश्वरस्यैव नियोक्तृत्वात्स्वातन्त्र्यमप्यस्तीति ज्ञापयितुं विहितात्, युक्तं ब्रह्मणः स्वप्रतिमात्वेन यज्ञादीनां विहितत्वात्तेषामप्यों तत्सदिति नामत्रयमस्ति ॥ २३ ॥

*वा०ल०*— 'ओं तत् सदिति निर्देशः' इत्यत्र, ब्रह्मणः परब्रह्मणः सर्वगुणपूर्णत्वात् ओ, 'तनु विस्तारे' इति धातोः औणादिके डप्रत्यये कृते सकलजगद्व्याप्तत्वात् तत्, सदा विद्यमानत्वात् निर्दोषत्वाच्च सत् इति त्रिविधो निर्देशः स्मृतः । तेन ओं तत् सदिति निर्देशेन, ओं तत्सदिति निर्देशपूर्वकमुपनयनादिसंस्कारे कृते ब्राह्मणा विहिता इत्यर्थः ॥ २३ ॥

*सा०सं०*— **'अफलाकाङ्क्षिभिः'** इत्यादिना पूर्वं यज्ञतपोदानानां सात्त्विकत्वादिहेतवोऽसाधारणधर्माः उक्ताः । साधारणांस्तु वक्तुमनेककर्तृचरितानुवादरूपपुराकल्पाख्यार्थवादमाह **ओमित्यादिना** । निर्दिश्यते अनेनेति **निर्देशो** नाम । **ब्रह्मणः त्रिविधः स्मृतः** । ओतं प्रविष्टमाश्रितं इति यावत् । जगद्यत्र परे इति वा, ईश्वरो वा जगति प्रोतः प्रविष्ट इति वा व्युत्पत्त्या ओमिति नाम हरेः । 'अव रक्षणकान्तिगतिप्रवेशे' इत्याद्यर्थस्यावतेः 'अवतेष्टिलोपश्च' इति सूत्रेण मन्प्रत्ययः । तस्य टिलोपे 'ज्वरत्वर...' इत्यूठि, 'सार्वधातुक' इति गुणे च ओमिति रूपसिद्धेः । गुणैस्ततत्वाद्वा, तदित्यस्य परोक्षवाचित्वाद्ब्रह्मणश्च वेदैकवेद्यतया परोक्षत्वात् तदिति नाम । निर्दोषसर्वशुभगुणपूर्णत्वात् सदिति नामेति ज्ञेयम् । **तेन** ब्रह्मणा । **ब्राह्मणादयः पुरा** सृष्टिकाले । **विहिताः** सृष्टाः । वेदानां विधानं नाम अभिव्यक्तिर्ज्ञेया ॥ २३ ॥

*अ०प्र०*— ननु चैवं सर्वविचार्यमाणे सर्वमपि यज्ञतपोदानादि राजसतामसं प्रापकमेवेति व्यर्थो यज्ञादि प्रयास इत्याशङ्क्य तथाविधस्यापि सात्त्विकत्वापादानप्रकारं दर्शयितुमाह । यद्वा, सात्त्विकादियज्ञादीनां असाधारणेतिकर्तव्यताप्रतिपादनार्थपुराकल्परूपार्थवादमाह **ॐ तत्सदिति** ।

अथान्वयः— ॐ[१], तत्[२], सत्[३], इति[४], त्रिविधः[५], ब्रह्मणः[६], निर्देशः[७], स्मृतः[८], तेन[९], ब्राह्मणाः[१०] वेदाश्च[११], यज्ञाश्च[१२], पुरा[१३], विहिताः[१४] ॥

ॐ इति सर्वमन्त्रराजो प्रणवः आदिवर्णः । यद्वा, ॐ तं प्रविष्टमाश्रितं वा जगद्यत्रेति स्वयञ्च हरिर्जगति । ॐ तः प्रविष्टपूर्ण गुणो वा । यद्वा, ओमित्युच्यते विष्णुः परोक्षं वस्तु । यद्वा, 'ओमित्येकाक्षरं ब्रह्मे'त्यादि श्रुतिप्रसिद्धेः । ॐ इति ब्रह्मणो नाम[१], तत्-शब्दवाच्यं हरिस्तु प्रत्यक्षावेद्यत्वेन मुख्यतो वेदैकगम्यत्वात् गुणैस्ततत्त्वाद्वा तदित्युच्यते[२], यद्वा, तत् जगत्कारणत्वेनातिप्रसिद्धत्वात् अविदुषां परोक्षत्वाच्च तच्छब्दोऽपि ब्रह्मणो नाम । निर्दोषगुणपूर्णत्वात्सदित्युच्यते[३], यद्वा, सत् = परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दः ब्रह्मणो नाम[३], तदुक्तम्— ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभियुतो न चान्यैरों तत्सदित्येनमथो वदन्ति ॥[३], यद्वा, ओमिति ब्रह्म तत् 'सत्यं सदैव सौम्येत्यादि'श्रुतेः । एवमोमादिना मन्त्रवता इति[३],

इति = अयं[४], त्रिविधः = त्रिविधोऽपि नामनिर्देशो विगुणमपि सगुणीकर्तुं समर्थ इत्याशयेन स्तौति[५], ब्रह्मणः = परस्य परमात्मनः[६], निर्देशः = ॐतत्सदाकारो ब्रह्मणो निर्देशः निर्दिश्य इति निर्देशो नामव्यपदेशः[७], स्मृतः = ब्रह्मा मां जगदुत्पादकमिति अजानन् लोकान् स्रष्टुमशक्नुवन् ज्ञानाभावेन एकं एकस्थितः । स एनैकेन नाम्ना महान् समर्थः कृतः । ॐ नमोऽर्थं मनसि ध्यात्वा वा जपित्वा विश्वसृजने योग्योऽभूत् तदा । यद्वा, शिष्टैः स्मृतः[८], तेन परब्रह्मणा विष्णवाख्येन स्वभक्तं जनानां ज्ञानादिफलप्राप्त्यर्थं फलस्य च यज्ञादिरूपस्वरूपस्वपूजासाध्यत्वात् यज्ञादेश्च मन्त्र-ऋत्विक् साध्यत्वात् तेन त्रिविधेन ब्रह्मणो निर्देशेन[९], ब्राह्मणाः = ऋत्विग्रूपब्राह्मणाः[१०] वेदाश्च चकारेण अनेकलोकाः । यद्वा, रूपमन्त्रविदाः[११], यज्ञाश्च = यज्ञाद्याश्च[१२], पुरा = पूर्वं सृष्ट्यादौ सृष्टेः रूपं क्रमात्पूर्वं[१३], विहिताः = विधात्रा निर्मिताः । स्वगुणीकृता वा[१४], यस्मादोमादिशब्दवाच्येन हरिणा यज्ञादयो निर्मिताः तस्मात्ते ॐ आदिशब्दवाच्या इत्युक्तं भवति । पितुर्नाम पुत्रस्य भवति । 'यत्पितुस्तद्वा पुत्रस्ये'ति श्रुतेः । यादवः राघवः इत्यादिवच्च । यद्वा, यस्यायं त्रिविधो निर्देशः तेन परमात्मना ब्राह्मणादयः पवित्रतमाः श्रेष्ठाः तस्मात् तत्सदिति निर्देशोऽतिप्रशस्त इत्यर्थः ॥ २३ ॥

**भाष्यम्**

## पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह ॐ तत्सत् इत्यादिना ।

***प०टी०*—** ननु कथं गुणभेदकथनपराध्याये अन्यदुच्यते ? इत्यत आह **पुनश्चेति** । 'अफलाकाङ्क्षिभिः' इत्यादिना सात्त्विककर्मणः स्वरूपमुक्तम्, तदेव सेतिकर्तव्यमुच्यत इत्यर्थः ।

***प्र०दी०*—** 'ॐ' इत्यादिकं प्रकृतासङ्गतं कथमुच्यत इत्यत आह **पुनश्चेति** । 'कर्म' इति यज्ञ उच्यते । **आदिपदेन** तपोदाने । **इतिकर्तव्यता** इत्थंभावः । **विधानार्थं** प्रतिपादनार्थम् । 'अफलाकाङ्क्षिभिः' इत्यादिनोक्तत्वात् 'पुनश्च' इत्युक्तम् । यज्ञतपोदानानां सात्त्विकत्वादि हेतवो असाधारणा धर्माः प्रागुक्ताः । साधारणांस्तु वक्तुं पुराकल्पादिरूपम् **अर्थवादमाह** इत्यर्थः ।

***भा०दी०*—** **इत्थंभाव इति** । 'ॐ तत् सत्' इति शब्दत्रयार्थभगवज्ज्ञानभक्त्यादिपूर्वकं फलानभिसन्धानेन ओमादिशब्दत्रयार्थभगवन्तमुद्दिश्य ब्राह्मणैः सह यज्ञतपोदानानुष्ठानं कार्यमित्येवं यज्ञास्तदनुष्ठानोपयुक्ताङ्गकलाप इत्यर्थः । अर्थाभावे विध्यभावात् कल्प्याविध्यभिप्रायं भाष्यमिति भावेनाह **प्रतिपादनार्थमिति** । **प्रागुक्ता इति** । अफलाकाङ्क्षिभिः इत्यादिनोक्ता इत्यर्थः । **साधारणांस्त्विति** । ज्ञानभक्त्यादिरूपानित्यर्थः । **पुराकल्पेति** । अनेककर्तृकचरितानुवादमित्यर्थः ।

मोक्षकाङ्क्षिभिरिति बहुवचननिर्देशादिति भावः । **आदिपदेन** एककर्तृकचरितानुवादाख्यपरमकृतिरूपमिति गृह्यते । तेन 'विहिताः' इति कर्तुः एकत्र प्रतीतेरिति ज्ञेयम् ।

*भा०र०*— **प्रकृतेति** । गुणनिमित्तकश्रद्धादिभेदस्यैव एतदध्यायप्रतिपाद्यत्वेन प्रकृतत्वादिति भावः । ननु कर्मण एतदध्याये प्रकृतत्वात् कर्मादिरितिकर्तव्यताप्रतिपादनं प्रकृतासङ्गतम् ? इत्याशङ्कापरिहाराय कर्मादिशब्दार्थमाह **कर्मेति यज्ञ इति, तपोदान इति, इत्थंभाव इति** । 'ओम् तत् सद्' इति शब्दत्रयार्थभगवज्ज्ञानभक्त्यादिपूर्वकं फलानभिसन्धानेन ओमादिशब्दार्थं भगवन्तमुद्दिश्य ब्राह्मणैः सह यज्ञ-तपो-दानान्यनुष्ठेयानि इत्येवं वक्ष्यमाणो यज्ञाद्युपयुक्ताङ्गकलाप इत्यर्थ इति *स्वामिनः* । आहत्य विधिप्रत्ययादर्शनादाह **प्रतिपादनार्थमिति** । अर्थवादकल्प्यविध्यभिप्रायं भाष्ये विधानमिति भावः । **उक्तत्वात्** फलाभिसन्धानाभावमनःसमाधानादिरूपेतिकर्तव्यताया उक्तत्वात् तर्हि पुनरुक्तिः ? इत्यत आह **यज्ञतपोदानानामिति** । **सात्त्विकत्वादिहेतवः** सात्त्विकत्व-राजसत्व-तामसत्व-प्रयोजकाः **प्राक्** 'अफलाकाङ्क्षिभिः' इत्यत्र, 'अभिसन्धाय तु' इत्यत्र, 'विधिहीनमसृष्टान्नम्' इत्यत्र च यज्ञस्य । एवं तपोदानयोरपि द्रष्टव्यम् । **साधारणान्** ज्ञानभक्त्यादिरूपान् । पुराकल्पशब्देन अनेककर्तृकचरितानुवादरूपोऽर्थवादो गृह्यते । 'ब्रह्मवादिनाम्' इति 'मोक्षकाङ्क्षिभिः' इति च बहुवचनश्रवणात् । आदिपदेन 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते....' इति निन्दार्थवादग्रहः । तेनापि श्रद्धापदोपलक्षितज्ञानभक्त्यादीतिकर्तव्यताया अवश्यम्भावावगमात् । 'तेन ब्राह्मणा वेदा यज्ञाश्च विहिताः' इति एककर्तृकचरितानुवादरूपपरकृतिशब्दितार्थवादो वा आदिपदार्थः ।

**भाष्यम्**

**परस्य ब्रह्मणः ह्येतानि नामानि—**

*प०टी०*— तत्र पूर्वार्धं व्याचष्टे **परस्येति** ।

*प्र०दी०*— ब्रह्मशब्दस्य हिरण्यगर्भाद्यर्थतां निर्देशशब्दस्य च भावार्थतां वारयितुं व्याख्याति **परस्येति** । निर्दिश्यतेऽनेनेति **निर्देशः** नाम । कुत एतत् ? इत्यतो 'हि' इत्युक्तम् । भावार्थत्वे 'ॐ तत् सत्' इत्येतैः सामानाधिकरण्यानुपपत्तेः नामार्थत्वमेवाङ्गीकार्यम् । 'ॐ' आदिकं च परब्रह्मनामत्वेन प्रसिद्धमित्यर्थः ।

*भा०दी०*— **भावार्थतामिति** । 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इत्युक्तभावार्थतामित्यर्थः । निरुपपदात् 'दिश अतिसर्जने' इत्यतो भावे घञन्तोऽयं शब्द इति भ्रान्तिं

वारयितुमित्यर्थः । तथात्वे निर्देशशब्दस्योक्तिरित्यर्थापत्तेरिति भावः । निर्दिश्यते व्यवह्रियते अर्थः अनेन इति करणे घञन्तोऽयं शब्द इत्यर्थः ।

*भा०र०*— **भावार्थतां** 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इत्युक्तधात्वर्थवाचिताम् । **एतद्** ब्रह्मनिर्देशशब्दयोः परब्रह्मनामार्थत्वम् । **सामानाधिकरण्यानुपपत्तेः** पदानां वर्णात्मकद्रव्यरूपाणां निर्देशनरूपक्रियाऽभेदानुपपत्तेः ।

**भाष्यम्**

**"ओतं जगद् यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभियुतो न चान्यैः ॐ तत् सत् इत्येनमतो वदन्ति" इति हि ऋग्वेदखिलेषु । द्वितीयपादस्तच्छब्दार्थः ।**

*प०टी०*— ब्रह्मण ओमादिनामवत्त्वे श्रुती उदाहृत्य अस्पष्टांशं विवृणोति **ओतमिति** । वेदोक्तत्वेन परोक्षत्वात् तच्छब्दवाच्य इत्यर्थः ।

*प्र०दी०*— तामेव प्रसिद्धिं दर्शयति **ओतमिति** । **ओतं** प्रविष्टम् आश्रितं **यत्र** परमेश्वरे यः **स्वयं** च जगति ओतः प्रविष्टः । **पूर्णः अनुपचारतः** मुख्यया वृत्त्या । अत्र 'ओतं जगत् यत्र' इत्यादिना ॐशब्दस्य निमित्तद्वयेन भगवति वृत्तिर्दर्शिता । 'अवतेः टिलोपश्च' इति वचनात् । 'सर्वैः' इत्यनेन सच्छब्दस्य । 'साधुभावे च' इति वक्ष्यमाणत्वात् । तच्छब्दस्य तु न केनापि । अतः 'ॐ तत् सत्' इत्ययुक्तमित्यत आह **द्वितीयेति** । 'वेदोक्तः' इति द्वितीयपादः तच्छब्दार्थव्याख्यानपरः । 'तत्' इति हि नित्यपरोक्षत्वमुच्यते । न च ईश्वरस्वरूपमनुमातुं शक्यम् । अतो वेदैकवेद्यत्वात् 'तत्' इत्युच्यत इति भावः ।

*भा०दी०*— **निनित्तद्वयेनेति** । सर्वाश्रयत्वसर्वत्रप्रतिष्ठितत्वरूपनिमित्तद्वयेनेत्यर्थः । **अवतेरिति** । औणादिकसूत्रेण 'गतिकान्तिप्रवेश' इति प्रवेशार्थकादवतेर्मन्प्रत्यये तस्य टिलोपे 'ज्वरत्वर' इति ऊटि गुणः ।

ननु तच्छब्दो वेदोक्तं वक्तीति श्रुतिगतद्वितीयपादेन गम्यते । तथाच परोक्षेऽपि ईश्वरे प्रत्यक्षावसरेऽप्यनुमानप्रवृत्तिरस्तु । तथा च **वेदोक्तरूपः** इत्यनेन कथं तच्छब्दार्थो भगवानिति व्याख्यानप्राप्तिः ? इत्यत आह **न चेश्वरेति** । शास्त्रयोनिसूत्रे भाष्यादौ तथोक्तिरिति भावः ।

*भा०र०*— प्रवेशार्थस्य अवतेः 'ओम्' इति रूपमिति तदर्थं वदंस्तत्तात्पर्यमाह **ओतं प्रविष्टमाश्रितमिति** । **यत्रेति** । परमेश्वरस्य प्रस्तुतत्वात् चशब्दाच्चाह **यश्चेति** । **स्वयं** परमेश्वरः । 'जगत्' इति 'ओतम्' इति च लिङ्गव्यत्ययेनानुवर्तत इति भावेनोक्तम् **जगत्योतः प्रविष्ट इति** । पूर्णः = देशतः कालत गुणतश्च निरवधिकः । द्वितीयपादः तच्छब्दार्थ इति भाष्यं घटयितुमाह **अत्र ओतमिति** । **निमित्तद्वयेन** जगत्प्रवेशाधिकरणत्वेन, जगत्प्रविष्टत्वेन चेति निमित्तद्वयेन । **अवतेष्टिलोपश्चेति** । अवतिधातोर्मन्प्रत्ययः, प्रत्ययस्य टिलोपश्च इति औणादिकसूत्रार्थः । अत्र च प्रवेशार्थाद् अवतेर्मन्प्रत्यये प्रत्ययस्य टिलोपे 'ज्वरत्वर....' इत्यादिना अकारवकारयोः ऊठि, तयोः सवर्णदीर्घे, 'सार्वधातुकार्धधातुकयोः' इति गुणे च 'ओम्' इति रूपमिति भावः । **सच्छब्दस्य** 'साधुभावेन निमित्तेन भगवति वृत्तिर्दर्शिता' इत्यनुवर्तते । उपपादयति **साधुभावे चेतीति** । साधुभावः = शुभधर्मः । शुक्लादिशब्दस्य शौक्ल्यादिगुणनिमित्तेन तद्वति प्रवृत्तिरिव सच्छब्दस्य शुभधर्मनिमित्तेन तद्वति ब्रह्मणि प्रवृत्तिः । अत एव 'शुभैर्युतः' इति वचनमिति भावः । **न केनापि** 'निमित्तेन भगवति प्रवृत्तिर्दर्शिता' इत्यनुवर्तते । किं ततः ? इत्यत आह **अत इति** । 'वेदोक्तेति द्वितीयपादः' इति वदन् 'अनुपचारतः' इत्येतद् अनुपचारतः = मुख्यया वृत्त्या वेदोक्तस्वरूप इत्यत्रापि संयोज्यमित्यभिसन्धत्ते । 'परोक्षे तदिति जानीयात्' इत्यभियुक्तवचनादाह **नित्यपरोक्षत्वमिति** । ननु नित्यपरोक्षत्वेऽपि अनुमानवेद्यत्वसम्भवात् कथं वेदोक्तस्वरूपत्वं तच्छब्दप्रवृत्तिनिमित्तं उच्यते ? इत्यत आह **न चेश्वरस्वरूपमिति**। शास्त्रयोन्यधिकरणे तथा स्थितेरिति भावः।

**भाष्यम्**

**"सदेव सोम्येदमग्र आसीत्" इति च । "ॐ इति ब्रह्म" इति च । तेन ब्रह्मणा । आत्मपूजार्थम् । वेदविधिर्व्यञ्जनम् ।**

*प०टी०*— एवमोमादिनामानि ब्रह्मणः सन्तीत्युक्त्वाऽन्यत्रापि तानि सन्तीत्युच्यते 'ब्राह्मणाः' इत्यादिना । तत्र तच्छब्देन ब्रह्मणा वेदविधानं च व्यक्तिरेवेत्याह **तेनेति** । ब्राह्मणादयः परस्परौतत्वेन विहिताः तेन किञ्चिद्दोशब्दः तेष्वपीत्यर्थः ।

*प्र०दी०*— 'सत्', 'ॐ' शब्दयोः परब्रह्मनामत्वे श्रुत्यन्तरं चाह **सदेवेति** । 'तेन' इति निर्देशपरामर्श इति कश्चित् । तदसदिति भावेनाह **तेनेति** । कुत एतत् ? निर्देशस्य ब्राह्मणादिविधानायोगात् । निर्देशस्तुत्यर्थमिदमुच्यत इति चेन्न । भूतोक्तिसम्भवे तदयोगात् । ब्रह्मणाऽपि

ब्राह्मणादिविधानानुपपत्तिः, प्रयोजनाभावात् इत्यत आह **आत्मेति** । आत्मपूजया प्राणिनां सुखार्थं ब्राह्मणादयो विहिता इति **सम्बन्धः** ।

'ब्राह्मणादिवत् वेदानामपि विधानं निर्माणमेव' इति प्रतीतिनिरासार्थमाह **वेदेति** । व्यञ्जनमेव विधानं, न निर्माणमित्यर्थः ।

*भा०दी०*— **निर्देशपरामर्श इति** । **तेन** इत्यनेनेति योज्यम् । **भूतेति** । पूर्वं भूतस्य भूसत्तायाः परब्रह्मरूपविद्यमानस्यार्थस्योक्तित्वसम्भवे स्तुत्यर्थत्वायोगादिति भावः ।

*भा०र०*— 'तेन = निर्देशेन ब्राह्मणादयो विहिताः' इति *शङ्करेण* भाषणादाह **इति कश्चिदिति** । **निर्देशस्येति** । कर्तरि षष्ठी । **ब्राह्मणादिविधानायोगात्** ब्राह्मणवेदयज्ञनिर्माणकर्तृकत्वायोगात् । 'निर्देशस्तुत्यर्थमिदमुच्यते' इति *शङ्करभाष्यस्या*नुवादः । **भूतोक्तिसम्भवे** तच्छब्दस्य ब्रह्मार्थकत्वेन यथास्थितार्थोक्तिसम्भवे **तदयोगात्** स्तुत्यर्थत्वेनाविद्यमानोक्तित्वायोगात् । **विधानानुपपत्तिः** निर्माणायोगात् । **प्रयोजनाभावात्** निर्माणेन आप्तव्यप्रयोजनाभावात् । **आत्मपूजयेति** । तथा चाऽऽहुः 'भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव' इति 'तेन = ब्रह्मणा आत्मपूजया प्राणिनां सुखार्थम्' इति भाष्यं अनन्वितं इत्यतो गीतयाऽस्यान्वय इत्याह **ब्राह्मणादय इति** । 'सर्वं वाक्यं सावधारणम्' इति न्यायं हृदि निधायाऽऽह **व्यञ्जनमेवेति** । तद्व्यावर्त्यमाह **नेति** ।

### भाष्यम्

**मा तूक्ता पुरस्तात्** ॥ २३ ॥

*प०टी०*— वेदनिर्माणे को विरोधः ? इत्यत आह **मा त्विति** ॥ २३ ॥

*प्र०दी०*— सकृच्छ्रुतस्य विहितशब्दस्य द्विधा अर्थकल्पनं कुतः ? इति चेत्, वेदापौरुषेयत्वस्य प्रमितत्वात् । किं तत्प्रमाणम् ? इत्यत आह **मा त्विति** । परमेश्वरस्य वेदव्यञ्जनं नाध्यापकवत् । किं तु स्वातन्त्र्यमप्यस्तीति ज्ञापयितुं विधिग्रहणं कृतम् । वेदो हि विध्यात्मा अस्ति । 'विधिः', 'प्रेरणम्', 'नियोगः' इति चानर्थान्तरम् । न च नियोक्तारमन्तरेण नियोगः सम्भवति । न च शब्दादीनां नियोक्तृत्वं सम्भवति । लोकविरोधात् । न चोच्चारक एव नियोक्ता । 'मां उपासीत' इत्यादावव्यवस्थापातात् । तस्मात् स्वतन्त्रेण वक्त्रा भाव्यम् । न चैवं पौरुषेयत्वापत्तिः । अनादिसिद्धेनैव शब्दार्थसम्बन्धेन तस्य नियोक्तृत्वाभ्युपगमादिति ॥ २३ ॥

*भा०दी०*— **मा त्वितीति** । द्वितीये 'देहिनोऽस्मिन्' इति श्लोकव्याख्यानावसरे धर्मादिसिद्ध्यन्यथानुपपत्तिरूपप्रमाणमुक्तमित्यर्थः । **लोकेति** । लोके चेतनस्यैव नियोक्तृत्वदृष्टेरिति भावः । **अव्यवस्थेति** । उच्चारकाणामनेकत्वेन अनेकेषाम् अस्मच्छब्दार्थत्वापत्त्या ब्रह्मैव उपास्यमिति व्यवस्था न स्यादित्यर्थः ॥ २३ ॥

*भा०र०*— **द्विधा अर्थकथनकल्पनम्** ब्राह्मणयज्ञविषये निर्माणार्थकत्वम्, वेदविषये व्यञ्जनार्थकत्वम् इति द्विधा अर्थकल्पनम् । **मा त्वितीति** । द्वितीये 'देहिनोऽस्मिन्' इति गीताव्याख्याऽवसरे धर्मादिसिद्ध्यन्यथानुपपत्तिरेव प्रमाणम् । 'अपौरुषेयत्वे' इति शेषः । ननु भाष्ये गीतानुसारेण 'वेदविधानं व्यञ्जनम्' इति वक्तव्यम्; विधिग्रहणं तु किमिति कृतम् ? इत्यतः तत्प्रयोजनमाह **परमेश्वरस्येति** । **अध्यापकवत्** अध्यापकस्येव । **स्वातन्त्र्यमिति** । योजनाभिप्रायप्रयोजनादौ प्रवेशनादौ परानपेक्षत्वादित्यर्थः । विधिग्रहणेन स्वातन्त्र्यख्यापनमुपपादयति **वेदो हि विध्यात्मेति**। लिङ्-लोट्-तव्यप्रत्यय-पञ्चमलकारोपेतशब्दरूप इत्यर्थः । **इति** शब्दत्रयं न विद्यते अन्योऽर्थो यस्य तद् अनर्थान्तरम् = एकार्थवाचकम् । ननु लिङादिरूपः शब्द एव वा तन्निष्ठः शाब्दभावनाख्यः पुरुषप्रयत्नो वा नियोक्ता किं न स्यात् ? इत्याशङ्क्य निषेधयति **न च शब्दादीनामिति** । **लोकेति** । लोके 'गामानय' इत्यादौ स्वतन्त्रवक्तृचेतनस्यैव नियोक्तृत्वदर्शनेन, वेदे अचेतनस्य लिङादेः नियोक्तृत्वाभ्युपगमे तद्विरोधापातादित्यर्थः । **अव्यवस्थेति** । 'अहं ब्रह्म' इत्यादौ अस्मच्छब्दस्य उच्चारयितृपुरुषवाचकत्वप्राप्त्या तस्योपाध्यायस्यापि उपास्यत्वापत्त्या 'ब्रह्मैवोपास्यम्' इति शास्त्रव्यवस्थाया अयोगापातादित्यर्थः । **पौरुषेयत्वेति** । स्वतन्त्रवक्तृपुरुषबुद्धिपूर्वकत्वस्यैव पौरुषेयशब्दार्थत्वादिति भावः । **तस्य** स्वतन्त्रवक्तुः ॥ २३ ॥

**गीता**

## तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
## प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

*वि०वि०*— तस्मादोमित्युदाहृत्य ओङ्कारमुच्चार्य ब्रह्मवादिनां यज्ञादिक्रियाः वेदोक्तप्रकारेण प्रवर्त्तन्ते ॥ २४ ॥

*सा०सं०*— **तस्मात्** 'ॐ' इत्यस्य भगवन्नामत्वात् । **ओमित्युदाहृत्य** ओङ्कारमुच्चार्य । **ब्रह्मवादिनां सततं यज्ञादिक्रियाः विधानोक्ताः** विध्युक्ताः **प्रवर्तन्ते** । एतेनोक्तोङ्कारार्थधीपूर्वकम् ओमित्युच्चार्य ब्राह्मणैः सह विध्युक्तदिशाऽनुष्ठानं यज्ञादेः सात्त्विकत्वे हेतुरुक्तो भवति ॥ २४ ॥

*अ०प्र०*— इदानीं प्रत्येकमोङ्कारादीनां प्राशस्त्यं दर्शयिष्यन् ओङ्कारस्य तावदाह **तस्मादिति**।

अथान्वयः— तस्मात् आदौ[२], ब्रह्मवादिनां[३], ॐ इति[३], उदाहृत्य[४], विधानोक्ता[५], यज्ञदान-तपःक्रियाः[६], सततं प्रवर्तन्ते[८] ।

तस्मात् = यस्मादेवं ब्रह्मणो निर्देशः प्रशस्तः । यद्वा, विष्णोः ॐनामकत्वेन तज्जत्वेन तदुत्तमत्वेन वा तत्प्रतिमात्वेन वा यज्ञादेरपि ॐनामत्वादेव । तस्मात् आदौ[२], ब्रह्मवादिनां = वेदवादिनां ब्राह्मणानां 'तृतीयार्थे षष्ठी' इत्यनेन रूपं ब्राह्मणैः[३], ॐइति उदाहृत्य = अर्थज्ञान-पूर्वकमुच्चार्य[४], विधानोक्ताः = वेदविधानोक्ताः = शास्त्रचोदिताः वा[५], यज्ञदानतपःक्रियाः = यज्ञाद्याः क्रियाः तत्र यज्ञादिक्रियाः आहवनीयादिवह्निषु द्रव्यनिक्षेपरूपैर्हवनैर्यजन्ति दानक्रियाः न्यायार्जितानि पवित्राणि स्वकीयानि भूम्यादिदानानि देशकालपात्रेषु दीयन्ते । तपःक्रियाः कृच्छ्र-चान्द्रायणादि एकान्तरमासोपवासाद्यैः धातुराशिं संशोष्य तपांसि कुर्वन्ति । एवं यज्ञदानतपः-क्रियाः[६], सततं सर्वदा अङ्गवैकल्येऽपि[७], प्रवर्तन्ते = प्रकर्षेण क्रियन्ते[८], अङ्गवैकल्येऽपि साद्गुणा भवन्तीति भावः । ब्राह्मणाय = यज्ञादीनां च शब्दवाच्यत्वाभावे ॐइत्युदाहृत्य विष्णूद्दिष्टं यज्ञा-दिकमाचरिष्यन् इति भावः ॥ २४ ॥

**गीता**

## तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
## दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

*वि०वि०*— किञ्च, तत्फलं मे स्यादित्यनभिसन्धाय यज्ञादयः क्रियन्ते ॥ २५ ॥

*सा०सं०*— किञ्च **तत्** परोक्षम् । **फलं** स्वर्गादि । **अनभिसन्धाय** मम स्यादित्यनिच्छन्। तथा **तत्** वेदैकगम्यतया परोक्षभूतं ब्रह्म । अभिसन्धाय ममास्पदं स्यादितीच्छन् । **यज्ञो**ऽग्निहोत्रादि, **तपःक्रियाः** प्रागुक्तशरीरादितपोरूपक्रियाः, दानक्रियाश्च । **विविधाः मोक्षकाङ्क्षिभिः क्रियन्ते** इत्युक्त्या वेदैकवेद्यतया तत्पदोक्तब्रह्मोद्देशेनेतरफलानुद्देशेन च क्रियमाणत्वरूपधर्मान्तरमपि यज्ञादेः सात्त्विकत्वादिहेतुरुक्तो भवति । तदिति ब्रह्मोद्दिश्य यज्ञादेः करणाच्च ब्रह्मणस्तदिति नामेति चोक्तं भवति ॥ २५ ॥

*अ०प्र०*— एवमोंशब्दवाच्यत्वे युक्तिमुक्त्वा तच्छब्दवाच्यत्वे तामाह **तदिति** ।

द्वितीयं नाम प्रस्तौति **तदिति** । उदाहृत्येति पूर्वस्यानुषङ्गः ।

अथान्वयः— मोक्षकाङ्क्षिभिः आदौ[१], तत् इति उदाहृत्य[२], उदाहृत्येति पूर्वश्लोकादनुवर्तनीयं[३], फलं[४], अनभिसन्धाय[५], यज्ञदानतपःक्रियाः[६], विविधाः[७], दानक्रियाश्च[८], क्रियन्ते[९] ।

मोक्षकाङ्क्षिभिः = मुमुक्षुभिः आदौ[१], तदिति उदाहृत्य = यत्सर्वस्य जगतः पृथिव्यादिसर्वतत्त्वानां परं यदेकं सर्वदृश्यजातं पश्यति तत् तच्छब्देन परंब्रह्मेत्युच्यते । सर्वाधिकत्वेन तद्रूपं चित्ते ध्यात्वा तस्मात्तदिति उच्चरन्ति उदाहृत्य अर्थज्ञानपूर्वकमुच्चार्य[३], फलं = यज्ञादिकर्मणां स्वर्गादिफलं[४], अनभिसन्धाय = तत्फलं मे भूयादिति एवं अभिसन्धिं विनेति वा । फलाभिसन्धिमकृत्वा तद्रूपे श्रीकृष्णपरमात्मनि कर्माणि समर्प्य न ममेति फले निरपेक्षा भवन्तीत्यर्थः[५], विविधाः = वर्णाश्रमभेदेन नानाविधाः[६], यज्ञदान-तपःक्रियाः = यज्ञाद्या क्रियाः[७], दानक्रियाश्च = चकारेण विविधाः दानक्रियाश्च[८], क्रियन्ते[९], परोक्षत्वात् तद्ब्रह्म वा मोक्षो वा मे भूयात् इत्याशयेन तदित्युक्त्वैव यज्ञादिकरणाय यज्ञादीनामपि तदिति नाम । यज्ञादेस्तच्छब्दवाच्यत्वाभावे चोक्तरीत्या यज्ञादिकं नाकरिष्यन् इति भावः । यद्वा अतः चित्तशोधनद्वारेण फलसङ्कल्पत्याजनेन मुमुक्षुत्वसम्पादकत्वात् तच्छब्दनिर्देशः प्रशस्त इत्यर्थः ॥ २५ ॥

**भाष्यम्**

**तत् फलं मे स्यात् इत्यनभिसन्धाय ॥ २५ ॥**

*प०टी०*— 'तत्' इत्यस्यान्वयं सूचयति **तदिति** । **तत्फलं मे स्यादित्यनभिसन्धाय** क्रियमाणत्वात् किञ्चित् तेषां तच्छब्दवाच्यताऽपीत्यर्थः ॥ २५ ॥

*प्र०दी०*— **'तदित्यनभिसन्धाय'** इति वाक्यं ब्रह्मणीव यज्ञादावपि तच्छब्दप्रवृत्तिं प्रतिपादयतीति ज्ञापयितुं योजयति **तदिति** । वेदोक्तं स्वर्गादिकम् ॥ २५ ॥

*भा०दी०*— **प्रतिपादयतीति** । 'भगवान्' इति योज्यम् । 'ज्ञापयति' इत्यत्राप्येवं ज्ञेयम् ॥ ॥ २५ ॥

*भा०र०*— परमेश्वरस्य परोक्षत्वं हि तच्छब्दप्रवृत्तिनिमित्तम् । वेदोक्तं स्वर्गादिफलं च परोक्षमेवेति तत्साधयो यज्ञादेर्युक्तं तच्छब्दवाच्यत्वमिति भावेन तच्छब्दार्थमाह **वेदोक्तं स्वर्गादिकमिति** ॥ २५ ॥

गीता

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

*वि०वि०*— किञ्च, सद्भावेऽस्तित्त्वे साधुभावे साधुत्त्वे शुभे कर्मणि च सच्छब्दः प्रयुज्यते। ततश्च सच्छब्दार्थब्रह्मज्ञानपूर्वकत्वं लभ्यते ॥ २६ ॥

*वा०ल०*— सच्छब्दस्य भगवद्वाचित्वोपयुक्तं मुख्यार्थद्वयं प्रदर्शयन्नर्थान्तरमप्याह **सद्भाव इति** । सद्भावे सर्वदा विद्यमानत्वे । साधुभावे निर्दोषत्वे ॥ २६ ॥

*सा०सं०*— किञ्च साधुगुणोपेततया सच्छब्दार्थभगवज्ज्ञानपूर्वकतयाऽनुष्ठानमपि सात्त्विकत्वहेतुधर्मान्तरं यज्ञादेरिति भावेन सच्छब्दार्थमाह **सद्भाव** इति । **सद्भावे** असतः सत्तारूपप्रजननार्थे । **साधुभावे** साधुत्वे । **प्रशस्ते कर्मणि** शुभकर्मणि चेत्यर्थः ॥ २६ ॥

*अ०प्र०*— सच्छब्दस्य प्राशस्त्यमाह **सद्भावेति** द्वाभ्याम् ।

हे पार्थ ![१], अयं सच्छब्दः ब्रह्मणि युज्यते[३], प्रशस्तकर्मणि = ब्रह्मणि युज्यते[४], तथा[५], सद्भावे = युज्यते[६], साधुभावे च युज्यते[७], यद्वा, असाधुभावे च एतत्[८], सदिति पदं[१०] प्रयुज्यते इत्यन्वयः[११] ।

हे पार्थ ![१], अयं सच्छब्दः ब्रह्मणि सद्रूपे[२], युज्यते = सङ्गच्छते[३], किञ्च प्रशस्ते कर्मणि = युज्यते प्रशस्तं प्रशस्यं तस्मिन् प्रशस्ते कर्मणि ब्रह्मणि सङ्गच्छते[४], तथा यथाऽन्तरङ्गो सच्छब्दस्य विनियोगः तवोक्तस्तथा तद्वत् अन्यप्रकारेण विनियोगान्तं शृण्विति भावः । तत्कथं चेत्यस्योत्तरं अनेनैवोक्तं द्रष्टव्यं[५], सद्भावे = अस्तित्वे प्रागसत् सत् सत्तासम्बन्धरूपजनने वा । यद्वा, देवदत्तस्य पुत्रादिकं अस्तीत्यस्मिन्नर्थे । यद्वा, सद्भाव इति भावः । सतो भावः सद्भावः । तस्मिन् सदभावे कर्मणि स्वाधिकारानुरूपेण प्रवर्तमानेषु सत्कर्मसु स्वभावतो कर्माणि यत्किञ्चिन्न्यूनानि चेत् तान्यसन्ति भवन्ति । सदित्येतत् = ब्रह्मणोऽभिधानं सच्छब्दः प्रयुज्यते योजितश्चेत् तेषां कर्मणां तदपूर्णत्वमपनुद्य पूर्णतां कुरुते[६], साधुभावे च = साधुत्वे साधुस्वभावे वा । यद्वा, देवदत्तस्य पुत्रादि श्रेष्ठमित्यस्मिन्नर्थे वा । यद्वा, असाधुभावे इत्युक्तं चेत् प्रमातारं च मर्यादां परित्यज्य निषेधमार्गे कर्म प्रवर्तते । तदेवासाधुत्वस्य दुर्नाम्नः पात्रं भवति । तदेवासाधुभावं कर्म तस्मिन् साधुभावे कर्मणि

चकारात् सच्छब्दः प्रयुज्यते । प्रयुक्तश्चेत् तस्यासाधुभावस्य कर्मणः साधुत्वं कुरुते[9], यद्वाऽत्र प्रशस्ते कर्मणि इति उक्तं चेत् माङ्गलिके विवाहादिकर्मणि च एतत्[8], सदितिपदं[10] प्रयुज्यते = सङ्गच्छते[11], सदिदं कर्मेति सच्छब्दो युज्यते इत्यर्थः ॥ २६ ॥

**भाष्यम्**

**सद्भावशब्देन प्रजननं सूचितम् । ॐ इत्युक्त्वा अनभिसन्धाय फलं यज्ञ-दानतपआदिकृताम् अतिप्रीतेः नामसाम्याद् ब्रह्मैव निष्पादितं भवति इत्याशयः ॥ ॥ २६ ॥**

***प०टी०***— 'सद्भाव'शब्देन सत्तामात्रं नेत्याह **सद्भावेति** । ईश्वरार्थत्वात् कर्मणः सच्छब्द-वाच्यताऽपीत्यर्थः । ननु ब्रह्मणः कर्मादीनामोमादिशब्दवाच्यत्वे केतिकर्तव्यतोक्ता स्यात् ? इत्यत आह **ओमिति** । **ब्रह्मैव निष्पादितं** सन्निधापितं स्यात्, यज्ञादेः तत्प्रतिमात्वात् । ब्रह्मप्रतिमात्वं कुतः ? नामसाम्यात् । नामसाम्यं सर्वपदार्थेष्वपि सममिति न वाच्यम् । अतिप्रीतेः ॥ २६ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावदीपिकायां सप्तदशोऽध्यायः ॥*

***प्र०दी०***— **'सद्भावे सत्तायाम्'** इति प्रतीतिनिरासार्थमाह **सद्भावेति** । **प्रजननं** प्रागसतः सत्ताऽऽपादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची । तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात् सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुं 'सूचितम्' इत्युक्तम् ।

नन्वनेन यज्ञादीनां का इतिकर्तव्यता प्रतिपादिता भवति ? इत्यत आह **ॐ इति** । उक्तो-ङ्कारार्थज्ञानपूर्वकम् **अनभिसन्धाय, फलं** ब्रह्माभिसन्धाय च ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सहेत्यपि ग्राह्यम् । **आदिपदेन** जपादिग्रहणम् । षष्ठी तृतीयार्थे । **नाम-साम्यात्** नामसाम्येन अवगतात् तत्प्रतिमात्वात् । घटादीनामपि ब्रह्मप्रतिमात्वसाम्यात् को विशेषो यज्ञादेः ? इत्यत उक्तम् **अतिप्रीतेरिति** । ब्रह्मणः यज्ञादिषु **निष्पादितं** प्रतिष्ठापितम् । अतः 'एवं क्रियमाणं' यज्ञादिकं सात्त्विकं, अन्यद् राजसं तामसं वा इत्येवमितिकर्तव्यता प्रतिपादिता' इति वाक्यशेषः ।

अत्र हि 'ॐ तत् सत्' इत्यनेन ब्रह्मणो यन्नामत्रयं तद्यज्ञादेरपि वाचकमिति प्रतिपादितम् । तेन यज्ञादेः ब्रह्मप्रतिमात्वं सूचितम् । **ब्राह्मणाः** इत्यादिना ॐकारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य

तदुच्चरणाचार उक्तः । तेनार्थस्मरणपूर्वकं ॐकारमुच्चार्य वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यमिति सूचितम् ।

'तत्' इत्यनेन तच्छब्दो यज्ञादौ ब्रह्मणि च व्युत्पादितः । तेन **फलमनभिसन्धाय** ब्रह्माभिसन्धाय च इति लब्धम् । 'सद्भावे' इत्यनेन सच्छब्दो ब्रह्मणि व्याख्यातः । तेन ब्रह्मज्ञानपूर्वकमिति लभ्यते ॥ २६ ॥

*भा०दी०*— **सूचितमित्युक्तमिति** । सद्भावपदस्य प्रजननवाचकत्वे तु 'उक्तम्' इत्येव ब्रूयात् इति भावः । 'निष्पादितम्' इत्यनेन अन्वयमाह **षष्ठी तृतीयार्थ इति** । 'कर्तृकरणयोस्तृतीया इत्युक्तेः इति भावः । **नामसाम्येनावगतादिति** । ॐ तत्सदिति नामत्रयं भगवतीव यज्ञादावपि वर्तत इति अनुपदं अग्रे वक्ष्यति । तच्च यज्ञादौ भगवन्नामसाम्यं तत्प्रतिमात्वेनैव नान्यथा । 'शारीररूपकविन्यस्तगृहीतेः' इति न्यायादिति भावः ।

**प्रतिपादितमिति** । 'ॐ तत्सदिती'त्याद्यर्थवादस्य यज्ञादौ भगवति च नामत्रयप्रतिपादनार्थमेव प्रवृत्तत्वात्, जगति ओतत्वरूपनिमित्तस्य ब्रह्मणीव वेदादावोतत्वरूपस्य यज्ञादावपि सत्त्वादिति भावः । **व्युत्पाद्येति** । तेन ॐनामकेन हरिणा नाम्ना यज्ञादयो विहिता इत्युक्त्या व्युत्पादितमिति भावः । यद्वा हरेर्जगत्प्रवेशनिमित्तेन ॐनामकत्वोक्त्या तत्प्रवेशार्थं यज्ञादीनां विधानोक्त्या ॐनामभगवत्सम्बन्धात् यज्ञादेः 'शरीररूपकविन्यस्तगृहीतेः' इति न्यायात् ॐनामत्वं यज्ञादेरिति भावः ।

**वेदोक्तेति** । 'विधानोक्ता' इत्यनेन लब्धोऽर्थः **ब्राह्मणैः सहेति** । अन्यथा तत्सृष्टिर्वृथा स्यादिति भावः । **तदित्यनेनेति** । 'तदिति फलमनभिसन्धाय यज्ञादयः क्रियन्त' इत्युक्त्या यज्ञादौ परोक्षवाचित्वात् परोक्षे ब्रह्मणि च तच्छब्दो व्युत्पादित इत्यर्थः । 'मोक्षकाङ्क्षिभिः' इत्युक्त्या लब्धमाह **ब्रह्माभिसन्धाय चेति** । **सद्भाव इत्यनेनेति** । तस्य प्रजननवाचित्वात् ब्रह्मणश्च तत्कर्तृत्वादिति भावः ॥ २६ ॥

*भा०र०*— **प्रागसतः** कार्याकारेण प्रागसतः तदाकारेण सत्तापादनम् । **विवक्षितत्वात्** 'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः' इत्यनेन । 'सत्ताविशेषप्रजननपरः' इति वदन् 'लक्षणया' इत्यभिप्रैति । **सूचितमित्युक्तमिति** । भगवदापादितजगन्निष्ठसत्ताविशेषस्य प्रजननस्य सद्भावशब्दमुख्यार्थत्वे 'उक्तम्' इत्येवावक्ष्यदिति भावः । **अनेन** 'ओं तत्सदिति निर्देशः' इत्यर्थवादेन । भाष्यपदमनूद्य तत्र शेषमाह **उक्तोङ्कारार्थज्ञानपूर्वकमिति** । तथा च *न्यायदीपिका* 'ओङ्कारोच्चारणं तदर्थज्ञानपूर्वकमेव कार्यम्' इति, 'ओङ्कारार्थस्मरणपूर्वकमेव कर्म सत्' इति तात्पर्यनिर्णयानुसारेण

आह **ब्रह्माभिसन्धाय** इत्यादिना **ग्राह्यं** इत्यन्तेन । 'जपादि' इत्यादिपदेन देवपूजादिग्रहणम् । 'निष्पादितम्' इति निष्ठायोगे 'न लोकाव्ययनिष्ठा...' इति षष्ठीनिषेधाद् भाष्ये 'कृताम्' इति कथं षष्ठी ? इत्यत आह **षष्ठी तृतीयार्थ इति** । व्यत्ययशास्त्रादिति हृदयम् । **नामसाम्येनेति** । अव्यक्तादिशब्दस्य भगवति परममुख्यवृत्त्या, प्रधानादिषु मुख्यवृत्त्या प्रवृत्तावपि उभयत्र मुख्यवृत्तित्वेन साम्यमिति 'ओं तत् सत्' इति नामत्रयस्य भगवति यज्ञादौ च प्रवृत्तस्य साम्यमेव ज्ञातव्यमिति भावः । तदिदं वक्ष्यते— 'तच्छब्दानां सन्निधेस्तद्रूपत्वात् प्रतिमात्वात्' इति । 'अतिप्रीतेः' इत्यत्र इतरवस्तुसाम्यपरिहारायाध्याहरति **ब्रह्मणः, यज्ञादिष्विति** । अनादिब्रह्मणः कथं निष्पादितत्वम् ? इत्यतो व्याख्याति **प्रतिष्ठापितमिति** । सन्निधापितमित्यर्थः । नन्वनेन 'यज्ञादीनां का इतिकर्तव्यता प्रतिपादिता' इति कृतशङ्काया अनिरास एव ? इत्यत आह **अत एवं क्रियमाणमिति** ।

भाष्योक्तस्य इत्थम्भावकलापस्य गीतासूचितत्वं दर्शयति **अत्र हीति** । **इत्यनेन** गीतावाक्येन । **वाचकमिति प्रतिपादितमिति** । 'ओं तत्सदिति निर्देशः' इत्यर्धेन 'ओंनामकेन हरिणा यज्ञादयो विहिताः' इत्युक्त्या ओङ्कारादित्रयमपि यज्ञादेर्वाचकमिति प्रतिपादितम् । ओंनामकाद् जातं यज्ञादिकमपि ओंनामकम्, तन्नामकाद् जातं तन्नामकम्, सन्नामकाद् जातं सन्नामकम् । 'काकाज्जातः काकः', 'श्येनाज्जातः श्येनः' इति यथा । सति चैवं 'तेन ओमादिनाम्ना ब्रह्मणा' इत्युक्तिरर्थवतीति भाव इति **केचित्** । **अन्ये तु** 'ओं तत्सद् इति यो ब्रह्मणो निर्देशः स त्रीणि यज्ञदानतपांसि विधत्ते = प्रतिपादयतीति त्रिविधः स्मृतः' इति व्याख्यानाशयाद् यज्ञादेर्वाचकमित्युक्तम् । विपूर्वाद् दधातेः मूलविभुजादित्वात् कप्रत्यये, आतो लोपे च 'त्रिविधः' इति रूपसिद्धेः इत्याहुः ।

**तेन** वाचकत्वप्रदानेन । **सूचितमिति** । यत्र यत्सन्निधानेन ब्रह्मशब्दप्रयोगः तस्य तत्प्रतिमात्वम् । यथा 'रथस्थं केशवं दृष्ट्वा' इत्यादौ केशवप्रतिमायां केशवशब्दप्रयोगः, यथा च भगवन्नाम्नोऽव्यक्तशब्दस्य प्रधाने प्रयोग इति व्याप्तेः । न चैवं प्रतिमादाविव यज्ञादौ ओमादित्रयं मुख्यमापन्नम् इति ओमादिपदवाच्यत्वमिति शङ्क्यम् । जगत्योतत्वनिमित्तेन ब्रह्मणीव वेदादौ ओतत्वनिमित्तेन यज्ञादौ प्रवृत्तिसम्भवेन तस्य वाच्यत्वोपपत्तेः । अत एव अव्यक्तादिशब्दे 'शरीररूपकविन्यस्तगृहीतेः' इति अव्यक्तादेः प्रतिमात्वोक्तौ, तर्हि अव्यक्तादिशब्दस्य प्रधानादौ लक्षणादिप्रसक्तिः ? इत्याशङ्क्य 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इति भगवता सूत्रकारेण लोकसिद्धरूढियोगादिवृत्त्यभ्युपगमेन मुख्यवृत्तिरिति स्थापितम् ।

**इत्यादिना** सार्धश्लोकेन । **ब्रह्मणि यज्ञादौ च व्युत्पाद्येति** । 'ओतं जगद्यत्र' इत्यनेन ओतम् = प्रविष्टम् = आश्रितं, यत्र = परमेश्वरे, यश्च स्वयं जगदोतः = प्रविष्टः = पूर्ण इति ओंशब्दस्य निमित्तद्वयेन भगवति व्युत्पत्तिर्दर्शिता । एवमेव 'विप्रा वेदाश्च यज्ञाश्च यस्मादोतः परस्परम् । विहिता विष्णुना तेन......' इति वचनात् । 'वेदाद्योतत्वं ब्रह्मनिमित्तत्वं च निमित्तीकृत्य ओंशब्दस्य यज्ञादौ प्रवृत्तिर्दर्शिता' इत्येवं ओङ्कारं ब्रह्मणि यज्ञादौ च व्युत्पाद्येत्यर्थः । **तदुच्चारणाचारः** ओङ्कारोच्चारणाचारः **उक्तः** 'तस्मादोम्' इत्युदाहृत्येति श्लोकेन । 'अभक्तोदाहृतं नैव फलदातृ भविष्यति' इति भक्तिज्ञानादिहीनपुरुषोच्चरितस्य सफलत्वाभावावगमात् 'स्मृतं सार्थं सर्वकामप्रदं स्यात्' इति वचनेन अर्थस्मरणादिपूर्वकनामोच्चारणस्य सफलत्वावगमाद् 'ओतं जगद्यत्र' इति योगवृत्तिप्रदर्शनाच्चाऽऽह **स्मरणपूर्वकमिति** । **वेदोक्तप्रकारेणेति** । 'प्रवृत्तं ते विधानोक्ताः' इत्युक्तेरिति भावः । **ब्राह्मणैः सहेति** । अन्यथा तत्सृष्टिर्व्यर्था स्यादिति भावः ।

**केचित्तु** 'ब्रह्मवादिनाम्' इत्युक्तत्वाद् ब्राह्मणेषु वेदानाम्, वेदेषु यज्ञानां च ओतत्वव्युत्पादनाच्चेति भावेन 'ब्राह्मणैः स' इत्युक्तमित्याहुः । 'यज्ञादिकं कार्यम्' इति वदन् 'यज्ञदानतपःक्रियाः प्रवर्तन्ते' इत्याचार्येण विधिरुन्नीयत इत्यभिसन्धत्ते । **सूचितं** सङ्क्षेपेणोक्तम् । **तदित्यनेन** 'तदित्यनभिसन्धाय' इति श्लोकेन **यज्ञादौ ब्रह्मणि चेति** । 'तद्वेदोक्तं स्वर्गादिकफलं मम स्यादित्यनभिसन्धाय' इति भाष्यरीत्या फलानभिसन्धिपूर्वकत्वरूप इत्थंभावो यज्ञादौ प्रतिपादितः । स च तच्छब्दप्रवृत्तिनिमित्तं 'निष्फलं कर्म तत्स्यात्' इति श्रुतौ निष्फलशब्देन फलानभिसन्धेरभिप्रेतत्वात्। तथा च प्रवृत्तिनिमित्तप्रतिपादनद्वारा तच्छब्दो यज्ञादौ व्युत्पादितः । एवं च '...........तद् ब्रह्म स्यान्ममास्पदम् । इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः । अभिसंहितं हि तत्प्रोक्तं ततं वा स्वगुणैः सदा' इति तात्पर्यनिर्णयोक्तरीत्या तच्छब्दस्य वेदैकवेद्यस्वरूपत्वम्, गुणपूर्णत्वम्, अभिसंहितत्वं चेति प्रवृत्तिनिमित्तत्रयं ब्रह्मणि प्रतिपादितम् । तथा च तच्छब्दो ब्रह्मणि व्युत्पादितो भवतीत्याशयः । तल्लब्धमाह **तेनेति** ।

**इत्यनेन** 'सद्भावे साधुभावे च' इति श्लोकेन । अत्र हि सद्भावशब्देन प्रागसतः सत्ताऽऽपादनरूपप्रजननतात्पर्यकेण प्रजननहेतुत्वम्, साधुशब्देन शुभगुणवत्त्वं च सच्छब्दप्रवृत्तौ निमित्तमिति कथितं द्वयमपि ब्रह्मणि सुप्रसिद्धम् । अतः प्रवृत्तिनिमित्तद्वयकथनद्वारा सच्छब्दो ब्रह्मणि व्याख्यात इत्यर्थः । **लभ्यत इति** । सच्छब्दो हि जगज्जनकत्वादिगुणनिमित्तको ब्रह्मणि वर्तते । गुणोक्तिश्च ज्ञानाद्यर्था । अतो 'ब्रह्मज्ञानपूर्वकम्' इति इतिकर्तव्यता लभ्यत इत्यर्थः ॥ २६ ॥

**गीता**

# यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
# कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

***वि०वि०*—** यज्ञादौ स्थितिर्निष्ठा सच्छब्देनोच्यते ततश्च साऽपि यज्ञादेरङ्गं सच्छब्दस्यार्थो विष्णुस्तद्विषयं तदर्थीयमिति ब्रह्मविषयत्वमुच्यते ॥ २७ ॥

***वा०ल०*—** तदर्थीयं यज्ञाद्यर्थं विद्यमानं प्रोक्षणावघातादिकम् ॥ २७ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे सप्तदशोऽध्यायः ॥*

***सा०सं०*—** भगवन्निष्ठापूर्वकत्वमपि कर्मणः सात्त्विकत्वहेतुभूतं धर्मान्तरमिति भावेन निष्ठाऽपि सच्छब्दार्थ इत्याह **यज्ञ इति** । **स्थितिः** निष्ठा । भगवानेभिरवश्यं फलं प्रयच्छतीति बुद्धिरिति यावत् । किञ्च भगवद्विषयतयाऽनुष्ठानमपि धर्मान्तरमिति भावेनाह **कर्म चैवेति** । **तदर्थीयं** सच्छब्दार्थभगवदर्थीयम् ॥ २७ ॥

***अ०प्र०*—** किञ्च, **यज्ञ इति** ।

अथान्वयः— हे पार्थ !, यज्ञे[1], तपसि[2], दाने च[3], विष्णूद्देशेन विहिते यज्ञादौ च[4], स्थितिः तात्पर्येणावस्थानं निष्ठा वा । यद्वा, यथावत्कर्मप्रवृत्तिः अथवा चकारात् तेषु त्रिष्वपि कर्मसु न्यूनत्वं भवतु नाम । तथापि ब्रह्मार्पणेन कृतानि कर्माणि सदिति च[5], एतादृशी स्थितिः[5], सत्[3], इति च[4], उच्यते । तदर्थीयं कर्म चैव यस्य चेदं नामत्रयं स एव परमार्थात्मार्थः । फलं यस्य तदर्थे कर्म-पूजोपहारगृहाङ्गणपरिमार्जनोपलेपरङ्गमालिकादिक्रिया तत्सिद्धये यदन्यत् कर्म तदर्थीयं तच्चातिव्यव-हितमपि[6], सदित्येवाभिधीयते[10] यस्मादेवमिति प्रशस्तमेतन्नामत्रयं तस्मादेतत्सर्वं कर्मषाड्गुण्यार्थं कीर्तयेदिति तात्पर्यार्थः । अत्र चार्थे वादानुपपत्त्या विधिः कल्प्यते विधेयं स्तूयते वस्त्विति न्यायात् । अपरे तु— 'प्रवर्तन्ते विधानोक्ताः', 'क्रियन्ते मोक्षकाङ्क्षिभिः' इत्यादिवर्तमानानादेशः । 'समिद्धो यजति' इत्यादिवद्विधितया परिगणनीय इत्याहुः । तत्तु सद्भावे साधुभावे चेत्यादिषु प्रास्त्यर्थत्वान्न सङ्गच्छत इति पूर्वोक्तक्रमेण विधिकल्पनैव ज्यायसी ॥ २७ ॥

***प्र०दी०*—** 'यज्ञे तपसि ..... कर्म चैव' इत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः । तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धम् ॥ २७ ॥

*भा०दी०*— **कर्म चैवेतीति** । 'कर्म चैव तदर्थीयम्' इत्यनेनेत्यर्थः ॥ २७ ॥

*भा०र०*— **सच्छब्दो व्याख्यात इति** । 'यज्ञे तपसि' इत्यनेन यज्ञादिषु स्थितिशब्दिता निष्ठा सच्छब्दप्रवृत्तौ निमित्तमुक्तम् । तथा च तादृशनिष्ठाविषयत्वेन यज्ञादिकं 'सत्' इत्युच्यते । 'कर्म चैव तदर्थीयम्' इत्यनेन च भगवदुद्देश्यकं यज्ञादिकर्म 'सत्' इत्युच्यत इत्येवं व्याख्यात इत्यर्थः । **तेन** एवंव्याख्यानेन, 'कर्म चैव' इत्यनेन ब्रह्मविषयत्वम्, 'यज्ञे तपसि' इत्यनेन निष्ठया इति लब्धमिति द्रष्टव्यम् ॥ २७ ॥

**गीता**

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥*

*वि०वि०*— अश्रद्धयेत्यनेन भक्तिरपि अङ्गमित्युच्यते । यतोऽश्रद्धया कृतं प्रेत्य लोकान्तरे न फलवत् । इहापि नो फलवत् । ततश्चोङ्कारार्थज्ञानपूर्वकं फलमनभिसन्धाय च ब्रह्मज्ञानभक्तिपूर्वकं ब्रह्मविषयत्त्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकरणे प्रतिमाप्रतिष्ठापनात् ब्रह्मैव प्रतिष्ठापितं भवति । तथा च श्रुतिः— "ॐ यज्ञाद्या निष्फलं कर्म तत्स्यात् सद्वै तदर्थं कर्म वदन्ति वेदाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वात् जनितं ब्रह्म तस्य ॥" इति । अत एवं क्रियमाणं यज्ञादिकं सात्त्विकम्, अन्यद्राजसं तामसश्चेत्युक्तप्रकारेण यज्ञादिकं कर्तव्यम् । विष्णुश्रद्धारहितत्त्वेन राजसस्याप्यसदन्तर्भावात्पृथगनुक्तिः । फलं तारतम्येन । उक्तं च— "सात्त्विकं मुक्तिदं कर्म राजसं सृतिदुःखदम् । तामसं पातदं ज्ञेयं तत्कुर्यात्कर्म वैष्णवम् ॥" इति ॥ २८ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां सप्तदशोऽध्यायः ॥ १७ ॥*

*सा०सं०*— यज्ञादेः सात्त्विकत्वहेतुभूतधर्मान् उक्त्वा तदन्यथात्वेऽपि हेतुभूतधर्मानाह **अश्रद्धयेति** । भगवच्छ्रद्धाभावेनेत्यर्थः । **हुतमित्यादौ** शास्त्रानुसारेणेति योज्यम् । भगवच्छ्रद्धां विना शास्त्रानुसारेणानुष्ठितमपि **यत्** होमादिकम् । **तत् असदेवोच्यते** । **तत् प्रेत्य न च इह च नो** ।

ऐहिकामुष्मिकपुमर्थप्रदं नेत्यर्थः । अतो भगवच्छ्रद्धाभक्त्यादिपूर्वकमेवानुष्ठितहोमादीनि इहामुत्र फलप्रदानीति श्रद्धैव प्रयोजिकेति सैव 'त्रिविधा भवति श्रद्धा' इत्यादिना प्राधान्येनोक्तेति भावः । वस्तुतस्तु श्रद्धाभावे शास्त्रानुसारित्वमेव नेति ज्ञेयम् ॥ २८ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते सप्तदशोऽध्यायः ॥*

*अ०प्र०*— इदानीं सर्वकर्मसु श्रद्धयैव प्रवृत्त्यर्थं अश्रद्धया कृतं सर्वं निदन्ति **अश्रद्धयेति** ।

अथान्वयः— हे पार्थ ![१], अश्रद्धया[२], हुतं[३], दत्तं[४], तपस्तप्तं[५], यच्चान्यदपि[७], कृतं कर्म[८], असत्[९], इति[१०] उच्यते[११], यतः तत्[१२], न प्रेत्य[१३], नो[१४], इह[१५] इत्यन्वयः ।

हे पार्थ ![१], अश्रद्धया = श्रीविष्णवाख्यनाम्नी भक्तिं विहाय दुराग्रहं वर्धयित्वा[२], यत् हुतं = अश्वमेधादियज्ञैर्हवनं कृतं[३], दत्तं = सुर्वणरत्नैः परिपूरितं पृथ्वीदानं ब्राह्मणेभ्यो दत्तं[४], तप्तं = तपः यत्तपस्तप्तं एकाङ्गुष्ठे स्थित्वा वा । उताम्बुपर्णाशिनैः तपः सहस्रं तप्तं तपः कर्मनिवृत्तं[५], यच्चान्यदपि कृतं जलाशयादिनामभिर्नूतेन समुद्रवत् यन्निर्मितं कर्म[८], तत्सर्वं तत् राजसतामसं च सर्वं कर्म असदित्युच्यते । एतत्सर्वं व्यर्थमेवेति सद्भिरुच्यते इत्यर्थः[११], न तत् प्रेत्य तत्कर्म प्रत्यलोकान्तरे न फलति विगुणत्वात्[१३], नो इह = इहलोकेऽपि न फलति अङ्गसाकल्याभावात् अयशस्करत्वाच्च दुःखबाहुल्यात् अल्पफलस्य अफलत्वमेवेति[१५], नो इह = तत् प्रेत्य न इत्यन्वये कृते तत्कर्म नो इह नास्मिन् लोके भोगार्थं फलति न च तत्प्रेत्य तत्कर्म लोकान्तरेऽपि दिविभोगार्थं न फलतीति किमु वक्तव्यम् । अत्रायं समुदायार्थः । ॐकारार्थज्ञानपूर्वकं ॐ इत्युक्त्वा स्वर्गादिफलं अनभिसन्धाय तदिति ब्रह्म तद्भक्त्यादिकं च अभिसन्धाय ब्रह्मज्ञानतद्भक्तिपूर्वकं ब्रह्मविषयत्वेन निष्ठायाः वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञदानतपोजपादिकं कर्मकारिभिः यज्ञादेः ब्रह्मणश्च परस्परमोमादिनामसाम्येनावगतात् ब्रह्मप्रतिमात्वात् ब्रह्मातिप्रियत्वाच्च स्वकृतयज्ञादिना तत्र यज्ञादौ ब्रह्मैव प्रतिष्ठापितं भवति । अत एव क्रियमाणं यज्ञादिकं सात्त्विकं अन्यत् राजसं तामसं चेत्येवं इतिकर्तव्यता प्रतिपादितेति ॐ यज्ञाद्या निष्फलं कर्म तस्मात्सद्वैतदर्थकं कर्म वदन्ति देवाः । तच्छब्दानां सन्निधे ब्रह्मप्रीते तद्रूपत्वात् जनितं तस्य ब्रह्मेति' श्रुतेः । अत्र गीतायां 'ॐ तत्सत्' इत्यनेन ब्रह्मणो यन्नामत्रयं तद्यज्ञादेरपि वाचकमिति प्रतिपादितम् । तेन यज्ञादेः ब्रह्मप्रतिमात्वं सूचितम् । 'ब्राह्मण' इत्यादिनोङ्कारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य तदुच्चारणाचार उक्तः । तेनार्थस्मरणपूर्वकमोङ्कारमुच्चार्य

वेदोक्तप्रकारेण ब्राह्मणैस्सह यज्ञादिकं कार्यमिति सूचितम् । तदित्यनेन तच्छब्दे ब्रह्मणि यज्ञादौ च व्युत्पादिता तेन फलं अनभिसन्धाय चेति लब्धं सद्भाव इत्यादिना जगदुत्पादक इत्यादिना सच्छब्दो ब्रह्मणि व्याख्यातः । तेन ब्रह्मपूर्वकमिति लभ्यते । 'यज्ञे तपसी'ति कर्म चेत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः । तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धं अश्रद्धयेत्यनेन ब्रह्मभक्तिरपीति । उक्तार्थे प्रमाणम्— ''यागात्तु राजसात् वर्गः साङ्कल्पिक उदाहृतः । लोकः स दीनदेवानां सनाम्नां वासवादिभिः ॥ विष्णावश्रद्धया योग्याः कामाश्चैषां पुनर्भवेत् । नरकं च विना यज्ञं राजसा नर-लोकगाः ॥ निषिद्धं कर्म कुर्युश्चेत् ययुस्ते नरकं ध्रुवम् । कदाचित्सात्त्विकाः कुर्युः कर्म राजस-तामसम् ॥ अन्ये त्वन्यं तथाऽप्येषां स्थितिं चाभाविकीं पुनः । स्वं स्वं कर्म तु सर्वेषां सदैव स्यान्महाफलम् ॥ अन्यदल्पफलञ्चैव बाहुल्यं तेषु लक्षणम् ॥ इति ।

न केवलं राजसराजसानां स्वर्गप्रतिनिधिरूपः इन्द्रादिनामकयक्षादिलोको भवति । अयोग्य-मुख्यस्वर्गकामान् अत्र सकामयज्ञान्नरकेति । यः श्रद्धाहीनमनुष्यमध्यमविषया । न तु किञ्चित् श्रद्धायुतत्रैविध्यविषयाः तेषामन्यत्र सुखे स्वर्गनरकाभावस्य चोक्तेरिति ज्ञेयम् । सात्त्विकादीनां दुष्कर्मादिसद्भावेऽपि सात्त्विकादिकर्मणः स्वाभाविकत्वात् बहुत्वात् च दुष्कमदिरस्वाभाविकत्वा-दल्पत्वात् च स्वाभाविकेन महता च अस्वाभाविकस्य अल्पस्य च अभिभव इति न फलसाङ्कर्य-मिति प्रमाणार्थः । ॐतत्सदिति यद्विष्णोर्नामत्रयमुदाहृतं प्रसिद्धवैदिकं तस्मात्कर्म तद्विषयं हि सत् । ''तत्राश्रद्धाकृतं यस्मादसदित्येव कीर्त्यते । विप्रा यज्ञाश्च वेदाश्च यस्मादोन्ताः परस्परम् ॥ विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः । ॐतस्मिन्निदं सर्वं इति चोक्तः स ओमिति ॥ तस्मादोमिति यज्ञादीन् प्रवर्तन्ते हि वैदिकाः । अनोङ्कृतं ह्यासुरं स्याद्यत्तस्मादोङ्कृतं त्वयि ॥ ॐकारार्थं हरेः सम्यक् अज्ञानादासुरं भवेत् । फलं त्वनभिसन्धाय तद्ब्रह्म स्यान्ममास्पदम् ॥ इति यत्क्रियते कर्म तन्नामाऽतो जनार्दनः । अभिसंहितं हिता प्रोक्तं ततं वा स्वगुणैः सदा ॥'' इति ।

'स्रवत्यनोकृतं ब्रह्म परस्ताच्च विशीर्यते । अनोङ्कृतामासुरं कर्म' इत्यादिश्रुतेः ॥ 'अनर्थज्ञोदितो मन्त्रो निरर्थस्त्रातिमानितः । यन्मन्त्रस्तेन कथितो मन्त्रार्थो ज्ञेय एव तत्' इति । सात्त्विकं मोक्षदं कर्म राजसं सृतिदुःखदम् । तामसं पापदं ज्ञेयं तत्कुर्यात्कर्म वैष्णवम् ॥' इत्यादिवचनात् विष्णुभक्त्यादिपूर्वकं विहितं सत्कर्म कार्यम् । अन्यत् असत् त्याज्यमेवेति भावः ॥ २८ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां सप्तदशोऽध्यायः ॥*

**भाष्यम्**

तथा च ऋग्वेदखिलेषु— "ॐ यज्ञाद्या निष्फलं कर्म तत् स्यात् सद् वै तदर्थं कर्मेति वदन्ति वेदाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेः तद्रूपत्वाज्जनितं ब्रह्म तस्य" इति ॥ २८ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तदशोऽध्यायः ॥*

*प्र०दी०*— 'अश्रद्धया' इत्यनेन ब्रह्मभक्तिरपीति । अत्र श्रुतिसम्मतिमाह **तथा चेति** । ॐ यज्ञाद्याः वेदाद्योतत्वात् । **निष्फलं** फलोद्देशरहितत्वात् । **तदर्थं** ब्रह्मविषयम् । एवं **तच्छब्दानां** ब्रह्मशब्दानां, यज्ञादिषु सन्निधेः अवगत**तद्रूपत्वात्** तत्प्रतिमात्वात् । **तस्य** उक्तप्रकारेण यज्ञादीनां अनुष्ठातुः ॥ २८ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तदशोऽध्यायः ॥ १७ ॥*

*भा०दी०*— **अश्रद्धयेत्यनेनेति** । तादृशहोमादेरसत्त्वादिना निन्दोक्त्या भक्तिपूर्वानुष्ठानस्य लाभादिति भावः । **अत्रेति** । 'ओमित्युक्त' इत्यादिनोक्तार्थे भाष्ये 'यज्ञाद्या ॐनामकाः' इत्यर्थमुपेत्य ॐपदवाच्यत्वे निमित्तं स्वयमाह **वेदाद्योतत्वादिति** । **सन्निधेरिति** । पञ्चमी यज्ञादिषु विद्यमानस्य हेतुना अवगतत्वादिति शेषोक्तिः । **तस्य** इत्यनुवादः **उक्त** इत्यादि व्याख्या । 'उक्तोङ्कारार्थज्ञानपूर्वकम्' इत्यादिनोक्तप्रकारेणेत्यर्थः ॥ २८ ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां राघवेन्द्रयतिकृतायां भावदीपे सप्तदशोऽध्यायः ॥*

*भा०र०*— **ब्रह्मभक्तिरपि** लब्धा । अश्रद्धया हुतादि निराक्रियते । 'न हि निन्दा निन्द्यं निन्दितुं क्रियते, अपि तु स्तुत्यं स्तोतुम्' इति न्यायेन श्रद्धाशब्दितभक्तिस्तुतौ तात्पर्यावगमादिति भावः ।

**अत्र** 'ओमित्युक्त्वा, अनभिसन्धाय फलम्' इत्यादिभाषितार्थे । श्रुतौ 'ओं यज्ञाद्याः = ओंनामकाः यज्ञ-दान-तपः-क्रियाः' इत्यर्थ इति हृदि निधाय तत्र निमित्तमाह **वेदाद्योतत्वा-**

**दिति** । आदिशब्देन वैदिकग्रन्थानां ब्रह्मणश्च सङ्ग्रहः । ननु वेदोक्तस्य भगवद्विषयकस्य कर्मणः कथं निष्फलत्वम् ? इत्यतो निष्फलत्वं घटयति **फलेति** । अनेन "यज्ञादिकर्म 'यत्फलं वेदोक्तं स्वर्गादिकं मे स्यात्' इत्यनभिसन्धायानुष्ठितं तत् = तच्छब्दवाच्यम्" इति व्याख्यातं भवति । '**ब्रह्मविषयं** कर्म सच्छब्दार्थं वेदा वदन्ति' इति भाष्यपदेनान्वयः । **एवमिति** । वेदादिप्रतिपाद्यतया ब्रह्माधानत्वेन च निमित्तेन ओंशब्दस्य, फलोद्देशरहितत्वेन निमित्तेन तच्छब्दस्य, ब्रह्मविषयत्वेन च निमित्तेन सच्छब्दस्य इत्येवं तच्छब्दानां = ब्रह्मशब्दानां = ब्रह्मवाचकओंशब्द-तच्छब्द-सच्छब्दानां यज्ञादिषु = यज्ञ-दान-तपस्सु सन्निधेः = वाचकत्वेन वर्तमानात् निमित्तात् 'अवगतात्' इत्यध्याहारः । 'तद्रूपत्वात्' इत्यनुवादः, 'तत्प्रतिमात्वात्' इति व्याख्यानम् । 'तस्य' इत्यस्योक्तप्रकारेण इत्यादिव्याख्यानम् । **उक्तप्रकारेण** 'ओङ्कारार्थज्ञानपूर्वकम् ओङ्कारमुच्चार्य, अनभिसन्धाय फलम् ब्रह्माभिसन्धाय च' इत्याद्युक्तप्रकारेण । **अनुष्ठातुः** ब्रह्म जनितम् = प्रादुर्भूतमित्यन्वयः । उक्तप्रकारेण यज्ञदानतपोजपादिकं अनुष्ठिता साधकेन ब्रह्मैव निष्पादितं भवतीत्याशयः ॥ २८ ॥

*गीताक्षरार्थस्तु—*

'अफलाकाङ्क्षिभिः' इत्यादिना यज्ञतपोदानानां सात्त्विकादिहेतवोऽसाधारणधर्माः प्रागुक्ताः । साधारणांस्तु धर्मान् वक्तुं पुराकल्पादिरूपोऽर्थवाद उच्यते **ॐ तत्सदित्यादिना** । **ब्रह्मणः** परब्रह्मणः **ॐ** इति **तद्** इति **सद्** इति च **त्रिविधो निर्देशः** 'निर्दिश्यतेऽनेनेति निर्देशः = नाम **स्मृतः** 'ओमिति ब्रह्म', सदेव सोम्येदमग्र आसीत्', 'ॐ तत्सदित्येनमतो वदन्ति' इत्यादिवेदवैदिकग्रन्थेषु चिन्तितं वेदविद्भिः ।

अत्र ओतं प्रतिष्ठितं = आश्रितं यत्र ब्रह्मणि, तद् ब्रह्म वा, जगत्योतं = प्रविष्टं पूर्णमिति ॐशब्दस्य निमित्तद्वयेन भगवति प्रवृत्तिर्ज्ञातव्या । 'अवतेष्टिलोपश्च' इति स्मरणात् । 'तद्' इति हि नित्यापरोक्षत्वमुच्यते । न चेश्वरस्वरूपं अनुमातुं शक्यम् । अतो वेदैकवेद्यत्वात् 'तद्' इति ब्रह्मोच्यते । 'सद्भावे साधुभावे च', इति साधुभावशब्देन सर्वशुभधर्मयुतत्वस्य सच्छब्दार्थतया वक्ष्यमाणत्वात् सर्वशुभयुक्तत्वस्य ब्रह्मैकधर्मत्वात् 'सत्' इति ब्रह्मनामैव । **तेन** 'ॐ तत् सत्' इति नामत्रयवता **ब्रह्मणा ब्राह्मणाः** ऋत्विगादिरूपाः **वेदाः** यष्टव्यदेवतादिप्रकाशकमन्त्रब्राह्मणादिरूपाः **यज्ञाः** अग्निहोत्रदर्शपूर्णमासादिरूपाश्च **विहिताः पुरा** आदिकाले निर्मिताः । अत्र वेदानां विधानं व्यञ्जनमेव, न ब्राह्मणादिवत् निर्माणमिति भाष्ये स्फुटम् । ब्राह्मणादीनां विधानं च 'स्वात्मपूजया प्राणिनां सुखार्थमेव, न पुनः स्वस्य प्रयोजनाभिसन्धिना' इत्यपि ॥ २३ ॥

**तस्मादिति** । **तस्माद्** ओङ्कारस्य भगवन्नामत्वाद् **ओमित्युदाहृत्य** ओङ्कारार्थभगवद्ध्यानपूर्वकं तमुच्चार्य **ब्रह्मवादिनां** तृतीयार्थे षष्ठी, वेदवदनशीलैः ब्राह्मणैः क्रियमाणाः **विधानोक्ताः** शास्त्रचोदिताः **यज्ञदानतपःक्रियाः सततं** सर्वदा **प्रवर्तन्ते** ।

**केचित्तु** 'प्रवर्तन्ते' इत्येतत् 'प्रवर्त्यन्ते' इति व्याख्येयम्, तेन 'उदाहृत्य' इति ल्यबुपपत्तिः । पूर्वव्याख्याने 'यष्टृभिः' इत्यध्याहर्तव्यमित्याहुः । अत्र 'ब्राह्मणाः' इत्यादिसार्धश्लोकेन ब्राह्मणेषु वेदानाम्, वेदेषु यज्ञादीनाम् ओतत्वात् यज्ञदानतपःक्रिया अपि ब्रह्मवेदशब्दार्थ इत्यावेदितम् । तथा च भाष्यम् 'ॐ यज्ञाद्याः' इति । वेदाद्योतत्वात् 'यज्ञाद्या ॐशब्दवाच्याः' इति । 'ॐ तत्सदित्यनेन ब्रह्मणो यत् नामत्रयं तद् यज्ञादेरपि वाचकम्' इति टीकावाक्यमपि यज्ञादेः ॐशब्दार्थमाहेति बोद्धव्यम् ॥ २४ ॥

एवं तच्छब्दोऽपि ब्रह्मणीव यज्ञदानतपआदिषु प्रवर्तन्त इति भावेनोच्यते **तदिति** । वेदोक्तं **फलं** स्वर्गादिकं **अनभिसन्धाय** 'मम स्यात्' इति अभिसन्धिं विना **मोक्षकाङ्क्षिभिः** मुमुक्षुभिः **विविधा यज्ञदानतपःक्रिया दानक्रियाश्च क्रियन्ते** निर्वर्त्यन्ते । अत्र 'तत् = वेदैकवेद्यं ब्रह्म अभिसन्धाय च' इत्यपि ग्राह्यम् । तेन ब्रह्मणि यज्ञादौ च तच्छब्दस्य प्रवृत्तिरावेदिता भवति ॥२५॥

ब्रह्मणि सच्छब्दो व्याख्यायते **सद्भाव इति** । सद्भावशब्दस्य सत्तामात्रवाचिनोऽप्यत्र प्रागसतः सत्ताऽऽपादनरूपप्रजननार्थताऽवसेया । 'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः' इति ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात् । तथा च जगतः **सद्भावे** प्रजनने = जनयितृत्वे इत्यर्थः सम्पद्यते । **साधुभावे** साधोर्भावः = सर्वशुभधर्मयुतत्वं तस्मिंश्च, **सदित्येतत्** पदं **प्रयुज्यते** प्राज्ञैरित्यनेन जगज्जनयितृत्वात् सर्वशुभधर्मयुतत्वाच्च भगवान् सच्छब्दार्थ इत्युक्तं भवति । **तेन ब्रह्मज्ञानपूर्वकत्वस्य** इतिकर्तव्यता लभ्यते । **तथा प्रशस्ते कर्मणि** शुभे कर्मणि सच्छब्दः **युज्यते** प्रयुज्यते ॥ ॥ २६ ॥

यज्ञादिषु सच्छब्दो व्याख्यायते **यज्ञा इति** । **यज्ञे तपसि दाने च स्थितिः** निष्ठा **च सदित्युच्यते** । **तदर्थीयम्** । 'ॐ तत्सदिति निर्देशो ब्रह्मणः' इति ब्रह्मविषयं **कर्म च** ब्रह्मप्रीत्युद्देश्यकं **एव** कर्म **सदित्यभिधीयते** इत्यनेन 'ब्रह्मविषयत्वम्', 'निष्ठा च' इति इतिकर्तव्यता लभ्यते ॥ २७ ॥

भगवद्भक्तिरपि यज्ञादीतिकर्तव्यता इति भावेनोच्यते **अश्रद्धयेति** । **अश्रद्धया** भगवच्छ्रद्धाऽभावेन 'भगवद्भक्त्या विना' इति यावत्, **यद् हुतं दत्तं तप्तम्** अनुष्ठितं **तपः यच्च** अन्यत् **कृतं** कर्म जपादि तद् **असदित्युच्यते** । कुतः ? यतः **तद्** हवनादि **प्रेत्य** स्थितस्य लोकान्तरे न फलति । **इह** अपि **नो न** फलतीति 'श्रद्धयैव कर्म कर्तव्यम्' इति 'भक्तिरपि' इतिकर्तव्यताविशेष इत्युक्तं भवति । तदनेन ओङ्कारार्थज्ञानपूर्वकं ओङ्कारमुच्चार्य, अनभिसन्धाय फलम्, ब्रह्म अभिसन्धाय च, ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यम् । एवं यज्ञादिकं कुर्वद्भिः साधकैर्ब्रह्मणि यज्ञादौ च ओङ्कारादिनामसाम्येन अवगततत्प्रतिमात्वाद् यज्ञादेस्तत्र यज्ञादौ ब्रह्मणोऽतिप्रीतेः तत्र ब्रह्मैव निष्पादितं भवति । अत एवं क्रियमाणं यज्ञादिकं सात्त्विकम्, अतथाभूतं तु यज्ञादिकं राजसं तामसमित्येवं इतिकर्तव्यताप्रतिपादने 'ॐ तद्' इत्याद्युपदेष्टुः गीताचार्यस्य तात्पर्यमिति ॥ २८ ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां सप्तदशोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**गीतातात्पर्यनिर्णयः**

**ॐ तत्सदिति नाम्नां विष्णौ प्रसिद्धत्वात् ।**

***न्या०दी०*— ततश्च किमित्यत आह ओमिति ॥ कर्मादीनां तत्सम्बन्धित्वादेव हि सत्त्वम् । तच्च पदं ब्रह्मैव । ॐ तत्सदिति नाम्नां विष्णौ प्रसिद्धत्वात् ॥ अतो विष्णुसम्बन्ध्येव कर्मादि सदिति भावः । अनेन "ॐ तत्सदिति यद्विष्णोः" इति विवृतं भवति ।**

*भा०दी०*— **तच्च पदमिति** । सदिति पदं चेत्यर्थः ॥ **विवृतं भवतीति** । ओमादिनामकभगवत्सम्बन्धाद्यज्ञादिकमपि तन्नामकमिति विवृतमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते", "अनोङ्कृतमासुरं कर्म" इति श्रुतेः अनोङ्कृतस्याऽसुरत्वप्रसिद्धेः ।**

*न्या०दी०*— "अनोङ्कृतं ह्यासुरं स्यात्" इत्यनाङ्कृतस्यासुरत्वप्रसिद्धिः तदुच्चारणे हेतुतयोक्ता । काऽसावित्यतो वैदिकीत्याह **स्रवतीति** ॥

*भा०दी०*— **तदुच्चारण इति** । ॐकारोच्चारण इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"अनर्थज्ञोदितो मन्त्रो निरर्थस्त्राति मानतः ।**
**यन्मन्त्रस्तेन कथितो मन्त्रार्थो ज्ञेय एव तत् ॥"**

**—इति पैङ्गिश्रुतेश्च ।**

*न्या०दी०*— "ओङ्कृतं त्वपि" इत्युक्तार्थे श्रुतिं चाऽऽह **अनर्थज्ञेति** ॥ **निरर्थः** निष्प्रयोजनः । कुतः ? **यस्मादर्थज्ञानत एव ज्ञातारं त्राति तेन हि मन्त्रः** कथितः ।

*भा०दी०*— **तेन हि मन्त्र इति** । मं ज्ञातारं त्रातीति मन्त्र इत्यर्थः । माङ् मान इत्यतः कर्तरि अण्प्रत्ययेऽप्रत्यये वा म इति रूपम् । त्रैङ् पालन इत्यत आतोऽनुपसर्गे क इति कप्रत्यये डप्रत्यये वा मन्त्र इति रूपसिद्धेः ॥

**गीतातात्पर्यनिर्णयः**

**तदर्थत्वेन फलानभिसन्धिपूर्वककर्मण एव सात्त्विकत्वाच्च । तद्भक्त्या तत्स्मरणपूर्वकमेव कर्म सदन्यदसदेवेति भावः ॥**

*न्या०दी०*— नन्वस्मिन्नध्याये सदसत्कर्मविवेकः कार्यः । तं विहाय ॐतत्सत् इत्यादिना किमुच्यत इत्यतोऽभिप्रायमाह **तदर्थत्वेनेति** ॥ अत्र ह्योङ्कारार्थस्मरणपूर्वकं तमुच्चार्य भक्त्या भगवदर्थत्वेन निष्कामतया कृतमेव कर्म सात्त्विकमन्यद्राजसादीत्युच्यते । ततश्चैतादृशमेव सत्कर्म अन्यदसत्कर्मेति सदसत्कर्म विविच्योक्तमेवेति भावः । न च वाच्यमत्रैवंविधकर्मणः सत्त्वमन्यस्यासत्त्वं स्वयमेवोच्यत इति । अन्यथा प्रसङ्गाननु-

गुणत्वप्रसङ्गेन सदादिशब्दस्य सात्त्विकाद्यर्थत्वात् । एतेन "अफलाकाङ्क्षिभिः" इत्यादेरप्येवमेवाध्यायसङ्गतिः सूचिता भवति ।

*भा०दी०*— एवमेवाध्यायसङ्गतिः सूचितेति । अफलाकाङ्क्षित्वादिना क्रियमाणं कर्म सत्, अन्यदसदिति तात्पर्यादध्यायान्तर्भावसङ्गतिरित्यर्थः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते सप्तदशोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

राजसस्याप्यसदन्तर्भाव एव । विष्णुश्रद्धारहितत्वात् ।

***न्या०दी०***— ननु "कर्म चैव तदर्थोऽयं" इति सात्त्विकं कर्मोक्त्या राजसमनभिधाय "अश्रद्धया हुतं" इति तामसमेव किमुच्यत इत्यत आह **राजसस्येति** ॥ नात्र तामसमेव असच्छब्देनोच्यते अपि तु राजसमपीति भावः । तत्कुत इत्यतोऽश्रद्धयेत्युक्तासल्लक्षणस्य राजसेऽपि भावादित्याह **विष्ण्विति** ॥

"सात्त्विकं मोक्षदं कर्म राजसं सृतिदुःखदम् ।
तामसं पातदं ज्ञेयं तत् कुर्यात् कर्म वैष्णवम् ॥"

—इत्याग्नेये ॥ २३-२८ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये सप्तदशोऽध्यायः ॥*

***न्या०दी०***— "न च तत्प्रेत्य नो इह" इति यद्राजसतामसकर्मणोः फलमुक्तं तत् विविच्य स्मृत्या दर्शयति **सात्त्विकमिति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां सप्तदशोऽध्यायः समाप्तः ॥*

★ ★ ★

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ अष्टादशोऽध्यायः

**गीता**

**अर्जुन उवाच—**

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

*वि०वि०—* सर्वेष्वध्यायेषु विप्रकीर्णतयोक्तं पुरुषार्थसाधनं मन्दानां बुद्ध्यारोहार्थं सङ्क्षेपेणास्मिन्नध्याये उच्यते । चतुर्दशाद्यनुक्तत्रैगुण्यं चोच्यते । तत्र तावन्मोक्षसाधनत्त्वेन निर्दिष्टयोस्त्यागसंन्यासयोः पृथक् स्वरूपनिर्णयाय अर्जुन उवाच **संन्यासस्येति** ॥ १ ॥

*सा०सं०—* पूर्वाध्यायेषु सर्वेषु 'त्रैगुण्यविषया वेदाः' (२-४५) इत्यादिना यत् पुमर्थहेतुज्ञानसाधनं विप्रकीर्णतयोक्तम्, तदिह मन्दानां बुद्ध्यारोहाय सङ्क्षिप्य निरूप्यते । तथा चतुर्दशाध्यायोक्तं त्रिगुणकार्यं चोच्यते । 'संन्यासश्चैव योगश्च' (५-६) इत्यादिना पञ्चम्यादौ संन्यासस्य 'त्यागाच्छान्तिरनन्तरम्' (१२-१२) इति द्वादशे त्यागस्य च पुमर्थहेतुत्वमुक्तम् । तयोः स्वरूपनिर्णयाय पृच्छति **संन्यासस्येति** । हे **हृषीकेश !** सर्वेन्द्रियस्वामिन् । केशिनामकासुरमर्दन । **संन्यासस्य त्यागस्य च पृथक् तत्त्वं** स्वरूपम् । **वेदितुं** ज्ञातुमिच्छामि । द्वयोरपि शब्दयोरापाततोऽर्थैक्यप्रतीतेरिति भावः ॥ १ ॥

*अ०प्र०— अ०प्र०—* अतीतसप्तदशाध्यायेषु विप्रकीर्णतयोक्तं अपरोक्षज्ञानसाधनं मन्दानां बुद्ध्यारोहाय संक्षेपेण निगमयन्नुक्तं त्रैगुण्यञ्च वक्ति अत्राष्टादशाध्याये । स्वयं ज्ञाततत्त्वोऽपि अर्जुनो लोकोपकाराय ज्ञानसाधनत्वेनोक्तयोः त्यागसंन्यासयोः पृथक् स्वरूपं पृच्छति । यद्वा, अत्र च

'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी संन्यासयोगयुक्तात्मा' इत्यादिषु कर्मसंन्यास उपदिष्टः तथा 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' इत्यादिषु कर्मसंन्यास उपदिष्टः । तथा 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । सर्वकर्मफल-त्यागं ततः कुरु यतात्मवान्' इत्यादिषु फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टम् । न च परस्परविरुद्धं सर्वज्ञः परमकारुणिको भगवान् उपदिशति । अतः कर्मसंन्यासस्य तदनुष्ठानस्य च विरोधप्रकारं बुभुत्सुरर्जुनः पृच्छति **महाबाहो इति** ।

संन्यासत्यागावेकार्थप्रद्योतकौ इति अहं जानामि तर्हि[१], हे हृषीकेश !, अत्रार्थः पृथगस्ति चेत्[२], संन्यासस्य[३], त्यागस्य च[४], तत्त्वं[५], पृथक् पृथक्[६], वेदितुं[७], इच्छामि[८] ।

हे केशिनिषूदन = स पृथगर्थस्त्वया आज्ञापयितव्य इति प्रश्नः[९], हे महाबाहो 'संन्यास-त्यागावेकार्थप्रद्योतकौ' इति अहं जानामि तर्हि[१], 'हे हृषीकेश ![१], भो सर्वेन्द्रियनियामक अत्रार्थः पृथगस्ति चेत् त्वया[२], संन्यासस्य[३], त्यागस्य च[४], तत्त्वं निश्चयं भावं वा[५], पृथक् पृथक् विभागतो विवेकेन[६], वेदितुं ज्ञातुं[७], इच्छामि अतः प्रश्नं करोमि[८], हे केशिनिषूदन !, केशिनाम्नो हि महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षयितुं आगच्छतोऽत्यन्तं व्याप्ते मुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत् तं विदार्य विनिषूदितवान् । अत एव हे महाबाहो भो श्रीकृष्ण परमात्मन् !, त्वया संन्यासत्यागयोः पृथगर्थ आज्ञापयितव्यः[९], इति श्रीकृष्णं प्रति अर्जुनस्य प्रश्नाशयः ॥ १ ॥

### भाष्यम्

**पूर्वोक्तं साधनं सर्वं सङ्क्षिप्य उपसंहरति अनेन अध्यायेन ॥ १ ॥**

***प०टी०*—** एतदध्यायप्रतिपाद्यमाह **पूर्वोक्तेति** ।

***प्र०दी०*—** अध्यायप्रतिपाद्यमाह **पूर्वोक्तमिति** । **साधनं** ज्ञानसाधनम् । उक्तस्योक्तिर्व्यर्था इत्याशङ्कानिरासाय **सङ्क्षिप्योपसंहरति** इत्युक्तम् । अनुक्तं त्रैगुण्यं च वक्तीत्यपि द्रष्टव्यम् ॥ १ ॥

***भा०दी०*—** **पूर्वोक्तमिति** । पूर्वतनेष्वध्यायेषु विप्रकीर्णतयोक्तमित्यर्थः । **अनुक्तं त्रैगुण्यं चेति** । 'कारणं गुणसङ्गोऽस्य' इत्यादिना त्रयोदशे, 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इत्यादिना चतुर्दशादावुक्तादन्यदेव त्रैगुण्यमित्यर्थः । 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इत्यादिना वक्तीत्यर्थः ॥ १ ॥

*भा०र०*— **अध्यायप्रतिपाद्यं** एतदध्यायप्रतिपाद्यम् । **पूर्वोक्तं** पूर्वेषु अध्यायेषु विप्रकीर्णतयोक्तम् । 'सङ्क्षिप्य' इति भाष्ये 'मन्दानां बुद्ध्यारोहाय' इति योज्यम् । 'उपसंहरति' इत्यनुवदन् उपसंहाररूपत्वात् न पुनरुक्तिशंका इत्यभिप्रैति । ननु 'त्यागो हि पुरुषव्याघ्र त्रिविधः' इति 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इत्यादिना च गुणनिमित्तकत्यागादिभेदस्यापि अत्राध्याये वचनात् कथं 'साधनम्' इत्येवोक्तम् ? इत्यतो 'अनुक्तत्रैगुण्यवादी चायम्' इति तात्पर्यनिर्णयरीत्या गुणभेदवचनमपि ग्राह्यमित्याह **अनुक्तमिति** । 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इति चतुर्दशाध्याये, 'कारणं गुणसङ्गोऽस्य' इति त्रयोदशाध्याये चोक्तात् त्रैगुण्याद् अन्यदेव त्रैगुण्यमित्यर्थः ॥ १ ॥

**गीता**

## श्रीभगवानुवाच—

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

*वि०वि०*— अत्र परिहारं भगवानुवाच **काम्यानामिति** । अनियतकाम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागो नियतकाम्यानां स्वरूपाकरणेन त्यागः संन्यासः । सर्वेषां काम्यकर्मणां करणाकरणविवक्षया फलत्याग एव त्याग इत्यर्थः । तथाहि श्रुतिः— 'अनिच्छयाऽकर्मणा वापि काम्यकर्मन्यासो न्यासः । फलत्यागस्तु त्याग' इति । जनकाश्वपत्यादिभिर्मुमुक्षुभिरश्वमेघादीनामनुद्दिष्टफलानामनुष्ठानान्न काम्यानां स्वरूपपरित्याग एव नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्त्वेन तत्त्यागो न युक्तः । न च सर्वेषामित्यादीनामर्थवादादिकं फलमस्ति । न च विश्वजिदादिवत्कल्पनाप्रमाणाभावात् इति ॥ २ ॥

*वा०ल०*— 'काम्यानां कर्मणाम्' इत्यत्र, कर्माधिकारिण एव गृहस्थस्य स्वर्गादिफलकामनाभावात्, काम्यानां फलकामनया विहितानां ज्योतिष्टोमादिसकलकर्मणां न्यासं स्वरूपेणैव न्यासम् । सर्वकर्मफलत्यागं सर्वकाम्यकर्माणि कृष्णप्रीत्यर्थमेव कृत्वा यस्तेषां फलत्यागः, तम् ॥ २ ॥

*सा०सं०*— अथाऽप्यस्ति विवक्षाभेदेन भेद इति भावेनोत्तरमाह **काम्यानामिति** । वैकल्पिक**काम्यानां** ज्योतिष्टोमादीनाम् । स्वर्गादिफलानिच्छया विशेषणत्यागेन **काम्यानां कर्मणां त्यागम्** । नियतकाम्यानां कारीर्यादीनां स्वरूपाकरणेन त्यागम् । **संन्यासं** ज्ञानिनो **विदुः** जानन्ति। **विचक्षणाः** कुशलाः । सर्वकर्मणां भगवत्प्रीत्यन्यफलत्यागं त्यागशब्दार्थमाहुः इत्यर्थः ॥ २ ॥

*अ०प्र०*— अथान्वयः— हे पार्थ !, त्यागसंन्यासावेकार्थप्रद्योतकाविति त्वया यज्ज्ञापितं तत्सत्यम्, उभयोरर्थस्त्याग एव । तथापि कश्चिद्भेदोऽस्ति यः सर्वकर्मत्यागः स संन्यासः । यः फलमात्रत्यागः स त्यागः । तत्र कस्य कर्मणः फलं त्यक्तव्यम् । केवलं किं कर्म त्याज्यम् ? तद्वक्ष्यामः **काम्यानामिति** ।

कवयः[१], काम्यानां[२], कर्मणां[३], न्यासं[४], संन्यासमिति[५], विदुः[६], विचक्षणाः[७], सर्वकर्मफलत्यागं[८], त्यागमिति[९], प्राहुः[१०] इत्यन्वयः ।

कवयः = केचित् ज्ञानिनः[१], काम्यानां कर्मणां न्यासं = कामानामूलाः अश्वमेधादि वापीकूपतटाकाद्यनेककाम्यव्रतानि कामनामूलानि काम्यकर्माणि तेषां काम्यानां कर्मणां[३], न्यासः स्वरूपत एव त्याग एव न्यासः[४], संन्यासः[२], संन्यासमिति[५], विदुः = द्रष्टारो जानन्ति वदन्तीति भावः[६], विचक्षणाः = अन्ये ज्ञानिनः सर्वकर्मफलत्यागं सर्वशब्देन नित्यनैमित्तिकाख्यं कर्मेति सर्वत्वं उभयेषामपि सर्वकाम्यकर्मणां फलत्यागः तं सर्वकर्मफलत्यागं[८], त्यागमिति[९], प्राहुः[१०] इति श्लोकार्थः ॥

अत्र पक्षे कर्मणां करणाकरणे उभयेऽपि न विवक्ष्यन्ते 'अनिच्छयाऽकर्मणा वापि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्याग' इति श्रुतेः । अकर्मणा अकरणेन अकृत्वेत्यर्थः । अनिच्छया ज्योतिष्टोमादिफलस्य पुत्रकाम्येष्टियज्ञादेरकर्मणेति श्रुत्यर्थः । जनकादिमुमुक्षुभिःअश्वमेधादीनामनुद्दिश्य फलानामनुष्ठानादि काम्यानां स्वरूपत्यागोऽत्र विवक्षितः । नित्यनैमित्तिकफलस्य मनःशुद्धेः सर्वापेक्षितत्वेन तत्त्यागोऽपि न युक्त इत्यादीनां फलान्तरसद्भावे मानाभावात् । यद्वा, मतान्तरम्— 'पुत्रकामो यजेत' 'स्वर्गकामो यजेत' इत्येवं आदि कामोपबन्धेन विहितानां कर्मणां न्यासं परित्यागं संन्यासं कवयो विदुः सम्यगनुकूलैः सह कर्मणामपि न्यासं संन्यासं पण्डिताः जानन्तीत्यर्थः । सर्वेषां काम्यानां नित्यनैमित्तिकानां च कर्मणां फलमात्रत्यागं 'प्राहुस्त्यागं विचक्षणाः' निपुणाः न तु स्वरूपतः कर्मत्यागम् । ननु नित्यनैमित्तिकानां फलाश्रवणात् विद्यमानस्य फलस्य कथं त्यागः स्यात् ? न हि, वन्ध्याया पुत्रत्यागः सम्भवति । अत्रोत्तरम्— 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तः प्रवर्तयितुमशक्नुवन् 'विधिर्विश्वजिता यजेते'त्यादिष्विव सामान्यतः किमपि फलमाक्षिपत्येव । न चातीव गुरुतमश्रद्धया स्वसिद्धेरेव विधेः प्रयोजनमिति मन्तव्यम् । पुरुषस्य प्रवृत्त्यनुपपत्तेः दुष्परिहारत्वात् श्रूयन्ते चानित्यादिष्वपि फलं 'सर्व एते पुण्यलोका भवन्तीति' कर्मणा पितृलोक इति धर्मेण पापानुदतीत्येवमादिषु तस्मा-

द्युक्तमुक्तम् । 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति । ननु च फलत्यागेन पुनरपि निष्फलेषु कर्मसु अप्रवृत्तिरेव स्यात् । तत्र सर्वेषामपि कर्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात् । तथा च श्रुतिः— 'तमेनमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । यज्ञेन दानेन तपसा नाशकेनेति' । अतः प्रतिपदोक्तं सर्वफलं बन्धकत्वेन त्यक्त्वा विविदिषार्थ-सर्वकर्मानुष्ठानं घटत एव विविदिषा च नित्यानित्यवस्तुविवेकेन निवृत्त्य देहाद्यभिमानतया बुद्धेः प्रत्यक् प्रवणता तात्पर्यम् । तं च सर्वशुद्ध्यर्थं ज्ञानाविरुद्धं यथोचितमावश्यकं कर्म कुर्वतः तत्फलत्याग एव कर्मत्यागो नाम। न स्वरूपेण । तथा च श्रुतिः— 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति । ततःपरं तु सर्वकर्मनिवृत्तिः स्वत एव भवति । तदुक्तम्— 'नैष्कर्म्यसिद्धौ प्रत्यक् प्रवणानां बुद्धेः कर्माण्युत्पाद्य शुद्धितः कृतार्थान्यस्तमायन्ति प्रावृडन्ते घना इवे'ति । उक्तं भगवता— 'यस्त्वात्मरतिरेव स्यात् आत्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' इति । वसिष्ठेनोक्तम्— 'न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ' कर्मणो मूलभूतस्य सकालस्यैव नाशतः ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्य त्यजेद्वा । तदुक्तं श्री भगवता— "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मद्वृत्तश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः । सलिङ्गमाश्रमांस्त्यक्त्वा चरेत विधिगोचरः ॥" इति अलमतिप्रसङ्गेन । प्रकृतमनुसरामः ॥ २ ॥

**भाष्यम्**

**फलानिच्छयाऽकरणेन वा काम्यकर्मणो न्यासः संन्यासः । त्यागस्तु फलत्याग एव । तथा हि प्राचीनशालश्रुतिः "अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्यागः" इति ॥ २ ॥**

*प०टी०*— 'काम्यानाम्' इति श्लोकं सप्रमाणकं व्याचष्टे **फलेति** ॥ २ ॥

*प्र०दी०*— 'काम्यानां कर्मणाम्' इत्येतं श्लोकं **केचित्** व्याचक्षते 'काम्यानां कर्मणां अश्वमेधादीनां स्वरूपेण त्यागः संन्यासः । नित्यनैमित्तिकादिसर्वकर्मफलत्यागः त्यागः' इति । तदसदिति भावेनाह **फलेति** । वैकल्पिककाम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागः, नियतकाम्यानां स्वरूपाकरणेन त्यागः संन्यासः । काम्यकर्मणामेव फलत्यागस्तु त्यागः, करणाकरणे तु न विवक्षिते इत्यर्थः । कुत एतत् ? इत्यत आह **तथा हीति** । **अकर्मणा** अकरणेन । जनकाश्वपत्यादिभिः मुमुक्षुभिः अश्वमेधादीनाम् अनुद्दिष्टफलानाम् अनुष्ठानात् न काम्यानां स्वरूपपरित्याग एव । नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन तत्त्यागो न युक्तः ॥ २ ॥

*भा०दी०*— 'फलानिच्छया अकरणेन वा' इति भाष्यं भिन्नकर्मविषयतया व्याचष्टे **वैकल्पिकेति** । अश्वमेधज्योतिष्टोमादयो हि फलकामनया तदकामनया वा अनुष्ठानयोग्यत्वात् वैकल्पिककाम्याः, तेषां कामनाविषयत्वरूपविशेषणत्यागेन स्वरूपाकरणत्यागेन स्वरूपाकरणमित्यर्थः ।

**नियतेति** । पुत्रेष्ट्यादिरूपकाम्यकर्मणामित्यर्थः । **काम्यकर्मणामेवेति** । स्वर्गादिफलकाश्वमेधज्योतिष्टोमराजसूयादिकर्मणामित्यर्थः । **एव** इत्यनेन प्रागुक्तानामिति द्योतयति । भाष्यस्थस्यैवाक्षरतात्पर्यमाह **करणाकरणे तु न विवक्षित इति** । उत्तरं वक्तुर्भगवत इति योज्यम् । संन्यासशब्दार्थे तु उक्तदिशा केषाञ्चित् करणं केषाञ्चिद् अकरणं विवक्षितमिति संन्यासत्यागयोर्भेद इति भावः ॥ २ ॥

*भा०र०*— **केचिदिति** । तथा च *शङ्करः*— 'काम्यानां अश्वमेधादीनां कर्मणां न्यासं = परित्यागम् अनुष्ठीयत्वेन प्राप्तस्याननुष्ठानम्, नित्यनैमित्तिकानां अनुष्ठीयमानानां सर्वकर्मणां आत्मसम्बन्धितया प्राप्तस्य फलस्य परित्यागम्' इति । **श्रीधरोऽपि** 'पुत्रकामः', 'स्वर्गकामः' इत्यादिकामोपबन्धेन विहितानां कर्मणां संन्यासं = स्वरूपतः परित्यागं सर्वकर्मणां फलमात्रपरित्यागं त्यागं प्राहुः' इति । **नित्यनैमित्तिकादिसर्वकामेति** । नित्यानि– सन्ध्यावन्दनादीनि, नैमित्तिकानि– उपरागस्नानादीनि । आदिपदगृहीतानि काम्यकर्माणि इत्येवं सर्वेषां कर्मणां फलत्यागः त्यागशब्दार्थ इत्यर्थः । **यत्तु** 'अत्र आदिपदं सम्पातायातम्' इति केषाञ्चिद्वचनं तदभव्यम् । काम्यानां अश्वमेधादीनां स्वरूपतः त्यागः संन्यासशब्दार्थः, निमित्तनैमित्तिककाम्यात्मकानां सर्वकर्मणां फलत्यागः त्यागशब्दार्थ इति संन्यासत्यागयोः स्वरूपव्याख्यानाद् आदिपदेन काम्यकर्मग्रहणसम्भवात् । नित्यनैमित्तिकयोः स्वपदेन, काम्यग्रहणं तु पूर्वार्धे स्वरूपतः त्यक्तव्यतयाऽभिहितत्वाशयात् । अत एव 'सर्वकर्मफलत्यागम्' इत्युत्तरार्धम् । सर्वेषां काम्यानां नित्यानां नैमित्तिकानां च कर्मणां फलमात्रत्यागं 'प्राहुस्त्यागं विचक्षणाः' इति **श्रीधरोऽपि** व्याचख्यौ । 'नित्यनैमित्तिकानां सर्वकर्मणाम्' इति *शङ्करभाषणमपि* स्वरूपतस्त्यक्तानां काम्यकर्मणां फलत्यागस्य कैमुतिकन्यायप्राप्तत्वाभिप्रायम् । 'नित्यनैमित्तिकफलस्य अन्तःकरणशुद्धेः' इति अग्रिमटीकावाक्यमपि 'काम्यानां स्वरूपतस्त्यागः, नित्यनैमित्तिकानां फलत्यागः' इति यद् अपव्याख्यानं तत्प्रतिक्षेपाय प्रवृत्तमिति न तदपि आदिपदस्य सम्पातायातत्वे उपष्टम्भकमिति ।

'अश्वमेधादीनां स्वरूपतस्त्यागः संन्यासः' इति परपक्षं प्रतिक्षिपन् 'फलानिच्छया अकरणेन' इति भाष्यं व्यवस्थाय व्याख्याति **वैकल्पिककाम्यानामिति** । यानि फलाभिसन्धिना कर्तुं योग्या-

न्यपि तदनभिसन्धिनाऽपि कर्तुं योग्यानि तानि वैकल्पिककाम्यानि अत्र विवक्षितानि, तेषां अश्वमेधादीनामित्यर्थः । भाष्ये फलस्वरूपं वक्तुमुक्तम् **स्वर्गादीति** । 'फलानिच्छया' इत्यस्य तात्पर्यम् **विशेषणत्यागेनेति** । फलाभिसन्धिपूर्वकं क्रियमाणत्वरूपविशेषणत्यागेनेत्यर्थः । **नियतकाम्यानां** 'पुत्रकामः पुत्रेष्ट्या यजेत', 'वृष्टिकामः कारीर्या यजेत' इत्यादिशास्त्रचोदितनित्यकाम्यानां पुत्रेष्ट्यादीनामित्यर्थः । न चैतेषामपि फलेच्छया तदनिच्छया च कर्तुं शक्यत्वाद् वैकल्पिककाम्यत्वं शङ्क्यम् । अश्वमेधादिवत् मोक्षोद्देशेन सनकादिभिः अननुष्ठानेन तेषां नित्यकाम्यत्वमेवेत्याशयात् । **काम्यकर्मणामेव** वैकल्पिककाम्यकर्मणां अश्वमेधादीनामेव । एवकारेण नित्यनैमित्तिककर्मव्यावृत्तिः।

तर्हि संन्यासत्यागयोः भेदः कथम् ? इत्यतः भाष्यस्थैवकारतात्पर्योक्तिः **करणाकरणे त्विति** । संन्यासशब्दार्थे तु करणं विवक्षितमिति हृदयम् । अत एव 'अश्वमेधादीनां अनुद्दिष्टफलानाम् अनुष्ठानात्' इति वक्ष्यति । तथा च अश्वमेधादिकर्मानुष्ठानायैव तत्फलस्वर्गाद्यनभिसन्धिः संन्यासः, वैकल्पिकनित्यरूपोभयविधकाम्यकर्मणामेव करणाकरणविवक्षया फलमात्रत्यागः त्याग इति तयोर्भेद इति विभावितं भवतीति **वदन्ति** । 'अकरणेन' इति भाष्याविसंवादाय 'अकर्मणा' इत्यस्य प्रकृतेऽन्वयाय चार्थमाह **अकर्मणा अकरणेनेति** । 'काम्यानां स्वरूपतस्त्यागः, नित्यनैमित्तिकानां फलत्यागः' इति परव्याख्याने किं दूषणमुक्तं स्यात् ? इत्यतः तद्दर्शयति **जनकेति** । फलानुद्देशे प्रेक्षावतां प्रवृत्तिरनुपपत्तिरिति विशेषपरिजिहीर्षयोक्तम् **मुमुक्षुभिरिति** । **अनुद्दिष्टफलानाम्** अनभिसंहितनश्वरस्वर्गादिफलकानाम् । **स्वरूपपरित्याग एव** 'स्वरूपत एव त्यागः संन्यासः' इति योज्यम् । **न त्यागः** नित्यनैमित्तिककर्मफलत्यागः, 'न युक्त इति भावः' इति शेषः ॥ २ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वाध्यायोक्तधर्मस्य समासतो निर्णयात्मकोऽनुक्तत्रैगुण्यवादी चायम् ॥ ॥ १-२ ॥**

***प्रका०***— अनेनाध्यायेन प्रतिपाद्यं दर्शयति **सर्वेति** । "ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः" इत्यादि चतुर्दशाध्यायाद्यनुक्तत्रैगुण्यवादी चायमध्याय इत्यर्थः ।"

***न्या०दी०***— **एतदध्यायप्रतिपाद्यमर्थं दर्शयति सर्वेति ॥ यत्सर्वेष्वध्यायेषु विप्रकीर्णतया पुरुषार्थसाधनमुक्तं तन्मन्दानां बुद्ध्यारोहार्थं सङ्क्षेपेणास्मिन्नध्याये निरूप्यते । चतुर्दशाद्यनुक्तं त्रैगुण्यं चोच्यत इत्यर्थः ॥**

*भा०दी०*— **पुमर्थसाधनमिति** । मोक्षहेतुज्ञानसाधनं 'त्रैगुण्यविषया वेदा' इत्यादिनोक्तमित्यर्थः । **त्रैगुण्यं** सत्त्वादिगुणत्रयकार्यमित्यर्थः ॥

**गीता**

## त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
## यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥

*वि०वि०*— सर्वकर्मफलत्यागमिति स्वोक्तत्यागस्वरूपावधारणाय प्रातीतिकीं विद्वन्मतविप्रतिपत्तिमुद्भावयति **त्याज्यमिति** । काम्यानां बन्धकत्त्वेन दुष्टत्वात्फलसङ्गत्याग एव प्रथमपक्षेऽपि त्यागो विवक्षितः । अन्यथा मनीषिण इति विशेषणवैय्यर्थ्यात् । अतो मतयोरविरोध एव विप्रतिपत्तिस्त्वापाततः प्रतीतिमपेक्ष्योद्भावितेत्यदोषः ॥ ३ ॥

*वा०ल०*— काम्यानां कर्मणां न्यासो मयि समर्पणमिति भ्रमं वारयितुम्, कामनायाः कुतो हेयत्चम् ? इति शङ्कां च वारयितुमुक्तपक्षद्वयमेव विवेचयति **त्याज्यं दोषवदिति** । पापाख्यदोषवतः कर्मणः सर्वैरपि हेयत्वेनैकपदत्वायोगेन मोक्षप्रतिबन्धकीभूतकामनैवात्र दोषः । दोषवत् कामनाख्यदोषवत् कर्म त्याज्यं न कर्तव्यमेव । यज्ञदानतपःकर्म न त्याज्यम्, किन्तु तत्फलकामनैव त्याज्या इत्यपरे ॥ ३ ॥

*सा०सं०*— 'सर्वकर्मफलत्यागम्' इति स्वोक्तत्यागस्वरूपावधारणाय प्रातीतिकीं विद्वन्मतविप्रतिपत्तिमुद्भावयति, **त्याज्यमिति** । **एके मनीषिणो** ज्ञानिनः । **दोषवत्** बन्धकत्वदोषयुक्तं काम्य**कर्म** । **त्याज्यम्** अकार्यमाहुः । **अपरे च** मनीषिणः । यज्ञादि **न त्याज्यमिति प्राहुः** । **तपः** कृच्छ्रचान्द्रायणादि । **कर्म** यज्ञाङ्गानि । यद्वा, नित्यनैमित्तिकानि । 'मनीषिणः' इति विशेषणात् प्राचीनपक्षेऽपि फलत्याग एवाभिमतो न स्वरूपत्यागः । अतो न मतयोर्विरोधः ॥ ३ ॥

*अ०प्र०*— सर्वकर्मफलत्यागमिति स्वोक्तत्यागस्वरूपावधारणाय प्रातीतिकिमिच्छन् मतविप्रतिपत्तिं उद्भावयति । यद्वा, मतान्तरे अविदुषः फलत्यागमात्रमेव फलत्यागशब्दार्थः । न कर्मत्याग इत्येतदेव मतान्तरनिरासेन दृढीकर्तुं मतभेदं दर्शयति **त्याज्यमिति** ।

अथान्वयः— एके[१], मनीषिणः[२], कर्म[३], दोषवत्[४], इति हेतोः[५], त्याज्यमिति[६], प्राहुः[७], अपरे[८], यज्ञदानतपःकर्म[९], न त्याज्यं[१०] इति प्राहुः[११] इत्यन्वयः ।

एके = केचित् साङ्ख्याः[१], मनीषिणः = कर्मफले मनीषाऽऽसक्ता बुद्धिर्येषां ते मनीषिणः। कर्मफलत्यागे असक्ता इत्यर्थः। अयं भावः— न 'हिंस्यात्सर्वभूतानि' इति निषेधः। पुरुषस्य अनर्थहेतुर्हि सेत्याह अग्नीषोमीयं पशुमालभेतेत्याद्याकारको विधिस्तु हिंसायाः क्रतूपकारकत्वमाह, अतो भिन्नविषयत्वेन सामान्यविशेषन्यायगोचरत्वात्। द्रव्यसाध्येषु च सर्वेष्वपि कर्मसु हिंसादेः सम्भवात् सर्वमपि कर्म त्याज्यमेवेति। तदुक्तम्— 'दृष्टवदनुश्रावकः सद्यः क्षयातिशययुक्त' इति अतो मनीषिणः[२], कर्म = हिंसादिदोषयुक्तत्वात् बन्धाय भवति तस्मात्[३], दोषवत् = दोषो यथा त्यज्यते तथा दोषवत् इति हेतोः[४], त्याज्यमिति[५], प्राहुः = प्रकर्षेण वदन्ति[७], अपरे = मीमांसकाः[८], यज्ञदानतपःकर्म[९], न त्याज्यमिति प्राहुः = यज्ञादिकर्माणि कर्तव्यानीति तेषां मनःशुद्धेः हेतुत्वात्[११], इति श्लोकार्थः॥

अत्र प्रथमपक्षे मनीषिण इति विशेषणात् ग्राह्यत्वमेव तस्य फलकामनायुक्तानां बन्धकत्वेन दृष्टत्वात् फलकामना एव त्याज्यो न कर्मेति भावस्य तत्र सत्त्वात्। अतो मतयोरविरोध एव। विप्रतिपत्तिस्त्वापात-प्रतीतिमपेक्ष्योद्भावितेत्यदोषः। यद्वा, मतान्तरं क्रत्वर्था हि सता हिंसा पुरुषेणैव कर्तव्या। सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव। यथाहि— विधिविधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यलक्षणत्वाच्छेषस्य न तु अनिषेधो निषेध्यस्य तादर्थ्यमपेक्ष्यते। प्राप्तिमात्रापेक्षितत्वात्, अन्यथा अज्ञानप्रमादादिकृते दोषाभावप्रसङ्गात्। तदेवं समानविषयत्वेन सामान्यशास्त्रविशेषेण बाधान्नास्ति दोषत्वम्। अतो नित्यं यज्ञादि कर्म न त्याज्यमिति॥ ३॥

**भाष्यम्**

**मनीषिणः इति विशेषणात् पूर्वपक्षोऽपि ग्राह्य एव। फलत्यागेन त्यागो विवक्षितः यज्ञादेस्तत्पक्षे। 'यस्तु कर्मफलत्यागी' इति च वक्ष्यति। अत एक एवायं पक्षः॥ ३॥**

*प०टी०*— 'यज्ञदानतपःकर्म न त्याज्यम्' इति श्रवणात् 'त्याज्यं दोषवत्' इति पक्षो हेय इति न शक्यमित्याह **मनीषिण इति**। तर्हि कृष्णमतविरोध इत्यत आह **फलेति**। 'त्याग'शब्दः फलत्यागमात्रे कथं पर्यवस्यति? इत्यत आह **यस्त्विति**। यतो न भगवन्मतविरोधः, अतोऽयमेक एव पक्ष इत्याह **अत इति**॥ ३॥

*प्र०दी०*— 'त्याज्यं दोषवत्' इत्यनेन 'हेयः कापिलानां पक्षः उपन्यस्तः' इति **केचित्**। तदसदिति भावेनाह **मनीषिण इति**। **पूर्वपक्षः** पूर्वोपन्यस्तः पक्षः। ननु 'यज्ञदानतपःकर्म न त्याज्यं

कार्यमेव तत्' इति भगवन्मतविरुद्धोऽसौ कथं ग्राह्यः ? इत्यत आह **फलत्यागेनैवेति** ॥ फलत्यागाभिप्रायेण यज्ञादेः त्यागो विवक्षितः तत्पक्षे न स्वरूपतः । कुतः ? 'मनीषिणः' इति विशेषणादेव । अतो न भगवन्मतविरुद्धोऽसौ । कर्मत्यागशब्दः कथं फलत्यागेनार्थेनार्थवानित्यत आह **यस्त्विति** ।

ननु एवं सति पूर्वोत्तरार्धोपन्यस्तयोः पक्षयोरविरोध आपद्यत इति चेत्, सत्यमित्याह **अत इति** । **अतः** मनीषिपक्षत्वात् । **एकः** अविरुद्धः । **अयं** पूर्वोत्तरार्धोपन्यस्तः । किन्त्वापातप्रतीतिमपेक्ष्य सन्देहबीजत्वेन विप्रतिपत्तिरियमुद्भावितेति भावः ॥ ३ ॥

*भा०दी०*— **पूर्वोपन्यस्त इति** । 'त्याज्यम्' इति श्लोके पूर्वोत्तरार्धयोः 'एके अपरे' इत्युक्तपक्षयोर्मध्ये पूर्वार्धोपन्यस्तः पक्ष इत्यर्थः । 'फलत्यागेन' इति वाक्यस्य 'ग्राह्यः' इत्यन्तवाक्येन अन्वयमाह **अत इति** । **अविरोध इति** । फलत्यागानुमानस्य पक्षद्वयेऽपि साम्याद् इति भावः । कुतस्तर्हि पक्षभेदोपन्यासः ? इति पृच्छायामाह **किन्त्वित्यादिना** । **आपातेति** । कर्मणस्त्यागरूपापातप्रतीतिमित्यर्थः । **अपेक्ष्य** इत्यस्य **उद्भाविता** इत्यनेन अन्वयः ॥ ३ ॥

*भा०र०*— 'हेयः' इति साधुकपिलपक्षव्यावृत्त्यर्थमुक्तम् । 'पूर्वपक्षो ग्राह्यः' इत्यलौकिकम् ? इत्यत आह **पूर्वोपन्यस्त इति** । 'त्याज्यं दोषवदित्येके' इत्यर्धोपन्यस्त इत्यर्थः । **असौ** 'कर्मयज्ञादिकं त्याज्यम्' इति पूर्वोपन्यस्तः पक्षः । **तत्पक्षे** पूर्वोपन्यस्तपक्षे । **कुतः** यज्ञादेः स्वरूपतस्त्यागो न विवक्षित इत्ययमर्थः कस्मात् प्रमाणाद् अवसेय इत्यर्थः । **अतः** 'त्याज्यं कर्म' इति आद्यपक्षस्य फलत्यागाभिप्रायकत्वात् । **असौ** पूर्वार्धोपन्यस्तः । 'इति भावः' इति शेषः । शङ्कते **कर्मत्यागशब्द इति** । 'अतः' इत्यनुवादः, 'मनीषिपक्षत्वाद्' इति व्याख्या । करणाकरणपक्षयोरिति भेदात् कथमेकत्वम् ? इत्यत उक्तम् **एकः अविरुद्ध इति** । 'न त्याज्यम्' इत्युत्तरार्धोपन्यस्तपक्षेऽपि फलत्यागेन स्वरूपकरणस्य विवक्षितत्वात् । 'त्याज्यं कर्म' इत्यत्रापि फलत्यागस्यैवाभिसंहितत्वादिति भावः । एवं तर्हि 'एके' इति, 'अपरे' इति च विप्रतिपत्त्युद्भावनं कथम् ? इति पृच्छति **किन्त्विति** । **आपातप्रतीतिमिति** । 'त्याज्यम्' इत्यनेन कर्मणः स्वरूपतस्त्याग उच्यते, 'न त्याज्यम्' इत्यनेन च स्वरूपतोऽत्याग इति झटिति उत्पन्नापरामर्शपूर्वकप्रतीतिमित्यर्थः ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**'मनषिणः' इत्युक्तत्वात् तेऽप्यनिन्द्याः । अतः "त्याज्यं दोषवत्" इत्यस्यार्थः "सङ्गं त्यक्त्वा फलं च" इति ॥ ३ ॥**

*प्रका०*— "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तममि"त्यनेन भगवन्मतेन विरुद्धत्वात् । "त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिण" इत्येतन्निगद्यते इति न वाच्यम् । मनीषित्वेनोक्तत्वेन निन्दा-नर्हत्वात् । "कार्यमित्येव यत्कर्म नियतं कुरुतेऽर्जुन । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ।" इत्यत्र यथा कर्मणां सङ्गफलत्यागेन कर्मत्यागो वर्ण्यते न तु कर्माकरणेन । तथा "त्याज्यं दोषवदित्येके कर्म प्राहुरि"त्यस्यापि वर्णयितुं शक्यत्वात् तदाह **मनीषिण इत्यादिना** ।

***न्या०दी०*— "सर्वकर्मफलत्यागम्" इति स्वोक्तत्यागस्वरूपावधारणाय प्रातीतिकी विद्वन्मतविप्रतिपत्तिरुद्भाव्यते 'त्याज्यं' इति ॥ अत्र यज्ञदानतपःकर्म न त्याज्यं, कार्यमेव तदिति भगवन्मतविरोधित्वात् त्याज्यं दोषवदिति त्यागपक्षिणो निन्द्या इत्यन्यथाप्रतीति-निरासायाह मनीषिण इति ॥ तन्मतस्य भगवन्मतविरुद्धत्वात् कथं ते न निन्द्या इत्यत आह अत इति ॥ "कार्यमित्येव यत्कर्म" इत्यत्र यथा कर्मणि सङ्गफलत्यागेन कर्मत्यागो वर्ण्यते, न तु कर्मस्वरूपत्यागेन, तथा त्याज्यमित्येतदर्थो वर्णयितुं शक्यते । अतो न तस्य भगवन्मतविरोधः । कुतोऽर्थान्तरकल्पनेति चेत् मनीषिण इत्युक्तत्वादेवेति भावः ॥**

**गीता**

## निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
## त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ४ ॥

*वि०वि०*— अविरोधप्रकारं प्रतिज्ञापूर्वकं व्युत्पादयति **निश्चयमित्यादिना** । तत्र विप्रतिपन्ने त्यागे विषये मे मत्तः निश्चयं शृणु । त्यागो हि फलत्यागो मदीयमिति कर्मणि ममतात्यागः, भगवति कर्तृत्वाद्यनुसन्धानेनात्मनः कर्तव्याभिमानत्याग इति त्रिविधः सम्प्रकीर्तितः ॥ ४ ॥

*वा०ल०*— त्यागे स्वरूपफलयोस्त्यागे । निश्चयम् अयमेव त्यागः कर्तव्य इति निश्चयम् । 'त्यागो हि' इत्यत्र, त्रिविधः सात्त्विकराजसतामसभेदेन त्रिविधः ॥ ४ ॥

*सा०सं०*— अविरोधप्रकारं प्रतिज्ञापूर्वमुपपादयति **निश्चयमिति** । **तत्र** विप्रतिपन्ने **त्यागे** विषये । निश्चितं मतं मे सकाशात् । **शृणु** श्रुत्वा निष्ठां कुरु । **त्यागो हि** फलत्यागः, कर्मणि ममतात्यागः, भगवति कर्तृत्वानुसन्धानपूर्वं स्वस्य कर्तृत्वाभिमानत्याग इति **त्रिविधः सम्प्रकीर्तितः** इत्येके । वक्ष्यमाणसात्त्विकादिभेदेनेत्यन्ये ॥ ४ ॥

***अ०प्र०***— एवं मतभेदमुपन्यस्य मतं कथयितुमाह अविरोधप्रकारं प्रतिज्ञापूर्वं व्युत्पादयति **निश्चयमित्यादिना** ।

अथान्वयः— हे भरतसत्तम ![1], तत्र[2], त्यागे[3], मे[4], निश्चयं[5], शृणु[6], हे पुरुषव्याघ्र ![7], हि निश्चयेन[8], त्यागः[9], त्रिविधः[10], सम्प्रकीर्तितः[11], इत्यन्वयः ।

हे भरतसत्तम ! = भरतानां साधुसत्तम[1], तत्र = एवं विप्रतिपन्ने[2], त्यागे = त्यागविषये[3], मे = मत्तः यद्वा मद्वचनात्[4], निश्चयं = निश्चितार्थं[5], शृणु = उपदिशामि[6], हे पुरुषव्याघ्र !, पुरुषश्रेष्ठ[7], हीति निश्चयेन[8], त्यागः = फलत्यागः कथं मदीयमिति कर्मणि ममता त्यागः । यद्वा, भगवति कर्तृत्वानुसन्धानेन आत्मानः कर्तृत्वाभिमानः त्यागः । अत एवायं दुर्बोधः तत्त्वविद्भिः सम्यक् विवेकेनायं त्यागः[9], त्रिविधः = तामसादिगुणसङ्गेन त्रिप्रकारकः[10] सम्प्रकीर्तितः = सम्यक् कथितः ॥ ४ ॥

**भाष्यम्**

**तत्प्रकारं चाह निश्चयमित्यादिना । यज्ञभेद उक्तः द्रव्ययज्ञाः इत्यादिना । दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किञ्चिद् यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा "ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा । यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेत्" इति व्याससमृतिविरोधः ।**

***प०टी०***— प्रथमद्वितीयपक्षयोर्विरोधाभ्युपगमे 'निश्चयम्' इत्यादि च न सङ्गच्छत इति भावेन आह **तत्प्रकारं चेति** । ननु यतीनां यज्ञदानाभावात् कथं तयोरत्याज्यत्वमुच्यते ? इत्यत आह **यज्ञेति** । ननु यज्ञादिपदेन द्रव्ययज्ञाद्येव विधीयत इति किं न स्यात् ? इत्यत आह **अन्यथेति** ।

***प्र०दी०***— न केवलं 'मनीषिणः' इति विशेषणसामर्थ्यादिवमुच्यते । किं तु भगवताऽपि तदविरोधप्रकारस्य व्युत्पाद्यमानत्वादिति भावेनोत्तरवाक्यतात्पर्यमाह **तदिति** । ननु परमहंसानां यज्ञदानयोरभावात् कथमुच्यते 'न त्याज्यं कार्यमेव तत्' इति ? तत्राह **यज्ञेति** । ननु ज्योतिष्टोमादिकमेव यज्ञः, धनदानादिकमेव दानं गृहीत्वा पारमहंस्यमेव कुतो न निराक्रियत इत्यत आह **अन्यथेति** । **यतिः** हंसादिः । **आस्थातुं** प्राप्तुम् । **उत्तमाश्रमं** पारमहंस्यम् ।

***भा०दी०***— **यज्ञेतीति** । 'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे' इत्यादिना चतुर्थे यज्ञभेद उक्त इति भाष्यार्थः । **गृहीत्वा** इत्यतःपूर्वम् **इतिशब्दः** अध्याहार्यः । **यतिः हंसादिरिति** । चतु-

र्थाश्रमो हंसकुटीचकबहूदकपरमहंसभेदेन चतुर्विधः । अतो 'हंसादेः' इत्युक्तम् । यतेरेव परमहंसत्वे 'उत्तमाश्रममाश्रयेत्' इत्युक्तं स्यादिति भावः ।

*भा०र०*— 'अविरोधप्रकारस्य व्युत्पाद्यमानत्वाद' इति वदता 'तत्प्रकारं = पूर्वोत्तरपक्षयोः अविरोधप्रकारमाह = व्युत्पादयति' इति भाष्यार्थ उक्तो भवति । 'उत्तरवाक्यतात्पर्यम्' इत्यत्र 'उत्तरवाक्यानां तात्पर्यम्' इति विग्रहः । भाष्ये आदिपदेन 'त्यागी सत्त्वसमाविष्टो मेधावी छिन्न-संशयः' इत्यन्तवाक्यग्रहणम् । तदन्तवाक्यसमुदायेन च 'त्यागो हि' इति त्यागत्रैविध्यं प्रतिज्ञाय, फलत्याग एव सात्त्विकत्यागः, कर्मस्वरूपत्यागस्तु तामसो राजसश्चेति प्रतिपादनेन मनीषिमतयोः अविरोधप्रकारस्यैव व्युत्पाद्यमानत्वादित्यभिप्रैति । 'यज्ञभेद उक्तः' इति भाष्ये 'चतुर्थाध्याये' इति शेषः । ननु यत्याश्रमस्यैव उत्तमाश्रयत्वात् कथं 'यतिरुत्तममाश्रमम् आश्रयेत् (?) इत्युक्तिः ? इत्यत आह **यतिर्हंसादिरिति** । आदिपदेन कुटीचक-बहूदकयोर्ग्रहणम् । 'आस्थातुम्' इत्यस्य 'अवस्थानाय' इति प्रतीतार्थकत्वेऽनन्वयः ? इत्यत व्याचष्टे **प्राप्तुमिति** । तिष्ठतेरकर्मत्वेऽपि 'अनेकार्था हि धातवः' इति प्रसिद्धेः प्रकृते प्राप्त्यर्थकत्वम् इष्टमिति भावः । उक्तचोद्यापनोदाय उत्तमाश्रमशब्दविवक्षितार्थमाह **पारमहंस्यमिति** ।

**भाष्यम्**

**ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपसो हि ते । अतो यद्वचः अन्यथा प्रतीयते, अधिकारभेदेन तद् योज्यम् । अन्यथा इतरेषां गत्यभावात् ॥ ४ ॥**

*प०टी०*— नन्वस्तु ज्ञानाद्यपि यज्ञादिः, तदपि कथं यतीनाम् ? इत्यत आह **ज्ञानेति** । ननु सर्वेषां यत्याश्रमाश्रयणविधाने कथं प्रियव्रतादीनां तन्निवारणम् ? इत्यत आह **अत इति** । तद्वचनानुसारादस्य तद्बाधः किं न स्यात् ? इत्यत आह **अन्यथेति** ॥ ४ ॥

*प्र०दी०*— नन्वेतेषां मध्ये इत्येवं व्याख्यानेऽपि कथं परमहंसानां यज्ञादिसम्भवः ? इत्यत आह **ज्ञानेति** । बहुव्रीहित्रयगर्भः कर्मधारयोऽयम् । विद्याऽभयविषयं दानं येषां ते तथोक्ताः ते परमहंसाः ।

ननु पारमहंस्ये हि प्रवृत्तः प्रियव्रतो हिरण्यगर्भेण निवारित इति पुराणेषूच्यते । तत्कथं पारमहंस्याकर्तव्यता ? इत्यत आह **अत इति** । उक्तवाक्यविरोधादेव । वाक्यत्वाविशेषात् पुराण-वाक्येनैव स्मृतेर्बाधः किं न स्यादित्यत आह **अन्यथेति** । एवमयोजयने **इतरेषां** 'ब्रह्मचारी' इत्या-दीनाम् 'गत्यन्तराभावादप्रामाण्यमेव प्रसज्यते' इति शेषः ।

एवं परमहंसानामपि यज्ञादिकर्तव्यतासम्पादनेनेदमपि परास्तम् । यत् केनचिदुक्तं 'अज्ञान् कर्मणि अधिकारिणः अधिकृत्य एतत्प्रकरणं प्रवृत्तम्, न परमहंसपरिव्राजकान्' इति ॥ ४ ॥

*भा०दी०*— **बहुव्रीहित्रयेति** । ज्ञानमेव यज्ञो येषां ते इति बहुव्रीहिद्वयं उक्तम् । 'विद्या-ऽभयदान'इत्यत्र अस्फुटत्वात् आह **विद्याऽभयेति** । विद्याऽभययोर्दानं येषामिति, ब्रह्मचर्यादिरेव तपो येषां ते इति कर्मणि षष्ठ्या विषयसप्तम्या वा व्यधिकरणबहुव्रीहिः । ज्ञानयज्ञाश्च ते विद्या-ऽभयदानाश्च ते ब्रह्मचर्यतपसश्चेति कर्मधारय इति भावः । **ते** इत्यनुवादः । **परमहंसाः** इति व्याख्या । **पुराणेष्विति** । 'गृहाश्रमः किन्नु करोत्यवद्यम्' इत्यादिना भागवतादिष्वित्यर्थः। **उक्तेति**। ब्रह्मचारीत्यादिवाक्येत्यर्थः ॥ ४ ॥

*भा०र०*— 'बहुव्रीहित्रय' इत्यत्र 'ज्ञानं यज्ञो येषां ते ज्ञानयज्ञाः', विद्याऽभयविषयं दानं येषां ते विद्याऽभयदानाः', 'ब्रह्मचर्यादिरेव तपो येषां ते ब्रह्मचर्यादितपसः' इति बहुव्रीहित्रयगर्भ इत्यर्थः । विद्याऽभययोर्दानत्वासम्भवात् कथं तत्र बहुव्रीहिः ? इत्यतोऽभिप्रेतं विग्रहं दर्शयति **विद्याऽभय-विषयमिति** । 'विद्याऽभययोर्दानं येषां ते तथोक्ताः' इति व्यधिकरणो बहुव्रीहिः । षष्ठी च 'कर्मणि' इति विषयत्वं तदर्थ इति भावः । विद्याऽभयदं विद्याऽभयविषयकत्वलक्षकमिति भावेन एवंविग्रहः प्रादर्शीति **केचित्** । **कर्मधारयः** 'ज्ञानयज्ञाश्च ते विद्याऽभयदानाश्च ते ब्रह्मचर्यादितपसश्च' इति कर्मधारयः । 'ते' इति युष्मदो रूपमिति प्रतीतिं 'ब्रह्मचर्यादयः' इति प्रतीतिं वा व्युदस्यन् उत्तमा-श्रमपदेन परमहंसानां सूचितत्वादाह **ते परमहंसा इति** ।

**पुराणेषु** भागवतादिषु स्फुटोऽयमर्थः पञ्चमस्कन्धे । **उक्तवाक्यं** 'ब्रह्मचारी गृहस्थो वा' इति वाक्यम् । **स्मृतेः** 'ब्रह्मचारी' इति स्मृतेः । **बाधः स्यात्** बाधः किं न स्यात् । **एवमयोजने** 'अधिकारिभेदेन उभयविधवाक्यप्रवृत्तिः' इत्ययोजने । **प्रसज्यत इति** । अप्रामाण्यप्रसञ्जनं च अनिष्टम् । 'को हि मीमांसको ब्रूयाद् विरोधे शास्त्रयोर्मिथः । एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति' इति वचनादिति भावः । *शङ्करस्तु* 'कर्मिण एवाधिकृतान् अपेक्ष्य एते विकल्पाः, न तु ज्ञाननिष्ठान् संन्यासिनोऽपेक्ष्येति । तस्मात् ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिता इति तस्मात् कर्मण्यधिकृतान् अज्ञान् प्रत्येव संन्यासत्यागविकल्पः । ये तु परमार्थदर्शिनः संन्यासिनो न ते विकल्पार्हाः' इति चाभाषत । तत्सङ्ग्रहेणानुवदति **यत्केनचिदुक्तं अज्ञानिति** ॥ '' 'परमहंसाख्ययतीन्' इति वाच्ये यत् परिव्राजकग्रहणं तत् 'परित्यज्य सर्वं व्रजति' इति तदर्थपर्यालोचनया सर्वकर्माभावं प्रत्याययितुं इति निरस्तम्'' इति सम्बन्धः ॥ ४ ॥

गीता

## यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
## यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

*वि०वि०*— अतस्तदन्यत्यागो नास्त्येव तव को निश्चयो जात इत्यपेक्षायामाह **यज्ञेति** । तत्तस्माद्यज्ञादिकर्म न त्याज्यम्; किन्तु, कार्यमेव । स्वरूपत्यागस्य त्यागशब्दार्थत्वाभावात् । किञ्च, मनीषिणां विदुषां यज्ञादीनि पावनानि नत्वविदुषामिव बन्धकानि । अतो वर्णाश्रमिभिः सर्वैरपि स्वोचितं यज्ञादिकं कार्यमेवेत्यर्थः । उक्तं च— "वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः । वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्गृहिणोऽखिलः ॥ शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः । विद्या-भयादिदानं च सर्वेषामपि सम्मतम् ॥ गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् । सर्वैः कार्यं तपोघोरमिति सर्वेऽत्र कर्मिणः ॥" इति । शूद्राणामपि विष्णुनाम स्वाध्यायः । सत्योपवासादि च सर्वेषां तपश्चास्ति ॥ ५ ॥

*सा०सं०*— 'निश्चयं शृणु' इति प्रतिज्ञातमाह **यज्ञेति** । द्वन्द्वैकवद्भावः । कुतः कार्यमित्यत आह **यज्ञ इति** । **पावनानि** पावित्र्यकरणानि । अबन्धकानीति यावत् । यद्वा **मनीषिणां** ज्ञानि-नाम् । मुक्तावानन्दातिशयकराणि । अतः सर्वैरपि वर्णाश्रमोचितकर्माणि कार्याण्येवेति । यतीनामपि ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपांसि च सन्त्येव । स्त्रीशूद्रादीनामपि विष्णुनामाध्ययनरूपो यज्ञः, सत्यवचनम्, उपवासादितपश्चास्त्येवेति भावः ॥ ५ ॥

*अ०प्र०*— यस्मादयं कर्मत्यागः दुर्बोधः, तस्मात् **यज्ञेति** ।

तच्च त्रैविध्यं 'नियतस्य तु संन्यास' इत्यादिना वक्ष्यति । प्रथमं त्वेतावान् निश्चयमाह **यज्ञेति** द्वाभ्याम् ।

तत् = तस्मात्[१], यज्ञदानतपःकर्म[२], न त्याज्यं[३], किन्तु कार्यमेव[४], मनीषिणां[५], यज्ञः[६], दानं[७], तपश्चैव[८], पावनानि भवन्ति[९] इत्यन्वयः ।

तत् = तस्मात्[१], यज्ञदानतप आदिकं कर्म न त्याज्यम् । यज्ञादिकर्माणि न त्याज्यानि[३], किन्तु कार्यमेव स्वरूपत्यागस्य त्यागशब्दार्थत्वाभावात् । तानि कर्माणि अतिशयेन कर्तव्यान्येव[४], तानि कर्माणि कस्मात्कर्तव्यानीत्युक्ते मनीषिणां = मोक्षमनीषा येषां ते मनीषिणः तेषाम् । यद्वा, मननशीलानां मुमुक्षूणां[५], यज्ञो दानं तपश्चैव = यज्ञदानतपांस्यैव[८], पावनानि भवन्ति = चित्तशुद्धि-

एवं परमहंसानामपि यज्ञादिकर्तव्यतासम्पादनेनेदमपि परास्तम् । यत् केनचिदुक्तं 'अज्ञान् कर्मणि अधिकारिणः अधिकृत्य एतत्प्रकरणं प्रवृत्तम्, न परमहंसपरिव्राजकान्' इति ॥ ४ ॥

*भा०दी०*— **बहुव्रीहित्रयेति** । ज्ञानमेव यज्ञो येषां ते इति बहुव्रीहिद्वयं उक्तम् । 'विद्या-ऽभयदान'इत्यत्र अस्फुटत्वात् आह **विद्याऽभयेति** । विद्याऽभययोर्दानं येषामिति, ब्रह्मचर्यादिरेव तपो येषां ते इति कर्मणि षष्ठ्या विषयसप्तम्या वा व्यधिकरणबहुव्रीहिः । ज्ञानयज्ञाश्च ते विद्या-ऽभयदानाश्च ते ब्रह्मचर्यतपसश्चेति कर्मधारय इति भावः । **ते** इत्यनुवादः । **परमहंसाः** इति व्याख्या । **पुराणेष्विति** । 'गृहाश्रमः किन्नु करोत्यवद्यम्' इत्यादिना भागवतादिष्वित्यर्थः। **उक्तेति**। ब्रह्मचारीत्यादिवाक्येत्यर्थः ॥ ४ ॥

*भा०र०*— 'बहुव्रीहित्रय' इत्यत्र 'ज्ञानं यज्ञो येषां ते ज्ञानयज्ञाः', विद्याऽभयविषयं दानं येषां ते विद्याऽभयदानाः', 'ब्रह्मचर्याद्येव तपो येषां ते ब्रह्मचर्यादितपसः' इति बहुव्रीहित्रयगर्भ इत्यर्थः । विद्याऽभययोर्दानत्वासम्भवात् कथं तत्र बहुव्रीहिः ? इत्यतोऽभिप्रेतं विग्रहं दर्शयति **विद्याऽभय-विषयमिति** । 'विद्याऽभययोर्दानं येषां ते तथोक्ताः' इति व्यधिकरणो बहुव्रीहिः । षष्ठी च 'कर्मणि' इति विषयत्वं तदर्थ इति भावः । विद्याऽभयदं विद्याऽभयविषयकत्वलक्षकमिति भावेन एवंविग्रहः प्रादर्शीति **केचित्** । **कर्मधारयः** 'ज्ञानयज्ञाश्च ते विद्याऽभयदानाश्च ते ब्रह्मचर्यादितपसश्च' इति कर्मधारयः । 'ते' इति युष्मदो रूपमिति प्रतीतिं 'ब्रह्मचर्यादयः' इति प्रतीतिं वा व्युदस्यन् उत्तमा-श्रमपदेन परमहंसानां सूचितत्वादाह **ते परमहंसा इति** ।

**पुराणेषु** भागवतादिषु स्फुटोऽयमर्थः पञ्चमस्कन्धे । **उक्तवाक्यं** 'ब्रह्मचारी गृहस्थो वा' इति वाक्यम् । **स्मृतेः** 'ब्रह्मचारी' इति स्मृतेः । **बाधः स्यात्** बाधः किं न स्यात् । **एवमयोजने** 'अधिकारिभेदेन उभयविधवाक्यप्रवृत्तिः' इत्ययोजने । **प्रसज्यत इति** । अप्रामाण्यप्रसञ्जनं च अनिष्टम् । 'को हि मीमांसको ब्रूयाद् विरोधे शास्त्रयोर्मिथः । एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति' इति वचनादिति भावः । *शङ्करस्तु* 'कर्मिण एवाधिकृतान् अपेक्ष्य एते विकल्पाः, न तु ज्ञाननिष्ठान् संन्यासिनोऽपेक्ष्येति । तस्मात् ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिता इति तस्मात् कर्मण्यधिकृतान् अज्ञान् प्रत्येव संन्यासत्यागविकल्पः । ये तु परमार्थदर्शिनः संन्यासिनो न ते विकल्पार्हाः' इति चाभाषत । तत्सङ्ग्रहेणानुवदति **यत्केनचिदुक्तं अज्ञानिति** ॥ '' 'परमहंसाख्ययतीन्' इति वाच्ये यत् परिव्राजकग्रहणं तत् 'परित्यज्य सर्वं व्रजति' इति तदर्थपर्यालोचनया सर्वकर्माभावं प्रत्याययितुं इति निरस्तम्'' इति सम्बन्धः ॥ ४ ॥

गीता

# यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
# यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

***वि०वि०*—** अतस्तदन्यत्यागो नास्त्येव तव को निश्चयो जात इत्यपेक्षायामाह **यज्ञेति** । तत्तस्माद्यज्ञादिकर्म न त्याज्यम्; किन्तु, कार्यमेव । स्वरूपत्यागस्य त्यागशब्दार्थत्वाभावात् । किञ्च, मनीषिणां विदुषां यज्ञादीनि पावनानि नत्वविदुषामिव बन्धकानि । अतो वर्णाश्रमिभिः सर्वैरपि स्वोचितं यज्ञादिकं कार्यमेवेत्यर्थः । उक्तं च— "वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः । वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्गृहिणोऽखिलः ॥ शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः । विद्या-भयादिदानं च सर्वेषामपि सम्मतम् ॥ गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् । सर्वैः कार्यं तपोघोरमिति सर्वेऽत्र कर्मिणः ॥" इति । शूद्राणामपि विष्णुनाम स्वाध्यायः । सत्योपवासादि च सर्वेषां तपश्चास्ति ॥ ५ ॥

***सा०सं०*—** 'निश्चयं शृणु' इति प्रतिज्ञातमाह **यज्ञेति** । द्वन्द्वैकवद्भावः । कुतः कार्यमित्यत आह **यज्ञ इति । पावनानि** पावित्र्यकरणानि । अबन्धकानीति यावत् । यद्वा **मनीषिणां** ज्ञानि-नाम् । मुक्तावानन्दातिशयकराणि । अतः सर्वैरपि वर्णाश्रमोचितकर्माणि कार्याण्येवेति । यतीनामपि ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपांसि च सन्त्येव । स्त्रीशूद्रादीनामपि विष्णुनामाध्ययनरूपो यज्ञः, सत्यवचनम्, उपवासादितपश्चास्त्येवेति भावः ॥ ५ ॥

***अ०प्र०*—** यस्मादयं कर्मत्यागः दुर्बोधः, तस्मात् **यज्ञेति** ।

तच्च त्रैविध्यं 'नियतस्य तु संन्यास' इत्यादिना वक्ष्यति । प्रथमं त्वेतावान् निश्चयमाह **यज्ञेति** द्वाभ्याम् ।

तत् = तस्मात्[१], यज्ञदानतपःकर्म[२], न त्याज्यं[३], किन्तु कार्यमेव[४], मनीषिणां[५], यज्ञः[६], दानं[७], तपश्चैव[८], पावनानि भवन्ति[९] इत्यन्वयः ।

तत् = तस्मात्[१], यज्ञदानतप आदिकं कर्म न त्याज्यम् । यज्ञादिकर्माणि न त्याज्यानि[३], किन्तु कार्यमेव स्वरूपत्यागस्य त्यागशब्दार्थत्वाभावात् । तानि कर्माणि अतिशयेन कर्तव्यान्येव[४], तानि कर्माणि कस्मात्कर्तव्यानीत्युक्ते मनीषिणां = मोक्षमनीषा येषां ते मनीषिणः तेषाम् । यद्वा, मननशीलानां मुमुक्षूणां[५], यज्ञो दानं तपश्चैव = यज्ञदानतपांस्यैव[८], पावनानि भवन्ति = चित्तशुद्धि-

कराणि भवन्तीति श्लोकार्थः । अविदुषामेव फलकाङ्क्षया बन्धकानि । अन्येषां ज्ञानिनां फलकाङ्क्षाभावात् बन्धकानि न भवन्तीति भावः ॥ ५ ॥

**गीता**

# एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
# कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

***वि०वि०—*** ननु केवलकाम्यानां फलानपेक्षया करणे फलान्तराभावात्प्रयास एव स्यादित्यत आह **एतान्यपीति** । तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । 'यज्ञेन दानेन तपसा नाशकेन' इति श्रुतेः । कर्तृत्वं सङ्गं परित्यज्य निष्कामतयाऽनुष्ठितानां कर्मणां ज्ञानार्थत्वाज्ज्ञानिभिरनुष्ठितानामानन्दातिशयार्थत्वान्न प्रयास इति भावः ॥ ६ ॥

***वा०ल०—*** त्रिविधे त्यागे तव कोऽभिमतः ? इत्यतः वक्ष्यमाणः सासात्त्विक एव ममाभिमत इत्याह **एतान्यपि इति** । सङ्गं फलेष्वासक्तिम् । फलानि स्वर्गादिफलानि च । 'यस्त्विन्द्रियाणि संयम्य सदाऽऽस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥' इति स्मृतेः । लोकरञ्जनार्थं फलं त्यक्त्वा मनसि तदेव स्मरन्नपि न भवेदिति भावः ॥ ६ ॥

***सा०सं०—*** यज्ञादि न त्याज्यं कार्यमेव तदित्युक्तमयुक्तम् । "त्याज्यं कर्म" इत्युक्तमनीषिमतविरोधादित्यतः सङ्गादित्यागरूपविशेषणत्याग एव तेषामभिमतः, न स्वरूपत्याग इति भावेन यज्ञादेः करणप्रकारमाह **एतानीति** । प्रागुक्तयज्ञादिरूप**कर्माणि** । ममताभिमानरूपस्नेहाख्य**सङ्गं त्यक्त्वा** । स्वर्गादि**फलानि च त्यक्त्वा कर्तव्यानि इति निश्चितं मे उत्तमं मतम्** ॥ ६ ॥

***अ०प्र०—*** ननु केवलं अकाम्यानां फलानपेक्षया करणे फलान्तराभावात् वैयर्थ्यं स्यादित्यतो येन प्रकारेण कृतानि पावनानि स्युः तं प्रकारमाह **एतानीति** ।

अथान्वयः— हे पार्थ ![१], अपि तु[२], एतानि[३], कर्माणि[४], सङ्गं[५], फलानि च[६], त्यक्त्वा[७], कर्तव्यानीति[८], निश्चितं[९], मे[१०] मतं[११], अत एव उत्तममित्यन्वयः ।

हे पार्थ ![१], अपि तु 'कर्माणि बन्धकानि' इति लोके व्याख्यातान्यपि तथापि वक्ष्यमाणविधिना कृतानि चेत् मुमुक्षूणां मोक्षाय हेतवो भवन्ति इति तुकारस्यार्थः[२], एतानि = यानि महायागप्रमुखानि मया भावनानीत्युक्तानि तान्येव[३], कर्माणि[४], सङ्गं = अहङ्कारं स्वात्मनः कर्तृत्वा-

भिनिवेशं त्यक्त्वा[१], फलानि च कर्तृकर्मणां फलापेक्षां चेत्युक्ते श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थ-मिति ईश्वरानुसन्धानमेव फलत्यागः । अनेन विधिना फलानि च त्यक्त्वा फलापेक्षां सन्त्यज्य[७], कर्तव्यानीति[८], निश्चितं[९], मे मम[१०] मतं संमतं[११], अत एवोत्तमम्[१२] ॥

अत एवोक्तं तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति 'यज्ञेन दानेन तपसा नाशक्केने'ति श्रुतेः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति' श्रुतेः । जिज्ञासुभिः अनु-ष्ठितानां निष्कामकर्मणां ज्ञानार्थत्वात् न वैय्यर्थ्यमिति भावः । ननु 'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा । यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेदि'ति ॥

श्रुत्युक्तपरमहंसाश्रमस्य यज्ञादिराहित्यान्नीचत्वं प्रसज्यते । शूद्रादीनां च यज्ञाभावान्मोक्षो न स्यादिति चेन्न द्रव्ययज्ञास्तपोयज्ञा इत्यादिनोक्तानां यज्ञादिभेदानां तेषामपि सत्त्वात् । तदुक्तम्— "वाचिको मानसो यज्ञो न्यासीनां तु विशेषतः । वनस्थस्याक्रतुर्यज्ञः क्रत्वादि गृहिणोऽखिलाः ॥ शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः । विद्याभयादिदानं च सर्वेषामपि सम्मतम् ॥ गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् । सर्वैः कार्यं तपो घोरमिति सर्वेऽत्र कर्मिणः ॥" इति शूद्र-स्त्रियाणामपि विष्णुनामस्मृतिरूपस्वाध्याययज्ञः सन्योपवासादिरूपस्तपः द्रव्यादिदानं चास्ति । अत एव स्वरूपतः कर्मत्यागो न युक्त इति प्रतिपादयिष्यन् उक्तं भवति ॥ ६ ॥

**गीतातात्पर्यनिर्णयः**

**द्रव्ययज्ञादीनां मध्ये स्वोचितो यज्ञो विद्यादानादिषु स्वोचितं दानं स्वोचितं तपश्च सर्वैर्वर्णाश्रमिभिरन्यैश्च कार्यमेवेत्यर्थः । विष्णुनामस्वाध्यायः अन्त्यानां सत्योपवासादितपश्च ॥ ५-६ ॥**

***प्रका०***— "यज्ञदानतपः कर्म न त्याज्यमि"त्युक्तम् । तत्र कस्य को यज्ञः कस्य किं दानं कस्य किं तप इत्यपेक्षायामाह **स्वोचित इत्यादिना** । **अन्त्यानामिति** । अन्त्यजानां वर्णा-श्रमिभ्योऽन्येषामित्यर्थः ।

***न्या०दी०***— निश्चयं शृण्विति प्रतिज्ञातमुच्यते 'यज्ञ' इति ॥ तत्र ज्योतिष्टोमादियज्ञेषु हिरण्यादिदानेषु यतीनां शूद्रादीनां चाधिकाराभावात् ऊर्ध्वरितस्त्वादितपस्सु गृहस्थादीनाम् अधिकाराभावात् कथं सर्वेषां यज्ञादि विधीयत इत्यत आह **द्रव्येति** ॥ नात्र सर्वेषां ज्योतिष्टोमादियज्ञः, हिरण्यादिदानानि, ऊर्ध्वरितस्त्वादितपांस्येव विधीयन्ते, किन्तु द्रव्य-

यज्ञादियज्ञाः, विद्यादिदानानि, सत्यवचनादितपांसि । **तेषां च यत्यादीनामप्युचितत्वात् युक्तं सर्वेषां तद्विधिरिति भावः । "नाग्निर्न यज्ञः" इत्यादेः त्रिवर्णबाह्यानां न क्वापि यज्ञेऽधिकार** इत्यत आह **विष्ण्विति** ॥ **द्रव्यादियज्ञाभावेऽपि तेषां स्वाध्याययज्ञेऽधिकारोऽस्त्येव । न च वेदानधिकारेण तदभावः । विष्णुनामस्वाध्याययज्ञेऽधिकारसम्भवादिति भावः । तेषां किं तप इत्यत आह सत्येति** ॥

*भा०दी०*— **नाग्निर्न यज्ञ इत्यादेरिति** । अपशूद्राधिकरणभाष्योक्तवचनादित्यर्थः ॥

**गीता**

## नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
## मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

*वि०वि०*— कर्मस्वरूपत्यागो न युक्त इति प्रतिपादयंस्तामसादिभेदेन त्यागत्रैविद्ध्यं दर्शयति **नियतस्येत्यादिना** । नियतस्य वर्णाश्रमविहितस्य कर्मणः संन्यासस्त्यागो न युज्यते । 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्' इति प्रत्यवायस्मरणात् । तदनादरेण क्रियमाणस्तस्य कर्मणः परित्यागः सङ्गफलत्यागं विना स्वरूपत्यागः कार्य इति मिथ्याज्ञानाख्यान्मोहाच्चेत्तदा तामसः परिकीर्तितः ॥ ७ ॥

*वा०ल०*— इदानीं तत्त्रैविध्यमेव विवेचयन् ब्रह्मसूत्रन्यायेन अतिहेयं तामसम्, हेयमात्रं राजसं च प्रागुक्त्वा स्वसिद्धान्तभूतं सात्त्विकं पश्चादाह **'नियतस्य तु'** इति । अत एव प्रौढाः मलापहारिस्नानं प्राक् कृत्वा पश्चाच्छुद्धस्नानं कुर्वन्ति । नियतस्य श्रुतिविहितस्य ज्योतिष्टोमादेः संन्यासः स्वरूपेणैव त्यागः । यद्वा, संन्यासिनां निष्क्रियत्वभ्रान्त्या ज्ञानित्वभ्रमेण वा यत् केचित् संन्यासिनो नियतगायत्रीमेव त्यजन्ति स एव नियतसंन्यासः ॥ ७ ॥

*सा०सं०*— स्वरूपत्यागो नेत्येतदुपपादयन् 'त्यागो हि त्रिविधः' इत्युक्तं प्रपञ्चयति **नियतस्य त्विति** । वर्णाश्रमोचितस्य तु **कर्मणः संन्यासः** त्यागः । **नोपपद्यते** युक्तो न भवति। 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्' इति पाद्मे प्रत्यवायस्मरणात् । स्वरूपत्याग एव त्यागशब्दार्थो न सङ्गफलयोस्त्याग इति मिथ्याज्ञानाख्य**मोहात्** । **तस्य** यज्ञादिकर्मणः । **परित्यागः तामसः परिकीर्तितः** ॥ ७ ॥

*अ०प्र०*— अथ तामसादिभेदेन कर्मपरित्यागस्य त्रैविध्यमाह **नियतस्येति** त्रिभिः ।

अन्वयः— हे पार्थ !, नियतस्य[१], कर्मणः[२], संन्यासः[३], नोपपद्यते[४], शेषं स्पष्टान्वयः ।

हे पार्थ !, तुकारेण गमयति काम्यस्य कर्मणः बन्धकत्वात् संन्यासो युक्तः । नियतस्य = नित्यस्य स्ववर्णाश्रमविहितस्य[१], कर्मणः = सत्त्वशुद्धि-द्वारा मोक्षहेतुत्वात् कर्मणः[२], संन्यासः = त्यागः[३], नोपपद्यते = युक्तो न भवति इत्यनेन नियतं कर्म कर्तव्यमित्यभिप्रायः । तदुक्तम्— 'यो यज्ञादीन् परित्यज्य निरयं यात्यसंशयः ।' इति प्रत्यवायात्[४], अतस्तस्य परित्यागः = उपादेयेऽपि राज्यत्याज्यमित्येवंलक्षणात् मोहात् भवेत् कर्मद्वेषात् श्रमाद्वा भवेत् । यद्वा, तस्य कर्मणः हिंसाद्युक्तत्वात् नरकादिसाधनमित्यादि मिथ्याज्ञानात् भवेत्[५], स च मोहस्य तामसत्वात् सः मिथ्याज्ञानेन त्यागः[६], तामसः = तमोगुणसम्बन्ध इति[७], परिकीर्तितः कथितः[८], इति श्लोकार्थः ॥ ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**सङ्गफलत्यागमृते स्वरूपत्यागः कार्य इति मिथ्याज्ञानाख्यमोहात् ।**

**"स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम् ॥"**

**—इति पाद्मे ॥ ७ ॥**

*प्रका०*— "नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात् तस्य परित्यागः तामसः परिकीर्तितः ॥" इत्यस्यार्थमाह **सङ्गेत्यादिना** ।

***न्या०दी०*— "त्यागो हि" इत्युक्तं प्रपञ्च्यते नियतस्य इति ॥ तत्र कर्मत्यागस्य स्वयमेव स्तूयमानत्वात् कथं मोहनिमित्तत्वमुच्यत इत्यत आह सङ्गेति ॥ स्वरूप-त्यागस्यापि मोहनिमित्तत्वं कुतः ? येनायमर्थः स्यादित्यत आह स्वेति ॥**

*भा०दी०*— भावानभिज्ञः शङ्कते **कर्मत्यागस्येति** ॥

**गीता**

## दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् ।
## स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥ ८ ॥

*वि०वि०*— मोहं विना दृष्टदुःखमित्येव देहप्रयासभयाच्च कर्म त्यजेदिति यत् स त्यागो राजसः । तं राजसं त्यागं कृत्वा कर्ता नैव त्यागफलं मोक्षं लभेत् । 'दुःखं तु मानसं ज्ञेयमायासो

बाह्य उच्यते । विशेषस्य विवक्षायामन्यथा सर्वमेव तु ॥' इति वचनाद्दुःखात्पृथक्कायक्लेशो-ऽवगन्तव्यः ॥ ८ ॥

***सा०सं०***— दुःखं प्रतिकूलवेदनीयरूपदुःखकारणम् । **इत्येव कायक्लेशभयात् च कर्म त्यजेदिति यत् स** राजसत्यागः । तं राजस**त्यागं कृत्वा** । **त्यागफलं** भगवत्प्रीतिरूपम् । **नैव लभेत्** ॥ ८ ॥

***अ०प्र०***— राजसत्यागमाह दु**ःखमिति** ।

यः कायक्लेशभयात्[१], यत्कर्म[२], दुःखमित्येव[३], त्यजेत्[४], सः[५], राजसं[६], त्यागं[७], कृत्वा[८], त्यागफलं[९], नैव[१०] लभेत् इत्यन्वयः ।

यः कायक्लेशभयात् = देहायासभयात्[१], यत्कर्म = प्रायशः स्वाधिकारेण स्वविहितं कर्म[२], दुःखमित्येव कर्मज्ञेनापि क्रियमाणायासात् इदानीं दुःखकरमिति हेतोः । तदुक्तम्— 'दुःखं तु मानसं ज्ञेयं आयासो बाह्य उच्यते । विशेषस्य विवक्षायामन्यथा सर्वमेव च ॥' इति वचनात् । अत्र दुःखं = मानसं[३], त्यजेत् = आरम्भे कर्म कठिणमपि विहित-कर्माचरणं करोति तत्र यदाऽयासो भवति तदा त्यजति[४], सः त्यागः = राजसदुःखस्य राजसत्वात् अतः तं[५], राजसं[६], त्यागं कृत्वा[८], राजसः = पुरुषः त्यागफलं ज्ञाननिष्ठालक्षणं मोक्षं[९], नैव लभेत् = नाप्नोत्येव ॥८॥

**गीता**

# कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।
# सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

***वि०वि०***— कार्यमित्येव नियतं कर्मसङ्गफलं त्यक्त्वा क्रियत इति यत्स त्यागः फलसङ्ग-त्यागरूपः सात्त्विको मतः ॥ ९ ॥

***सा०सं०***— **कार्यम्** अवश्यं कर्तव्यम् । अन्यथा प्रत्यवायादिति बुद्ध्या । **सङ्गं** मदीयमिति स्नेहम् । स्वर्गादि**फलं च त्यक्त्वैव** । **नियतं** वर्णाश्रमोचितं कर्म । **यत्क्रियते स त्यागः** कर्मा-नुष्ठानसहितः । सात्त्विको मतः ॥ ९ ॥

***अ०प्र०***— तामसराजसत्यागयोः कर्मस्वरूपत्यागसाम्येऽपि परत्रापि दुःखकरमिति विपरीत-ज्ञाने क्लेशपूर्वकत्वात् विशेषतः सात्त्विकत्यागमाह **कार्यमिति** ।

हे अर्जुन ![१], नियतं कर्म[२], कार्यमिति[३], सङ्गं[४], त्यक्त्वा[५], फलञ्चैव त्यक्त्वा क्रियते[६], एवं[७], यत्कर्मत्यागः[८], सः त्यागः[१०] सात्त्विकः[११], मतः[१२] इत्यन्वयः ।

हे अर्जुन ![१], नियतं कर्म = स्ववर्णाश्रमोचितं कर्म । यद्वा, स्वाधिकारेण यद्विभागायागतं तन्नियतं नित्यकर्म[२], कार्यमिति = तदवश्यं कार्यमिति हेतोः[३], सङ्गं त्यक्त्वा = सङ्गं फलादौ स्नेहम् । यद्वा, कर्तृत्वाभिमानं इदमहं करोमीति स्मृतिं[४], त्यक्त्वा[५], फलं चैव त्यक्त्वा कर्मानन्तरं फलं भविष्यतीति फलरूपवासनां च त्यक्त्वा[६], क्रियते कथमित्युक्ते श्रीविष्णुप्रीत्यर्थं कर्म क्रियत इति[७], एवं यत्कर्मत्यागः[८], सः[९], त्यागः[१०] सात्त्विकः[११], मतः सात्त्विक इति मम सम्मतः ॥ ९ ॥

**गीतातात्पर्यनिर्णयः**

**मोहं विना दृष्टदुःखमित्येव । दुःखशब्देन केवलं मानसम् । कायक्लेशस्य पृथगुक्तेः ।**

**"दुःखं तु मानसं ज्ञेयमायासो बाह्य उच्यते ।**
**विशेषस्य विवक्षायामन्यथा सर्वमेव तु"**

**—इति शब्दनिर्णये ॥ ८-९ ॥**

*प्रका०*— "दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्" इत्यस्यार्थमाह **मोहं विनेत्यादिना** ।

***न्या०दी०***— ननु पुरुषार्थसाधनेऽपि कर्मणि दुःखसाधनमिति मिथ्याज्ञानेन तत्स्वरूपपरित्यागस्य राजसत्वकथनात् कथं तामसत्वमित्यत आह **मोहमिति** ॥ **मोहं विनेति** ॥ परत्रापीदं दुःखसाधनमिति मिथ्याज्ञानं विनेत्यर्थः । दुःखशब्देन शरीरायास उच्यत इत्यन्यथाप्रतीतिनिरासायाह **दुःखेति** ॥ **केवलमिति** । शरीरायासद्वारा प्राप्तं न चेत्यर्थः । शरीरायास एवार्थः किं न स्यादित्यत आह **कायेति** ॥ न केवलमन्यथा पुनरुक्तिप्रसङ्गादत्र दुःखशब्दो मानसदुःखार्थः । किन्तु तथा वचनाच्चेत्याह **दुःखमिति** ॥ अर्थविशेषविवक्षायामेवं ज्ञेयम् । तदभावे द्वयमपि शब्दद्वयेनोच्यत इति भावः ॥

**गीता**

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**

***वि०वि०—*** पुनः सात्त्विकत्यागिनं विशिनष्टि **न द्वेष्टीति** । अकुशलं दृष्टदुःखदम् । कर्म न द्वेष्टि । कुशले चले । कर्मफले नानुषज्जते । मेधावी सम्यग्विष्णुतत्ववित् छिन्नसंशयः । भगवन्माहात्म्ये कर्मकरणे वा संशयरहितः । सत्त्वसमाविष्टः सत्त्वगुणे च सम्यग्व्याप्तः त्यागी ब्रह्मणि सर्वकर्माणि त्यक्तवान् ज्ञानपूर्वकं कर्म कर्तव्यमेवेति बुद्ध्या फलानभिलाषेण क्लेशात्मकमपि विहितं कर्म कुर्वन् सात्त्विकत्यागीत्युक्तं भवति ॥ १० ॥

***वा०ल०—*** 'न द्वेष्ट्यकुशलम्' इत्यत्र, अकुशलम् अकुशलैः कृतम् ॥ १० ॥

***सा०सं०—*** सात्त्विकत्यागिनो विशेषणान्याह **न द्वेष्टीति** । **अकुशलं** तात्कालिकसुखदं न । किन्तु कायक्लेशादुःखदं कर्म न द्वेष्टि । **कुशले** पूर्वार्जितपुण्यफले । **नानुषज्जते** नेच्छति । **सत्त्वसमाविष्टः** सम्यक् सत्त्वगुणेन व्याप्तः । **मेधावी** भगवत्तत्त्वज्ञानी । **छिन्नसंशयः** परापरतत्त्वविषये भगवद्धर्मानुष्ठाने वा सन्देहहीनः । **त्यागी** भगवति सर्वकर्मसमर्पणवान् । स सात्त्विकत्यागीत्यर्थः ॥ १० ॥

***अ०प्र०—*** पुनः सात्त्विकत्यागिनो लक्षणामाह **न द्वेष्टीति** ।

हे अर्जुन !, अकुशलं[१], कर्म[२], न द्वेष्टि[३], तथा कुशले कर्मणि[४], नानुषजते[५], कुतः मेधावी[६], अत एव छिन्नसंशयः[७], सत्त्वसमाविष्टः[८], त्यागी[९], एतादृशो सात्त्विकत्यागीत्यन्वयः ॥

अकुशलं = अशोभनं दुःखावहं[१], कर्म = शिशिरे प्रातःस्नानादि कर्म । यद्वा, कर्मणः फलं प्राप्तं चेदपि[२], न द्वेष्टि = द्वेषं न कुरुते[३], तथा कुशले = च शुभफलेन च । यद्वा, सुखकरे कर्मणि = निदाघे मध्याह्नस्नानादौ पूर्वजन्मकृतपुण्ये फले भागे इदं सम्यगिति वा[४], नानुषजते = न सम्बध्यते प्रीतिं न करोति[५], कुतः ? तत्र हेतुः मेधावी = सम्यग्विष्णुतत्त्ववित् स्थिरबुद्धिर्वा । यद्वा, दृश्यादृश्यमात्रं सर्वं तदधीनं अहमन्तर्याम्यधीनोऽहं इति सात्त्विकी मेधा । तद्वान् यद्वा, परपरिभावादि महदपि दुःखं सह्यते स्वर्गादिसुखं च त्यज्यते तत्र किं यदेतत् तात्कालिकदुःखं चेत्येवमनुसन्धानवानित्यर्थः[६], अत एव छिन्नसंशयः = छिन्नः संशयो येन तथा भगवन्माहात्म्ये कर्मकरणे वा संशयशून्यः[७], तस्मात्सत्त्वसमाविष्टः = सत्त्वगुणेन सम्यग्व्याप्तः । यद्वा, ज्ञानेन युक्त इत्यर्थः[८], त्यागी = सात्त्विकत्यागी ब्रह्मणि सर्वकर्माणि त्यक्तवान्[९], अनेन विष्णुस्वातन्त्र्यज्ञानपूर्वकं कर्तव्यमेवेति बुद्ध्या फलानपेक्षया क्लेशात्मकमिति विहितं कर्म कुर्वन् सात्त्विकत्यागीत्युक्तं भवति । तदुक्तम्— 'न द्वेष्ट्यकुशलं कर्म केवलं दृष्टदुःखदम् । जन्मान्तरकृते पुण्ये न सजेत्सात्त्विकश्चले ॥ यः सम्यक् तत्त्वविद्विष्णोस्तदर्पणधियैव तु । फलेच्छावर्जितस्तस्य कर्मबन्धाय नो भवेत् ॥ बहुलं चेदल्पदोषं यावदेवापरोक्षदृक् ।' इति वचनात् ॥ १० ॥

**गीता**

## न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
## यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

***वि०वि०***— ननु सर्वकर्मत्यागो विहितकर्मत्यागो वाऽत्र त्यागशब्दार्थः क इत्यत आह **न हीति** । देहधारिणा सर्वकर्मणां त्यक्तुमशक्यत्वात् कोऽपि कर्मत्यागी न स्यात् शक्यत्यागे च विहितत्यागात् प्रत्यवायी स्यात्, न त्यागी । अतो यस्तु कर्मफलत्यागी स एव त्यागीत्युच्यते नान्य इत्यर्थः ॥ ११ ॥

***सा०सं०***— पूर्वं 'कर्तव्यानीति मे पार्थ' इत्यत्र सङ्गफलत्याग एव त्यागशब्दार्थ इति स्वसिद्धान्तो निर्णीतः । अधुना त्याज्यं दोषवदिति पक्षस्य बीजखण्डनाय सर्वकर्मपरित्यागो वा विहितकर्मत्यागो वा न त्यागशब्दार्थः, येन 'त्याज्यं दोषवत्' इत्यस्य सर्वकर्मत्यागोऽर्थ इत्युच्यत इति भावेनाह **न हीति** । **अशेषतः कर्माणि त्युक्तं न शक्यम्** । 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' (३-५) इत्युक्तेः । नापि विहिताशेषत्यागः । 'स्वयज्ञादीन् परित्यज्य निरयं यान्ति' इति प्रत्यवायस्मरणादिति भावः । **हि** यस्मात् । **अशक्यं** तस्मात् **यस्तु कर्मफलत्यागी स** एव **त्यागीत्यभिधीयते** । अतस्त्याज्यमिति पक्षस्यापि फलत्याग एवार्थ इति भावः ॥ ११ ॥

***अ०प्र०***— देहभृता[२], अशेषतः[३], कर्माणि[४], त्यक्तुं[५], हि यस्मात्[१], न शक्यं[६], तस्मात् यस्तु[७], कर्मफलत्यागी[८], सः[९], त्यागीति[१०] अभिधीयते[११] ॥

देहभृता = देहं बिभर्तीति देहभृत् । तेन देहात्माभिमानवता पुरुषेण[२], अशेषतः = निःशेषेण[३], कर्माणि = सर्वाणि कर्माणि[४], हि यस्मात्[१], त्यक्तुं[५], न शक्यं[६], तदुक्तम्—— 'न हि कश्चित्क्षण-मपि जातु तिष्ठत्यकर्मकृत् ॥' इत्यादिना ।

किञ्च, विहितकर्मत्वेनाचरति तत्परित्यक्तुं शक्यम् । तथापि कर्मणोद्भवो देहः कथं तेन विना तिष्ठति ? तत्रेन्द्रियाणां श्रवणादिव्यवहारः मनोबुद्धिचित्ताहङ्काराणां कल्पनादिवृत्तयश्च स्वभावतो भवन्ति । तत्र किं त्यक्तमासीत् ? तस्माद्देहभृताऽशेषतः कर्माणि त्यक्तुमशक्यमित्युक्तम् । तस्मात् यस्तु कर्माणि कुर्वन्नेव[७], कर्मफलत्यागी = कर्माणि कृत्वा तेषां फलत्यागं कुरुते यः सः कर्मफल-त्यागी[८], त्यागीति = कर्मत्यागोऽस्यास्तीति कर्मत्यागीति[१०] अभिधीयते[११] ॥

फलितं श्रीराघवेन्द्रैः कथितम्— देहधारणोपायभूतचेष्टादिकर्मणां इत्युक्तमशक्यत्वाद्विहित-यज्ञादित्यागे प्रत्यवायप्राप्त्या कामफलत्यागी एव त्यागीत्युच्यते, नान्य इत्यर्थः । यद्वा, मतान्तरे कथितम्— ननु तेन कर्म कृत्वा फलमात्रत्यागः कृतः । तर्हि कर्मत्यागी कथम् ? इत्याशङ्कायां कर्मफलं श्रीविष्णौ समर्पितं चेत् तत्प्रसादेन ज्ञानमुत्पद्यते तेन भक्तिज्ञानवैराग्येन कर्मनाशो भवति। एवं यदा कर्मत्यागः तदैव त्यागः स्यात् । तस्मात् स त्यागीति मया अभिधीयते उच्यते । तुकार-स्यार्थः स्वकर्मणि श्रमं मत्वाऽन्यकर्मणा सुखी भवामीति यः पश्यति स तु कर्मत्यागी न भवति। तस्यान्यत्रापि कर्माश्रयत्वात् ॥ ११ ॥

### भाष्यम्

**अन्यस्त्यागार्थो न युक्त इत्याह न हीति ॥ ११ ॥**

*प०टी०*— 'कार्यमित्येव' इति कथितः कथं त्यागः ? सर्वकर्मत्यागस्यैव मुख्यतः त्याग-त्वादित्याशङ्क्य, श्लोकमवतारयति **अन्य इति** ॥ ११ ॥

*प्र०दी०*— ननु 'इति मे पार्थ' इति भगवता स्वसिद्धान्तो निष्टङ्कितः । अतो 'न हि देह-भृता' इति किमुच्यते ? इत्यत आह **अन्य इति** । सर्वकर्मफलत्यागलक्षणः । **त्यागार्थः** त्याग-शब्दार्थः । 'पूर्वपक्षबीजनिरासार्थम्' इति शेषः ॥ ११ ॥

*भा०दी०*— **निष्टङ्कितः** निष्कृष्टः । पूर्वपक्षबीजेति । 'त्याज्यं दोषवत्' इत्यत्र सर्वकर्म त्याज्यमिति यः पूर्वपक्षः तस्य यद्बीजं आपातप्रतीतिरूपं वा, 'एके अपरे' इति विप्रतिपत्त्युक्तिरूपं वा तन्निरासार्थमित्यर्थः ॥ ११ ॥

*भा०र०*— **इति मे पार्थेति** । 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्या-नीति मे पार्थ निश्चितं मतमुत्तमम्' इति । **निष्टङ्कितः** 'न त्याज्यम्, कार्यमेव' इति इतरप्रतिक्षेपपूर्वकं निष्कृष्योक्त इत्यर्थः । त्यागार्थः = त्यागप्रयोजनक इत्यादिप्रतीतिनिरासायाह **त्यागशब्दार्थ इति** । **पूर्वपक्षेति** । 'त्याज्यं दोषवत्' इत्यत्र 'सर्वकर्मपरित्यागः कर्तव्यः' इति पूर्वपक्षे बीजम् आपातप्रतीतिरूपम्, तन्निरासार्थम् । न हि देहभृताऽशेषकर्माणि त्यक्तुं शक्यं इति वचनमित्यर्थः ॥ ॥ ११ ॥

### गीतातात्पर्यनिर्णयः

**"न द्वेष्ट्यकुशलं कर्म केवलं दृष्टदुःखदम् ।**
**जन्मान्तरकृते पुण्ये न सज्जेत् सात्त्विकश्चले ॥**

**यः सम्यक् तत्त्वविद् विष्णोस्तदर्पणधियैव तु ।**
**फलेच्छावर्जितस्तस्य कर्म बन्धाय नो भवेत् ।**
**बहुलं चेदल्पदोषं यावदेवापरोक्षदृक् ॥" इति च ॥ १०-११ ॥**

*प्रका०*— कायदुःखस्य कायक्लेशशब्देनात्र पृथगुक्तत्वात् परिशेषात् दुःखमित्यनेन दुःखविशेषभूतं मानसमुच्यते । न द्वेष्टीत्यादेरर्थमाह **न द्वेष्टीत्यादिना** ।

***न्या०दी०***— **सात्त्विकत्यागी पुनर्निरूप्यते "न द्वेष्टि" इति । तत्र कथं सात्त्विकत्यागिनोऽकुशलकर्मा द्वेषः कुशलकर्मासङ्गश्चोच्यते । "कार्यमित्येव" इत्युक्तिविरोधादित्यतः प्रमाणान्तरेण तद्व्याचष्टे न द्वेष्टीति ॥ पुण्य इति । तत्फल इति यावत् । तमेव स्तौति य इति ॥ सम्यगित्यनेन मेधावीत्याद्युक्तार्थं भवति । तदर्पणेनेत्यनेन त्यागीत्युक्तार्थं स्यात् । तस्येत्यनेन अनिष्टमित्यस्य तात्पर्यमुक्तं भवति । किं तस्य सर्वथा** बन्धकं **कर्म न बन्धाय भवतीत्यत आह बहुलं चेदिति** ॥ बहुलं चेत् **सर्वत्यागिनामप्यत्यल्पदोषकरं कियत्पर्यन्तमित्यत आह यावदिति** ॥

*भा०दी०*— **कार्यमित्येवेत्युक्तिविरोधादिति** । तत्र कुशले कर्मण्यनुषङ्गस्योक्तत्वादकुशले फले द्वेषस्य च प्रतीतेरिति भावः ॥ **किं तस्य सर्वथेति** । बन्धकं कर्म तस्य सर्वथा सर्वात्मना न बन्धाय भवति किमित्यर्थः । **सर्वत्यागिनां** सर्वकर्मफलत्यागिनामित्यर्थः ॥

**गीता**

## अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
## भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

*वि०वि०*— फलसङ्गत्यागरूपं कर्मत्यागं स्तौति **अनिष्टमिति** । अनिष्टं नरकादि । अन्येषामिष्टं स्वर्गादि । न तु त्यागिनामिष्टं त्यागित्वादेव । ज्ञानादेर्मोक्षभोग्याच्च नान्यत्स्यात्कर्मणः फलम् । त्यागिनस्तत्त्वसंवेत्तुरन्येषां तदृते फलमिति वचनात् । मिश्रं मानुषादि । इति त्रिविधं कर्मणां पुण्यापुण्यात्मकस्य फलं प्रेत्य देहान्निर्गत्य स्थितानामत्यागिनां भवति । न तु क्वचिदपि संन्यासिनां त्रिविधं फलं भवति। यद्यप्यत्रात्यागिप्रतियोगित्वेन त्यागिनामिति वक्तव्यम्। न च त्यागिन एव संन्यासिनः। 'परेच्छयाऽपि ये काम्यं कर्म कुर्युर्न तु क्वचित् । न्यासिनो नाम तेऽन्येभ्यः फलत्यागिभ्य उत्तमाः ॥' इति वचनाद्भेदावगतेः । तथापि कर्मफलेच्छाभावसाम्यात्त्यागिन एव संन्यासिशब्देन गृह्यन्ते ॥१२॥

*वा०ल०*— 'अनिष्टमिष्टम्' इत्यत्र, अनिष्टं पापकर्मणः फलं नरकादि । इष्टं पुण्यकर्मणः फलं स्वर्गादि । मिश्रं भूलोकस्थैरनुभूयमानं सुखदुःखात्मकम् ॥ १२ ॥

*सा०सं०*— अत्यागिनिन्दापूर्वं त्यागिनं स्तौति अनिष्टमिति । **अनिष्टं** नरकादि । **इष्टं** काम्यकर्मिणामिच्छाविषयीभूतं स्वर्गादि । **मिश्रम्** इष्टानिष्टमेलनरूपं मानुषादि । **कर्मणस्त्रिविधं फलम्** । **अत्यागिनां** कर्मफलमत्यजताम् । **प्रेत्य** मृत्वा देहान्निर्गत्य स्थितानां भवति । **संन्यासिनां तु** अनियतकाम्यानां फलत्यागिनां नियतानां स्वरूपत्यागिनाम् । **क्वचिदपि** इह वा परत्र वा। **नास्ति** । इष्टानिष्टादिरूपं कर्मणः फलमित्यनुषङ्गः । अत्र त्यागिनामिति वक्तव्ये संन्यासिनामित्युक्तिः त्यागिनो हि परार्थं कारीर्यादिनियतकाम्यं कुर्वन्ति । संन्यासिनस्तु तदपि नेत्येतावन्तं त्यागिभ्यो विशेषं सूचयितुम् । फलेच्छाभावेन तेषु त्यागित्वस्यापि सत्त्वात् । 'न तु' इति तुशब्देन त्यागिनां ज्ञानभक्त्यादिद्वारा अपरोक्षतो मुक्तावानन्दातिशयफलं भवतीति सूच्यते । उपपादितमेतत् 'त्यागाच्छान्तिरनन्तरम्' इत्यत्र द्वादशोऽध्याये भाष्यादौ ॥ १२ ॥

*अ०प्र०*— एवम्भूतस्य कर्मफलत्यागस्य फलमाह **अनिष्टमिति** ।

अनिष्टं[१], इष्टं[२], मिश्रं चेति[३], कर्मणः[४], फलं[५], त्रिविधं[६], अत्यागिनां[७], प्रेत्य[८], भवति[९], संन्यासिनां[१०], क्वचिदपि[११], न भवतीत्यर्थः ॥

अनिष्टं = नारकित्वं नरकदुःखादि[१], यद्वा, अविधिप्रवर्तनेन निषिद्धकर्माणि कृत्वा कृमिकीटादियोनिषु गच्छन्ति तत् अनिष्टकर्मफलं[१], इष्टं = देवत्वं स्वर्गसुखादि । यद्वा, स्वाधिकारानुरूपेण वेदोक्तसत्काराचरणेन इन्द्रादि देवत्वं प्राप्यन्ते । तदिष्टं कर्मफलं[२], मिश्रं चेति = सुखदुःखयुक्तं मनुष्यत्वं शुभाशुभयोः समभागेन कर्मानुष्ठानेन मनुष्यत्वं प्राप्यते तत् मिश्रकर्मफलं[३], एवं पापस्य पुण्यस्य च उभयमिश्रस्य च मनुष्यादिपुण्यपापात् एवं कर्मणः[४], फलं = यत्सुखादिफलं प्रसिद्धं[५], त्रिविधं = त्रिप्रकारं[६], तत्सर्वं अत्यागिनां सकामानामेव[७], प्रेत्य = देहान्ते परत्र लोके जन्मान्तरे वा[८], तेषां त्रिविधसम्भवात् भोगाय[८], भवति[९], संन्यासिनां = तु फलत्यागिनां तु ज्ञानोत्पत्तेः क्वचिदपि न भवति = फलं न स्यात्[११] ।

श्लोकार्थः— संन्यासशब्देनात्र फलत्यागसाम्यात् प्रकृताः कर्मफलत्यागिनो गृह्यन्ते । 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगीचे'त्येवमादौ च फलत्यागिषु संन्यासशब्दप्रयोगदर्शनात् तेषां त्यागिनां सात्त्विकानां पापासम्भवात् ईश्वरार्पणेन च पुण्यफलस्य उक्तत्वात् त्रिविधमपि कर्म न भवतीत्यर्थः । यद्वा, 'ज्ञानादेर्मोक्षभोग्याच्च नान्यत्स्यात्कर्मणः

फलम्।' अत्यागिनां ज्ञानमोक्षायानन्दावृत्तेः स्वर्गफलं भवतीत्यर्थः। 'त्यागिनस्तत्त्वसंवेत्तुरन्येषां तदृते फलमिति वचनात् । यद्यप्यत्रात्यागी प्रतियोगित्वेन त्यागिनामिति वक्तव्यम्, न तु संन्यासीनामिति त्यागिसंन्यासिनोर्भेदात् । तत्र प्रमाणम्— 'परेच्छयाऽपि ये काम्यं कर्म कुर्युर्न तु क्वचित् । न्यासिनो नाम तेऽन्येभ्यः फलत्यागिभ्य उत्तमा' इति वचनात् तथा विकर्मफलेच्छाभावसाम्यात्यागिन एवात्र संन्यासिशब्देन गृह्यन्ते । केवलकाम्यकर्मणां फलानपेक्षया परार्थमप्यकुर्वाणाः संन्यासिनः फलमात्रत्यागिनः त्यागिन इति विशेषः ॥ १२ ॥

**भाष्यम्**

**त्यागं स्तौति अनिष्टमिति ॥ १२ ॥**

***प०टी०***— नन्वयं त्यागः सात्त्विकः कुतः ? इत्यत उत्तरश्लोकमवतारयति **त्यागमिति** ॥ ॥ १२ ॥

***प्र०दी०***— कर्मफलाभावो नाम संसारनिवृत्तिरेव । सा कथं त्यागफलत्वेनोच्यते ? इत्यत आह **त्यागमिति** । उपपादितमेतत् 'त्यागाच्छान्तिः' इत्यत्र ॥ १२ ॥

***भा०दी०***— **संसारनिवृत्तिरेवेति** । संसारस्य कर्मफलरूपत्वादिति भावः । **कर्मफलाभावमिति** । 'अनिष्टमिष्टम्' इति श्लोके इष्टानिष्टमिश्रशब्दितस्वर्गनरकमानुषभावरूपफलत्रयं त्यागिनां नास्तीति 'न तु संन्यासिनां क्वचित्' इतिपदेन कर्मफलाभाव उक्तः । स तु संन्यासात् अनिवृत्तिरेव । सा कथं संन्यासशब्दितत्यागिनां नास्तीति त्यागफलत्वेनोच्यत इत्यर्थः । त्यागाच्छान्तिरित्यत्रेति । 'श्रेयो हि ज्ञानमभ्यासाद् ज्ञानाद् ध्यानं विशिष्यते । ध्यानात् कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम्' इत्यत्र द्वादशे ध्यानमुक्तम्, त्याग एव चात्रोक्तः । अन्यथा कथं 'त्यागाच्छान्तिरनन्तरम्' इत्युच्यते ? इत्यादिना भाष्ये उपपादितं त्यागस्य मोक्षफलकत्वं ध्यानसाहित्येनेत्यर्थः ॥ ॥ १२ ॥

***भा०र०***— **कथं त्यागफलत्वेनेति** । तस्याः 'तरति शोकमात्मवित्' इत्यादिना ज्ञानफलत्वावगमादिति भावः । कथमनेन स्तुत्यवगमः ? इत्यत आह **उपपादितमिति** । **इत्यत्रेति** । 'अन्यथा कथं त्यागात् शान्तिरनन्तरम्' इत्युच्यते ? इति द्वादशाध्यायभाष्यटीकयोरित्यर्थः ॥१२॥

***गीताक्षरार्थस्तु***—

पूर्वाध्यायेषु तत्र तत्र यद् विप्रकीर्णतयोक्तं पुरुषार्थसाधनज्ञानसाधनं तद् मन्दानां बुद्ध्यारोहार्थं सङ्क्षेपेणास्मिन्नष्टादशाध्याये निरूप्यते । चतुर्दशाद्यनुक्तं त्रैगुण्यं चोच्यते । पूर्वं 'संन्यासः कर्मयोगश्च

निःश्रेयसकरावुभौ', 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इत्यादौ संन्यास उपदिष्टः । 'त्यागाच्छान्तिरनन्तरम्', 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः', 'सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' इत्यादौ त्यागश्च । तयोः स्वरूपनिर्धारणाय अर्जुनोऽपृच्छदित्युच्यते **अर्जुन उवाच– संन्यासस्येति** ।

**संन्यासस्य** च **त्यागस्य** च **पृथक्** इतरेतरविभागः **तत्त्वं** अनारोपितं रूपं **वेदितुं** ज्ञातुं **इच्छामि** । हे **महाबाहो हृषीकेश** इन्द्रियप्रेरक ! **केशिनिषूदन** हयासुरनिबर्हण ! इति श्रीकृष्णस्य सम्बुद्धिः ॥ १ ॥

अत्र परिहार उक्तो भगवतेत्युच्यते **भगवानुवाच– काम्यानामिति** । काम्यानि कर्माणि द्विविधानि– वैल्पिककाम्यानि नियतकाम्यानि चेति । तत्र यानि फलाभिसन्धिना कर्तुं योग्यान्येव तदनभिसन्धिनाऽपि कर्तुं योग्यान्येव, (तदभिसन्धिनाऽपि कर्तुं योग्यानि) तान्युच्यन्ते वैकल्पिक-काम्यानीति । यानि तु केवलं ऐहिकफलाभिसन्धिना क्रियन्ते पुत्रकामेष्टिकारीर्यादीनि, तान्युच्यन्ते नियतकाम्यानीति । तत्र वैकल्पिककाम्यानां अश्वमेधादीनां फलानिच्छया फलाभिसन्धिना क्रिय-माणत्वरूपविशेषणत्यागेन त्यागम्, नियतकाम्यानां कारीर्यादीनां स्वरूपाकरणेन त्यागं **संन्यासं** संन्यासशब्दार्थं **कवयः** पण्डिताः **विदुः** जानन्ति सर्वेषां काम्यकर्मणामेव फलत्यागं करणाकरणौ-दासीन्येन फलाभिसन्धित्यागं त्यागशब्दार्थं **विचक्षणाः** प्राज्ञाः कथयन्ति ॥ २ ॥

'सर्वकर्मफलत्यागम्' इति स्वोक्तत्यागस्वरूपावधारणाय आपातप्रतीतिमपेक्ष्य सन्देहबीजत्वेन विद्वन्मतविप्रतिपत्तिरुद्भाव्यते **त्याज्यं दोषवदिति** । **एके मनीषिणः** पण्डिताः **कर्म** काम्यं **त्याज्यं प्राहुः** । कुतः ? **दोषवत्** । हिंसाबन्धकत्वाख्यदोषवद् इति हेत्वर्थगर्भं विशेषणम्, दोषयुक्तत्वा-दित्यर्थः । **अपरे** तु मनीषिणः यज्ञदानतपांसि **कर्म** कर्तव्यत्वेन विहितो धर्मः, यद्वा द्वन्द्वैकवद्भावः । **कर्म** नित्यनैमित्तिकलक्षणं **तन्न** त्याज्यमिति प्राहुः । अत्र पूर्वोत्तरार्धोपन्यस्तौ पक्षौ अविरुद्धावेव, फलत्यागाभिप्रायेणैव यज्ञादेस्त्यागो विवक्षितः । पूर्वोपन्यस्तपक्षे न स्वरूपत्यागः । कुतः ? 'मनी-षिणः' इति विशेषणादेव । एवमपि कर्मत्यागशब्दः कथं फलत्यागेनार्थेन अर्थवान् इति चेत् ? 'सर्वकर्मत्यागं ततः कुरु' इति, 'यस्तु कर्मफलत्यागी' इति च भगवतैव कर्मत्यागशब्दाभिप्राया-विष्करणाद् इत्यवेहीति भाष्यटीकयोः स्फुटम् ॥ ३ ॥

पूर्वोत्तरार्धोपन्यस्तपक्षयोः अविरोधप्रकार एव भगवता प्रतिज्ञापूर्वकं व्युत्पाद्यते **निश्चयमिति** । **तत्र** विप्रतिपन्ने त्यागविषये **मे** मम सकाशाद् **निश्चयं शृणु**, श्रुत्वा च तत्र निष्ठां कुरु । 'भरतानां

साधुतम' इति सम्बुद्धिः । **त्यागो हि** त्यागशब्दार्थः **त्रिविधः** वक्ष्यमाणसात्त्विकादिभेदेन त्रिप्रकारकः **सम्प्रकीर्तितः** सम्यक् कथितः शास्त्रेषु । **केचित्** त्यागः = कर्मत्यागः त्रिविधः– फलत्यागः, 'मदीयमिदं कर्म' इति कर्मणि ममतात्यागः, भगवति कर्मकर्तृकत्वानुसन्धानात् स्वात्मनः 'अहं कर्ता' इति कर्तृत्वाभिमानत्यागः इति त्रिप्रकारक इत्यर्थ इत्याहुः ॥ ४ ॥

'निश्चयं शृणु' इति प्रतिज्ञातमुच्यते **यज्ञेत्यादि द्वाभ्याम्** । **तत्** प्रकृतं सप्तदशाध्यायोक्तरीत्या वेदवेद्यं वा यज्ञः दानं तप इत्येवं त्रिविधं **कर्म न त्याज्यम्**, किन्तु **कार्यं** कर्तव्यं **एव** । कस्मात् ? **यज्ञो दानं तपश्च** एतानि **पावनानि** विशुद्धिकराणि । 'मनीषिणामेव' इत्युक्त्या भगवत एव यज्ञादिसर्वकर्माराध्यत्व-तन्मुख्यकर्तृत्व-भोक्तृत्वादि अनुसन्दधतां फलमनभिसन्दधतां च कर्म न बाधकमेव । अमनीषिणां तु तद् बन्धकमिति विभावितं भवति ।

ननु ज्योतिष्टोमादियज्ञेषु हिरण्यादिदानेषु यतीनां शूद्रादीनां चाधिकाराभावात्, कथं सर्वेषां 'न त्याज्यम्, कार्यमेव तत्' इति यज्ञादि विधीयत इति चेद् उच्यते । नात्र सर्वेषां ज्योतिष्टोमादियज्ञाः, हिरण्यादिदानानि, ऊर्ध्वरेतस्त्वादितपांस्येव विधीयन्ते किन्तु द्रव्ययज्ञज्ञानयज्ञादियज्ञाः विद्याऽभयदानानि, सत्यवचनादितपांसि । तेषां च यत्यादीनामपि च उचितत्वाद् युक्तः सर्वेषां तद्विधिः । 'नाग्निर्न यज्ञः' इत्यादेस्त्रिवर्णबाह्यानां न क्वापि यज्ञेऽधिकार इति चेत् ? द्रव्ययज्ञाद्यभावेऽपि तेषां स्वाध्याययज्ञेऽधिकारोऽस्त्येव । न च वेदानधिकारेण तदभावः । विष्णुनामस्वाध्याययज्ञे अधिकारसम्भवात् । सत्य-उपवासादितपस्सम्भवाच्च । तस्माद् द्रव्ययज्ञादीनां मध्ये स्वोचितो यज्ञः, विद्याऽभयदानादि स्वोचितं दानम्, स्वोचितं तपश्च सर्ववर्णाश्रमिभिः अन्यैश्च कार्यमेवेति गीताचार्याशयो भाष्यटीकादावाविष्कृतः ॥ ५ ॥

यदुक्तं 'यज्ञादि कार्यमेव' इति, तत्रेत्थम्भाव उच्यते **एतानीति** । हे **पार्थ एतानि** यज्ञदानतपांसि **कर्माणि** नित्यनैमित्तिकान्यपि **सङ्गं** 'अहं कर्ता' इति कर्तृत्वाभिमानलक्षणम्, कर्मणां फलाभिसन्धिं च **त्यक्त्वा कर्तव्यानि इति मे** मम **निश्चितं मतमुत्तमम्** ॥ ६ ॥

स्वरूपतः कर्मत्यागः प्रत्यवायहेतुरिति भावेन 'त्यागो हि पुरुषव्याघ्र त्रिविधम्' इत्युक्तं प्रपञ्च्यते **नियतस्येति त्रिभिः** । **नियतस्य** स्ववर्णाश्रमविहितस्य **तु कर्मणः संन्यासः** त्यागः **नोपपद्यते** । 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्' इति प्रत्यवायश्रवणात्, कर्मत्यागस्य स्वयमेव स्तूयमानत्वात् 'स्वरूपत्याग एव कर्तव्यः, न सङ्गफलत्यागः' इति मिथ्याज्ञानाख्यात् **मोहात् तस्य** नियतस्य कर्मणः **परित्यागः** स्वरूपतस्त्यागः **तामसः परिकीर्तितः** ॥ ७ ॥

'दुःख इत्येव' इत्यत्र एवशब्देन तामसमोहः पूर्वोक्तो व्यावर्त्यते । दुःखशब्देन शरीरायासद्वारा प्राप्तदुःखान्यद् यत् मानसं धनव्ययादिनिमित्तं दुःखं तद् गृह्यते । यः पुमान् **कर्म** स्ववर्णाश्रमविहितं **दुःखं** परत्रापीदं दुःखसाधनमिति मिथ्याज्ञानं विना शरीरायासद्वारा मानसदुःखसाधनमिदमिति हेतोः कायक्लेशतया शरीरायासभयाच्च **त्यजेत् सः** पुरुष उक्त**राजसं त्यागं कृत्वाऽपि त्यागफलं** मोक्षं **नैव लभेत्** लभेत ॥ ८ ॥

**कार्यमिति** । हे **अर्जुन नियतं** वर्णाश्रमविहितं **कर्मैव कार्यम्**, न पुनस्तत्र कर्तृत्वं फलं वाऽनुसन्धेयमित्येतद् विविच्यते । **सङ्गं** कर्तृत्वाभिमानलक्षणम्, तस्य **फलं च** त्यक्त्वा **क्रियते स एव** कर्मणि सङ्गफलत्याग एव सात्त्विकत्यागो **मतः** ॥ ९ ॥

सात्त्विकत्यागी पुनर्निरूप्यते **न द्वेष्टीति** । **अकुशलं** तात्कालिकमानसदुःखप्रदं **कर्म न द्वेष्टि कुशले** जन्मान्तरकृतं पुण्यफले **नानुषज्यते** अनुषङ्गः = प्रीतिः, तद्वान् न भवति **त्यागी** कृतं कर्म भगवति त्यक्तुम् = संन्यसितुं शीलमस्येति तथोक्तः । स्वकृतकर्मणो विष्णावर्पणशील इत्यर्थः । **सत्त्वसमाविष्टः** सत्त्वगुणेन संव्याप्तः **मेधावी** मेधाशब्दाद् विनिरयं प्रशंसायाम्, सम्यक्, विष्णुतत्त्वविषयकमेधाशाली, अत एव **छिन्नसंशयः** परापरतत्त्वविषये विगतसन्देहश्च यः स सात्त्विकः । 'त्यागी' इति प्रकृतमनुसन्धीयते ॥ १० ॥

'त्याज्यं दोषवद्' इति पूर्वपक्षबीजनिरासार्थं सर्वकर्मणां स्वरूपत्यागः त्यागशब्दार्थो न युक्त इत्युच्यते **न हीति** । **देहभृता अशेषतः** निःशेषेण **कर्माणि त्यक्तुं न शक्यम्** । 'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः' इति प्रयोग इवायं प्रयोगः । 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म-कृत्' इत्यनुवादविहितजीवनयोनिप्राणादिचेष्टारूपकर्मत्यागो न शक्यः कर्तुम्, विहितत्यागोऽपि 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्' इति प्रत्यवायश्रवणाद् अयुक्त इति **हि** यस्मात् तस्माद् **यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते** इत्युक्तस्वसिद्धान्त एव युक्त इति भावः ॥ ११ ॥

अत्यागनिन्दापूर्वकं त्यागी स्तूयते **अनिष्टमिति** । **कर्मणः** पुण्यपापलक्षणस्य **फलं त्रिविधं** त्रिप्रकारकम् । कथम् ? **अनिष्टं** नरकतिर्यक्त्वादिरूपम् **इष्टं** स्वर्गादिलक्षणं **मिश्रम्** इष्टानिष्टमेलनरूपं मानुष्यादि इति । एवं त्रिविधं कर्मफलं **अत्यागिनां** अत्यक्तुंशीलानां सङ्गफलत्यागमकुर्वतां **पुंसां प्रेत्य** देहादेर्गत्या स्थितानां भवति । **संन्यासिनां** तु त्यागिनामिति यावत् । **क्वचिद्** अपि **न** एतत् त्रिविधं फलं **भवति** । अत्र अत्यागीप्रतियोगित्वेन 'त्यागिनाम्' इति वक्तव्येऽपि यत् 'संन्यासिनाम्' इत्युक्तं तत्तात्पर्यम् उत्तरप्रस्थानतोऽवसेयम् । अत्र स्तुत्यवगमप्रकारस्तु 'त्यागाच्छान्तिरनन्तरम्'

इत्येतद्गीताव्याख्याऽवसरे 'अन्यथा कथं त्यागाच्छान्तिरनन्तरमित्युच्यते' इति भाष्ये, तट्टीकायां चोपपादितः ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**अन्येषामिष्टम् । अस्य तु त्यागित्वादेव नेष्टम् ।**

**"ज्ञानादेर्मोक्षभोग्याच्च नान्यत् स्यात् कर्मणः फलम् ।"**

**"त्यागिनस्तत्त्वसंवेत्तुरन्येषां तद्दते फलम् ।" इति च ।**

*प्रका०*— "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" इत्येतदनुसारेण "अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलमि"त्यत्रेष्टशब्दं व्याख्याय "भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्" इत्यस्यार्थमाह **अन्येषामित्यादिना** ।

***न्या०दी०***— "अनिष्टमिष्टं मिश्रं च" इत्यत्र बन्धकं कर्मफलं त्यागिन इष्टमित्यन्यथाप्रतीतिनिरासायाह **अन्येषामिति** ॥ त्यागिन एव इष्टं किं न स्यादित्यत आह **अस्येति** ॥ न त्यागिनो बन्धकं कर्मफलमिष्टम् । त्यागित्वादेव । "यस्तु कर्मफलत्यागी" इति कर्मफलेच्छात्यागिन एव त्यागित्वेनोक्तत्वादिति भावः । भवेदेवं यदि "अनिष्टमिष्टं मिश्रं च" इत्यत्र बन्धककर्मफलं विवक्षितं स्यात् । न चैवमबन्धककर्मफलस्यापि ग्रहणे बाधकाभावादित्यतस्त्यागिनो बन्धककर्मफलस्यैवाभावेऽत्यागिनो बन्धककर्मफलाभावे प्रमाणमाह **ज्ञानादेरिति** ॥ त्यागिमात्रस्य ज्ञानभक्त्यादेः । तस्यैवापरोक्षतस्तत्त्वसंवेत्तुः मोक्षभोग्यानन्दातिशयात् । **तद्दते** ज्ञानादिकमृते । अनेन "भवत्यत्यागिनाम्" इत्युक्तार्थं भवति ।

*भा०दी०*— त्यागित्वादेवेति । कर्मफलस्येत्यनुषङ्गः ॥

**गीतातात्पर्यनिर्णयः**

**केवलकाम्यकर्मणां परानपेक्षयाऽप्यकरणमित्येतावांस्त्यागात् संन्यासस्य विशेष इति अत्यागिनां प्रतियोगित्वेन न्यासिन उक्ताः । त्यागित्वं तेषामपि ह्यस्ति ।**

"परेच्छयाऽपि ये काम्यं कर्म कुर्युर्न तु क्वचित् ।
न्यासिनो नाम तेऽन्येभ्यः फलत्यागिभ्य उत्तमाः ॥" —इति च ॥१२॥

*न्या०दी०*— भवत्यत्यागिनां प्रेत्य न तु त्यागिनामित्यत्यागिनां प्रतियोगित्वेन त्यागिन एव वक्तव्याः । संन्यासिनस्तु किमित्युच्यन्त इत्यत आह **केवलेति** ॥ अत्यागि-प्रतियोगितया संन्यासिकथनं नानुपपन्नम् । स्वार्थे फलेच्छाभावेऽपि परोपकारार्थं कारीर्यादिकेवलकाम्यकर्मकरणमस्ति त्यागिनाम् । तदपि न्यासिनां नास्तीत्येतावन्मात्रविशेषवत्त्वात् त्यागिभ्यो विशेषो न्यासिनामित्यर्थः । एतावानेव चेद्विशेषः तत् किं तयोः साम्यम् ? येन त्यागिषु वक्तव्येषु न्यासिनामुक्तिरित्यत आह **त्यागित्वमिति** ॥ कर्म-फलेच्छाभावो द्वयोरपि सम इत्यर्थः । त्यागिभ्यो न्यासिनामुक्त एव विशेष इत्येतत् कुत इत्यत आह **परेति** ॥ १२ ॥

*भा०दी०*— **तदपीति** । परार्थकाम्यकर्मस्वरूपत्यागिनमित्यर्थः । तथा च संन्यासिनामित्युक्त्या त्यागिनामित्येवोक्तं भवतीति भावः ॥

**गीता**

## पञ्चैतानि महाबाहो कारणानि निबोध मे ।
## साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

*वि०वि०*— कर्मण्यभिमानत्यागोऽपि संन्यास इति भावेन कर्मकारणान्याह **पञ्चेत्यादिना** । साङ्ख्ये कृतान्ते सम्यक् ज्ञानप्रतिपादके सिद्धान्ते शास्त्रे सर्वकर्मनिष्पत्तये पञ्चकारणान्युक्तानि जानीहि ॥ १३ ॥

*वा०ल०*— 'साङ्ख्ये कृतान्ते' इत्यत्र, कृतान्ते सिद्धान्ते ॥ १३ ॥

*सा०सं०*— 'काम्यानाम्' इत्यत्रोक्तदिशा वैकल्पिककाम्यानां फलत्यागः । नियतकाम्यानां स्वरूपत्यागः । 'न तु संन्यासिनाम्' इत्यत्रोक्तदिशा परार्थमपि नियतकाम्यानाम् अननुष्ठानमित्येतावन्मात्रं न संन्यासशब्दार्थः । किन्तु कर्मणि कर्तृत्वाभिमानत्यागोऽपीति वक्तुं कर्मकारणानि प्रतिज्ञापूर्वमाह **पञ्चेत्यादित्रिभिः** । **एतानि** वक्ष्यमाणानि । **कारणानि** कर्मकारणानि । मे सकाशात् । निबोध बुद्ध्यस्व । **साङ्ख्ये कृतान्ते** कपिलाख्यविष्णुकृतसाङ्ख्यनामकशास्त्रे । सर्वकर्मसिद्ध्यर्थं **प्रोक्तानि** । श्रोतृविश्वासायैतदुक्तिः ॥ १३ ॥

*अ०प्र०*— न केवलं काम्यकर्मन्यासः संन्यासः । किन्तु कर्तृत्वाभिमानश्चेत्येवं प्रागुक्तं संन्यासं पुनः प्रपञ्चयितुं आत्मनो अकर्तृत्वे क्रियानिष्पत्तिप्रसङ्गादङ्गीकार्ये कर्तृत्वे कथं तदभिमान-

त्यागो युक्त इत्याशङ्कापरिहारार्थं आत्मव्यतिरिक्तान्येव पञ्च कर्मकारणान्याह **पञ्चेत्यादिना** । यद्वा, ननु कर्म कुर्वतः कर्मफलं कथं न भवेदित्याशङ्क्य सङ्गत्यागिनो निरहङ्कारस्य सतः कर्मफलेन लोपो नास्तीत्युपपादयितुमाह **पञ्चैतानीति** पञ्चभिः ॥

अथान्वयः— हे महाबाहो ![1], सर्वकर्मणां[2], सिद्धये[3], साङ्ख्ये[4], कृतान्ते[5], प्रोक्तानि[6], एतानि[7], कारणानि[8], पञ्च[9], मे[10] निबोध[11] ॥

हे महाबाहो ![1], सर्वकर्मणां[2], सिद्धये = निष्पत्तये सम्भवाय वा[3], साङ्ख्ये = सम्यक् ख्यायते ज्ञायते परमात्मानेति साङ्ख्यम् । यद्वा, ज्ञातव्यानि तत्त्वानि सङ्ख्यायन्ते यस्मिन् शास्त्रे तत्साङ्ख्यम् । तस्मिन् तथा सम्यक् ज्ञानप्रतिपादके वा[4], कृतान्ते = सिद्धान्ते । यद्वा, साङ्ख्ये कृतान्ते इत्यत्र अकृतान्त इति पदच्छेदः । अकृतो वेदः तस्यान्तो मध्य उपनिषदित्यर्थः । तस्मिन्कृतान्ते वेदान्ते । तदुक्तं नानार्थरत्नमालिकायाम्— 'अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेतर' इति । वेदान्तो द्विविधः— साङ्ख्ययोगभेदात् । तत्र साङ्ख्ये वेदान्त इति[5], प्रोक्तानि = कथितानि[6], तदुक्तम्— "कथितं परमं साङ्ख्यं कपिलाख्येन विष्णुना । सेश्वरं वैदिकं साक्षात् ज्ञेयमन्यदवैदिकम् ॥" इति वचनात्[6], एतानि = वक्ष्यमाणानि[7], कारणानि[8], पञ्च[9], मे मत्तः । यद्वा, मद्वचनात्[10] निबोध = जानीहि । आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थं अवश्यमेतानि ज्ञातव्यानि इत्येवं तेषां स्तुत्यर्थमाह साङ्ख्यं प्रति सिद्धवेदविरुद्धमित्यर्थः । अज्ञानिनो ज्ञानं ज्ञानिन आनन्द इत्यर्थः ॥ ॥ १३ ॥

### भाष्यम्

**पुनः संन्यासं प्रपञ्चयितुं कर्मकारणान्याह पञ्चेत्यादिना । साङ्ख्ये कृतान्ते ज्ञानसिद्धान्ते ॥ १३ ॥**

***प०टी०***— उत्तरश्लोकचतुष्टयं पूर्वसङ्गततया अवतारयति **पुनरिति** । 'साङ्ख्य'पदेन दर्शनविशेष इत्याह **साङ्ख्य इति** ॥ १३ ॥

***प्र०दी०***— 'पञ्च' इत्यादेः प्रकृतेन सङ्गत्यप्रतीतेः तामाह **पुनरिति** । न केवलं काम्यानां कर्मणां न्यासः संन्यासः; किं तु कर्तृत्वाभिमानत्यागश्चेत्येवं प्रागुक्तं 'संन्यासं पुनः प्रपञ्चयितुम्' आत्मनोऽकर्तृत्वे क्रियाऽनिष्पत्तिप्रसङ्गात् अङ्गीकार्ये कर्तृत्वे कथं तदभिमानत्यागो युक्तः ? इत्याशङ्कापरिहारार्थमात्मव्यतिरिक्तान्येव **कर्मकारणान्याह** इत्यर्थः ।

साङ्ख्यशब्दः कापिलतन्त्रे रूढः । 'कृतं कर्म, तस्य अन्तः निवृत्तिः यत्र उच्यते' इत्युपनिषत्सु कृतान्तशब्दं कश्चिद् व्याख्यातवान् । तदुभयं निवर्तयितुमाह **साङ्ख्य इति** । ज्ञानार्थः सिद्धान्तः ज्ञानसिद्धान्तः । 'सिद्धान्तः' इति शास्त्रं लक्ष्यते । कापिलतन्त्रस्य निन्दितत्वात् । उपनिषत्स्वपि कर्मत्यागाप्रतिपादनात् ॥ १३ ॥

***भा०दी०***— **संन्यासमिति** । 'त्यागरूपं प्रपञ्चयितुं कर्मकारणान्याह' इत्यन्वयः । किमर्थं प्रपञ्चनम् ? इत्यत उक्तम् **इत्येवं वक्तुमिति** । 'शरीर'इत्यादिश्लोकेन वक्तुमित्यर्थः । **आत्मव्यतिरिक्तान्येवेति** । तथा च आत्मजीवत्वाकर्तृत्वेऽपि न क्रियानुपपत्तिदोष इति भावः । प्रामाणिकत्वेनाभ्युपगतार्थस्य सिद्धान्तशब्दितस्य ज्ञानार्थत्वाभावादाह **शास्त्रं लक्ष्यत इति** । **निन्दितत्वादिति** । 'निन्दितत्वाच्चेतरयोः मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या' इति द्वितीयाध्यायभाष्य एव प्रपञ्चनादिति भावः । **कर्मत्यागाप्रतिपादनादिति** । प्रत्युत 'अन्या चरथ नियतं सत्यकामा' इत्याथर्वणे, 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शत९ समाः' इति ईशावास्यादौ तत्र विधानाच्च इत्यपि ध्येयम् ॥ १३ ॥

***भा०र०***— पुनःशब्दतात्पर्यं दर्शयन् भाष्यार्थमाह **न केवलमिति** ॥ 'काम्यानां कर्मणां न्यासम्' इत्यस्य वैकल्पिककाम्यानाम् अश्वमेधादीनां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागः, नियतकाम्यानां कारीर्यादीनां स्वरूपाकरणेन त्याग इत्यर्थ इत्येवमिति प्रपञ्चनप्रकारोक्तिः । **क्रियाऽनिष्पत्तिप्रसङ्गात्** क्रियाया अनिष्पत्तिप्रसङ्गात् **तदभिमानत्यागः** कर्तृत्वाभिमानः **कश्चित्** शङ्करः । तथा च तदीयं भाष्यम्– 'कृतमिति कर्मोच्यते, तस्य अन्तः = कृतस्य परिसमाप्तिः यत्र स कृतान्तः = वेदान्तः' इति । **उभयं** रूढिपक्षं उपनिषद्ग्रहणपक्षं चेत्युभयम् । 'ज्ञानसिद्धान्ताः' इत्यत्र ज्ञानस्य सिद्धान्तरूपत्वाभावात् नैवं व्याख्यानं युक्तमित्याशङ्क्य शाकपार्थिवादिवदत्र समासो विवक्षित इत्याह **ज्ञानार्थ इति** । प्रामाणिकतयाऽभ्युपगत्यर्थस्य सिद्धान्तपदार्थत्वात्, तत्र प्रोक्तत्वं कथमेतेषाम् ? इत्यत आह **सिद्धान्त इतीति** । प्रतिपादकत्वं शक्यसम्बन्ध इति भावः । रूढिबलात् कापिलतन्त्रग्रहणे दोषमाह **कापिलेति** । **निन्दितत्वादिति** । तथा च द्वितीयाध्याये भाष्यम्– 'निन्दितत्वाच्च इतरयोः = साङ्ख्ययोगयोः मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या' इति । परापव्याख्यानं प्रत्याख्याति **उपनिषत्स्वपीति** । 'कर्मत्यागाप्रतिपादनात्' इत्युपलक्षणम् । प्रत्युत 'तान्याचरत नियतं सत्यकामाः' इत्याथर्वणे, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति काण्वमन्त्रोपनिषदादौ च कर्तव्यताया एवावगमादित्यपि द्रष्टव्यम् ॥ १३ ॥

**गीतातात्पर्यनिर्णयः**

**"कथितं परमं साङ्ख्यं कपिलाख्येन विष्णुना ।**
**सेश्वरं वैदिकं साक्षाज्ज्ञेयमन्यदवैदिकम् ॥" इति च ॥ १३ ॥**

*प्रका०*— "साङ्ख्ये कृतान्ते प्रोक्तानी"त्यत्रोक्तं साङ्ख्यं दर्शयति **कथितमिति** ।

***न्या०दी०*— कर्मण्यभिमानत्यागोऽपि संन्यास इति भावेन कर्मकारणान्युच्यन्ते 'पञ्च' इति । तत्र साङ्ख्यकृतान्तपदेन परमसाङ्ख्यसिद्धान्त एवोच्यते, न तु प्रसिद्धसाङ्ख्यमेव । अत्र दैवशब्देनेश्वरस्य गृहीतत्वात् परमसाङ्ख्यस्य च सेश्वरत्वात् प्रसिद्धसाङ्ख्यस्य निरीश्वरत्वात्, तथा परमसाङ्ख्यस्य वैदिकत्वेनात्रोपादानसम्भवात् अन्यस्यावैदिकत्वेन तदसम्भवादिति भावेन तयोः सेश्वरत्वादौ प्रमाणमाह कथितमिति ॥**

*भा०दी०*— **कर्मण्यभिमानत्यागोऽपीति** । न केवलं काम्यकर्मन्यासमात्रं संन्यास इति अपिशब्दार्थः ॥

**गीता**

# अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
# विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

*वि०वि०*— अधिष्ठानं देहादि । कर्ता विष्णुः स्वतन्त्रत्वात् । नानाप्रकारं करणमिन्द्रियादि विविधा च परस्परं पृथग्भूता चेष्टा । करणानां तत्र व्यापारः हस्तादिक्रियादिभिः होमादिकर्माणि जायन्ते । ध्यानादेरपि मानसी चेष्टा कारणम् । पूर्वतनचेष्टाऽपि संस्कारकारणत्वेन भवति । दैवमदृष्टम् । 'देहो ब्रह्मार्थेन्द्रियाद्याः क्रियाश्च तथादृष्टं पञ्चमं कर्म हेतुः' इति श्रुतेः । अथवा, कर्तेति जीव उच्यते तस्यापि पराधीनकर्तृत्वभावात् । दैवमिति प्रेरकः परमात्मा ॥ १४ ॥

*वा०ल०*— 'अधिष्ठानं तथा कर्ता' इत्यत्र, अधिष्ठानं भूमिः । कर्ता यजमानः । पृथक् पृथक्कारणं व्रीहियवादि । चेष्टाः मन्त्रेण होमादिचेष्टाः । दैवम् उद्देश्यदेवता, कर्मप्रेरको देवो वा ॥ ॥ १४ ॥

*सा०सं०*— प्रतिज्ञातमाह **अधिष्ठानमिति** । **अधिष्ठानं** देहभूम्यादिः । **कर्ता** विष्णुः । **पृथग्विधं करणम्** इन्द्रियस्रुक्स्रुवादि । **विविधा** नानाप्रकारा । **पृथक्** परस्परभिन्ना । **चेष्टा**

हस्तादिक्रिया ध्यानरूपमानसक्रिया च । प्रधानहोमादिक्रियाहेतुभूता कारकाश्रितावान्तरक्रिया चेत्यर्थः । **दैवम्** अदृष्टम् । **अत्र** कर्मविषये । **पञ्चमं** कारणम् । यद्वा, कर्तृपदेन पराधीनकर्ता जीवः । **दैव**पदेन विष्णुः । कर्मणां कर्त्रादिकारकषट्कसाध्यत्वेऽपि इह कर्मापादानादेरनुक्तिः – असार्वत्रिकत्वात् तस्येति ज्ञेयम् ॥ १४ ॥

***अ०प्र०***— तानि कारणान्याह **अधिष्ठानमिति** ।

अधिष्ठानं स्वभोग्येन सहभोक्तुरधिष्ठानत्वात् अधिष्ठानं देहः देहमधिष्ठाय इन्द्रियव्यवहारैः प्रकृत्यार्जितानि सुखदुःखादीनि पुरुषो भुङ्क्ते । तस्मादधिष्ठानं देहः । अवस्थात्रयाणामधिष्ठानमिति वा । तस्मादधिष्ठानं देहादिः[1], तथा कर्ता = विष्णुः स्वतन्त्रत्वात् मतान्तरे चिज्जडग्रन्थिरहङ्कारः यच्चैतन्यं प्रतिबिम्बमिति यस्य जीव इति प्रसिद्धिः[2], पृथग्विधं = अनेकप्रकारं[3], करणं = चक्षुः-श्रोत्रादि इन्द्रियाणि । यद्वा, अन्ये बुद्धेर्ज्ञातृत्वश्रोत्रादि इन्द्रियभेदेन बहिःप्रसृतं भवति तदेव पृथग्विधं च करणं[4], विविधा च पृथक् चेष्टाः = कार्यतः स्वरूपतश्च पृथक्पृथग्भूताश्च चेष्टा प्राणापानादीनां करणानां अवान्तरव्यापाराः । यद्वा, अनपायिनी पवनसम्बन्धिनी क्रियशक्तिः वा अणादि अनेक-स्थानान्तरगमनात् । वचनादानगतिविसर्गादिनाम्ना अनेकधा भवति । तथा च हृदयादिस्थानेषु स्थितत्वात् प्राणादि अभिधानेन व्यवह्रीयते एवं वायोश्चेष्टा एकैवापि वृत्तिपथवर्तनात् विविधा च बहुप्रकारा भवति[4], दैवं चैवात्र पञ्चमं = अत्र अधिष्ठानादिचेष्टान्तं चतुष्टयेष्वेव पञ्चमं कारणं दैवं अदृष्टं कारणं अत्र प्रमाणश्रुतिः—

'देहो बाह्यार्थेन्द्रियाद्या क्रियाश्च तथा दृष्टं पञ्चमं कर्म हेतुरि'ति श्रुतेः ।

यद्वाऽन्ये चक्षुरादीन्द्रियपीठेषु सानुग्रहेण यद्देववृन्दमस्ति तदेवं च अत्र कर्मणि कारणं पञ्चमं इति[1], अथवा कर्तेति जीव उच्यते तस्यापि पराधीन-कर्तृत्वासद्भावात् **दैवमिति** । प्रेरकः परमात्मा इति निबोधेति पूर्वेणान्वयः ॥ १४ ॥

**गीता**

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

***वि०वि०***— शरीरादिभिर्यत् न्यायोपेतमन्यायोपेतं वा कर्म नरः प्रारभते तस्यैतेऽधिष्ठानादयः पञ्च हेतवः । ततश्च जीवस्य स्वातन्त्र्याभावात् दैवमिति प्रेरकः परमात्मा ॥ १५ ॥

*सा०सं०*— तर्हि करणकारकं कुतो नोक्तमित्यतो वा कस्यैतानि करणानीत्यतो वाऽऽह **शरीरेति** । अत्र शरीरमनोवाचामेव करणकारकत्वेनोक्त्या कर्मापादानादीनि न सार्वत्रिकाणीति सूचितम् ॥ १५ ॥

*अ०प्र०*— एतेषामेव सर्वकार्यत्वहेतुमाह **शरीरेति** ।

अन्वयः— नरः[१], शरीरवाङ्मनोभिः[२], न्याय्यं वा विपरीतं वा[४], यत्कर्म प्रारभते[५], तस्य[७], एते पञ्च[८], हेतवः[९], इति निबोधेति पूर्वेणान्वयः ॥

नरः = शरीरवान्[१], शरीरवाङ्मनोभिः यथा पूर्वश्लोके उक्तैः अधिष्ठानादि पञ्चभिः प्रारभ्यमाणं कर्म त्रिधेवान्तर्भाव्यशरीरवाङ्मनोभिरित्युक्तम् । शारीरं वाचिकं मानसं च त्रिविधं कर्मेति प्रसिद्धेः । शरीरिभिः कर्मसङ्कल्पस्य हेतुर्मनःसङ्कल्पो वाचं योजयति सा वाक् कृत्यजातं प्रदर्शयति । तदा नरः प्रेरणया कर्म प्रारभते । शरीरेण कर्तव्ये कः प्रवर्तयते यन्मनसा ध्यायति तत्र शरीरादिकं कर्म तदादिहेतुना भवति । यथा लोहकर्म लोहेन निवर्त्यते तथा मनोवाक्शरीरं कर्म मन आदिहेतुभिः सम्पद्यते[२], न्याय्यं वा = एवं देहादिकारणैः देहादिहेतुभिः यत्कर्म भवति तत् न्याय्यं वा शास्त्रीयं वा शास्त्रोक्तमार्गेण प्रवर्तितं चेत् न्याय्य एव[३], विपरीतं वा = शास्त्रविरुद्धं वा कारणहेतुयोगेन स्वेच्छाविधिना शास्त्रविरुद्धं कर्म यद्भवति तद्विपरीतं[४], स एव न्यायो न्यायस्य हेतुः । यद्वा, न्यायोपेतं धर्मसाधनं विपरीतं वा अन्याय्यं निषिद्धं अधर्मं वा[४], यत्कर्म प्रारभते = यत् यत् कर्म करोति[५], तस्य = तस्य सर्वस्य कर्मणः[७], एते पूर्वोक्ताः[८], पञ्च = अधिष्ठानादयः[९], हेतवः = कारणानि[१०] इति निबोधं । फलितमाह— नरः शरीरवाङ्मनोभिः यन्न्यायोपेतं धर्मसाधनं विपरीतं निषिद्धकर्म करोति तस्य सर्वस्य कर्मणः अधिष्ठानादयः पञ्च कारणानि । ततस्य जीवस्यास्वातन्त्र्यात् कर्मण्यभिमानस्त्याज्य इति भावः ॥ १५ ॥

**भाष्यम्**

**अधिष्ठानं** देहादि । **कर्ता** विष्णुः । '**स हि सर्वकर्ता**' इत्युक्तम् । जीवस्य चाकर्तृत्वे **प्रमाणमुक्तम्** । **करणम्** इन्द्रियादि च । **चेष्टाः** क्रियाः । हस्तादिक्रियाभिः होमादिकर्माणि जायन्ते ।

*प०टी०*— 'अधिष्ठान'पदं व्याचष्टे **अधिष्ठानमिति** । **आदिपदाद्भूम्यादि** 'कर्तृ'पदेन जीव इति शङ्कानिरासायाह **कर्तेति** । कुतो विष्णुपरता ? इत्यत आह **स हीति** । ईश्वरस्यास्तु कर्तृत्वम्,

जीवोऽत्र विवक्षित इत्यत आह **जीवस्येति** । 'करण'पदं व्याचष्टे **करणमिति** । **आदि**पदेन स्रुगादि । **'चेष्टा'पदेन** **प्राणापानादिवायुचेष्टेति** । आह **चेष्टा इति** । ननु चेष्टाया एव पञ्चकारणान्युच्यन्ते, अतः कथं चेष्टा कारणम् ? इत्यत आह **हस्तादीति** ।

*प्र०दी०*— अधिष्ठानादि करण एवान्तर्भूतमिति वक्ष्यति । तत्प्रबोधनाय अधिष्ठानं निर्दिशति **अधिष्ठानमिति** । **आदि**पदेन भूम्यादि । 'कर्ता जीवः' इति व्याख्यानमसदिति भावेनाह **कर्तेति** । शरीरवाङ्मनोभिः क्रियमाणानां कर्मणां कर्ता कथं विष्णुरित्यत आह **स हीति** । **उक्तम्** उपपादितम् । तथाऽपि जीवोऽत्र कर्ता किं न स्यात् ? इत्यत आह **जीवस्य चेति** । अपराधीनत्वाभिप्रायेणेदं निराकरणम् । पराधीनं कर्तृत्वमङ्गीकृत्य अन्यत्र जीवो व्याख्यात इत्यविरोधः ।

भावसाधनताप्रतीतिनिरासार्थमाह **करणमिति** । **आदि**पदेन स्रुवादि । भावसाधनार्थस्य साध्यत्वात् । चेष्टाग्रहणेन च गृहीतत्वाच्च । 'वायवीयाः प्राणापानाद्याः चेष्टा' इत्यसत् । द्रव्याभिधाने चेष्टत्वानुपपत्तेः । प्राणनाद्यभिधाने साध्यत्वात् कारकत्वानुपपत्तेरित्याशयवानाह **चेष्टा इति** । क्रियाणां साध्यत्वात् कथं कारकत्वम् ? इत्यत आह **हस्तादीति** । सावान्तरव्यापारं हि करणं कारकमुच्यते । तत्राधिष्ठानादिपदैर्व्यापारिणो निर्दिश्यन्ते । क्रियाशब्देन त्ववान्तरा व्यापाराः । कारकाश्रिताभिरवान्तरक्रियाभिः प्रधानक्रियाजननं च प्रसिद्धमेवेत्यर्थः ।

*भा०दी०*— **तत्प्र(तद्बो)बोधनायेति** । अन्तर्भावबोधनायेत्यर्थः । **उक्तमुपपादितमिति** । सर्वकर्तृत्वोक्त्या 'वा हि' इति प्रमाणप्रसिद्ध्युक्त्या वा सर्वान्तःपातिकर्मकर्तृत्वं कैमुत्यसिद्धमिति भावेनोपपादितमित्यर्थः । **जीवस्य चेतीति** । 'जीवस्याकर्तृत्वे प्रमाणमुक्तम्' इति भाष्ये 'न हि प्रतिबिम्बस्य क्रिया' इत्यादिना द्वितीये 'यत्र यत्रैव संयुक्तः' इत्यादिना पञ्चदशे चोक्तमित्यर्थः । **अन्यत्रेति** । 'स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनोक्तश्च' इति तात्पर्य इत्यर्थः । 'कर्ता शास्त्रार्थवत्त्वात्' इति सूत्रभाष्ये चेत्यर्थः । **भावेति** । करणं निर्माणप्रतीतीत्यर्थः । **साध्यत्वादिति** । निष्पाद्यमानस्य अवश्यपूर्ववृत्तित्वरूपकारणत्वानुपपत्तेरिति भावः । हस्तादिक्रियार्थत्वे च दोषमाह **चेष्टेति**। **द्रव्येति**। वायुविकारप्राणादिद्रव्येत्यर्थः ।

*भा०र०*— **तत्प्रबोधनाय** अन्तर्भावप्रबोधनाय **भूम्यादि** 'ग्राह्यम्' इति शेषः । **इति व्याख्यानमिति** । 'कर्ता = उपाधिलक्षणो भोक्ता जीवः' इति शङ्करव्याख्यानमित्यर्थः । **कथं विष्णुरिति** । जीव-कर्तृत्वस्यानुभूयमानत्वादिति भावः । **उपपादितं** उपपत्तियुक्ततया प्रतिपादितम्, द्वितीयादौ तत्र तत्र । ननु 'स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेः' इति जीवस्यास्वातन्त्र्यकर्तृ-

शब्दार्थेन तात्पर्यनिर्णये व्याख्यातत्वाद्, अत्र 'कर्ता विष्णुः', 'जीवस्याकर्तृत्वे प्रमाणमुक्तम्' इति कथम् ? परस्परविरोधात्, इत्यतस्तात्पर्यनिर्णयवाक्यभावमाह **अपराधीनकर्तृत्वाभिप्रायेणेति** । **इदं** भाष्यस्थम् । **अन्यत्र** तात्पर्यनिर्णये । **भावसाधनतेति** । भावः = धात्वर्थः = निर्माणम्, स साधनम् = शब्दनिष्पत्तौ निमित्तं यस्य स भावसाधनः करणशब्दः, तत्ताप्रतीतिः = निर्माणप्रतिपादकत्वप्रतीतिः, तन्निरासार्थमित्यर्थः । 'स्रुवादि' इत्यादिपदेन स्वधित्यादि, 'ग्राह्यम्' इति शेषः । करणशब्दो भावसाधनः किं न स्यात् ? इति चेत्, तदत्र वक्तव्यम्— किं भावशब्देन होमादिक्रिया विवक्षिता, हस्तादिक्रिया वा ? इति विकल्पं मनसि निधाय, आद्ये दोषमाह **भावसाधनार्थस्येति** । धात्वर्थप्रतिपादको यः शब्दः तदर्थस्येत्यर्थः । **साध्यत्वादिति** । कृञ्धात्वर्थतया विवक्षितहोमादिक्रियायाः साध्यत्वेन = निष्पाद्यत्वेन 'पञ्चैतानि महाबाहो कारणानि निबोध मे' इति कारणशब्दार्थपूर्वभावित्वानुपपत्तेरिति भावः । अन्ते दोषमाह **चेष्टाग्रहणेनेति** । तथा च भावसाधनताप्रतीतिः अनुचितेति भावः । 'वायवीयाः' इत्यादि *शङ्करभाष्याक्षरानुवादः* । वायवीयाः = वायुविकाराः प्राणादिशब्देन प्राणापानादिद्रव्यं विवक्षितम् उत प्राणादिनिष्ठक्रिया प्राणनादिरूपा विवक्षिता ? इति विकल्पं हृदि निधाय, आद्ये दोषमाह **द्रव्याभिधान इति** । द्वितीय आह **प्राणनादिति** । **साध्यत्वात्** प्राणनादीनां पश्चाद्भावित्वात्, 'कारणानि निबोध' इत्युक्तकारणशब्दितपूर्वभावित्वानुपपत्तेरित्यर्थः । क्रियाणां चेष्टाशब्दार्थानां साध्यत्वात् 'कारणानि' इत्युक्तकारकत्वं कथमित्यर्थः । नन्वेवं करणव्यापारसङ्ग्रहेऽपि नाधिष्ठानादिक्रियासङ्ग्रहः । सति चैवं क्रियां प्रति करणमात्रसङ्ग्रहोक्तिर्न स्यात् ? इत्यत आह **सावान्तरेति** । **अधिष्ठानादिपदैः** अधिष्ठानकर्तृकरणादिपदैः **क्रियाशब्देन** 'चेष्टाः क्रियाः' इत्यत्रत्यक्रियाशब्देन **कारकाश्रिताभिः** दण्डादिकारकाश्रिताभिः **अवान्तरक्रियाभिः** चक्रभ्रमप्रभृतिभिः **प्रधानक्रियाजननं** घटनिर्माणलक्षणं क्रियानिष्पादनम् ।

**भाष्यम्**

**ध्यानादेरपि मानसी चेष्टा कारणम् । पूर्वतनी चेष्टाऽपि संस्कारकारणत्वेन भवति ।**

*प०टी०*— ननु ध्यानादिकर्मणः स्थैर्यसाध्यत्वात् कथं चेष्टाजनकत्वम् ? इत्यत आह **ध्यानादेरपीति** । न केवलं तत्कालीनचेष्टा कारणं किन्तु पूर्वत्वेनापीत्याह **पूर्वतनी इति** ।

*प्र०दी०*— नन्वत्र कारकाभिधानप्रसङ्गे अधिष्ठानाद्येवोक्तम् । कर्मसम्प्रदानापादानानि कुतो नोक्तानि ? अधिष्ठानादीनां सर्वक्रियानुगमात् । कर्मादीनां तदभावादिति ब्रूमः । तथा च वक्ष्यति

'शरीरवाङ्मनोभिः यत्' इति । एवं तर्हि चेष्टाऽपि न वक्तव्या । ध्यानादिजनने करणस्य मनसः चेष्टाभावेनाननुगमादित्यत आह **ध्यानादेरपीति** । **आदिपदेन स्मरणं गृह्यते** । ज्ञात एवार्थे ध्यानं भवति । ज्ञानं चात्मेन्द्रियसन्निकृष्टेनैव मनसा जायते । सन्निकर्षश्च मानसचेष्टाजन्यः । अतो ध्यानादेरपि मनस्सम्बन्धिनी चेष्टा कारणं भवतीति भावः ।

ननु नियतपूर्वक्षणे सत् कारणम् । न च ध्यानादिपूर्वक्षणे मनसि क्रियाऽस्ति । चिरातीतत्वात् । मनोनैश्चलसाध्यत्वात् ध्यानादेः । न च सन्निकर्षज्ञानद्वारा करणम् । तस्यापि चिरातीतत्वादित्यत आह **पूर्वतनीति** । **पूर्वतनी** चिरातीताऽपि मानसी क्रिया सन्निकर्षज्ञानद्वारा ध्यानादिहेतु**संस्कारकारणत्वेन भवति** ध्यानादेः कारणम् । संस्कारस्य स्थायित्वादित्यर्थः ।

***भा०दी०***— **अधिष्ठानादीनामिति** । देहेन्द्रियादृष्टकर्तृहस्तादिक्रियाणामित्यर्थः । **कर्मादीनां** कर्मकारकादीनामित्यर्थः । भूम्यां तिष्ठति, चैत्रश्चलति इत्यादावभावादिति भावः । **वक्ष्यतीति** । सर्वक्रियानुरूपगतिमधिष्ठानादेरिति योज्यम् । **तस्यापीति** । सन्निकर्षजज्ञानस्यापीत्यर्थः । **ध्यानादिहेतुसंस्कारेति** । ध्यानविषयस्य मानसवासनापरिमाणत्वादिति भावः । भाष्ये शेषमाह **ध्यानादेः कारणमिति** । मानसक्रियानन्तरं तस्य तेन श्रोत्रादीन्द्रियसन्निकर्षे सति, स तस्य श्रोत्रादिसन्निकृष्टविषयानुभवे सति, तज्जन्यसंस्कारपरिणतवस्तुविषयकमानसावलोकनस्य ध्यानत्वात् परम्परया ध्यानरूपक्रियाहेतुर्भवति मानसक्रियेति भावः ।

***भा०र०***— उत्तरमाह **अधिष्ठानादीनामिति** । **कर्मादीनां** कर्म-सम्प्रदान-अपादानानाम् । **तदभावादिति**। वृद्धि-क्षय-भय-जीवित-मरण-लज्जा-सत्ता-स्थिति-जागरण-शयन-क्रीडा-रुचि-दीप्त्यर्थकधातूनाम् अकर्मकत्वानुभवेन तत्र कर्मादिकारकाणाम् अनुगमाभावादित्यर्थः । अधिष्ठानादीनां सर्वक्रियास्वनु-गमने गीतामेव प्रमाणयति **तथा चेति** । 'शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः' इत्युत्तरत्र शरीर-शब्देनाधिष्ठानकारकस्य, वाक्छब्देन मनःशब्देन च करणकारकस्य, 'नरः' इति कर्तृकारकस्य क्रियामात्रारम्भेऽनुगमाभिधानाद् उक्तं युक्तमित्यर्थः । **एवं तर्हि** 'यदनुगतं तद्वक्तव्यम्' इति नियमे भाष्योक्तमुपपादयति **ज्ञात एवार्थ इत्यादिना** । **आत्मेन्द्रियसन्निकृष्टेन** आत्मेन्द्रियाभ्यां सन्निकृष्टेन **तत्सन्निकर्षः** आत्मेन्द्रियसन्निकर्षः । 'मानसी' इत्यस्यार्थः **मनःसम्बन्धिनीति** ।

किञ्च ध्यानपूर्वक्षणे यदि मनसि चेष्टाऽभ्युपगम्यते तदा ध्यानमेव न सम्पद्यते इत्याशयेनाह **मनोनैश्चल्येति** । मानसचेष्टायाः चिरातीतत्वेऽपि यागोऽदृष्टद्वारेव सन्निकर्षज्ञानद्वारा सा कारणं

भविष्यति ? इत्याशङ्क्य निराह **न चेति** । **तस्यापि** मानसात्मेन्द्रियसन्निकर्षस्यापि । **ध्यानादिहेतुसंस्कारेति** । ध्यानविषयस्य मानसवासनापरिमाणत्वाद् इति भावः । 'भवति' इत्यनुवादः, 'ध्यानादेः कारणम्' इति तु शेषः । आदिपदेन स्मरणं ग्राह्यम् । मानसक्रियानन्तरं श्रोत्रादीन्द्रियसन्निकर्षो भवति । तेन च श्रोत्रादिसन्निकृष्टविषयानुभवः तस्मिंश्च सति तज्जन्यसंस्कारपरिणतवस्तुविषयकमानसावलोकनरूपध्यानजननात् परम्परया ध्यानहेतुर्भवति मानसी क्रियेति भावः ।

**भाष्यम्**

**दैवम् अदृष्टम् । तथा च आयास्यश्रुतिः "देहो ब्रह्मार्थेन्द्रियाद्याः क्रियाश्च तथा दृष्टं पञ्चमं कर्म हेतुः" इति ॥ १४-१५ ॥**

***प०टी०***— ननु 'कर्तृ'शब्देनैव विष्णुग्रहणे दैवशब्देन किमुच्यते ? इत्यत आह **दैवमिति** । उक्तं श्रुत्या स्थापयति **तथा चेति** ॥ १४-१५ ॥

***प्र०दी०***— 'देवमन्तर्यामिव्यापारः' इति **कश्चित्** । तदसत् । 'कर्ता' इत्यनेनैवोक्तत्वात् । 'चक्षुराद्यनुग्राहकाः सूर्यादयः' इत्यपरः । तदप्यसत् । करणादिशब्दैरेव गृहीतत्वादिति भावेनाह **दैवमदृष्टमिति** । उक्तमर्थं श्रुतिसम्मत्यापि समर्थयति **तथा चेति** । 'देहः' इत्युपलक्षणम् । **हेतुः** कारणम् । **'कर्म हेतु'** इति **क्वचित्** पाठः । तत्र छान्दसो लिङ्गव्यत्ययः ॥ १४-१५ ॥

***भा०दी०***— **करणादीति** । कारणाधिष्ठानकर्तृशब्दैरित्यर्थः । अधिष्ठानकारणशब्दाभ्यां देहाद्यनुग्राहाकाणाम् अपि प्राप्तेः तन्मते कर्तृपदेन जीवानां ग्रहणादिति भावः । **उपलक्षणमिति** । भूम्यादेरिति भावः ॥ १४-१५ ॥

***भा०र०***— 'देवादागतम्', 'तत आगतः' इत्यणि 'सर्वप्रेरणम्' इत्यभिप्रायेणाह **दैवं अन्तर्यामिव्यापार इति** । तथा चाहुः 'सर्वप्रेरकोऽन्तर्यामी' इति । **उक्तत्वात्** 'कर्ता विष्णुः, स हि सर्वस्य कर्ता' इति अन्तर्यामिव्यापारस्योक्तत्वात् । 'चक्षुराद्यनुग्राहकम् आदित्यादि दैवम्' इति शाङ्करभाष्यमनुवदति **चक्षुरादीति** । **करणादिशब्दैः** करणाधिष्ठानादिशब्दैः 'अधिष्ठानं देहादिः' इति भाषणादाह **उपलक्षणमिति** । 'भूम्यादेः' इति योज्यम् । पाठान्तरोद्भावनाय, 'कारणानि निबोध मे' इति गीतानुरोधाय च 'हेतुः' इत्यस्यार्थमाह **हेतुः कारणमिति** । **लिङ्गव्यत्यय इति** । 'हेतुर्ना कारणम्' इति हेतुशब्दस्य पुलिङ्गत्वाभिधानादिति भावः ॥ १४-१५ ॥

**गीतातात्पर्यनिर्णयः**

**अधिष्ठानं शरीरादि ॥ १४-१५ ॥**

*प्रका०*— अधिष्ठानं तथा कर्तेत्यत्र अधिष्ठानशब्दार्थमाह **शरीरादीति** ।

*न्या०दी०*— अधिष्ठानपदस्यात्र विवक्षितमर्थमाह **अधिष्ठानमिति** ॥

**गीता**

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

*वि०वि०*— अभिमानात्यागिनं निन्दति **तत्रेति** । तत्र कर्मणि एवं सति पञ्चानां कारणत्त्वे सति केवलं निष्क्रियमात्मानम् । 'एनं केवलमात्मानं निष्क्रियत्वाद्वदन्ति हि' इत्युक्तेः । कर्तारं स्वतन्त्रं यः पश्यति असंस्कृतबुद्धित्वादुर्मतिः स न पश्यति । अज्ञानीत्यर्थः ॥ १६ ॥

*सा०सं०*— ततश्च किमित्यत आह **तत्रैवं सतीति** । **तत्र** कर्मणि । ईश्वरादिपञ्चकस्यैवं करणत्वे सति जीवस्य स्वातन्त्र्याभावेन । **केवलं** परप्रेरणां विना स्वतः क्रियाहीन**मात्मानम्** । **कर्तारं** स्वातन्त्र्येण कर्मकर्तारम् । **यस्तु पश्यति** मन्यते । **सोऽकृतबुद्धित्वात्** श्रवणाद्यसंस्कृत-बुद्धित्वात् । **दुर्मतिः** दुष्टबुद्धिः सन् । **न पश्यति** । तत्त्वविन्न भवतीत्यर्थः ॥ १६ ॥

*अ०प्र०*— **तत्र एवं सतीति** ।

एवं सति[१], यः[२], आत्मानं[३], कर्तारं[४], पश्यति[५], सः[६], अकृतबुद्धित्वात्[७], दुर्मतिः[८], न पश्यति[९] ॥

तत्र = सर्वस्मिन्कर्मणि पञ्चहेतव इत्येवं वर्तमाने सति । यद्वा, तत्र कारणहेतुयोगेन प्रवर्त-मानदेहादिकर्मणि[१], यः[२], आत्मानं =जीवं[३], केवलं निरुपाधिकं असङ्गकर्तारं स्वातन्त्र्येण[४], पश्यति[५], सः[६], अकृतबुद्धित्वात् = शास्त्रगुरूपदेशन्यायैः असंस्कृतबुद्धिः केवलं मौढ्येन स्थितः सोऽकृत-बुद्धिः । तद्भावो कृतबुद्धित्वं तस्मात् अकृतबुद्धित्वात्[७], दुर्मतिः[८], न पश्यति = न जानन्तीत्यर्थः। केवलं निष्क्रियमिति हेतुगर्भविशेषणं क्रियावान्हि कर्ता निष्क्रियत्वान्न जीवः कर्तेति एनं केवल-मात्मानं निष्क्रियत्वाद्वेदेति हीति श्रुतेः ॥ १६ ॥

भाष्यम्

**केवलं निष्क्रियम् । "एनं केवलमात्मानं निष्क्रियत्वाद् वदन्ति हि" इति तत्रैव ॥ १६ ॥**

*प०टी०*— ननु जीवस्य पञ्चकारणानन्तर्गतत्वे 'तत्रैवम्' इति श्लोको न युक्तः । यः केवलमेकमात्मानं कर्तारं पश्यति । न कारणान्तरं पश्यतीत्युक्तेः । अन्यथा 'केवल'पदवैयर्थ्यमित्यत आह **केवलमिति** ॥ १६ ॥

*प्र०दी०*— ननु एवं जीवस्य कर्मकारणेष्वनन्तर्भावे व्याख्यायमाने 'तत्रैवं सति' इत्युत्तरवाक्ये, 'केवलम्' इति न युज्यते । एकाकिनमात्मानं कारणत्वेन मन्यमानस्य निन्दयाऽस्य ससहायस्य कारणत्वप्रतीतेरित्यत आह **केवलमिति** । नात्र केवलशब्द एकाकिवचनः । किं तु निष्क्रियत्ववाची । तदुक्तिश्च निन्दोपपादनार्थेति भावः । केवलशब्दस्य निष्क्रियार्थत्वं कुतः ? इत्यत आह **एनमिति** । **तत्रैव** आयास्यश्रुतावेवोक्तम् ॥ १६ ॥

*भा०दी०*– **निन्दोपपादनार्थेति** । केवलं निष्क्रियं क्रियाशून्यकर्तृत्वहीनमिति यावत् ॥१६॥

*भा०र०*— **निन्दोपपादनार्थेति** । स्वातन्त्र्येण क्रियाशून्यस्य पराधीनकर्तृत्वं नास्तीति तज्ज्ञानी भ्रान्त इति निन्दोपपादनार्थेत्यर्थः ॥ १६ ॥

गीता

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥**

*वि०वि०*— स्वात्मानमकर्तारं मन्यमानं स्तौति **यस्येति** । यस्याहमिति एवं भूतोभावोऽभिप्रायोनास्ति । 'यस्य बुद्धिर्न लिप्यते' । 'स इमान् लोकान् हत्वाऽपि न हन्ति हन्मि' इति भावाभावान्न हन्तीत्यतो रागाभावाच्च न निबध्यते । तथोक्तम्— "स्वातन्त्रमीश्वरे वेत्ति नैवात्मनि कदाचन । ईश्वराधीनमेवात्मन् स्वातन्त्र्यं तु जडान्प्रति ॥ तारतम्येन लक्ष्म्यादेर्जीवान्प्रति च सर्वशः। यस्तदर्थं समुत्पन्नो यथा रुद्रो यथा यमः । हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते । अज्ञस्तदर्थं जातोऽपि बद्ध्यते दैत्यवद्ध्रुवम् । अपरोक्षदृङ् न जातो यस्तदर्थं मुक्तिगं सुखम् ॥ हसेत्तस्य परोक्षज्ञः किञ्चिद्दोषेण लिप्यते ।"इति । यस्तु हन्मीति भावं करोति रागाच्च प्रवर्तते । सोऽहन्ताऽपि

हन्ति इत्युच्यते लिप्यते च। उक्तं च— "स्वातन्त्र्यं मन्यमानस्य रागाद्धर्मं च कुर्वतः। तन्निमित्तस्तु दोषः स्याद्गुणश्च स्यात्स्वकर्मजः॥" इति॥ १७॥

*सा०सं०*— एवं कर्तृत्वाभिमानिनं विनिन्द्य स्वस्य कर्तृत्वानभिमानिनं स्तौति **यस्येति**। **यस्य** पुंसः। **अहङ्कृतः** मयाऽयमर्थः कृत इति। **भावः** आशयः अहङ्कृतो भावः। स्वातन्त्र्याभिमानं **नास्ति**। **यस्य बुद्धिर्न लिप्यते**। फलरागादिलिप्तो न भवति। **सः** स्वातन्त्र्यज्ञानहीनः। **इमान् लोकान्**। **हत्वाऽपि न** लिप्यते। हननदोषयुक्तो न भवति। कुतः **न हन्ति**, स्वातन्त्र्येण हन्मीति बुद्धिं न करोतीति वा। **न निबध्यते** तत्फलं नाप्नोतीत्यर्थः। एतच्चेश्वरसार्वज्ञस्वातन्त्र्यज्ञानी सन्नपि विश्वहननार्थं जातो रुद्रो यमो वा तद्विषयमिति बोध्यम्। अन्यस्य त्वपरोक्षिणोऽपि दोषकृदेवेति। वृत्रहत्यादिनेन्द्रादेरपि ईषद्वधोऽपीषदहङ्कारकृत एवेत्याकर एव व्यक्तम्। एवं कर्तृत्वाभिमान्यनभिमानिनोः सहेतुकं निन्दास्तुत्योक्त्या कर्मणि कर्तृत्वाभिमानत्यागोऽपि संन्यासशब्दार्थ इत्युक्तं भवति॥ १७॥

*अ०प्र०*— कस्तर्हि सुमतिः यस्य कर्मलेपो नास्ति स्वात्मानमकर्तारं मन्यमानं स्तौति **यस्येति**।

यस्य[१], अहङ्कृतो भावो[२], नास्ति अत एव[३], यस्य[४], बुद्धिः[५], न लिप्यते[६], सः[७], इमान्[८], लोकान्[९], हत्वापि[१०] न हन्ति[११], न निबध्यते इत्यन्वयः।

यस्य = पुरुषस्य[१], अहङ्कृतो भावो = अहमिति कृतो जातो भावोऽभिप्रायः अहङ्कर्तेत्येवम्। अहम्भावो नास्त्येव = कृतभावः कुतः[३], यस्य बुद्धिः = न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते। यद्वा, देहादिकर्मणा यस्य बुद्धिः न निबध्यते[६], स एवम्भूतो देहादिव्यतिरिक्तात्मदर्शी[७], इमान् = सर्वान्[८], लोकान्[९], हत्वापि[१०] न हन्ति = लौकिकदृष्ट्या हननकर्ताऽपि विवेकदृष्ट्या हन्मीति भावाभावान्न हन्ति इत्युच्यते[११], न निबध्यते = बन्धं न प्राप्नोति[१२], एनं हत्वेदं प्राप्स्येति फलरागाभावात् किं पुनः सत्त्वशुद्धिद्वारा अपरोक्षज्ञानोत्पत्तिहेतुभिः कर्मभिः न तस्य बन्ध-शङ्केत्यर्थः। तदुक्तम्— 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसे'ति॥

किञ्च, तथोक्तम्— "स्वातन्त्र्यमीश्वरे वेत्ति नैवात्मनि कदाचन। ईश्वराधीनमेवात्मन् स्वातन्त्र्यं तु जडान्प्रति। तारतम्येन लक्ष्म्यादेर्जीवान्प्रति च सर्वशः। यस्तदर्थं समुत्पन्नो यथा रुद्रो यथा यमः। हत्वापि स इमान् लोकान् न हन्ति न निबध्यते। अज्ञस्तदर्थं जातोऽपि बध्यते दैत्यवद् ध्रुवम्॥"

'अपरोक्षदृङ् न जातो यस्तदर्थं मुक्तिगं सुखम् । ह्रसेत्तस्य परोक्षज्ञः किञ्चिद्दोषेण लिप्यते' इति आत्मन्यनात्मनि लक्ष्म्यादेश्च स्वातन्त्र्यं वेत्ति इति अनुषज्यते । यदर्थं लोकहननार्थं तदर्थं जातत्वे-नैवोक्तं किमीश्वरस्वातन्त्र्यादिज्ञानेनेत्यत आह **अज्ञ इति** । लोकान् हन्ति चेति शेषः । तर्हि ज्ञानेनै-वालम्। किं तदर्थजातत्वेनेत्यतः परोक्षापरोक्षज्ञानिनोरपि तदर्थजातयोर्लोकहनने विभागेन बाधकमाह **अपरोक्षेति** । अपरोक्षज्ञस्तदर्थमजातो यदि जातो यदि लोकान् हन्ति तर्हि किञ्चिद्द्वेषेण लिप्यते इत्यर्थः। अपरोक्षदृगिति उक्त्या स्वातन्त्र्यादिज्ञानं च अपरोक्षेति इति सूचितम् । परोक्षज्ञानेन तदर्थं जातत्वेनालम् । किमपरोक्षज्ञानेनेत्यतो वाऽऽह **परोक्षेति** । अत्र तदर्थं जात इति ग्राह्यमिति प्रमाणार्थः । यस्तु हन्मीति भावं करोति फलं रागादिना प्रवर्तते स हन्तीत्युच्यते । तज्जपापेन लिप्यते च । तदुक्तम्— "स्वातन्त्र्यं मन्यमानस्य रागाद्धर्मं च कुर्वतः । तन्निमित्तस्तु दोषः स्यात् गुणश्च स्यात् स्वकर्मजः ॥" इति ।

अत एवापरोक्षज्ञानिभिः इन्द्रादिदेवैरीषदहङ्काररागाभ्यां कृतं वृत्रहत्यादिकं किञ्चिद्बन्धकमिति ज्ञायते । ईषत्प्रारब्धानर्थसूचकं च तद्भवति । महश्चेद्वृत्रहत्यादिवदिति य ईषत् बध्यते स ईषदहङ्कारी चेति च भाष्यकारोक्तेः । रागादिना ब्राह्मणादिहनने दोषो दैत्यादिहनने पुण्यमित्यर्थः । रागद्वेषाभ्यां धर्मञ्चाधर्मञ्च कुर्वतः सुखदुःखे स्यातामित्यर्थः ॥ १७ ॥

**भाष्यम्**

**तज्ज्ञानं स्तौति यस्येति । यस्त्वीषद् बद्ध्यते स ईषदहङ्कारी च ॥ १७ ॥**

***प०टी०***— अहं कर्तेति मन्यमानो न जानातीत्युक्तम् । विपरीतत्वे को गुणः ? इत्यतः श्लोकमवतारयति **तदिति** । नन्वहङ्कारादिरहितेन्द्रादेरपि वृत्रवधादिनेषद्बद्धत्वात् कथमेतत् ? इत्यत आह **यस्त्विति** ॥ १७ ॥

***प्र०दी०***— अवश्यं चैतदेवम्, यावतोत्तरश्लोके स्वात्मानमकारणं जानतः स्तुतिः क्रियते । अन्यथा ससहायस्य कारणत्वं जानतः स्तुतिः क्रियेतेति भावेनाह **तदिति** । स्वात्मनो निष्क्रिय-त्वज्ञानम् । ननु निरहङ्कारस्यापीन्द्रादेः वृत्रवधादिनेषत् बन्धो दृश्यते । तत्कथमेतत् ? इत्यत आह **यस्त्विति** । इयं च कल्पना वक्तुराप्तत्वादिना युज्यते ॥ १७ ॥

***भा०दी०***— **ईषद्बन्धो दृश्यत इति** । 'ब्रह्महत्या हते तस्मिन् नाससाद वृषाकपिम्' इत्यादिना षष्ठस्कन्धे प्रसिद्धमिति भावः । **इयं चेति** । भाष्यकारीया कल्पना 'यस्य नाहङ्कृतो भावः'

इति वक्तुः कृष्णस्याप्तत्वात्, आदिपदोक्तान्यथानुपपत्तिबलादेः अहङ्कारस्य पारिजातहरणेन्द्रयागविघातादौ दर्शनेन सम्भावितत्वाच्च युज्यत इति अपेरर्थः ॥ १७ ॥

*भा०र०*— **एतत्** 'तत्रैवं सति' इति श्लोकव्याख्यानं **यावता** यतः **अन्यथा** अकारणं जानतः स्तुत्यनभिप्राये **आत्मनो** जीवस्य **एतत्** निष्क्रियत्वज्ञानिनः स्तवनम् । **ईषद्बन्ध इति** । 'हरेर्दुःखं कुतोऽभवत् इति, 'स आवसत् पुष्करनालतन्तून्' इति भागवतादिवचनादिति भावः । अप्रमाणरूपत्वाद् अश्रद्धेयम् ? इत्यत आह **इयं चेति** । निरहङ्कारस्यापि इन्द्रादेः ईषदहङ्कारकल्पना **वक्तुः** 'यस्य नाहङ्कृतो भावः' इति उपदेष्टुर्गीताचार्यस्य **आप्तत्वेन** अर्जुने प्रेमवत्त्वेन तत्त्वज्ञानोद्देशेन प्रवृत्तेन च श्रद्धेयेत्यर्थः । भागवताद्यागम आदिपदार्थः । दृश्यते चेन्द्रस्य पारिजातहरणकाले, इन्द्रयागभङ्गकाले चाहङ्कारः । स चाप्यल्पकाल एवेति ईषच्छब्दो भाष्यटीकयोरित्यपि आहुः ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**"स्वातन्त्र्यमीश्वरे वेत्ति नैवात्मनि कदाचन ।**
**ईश्वराधीनमेवात्मन् स्वातन्त्र्यं तु जडान् प्रति ॥**
**तारतम्येन लक्ष्म्यादेर्जीवान् प्रति च सर्वशः ।**
**यस्तदर्थं समुत्पन्नो यथा रुद्रो यथा यमः ॥**
**हत्वाऽपि स इमान् लोकान् न हन्ति न निबद्ध्यते ।**
**अज्ञस्तदर्थं जातोऽपि बध्यते दैत्यवद् ध्रुवम् ॥**
**अपरोक्षदृङ् न जातो यस्तदर्थं मुक्तिगं सुखम् ।**
**हसेत् तस्य परोक्षज्ञः किञ्चिद् दोषेण लिप्यते ॥" इति च ।**

*प्रका०*— "यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमान् लोकान् न हन्ति न निबध्यत" इत्यस्यार्थमाह **स्वातन्त्र्यमित्यादिना** । लक्ष्म्यादेः स्वातन्त्र्यं वेत्तीत्यनुषञ्जनीयम् । अपरोक्षदृक् लोकहननार्थं न प्रजातो यो लोकान् हन्ति तस्य मुक्तिगं सुखं हसेत् परोक्षज्ञः लोकहननार्थमजातोऽपि लोकान् यो हन्ति सः किञ्चिद्दोषेण लिप्यत इत्यर्थः ।

***न्या०दी०***— **तज्ज्ञानं स्तूयते 'यस्य' इति । एतच्च सर्वानहङ्कारादिमतां सममित्यन्यथाप्रतीतिनिरासाय वचनान्तरेणैव व्याचष्टे स्वातन्त्र्यमिति ॥ आत्मन्** आत्मनि । **लक्ष्म्यादेश्च स्वातन्त्र्यं वेत्तीत्यनुषज्यते । तदर्थं लोकहननार्थम् । तदर्थं** जातत्वेनैवालम्,

किमीश्वरस्वातन्त्र्यादिज्ञानेनेत्यत आह **अज्ञ इति** ॥ लोकान् हन्ति चेदिति शेषः । तर्हि ज्ञानेनैवालं, किं तदर्थं जातत्वेन इत्यतः परोक्षापरोक्षज्ञानिनोरपि तदर्थमजातयोर्लोकहनने विभागेन बाधकमाह **अपरोक्षेति** ॥ परोक्षज्ञस्तदर्थमजातो यदि लोकान् हन्ति तर्हि किञ्चिद्दोषेण लिप्यत इत्यर्थः । अपरोक्षेत्युक्त्या ज्ञानं चापरोक्षमपेक्षितमिति सूचितम् । परोक्षज्ञानेन तदर्थं जातत्वेनैवालम्, किमपरोक्षज्ञानेनेत्यतो वाऽऽह **परोक्षेति** ॥ अत्र तदर्थं जात इति ग्राह्यम् ।

*भा०दी०*— तज्ज्ञानं स्तूयत इति । स्वात्मनोक्तकर्तृत्वज्ञानमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

अस्वातन्त्र्यज्ञानात् हन्मीति भावोऽप्यस्य नास्तीति न हन्ति । अन्यस्य भावोऽस्तीति विशेषः । "बुद्धिर्यस्य न लिप्यते" इति । रागान्न हन्ति, किन्तु धर्मबुद्ध्या ।

*न्या०दी०*— ननु सर्वेषामप्यस्वतन्त्रत्वेन अहन्तृत्वात् अस्यैव न हन्तीति किं विशिष्योच्यत इत्यत आह **अस्वातन्त्र्येति** ॥ भावोऽस्य नास्तीत्यन्यस्य भावोऽस्तीति हेतोर्न हन्तीति विशेषो युक्त इति योज्यम् । न हन्तीत्युच्यत इत्यतो न पौनरुक्त्यम् । ननु बुद्धेरलोपो नाम स्वातन्त्र्याभिमानपरित्यागः । अतः पुनरुक्तिरित्यत आह **बुद्धिरिति** ॥

*भा०दी०*— मूले इत्यन्तेन न हन्तीत्यस्य हन्मीति भावं न करोतीत्यर्थमुपेत्य पौनरुक्त्यमाशङ्क्योच्यत इति शेषपूरणेन तन्निराह **न हन्तीत्युच्यत इत्यत इति** ॥ **पुनरुक्तिरिति** । नाहङ्कृतो भाव इत्यनेनेति योज्यम् ॥

**गीतातात्पर्यनिर्णयः**

"स्वातन्त्र्यं मन्यमानस्य रागाद् धर्मं च कुर्वतः ।
तन्निमित्तस्तु दोषः स्याद् गुणश्च स्यात् स्वकर्मजः ॥"

—इति च ॥ १७ ॥

*न्या०दी०*— भवेदेवं, "यस्य नाहङ्कृतो भावो", "बुद्धिर्यस्य न लिप्यते" इत्यनयोरर्थभेदो यदि स्वातन्त्र्याभिमानफलरागयोरुभयोरपि बन्धकत्वं स्यात् । तदेव कुत इत्यत आह **स्वातन्त्र्यमिति** ॥

**गीता**

# ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
# करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ १८ ॥

*वि०वि०*— यदि जीवो न कर्ता तर्हि तदुद्देशेन प्रवृत्तश्रौतस्मार्तविधिवैय्यर्थ्यप्रसङ्ग इत्यत आह **ज्ञानमिति** । ज्ञानं विधिविषयम् । ज्ञेयं चेच्छाप्रयत्नलक्षणम् । अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च । परिज्ञाता सर्वज्ञ ईश्वरः सर्वप्रेरक इति त्रिविधः । कर्मविधिरितिनिमित्तनिमित्तिनोरभेदोपचारात् त्रिविधेत्युच्यते । अयमाशयः— नापराधिनकर्तृत्वं विधिविषयत्वे प्रयोजकं येन जीवं प्रति कर्मविधिवैय्यर्थ्यं स्यात् । तथा सति ईश्वरस्यापि विधिविषयत्वापातात् । किन्तु, यस्य स्वसम्बन्धितया विधिज्ञानं, कर्म तत्फलं चोद्दिश्येच्छा, तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं, कर्मसम्बधः । फलभाक्त्वं चास्ति । तं प्रति कर्मविधयः प्रवर्तन्ते । अस्ति चेदं समस्तं परमेश्वरप्रसादायत्तं जीव इति कथं तं प्रति न कर्मविधयः । तत्प्रेरणादेवेश्वरस्य स्वातन्त्र्येऽपि विधिद्वारेणैव ज्ञानेच्छाप्रवृत्तिजनकत्वमवसीयते । न चाज्ञानपूर्वानुष्ठाने फलमिति ।

अथवा, दैवं चेति ईश्वरस्य कर्मसु प्रेरकत्वमुक्तम् । तत्प्रेरणास्वरूपं निरूपयति **ज्ञानमिति** । कर्मचोदना कर्मसु प्रेरणा 'ज्ञानं ज्ञेयं परिज्ञाता' इति त्रिविधा । ज्ञान–ज्ञेय–ज्ञातृस्वरूपभगवत्स्वरूपभूतेत्यर्थः । उक्तं च— ''सम्प्रेरयितुरीशस्य कर्मस्वखिलचेतनान् । ज्ञातृज्ञेयज्ञानरूपा प्रेरणा सा स एव यत् ॥ स्वरूपेणैव नित्या सा विशेषात्मतया भवेत् । विशेषोऽपि स्वरूपेण नित्यश्च स्याद्विशेषतः॥ स्वनिर्वाहकता यस्मान्नानवस्था विशिष्टवत् ।'' इत्यादि । पूर्वोक्तकर्मकारणानि सङ्क्षिप्याह **करणमिति** । कर्मचेष्टा द्वितीयकर्मशब्देन तत्कारणानि लक्ष्यन्ते । सङ्ग्रहः पञ्चकारणानां सङ्क्षेपः । अधिष्टानस्य कर्मणि अन्तर्भावाद्दैवशब्दोदितेश्वरस्यैव मुख्यकर्तृत्वात्स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनोक्तेः । कर्मकारणानां त्रैवियमित्यर्थः ॥ १८ ॥

*वा०ल०*— 'ज्ञानं ज्ञेयम्' इत्यत्र, ज्ञानं कर्मकाण्डतत्त्वार्थज्ञानम् । ज्ञेयं ज्योतिष्टोमादिकर्म । परिज्ञाता कर्ममीमांसायां कुशलः । करणं कर्मणः क्रिया ॥ १८ ॥

*सा०सं०*— ननु जीवस्य स्वतः कर्तृत्वाभावे 'यजेत' इत्यादि विधीनां वैय्यर्थ्यं स्यात् । जडेश्वरमुक्तानां तदविषयत्वादित्यत आह **ज्ञानमिति** । विधिश्चोदना प्रेरणेति पर्यायः । **कर्मचोदना** यजेतेत्यादिकर्मसु प्रेरणा । '**ज्ञानं ज्ञेयं परिज्ञाता** इति' इति शब्दो योज्यः । **त्रिविधा** ज्ञानादिरूपेण त्रिविधा । **ज्ञानं** विधिविषयम् । **ज्ञेयं** चेष्टाप्रयत्नरूपप्रवृत्तिलक्षणम् । **(अधिष्ठानादिलक्षणं)** पुरुषार्थ-

लक्षणं च । **परिज्ञाता** तु सर्वज्ञसर्वप्रेरकेश्वरसन्निहितो जीवराशिः । तत्त्रितयनिमित्तं कर्मचोदना प्रवर्तत इति । 'दधित्रपुसं प्रत्यक्षो ज्वर' इत्यादाविव निमित्तनिमित्तिनोरभेदोपचारेण निमित्तत्रैविध्येन नैमित्तिकचोदनाऽपि त्रिविधेत्युपचर्यते । 'यजेत' इत्यादि श्रौतस्मार्तविधौ सति स्वप्रवृत्तिविषयप्रेरणा ज्ञानं भवति । ततश्चेच्छाप्रयत्नरूपप्रवृत्तिरात्मसन्निहितेश्वरप्रेरणया पुमर्थमुद्दिश्य कर्मणि जीवस्य भवति इति विधिज्ञानादेः कर्मचोदनायाश्च निमित्तनिमित्तिभावो ध्येयः ।

न च स्वतः कर्तृत्वाभावात् पराधीनकर्तृजीवस्य विधिज्ञानद्वारा कथं प्रवृत्त्याद्यर्थं विधिविषयत्वमिति शङ्क्यम् । अपराधीनकर्तृत्वस्य विधिविषयतायां प्रयोजकत्वेन क्वाप्यनुपलम्भेनान्वयव्यतिरेकाभ्यां पराधीनकर्तृशक्तिकस्यैव विधिविषयत्वावश्यम्भावात् । जडेश्वरमुक्तानां विध्यविषयत्वेन प्रमाणभूतविधेर्वैयर्थ्यायोगाच्च । पराधीनकर्तुरेव परिशेषप्रमाणेनाऽपि विधिविषयत्वस्यावश्यकत्वाच्च । तस्माज्जीवे विध्यविषयेभ्यो जडेश्वरमुक्तेभ्यो व्यावृत्तस्य स्वसम्बन्धितया विधिज्ञानस्य तज्जन्यायाः फलतत्साधनेच्छायाः साधनविषयकृतेश्चानुभवसिद्धत्वात्, तस्य च ज्ञानादेः 'न ऋते त्वत्' (ऋ. १०-११३-९) इत्यादिश्रुतिभिरीश्वराधीनत्वेऽप्यस्वतन्त्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभाक्त्वं च युक्तम् । तदुक्तं गीताभाष्ये 'अकर्तृत्वेऽपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति ..... न प्रवृत्तिविधिवैयर्थ्यम्' इति ।

यद्वा, 'दैवं चैव' इति पूर्वत्र दैवपदेनेश्वरस्य कर्मसु प्रेरकत्वमुक्तम् । तत्प्रेरणास्वरूपमुच्यते । **ज्ञानमिति** । **कर्मचोदना** कर्मसु जीवानामीश्वरप्रेरणा । **ज्ञानं ज्ञेयं परिज्ञातेति त्रिविधा** । ज्ञानज्ञेयपरिज्ञातृरूपत्रिविधभगवत्स्वरूपेत्यर्थः । विशेषबलाद्धर्मधर्मिभावः । तस्येयं प्रेरणेत्याद्युक्तिश्च युक्तेति भावः । पूर्वोक्तपञ्चकर्मकारणानि सङ्क्षिप्याह **करणमिति** । **करणम्** इन्द्रियस्रुक्स्रुवादि । **अधिष्ठान**पदोक्तदेहादिकमदृष्टं च । **कर्म** हस्तादिचेष्टा । कर्तृपदेन जीवेश्वरावुभावपि ग्राह्याविति । **त्रिविधः कर्मसङ्ग्रहः** कर्मकरणसङ्ग्रहः । पञ्चकारणानां सङ्क्षेप इति ॥ १८ ॥

***अ०प्र०***— **ननु** जीवो न कर्ता । तर्हि तं प्रति प्रकृतस्य श्रौतस्मार्त्तविधेः वैय्यर्थ्यं स्यात् । यद्वा, हत्वाऽपि न हन्ति न निबध्यते इत्येतदेवमुपपादयितुं कर्मचोदनायाः कर्माश्रयस्य च कर्मफलादीनां च त्रिगुणात्मकत्वात् निर्गुणस्य आत्मनः तत्सम्बन्धो नास्तीत्यभिप्रायेण कर्मचोदना कर्माश्रयं चाह **ज्ञानमिति** ।

ज्ञानं = विधिविषयम् । यद्वा, इष्टसाधनं एतदिति बोधः विषयज्ञानं, ज्ञेयं = इच्छाप्रयत्नलक्षणं अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च । यद्वा, इष्टसाधनं कर्म सामान्यतो ज्ञानेन ज्ञायत इति

ज्ञेयं[२], परिज्ञाता = सर्वज्ञ ईश्वरः सर्वप्रेरकः । यद्वा, एवम्भूतज्ञानाश्रयः जीवः[३], एवं त्रिविधा कर्मचोदना = कर्मविधिः उत्पद्यते प्रवर्त्यते अनयेति चोदना इति त्रयं कर्मप्रवृत्तिहेतुरित्यर्थः[१], तदुक्तं भट्टैः— 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति ।

ततश्चायमर्थः— उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्तत इति । तदुक्तम्— 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुने'ति ।

यद्वा, निमित्तनिमित्तिनोरभेदोपचारात् त्रिविधं युक्तम् । एतत्त्रिविधं निमित्तमपेक्ष्य कर्मविधिः प्रवर्तत इत्यर्थः । एतदुक्तम्—

'न स्वतन्त्रकर्तृत्वं विधिविषयत्वे प्रयोजकम् । एवं सति जीवं प्रति कर्मविधिवैय्यर्थ्यं स्यात्। तथा सति ईश्वरस्यापि विधिविषयत्वं स्यात् । किन्तु स्वस्य सम्बन्धितया विधिज्ञानं कर्म तत् फलञ्चोद्दिश्येच्छा तदनुगुणश्च प्रयत्नोऽधिष्ठानं हि सन्निधानं कर्मसम्बन्धः फलभोक्तृत्वं चास्ति तं प्रति कर्मविधिः यः प्रवर्तते अस्ति चेदं संमतम् । परमेश्वराधीन जीव इति कथम् ? न तं प्रति कर्मविधेयं स्युरिति स्वतन्त्रोऽपीश्वरो जीवे जीवे विधिज्ञानमुत्पाद्यैवेच्छाप्रयत्नौ कारयित्वोक्तशरीरादि पञ्च कारणैः कर्म च कारयित्वैव फलं नियमेनैव ददातीति । यद्वा, अहङ्कारकारितं भ्रान्तिप्रतीतिकर्तृत्वं जीवस्यैवास्ति । यतोऽपि तं प्रति विधिः सम्भवति । परमेश्वरकृतासु क्रियासु स्वस्य स्वातन्त्र्यं मन्यमानस्यापराधिनो जीवस्य विधिबन्धलक्षणो दण्डः क्रियत इति । यद्वा, जडापेक्षया स्वातन्त्र्यं जीवश्चेश्वराधीनमस्तीत्यतोऽपि न विधिवैय्यर्थ्यं स्यादिदं प्रवृत्तिविधिवैय्यर्थ्यं यदि जीवस्य क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं सर्वथा न स्यात् । न चैवम्, ईश्वरायत्तस्य तस्याङ्गीकारात् । अपराधिनापेक्षया तदभावोक्ते न चैवं जडतोऽल्पं जडं हि तदा तदा परकृतेन ओदनादिना क्रियावत् भवति । न हि आगन्तुककारणमन्तरेण स्वेच्छया जीवस्त्वनादिसिद्धया परमेश्वरप्रसादतया सत्तातुल्यया क्रियाशक्त्या कर्तेति युक्तस्तं प्रति कर्मविधिरिति विधिज्ञाने सति इच्छाप्रयत्नादि इत्येतदनुभवसिद्धम् । ईश्वराधीनत्वं तु यथा नियुक्तोऽस्मि तथा करोमीति आगमादनुमानाच्च सिद्धम् । अथवा, 'दैवं चैवात्र पञ्चमं' इत्यत्र दैवशब्देनेश्वरग्रहणपक्षे ईश्वरस्य कर्मसु प्रेरकत्वमुक्तम् । तत्प्रेरणास्वरूपं निरूपयति **ज्ञानमिति** । कर्मचोदना = कर्मसु प्रेरणा ज्ञानं ज्ञेयं परिज्ञातेति त्रिविधा ज्ञानं स ज्ञेयज्ञातस्वरूपभगवत्स्वरूपेत्यर्थः । उक्तं च— "सम्प्रेरयितुरीशस्य कर्मस्वखिलचेतनात् । ज्ञातृज्ञेयज्ञानरूपा प्रेरणा या स एव यत् ॥ स्वरूपेणैव नित्या सा विशेषात्मतया भवेत् । विशेषोऽपि स्वरूपेण नित्यश्च स्याद्विशेषतः ॥ स्वनिर्वाहकता यस्मात् नानवस्था विशिष्टवत् । विशेष्यस्य विशिष्टस्याप्यभेदेऽप्यविवादिनी ॥ विशेषस्त्वेव नात्रास्ति ह्यनवस्था कथञ्चन" इति ।

ननु प्रेरणायाः भगवद्धर्मत्वात् कथं ज्ञातृत्वादीत्यत आह **स्वेति** । प्रेरणायाः ज्ञानादिरूपभगवत्स्वरूपत्वेन तथात्वमुपपद्यत इत्यर्थः । प्रेरणायाः तदा तदा जायमानायाः कथं भगवत्स्वरूपत्वमित्यत आह **स्वरूपेणैवेति** ॥ न प्रेरणा तदा तदोत्पद्यते । किन्तु भगवत्स्वरूपतया सदा विद्यमानैव व्यक्तिरूपेण जायते । अतो भगवत्स्वरूपमुपपन्नमिति भावः । यो यत् प्रेरणाया व्यक्तिरूपो विशेषः सोऽपि नानित्यमिति शङ्कनीयम् । तस्य नित्यप्रेरणारूपत्वेन सदा विद्यमानस्यैव विशेषतो जायमानत्वादित्याह **विशेषोऽपीति** । एवं विशेषस्यापि विशेषस्तस्यापीत्यनवस्था स्यादित्यत आह **स्वनिर्वाहकतेति** ॥ भवेदनवस्था यदि प्रेरणाभिन्नो विशेषः तस्यापि तथेत्यङ्गीक्रियते । न चैवं सा प्रेरणा स्वयमेव स्वात्मानं विशेषतया निर्वहति । सविशेषोऽप्येवमित्यङ्गीकारादित्यर्थः । एतद्दृष्टान्तेनोपपादयति विशिष्टवदिति तदेव विवृणोति **विशिष्टस्येति** । सन् घटो जातो घट इत्यादि विशिष्टविशेष्ययोः अविप्रतिपन्नो अभेदः धर्मधर्मिभेदवादिनाऽपि तस्याऽङ्गीकारात् । न च विशिष्टविशेष्ययोः निर्विशेषाभेदः । तथा सति सन् घट इति शब्दयोः पर्यायतापातात् । न च विशेष्यवस्तुनस्तद्विशेषेण च स्वनिर्वाहकत्वात् । एवमीश्वरप्रेरणया विशेषस्तस्यापि विशेष इत्यङ्गीकारेऽपि न कश्चिद्दोष इति प्रमाणवाक्यार्थः । पूर्वोक्तकर्मकरणानि सङ्क्षिप्याह **करणमिति** ॥ करणं = साधकतमं कर्म च कर्तुरीप्सिततमं कर्ता क्रिया निवर्तकः कर्तृकरणकर्मेति त्रिविधः = त्रिप्रकारः कर्मसङ्ग्रहः = कर्मणामुद्भवः कर्मकारणानां पञ्चानां सङ्ग्रहः । कर्म सङ्गृह्यतेऽस्मिन्निति कर्मसङ्ग्रहः । करणादि त्रिविधं कारकक्रियाश्रय इत्यर्थः । सम्प्रदानादिकारकत्रयं तु परम्परया क्रियानिवर्तकमेव । केवलं तु साक्षात् क्रियायाः आश्रयः । अतः करणादित्रितयमेव क्रियाश्रय इत्युक्तम् । यद्वा, सङ्क्षेपः कर्मशब्देन तत्कारणानिं लक्ष्यन्ते करणेति मध्यमपदलोपो वा क्रियतेऽनेनेति करणं साधनो वा कर्मशब्दः । अधिष्ठानस्य च दैवशब्दार्थस्य दृढस्य च करणेऽन्तर्भावः । यद्वा, कर्तुरिव करणं सर्वकर्मप्रवर्तने समर्थानीति करणम् । करणानीन्द्रियाणीत्युच्यन्ते । काश्यपात्र्याभुदेवनकृतमन्यथेति प्रयोगात् । यद्वा, दैवशब्दोदितेश्वरस्यैव मुख्यकृतत्वात् स्वतन्त्रास्वतन्त्रकर्त्रोरीशजीवयोः कर्तृशब्देनोक्तेः कर्मकारणानां त्रैविध्यमित्यर्थः ॥ १८ ॥

**भाष्यम्**

**एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वात् इत्यत आह ज्ञानमिति । त्रिविधा कर्मचोदना । एतत्त्रिविधमपेक्ष्य कर्मविधिरिति त्रिविधा इत्युच्यते ।**

*प०टी०*— ननु जीवस्याकर्तृत्वे घटादिवन्न विधिस्तं प्रतीत्येतत्परिहाराय श्लोकार्धमवतार्य व्याचष्टे **तर्हीति** । ज्ञानादित्रयस्य जीवे विद्यमानत्वेन घटादिविलक्षणत्वात् तं प्रति विधिरित्यर्थः ।

*प्र०दी०*— यदि न जीवस्य कारणत्वं कथं तर्हि तज्ज्ञानादेरुत्तरवाक्ये कर्मणां मूलकारणत्व-मुच्यते ? 'ज्ञानादित्रयं कर्मणां प्रवर्तकमिति, इत्याशङ्क्य तस्यार्थान्तरं विवक्षुः, तन्निवर्त्यामाशङ्का-माह **एवं तर्हीति** । यदि जीवो न कर्मणां कारणमित्यर्थः । **विधिः** श्रौतः स्मार्तश्च । **न** प्रवर्तेत, ततश्च 'तद्वैयर्थ्यप्रसङ्गः' इति शेषः । 'एवं तर्हि' इत्युक्तस्यैव विवरणम् **अकर्तृत्वादिति** 'जीवस्य घटवत्' इति शेषः ।

ननु ज्ञानादिरूपेण कर्मचोदनायाः त्रैविध्यमयुक्तमनुपयुक्तं च कथमुच्यते ? नियोक्तुः प्रेरणं हि विधिः । न च तज्ज्ञानादित्रयरूपम् । न च अनेनोक्तशङ्कानिवृत्तिरित्यत आह **त्रिविधेति** । स्पष्ट-प्रतीत्यर्थोऽनुवादः । 'इत्यत्र' इति शेषः । एतत् ज्ञानादिकम् । **कर्मविधिः** 'प्रवर्तते जीवं प्रति' इति शेषः । **इतिशब्दो** हेतौ । **त्रिविधा इत्युच्यते** कर्मचोदना । निमित्तनैमित्तिकभावेन अभेदोपचार इत्यर्थः ।

*भा०दी०*— उच्यत इत्युक्तम् । तत्कथम् ? इत्यतो ज्ञानं ज्ञेयम् ? इत्यत्र तात्पर्यमाह **ज्ञानादित्रयमिति** । 'प्रवर्तते' इति शेषोक्तिः । तेन **अपेक्ष्य** इति ल्यबन्तप्रयोगोपपत्तेरिति भावः । **तद्वैयर्थ्येति** । विधिवैयर्थ्यर्थं जडेश्वरयोः विध्यविषयत्वाज्जीवं प्रत्यप्यविधाने वैयर्थ्यमेवेति भावः । कस्य । इत्यतो 'जीवस्य' इति शेषोक्तिः । जीवो न विधिविषयः कर्तृत्वात् घटवदिति प्रयोग इति भावः । अयुक्तत्वानुपयुक्तत्वे क्रमाद् व्यनक्ति **नियोक्तुरित्यादिना** । **एतद्** इत्यनुवादः, **ज्ञानादिकम्** इति व्याख्या । **प्रवर्तते** इति शेषोक्तेः प्राग्वदेव कृत्यम् । अयुक्त इति शङ्कायाः किमुत्तरमुक्तम् ? इत्यत आह **निमित्तेति** । जीवस्याकर्तृत्वात् घटादेरिव विधिविषयतेत्यनुपयुक्तत्वशङ्कानिरासस्तु 'अकर्तृत्वेऽपि' इत्यादि भाष्ये भविष्यतीति भावः ।

*भा०र०*— 'तज्ज्ञानादेः = जीवज्ञानादेः' इत्यत्र आदिपदेन ज्ञेय-परिज्ञातृग्रहणम् । **कर्मणां** कर्माणि प्रति । तत्कथम् ? इत्यतः 'त्रिविधा कर्मचोदना' इत्यस्य तात्पर्यमाह **ज्ञानादित्रयमिति**। **तस्य** ईश्वरवाक्यस्य । पुरुषमपेक्ष्य = जीवमधिकृत्येति भाष्यार्थः स्फुट इति भावेन विधिं विवृण्वन् तत्र शेषमाह **विधिरित्यादिना** । 'प्रवर्तेत' इत्यत्रेष्टापत्तिमाशङ्क्योक्तम् **ततश्चेति** । जडेश्वरमुक्तानां अतदधिकारित्वाद् जीवान् प्रत्यपि अप्रवृत्तौ विधिर्व्यर्थ एव स्यादित्यर्थः । अयुक्तत्वमुपपादयति **नियोक्तुः प्रेरणं हीति** । **तत्** प्रेरणम् । अनुपयुक्तत्वमुपपादयति **न चानेनेति** । **उक्तशङ्का** 'एवं तर्हि' इति भाष्योक्तशङ्का 'एतद्' इत्यनुवादः । 'ज्ञानादिकम्' इति व्याख्या । 'इति हेतुप्रकरण-प्रकारादिसमाप्तिषु इत्यभिधानादाह **इतिशब्द इति** । 'उच्यते' इत्याख्यातोपात्तकर्म **कर्मचोदनेति** ।

ननु कर्मविधिनिमित्तानां ज्ञान-ज्ञेय-परिज्ञातॄणां त्रैविध्यमेवानेन ज्ञायते, न कर्मचोदनायाः । तत्कथं 'कर्मचोदना त्रिविधा' इत्युक्तिः ? इत्यत आह **निमित्तनैमित्तिकाभावेनेति** ॥

**भाष्यम्**

**कारणानि सङ्क्षिप्याह करणमिति । कर्मसङ्ग्रहः कर्मकारणसङ्ग्रहः । अधिष्ठानादि कारण एवान्तर्भूतम् ।**

***प०टी०*** — 'करणम्' इत्यनेन न कारणान्तरं शङ्क्यमिति भावेनाह **कारणानीति** । कर्मसङ्ग्रह एवोच्यते न तु कारणसङ्ग्रह इत्यत आह **कर्मेति** । कथं पञ्चकस्य त्रयेऽन्तर्भावः ? इत्यत आह **अधिष्ठानादीति। आदिपदाद्दैवम्** ।

***प्र०दी०*** — कर्मकरणानामुक्तत्वात् किमिदं पुनरुच्यते ? इत्यत आह **कारणानीति** । तर्हि 'कर्मसङ्ग्रहः' इति कथम् ? 'कारणसङ्ग्रहः' इति वक्तव्यत्वादित्यत आह **कर्मेति** । कर्मशब्देन तत्कारणानि लक्ष्यन्त इत्यर्थः । यदि पञ्चानां कारणानामयं सङ्ग्रहस्तर्हि कस्य कुत्रान्तर्भावः ? इत्यत आह **अधिष्ठानादीति** ।

**आदिपदेन** दैवपदोक्तमदृष्टं गृह्यते । 'कांस्यपात्र्या पात्र्या भुङ्क्ते', 'दैवेन कृतमन्यथा' इत्यादिवत् साधकतमत्वेन विवक्षितत्वात्, 'विवक्षातः कारकाणि भवन्ति' इति वचनात् । न च आदिपदेन चेष्टायाः सङ्ग्रहः । तत्र कारकान्तर्भावस्यैवौचितत्वात् । 'कर्म' इति पृथग्ग्रहणाच्च । न च कर्म अदृष्टम् । 'कर्म चेष्टा' इत्यन्यत्र व्याख्यातत्वात् ।

'कर्तुरीप्सिततमं कर्म' इति **कश्चित्** । तदसत् । पञ्चसु कारणेषु तस्य अगृहीतत्वात् ।

***भा०दी०*** — देहभूम्याद्यधिष्ठानस्यादृष्टस्य च कथं कारणकोटिप्रवेशः ? इत्यतः प्रयोगौ दर्शयति **कांस्यपात्र्येति** । कर्तृकरणयोस्तृतीया इति भावः । अन्यथा चिति 'तं कार्यं दैवेन कृतमन्यथा' इति प्रयोगात् करणान्तर्गतिः युक्तेत्यर्थः । तत्रापि कथम् ? इत्यत आह **साधकेति** । **आदिपदेनेति** । 'अधिष्ठानादि' इत्यादिपदेनेत्यर्थः । **तत्रेति** । कारणेषु अधिष्ठानादिकारणान्तर्भावस्यैवोचितत्वात् । चेष्टायाश्च कारकव्यापारत्वेन कारकत्वाभावादिति भावः । **अन्यत्रेति** । तात्पर्ये।

***भा०र०*** — **उक्तत्वात्** 'अधिष्ठानं तथा कर्ता' इत्यत्र । 'तत्कारणानि' इति वदन् कर्मकारणभावलक्षणं लक्षणाबीजं सम्बन्धमभिसन्धत्ते । **अयं** 'करणं कर्म कर्ता' इत्यर्थः । **सङ्ग्रहः** सङ्ग्राहकः । ननु देहभूम्यादिरूपाधिष्ठानशब्दिताधिकरणस्य कथं करणत्वम् ? 'आधारोऽधिकरणम्',

'साधकतमं करणम्' इति तयोर्विविक्तस्वरूपोक्तेः । देवपदोक्तं अदृष्टं च कारणमेव, न तु करणं इति तस्यापि न करणेऽन्तर्भावो युक्तः, इत्यतो भाष्यं घटयितुमाह **कांस्यपात्रेति** । विवक्षामात्रेण 'कर्तृकरणयोस्तृतीया' इति विहिततृतीयाकारकविभक्तिः । कुतः ? इत्यत आह **विवक्षात इति वचनादिति** । अत्र 'इति' शब्द आद्यर्थः । तेन "क्रियाया परिनिष्पत्तिः यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥" इति भर्तृहरिवचनं च गृहीतं भवति । **इतिवचनात्** 'करण एवान्तर्भूतमिति युज्यते' इति योज्यम् । **तत्र कारकान्तर्भावस्येति** । अवान्तरव्यापारं कारणं हि कारकमुच्यते, अवान्तरव्यापारश्च चेष्टैव, इति चेष्टायाः तत्तत्कारकावान्तरव्यापारत्वस्य स्वरसतया तत्तत्कारकेष्वन्तर्भावस्यैवोचितत्वेन स्वयं तस्याः करणत्वस्याविवक्षणीयत्वाद् आदिपदेन न तद्ग्रहणमुचितमिति भावः । 'कुलालचेष्टया घटो जातः' इति प्रयोगात् चेष्टायाः कारकत्वावगतिसम्भवाद् युक्तः करणेष्वन्तर्भावस्तस्य, इत्यतो दूषणान्तरमाह **कर्मेति पृथग्ग्रहणाच्चेति** । 'करणं कर्म कर्ता' इत्यत्र चेष्टायाः करणात् पृथगुक्तत्वादित्यर्थः । **अन्यत्र** तात्पर्यनिर्णये । 'कर्म ईप्सिततमं कर्तुः क्रियया प्राप्यमाणम्' इति शङ्करभाष्यं सङ्गृह्यानुवदति **कर्तुरीप्सिततममिति** । **तस्य** परोक्तस्य कर्मशब्दार्थस्य ।

**भाष्यम्**

**तथा हि ऋग्वेदखिलेषु— "ज्ञानं ज्ञेयं ज्ञानिनं चाप्यपेक्ष्य विधिरुत्थितः । करणं चैव कर्ता च कर्मकारणसङ्ग्रहः" इति ॥**

**अकर्तृत्वेऽपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्या उक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतः तेनैव ।**

***प०टी०***— श्लोकार्थे प्रमाणमाह **तथा हीति** । ननु जीवस्य अकर्तृत्वे **पुरुषार्थभावात्** कथं तं प्रति विधिः ? इत्यत आह **अकर्तृत्वेऽपीति** । तर्हि विधिनियतत्वमेव नेशाधीनत्वं जीवस्येत्यत आह **ईश्वरेति** ।

***प्र०दी०***— श्लोकार्थे श्रुतिसम्मतिं चाह **तथा हीति**। 'कर्म' इत्यावर्तनीयम् । तत्रैकं व्यस्तम्। परं समस्तम् । ननु 'ज्ञानं ज्ञेयम्' इत्यनेन कथमुक्तशङ्कानिरासः ? इत्यत आह **अकर्तृत्वेऽपीति** । अपराधीनकर्तृत्वाभावेऽपि जीवस्य न तं प्रति विधिवैयर्थ्यम् । कुतः ? 'इति हेतोः' इत्यन्वयः । विधिशब्देन तज्ज्ञानमुपलक्ष्यते । 'इच्छा' इत्यनेन प्रयत्नोऽपि । उक्तकारणैरधिष्ठानादिभिः ।

अनेन **ज्ञानं** विधिविषयं, **ज्ञेयं** च इच्छाप्रयत्नलक्षणम्, अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च । **परिज्ञाता** सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितोऽस्ति । अतस्तं प्रति कर्मचोदनेत्यर्थः सूचितो भवति ।

***भा०दी०***— तृतीयलाभायाह **कर्मेत्यावर्तनीयमिति । उक्तशङ्कानिरास इति** । एवं तर्हि 'न पुरुषमपेक्ष्य विधिः' इत्युक्तशङ्केत्यर्थः । **इत्यन्वय इति** । तस्यापि न प्रवृत्तिविधिवैयर्थ्यम्' इत्यनेन अन्वयः । श्लोकार्थं निष्कृष्याह **अनेनेति** । विधिभाष्येणेत्यर्थः ।

***भा०र०***— ननु श्रुतौ करणकर्त्रोः द्वयोरेवोक्तत्वात् 'त्रिविधः कर्मसङ्ग्रहः' इति श्लोकार्धे कथमियं सम्मतिः? इत्यत आह **कर्मेत्यावर्तनीयमिति** । तथा चोक्तार्थसम्मतित्वमुपपन्नमिति भावः । **उक्तशङ्का** 'एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वात्' इति भाष्योक्तशङ्का । 'अकर्तृत्वमनुभवबाधितम्' इत्यतो व्याचष्टे **अपराधीनकर्तृत्वाभावेऽपीति** । 'जीवस्य' इति 'तं प्रति' इति च शेषः । 'इति' इत्यनूद्य व्याख्याति **इति हेतोरिति** । स्वरूपतो विधेः इच्छाद्युत्पादकत्वाननुभावादाह **विधिशब्देनेति** । 'तज्ज्ञानम्' इति वदन् विषयविषयीभावलक्षणं लक्षणाबीजसम्बन्धमभिसन्धत्ते । **प्रयत्नोऽपि** 'उपलक्ष्यते' इति वर्तते । तत्रापि कार्यकारणभावः सम्बन्ध इति भावः । **अनेन** 'विधिद्वारा' इत्यादिभाष्येण गीतायां ज्ञेयपदेन विवक्षितान् भाष्यसूचितान् अर्थान् दर्शयति **ज्ञेयं चेति । इच्छाप्रयत्नेति**। 'मदिष्टसाधनमिदं मया कार्यम्' इति ज्ञात्वा हि पुरुषः प्रयतत इति भावः।

***प्र०दी०***— एतदुक्तं भवति । नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकम् । येन जीवं प्रति कर्मविधिवैयर्थ्यं स्यात् । तथा सति ईश्वरस्यापि विधिविषयत्वापातात् । किं तु यस्य स्वसम्बन्धितया विधिज्ञानं, कर्म, तत्फलं च उद्दिश्य इच्छा, तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं कर्मसम्बन्धः, फलभाक्त्वं चास्ति तं प्रति कर्मविधयः प्रवर्तन्ते । अस्ति चेदं समस्तं परमेश्वरप्रसादायत्तं जीव इति कथं न तं प्रति कर्मविधयः स्युः इति ? एतत्सङ्ग्रहवाक्यमुत्तरवाक्यैर्विव्रियते ।

नन्वीश्वरश्चेत् प्रेरको जीवशरीरेऽभ्युपगतः तदा तत्प्रसादादेवेच्छाप्रयत्नयोरुत्पादात् किं विधिज्ञानमङ्गीक्रियते ? इत्यत आह **ईश्वरेति** । **इच्छति** 'प्रयतते च' इति शेषः । अनेन विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्यैतद्विवृतं भवति ।

***भा०दी०***— **तथा सतीति** । अपराधीनकर्तृत्वस्यैव विषयत्वप्रयोजकत्वे सतीत्यर्थः । **विध्यपीति** । तस्यापीत्यपेरर्थः । **कर्मसम्बन्धः** कर्मानुष्ठातृता । जीवे इति सप्तम्यन्तम् । **विधिज्ञानेति** । अनेनात्रापि विधिशब्दो विधिज्ञानपर इत्युक्तं भवति ।

*भा०र०*— ननु 'जीवो न विधिविषयो भवितुमर्हति अकर्तृत्वाद् घटवत्' इति परोत्प्रेक्षितानुमानस्य किं दूषणमुक्तम् ? इत्यतो भावमाह **एतदुक्तं भवतीति । स्वसम्बन्धितया** 'सम्प्रतीदम् इष्टसाधनावबोधकम्' इत्येवं स्वाधिकारिकतया प्रत्येकं च तेषां विधिविषयताप्रयोजकत्वं ज्ञातव्यम् । तथा च स्वसम्बन्धितया विधिज्ञानाद्यभाववत्त्वम् उक्तानुमाने उपाधिरित्याशयः। **स्युरिति** । 'एतदुक्तं भवति' इति सम्बन्धः । विवरणप्रकारं दर्शयितुं शङ्कामुत्थापयति **नन्वीश्वरश्चेदिति** । 'विधिज्ञानम्' इति वदता 'विधिद्वारा' इति भाष्ये विधिशब्दो विधिविषयज्ञानपर इति विभावितं भवति । विधिज्ञानं निमित्तमात्रमिति भावेन भाष्ये एवकारः, तेनैव नियत इत्यपूर्तेः । भाविभाष्ये 'इच्छादिः' इति सन्निहितमध्याहरति **इच्छतीति** । यदुक्तं 'विव्रियते' इति तदाह **अनेनेति** ।

**भाष्यम्**

## यदि च इच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतम् ।

*प०टी०*— नन्वेतावन्मात्रं जीवस्य कर्तृत्वं चेन्नास्ति, तर्हि न तं प्रति विधिरित्यत आह **यदि चेति** । जीवेच्छानन्तरमेवेशेन क्रियते, अतस्तं प्रति विधिरित्यर्थः । इतश्च तं प्रति विधिरित्याह **फलं चेति** ।

*प्र०दी०*— उक्तकारणैः कर्म भवतीत्युक्तम् । तेनाधिष्ठानादीनां स्वव्यापारे स्वातन्त्र्यं प्राप्तम् । तन्निरासार्थमाह **यदि चेति । ईश्वरेणैव** कर्माधिष्ठानादीनि निमित्तमात्राणि कृत्वा **कारितं** भवति । अत्र णिचं प्रयुञ्जानस्य **स्वातन्त्र्यम्** इति वक्ष्यमाणोऽभिप्रायः ।

कर्मद्वारा पुरुषार्थो भवतीति पुरुपार्थसाधने कर्मणां प्राधान्यं प्राप्तम् । अत आह **फलं चेति**। ईश्वरेणैवेति वर्तते । यद्वा 'यदि च' इत्यादिना वाक्यद्वयेन विधिविषयतासिद्धये कर्मफलसम्बन्धस्य काकतालीयता निराक्रियते । इदं च नेश्वरमुक्तजडेपु विध्यविषयेष्वस्ति, किं तु संसारिष्वेवेति भवति प्रयोजकम् ।

*भा०दी०*— 'कर्म भवतीत्युक्तम्' इत्यर्थानुवादः । 'जायते' इत्यत्र केन ? इत्याकाङ्क्षायामुक्तम् **ईश्वरेणैवेति** । 'कारितम्' इत्यत्र विशेष्याकाङ्क्षायामुक्तं **कर्मेति** । अधिष्ठानादेरवैयर्थ्यायोक्तं **निमित्तमात्राणीति** । 'कारितम्' इत्युक्त्या प्रयोजककर्तृत्वमेवेति भ्रमनिरासायोक्तं **कर्तृत्वादिति** । तर्हि कृतमिति वाच्यमित्यत आह **अत्रेति** । जीवस्यापि कर्तृत्वमस्तीत्यभिप्राय इत्यर्थः ।

वेदानां वाक्यद्वयमुक्तविवरणपरं किन्तु विधिविषयत्वे हेतुत्वेनोक्तो यः कर्मसम्बन्धः फलसम्बन्धश्च तद्द्वयं कर्तुजीवस्य निर्हेतुकमिति शङ्काव्यावृत्त्यर्थं प्राप्तमित्याह **यद्वेति । काकतालीयता**

**इति** । यादृच्छिकेत्यर्थः । विधिज्ञानद्वारेच्छाप्रयत्नावुत्पाद्य जीवस्येश्वरः स्वयमेव कर्मसम्बन्धं फलसम्बन्धं च सम्पादयतीति काकतालीयता निरस्यत इत्यर्थः । **इदं चेति** । विधिविषयताया प्रयोजकीभूतं स्वसम्बन्धितया विधिज्ञानोत्पन्नेच्छाप्रयत्नद्वारा ईश्वरकारितकर्मफलसम्बन्धवत्त्वमित्यर्थः । 'संसारिष्वेव' इत्यनन्तरं 'इति'शब्दः अध्याहार्यः ।

विवृतमेतत् चन्द्रिकायाम् जीवेऽपि विध्यविषयेभ्यः ईश्वरजडमुक्तेभ्यो व्याहतस्य स्वसम्बन्धितया विधिज्ञानस्य तज्जन्यायाः फलसाधनेच्छायां साधनविषयकृते अनुभवसिद्धत्वात्, तस्य ज्ञानादेः सम्मते त्वत् इत्यादिश्रुतिभिरीशाधीनत्वेऽप्यस्वतन्त्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभात्त्वं च युक्तमिति ।

*भा०र०*— 'कर्म भवति' इत्यनुवदन् भाष्ये 'कर्म' इत्यावर्तनीयम् । तत्रैकं व्यस्तं तत्रापि भवतीत्यस्यान्वयः, परं समस्तं इत्यभिसन्धत्ते । कर्म कारितमित्यन्वयः । तेषां वैयर्थ्यपरिहारायोक्तम् **निमित्तमात्राणीति** । **णिचं** करोतेर्णिच्प्रत्यये निष्पन्नं कारितपदम् । वक्ष्यमाणस्वातन्त्र्यं च जडमपेक्ष्य इत्यत्र इत्यभिप्रायः । अस्ति जीवस्यापि ईश्वरायत्तं क्रियायां स्वातन्त्र्यलक्षणं कर्तृत्वमित्यभिप्रायः ।

**पुरुषार्थसाधने** तन्निष्पादने । नेदं वाक्यद्वयम् उक्तविवरणपरं अतिस्वारस्यालाभात् । किन्तु विधिविषयत्वे प्रयोजनकत्वेनोक्तो यः कर्मसम्बन्धः फलसम्बन्धश्च तद्वयं कर्मकर्तुः जीवस्य यादृच्छिकं इति शङ्कानिरासार्थमेव प्रवृत्तमिति पक्षान्तरमाह **यद्वेति** । विधिविषयतासिद्धये जीवस्य **कर्मफलसम्बन्धस्य** कर्मसम्बन्धस्य च **काकातालीयतेति** । अत्र काकतालशब्दौ वृत्तिविषये स्वार्थनिष्ठक्रियावचनौ । ततश्च काकागमनमिव तालपतनमिव काकतालम्, 'समासाच्च तद्विषयात्' इति इवार्थविषयात् समासाद् अन्यस्मिन्निवार्थे छप्रत्ययविधानात् काकतालीयम् = अवितर्कितोपनतम्, तस्य भावः तत्ता काकतालीयता । लोके यथा– काकस्यागमनं तालस्य च पतनम्, तेन च पतता तालेन काकस्य वधः काकतालीय इत्युच्यते, तथा अवितर्कितसम्भवत्वनिरासायेति तदर्थः । **इदं चेति** । वाक्यद्वयोक्तं विधिविषयताप्रयोजकीभूतं स्वसम्बन्धितया विधिज्ञानोत्पन्नेच्छाप्रयत्नद्वारकस्वतन्त्रेश्वरकारितकर्मफलसम्बन्धवत्त्वरूपमित्यर्थः । स्पष्टमेतत् 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणचन्द्रिकायाम् । जीवेऽपि विध्यविषयेभ्य ईश-जड-मुक्तेभ्यो व्यावृत्तस्य स्वसम्बन्धितया विधिज्ञानस्य, तज्जन्यायाः फले साधने चेच्छायाः, साधन-विषयकृतेः स्वानुभवसिद्धत्वात् । तस्य च ज्ञानादेः 'न ऋते त्वत्' इत्यादिश्रुतिभिरीश्वराधीनत्वेऽपि अस्वतन्त्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभात्त्वं च युक्तमिति ।

**भाष्यम्**

**वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडम् अपेक्ष्यैवेति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतद् अनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ॥ १८ ॥**

*प०टी०*— ननु जीवस्य कर्तृत्वे सति तस्य ईश्वरकारित्वं स्यात् । तस्य फलं च स्यात् । तदभावात् कथमेतत् ? इत्यत आह **वस्तुत इति** । ननु तथाऽपि घटादिवदस्वातन्त्र्यात् न तत्र तं प्रति विधिरित्यत आह **स्वातन्त्र्येति** । नन्वत्राप्यपूर्वेऽर्थे प्रमाणमवश्यं वाच्यमित्यत आह **सर्वं चेति** । अनुभवेनोक्तप्रमाणैश्च ॥ १८ ॥

*प्र०दी०*— एवमेकं गीतोक्तं कारणमुक्त्वा भाष्यकारः कारणान्तरं चाह **वस्तुत इति** । **वस्तुतः** परमार्थतः । **आभिमानिकम्** अहङ्कारकारिते भ्रान्तिप्रतीतम् । **तस्य** जीवस्य **एव** इत्यवधारणेन अस्य जीवं प्रति विधिप्रवृत्तौ प्रयोजकत्वं समर्थयते । परमेश्वरकृतासु क्रियासु स्वस्य स्वातन्त्र्यं मन्यमानस्य अपराधीनो विधिबन्धलक्षणो दण्ड इति भावः ।

प्रकारान्तरमाह **स्वातन्त्र्यं चेति** । 'तस्य' इति वर्तते । स्यादिदं विधिप्रवृत्तिवैयर्थ्यं यदि जीवस्य क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं सर्वथा न स्यात् । न चैवम् । ईश्वरायत्तस्य तस्याङ्गीकारात् । अपराधीनापेक्षया तदभावोक्तेः । न चैवं जडतौल्यमित्याह **जडमपेक्ष्येति** । 'अधिकम्' इति शेषः । जडं हि तदा परकृतेन नोदनादिना क्रियावद्भवति । न त्वागन्तुककारणमन्तरेण स्वेच्छया । जीवस्तु अनादिसिद्धया परमेश्वरप्रसादायत्तया सत्तातुल्यया क्रियाशक्त्या कर्तेति युक्तस्तं प्रति कर्मविधिरिति ।

नन्वेतत् सर्वं कुतः प्रमाणात् प्रतिपत्तव्यम् ? इत्यत आह **सर्वं चेति** । अनुभवेनोक्तप्रमाणैश्च । 'विधिज्ञाने सतीच्छोत्पत्तिः' इत्यादिकमनुभवसिद्धम् । 'ईश्वरप्रसादात्' इत्यादिकं तु 'यथा नियुक्तोऽस्मि' इत्याद्युदाहृतागमसिद्धम् । **पृथक्** पुनः ॥ १८ ॥

*भा०दी०*— **गीतोक्तमिति** । 'ज्ञानं ज्ञेयम्' इति गीतोक्तमित्यर्थः । 'समर्थयते' इत्युक्तं व्यनक्ति **परमेश्वरेति** । कथमनेन विधिविषयत्वप्रकारोपपादनम् इत्यत आह **स्यादिदमित्यादिना** । 'अधिकम्' इत्युक्तेः कृत्यमाह **जडं हीति** । विक्रिया चानुभवरित्युक्त्या विक्रियारूपावान्तरक्रियायामस्ति कर्तृत्वं तस्येति सूचितम् । अनुभवादिकं व्यनक्ति **विधिज्ञाने सतीत्यादिना** । **उदाहृतेति** । 'यथा नियुक्तोऽस्मि तथा वहामि' इति पञ्चरात्रागमेत्यर्थः । **पृथक्** इत्यनुवादः । **पुनः** इति व्याख्या । तावता कथं मोक्षसाधनप्रपञ्चनम् ? इत्यत आह **सात्त्विकं हीति** ॥ १८ ॥

*भा०र०*— 'वस्तुतः = स्वरूपतः' इति प्रतीतिनिरासाय व्याचष्टे **परमार्थत इति** । परमार्थतः कर्तृत्वाभावेऽभिमानमात्रेण कथं कर्तृत्वं स्यात् ? इत्यत आभिमानिकत्वं व्याचष्टे **अहङ्कारकारितभ्रान्तिप्रतीतमिति** । 'तस्य' इत्यस्यार्थः **जीवस्येति** । **अस्य** अहङ्कारकारितभ्रान्तिप्रतीतकर्तृत्वस्य । समर्थनप्रकारं दर्शयति **परमेश्वरकृतास्विति** । **प्रवृत्तिविधीति** । प्रवृत्त्यनुकूलो विधिः प्रवृत्तिविधिः = प्रवर्तकविधिरित्यर्थः । 'अकर्तृत्वेऽपि' इत्याद्युक्तेर्गतिमाह **अपराधीनेति** । अपराधीनकर्तृत्वापेक्षया । **नोदनादिना** नोदनेन अभिघातेन च । 'शब्दाजनकसंयोगो नोदनम्', 'स्पर्शव-द्वेगवद्द्रव्यसंयोगोऽभिघातः' इति पदार्थविदः । क्रियाशक्तेः = कर्मकरणसामर्थ्यस्य अनादिसिद्धत्वोपपादनायोक्तम् **सत्तातुल्यया** स्वरूपसत्तातुल्ययेति ।

*भावप्रदीपिकायां तु*— 'ननु जीवस्याकर्तृत्वे पुरुषार्थाभावात् कथं तं प्रति विधिः ? इत्यत आह 'अकर्तृत्वेऽपी'ति । तर्हि विधिनियतत्वमेव, नेश्वराधीनत्वं जीवस्य ? इत्यत आह 'ईश्वरे'ति । ननु ईषन्मात्रं जीवस्य कर्तृत्वं चेन्नास्ति, तर्हि न तं प्रति विधिः स्यात् ? इत्यत आह 'यदि च' इति । जीवेच्छादिकमेवेश्वरेण क्रियते, अतस्तं प्रति विधिः इत्यर्थः । इतश्च तं प्रति विधिरित्याह 'फलं चे'ति । ननु जीवस्य कर्तृत्वे सति तस्येश्वरकारितत्वं स्यात् । तस्य फलं च स्यात् । तदभावात् कथमेतत् ? इत्यत आह 'वस्तुत' इति । ननु तर्हि घटादिवत् अस्वातन्त्र्यात् कथं तं प्रति कर्मविधिः ? इत्यत आह 'स्वातन्त्र्यं चे'ति इति भाष्यवाक्यानि अवतारितानि ।

'अनुभवेनोक्तानि प्रमाणानि' इति प्रतीतिनिरासायाह **अनुभवेन उक्तप्रमाणैश्चेति** । द्वन्द्वोऽत्र समासश्चेति हृदयम् । **विधिज्ञाने सति** विध्यर्थेष्टसाधनताज्ञाने सति । 'इच्छोत्पत्त्यादिकम्' इत्यत्र 'प्रयत्नोत्पत्तिः' आदिपदार्थः । **इत्याद्युदाहृतेति** । 'भावाभावावपि जानन् गरीयो जानामि श्रेयो न तु तत्करोमि । आशासु हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि ॥' इति पञ्चदशाध्यायभाष्योदाहृतागमसिद्धमित्यर्थः । उक्तप्रमाणसिद्धत्वं विलक्षणप्रमाणानुक्तौ न हेतुः ? इत्यतः पृथक्छब्दस्य विवक्षितमर्थमाह **पृथक् पुनरिति** ॥ १८ ॥

*गीताक्षरार्थस्तु*—

न केवलं वैकल्पिककाम्यकर्मणां फलोद्देशेन क्रियमाणत्वस्य विशेषणस्य त्यागेन त्यागः, नियतकाम्यानां स्वरूपाकरणेन त्यागश्च संन्यासः । किन्तु कर्तृत्वाभिमानत्यागश्च इत्येवं प्रागुक्तं संन्यासं प्रपञ्चयितुं आत्मनो कर्तृत्वे क्रियाया अनिष्पत्तिप्रसङ्गाद् अङ्गीकार्ये च कर्तृत्वे कथं तदभिमानत्यागो युक्तः ? इत्याशङ्कापरिहारार्थम् आत्मव्यतिरिक्तान्येव कर्मकारणान्युच्यन्ते **पञ्चैतानि**

**इत्यादित्रिभिः** । हे **महाबाहो ! सर्वकर्मणां सिद्धये** निष्पत्तये **एतानि** वक्ष्यमाणानि पञ्च कारणानि **मे** मम सकाशात् **निबोध** अवगच्छ । कर्तृत्वाभिमानत्यागे श्रोतुर्विश्वासजननायोच्यते **साङ्ख्ये कृतान्ते प्रोक्तानीति** । **साङ्ख्ये** ज्ञानार्थे **कृतान्ते** सिद्धान्ते, सिद्धान्तशब्देन तत्प्रतिपादकं शास्त्रं लक्ष्यते । कपिलाख्यविष्णुनिर्मितसाङ्ख्यनामकशास्त्रे ज्ञानानुकूलकर्मकारणानि **प्रोक्तानि** इति प्रतिज्ञातोक्तिः ॥ १३ ॥

**अधिष्ठानमिति** । **अधिष्ठानं** देह-भूम्यादि **कर्ता** सर्वस्वतन्त्रकर्ता विष्णुः **पृथग्विधं** नानाप्रकारं **करणं** इन्द्रिय-स्रुवादि **विविधाः** नानाप्रकाराः **पृथक्चेष्टाः** परस्परं भिन्ना हस्तादि-क्रियाः । अवान्तरव्यापारं हि कारणं कारकमुच्यते । तत्तदधिष्ठानादिपदैः देहाद्यर्थकैः व्यापारिणो निर्दिश्यन्ते । चेष्टाशब्देन क्रियावाचिना तु अवान्तरव्यापारः । कारकाश्रिताभिः देहावान्तरक्रियाभिः प्रधानक्रियाजननं प्रसिद्धमिति भावेन भाष्ये हस्तादिक्रियाभिर्हि होमादिकर्माणि जायन्त इत्युप-पादितम् । **अत्र** कर्मनिष्पत्तौ **दैवं** अदृष्टं **पञ्चमं** पञ्चानां पूरणम् । तथा-चशब्दाः परस्परसमुच्चये, एवशब्दस्तु 'एवं पञ्चैव कर्मकारणानि, न पुनर्जीवोऽपि कारणकोटिनिविष्टः' इत्यर्थः सन् जीवे क्रियाकर्तृत्वाभिमानत्यागं द्योतयति ॥ १४ ॥

अधिष्ठानादेः कारणत्वमुपदिश्यते **शरीरेति** । शरीरेण वाचा मनसा च **नरो यत् कर्म प्रारभते** निवर्तयति किं तत् कर्म **न्याय्यं** न्यायादनपेतं धर्म्यं श्रुतिविहितं **विपरीतं** अन्याय्यम् = अधर्म्यं निषिद्धं वा **तस्य** कर्मणः **एते** अधिष्ठानादिदैवान्ता **हेतवः** कारणानि । तथा च जीवस्य तत्रानन्त-र्भावात् कर्तृत्वाभिमानोऽनेन हातव्य इति भावः । यद्यप यथोक्तैः पञ्चभिरेव कर्म प्रारभ्यमाणम् । तथापि त्रिष्वेवान्तर्भावाभिप्रायेण एवमुक्तम् । शारीरं वाचिकं मानसं चेति कर्म त्रिविधमिति प्रसिद्धेः ॥ १५ ॥

कर्तृत्वाभिमानी त्यागी विनिन्द्यते **तत्रैवमिति** । **तत्र** कर्मणि **एवं सति** पञ्चानामेव कारणत्वे सति **केवलं** निष्क्रियं = परप्रेरणां विना स्वतःक्रियाविहीनं **आत्मानं** स्वात्मानं **यः कर्तारं** क्रियायां स्वातन्त्र्येण विवक्षितं कारकं **पश्यति सः अकृतबुद्धित्वात्** श्रवण-आचार्योपदेशादिना अशिक्षितबुद्धित्वाद् **दुर्मतिः** अविद्यमानकर्तृत्वमतिमत्तया मिथ्यामतिः **न पश्यति** तत्त्वज्ञानी न भवतीत्यर्थः ॥ १६ ॥

कर्तृत्वाभिमानत्यागी तु स्तूयते **यस्येति** । **यस्य** पुंसः **अहङ्कृतः** अहमित्येवं कृतः = 'अहं कर्ता' इत्येवम्भूतो **भावः** अभिप्रायः **न** अस्ति । **यस्य बुद्धिः** फले **न लिप्यते**, किन्तु 'कर्तव्य-

मेव' इति कर्मणि प्रवर्तते **सः इमान् लोकान्** हत्वाऽपि **न हन्ति** 'हन्मि' इत्यभिमानाभावात् **न निबध्यते** कर्मफलभूतस्वर्गनरकादिना । एतच्च वाक्यं ईश्वरे स्वातन्त्र्यज्ञानी यो विश्वहननाय जातो रुद्रो यमो वा तद्विषयं अन्यत्र स्थितम् । ननु निरहङ्कारस्यापि इन्द्रादेः वृत्रवधादिना ईषद्बन्धो दृश्यते। तत्कथमियमुक्तिः ? इति शङ्का 'यस्त्वीषद् बध्यते स ईषदहङ्कारी च' इति भाष्ये परिहृता ॥१७॥

ननु यदि जीवो न कर्मणां कारणं तर्हि श्रौतः स्मार्तश्च विधिः तं प्रति न प्रवर्तते । ततश्च ईश्वर-मुक्त-जडानां अतदर्हत्वात् तद्वैयर्थ्यप्रसङ्ग इत्यत इदमुच्यते **ज्ञानमिति । ज्ञानं** विधिविषयं **ज्ञेयं** च इच्छाप्रयत्नलक्षणं अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च **परिज्ञाता** सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितः । अतस्तं प्रति **त्रिविधा कर्मचोदना** कर्मविधिः प्रवर्तते । अत्र कर्मविधिनिमित्तानां ज्ञान-ज्ञेय-परिज्ञातृणां त्रिविधत्वात् निमित्त-नैमित्तिकभावेनाभेदोपचार इति 'त्रिविधा कर्मचोदना' इत्युक्तिः ।

एतदुक्तं भवति । नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकम्, येन जीवं प्रति कर्मविधिवैयर्थ्यं स्यात् । तथा सतीश्वरस्यापि विधिविषयत्वापातात् । किन्तु यस्य स्वसम्बन्धितया विधिज्ञानं कर्म तत्फलं चोद्दिश्य इच्छा तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं कर्मसम्बन्धः फलभात्क्त्वं चास्ति तं प्रति कर्मविधयः प्रवर्तन्ते । अस्ति चेदं समस्तं परमेश्वरप्रसादायत्तं जीवे इति तं प्रति कर्मविधयः स्युरिति पूर्वोक्तानि कर्मकारणानि सङ्क्षिप्योच्यन्ते **करणमिति । करणम्** इन्द्रिय-स्रुवादि **कर्म** हस्तादिक्रियारूपा चेष्टा **कर्ता** विष्णुः इति **त्रिविधः कर्मसङ्ग्रहः** । अत्र कर्मशब्देन कर्मकारणानि लक्ष्यन्ते, तेषां सङ्ग्रहः = सङ्क्षेपः । यद्यपि कर्मकारणानि पञ्चोक्तानि । तथाप्यधिष्ठानस्य दैवपदोक्तादृष्टस्य च करण एवान्तर्भावविवक्षया 'त्रिविधः कर्मकारणसङ्ग्रहः' इत्युक्तिः इत्याकरे स्फुटम् ॥१८॥

**गीतातात्पर्यनिर्णयः**

**"सम्प्रेरयितुरीशस्य कर्मस्वखिलचेतनान् ।**
**ज्ञातृज्ञेयज्ञानरूपा प्रेरणा सा स एव यत् ॥**
**स्वरूपेणैव नित्या सा विशेषात्मतया भवेत् ।**
**विशेषोऽपि स्वरूपेण नित्यश्च स्याद् विशेषतः ॥**

*प्रका०*—"ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना" इत्येतदुपपादयति **सम्प्रेरयितुरित्यादिना** ।

***न्या०दी०*—** "दैवं चैव" इतीश्वरस्य कर्मसु प्रेरकत्वमुक्तम् । तत्प्रेरणास्वरूपं निरूप्यते 'ज्ञानम्' इति । तत्स्मृत्योपपादयति **सम्प्रेरयितुरिति** ॥ प्रेरणाया भगवद्धर्मत्वात् कथं ज्ञातृत्वादीत्यत आह **सेति** ॥ प्रेरणाया ज्ञानादिरूपभगवत्स्वरूपत्वेन तथात्वमुपपद्यत इत्यर्थः । प्रेरणायास्तदा तदा जायमानायाः कथं भगवत्स्वरूपत्वमित्यत आह **स्वरूपेण इति** ॥ न प्रेरणा तदा तदोत्पद्यते । किन्तु भगवत्स्वरूपतया सर्वदा विद्यमानैव व्यक्तिरूपेण जायते । अतो भगवत्स्वरूपत्वमुपपन्नमिति भावः । योऽयं प्रेरणाया व्यक्तिरूपो विशेषः सोऽपि नानित्य इति शङ्कनीयम् । तस्य नित्यप्रेरणारूपत्वेन सदा विद्यमानस्यैव विशेषतो जायमानत्वादित्याह **विशेषोऽपीति** ॥

**गीतातात्पर्यनिर्णयः**

**स्वनिर्वाहकता यस्मान्नानवस्था विशिष्टवत् ।**
**विशेष्यस्य विशिष्टस्याप्यभेदेऽपि विवादिनि ॥**
**विशेषोऽस्त्येव नात्रास्ति ह्यनवस्था कथञ्चन ।**
**ज्ञातुरन्योऽहमिति तु कस्याप्यनुभवो न हि ।**
**अस्मि ज्ञातैवाहमिति भेदस्तस्मात् तयोः कुतः ॥**
**पश्यामीति विशेषोऽयमिदानीं मे समुत्थितः ।**

***प्रका०*—** जगत्प्रेरणे सधर्मत्वेनेशाभिन्नत्वादीशवत् ज्ञानज्ञेयपरिज्ञातृरूपधर्मिस्वरूपेण नित्यं विशेषरूपेण जायते । धर्मिस्वरूपेण नित्यत्वं विशेषरूपेण जायमानत्वं विशेषस्य न विशेषान्तरं तस्य स्वनिर्वाहकत्वेनावरोधात् । अत एव विशेषस्य विशेषान्तरापेक्षया नानावस्था भवेत् । यथा एकमेव वस्तु विशेष्यं विशिष्टमिति उच्यते । न हि विशेष्यविशिष्टयोः भेदः केनचिदङ्गीकृतो धर्मधर्मिभेदवत् । विशेष्यविशिष्टयोरभेदेऽपि विशेषोऽस्त्येव अनर्थान्तरभूतः । अन्यथा तच्छब्दयोः पर्यायत्वं स्यात् । एवं विशेषस्य विशेषोऽपि नार्थान्तरभूत इत्यर्थः । विशेष्यविशिष्टयोगेऽत्यन्ताभेदं साधयति **ज्ञातुरित्यादिना** ।

***न्या०दी०*—** एवं विशेषस्यापि विशेषस्तस्यापीत्यनवस्था स्यात् इत्यत आह **स्वनिर्वाहकतेति** ॥ भवेदनवस्था, यदि प्रेरणाया भिन्नो विशेषस्तस्यापि तथेत्यङ्गीक्रियते । न चैवम् । सा प्रेरणा स्वरूपमेव स्वात्मानं विशेषतया विशेषितया निर्वहति । स विशेषोऽप्येवमित्यङ्गीकारादित्यर्थः । एतद् दृष्टान्तेनोपपादयति **विशिष्टवदिति** ॥ तदेव

विवृणोति **विशेष्यस्येति** ॥ अस्ति तावद् विशेष्यविशिष्टयोरविप्रतिपन्नोऽभेदः । धर्मधर्मिभेदवादिनाऽपि तस्याङ्गीकृतत्वात् । न च विशेष्यविशिष्टयोर्निर्विशेषाभेदः । तथा सति ज्ञातृदेवदत्तशब्दयोः पर्यायतापातात् । न च विशेषोऽपि निर्विशेषः । तथात्वे विशेषविशेषिशब्दयोः पर्यायत्वापत्तेः । न चैवं विशेष्यस्यापि विशेषाङ्गीकारेणानवस्थाऽस्ति । विशेष्यवस्तुनस्तद्विशेषाणां च स्वनिर्वाहकत्वात् । एवं ईश्वरप्रेरणाया विशेषस्तस्यापि विशेष इत्यङ्गीकारे न कश्चिद्दोष इति भावः । भवेदेतद्विशेष्यविशिष्टयोरभेदसिद्धौ, स एव कुत इत्यत आह **ज्ञातुरिति** ॥ विशेष्यविशिष्टयोर्भेदानुभवाभावात् अभेदानुभवसद्भावाच्च न भेद इति भावः । विशेष्यविशिष्टयोरभेदेऽनुभवान्तरं च दर्शयति **पश्यामीति** ॥ म इति विशेष्यमुच्यते । विशेषः समुत्थित इति तस्यैव विशिष्टत्वम् ।

*भा०दी०*— **तस्याङ्गीकृतत्वादिति** । विशेष्यविशिष्टयोरभेदस्याङ्गीकृतत्वादित्यर्थः ॥ **ज्ञाता देवदत्त इति** । ज्ञातृत्वविशिष्ट इत्यर्थः । देवदत्त इति विशेष्योक्तिः । दार्ष्टान्तिके योजयति **एवमीश्वरेति** । अण पण गताविति धातोर्निरुक्तत्वादेव न दीर्घत्वं, किन्तु पररूपत्वमिति भावः ॥

**गीतातात्पर्यनिर्णयः**

इत्याद्यनुभवाद् भेदो न विशेष्यविशिष्टयोः ।
विशेषणं तु द्विविधं विशेषाख्यं तथेतरत् ॥
विशेषमणयेद् येन प्रोक्तं तेन विशेषणम् ।
विशेषोऽपि विशेषस्य स्वस्यैव गमको भवेत् ॥"

—इत्यादि तत्त्वविवेके ।

*प्रका०*— येन विशेषेण विशेषितं वस्तु विशिष्टमित्युच्यते **विशेषणमित्यादिना** । इतरत् दण्डादिकं दण्डीत्यादौ ज्ञातव्यम् । **अणयेद्** गमयेत् इत्यर्थः ।

*न्या०दी०*— विशेषणयुक्तं विशिष्टम् । तद्विशेषणं निरूपयति **विशेषणमिति** । विशेषाख्यं यथा "वस्तुनोऽस्तित्वं", "फलस्य नीलत्वम्" इति । इतरत् अत्यन्तभिन्नं दण्डादि । तदुभयमपि विशेषणमिति कस्मादुच्यत इत्यत आह **विशेषणमिति** ॥ **अणयेत्** गमयेत् । ननु दण्डादिविशेषणं वस्तुनि दण्डत्वादिविशेषं गमयति, विशेषः किं गमयेदित्यत आह **विशेषेति** ॥

**गीतातात्पर्यनिर्णयः**

**सङ्ग्रहः पञ्चकारणानां सङ्क्षेपः । अधिष्ठानस्य करणेऽन्तर्भावात् । दैवशब्दोदितेश्वरस्यैव मुख्यकर्तृत्वात् स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेः त्रैविध्यम् । कर्म चेष्टा ॥ १८ ॥**

*प्रका०*— "पञ्चैतानि महाबाहो कारणानि निबोध मे" इत्युपक्रम्य "अधिष्ठानं तथा कर्ता कारणं च पृथग्विधम् । विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्" इत्युक्तानां पञ्चानां कारणानां त्रिषु कारणेषु अन्तर्भाव्यं यत् प्रतिपादकं वचः "करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः" इति तद्व्याचष्टे **सङ्ग्रह इत्यादिना** ॥

***न्या०दी०*— पूर्वोक्तकर्मकारणानि सङ्क्षिप्यात्रोच्यन्ते 'करणम्' इति । तत्र कर्मसङ्ग्रहकथनं क्वोपयुज्यत इत्यतस्तदनूद्य मध्यमपदलोपिसमासोऽयमिति भावेन व्याचष्टे सङ्ग्रह इति ॥ कथमधिष्ठानादिपञ्चकस्य करणादित्रित्वमित्यत आह अधिष्ठानस्येति ॥ ननु पूर्वानुक्तकर्मणोऽत्र कथनात् कथं तेषामयं सङ्क्षेपः स्यादित्यत आह कर्मेति ॥**

**गीता**

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

*वि०वि०*— सात्त्विकज्ञानादिसाधनानुष्ठानाय प्रतिज्ञापूर्वकं पुनर्गुणभेदानाह **ज्ञानमित्यादिना** । गुणाः सङ्ख्यायन्तेऽस्मिन्निति गुणसङ्ख्यानं तस्मिन्साङ्ख्यशास्त्रे॥ १९ ॥

*वा०ल०*— 'गुणसङ्ख्याने' इत्यत्र, गुणसङ्ख्याने गुणसङ्ख्यानाख्यपञ्चरात्रविभागे ॥ १९ ॥

*सा०सं०*— सात्त्विकज्ञानकर्मादेः मुक्तिहेतुत्वात् तदनुष्ठानाय सत्त्वादिगुणनिमित्तान् ज्ञानादिभेदान् प्रतिज्ञापूर्वमाह **ज्ञानमिति** । **सत्त्वादिगुणभेदतः** ज्ञानादिकं प्रत्येकं द्विविधम् । **गुणसङ्ख्याने** गुणाः सङ्ख्यायन्ते यत्र **तस्मिन्** वैदिकसाङ्ख्यशास्त्रे **प्रोच्यते** । **तान्यपि यथावत्** यथास्थितं **शृणु** ॥ १९ ॥

*अ०प्र०*— सात्त्विकानां ज्ञानादीनां पुमर्थसाधनत्वेनानुष्ठानाय प्रतिज्ञापूर्वकं पुनर्ज्ञानतो ज्ञानादिभेदानाह **ज्ञानमिति** ।

गुणसङ्ख्याने[१], ज्ञानं[२], कर्म च[३], कर्ता च[४], एवं[५], गुणभेदतः[६], त्रिधा उच्यन्ते[७], तान्यपि[८], यथावत्[९], प्रोच्यते[१०] तच्छृणु[११] इत्यन्वयः ।

गुणसङ्ख्याने = गुणाः सम्यक्कार्यभेदेन सङ्ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसङ्ख्यानं विष्णुकृतसाङ्ख्यशास्त्रं तस्मिन् तथा[१], ज्ञानं कर्म च कर्ता च[४], एवं = ज्ञानादि त्रयं[५], गुणभेदतः = सत्त्वादिगुणभेदेन[६], त्रिधा = त्रिप्रकारेणैव उच्यते[७], तान्यपि = सात्त्विकादि ज्ञानादीन्यपि[८], यथावत् = यथाक्रमम् । यद्वा, यथास्थिततत्वेन[९], प्रोच्यते = वच्मि तच्छृणु वक्ष्यामि श्रुत्वा तत्र निष्ठां कुर्विति भावः[१०], यद्वा, त्रिधैवेत्येवकारो गुणत्रयोपाधिव्यतिरेकेन आत्मनः स्वतः कर्मादिप्रतिषेधार्थः चतुर्दशेऽध्याये तत्र सत्त्वं निर्मलत्वादित्यादिना गुणानां बन्धकत्वप्रकारो निरूपितः । सप्तदशेऽध्याये 'यजन्ते सात्त्विका देवानि'त्यादिना गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादिसेवया सात्त्विकः स्वभावः सम्पादनीय इत्युक्तम् । इह तु क्रियाऽऽकारकफलादीनां आत्मसम्बन्धो नास्तीति दर्शयितुं सर्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १९ ॥

**भाष्यम्**

**पुनः साधनप्रथनाय गुणभेदानाह ज्ञानमित्यादिना । गुणसङ्ख्याने गुण-गणनप्रकरणे ॥ १९ ॥**

***प०टी०*— उत्तरप्रघट्टकं अवतारयति **पुनरिति** । 'गुणसङ्ख्यान'पदेन न साङ्ख्यशास्त्रमित्यत आह **गुणेति** ॥ १९ ॥

***प्र०दी०*— 'ज्ञानं कर्म' इत्यादेः प्रकृतोपयोगाप्रतीतेः तं दर्शयन्नाह **पुनरिति** । मोक्षसाधन-प्रपञ्चनात् प्रागपि गुणभेदानामुक्तत्वात् 'पुनः' इत्युक्तम् । 'गुणसङ्ख्यान'शब्देन कापिलं शास्त्रमुच्यते इति भावेनाह **गुणेति** । तत्र वैदिकमभिप्रेतम् ॥ १९ ॥

***भा०दी०*— **प्रागपीति** । पूर्वाध्यायादौ ॥ १९ ॥

***भा०र०*— **प्रकृतेति** । ज्ञानसाधनस्य सङ्क्षेपेणोपसंहारो ह्येतदध्यायार्थतया प्रकृतः, तत्रोप-योगाप्रतीतेः इत्यर्थः । 'साधनप्रथनाय' इत्यस्यार्थः **मोक्षसाधनप्रपञ्चनायेति** । मोक्षसाधनज्ञानादि-प्रपञ्चनायेत्यर्थः । सत्त्वादिगुणभेदानां अत्र अवचनात् आह **गुणनिमित्तानिति** । **ज्ञानादिभेदान्** ज्ञानकर्मकर्तॄणां भेदान् । गुणनिमित्तज्ञानादिभेदकथनेन कथं मोक्षसाधनप्रपञ्चनम् ? इत्यत आह **सात्त्विकं हीति** । **प्रागपीति** । 'गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन' इति सप्तदशे गुणनिमित्तक-

पुमर्थसाधनानामुक्तत्वादित्यर्थः । दुष्टकापिलशास्त्रस्य निन्दितत्वादाह **तच्चेति** । गुणगणनप्रकरणं चेह वैदिककापिलतन्त्रं विवक्षितम् । अत एव 'गुणसङ्ख्याने = परमसाङ्ख्यशास्त्रे' इति तात्पर्यनिर्णय इति भावः ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**एवं गुणसङ्ख्याने परमसाङ्ख्यशास्त्रे ॥ १९ ॥**

***न्या०दी०***— सात्त्विकज्ञानादिसाधनानुष्ठानाय गुणभेदा उच्यन्ते 'ज्ञानम्' इति । तत्र, गुणाः सङ्ख्यायन्तेऽस्मिन्निति गुणसङ्ख्यानपदेन प्रसिद्धसाङ्ख्यशास्त्रमुच्यत इत्यन्यथाप्रतीति-निरासायाह **एवमिति** ॥ प्रसिद्धसाङ्ख्यशास्त्रमेवात्र किं न स्यादित्यत एवमित्युक्तम् । एवं सर्वगतस्येश्वरस्य सर्वतो भेदादिविषयं ज्ञानं सात्त्विकमित्यादि गुणसङ्ख्याने प्रोच्यत इति ह्यत्रोच्यते । तच्च परमसाङ्ख्यशास्त्रग्रहण एवोपपद्यते, न निरीश्वरसाङ्ख्यग्रहण इति भावः ॥

***भा०दी०***— **सात्त्विकज्ञानादिसाधनेनेति** । सात्त्विकज्ञानकर्मादिः मोक्षसाधनत्वात्सात्त्विक-ज्ञानादिरूपमोक्षसाधनानुष्ठानाय गुणनिमित्तसात्त्विकज्ञानादिभेदा उच्यन्त इत्यर्थः । **एवमित्यनुवादः** । सर्वगतस्येति व्याख्या ॥

**गीता**

**सर्वभूतेषु येनैकं भावमव्ययमीक्ष्यते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

***वि०वि०***— आदौ प्रतिज्ञातं ज्ञानत्रैविध्यमाह **सर्वभूतेष्वित्यादिना** । 'भवन्ति सर्वदा विद्यन्त इति भूतानि जीवाः भवन्त्युत्पद्यन्त' इति व्युत्पत्या जडानि च विभक्तेषु जडेश्वराभ्यां जीवे-श्वराभ्यां परस्परं च । यथायोग्यं भिन्नेषु । यथा तारतम्यविभागवत्सुखदुःखविकारादिनाशवत्सु च सर्वभूतेषु जीवेषु जडेषु अविभक्तं परस्परं भेदशून्यं तारतम्यलक्षविभागरहितं च भूतेषु इत्यधिकरण-निर्देशादेव जीवजडाभ्यां भेदः सिद्धः । अव्ययं दुःखविकारादिनाशरहितम् । एकं सर्वोत्तमं भावं विष्णुं येन ज्ञानेन ईक्षते तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

***वा०ल०***— 'सर्वभूतेषु' इत्यत्र, विभक्तेषु भिन्नभिन्नेषु सर्वभूतेषु, अविभक्तं स्थानभेदेऽपि स्वस्मिन् भेदरहितम् । एकम् एकैकमूर्तावपि स्वकरचरणादिषु भेदरहितम् । भावं नारायणाख्य-पदार्थम् । येन ज्ञानेन ॥ २० ॥

***सा०सं०***— प्रतिज्ञातं ज्ञानत्रैविध्यं तावदाह **सर्वेत्यादित्रयेण** । **विभक्तेषु** परस्परं भिन्नेषु तारतम्योपेतेषु च **सर्वभूतेषु** । भवन्ति विद्यन्त इति भूतानि जीवाः प्रकृत्यादिजडानि च । सर्वेषु जीवेषु जडेषु च । तदाधारकत्वेन तेभ्यो भिन्नत्वेनेति सप्तम्यभिप्रायः । **भावं** सदा विद्यमानं विष्णुम् । **एकं** प्रधानम् । सर्वोत्तममिति यावत् । **अविभक्तं** सर्वत्र स्थितावपि, अधिष्ठानभेद-निमित्तभेदहीनम् । 'ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ' (३-२-११) इति सूत्रोक्त-दिशा सर्वत्र निर्दोषाशेषसद्गुणतया ऐक्येन स्थितमिति यावत् । **अव्ययं** स्वतोऽधिष्ठानव्ययेन च व्ययहीनम् । **येन ज्ञानेन ईक्षते** विषयीकरोति । **तज्ज्ञानं सात्त्विकं विद्धि** जानीहीति ॥ २० ॥

***अ०प्र०***— तत्र ज्ञानस्य सात्त्विकादि त्रैविध्यमाह **सर्वभूतेष्विति** त्रिभिः ।

सर्वभूतेषु[१], विभक्तेषु[२], अविभक्तं[३], अव्ययं[४], एकं[५], भावं[६], येन[७], ईक्ष्यते[८], तत् ज्ञानं[१०] सात्त्विकं[११], विद्धि[१२] ।

सर्वभूतेषु = भवन्ति सदा विद्यन्त इति भूतानि जीवाः भवन्ति उत्पद्यन्त इति व्युत्पत्त्या भूतानि जडानि तेषु ब्रह्मादिस्थावरान्तेषु[१], विभक्तेषु = जडेश्वराभ्यां जीवेश्वराभ्यां परस्परञ्च यथा-योग्यं पञ्चभेदवत्सु तारतम्यलक्षणं विभागवत्सुखविकारादि नाशवत्सु चिदचिद्रूपसर्वभूतेषु स्थितं[२], अविभक्तं = स्वस्यावतारावयवगुणकर्मादिषु परस्परं च भेदशून्यं तारतम्यलक्षणविभागरहितं च[३], अव्ययं = नित्यदुःखविकाराणि नाशरहितं वा[४], एकं = सर्वोत्तमं[५], भावं = निर्विकारभावं सदा विद्यमानं विष्णुः[६], येन = ज्ञानेन[७], ईक्षते = आलोचयति विषयीकरोति वा[८], तज्ज्ञानं सात्त्विकं विद्धि = येन ज्ञानसाधनेन जानाति तत् ज्ञानसाधनं सात्त्विकमिति वा[१२], भूतेषु इत्यधिकरणनिर्देशो देवेशस्य जड-जीवाभ्यां भेदः सिद्धः ॥ २० ॥

**भाष्यम्**

**एकं भावं विष्णुम्** ॥ २० ॥

***प०टी०***— 'सर्वभूतेषु' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे **एकमिति** ॥ २० ॥

***प्र०दी०***— 'एकं भावं' इति सामान्येनोक्तम् । कोऽसौ एको भावः इत्याकाङ्क्षायामाह **एकमिति** ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

"अस्तित्वाद् भूतनामभ्यः सर्वजीवेभ्य एव यत् ।
मुक्तेभ्योऽपि पृथक्त्वेन विष्णोः सर्वत्रगस्य च ॥

ऐक्येन च स्वरूपाणां प्रादुर्भावादिकात्मनाम् ।
तारतम्येन जीवानां भेदेनैव परस्परम् ॥

जडेभ्यश्चैव जीवानां जडानां च परस्परम् ।
तेभ्यो विष्णोश्च सम्यक् तल्लक्षणज्ञानपूर्वकम् ।
ज्ञानं सात्त्विकमुद्दिष्टं यत् साक्षान्मुक्तिकारणम् ॥" ॥ २० ॥

*प्रका०*— "सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तद्ज्ञानं विद्धि सात्त्विकम्" इत्यस्यार्थमाह **अस्त्वित्यादिना** ।

*न्या०दी०*— तत्र प्रतिज्ञातं ज्ञानत्रैविध्यमुच्यते **सर्व इति** । तदप्रतीत्यादिनिरासाय स्मृत्यैव व्याचष्टे **अस्तित्वादिति** ॥ पृथक्त्वेनेत्यन्तेन सर्वभूतेष्विति सप्तम्या अभिप्रायोऽप्युक्तो भवति । विष्णोरित्यादिना अविभक्तमित्युक्तार्थं भवति । तारतम्येन इत्यनेन विभक्तेष्विति द्वेधा व्याख्यातं भवति । अथ भूतशब्देन भवतीति जडं चोच्यत इत्यभिप्रेत्य विभक्तेष्वित्यस्यार्थ उच्यते **जडेभ्य इति** ॥ तेभ्यो जडेभ्य इत्यनेन सप्तम्यर्थ उक्तो भवति ॥ **सम्यगिति** । विष्णुः सर्वोत्तमः, जीवास्तदधीनज्ञानादिमन्तः, जडं तद्रहितमित्यतो विष्णवादीनां भेद इत्यर्थः । अनेनैकमित्युक्ताभिप्रायं भवति ॥

*भा०दी०*— **सप्तम्या अभिप्राय इति** । आधारत्वस्य भेदनिबन्धनत्वात् तेन पृथक्त्वं लब्धमिति भावः ॥ **भवतीति जडं चोच्यत इति** । भू सत्तायामिति धातोः प्रकृत्यादिजडस्यापि सद्रूपत्वाद् भूतपदेन ग्रहणमित्यर्थः ॥

**गीता**

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

*वि०वि०*— यत्तु ज्ञानं सर्वेषु भूतेषु पृथक्त्वेन । तुशब्दोऽवधारणे । सर्वभूतगमीश्वरं पृथक्त्वेन सर्वोत्तमत्त्वेन । न च विषयीकुर्वन् सर्वभूतपृथक्त्वमात्रविषयमित्यर्थः । एतदेव व्याचष्टे **नाना-भावानिति** । तत्सर्वभूतपृथक्त्वमात्रविषयं ज्ञानं राजसम् ॥ २१ ॥

*वा०ल०*— 'पृथक्त्वेन' इत्यत्र, पृथक्त्वेन हरेर्भिन्नभिन्नत्वेन । भूतानां भिन्नत्वज्ञानमुत्तमम्, हरिरूपेषु मिथो भेदज्ञानमधमम् । अतः सदसन्मिश्रत्वाद्राजसम् ॥ २१ ॥

*सा०सं०*— **यज्ज्ञानम्** । सर्वभूतेषु **पृथक्त्वेन** । **वेत्ति** सर्वजीवजडानि अन्तर्भेदयुतत्वेन विषयीकरोतीत्यस्यैव व्याख्या । **'नाना'** इत्यादि । **नानाभावात्** नानाप्रकारभूतजीवजडरूपपदा-र्थान् । **पृथग्विधान्** परस्परं भिन्नान्नीचोच्चतया स्थितांश्च । **वेत्ति** विषयीकरोति । विष्णोरन्यत्र यथार्थमिति यावत् । उपलक्षणमेतत् । सन्दिग्धतया भगवत्स्वरूपविषयकं च । **तज्ज्ञानं राजसं** इत्यर्थः । **तु**शब्देन वाऽयमर्थो ग्राह्यः । तेनेश्वरादन्यत्र यथार्थज्ञानस्य सात्त्विकत्वात् कथं राजसत्व-मिति निरस्तं बोध्यम् । ईश्वरविषये संशयरूपत्वस्याधिकस्यापि भावात् ॥ २१ ॥

*अ०प्र०*— राजसज्ञानमाह **पृथक्त्वेनेति** ।

यः यत् ज्ञानं[१], सर्वेषु भूतेषु स्थितं परमेश्वरं[२], पृथक्त्वेन[३], वेत्ति[४], तथा भूतेषु पृथक्त्वेन वेत्ति[५], नानाभावान्[६], पृथग्विधान् वेत्ति[७], तज्ज्ञानं[८], राजसं[९], स्मृतम्[१०] ।

यः = पुरुषः यज्ज्ञानं[१], सर्वेषु = ब्रह्मादिस्थावरान्तजीवसमूहेषु स्थित-मीश्वरं[२], पृथक्त्वेन = भूतवैलक्ष्यण्येन उत्तमत्वेन[३], वेत्ति = जानाति विषयी-करोति[४], तुकारेण तथाभूतेषु पृथक्त्वेन वेत्ति विषयसममिति भावेन वेत्ति[५], तद्विवृणोति **नानेति** । नानाभावान् = नानाप्रकारपदार्थान्[६], पृथ-ग्विधान् = भिन्नान्[७], वेत्ति[७], तज्ज्ञानं[८], राजसं[९], स्मृतम्[१०] तद्राजसः ईश्वरो जडात्किञ्चित् सर्वोत्तमः प्रपञ्चस्तद्भिन्नः परस्परस्वान्तर्भेदवानित्येवं पश्यति न सर्वगतमेकमीश्वरं जानाति इत्यतो वा राजसत्वं स्वान्तर्भेदहीनं स्वान्तस्तारतम्यान्तर्गतं हरिं न जानन्ति किन्तु सन्दिहन्ति ते राजसा इत्यर्थः ॥२१॥

**गीता**

## यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
## अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

*वि०वि०*— यत्तु ज्ञानम् । एकस्मिन् कृत्स्नवत् सक्तम् । एकमेव वस्तु सर्ववस्त्वात्मना विषयीकरोति । मुक्तत्वादिरूपेण करणीयत्वात्कार्याख्यो जीवस्तस्मिन् कृत्स्नं परिपूर्णं ब्रह्म तस्मि-

न्निव सक्तं जीव एव ब्रह्मेति गोचरयति । तथा जीवे कृत्स्नजगद्वत्सक्तं जीवोऽखिलं जगदिति तथैकस्मिन् कार्ये कृत्स्नवत्सक्तं एकजीवज्ञानाकृत्स्नमपि ज्ञातमिति । अहैतुकं वेदानुकूलयुक्तिरहितम् । अतत्वार्थवत् यथास्थिताकाराद्विपरीताकारगोचरम् । अल्पमीषत्समीचीनम् । भ्रान्तेरधिष्ठानादि विषयज्ञानत्वस्यापि सत्त्वात्, तत्तादृशं, ज्ञानं पृथक् पृथक् जातं तामसमुदाहृतम् । तत्तद्विषययोगे च तामसराजसत्वं तामसतामसत्वं च द्रष्टव्यम् । तदुक्तम्— "अस्तित्वाद्भूतनामभ्यः सर्वजीवेभ्य एव च । मुक्तेभ्योऽपि पृथक्त्वेन विष्णोः सर्वत्रगस्य च ॥ ऐक्येन च स्वरूपाणां प्रादुर्भावादिकात्मनाम् । तारतम्येन जीवानां भेदेनैव परस्परम् ॥ जडेभ्यश्चैव जीवानां जडानां च परस्परम् । तेभ्यो विष्णोश्च सम्यक् तल्लक्षणज्ञानपूर्वकम् ॥ ज्ञानं सात्त्विकमुद्दिष्टं यत्साक्षान्मुक्तिकारणम् । विष्णोरन्यस्य याथार्थ्यज्ञानं राजसमुच्यते ॥ यदि विष्णुं न जानाति यदि वा मिश्रतत्त्ववित् । अन्यथाकरणीयत्वात् कार्याख्यं जीवमेव यः ॥ अकार्यं ब्रह्म जानाति स एवाखिलमित्यपि ॥ एकजीवपरिज्ञानात्कृत्स्नज्ञोऽस्मीति मन्यते ॥ युक्तिविज्ञानराहित्यात्स्वपक्षस्याप्ययुक्तितः । अयुक्ततामेव गुणं मन्यते चाऽल्पदर्शनः ॥ अतत्त्वार्थं जगद्ब्रूते तत्त्वार्थज्ञानवर्जनात् । स मुख्यतामसज्ञानी ह्येकैकेनापि किं पुनः ॥ सर्वैरेतैर्विशेषैश्च युक्तः पापतमोऽधिकः ॥" इति ॥ २२ ॥

***वा०ल०***— 'यत् तु कृत्स्नवत्' इत्यत्र, अहैतुकं नित्यमुक्तत्वात् संसारहेतुभूताविद्याकामकर्मादिरहितं परंब्रह्म । यत् येन । कृत्स्नवत् कृत्स्नाः अविद्या कामकर्मादिसकलदोषाः अस्य वर्तन्त इति कृत्स्नवत् । अतत्त्वार्थवत् मिथ्याभूतकरचरणादिमत् । एकस्मिन् कार्ये जगदारोपाख्ये कार्ये सक्तं आसक्तम् । अल्पं तुच्छजीवाभिन्नत्वेनाल्पीभूतं च पश्यति । यत् ज्ञानं पश्यतीति वा । तज्ज्ञानं तामसमित्युदाहृतम् ॥ २२ ॥

***सा०सं०***— **यत् त्विति** । कार्यशब्दोऽत्र संसारिणं मुक्तत्वेन क्रियमाणत्वहेतुना जीवपरः । **कृत्स्न**शब्दो ब्रह्मपरो जगत्परश्च । अयमर्थः— **एकस्मिन्** कार्ये जीवे । **कृत्स्नवद्**ब्रह्मवत् । **यज्ज्ञानं सक्तम्** । कोऽर्थः, ब्रह्म यथा स्वात्मानं विषयीकरोति ब्रह्मेति तथा जीवं ब्रह्मेति यज्ज्ञानं विषयीकरोतीत्यर्थः । जीवे ब्रह्माभेदविषयकं यज्ज्ञानं **तत् तामस**मिति यावत् । तथा **एकस्मिन् कार्ये** जीवे । **कृत्स्नवत्** जगद्वत् **यज्ज्ञानं सक्तम्** । प्रपञ्चं यथा विषयीकरोति प्रपञ्चोऽयमिति तथा जीवं यज्ज्ञानं विषयीकरोति जीवं जगदात्मकत्वेन विषयीकुर्वद्यज्ज्ञानं तत् तामसमिति यावत् । तथा **एकस्मिन् कार्ये** जीवे । **कृत्स्नवत् यत् ज्ञानं सक्तम्** । एकमेव जीवं कृत्स्नजगदात्मकत्वेन यद्विषयीकरोति । एकजीवकल्पितं जगदिति यज्ज्ञानं विषयीकरोतीति त्रिधाऽर्थः ।

किञ्च **यज्ज्ञानमहैतुकं** युक्तिशून्यम् । **अतत्त्वार्थवत्** असत्यविषयकं सदसद्विलक्षणाद्यविद्यमानाकारकल्पनायुक्तमिति यावत् । **अल्पं** बहुलाज्ञानयुतत्वेन धर्मेणाल्पज्ञानसदृशं च **यत् तत्**

**तामसम्** । अत्र ब्रह्मवदिति, जीव इति च वाच्ये कृत्स्नवदित्युक्तिः जगतोऽपि ग्रहणाय । तेनाकार्यत्वादिकृत्स्नगुणपरिपूर्णत्वेन 'कृत्स्नपदोक्तब्रह्मणा कार्यत्वादिना तदधीनस्य जीवस्याभेदज्ञानं मिथ्याज्ञानत्वात् कथं न तामसमि'ति तामसत्वोपपादनायेति । कार्य इत्येव वाच्ये एकस्मिन्नित्युक्तिः एकजीवमतस्य सङ्ग्रहायेति ।

अत्र यद्यप्येकस्मिन् कार्यशब्दिते जीवे कृत्स्नवदकार्यत्वादिगुणपरिपूर्णब्रह्मवज्जगद्वच्च यज्ज्ञानं सक्तमित्यस्य चैकं जीवं ब्रह्मात्मकत्वेन जगदात्मकत्वेन च विषयीकारि यज्ज्ञानमित्यर्थः । तादृशं च **ज्ञानमहैतुकं अतत्त्वार्थमल्पं च** भवत्येवेति पुनरहैतुकमित्याद्युक्तिः पुनरुक्तिरेव । तथाऽप्यहैतुकज्ञानादित्रितयं प्रत्येकं एकैकं तामसम् । पूर्वार्धोक्तमिथ्याज्ञानरूपविशेषणसहितमतितामसमिति वक्तुं इति ज्ञेयम् ।

यद्वा, सामानाधिकरण्येन पदानां विशेषणविशेष्यभावः । एवं च **कार्ये** जीवे । **कृत्स्नवत्** जगद्वत् । **यत् सक्तम्** । **एकस्मिन् कार्ये** जीवे । **कृत्स्नवत्** ब्रह्मवत् । यत् सक्तम् । **यदहैतुकं यच्चातत्त्वार्थवत्** असत्यार्थकल्पनायुक्तम् । **यच्चाल्पम्** । तानि सर्वाण्यपि षड्विधाज्ञानानि प्रत्येकं तामसानीति योजना । अतो न पुनरुक्तिशङ्कावकाश इति ॥ २२ ॥

***अ०प्र०***— तामसज्ञानमाह **ये त्विति** ।

यत्तु[१], एकस्मिन्[२], कार्ये[३], कृत्स्नवत्[४], सक्तं[५], अहैतुकं[६], अतत्वार्थवत्[७], अल्पं च[८], तत्तामसमुदाहृतम्[९] ।

यत्तु = ज्ञानं[१], एकस्मिन्कार्ये = वस्तुनि देहे प्रतिमादौ वा[२-३], कृत्स्नवत् = परिपूर्णवत्[४], सक्तं एतावानेव आत्मा ईश्वरो वा इति अभिनिवेशयुक्तम् । यद्वा, कृत्स्नवत् = सक्तं एकमेव वस्तु सर्ववत् स्वात्मना विषयीकरोतीत्यर्थः । मुक्तत्वादिरूपेण करणीयत्वात् कार्याख्ये जीवः एकस्मिन्कृत्स्नं परिपूर्णं ब्रह्म तस्मिन्निवासक्तं = जीव एव ब्रह्मेति गोचरयतीत्यर्थः । तथा जीवे कृत्स्नवत् जगद्वत् सक्तं[५] जीवोऽखिलजगदिति पश्यतीत्यर्थः । तथा एकस्मिन् कार्ये कृत्स्नवत् सक्तं मुक्तो वा संसारी वा अन्यत्सर्वात्मना विषयीकारि इति भावः । एकजीवज्ञानात् कृत्स्नमपि ज्ञातमिति पश्यतीत्यर्थः[५], अहैतुकं = निरुपपत्तिकं वेदानुकूलयुक्तिरहितमित्यर्थः[६], अतत्त्वार्थवत् = परमार्थबलं बलशून्यं यथावस्थिताकारात् विपरीतार्थगोचरं अतत्वार्थवदयं भावः । तत्त्वं श्रीमहाविष्णुः यन्न भवति तत् अतत्वं जीवं अर्थवत् ईश्वरवज्जानाति[७], अहैतुकं = स्वर्ग-नरकयोः हेतुविषयप्रवृत्तीति कदाचिदपि यन्न जानाति तदहैतुकं[६], अल्पञ्च = अत एव अल्पं तु अल्पविषयत्वाच्च । यद्वा, अल्पो

देह एवात्मेति यद्वदति तदल्पम् । यद्वा, ईषत्समीचीनं भ्रान्तावप्यधिष्ठानादिविषयत्वांशस्य सम्यक्त्वात्, चकारस्यार्थः इन्द्रियप्रियविषयान् शास्त्रविरुद्धानपि सेवते, यदेवंभूतं ज्ञानं तत्तामसं उदाहृतम् ॥ २२ ॥

श्लोकार्थः— प्रमाणं तत्रापि विपरीतविषयाणां आत्मत्वबहुत्वेतरत्वादिभेदेन तामसत्वतामसराजसतामसतामसादिभेदोऽपि द्रष्टव्यः । तदुक्तम्— "अस्तित्वाद्भूतनामभ्यः सर्वजीवेभ्य एव तु । मुक्तेभ्योऽपि पृथक्त्वेन विष्णोरस्सर्वत्रगस्य च ॥ ऐक्येन च स्वरूपाणां प्रादुर्भावादिकात्मनाम् । तारतम्येन जीवानां भेदेनैव परस्परम् ॥ जडेभ्यश्चैव जीवानां जडानां च परस्परम् । तेभ्यो विष्णोश्च सम्यक् तल्लक्षणज्ञानपूर्वकम् ॥ ज्ञानं सात्त्विकमुद्दिष्टं यत्साक्षान्मुक्तिकारणम् । विष्णोरन्यस्य याथार्थ्यज्ञानं राजसमुच्यते ॥ यदि विष्णुं न जानाति यदि वा मिश्रतत्त्ववित् । अन्यथाकरणीयत्वात्कार्याख्यं जीवमेव यः ॥ अकार्यं ब्रह्म जानाति स एवाखिलमित्यपि । एकजीवपरिज्ञानात् कृत्स्नज्ञो-ऽस्मीति मन्यते ॥ युक्तिविज्ञानराहित्यात् स्वपक्षस्याप्ययुक्तितः । अयुक्ततामेव गुणं मन्यते चाल्पदर्शनः ॥ अतत्वार्थं जगद्ब्रूते तत्त्वार्थज्ञानवर्जनात् । स मुख्यतामसज्ञानी ह्येकैकेनापि किं पुनः ॥ सर्वैरेतैर्विशेषैश्च युक्तः पापतमोऽधिकः ।" इति तामसज्ञानलक्षणमैक्यवादिज्ञाने सम्पूर्णमन्यवादिज्ञाने ईषत् ॥ २२ ॥

**गीतातात्पर्यनिर्णयः**

**"विष्णोरन्यस्य याथार्थ्यज्ञानं राजसमुच्यते ।**
**यदि विष्णुं न जानाति यदि वा मिश्रतत्त्ववित् ॥**
**अन्यथाकरणीयत्वात् कार्याख्यं जीवमेव यः ।**
**अकार्यं ब्रह्म जानाति स एवाखिलमित्यपि ॥**
**एकजीवपरिज्ञानात् कृत्स्नज्ञोऽस्मीति मन्यते ।**
**युक्तिविज्ञानराहित्यात् स्वपक्षस्याप्ययुक्तितः ॥**
**अयुक्ततामेव गुणं मन्यते चाल्पदर्शनः ।**
**अतत्त्वार्थं जगद् ब्रूते तत्त्वार्थज्ञानवर्जनात् ॥**
**स मुख्यतामसज्ञानी ह्येकैकेनापि किं पुनः ।**
**सर्वैरेतैर्विशेषैश्च युक्तः पापतमाधिकः ॥" इति पाद्मे ।**

*प्रका०*— पृथक्त्वेनेत्यस्य श्लोकस्याभिप्रेतार्थमाह **विष्णोरन्यस्येति** । "यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पं च तत्तामसमुदाहृत"मित्यस्यार्थमाह **अन्यथेत्यादिना** ।

***न्या०दी०*— विष्णोरित्यनेन पृथक्त्वेनेत्युक्ततात्पर्यं भवति । सात्त्विकज्ञानस्यापि विष्णोरन्यत्र यथार्थत्वेनोक्तत्वात् कथं राजसत्वमस्य स्यादित्यत आह यदीति ॥ मिश्रतत्त्ववित् सन्दिग्धतया भगवत्स्वरूपं जानन्नित्यर्थः । अन्यथेत्यनेन यत्त्वित्युक्तार्थं भवति । यत्किञ्चिदेकं कृत्स्नं जानातीति चादौ द्रष्टव्यम् । जानातीत्यन्तेन कार्ये कृत्स्नवत् सक्तमित्यस्य तात्पर्यमुक्तं भवति । कृत्स्नमकार्यत्वादिगुणपूर्णं ब्रह्म यथा विषयीकरोति ब्रह्मेति तथेत्यर्थः । स एवेत्यनेन कार्ये कृत्स्नवत् सक्तमित्यस्य कृत्स्नपदमखिलजगद्विषयमङ्गीकृत्य अर्थान्तरमुक्तं भवति । एकेत्यनेन एकस्मिन् कार्ये कृत्स्नवत्सक्तमित्युक्ततात्पर्यं भवति । युक्तीत्यनेन अहैतुकमित्यस्य तात्पर्यमुक्तं भवति । स्वस्य युक्तिज्ञानाभावात् तज्ज्ञेयार्थस्य युक्तिराहित्याच्च तथा मन्यत इत्यर्थः । अल्पेत्यनेन अल्पमित्युक्तार्थं भवति । अल्पसम्यग्ज्ञान इत्यर्थः । भ्रान्तस्याप्यधिष्ठानादिविषयसम्यग्ज्ञानवत्त्वात् । अतत्त्वार्थमित्यनेन अतत्त्वार्थवदित्युक्तार्थं भवति । यथावस्थिताकाराद् विपरीताकारमित्यर्थः ॥ तत्त्वार्थज्ञानवर्जनादिति । यथास्थिताकारज्ञानाभावादित्यर्थः ।**

*भा०दी०*— **उक्तत्वादिति** । पूर्वश्लोके विभक्तेष्वित्यादिनेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"पृथक्त्वेन तु यज्ज्ञानम्" इत्यस्य व्याख्यानम् नानाभावान् इत्यादि । सर्वगतमेकमीश्वरं न जानातीत्येतावतैव राजसत्वम् ।**

*प्रका०*— "पृथक्त्वेन तु यज्ज्ञानं" इत्यनेन "नानाभावान् पृथग्विधान् । वेत्ती"त्यस्य पौनरुक्तिं परिहरति **पृथक्त्वेनेति** ।

***न्या०दी०*— ननु सर्वेषु भूतेषु पृथक्त्वेन यज्ज्ञानमित्येतदेव नानाभावान् पृथग्विधानित्युच्यते । अतः पुनरुक्तिदोष इत्यत आह पृथक्त्वेनेति ॥ व्याख्यानव्याख्येयभावात् न पुनरुक्तिदोष इति भावः । ननु सर्वेषु भूतेषु पृथक्त्वज्ञानविषयस्य सात्त्विकत्वेनोक्तत्वात् कथं राजसत्वमत्रोच्यत इत्यत आह सर्वेति ॥ न केवलं सर्वेषु भूतेषु पृथक्त्वविषयं सात्त्विकज्ञानमुक्तम् । किन्तु तद्गतेश्वरमपृथक्त्वेन सर्वोत्तमत्वेन च विषयीकुर्वत् । तद-**

भावाद्भूतेषु पृथक्त्वविषयत्वेऽप्यस्य राजसत्वं युक्तमिति भावः । अनेन यदीति स्मृतिः विवृता भवति ।

*भा०दी०*— अनेन यदीति स्मृतिर्विवृतेति । सर्व(गतं)गत्वमित्याद्यंशेन विवृतेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

एकस्य कृत्स्नवज्ज्ञानमेव तामसम् । मुक्तत्वादिरूपेण अन्यथा करणीयत्वात् पराधीनत्वेनाल्पस्य जीवस्य स्वातन्त्र्यादिगुणपूर्णत्वात् कृत्स्नेन ब्रह्मणैक्यज्ञानं च महातामसम् । किं पुनस्तावन्मात्रं सर्वमिति ज्ञानम् । किं पुनस्तत्राप्येकजीवादन्यत् किमपि नास्तीति । अहैतुकं ज्ञानं सर्वमपि तामसम् । किमु तदेवोक्तलक्षणम् । अतत्त्वार्थवत् सदसद्वैलक्षण्याद्यन्यथार्थकल्पनायुक्तमेव तामसम् । किमु तदेवोक्तविशेषणैर्युक्तम् । प्रायोऽल्पज्ञानमपि तामसम् । अज्ञानबहुलत्वात् । किमु तदेवोक्तमिथ्याज्ञानबहुलमित्यपुनरुक्तिः ।

*प्रका०*— "यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् । अतत्वार्थवदल्पं च भवती"ति पौनरुक्त्यमाशङ्क्य परिहरति **एकस्येत्यादिना** ।

*न्या०दी०*— "यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तं ज्ञानं तदहैतुकं, अतत्त्वार्थवदल्पसज्ज्ञानयुक्तम्" इति नियतमेवातः तदुक्तौ पुनरुक्तिरित्यत उक्तं विवृण्वन्नाह **एकस्येति** ॥ यस्य कस्यचिदेकस्य नास्तीत्यन्तमुक्तार्थविवरणम् । न पूर्वोक्तस्यैवाहैतुकत्वादिविशेषणानि विधीयन्ते, येन पुनरुक्तिः स्यात् । किन्त्वहैतुकत्वादीनां स्वयमेव तामसानामुक्तविशेषणयोगितया अतितामसत्वज्ञापनाय उक्तविशेषणान्युच्यन्त इति भावः । सदसद्वैलक्षण्याद्यविद्यमानाकारकल्पनायुक्तमित्यर्थः ।

*भा०दी०*— एकस्येत्यस्यार्थमाह **यस्य कस्यचिदेकस्येति** ॥

**गीतातात्पर्यनिर्णयः**

एकस्मिन् सर्वज्ञानं कार्ये जीवे पूर्णब्रह्मेति सक्तं ज्ञानं निर्युक्तिकं चातत्त्वार्थकल्पनायुक्तमल्पज्ञानं च पृथक् पृथक् तामसानीति वा । मायावादे त्वेतानि समस्तानि । अन्यत्रापि त्वहैतुकत्वादिकं विरुद्धवादिषु समं सर्वेषु ॥ २१-२२ ॥

*न्या०दी०*— एवमेषां पदानां सामानाधिकरण्यमङ्गीकृत्यैव पुनरुक्तिं परिहृत्य अनेकाधिकरणतयाऽपि तां परिहरति **एकस्मिन्निति** ॥ कार्ये सर्वं जगदिति, सक्तमेकस्मिन् कार्ये सर्वं जगदिति चैतानि पदानि योज्यानीति वा न पुनरुक्तिरिति सम्बद्ध्यते । नन्वेवं-विधज्ञानस्य क्वाप्यभावात् तस्य तामसत्वकथनं कथमित्यत आह **मायेति** ॥

*भा०दी०*— **भिन्नाधिकरणतयेति** । भिन्नाभिन्नविषयतयेत्यर्थः ॥

**गीता**

## नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
## अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

*वि०वि०*— गुणभेदेन कर्मत्रैविद्ध्यमाह **नियतमित्यदिना** । विष्णोः सर्वोत्तमत्वज्ञानपूर्वकं तद्भक्त्या तदर्पणबुद्ध्या क्रियमाणं स्ववर्णाश्रमोचितं कर्म नियतं कर्तृत्वसङ्गरहितम् । कीर्त्यादौ रागादकीर्त्यादौ द्वेषाच्च न कृतं दम्भेनाकृतमित्यर्थः । फलाकाङ्क्षाराहित्येन कर्तव्यमित्येवकृतं यत्कर्म तत्सात्त्विकमुच्यते ॥ २३ ॥

*सा०सं०*— प्राक्प्रतिज्ञातं गुणकृतकर्मत्रैविध्यमाह **नियतमित्यादि**त्रिभिः । हरेः सर्वोत्तमत्व-ज्ञानभक्तिपूर्वकं तदर्पणबुद्ध्या क्रियमाणस्ववर्णाश्रमोचितं हि **नियतम्** इत्युच्यते । 'मयि सर्वाणि' इत्यादौ भगवत्सर्वोत्तमत्वज्ञानतद्भक्तिपूर्वकं तदर्पणबुद्ध्या कर्मकरणस्य विधानात् । 'ये मे मतम्' इत्यादौ तस्यैव मुक्तिहेतुत्वोक्तेः । यत्करणे फलप्राप्तिः यदकरणे प्रत्यवायः तस्यैव नियतत्वात् । **सङ्गरहितं** मदीयतास्नेहहीनम् । कीर्त्यादौ रागादिहानतः, अकीर्त्यादौ द्वेषत्यागतः कृतं फलप्राप्ती-च्छाहीनेन **कृतं यत् तत् कर्म सात्त्विकमुच्यत** इत्यर्थः ॥ २३ ॥

*अ०प्र०*— गुणभेदेन कर्मभेदमाह **नियतमित्यादि** त्रिभिः ।

अन्वयः स्पष्टः— नियतं = विष्णोः सर्वोत्तमत्वज्ञानपूर्वकं तद्भक्त्या तदर्पणबुद्ध्या कृतं वर्णाश्रमोचितं नैमित्तिकेन सह नित्यं तथा स्वाधिकारानुरूपं विहितं कर्म नियतं, सङ्गरहितं = कर्तृत्वाभिमान एव कर्मणि सङ्गः । तेन रहितं कर्तृत्वाद्यभिनिवेशशून्यं निरभिमानेन कृतं कर्मेत्यर्थः, अरागद्वेषतः कृतं = पुत्रादिप्रीत्या शत्रुद्वेषेण वा यत्कृतं न भवति तत्तथा । यद्वा, रागेण, परितोषेण, द्वेषेण, खेदेन यत्कर्म न कृतं तत्तथा । कदाचित्सत्प्रसङ्गात् करणीयकर्मस्थितमपि तत्राकृतखेदेन द्वेषेण न बाध्यते अथवा स्वभावतः कर्म सम्पूर्णं जातमपि तेनानन्देन परितुष्यत इति । यद्वा,

धनादिविषयरागात् अकीर्त्यादिविषये द्वेषाच्च यन्न कृतं तदरागतः कृतं[३], अफलप्रेप्सुना = फलं प्राप्तुमिच्छतीति फलप्रेप्सुः । अफलप्रेप्सुः तेन तथा फलाकाङ्क्षारहितेन निष्कामेन कर्त्रा । यद्वा, यः फलं प्राप्तुं नेच्छति कृतं अनुष्ठितं कर्म फलत्यागेन यथाविधि कर्मकृत्वेश्वरार्पणं कुरुत इति भावः[४], एवं यत्कर्मकृतं तत्सात्त्विकमुच्यते ॥ २३ ॥

**गीता**

## यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
## क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

***वि०वि०***— यत्तु फलप्रेप्सुना कर्तृत्वाभिमानयुक्तेन बहुलायासयुक्तं यत्कर्म क्रियते तद्राजसं फलाल्पत्वादायासबाहुल्यम् ॥ २४ ॥

***सा०सं०***— **यत् तु कामेप्सुना** फलप्राप्तीच्छावता कर्तृत्वाभिमानसहितेन च । **पुनः**शब्दः समुच्चये । बह्वायासयुक्तं च **क्रियते** । **तत्कर्म राजसम् उदाहृतम्** ॥ २४ ॥

***अ०प्र०***— राजसकर्म आह यत्त्विति ।

यत्तु[१], कर्म[२], कामेप्सुना क्रियते[३], साहङ्कारेण वा क्रियते[४], पुनः[५], बहुलायासं[६], क्रियते[७], तत्कर्म राजसं[८], उदाहृतम्[९] इत्यन्वयः ।

यत्तु कर्म = नित्यनैमित्तिकाख्यनियतकर्माणि त्यक्त्वा यज्ञादि काम्यकर्माणि[२], कामेप्सुना = कर्मफलेप्सुना फलेच्छावता कर्मफलप्राप्तुमिच्छता पुरुषेण क्रियते[३], साहङ्कारेण वा क्रियते = कर्तृत्वाभिमानवता तेन । यद्वा, मत्समः कोऽन्यो श्रोत्रियोस्तीऽति एवं विरूढाऽहङ्कारेण युक्तेन च क्रियते[४], पुनस्तदपि[५], बहुलायासं अतिक्लेशयुक्तं शारीरमानसबुद्ध्यायासयुक्तं फलाल्पत्वात् आयासबाहुल्यात् अशक्यमिदं किमित्यारब्धं अहो कष्टमित्यायाससहिष्णुत्वाद्वा कर्म क्रियते[६], एतादृशं अत्यन्तश्रमेण संयुक्तं यत्कर्म तत्कर्म[७], राजसं[८], उदाहृतं = कथितम्[९] ॥ २४ ॥

**गीता**

## अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
## मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

***वि०वि०*—** अनुबन्धं कर्मानन्तरं अनुबध्यमानं शुभाशुभम् । क्षयमर्थनाशम् । हिंसां परपीडाम् । पौरुषं आत्मनः कर्मसामर्थ्यम् । अनपेक्ष्य अविमृश्य । मोहादहं कर्तेति मिथ्याज्ञानात् यत्कर्म आरभ्यते तत् तामसमुच्यते ॥ २५ ॥

***वा०ल०*—** 'अनुबन्धं क्षयं हिंसाम्' इत्यत्र, अनुबन्धं सुन्दोपसुन्दवत् अन्योन्यस्नेहम्, भस्मासुरवत् वरदातर्येव स्नेहं वा । क्षयं हिरण्याक्षवत् लोकक्षयम्, हिंसां जरासन्धवत् प्राणिहिंसाम्, पौरुषं दुर्योधनवत् स्वप्रतापम्, अनवेक्ष्य ॥ २५ ॥

***सा०सं०*—** **अनुबन्धं** कर्मान्तरमेवानुबध्यमानम् । **क्षयं** नाशम् । **हिंसां** परपीडां च । **अनवेक्ष्य** । **पौरुषम्** आत्मनः कर्मसामर्थ्यम् । **चानवेक्ष्य** अविमृश्य । **मोहात्** अहङ्कर्तेति मिथ्याज्ञानात् । **यत् कर्मारभ्यते** । **तत् तामसमुच्यत** इत्यर्थः ॥ २५ ॥

***अ०प्र०*—** तामसं कर्म आह **अनुबन्धमिति** ।

अनुबन्धं = अनुबध्यत इति अनुबन्धः कर्मणोऽनुबन्धं[?], क्षयं = पश्चाद्भावि शुभाशुभं क्षयं[२], हिंसां = परपीडां[३], पौरुषं = स्वसामर्थ्यञ्च[४], अनवेक्ष्य = अपर्यालोच्य केवलं अविचार्येत्यर्थः[१], मोहात् = अहं कर्तेत्यादि मिथ्याज्ञानात् यत्कर्म[८], आरभ्यते[९], तत्तामसं[११], उच्यते = उदाहृतम्[१२]॥

यथा प्रकारान्तरम्— यस्मिन् कृते कर्मणि पश्चात्किमपि अनुबन्धफलं न दृश्यत इति[?], क्षयं = यस्मिन् प्रवृत्तमाने कर्मणि नरदेहरूपं महद्धनं क्षयं क्षीणतां प्राप्नोति हिंसा येन कर्मणा परेषां हिंसां दुःखं करोति[३], अनवेक्ष्य च पौरुषं मोहादारभ्यते कर्म यत् = यद्यपि पौरुषमपेक्षितं तथापि तेन किं भवति तस्मादस्यायं भावः । अनुबन्धादिविशेषणात्मके कर्माचरणे मम पौरुषं सामर्थ्यं अस्ति नास्ति वेति मोहात् अविवेकात् अनवेक्ष्य = अनवेक्ष्य इत्यर्थः । अविचार्य यत्कर्मारभ्यते क्रियते तत् अनवेक्ष्य च पौरुषं कर्माऽऽरभ्यते तत्तामसमुदाहृतम् ॥ २५ ॥

**गीतातात्पर्यनिर्णयः**

**"मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा" इत्युक्त्वा "ये मे मतम्" "ये त्वेतत्" इति च तस्य मोक्षसाधनत्वस्याकरणे प्रत्यवायस्य चोक्तेर्भगवदर्पितत्वेन सर्वकर्मकरणं तस्य विष्णोः सर्वपरमत्वज्ञानं च नियतमेवेति ज्ञायते ।**

***प्रका०*—** 'नियतं सङ्गरहितमि'त्यत्र नियतशब्दार्थमाह **मयि सर्वाणीत्यादिना** ।

***न्या०दी०*—— गुणभेदेन कर्मत्रैविध्यमुच्यते 'नियतं' इति । तत्र नियतपदेन स्ववर्णाश्रमोचितमात्रमुच्यत इत्यन्यथाप्रतीतिनिरासायाह मयीति** ॥ **विष्णोः सर्वोत्तमत्वज्ञापनपूर्वकं तद्भक्त्या तदर्पणबुद्ध्या क्रियमाणमेव कर्म नियतमित्यत्रोच्यते । न तु स्ववर्णाश्रमोचितत्वमात्रम् ।** कुतः ? ''**मयि सर्वाणि कर्माणि**'' **इति भगवत्सर्वोत्तमत्वज्ञानपूर्वकं तदर्पणबुद्ध्या कर्मकरणं** विधाय ''**ये मे मतमिदम्**'' **इति तस्य मोक्षसाधनत्वोक्तेः । ''ये त्वेतत्'' इति तदकरणे प्रत्यवायस्य चोक्तेः । यत्करणे फलप्राप्तिः, यदकरणे प्रत्यवायः तस्यैव नियतत्वादिति** भावः ।

***भा०दी०*—— विधायेति** । तृतीयाध्याये इति योज्यम् ।

**गीतातात्पर्यनिर्णयः**

**''अध्यात्मचेतसा'' इत्युक्तत्वात् तत्स्वरूपयाथार्थ्यज्ञानादि । ''ये तु सर्वाणि कर्माणि'' इत्येतस्मिन् श्लोकेऽध्यात्मचेतस्त्वस्य ''मत्पराः अनन्येनैव योगेन मां ध्यायन्तः'' इति व्याख्यातत्वात् । एवं सर्वमपि भगवद्भक्तियुक्तमेव सात्त्विकम् ॥ २३–२५ ॥**

***प्रका०*—** अत्र विष्णौ सर्वकर्मसमर्पणं तस्य सर्वोत्तमत्वज्ञानं चावश्यकतया नियतमुच्यते । यदनुष्ठानस्य कर्मबन्धमोक्षसाधनत्वं, यदनुष्ठानेन प्रत्यवायो भवति तद्धि नियतमित्युच्यते । तथाविधं भगवदर्पितकर्मादिकमेव स्मर्यते । ''मयि सर्वाणि कर्माणि संन्यस्याध्यात्मतेजसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः । ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः'' इति । अधिकस्यात्मनो विष्णोर्ज्ञानमध्यात्मचेतसः शब्देनोच्यते नान्यत् । ''ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः'' इत्यत्राध्यात्मचेतस्त्वस्य मत्परा इति परामृष्टत्वात् । अहं परो येषां ते मत्परा इति भगवत्सर्वोत्तमत्वज्ञानिनो ह्युच्यन्ते । ''अनन्येनैव योगेन मां ध्यायन्त उपासते'' इत्युक्तत्वात् । ज्ञानकर्मादिकं भगवद्भक्तियुक्तमेव सात्विकमित्यर्थः ।

***न्या०दी०*—— भवतु भगवदर्पणबुद्ध्या क्रियमाणं कर्म नियतम् । तस्य भगवत्सर्वोत्तमत्वज्ञानादिपूर्वकत्वं** कुतः ? ''**मयि सर्वाणि कर्माणि**'' **इत्यत्र तदनुक्तेरित्यत** आह **अध्यात्मेति ॥ सर्वाधिके परमात्मनि** चेतः अध्यात्मचेतः । **अपेक्षिततया ज्ञायत इति**

सम्बद्ध्यते । भवेदेतत्, यद्यध्यात्मचेतसेति पदं भगवत्सर्वोत्तमत्वज्ञानार्थं स्यात् । तदेव कुत इत्यत आह **ये त्विति** ॥ "मयि सर्वाणि" इति श्लोकार्थानुवादरूपे "ये तु सर्वाणि" इत्यस्मिन् श्लोकेऽध्यात्मचेतसेति पदस्य 'मत्पराः' इत्यादिना भगवत्सर्वोत्तमत्वज्ञान-तत्स्मरणाद्यर्थतया व्याख्यातत्वात् भवेदेवैतत्पदं तदर्थमिति भावः । अहं परः सर्वोत्तमो येषां ते मत्पराः । न च वाच्यमेतच्छ्लोकस्य तच्छ्लोकानुवादरूपत्वं कुत इति । "एवं सततयुक्ता ये" इत्यर्जुनेन प्रागुक्तप्रकारानुवादेन पृष्टस्य भगवतस्तथैव परिहारोक्तेर्युक्त-त्वात् । समाख्यावशाच्च एतच्छ्लोकार्थानुवादित्वं विज्ञायते । किमेतन्नियतत्वं कर्मण एव सात्त्विकत्वे प्रयोजकमुत ज्ञानादीनामपीत्यत आह **एवमिति** ॥ भगवदर्पणादिकं चात्र द्रष्टव्यम् ॥

***भा०दी०***— स्वरूपयाथार्थ्यज्ञानात् इत्यत्र काङ्क्षितं पूरयति **अपेक्षिततया ज्ञायत इति सम्बध्यत इति** । तदर्थलाभप्रकारमाह अहं परः **सर्वोत्तम इत्यादिना** ॥

**गीता**

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥**

***वि०वि०***— गुणभेदतः कर्तृत्रैविध्यमाह **मुक्तसङ्ग इत्यादिना** । मुक्तसङ्गः फलसङ्गरहितः । अनहंवादी सर्वस्य भगवदधीनत्वनिश्चयादेव कर्तृत्वाभिमानरहितः धृतिरारब्धे कर्मण्यवर्जनीयदुःख-धारणा । उत्साह उद्युक्तचेतस्त्वम् । ताभ्यां समन्वितः । फलस्य सिद्ध्यसिद्ध्योर्निर्विकारः हर्ष-विषादशून्यः । स कर्ता सात्त्विक उच्यते ॥ २६ ॥

***सा०सं०***— प्राक्प्रतिज्ञातं गुणकृतकर्तृत्रैविध्यमाह **मुक्तेत्यादित्रिभिः** । **मुक्तसङ्गः** फलस्नेह-हीनः । सर्वस्य भगवदधीनत्वनिश्चयादेवाहं कर्तेति न वदतीति **अनहंवादी** । आत्मकर्तृत्वाभिमान-हीन इति यावत् । **धृतिः** कर्मण्यवर्जनीयदुःखसहनम् । **उत्साहः** कर्मकातरता । ताभ्यां समन्वितः । **सिद्ध्यसिद्ध्योर्निर्विकारः** । फलस्य सिद्धावसिद्धौ वा हर्षविषादहीनः । **स कर्ता सात्त्विक उच्यत** इत्यर्थः ॥ २६ ॥

***अ०प्र०***— गुणभेदेन कर्तृत्रैविध्यमाह मुक्तसङ्गमित्यादिना ।

मुक्तसङ्गः = मुक्तः कर्मफलसंगो येन स तथा त्यक्ताभिनिवेशः[१], अनहं वादी = सर्वस्य भगवदधीनत्वे निश्चयादेव कर्तृत्वाभिमानगर्वोक्तिरहितः अत्यादरेण कृते कर्मणि नाहं कर्तेति निरभिमानस्मृतिर्यस्येति भावः[२], धृत्युत्साहसमन्वितः = धृतिः धैर्यं उत्साहः सन्तोषः ताभ्यां अन्वितः संयुक्तो यः स तथा विवरणं ईश्वरार्पणार्थं क्रियमाणे कर्मणि देशकालादीन्द्रियनियमैः यः श्रमो भवति तत्सहनाय धृत्या समन्वितः । यद्वा, आरब्धकर्मणि अवर्जनीया दुःखधारणा धृतिः उत्साहः ईश्वराराधने क्रियमाणे कर्मणि देहसुखं न पश्यति तदा विषयसुखाभावेऽपि कर्मणि उत्साहेन आनन्देन समन्वितः संयुक्तो भवति तैः कर्मभिः कर्तुः ज्ञानानन्दावाप्तेः[३], सिध्यसिध्योः = फलस्य सिद्धौ असिद्धौ च[४], निर्विकारः = विकाररहितः हर्षविषादशून्यः[५], एतादृशः कर्ता[६], सात्त्विकः[७], उच्यते[८] ॥ २६ ॥

**गीता**

## रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
## हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

***वि०वि०***— रागी कीर्त्यादिकामः । कर्मफलप्रेप्सुः उद्दिष्टकार्यफलार्थी । लुब्धः कर्मापेक्षितद्रव्यव्ययस्वभावरहितः । हिंसात्मकः पराहितः । अशुचिः कार्यसिद्ध्यसिद्ध्योर्हर्षशोकान्वितः । कर्ता राजसः परिकीर्तितः ॥ २७ ॥

***वा०ल०***— हर्षशोकान्वितः लाभे हर्षः, अलाभे शोकः ॥ २७ ॥

***सा०सं०***— **रागी** कीर्त्यादिकामः । कर्मफलप्राप्तीच्छावान् । **लुब्धः** कर्मण्यपेक्षितद्रव्यव्ययहीनः । **हिंसात्मकः** हिंसास्वभावः । **अशुचिः** द्रव्यादिषु शुद्धिहीनः । कार्यसिद्ध्यसिद्ध्योः **हर्षशोकान्वितः** । स **कर्ता राजसः** ॥ २७ ॥

***अ०प्र०***— राजसकर्तारमाह **रागीति** ।

रागी = पुत्रादिषु प्रीतिमान् कीर्त्यादिकामो वा रागोऽस्यास्तीति रागी सर्वाभिलाषाणामालय इत्यर्थः[१], कर्मफलप्रेप्सुः = उद्दिष्टकर्मफलार्थी कर्मफलकामी वा यस्मिन् फलप्राप्तिः सुगमा तत्कर्म आचरतीति भावः[२], लुब्धः = परस्वाभिलाषी प्राप्तधनव्ययमकृत्वा परधने सञ्जाततृष्णः इत्यर्थः[३], हिंसात्मकः = हिंसायां मनोवाक्कायैः सर्वेषां दुःखप्रदाने समर्थमात्मान्तःकरणं यस्य स तथा

मारकस्वभावो वा[४], अशुचिः = विहितशौचशून्यः अन्तर्बहिश्चाशुद्धः[५], हर्षशोकान्वितः = फलसिद्ध्यर्थं लाभालाभयोः हर्षशोकान्वितः । यद्वा, कृतकर्मणः सिध्यसिध्योः हर्षशोकाभ्यां संयुक्तः[६], य एवंविधः कर्मकर्ता[७], राजस इति[८], परिकीर्तितः[९] ॥ २७ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वस्य भगवदधीनत्वज्ञानानिश्चयादेवानहंवादी ॥ २६-२७ ॥**

*प्रका०*— "मुक्तसङ्गोऽनहंवादी"त्यत्रानहं वादिपदार्थमाह ।

*न्या०दी०*— **गुणभेदतः कर्तुस्त्रैविध्यमुच्यते 'मुक्त' इति । तत्र कर्ता चेदनहंवादीति कथमित्यत आह सर्वस्येति ॥ कर्ताऽप्यहमेव कर्तेति सात्त्विको न वदति । तेन स्वकर्तृत्वादेः सर्वस्य भगवदधीनतया निश्चितत्वादित्यर्थः ॥**

*भा०दी०*— कर्ताऽपीति । कार्यानुकूलकृतिमानपीत्यर्थः ॥

**गीता**

## अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
## विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

*वि०वि०*— अयुक्तो भगवदर्पणादियोगरहितः । प्रकृष्टो न कृतः प्राकृतः । "भगवद्भक्तिसामर्थ्यात्प्रकृष्टो न कृतो हि यः । स प्राकृतो दीर्घसूत्री पश्चात्कुर्यामिति स्मरन् ॥" इति वचनात् । स्तब्धः आत्मसम्भावनया क्वापि अनम्रः । शठो गूढद्वेषेण कर्मकारी । नैकृतिको नीचकर्मकारी । अलसः प्राप्तकाले कर्मण्युदासीनः । विषादी अवसादनशीलः । प्राप्तेपि कर्मकाले पश्चात्कुर्यामिति चिन्तयन् दीर्घसूत्री । "परेण यः कृतो दोषो दीर्घकालगतोऽपि वा । यस्तस्य सूचको दोषादीर्घसूत्री स उच्यते ॥"इत्यभिधानादेतादृशो वा । एतादृशः कर्ता तामस उच्यते । अत्र दोषतारतम्यात्तामसः कर्तुस्त्रैविद्ध्यं बोद्धव्यम् । उक्तं च— "अलसो दीर्घसूत्री च सत्वयुक् तामसो मतः । अयुक्तो राजसः स्तब्धः प्राकृतो नैकृतः शठः ॥ एकैकेनैव दोषेण प्रोक्तस्तामसतामसः । दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत्फलं क्रमात् ॥" इति ॥ २८ ॥

*वा०ल०*— 'अयुक्तः प्राकृतः' इत्यत्र, अयुक्तः विवेकिभिरयुक्तः । प्राकृतः प्रकृत्या बद्धः । नैकृतिकः निकृतिसम्बन्धी, कपटीत्यर्थः ॥ २८ ॥

*सा०सं०*— **अयुक्तः** भगवदर्पणादियोगरहितः । प्रकृष्टो अकृतः **प्राकृतः** । 'भगवद्भक्ति-सामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतः' (शब्दतत्त्वे) इति स्मृतेः । **स्तब्धः** आत्मसम्भावनया क्वाप्यनम्रः । **शठः** गूढद्वेषेण कर्मकारी । **नैकृतिको** नीचकर्मकृत् । प्राप्तकालेऽपि कर्मण्युदासीनः **अलसः** । **विषादी** सर्वव्यापारोपरतिहेतुमनोदौर्बल्यवान् । प्राप्तेऽपि कर्मकाले पश्चात् कुर्यामिति ध्यायन् वा, परकृतदोषं दीर्घकालकृतमप्यनुचितं सूचयन् वा **दीर्घसूत्री** । स **तामसः कर्ता** इत्यर्थः ॥ २८ ॥

*अ०प्र०*— तामसकर्तारमाह **अयुक्तमिति** ।

अयुक्तः = भगवदर्पणादियोगहीनः स्वपरघातकां दुष्टक्रियां करोति सोऽयुक्तः अनवहितो वा[१], प्राकृतः = प्रकृतिसम्बन्धः इन्द्रियार्जितान् विषयान् भुंक्त्वा यो जीवति विवेकशून्यः । तदुक्तम्— "भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतो दीर्घसूत्री पश्चात्कुर्यामिति स्मरन् ॥" इति वचनात्[२], स्तब्धः = आत्मसम्भावनया क्वापि न नम्रः अनम्रो वा । यद्वा, यो मानित्वेन कस्यापि नम्रो न भवति स्तब्धत्वेन पर्वतमपि न मन्यते[३], शठः = यस्य मनोदृष्टेन्द्रियव्यापाराः कपटयुक्ताः । यद्वा, शक्तिग्रहणकारी गूढद्वेषेण कर्मकारी वा[४], नैकृतिकः = नीचकर्मकारी परावमानी वा । परैः कृतं शुभं यस्य विरुद्धं भवति स नैकृतिकः[५], अलसः = निद्राशीलः यदोचितकृत्यं प्राप्तं तदा निद्राविष्टो भवति प्रमादे कर्मणि तु अनलस इव यः प्रवर्तते । यद्वा, प्राप्तफले कर्मणि उदासीनः[६], विषादी = अवसादनशीलः शोकशीलो वा । यो जीविता तं विषादं वहति[७], दीर्घसूत्री च = प्राप्तेऽपि कर्मकाले पश्चात्कुर्यामिति चिन्तयन् । यद्वा, यदद्य वा श्वो वा कार्यतः तन्मासेनापि न सम्पादयति यः स तथा[८], तदुक्तम्– "परेण यः कृतो दोषो दीर्घकालगतोऽपि वा। यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते ॥" इति परकृतदोषं दीर्घकृतमपि उचितदोषनिमित्तात् योऽन्यस्य सूचयति स दीर्घसूत्री इति वा[८], एवम्भूतः कर्ता[९], तामस इति[१०] उच्यते सद्भिः[११] । अत्र दोषतारतम्यात् तामसकर्तृत्रैविध्यं बोध्यम् । तदुक्तम्— "अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः । अयुक्तो राजसस्तब्धः प्राकृतो नैकृतिकः शठः ॥ एकैकेनैव दोषेण प्रोक्तस्तामसतामसः । दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत् फलं क्रमात् ॥" इति ॥ २८ ॥

**भाष्यम्**

**परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री । "परेण यः कृतो दोषो दीर्घकालकृतोऽपि वा । यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते" इत्यभिधानात् ॥ २८ ॥**

***प०टी०*— दीर्घसूत्री यथा तामसो भवति तथा तत्पदं व्याचष्टे **परेति** ॥ २८ ॥

***प्र०दी०*— दीर्घसूत्रित्वं कथं तामसत्वहेतुः । इत्यतः सप्रमाणकं व्याचष्टे **परेति** । **दीर्घकाल-कृतं** चिरातीतकालकृतम् । **अनुचितं** वचनायोग्यम् । परोपद्रवहेतुत्वात् **दोषात्** मात्सर्यादेः ॥२८॥

***भा०दी०*— 'दोषात्' इति प्रमाणस्य अनुवादः । 'मात्सर्यादेः' इति व्याख्या ॥ २८ ॥

***भा०र०*— **दीर्घसूत्रित्वम्** 'विशादी दीर्घसूत्री' इति गीतोक्तम् । **ननु** यदा कदाचित्काले कृतोऽपि दोषो दीर्घकालकृत एव, सर्वदा कालस्य सत्त्वेन तद्दीर्घत्वस्य सदातनत्वात् । तत्किमुच्यते 'दीर्घकालम्' इत्यतोऽत्र विवक्षितं कालस्य दीर्घत्वं व्याचष्टे **चिरेति** । चिरातीतकालकृतमित्यर्थः । सूचनायोग्यत्वमुपपादयति **परेति**। 'दोषात्' इत्यभिधानस्य पदानुवादः 'मात्सर्यात्' इति व्याख्या। 'न मद्वशोऽसौ' इति चित्तदोषो मात्सर्यम् । आदिशब्देन असूयादिग्रहणम् ॥ २८ ॥

**गीता**

## बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
## प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥

***वि०वि०*— इदानीं बुद्धेर्धृतेश्च गुणतस्त्रैविध्यं प्रतिजानीते **बुद्धेरिति** ॥ २९ ॥

***बा०ल०*— गुणतः सत्त्वादिगुणतः त्रिविधम् ॥ २९ ॥

***सा०सं०*— एवं ज्ञानकर्मकर्तॄणां गुणकृतं त्रैविध्यं निरूप्याधुना बुद्धेः धृतेश्च गुणतः त्रैविध्यं प्रतिज्ञापूर्वमाह **बुद्धेरित्यादिभिः** सप्तभिः । **गुणतः** सत्त्वादिगुणभेदतो निमित्तात् त्रिविधमेव । **बुद्धेर्भेदं धृतेश्च भेदं पृथक्त्वेन मया प्रोच्यमानमशेषेण शृणु** । श्रुत्वा निष्ठां कुरु ॥ २९ ॥

***अ०प्र०*— इदानीं बुद्धिधृत्योः गुणतः त्रैविध्यं प्रतिजानीते **बुद्धिरिति** ।

हे धनञ्जय[१], अशेषेण[२], पृथक्त्वेन बुद्धिधृत्योः पृथग्भेदेन विभागो वर्तते[३], स विभागः प्रोच्यमानं प्रकर्षेण प्रतिपाद्यमानं[४], गुणतः = सत्त्वादिगुणतः[५], त्रिविधं = त्रिप्रकारं[६], बुद्धेः[७], धृतेश्चैव[८], भेदं[९], शृणु मया प्रोच्यमानं त्रिविधं शृणु[१०] कथयामीत्यर्थः ॥ २९ ॥

*सा०सं०*— **अयुक्तः** भगवदर्पणादियोगरहितः । प्रकृष्टो अकृतः **प्राकृतः** । 'भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतः' (शब्दतत्त्वे) इति स्मृतेः । **स्तब्धः** आत्मसम्भावनया क्काप्यनम्रः । **शठः** गूढद्वेषेण कर्मकारी । **नैकृतिको** नीचकर्मकृत् । प्राप्तकालेऽपि कर्मण्युदासीनः **अलसः** । **विषादी** सर्वव्यापारोपरतिहेतुमनोदौर्बल्यवान् । प्राप्तेऽपि कर्मकाले पश्चात् कुर्यामिति ध्यायन् वा, परकृतदोषं दीर्घकालकृतमप्यनुचितं सूचयन् वा **दीर्घसूत्री** । स **तामसः** **कर्ता** इत्यर्थः ॥ २८ ॥

*अ०प्र०*— तामसकर्तारमाह **अयुक्तमिति** ।

अयुक्तः = भगवदर्पणादियोगहीनः स्वपरघातकां दुष्टक्रियां करोति सोऽयुक्तः अनवहितो वा[१], प्राकृतः = प्रकृतिसम्बन्धः इन्द्रियार्जितान् विषयान् भुंक्त्वा यो जीवति विवेकशून्यः । तदुक्तम्— ''भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतो दीर्घसूत्री पश्चात्कुर्यामिति स्मरन् ॥'' इति वचनात्[२], स्तब्धः = आत्मसम्भावनया क्कापि न नम्रः अनम्रो वा । यद्वा, यो मानित्वेन कस्यापि नम्रो न भवति स्तब्धत्वेन पर्वतमपि न मन्यते[३], शठः = यस्य मनोदृष्टेन्द्रियव्यापाराः कपटयुक्ताः । यद्वा, शक्तिग्रहणकारी गूढद्वेषेण कर्मकारी वा[४], नैकृतिकः = नीचकर्मकारी परावमानी वा । परैः कृतं शुभं यस्य विरुद्धं भवति स नैकृतिकः[५], अलसः = निद्राशीलः यदोचितकृत्यं प्राप्तं तदा निद्राविष्टो भवति प्रमादे कर्मणि तु अनलस इव यः प्रवर्तते । यद्वा, प्राप्तफले कर्मणि उदासीनः[६], विषादी = अवसादनशीलः शोकशीलो वा । यो जीविता तं विषादं वहति[७], दीर्घसूत्री च = प्राप्तेऽपि कर्मकाले पश्चात्कुर्यामिति चिन्तयन् । यद्वा, यदद्य वा श्वो वा कार्यतः तन्मासेनापि न सम्पादयति यः स तथा[८], तदुक्तम्– ''परेण यः कृतो दोषो दीर्घकालगतोऽपि वा। यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते ॥'' इति परकृतदोषं दीर्घकृतमपि उचितदोषनिमित्तात् योऽन्यस्य सूचयति स दीर्घसूत्री इति वा[८], एवम्भूतः कर्ता[९], तामस इति[१०] उच्यते सद्भिः[११] । अत्र दोषतारतम्यात् तामसकर्तृत्रैविध्यं बोध्यम् । तदुक्तम्— ''अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः । अयुक्तो राजसस्तब्धः प्राकृतो नैकृतिकः शठः ॥ एकैकेनैव दोषेण प्रोक्तस्तामसतामसः । दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत् फलं क्रमात् ॥'' इति ॥ २८ ॥

**भाष्यम्**

**परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री । ''परेण यः कृतो दोषो दीर्घकालकृतोऽपि वा । यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते'' इत्यभिधानात् ॥ २८ ॥**

*प०टी०*— दीर्घसूत्री यथा तामसो भवति तथा तत्पदं व्याचष्टे **परेति** ॥ २८ ॥

*प्र०दी०*— दीर्घसूत्रित्वं कथं तामसत्वहेतुः । इत्यतः सप्रमाणकं व्याचष्टे **परेति** । **दीर्घकालकृतं** चिरातीतकालकृतम् । **अनुचितं** वचनायोग्यम् । परोपद्रवहेतुत्वात् **दोषात्** मात्सर्यादेः ॥२८॥

*भा०दी०*— 'दोषात्' इति प्रमाणस्य अनुवादः । 'मात्सर्यादेः' इति व्याख्या ॥ २८ ॥

*भा०र०*— **दीर्घसूत्रित्वम्** 'विशादी दीर्घसूत्री' इति गीतोक्तम् । ननु यदा कदाचित्काले कृतोऽपि दोषो दीर्घकालकृत एव, सर्वदा कालस्य सत्त्वेन तद्दीर्घत्वस्य सदातनत्वात् । तत्किमुच्यते 'दीर्घकालम्' इत्यतोऽत्र विवक्षितं कालस्य दीर्घत्वं व्याचष्टे **चिरेति** । चिरातीतकालकृतमित्यर्थः । सूचनायोग्यत्वमुपपादयति **परेति**। 'दोषात्' इत्यभिधानस्य पदानुवादः 'मात्सर्यात्' इति व्याख्या। 'न मद्वशोऽसौ' इति चित्तदोषो मात्सर्यम् । आदिशब्देन असूयादिग्रहणम् ॥ २८ ॥

**गीता**

## बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
## प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥

*वि०वि०*— इदानीं बुद्धेर्धृतेश्च गुणतस्त्रैविध्यं प्रतिजानीते **बुद्धेरिति** ॥ २९ ॥

*वा०ल०*— गुणतः सत्त्वादिगुणतः त्रिविधम् ॥ २९ ॥

*सा०सं०*— एवं ज्ञानकर्मकर्तॄणां गुणकृतं त्रैविध्यं निरूप्याधुना बुद्धेः धृतेश्च गुणतः त्रैविध्यं प्रतिज्ञापूर्वमाह **बुद्धेरित्यादिभिः** सप्तभिः । **गुणतः** सत्त्वादिगुणभेदतो निमित्तात् त्रिविधमेव । **बुद्धेर्भेदं धृतेश्च भेदं पृथक्त्वेन मया प्रोच्यमानमशेषेण शृणु** । श्रुत्वा निष्ठां कुरु ॥ २९ ॥

*अ०प्र०*— इदानीं बुद्धिधृत्योः गुणतः त्रैविध्यं प्रतिजानीते **बुद्धिरिति** ।

हे धनञ्जय[१], अशेषेण[२], पृथक्त्वेन बुद्धिधृत्योः पृथग्भेदेन विभागो वर्तते[३], स विभागः प्रोच्यमानं प्रकर्षेण प्रतिपाद्यमानं[४], गुणतः = सत्त्वादिगुणतः[५], त्रिविधं = त्रिप्रकारं[६], बुद्धेः[७], धृतेश्चैव[८], भेदं[९], शृणु मया प्रोच्यमानं त्रिविधं शृणु[१०] कथयामीत्यर्थः ॥ २९ ॥

गीता

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥**

*वि०वि०*— तत्र बुद्धेर्भेदमाह **प्रवृत्तिमित्यादिना** । प्रवृत्तिनिवृत्तिलक्षणं धर्मं च कर्तव्यमकर्तव्यं च । तन्निमित्ते भयाभये । बन्धमोक्षप्रकारौ च । यथावत् या बुद्धिर्वेत्ति । स्वातन्त्र्यविवक्षया वेत्ति इत्युक्तम् । सा बुद्धिः सात्त्विकी ॥ ३० ॥

*वा०ल०*— **प्रकृतिं** मूलप्रकृतिम् । **विकृतिं** तद्विकारात्मकं जगत्, न तु मायामयम् ॥३०॥

*सा०सं०*— बुद्धेर्भेदमाह **प्रवृत्तिमि**त्यादि त्रिभिः । **प्रवृत्तिं** संसारहेतुं प्रवृत्तिहेतुं धर्मं च । **निवृत्तिं** निवृत्तिहेतुधर्मं च । **कार्याकार्ये** कर्तव्यमकर्तव्यं च । तन्निमित्तभयाभये बन्धमोक्षप्रकारं च । **या बुद्धिर्वेत्ति सा सात्त्विकी**त्यर्थः । कर्तृत्वोपचारात् 'या वेत्ति' इत्युक्तम् । यया वेत्ति पुमानित्यर्थः ॥ ३० ॥

*अ०प्र०*— तत्र बुद्धेर्भेदमाह **प्रवृत्तिमिति** त्रिभिः ।

प्रवृत्तिं धर्मेऽप्रवृत्तिं च अधर्मे निवृत्तिं[१], यद्वा, प्रवृत्तिनिवृत्तिमित्यादिना प्रवृत्तिनिवृत्तिलक्षणं धर्म कर्तव्याकर्तव्ययोः प्रवृत्तिं निवृत्तिं वा[२], कार्याकार्ये = कर्तव्याकर्तव्ये[२], भयाभये = कर्तव्याकर्तव्ये तन्निमित्ते च भयाभये अर्थानर्थौ[३], बन्धं मोक्षं च = कथं बन्धः कथं वा मोक्षः इति । यद्वा, बन्धं मोक्षं च सप्रकारं[४], हे पार्थ !, प्रवृत्त्यादि मोक्षान्तमष्टपदानि यथावत्[५], या[६], बुद्धिरन्तःकरणं[७], वेत्ति करणे कर्तृत्वोपचारः[८], सा बुद्धिः[९], सात्त्विकी[१०] ॥

श्लोकार्थः— या बुद्धिरन्तःकरणं वेत्ति सात्त्विकीयं अंशुमान् वेत्तीति वक्तव्ये करणे कर्तृत्वोपचारः । काष्ठानि पचन्तीतिवत् ग्रन्थातरे उक्तं विवृणोति पूर्वोक्तलक्षणा **बुद्धिः सात्त्विकीति** । एवं शब्दार्थज्ञानमात्रेण कथं मोक्षसिद्धिः ? तस्मात्सात्त्विकी बुद्धिर्हेतुः । तदुक्तम्— 'सत्त्वात्सञ्जायते ज्ञानमि'ति । ज्ञानेन मोक्ष इति सिद्धान्तः । तस्मादस्यार्थः साधनक्रमेण साध्यश्चेन्मोक्षः स्यात् । अत्रायं भावः— प्रवृत्त्याद्यष्टपदेषु प्रवृत्तिरकार्यभयबन्धाख्यानि त्याज्यानि एको भागः तेषां संसारहेतुत्वात् अपराणि निवृत्तिकार्याभयमोक्षान्तानि चत्वारि द्वितीयो भागः । अस्य विवरणमाह— प्रवृत्त्यादिपदभागे यदकार्यं तदेवाकरणकाम्यनिषिद्धभेदेन त्रिविधम् । तत्कृतं चेत् कर्तुः संसारभयसम्बन्धः । तस्मात् मुमुक्षुणा त्रिविधरूपमकार्यं त्यक्त्वा निवृत्त्यादि पदभागे यत्कार्यं तदेव नित्यं कर्म, तत्रान्यफलापेक्षां विहाय परमात्मज्ञानमेव मुख्यफलमिति ज्ञात्वा निवृत्तिपरत्वेनानुष्ठितं चेत्

जन्मादिविषयभयं दूरीकुरुते । तदेवाभयं तेन मोक्षसिद्धिः सुगमा भवतीति या बुद्धिर्वेत्ति । एवं निवृत्यादिपदसम्बन्धः । अथ द्वितीयो भागः— तत्राकार्यमेव अकरणकाम्यनिषिद्धं तस्यानुष्ठानेन जन्ममरणादिसंसारबन्धः । तदेव महाभयं तस्मात्तस्मिन्कार्ये कर्मणि प्रवृत्तिः न कर्तव्येति भावः । एवमकार्यकर्मणः प्रवृत्त्या संसारभयरूपो बन्ध इति या बुद्धिर्वेत्ति सा सात्त्विकीत्युच्यते ॥ ३० ॥

**गीतातात्पर्यनिर्णयः**

**"भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः ।**
**स प्राकृतो दीर्घसूत्री कुर्यां पश्चादिति स्मरन् ॥" इति शब्दतत्त्वे ।**

*प्रका०*— दीर्घसूत्री च "कर्ता तामस उच्यत" इत्यत्र प्राकृतदीर्घसूत्रीशब्दौ व्याचष्टे **भगवद्भक्तीत्यादिना** ।

***न्या०दी०***— ननु सात्त्विकस्यापि प्राकृतत्वदीर्घसूत्रित्वयोः सद्भावात् कथं तत् तामसस्यैवोच्यत इत्यतः तत्पदद्वयस्यार्थं स्मृत्यैव दर्शयति **भगवदिति** ॥ **स्मरन्निति** । चिन्तयन्नित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**प्राप्तकालस्य कर्मणो दीर्घकालेनैव कृतिं सूचयन् दीर्घसूत्रीत्यर्थः ।**

***न्या०दी०***— पश्चात् कुर्यामिति चिन्तनं सात्त्विकेऽपि सममित्यत आह **प्राप्तेति** ॥ यस्य कर्मणो यः कालो विहितः तस्मिन् काले प्राप्तेऽपि पश्चात् कुर्यामिति चिन्तयन् दीर्घसूत्रीत्यर्थः । अनेन अलसादप्यस्य वैलक्षण्यं सूचितम् । सः प्राप्तकालं कर्म उदास्त एवेति ।

**गीतातात्पर्यनिर्णयः**

**"अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः ।**
**अयुक्तो राजसः स्तब्धः प्राकृतो नैकृतिकः शठः ॥**
**एकैकेनैव दोषेण प्रोक्तस्तामसतामसः ।**
**दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत्फलं क्रमात् ॥"**

**—इति च ॥ २८-३० ॥**

*प्रका०*— अत्रालसदीर्घसूत्रिणौ तामससात्त्विकौ । ''अयुक्तस्तामसराजसः अन्ये तामस-तामसाः । तत्र तामससात्त्विकस्य दुर्नरत्वं फलम् । तामसराजसस्य तिर्यक्त्वं फलम् । तामस-तामसस्यान्धतमः फलमित्याह **अलस इत्यादिना** ।

*न्या०दी०*— **नन्वेवं चेद्दीर्घसूत्रितः** स्तब्धादीनां उत्कृष्टत्वात् कथं तामसतया गणनमित्यतः प्रमाणवाक्येनैव तामसेष्वेव तान् विभज्याह **अलस इति** ॥ अयुक्तो भगवदर्पणादियोगरहितः । स्तब्धो नाम आत्मसम्भावनया क्वाप्यनतः । **नैकृतिको** नीचकर्मा । **शठो** गूढद्वेषी । त्रिविधतामसानां फलमाह **दुर्नरत्वमिति** ॥

**गीता**

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

*वि०वि०*— यया धर्मादिकमयथावत्प्रजानाति यथावन्न वेत्ति सा यथार्थनियमरहिता बुद्धिः राजसी । अन्यथा राजस्यास्तामस्या भेदाभावप्रसङ्गात् । उक्तं च— ''किञ्चिद्यथावद्धर्मादीनयथा-वच्च पश्यति । यया बुद्ध्या राजसी सा मिथ्यादृक् त्वेव तामसि ॥'' इति ॥ ३१ ॥

*वा०ल०*— अयथावत् प्रजानाति यथावन्न प्रजानाति संसारमग्नत्वात् तद्विचारमेव न करोति ॥ ३१ ॥

*सा०सं०*— **ययेति** । **धर्मादिकम्** । **यया** बुद्ध्या । **अयथावत् प्रजानाति** नियमेन यथावन्न जानाति । किञ्चिद्यथावत् किञ्चिदयथावज्जानातीति यावत् याथार्थ्यनियमहीना या **बुद्धिः सा राजसीत्यर्थः** ॥ ३१ ॥

*अ०प्र०*— राजसबुद्धिमाह **ययेति** ।

हे पार्थ ![1], यया = बुद्ध्या[2], धर्मं[3], अधर्मं च[4], कार्यं च[5], अकार्यमेव च[6], अयथावत् प्रजानाति = यद्यथा न भवति तदयथावत् यथावन्न वेत्ति सन्देहास्पदत्वेन जानातीत्यर्थः[8], सा बुद्धिः = याथार्थ्यनियमरहिता बुद्धिः[10] राजसीति जानीहीत्यर्थः । यद्वा, बुद्धिरन्तःकरणं पूर्वोक्तं ज्ञानं तु तद्वृत्तिः धृतिरपि तद्वृत्तिरेव । यद्वा, अन्तःकरणस्य धर्मिणो बुद्धिरपि अध्यवसायलक्षणा वृत्तिरेव ॥ ३१ ॥

**भाष्यम्**

**यथार्थत्वनियमाभावे राजस्याः, अन्यथा तामस्याः भेदाभावात् ॥ ३१ ॥**

***प०टी०***— 'अयथावत् प्रजानाति' इत्यत्र न विपरीततयेत्यर्थ इत्याह **यथार्थत्वेति** । किमित्येवम् ? इत्यत आह **अन्यथेति** ॥ ३१ ॥

***प्र०दी०***— 'यया धर्ममधर्मं च' इति राजस्याः बुद्धेः धर्मादिविषयाया अयथार्थज्ञानहेतुत्व-मुच्यते इत्यन्यथाप्रतीतिनिरासार्थमाह **यथार्थत्वेति** । 'अयथावत् प्रजानाति' इत्यस्य यथार्थज्ञान-जननियमाभावे तात्पर्यमित्यर्थः ।

प्रतीत एवार्थः किं न स्यात् ? इत्यत आह **अन्यथेति** । 'राजस्याः' इति षष्ठ्यन्तमनु-वर्तते । 'तामस्याः' इति पञ्चमी । **भेदाभावात्** भेदाभावप्रसङ्गात् ॥ ३१ ॥

***भा०र०***— 'बुद्धिः = अन्तःकरणम्' इति हृदि निधायाऽऽह **यथार्थज्ञानजननेति** । **षष्ठ्यन्तं** 'पदम्' इति शेषः । हेतोरसिद्धिदोषो यथा न स्यात् तथा व्याचष्टे **भेदाभावप्रसङ्गादिति** ॥ ३१ ॥

**गीता**

**अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

***वि०वि०***— चतुर्थपादेन 'अधर्मं धर्मम्' इति श्लोको व्याख्यातः । तमसावृता अज्ञाने-नाभिभूता । एवमन्तःकरणवृत्तिविशेषस्य बुद्धेस्त्रैविध्यं उक्तम् । तेन मन आदीनामपि त्रैविद्ध्य-मुक्तप्रायमेव ॥ ३२ ॥

***वा०ल०***— 'सर्वार्थान् विपरीतान्' इत्यत्र, विपरीतान् मिथ्याभूतान् ॥ ३२ ॥

***सा०सं०***— **या च बुद्धिरधर्मं धर्ममिति मन्यते** । नैतावन्मात्रं किन्तु **तमसाऽऽवृता** अज्ञानेनावृता सती । **सर्वार्थान् विपरीतान्** । यैराकारैरर्थाः वर्तन्ते ततो विपरीतैरसत्यत्वानीश्वर-त्वापराधीनत्वक्षणिकत्वादिप्रकारैश्च । **मन्यते सा बुद्धिः तामसी** इत्यर्थः ॥ ३२ ॥

***अ०प्र०***— तासमबुद्धिमाह **अधर्ममिति** ।

हे पार्थ[१], तमसाऽऽवृता[२], या बुद्धिः[३], धर्मं[४], अधर्मं इति मन्यते[५], अधर्मं धर्ममिति मन्यते[६], सर्वार्थान् विपरीतांश्च वेत्ति[८], सा बुद्धिः[१०] तामसीति विद्धि[११] ॥

हे पार्थ ![१], तमसाऽऽवृता = अज्ञानेनाभिभूता[२], या बुद्धिः[३], धर्मं = धर्मजातं सर्वं अधर्ममिति पातकमिति मन्यते[६], तथा अधर्मं धर्ममिति मन्यते[६], सर्वार्थान् = श्रुत्युक्तान् करणीयानि कर्माणि[७], विपरीतांश्च वेत्ति अकरणीयानीति यो वेत्ति[८], सा बुद्धिः[१०] तामसीति जानीहि[११], एवमन्तःकरण-वृत्तिविशेषस्य बुद्धेस्त्रैविध्यकथनेन मन आदीन्द्रियाणामपि त्रैविध्यमुक्तप्रायमिति बोध्यम् । यद्वा, इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मोभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तम् । उप-लक्षणं चैतदन्यासां अवश्यं श्रेयस्साधनत्वेन वेद्यपदार्थानित्यर्थः ॥ ३२ ॥

**गीतातात्पर्यनिर्णयः**

**"किञ्चिद् यथावद् धर्मादीनयथावच्च पश्यति ।**
**यया बुद्ध्या राजसी सा मिथ्यादृक् त्वेव तामसी ॥"**

**—इति च ॥ ३१-३२ ॥**

***प्रका०—*** "यया धर्मं मर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी । अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ।" इत्यत्र राजसतामसबुद्ध्योः परस्परं वैलक्षण्यमाह **किञ्चिदिति** ।

***न्या०दी०—*** 'बुद्धेः' इति प्रतिज्ञातमुच्यते 'प्रवृत्तिं' इति । तत्र "यया धर्ममधर्मं" इत्युक्तबुद्ध्योरेकप्रकारत्वात् कथं राजसतामसत्वमित्यतः तद्विभागं वाक्यान्तरेण दर्शयति **किञ्चिदिति** ॥ अनेन 'अयथावत्' इति नियमेन यथावन्नेत्युक्तं भवति ॥

**गीता**

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३॥**

***वि०वि०—*** इदानीं धृतेस्त्रैविद्ध्यमाह **धृत्येत्यादिना** । योगेन विष्णुभक्तियोगेन युक्तया वैष्णवो भक्तियोगो यस्तद्युक्ता सात्त्विकी धृतिरित्युक्तेः । अव्यभिचारिण्या विहितविषयया यया धृत्या मनसः प्राणेन्द्रियाणां च क्रियाः धारयते सा धृतिः सात्त्विकी ॥ ३३ ॥

*सा०सं०*— प्रतिज्ञातं धृतेस्त्रैविध्यमाह **धृत्येत्यादित्रिभिः** । **अव्यभिचारिण्या** विहित-विषयया । **योगेन** भगवद्भक्तियोगेन । युक्तयेति शेषः । **यया धृत्या** मनसः प्राणस्येन्द्रियाणां च क्रिया धारयते । **सा धृतिः सात्त्विकी** इत्यर्थः ॥ ३३ ॥

*अ०प्र०*— यथोद्दिष्टं धृतेस्त्रैविध्यमाह त्रिभिः **धृत्येति** ।

हे पार्थ ![1], यया[2], धृत्या[3], अव्यभिचारिण्या[4], योगेन[5], मनःप्राणेन्द्रियक्रियाः[6], धारयते[7], सा धृतिः[9], सात्त्विकी[10] ॥

हे पार्थ ![1], यया[2], धृत्या[3], अव्यभिचारिण्या = असपत्नित्वेन विहितविषयया विषयान्तर-मधारयन्त्या वा[4], योगेन = विष्णुभक्तियोगेन युक्त्या चित्तैकाग्र्येण हेतुना[5], मनःप्राणेन्द्रियक्रियाः = मनश्च प्राणश्च इन्द्रियाणि च तेषां क्रियाः स्वाभाविकाः प्रवृत्तयः । यद्वा, मनसः प्राणेन्द्रियक्रियाश्च प्राणस्य इन्द्रियाणां च क्रियाः स्वान्तःस्थहरौ मन आदिश्चेत् इति यावत्[6], धारयते = नियच्छति। यद्वा, निवारयतीति भावः[7], धृतिः[9], सात्त्विकी[10] 'वैष्णवो भक्तियोगो यस्तद्युक्ता सात्त्विकी धृतिः' इत्युक्तेः ॥ ३३ ॥

**गीता**

## यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
## प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

*वि०वि०*— धर्मादिफलाकाङ्क्षी प्रकृष्टसङ्गेन धर्मार्थकामसाधनभूत मन आदीनां क्रियाः धारयते सा धृतिः राजसी ॥ ३४ ॥

*वा०ल०*— प्रसङ्गेन प्रकृष्टेन सङ्गेन विषयस्नेहेन ॥ ३४ ॥

*सा०सं०*— **यया धृत्या धर्मकामार्थान् धारयते** । **प्रसङ्गेन** प्रकृष्टेन कर्मणि मदीयता-स्नेहेन । **फलाकाङ्क्षी धृतिः सा राजसी** इत्यर्थः ॥ ३४ ॥

*अ०प्र०*— हे अर्जुन ![1], यया[2], धृत्या तु[3], धर्मकामार्थान्[4], धारयते[5], प्रसङ्गेन[6], फला-काङ्क्षी[7], हे पार्थ ![8], सा[9], धृतिः[10] राजसी[11] ॥

हे पार्थ !, यया धृत्या तु[3], धर्मकामार्थान् धर्मश्च अर्थश्च कामश्च तान् तथा तत्साधनभूताः मन आदीद्रियाणां क्रियाः[4], धारयते = प्राधान्येन धारयते न विमुञ्चति[5], तत्प्रसङ्गेन फला-

ऽऽकाङ्क्षी = धर्मादिकाङ्क्षी पुमान् प्रकृष्टकर्तृत्वादिसङ्गेन[९], तत्फलाकाङ्क्षी च भवति[९], हे पार्थ ! सा धृतिः राजसीति जानीहि ॥ ३५ ॥

**गीतातात्पर्यनिर्णयः**

**"वैष्णवो भक्तियोगो यस्तद्युक्ता सात्त्विकी धृतिः" इति च ।**

**विहितविषयैवेत्यव्यभिचारिणी ॥ ३३-३४ ॥**

*प्रका०*— "धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी"त्यत्र योगेनेत्यादिपदार्थमाह **वैष्णव इत्यादिना** ।

*न्या०दी०*— 'योगेन' इति उपायबलेनेत्यल्पार्थप्रतीतिनिरासाय तद् वाक्यान्तरेण व्याचष्टे **वैष्णव इति** ॥ अनेन योगेन युक्त्येति पूरितं भवति । धृतिश्चेद् व्यभिचारशून्यैव । अतोऽव्यभिचारिण्येति विशिष्यास्या एव किमुच्यत इत्यत आह **विहितेति** ॥ न च अत्र अव्यभिचारित्वमस्खलितत्वमिति भावः ॥

*भा०दी०*— धृतिश्चेद् व्यभिचारशून्यैवेति । स्खलनशून्यैवेत्यर्थः ॥

**गीता**

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधाः धृतिः सा पार्थ तामसी ॥ ३५ ॥**

*वि०वि०*— दुर्मेधा दुष्टबुद्धिः पुरुषः स्वप्नाद्युपरक्षितं सर्वं निषिद्धम् । यया धृत्या न विमुञ्चति धारयते सा धृतिस्तामसी । तदुक्तम्— "तत्तत्सात्त्विकमेव स्याद्यद्यद्वृद्धाः प्रचक्षते । निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितम् ॥" इति ॥ ३५ ॥

*सा०सं०*— यो **दुर्मेधाः** दुष्टबुद्धिः पुरुषः । **यया धृत्या** । स्वप्नमतीवनिद्राम् । **भयं शोकं** दुःखं **विषादं** मनोदौर्बल्यम् । **मदं** च । स्वप्नाद्युपलक्षितं सर्वं निषिद्धं भगवद्द्वेषादि **न विमुञ्चति सा तामसी** इत्यर्थः ॥ ३५ ॥

*अ०प्र०*— तामसीं धृतिमाह **ययेति** ।

हे पार्थ ![१], दुर्मेधाः[२], यया धृत्या[३], स्वप्नादिमदान्तं पञ्च[४], न विमुचन्ति[९], सा[१०] धृतिः[११], तामसीति विद्धि[१२] ।

हे पार्थ ![1], दुर्मेधाः = दुष्टा अविवेकबहुला मेधा बुद्धिः तमो गुणाकृतिर्यः पुरुषः[2], यया धृत्या[3], स्वप्नादिमदान्तमित्युपलक्षणं = सर्वनिषिद्ध भगवद्-द्वेषादिकं च तत्रादौ स्वप्नं निद्रां[4], न विमुञ्चति = तस्यालस्याश्रयत्वात्[5], भयं = श्रीविष्णुभक्तिः न कृता चेत् संसाराख्यभयं भविष्यतीति अज्ञानात् भयं न विमुञ्चति[6], शोकं न विमुञ्चति तस्य नश्वरपदार्थेषु अतिस्नेहत्वात्[7], विषादं = विमुञ्चति तस्य सर्वकालेषु असन्तुष्टत्वात्[8], मदं = न विमुञ्चति वयोवित्तकामादि प्रवृद्धौ तस्य सम्भ्रमत्वात्[9], एतान् पञ्च दोषान् न त्यजति पुनः पुनरावर्तयति च सा धृतिः तामसीति विद्धीत्यर्थः । स्वप्नोऽत्र निद्रा । तदुक्तम्— "तत्तत्सात्त्विकमेव स्याद्यद्यद्वृद्धाः प्रचक्षते । निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितम् ॥" इति । 'महात्मानस्तु मां पार्थ', 'अभयं सत्त्वसंशुद्धिः' इत्या-दिनोक्तलक्षणां वृद्धाः तद्वचनेन सत्त्वादिभेदो द्रष्टव्यमिति स्मृत्यर्थः ॥ ३५ ॥

**गीता**

## सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
## अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

***वि०वि०***— प्रतिज्ञापूर्वकं गुणतः सुखस्य त्रैविद्ध्यमाह **सुखं त्वित्यादिना** । यत्र यस्मिन् सुखे चिरकालमभ्यासात् क्रमेण रमते निरतिशयां रतिं प्राप्नोति। यतो दुःखस्यान्तं नाशं नितरां गच्छति ॥ ३६ ॥

***सा०सं०***— प्रतिज्ञापूर्वं गुणतः सुखस्य त्रैविध्यमाह **सुखं त्विति** । **यत्र** यस्मिन् सुखे, चिरकालम् **अभ्यासात्** पुनः पुनः, **रमते दुःखान्तं** दुःखनाशं च **नितरां गच्छति** प्राप्नोति, **तत् सुखं त्रिविधमित्यर्थः** । यद्वा, पूर्वार्धमेव प्रतिज्ञापरम् । उत्तरार्धं 'यत् तत्' इति श्लोकस्य सात्त्विकसुखोक्तिपरः ॥ ३६ ॥

***अ०प्र०***— हे भरतर्षभ ![1], मे = मद्वचनात्[2], इदानीं[3], त्रिविधं[4], सुखं[5], शृणु[6], यत्र[7], अभ्यासात्[8], रमते[9], यस्मिन् रममाणश्च दुःखान्तं च[10] निगच्छति[11] ॥

हे भरतर्षभ ![1], यत् विष्णुरस्सर्वोत्तमः जीवस्तदधीन इति ज्ञानमापद्यते तत्[2], मे = मद्वचनात्[3], इदानीं त्रिविधं सुखं शृणु[4], यत्र यस्मिन् ज्ञानमार्गे[5], अभ्यासात् चिरकालसाधनात् क्रमेण रतिपरिचयात्[8], रमते = रतिं प्राप्नोति[9], न तु विषयसुखमिव सहसा रतिं प्राप्नोति । यस्मिन् रममाणश्च दुःखान्तञ्च दुःखस्य अन्तं अवसानं नाशं जननमरणादिनिरतिशयदुःखनाशं च[10] निगच्छति नितरां प्राप्नोति[11], तज्ज्ञानसुखं तु गुणसङ्गात् त्रिविधं त्रिप्रकारं वर्तते तद्वक्ष्यामीति भावः ॥ ३६ ॥

**गीतातात्पर्यनिर्णयः**

"स्वप्नं भयम्" इत्यादि सर्वनिषिद्धोपलक्षणम् ।

*न्या०दी०—* यया स्वप्नमित्युक्तमात्रं यया न मुञ्चति सा तामसीति प्रतीतिनिरासायाह **स्वप्नमिति** ॥ सर्वनिषिद्धं भगवद्द्वेषादि । भगवद्द्वेषादेः वृद्धनिषिद्धत्वेन तामसत्वात् तद्विषयधृतेरपि तामसत्वमिति भावः ।

**गीतातात्पर्यनिर्णयः**

"तत्तत् सात्त्विकमेव स्याद् यद्यद् वृद्धाः प्रचक्षते ।
निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम् ॥"

—इति हि भागवते ।

*न्या०दी०—* वृद्धनिषिद्धत्वेऽपि कुतस्तामसत्वमित्यत आह **तदिति** ॥

**गीतातात्पर्यनिर्णयः**

"महात्मानस्तु मां पार्थ", "अभयं सत्त्वसंशुद्धिः" इत्यादिना वृद्धाश्च उक्ताः ॥ ३५-३६ ॥

*न्या०दी०—* ननु भगवद्द्वेषादेः कैश्चन वृद्धैर्विहितत्वात् कथं तन्निन्दितत्वमित्यत आह **महात्मान इति** ॥ ये भगवद्द्वेषादिविधायका न ते वृद्धाः, किन्तु भगवन्तं भजन्त एव । तथोक्तत्वादित्यर्थः ॥

**गीता**

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

*वि०वि०—* तदेव विशिष्यते **यत्तदिति** । यत्तत्सुखं अग्रे पूर्वं विषमिव बह्वायाससाध्यत्वात् । परिणामे विपाके अमृतसदृशं आत्मनो विष्णोः प्रसादादनुग्रहाद् बुद्धेर्मनसः प्रसादात् स्वतोऽपि प्रायो विषयागतिलक्षणाच्च जातं विष्णोः प्रसादात्स्वमनःप्रसादात्सात्त्विकं सुखमित्युक्तेः ॥ ३७ ॥

***सा०सं०***— **यत्** प्रसिद्धम् । **सुखम्** । **अग्रे** पूर्वम् । **विषमिव** आयाससाध्यत्वात् । **परिणामे** विपाके । **अमृतसदृशम्** । **आत्मबुद्धिप्रसादजम्** आत्मनो विष्णोः प्रसादादनुग्रहाजातम् । बुद्धेः प्रसादाच्च । बुद्धेः प्रसादो नाम स्वतो विषयेष्वप्रवृत्तिः । ततो जातं च **यत् तत् सुखं सात्त्विकं** इत्यर्थः ॥ ३७ ॥

***अ०प्र०***— कीदृशं तत् ? **यत्तदिति** ।

यत् तत् = किमपि[१], अग्रे = प्रथमं प्रवेशसमये[२], विषमिव = भवति मनस्संयमाधीनत्वाद्दुःखावहमिव भवति । कथं यत्सुखसाधनप्रवेशो विषमः ? तस्य शमदमसाधनमूलत्वात् । तत्र वैराग्यमेव कारणम् । येन देहादिसंसार-स्वर्गविषयस्नेहोपनुद्यते तदेव वैराग्यम् । तत्र विषयग्रहत्यागात् इन्द्रियाणां युगान्त इव दुःखं भवति तद्वीतरागायेव सहन्त्येव । यत्सुखारम्भोऽतीव दुःसहः[३], परिणामे अमृतोपमम् = विपाककाले विष्णुसर्वोत्तमज्ञानानन्तरं अमृततुल्यं भवति[४], आत्मबुद्धिप्रसादजम् = आत्मविषया बुद्धिः आत्मबुद्धिः । प्रसादो रजस्तमोमलत्यागेन स्वच्छतयाऽवस्थानम् । ततो जातम् । यद्वा, आत्मनो विष्णोः प्रसादात् अनुग्रहात् बुद्धेर्मनसः प्रसादात् स्वतो विषयावगतिलक्षणात् जातं तत्तथा[५], यत्सुखं तत्सुखं = श्रीविष्णोः प्रसादात् यद्भवति तत्सुखं[७], सात्त्विकं इति प्रोक्तम्[८] ॥ ३७ ॥

**गीता**

## विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
## परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

***वि०वि०***— यत्तत्सुखं विषयेन्द्रियसंयोगाज्जातम् । अग्रेऽमृततुल्यम् । परिपाके विषमिव दुःखावहं तद्राजसम् ॥ ३८ ॥

***सा०सं०***— **विषयेन्द्रियसंयोगात्** शब्दादिविषयाणां श्रोत्रादीन्द्रियाणां संयोगेनोत्पन्नविषयानुभवेन जायमानं **यत् तत्** प्रसिद्धं सुखम् । **अग्रे** प्रथमम् अमृतसदृशम् । विपाके **विषमिव** दुःखावहत्वात् । **तत् सुखं राजसमित्यर्थः** ॥ ३८ ॥

***अ०प्र०***— राजससुखमाह **विषयेति** ।

विषयेन्द्रियसंयोगात् = इन्द्रियाणां विषयाणां च परस्परं संयोगात् संस्पर्शात्[१], यत्सुखं प्रसिद्धं स्त्रीपुत्रधनादिजन्यं[२], अग्रे = आदौ[३], अमृतोपमं = अमृततुल्यं भवति अत्यन्तं सुखं भवतीत्यर्थः[४],

परिणामे तदेव सुखं विषयभोगान्ते[1], विषमिव घातकमिव परिणमते इहामुत्र च दुःखहेतुत्वात् तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

**गीता**

## यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
## निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

***वि०वि०***— यत्सुखमग्रेऽनुबन्धे पश्चाद्विपाककालेऽपि । आत्मनो मोहनं मोहहेतुः । यतो निद्रादिजनितं तत्तामसमुदाहृतम् ॥ ३९ ॥

***वा०ल०***— 'यदग्रे चानुबन्धे' इत्यत्र, अग्रे आदौ । अनुबन्धे अनु अनन्तरं बन्धे सुख-सम्बन्धे । मोहनं मिथ्याज्ञानजनकम् ॥ ३९ ॥

***सा०सं०***— **यत्** सुखमग्रे **चानुबन्धे च** पश्चात् विपाककाल इति यावत् । **आत्मनः** स्वस्य । **मोहनं** मोहकरं पारवश्यकृत् । **निद्रालस्यप्रमादैरुत्थितं** उत्पन्नम् । **आलस्यं** शरीर-मान्द्यम् । **प्रमादः** अधर्मे बुद्धिः । **तत्सुखं तामसमित्यर्थः** ॥ ३९ ॥

***अ०प्र०***— यत्[1], सुखं[2], अग्रे च[3], अनुबन्धे च[4], आत्मनः[5], तथा निद्रालस्यप्रमादोत्थं[6], तत्तामसमुदाहृतमित्यन्वयः ॥

यत्सुखं = अपेयपानेनाखाद्यभोजनेन स्वैरस्त्रीसन्निधानेन यत्सुखं[2], अग्रे = प्रथमं[3], अनुबन्धे च = पश्चादपि काले[4], आत्मनः मोहनं = मोहकरं भवति[5], तथा निद्रालस्यप्रमादोत्थं = निद्रा आलस्यं च प्रमादश्च एतैरुत्थितं प्रमादादिजन्यं कर्तव्यार्थविधानराहित्येन मनोराज्यं एतेभ्य उत्तिष्ठति[6], तत् तामसमुदाहृतं = आदौ चान्ते च तत्सुखं तामसमित्युदाहृतम् ॥ ३९ ॥

**गीतातात्पर्यनिर्णयः**

"विष्णोः प्रसादात् स्वमनःप्रसादात् सात्त्विकं सुखम् ॥"

—इति पाद्मे ॥ ३७-३९ ॥

***न्या०दी०***— 'सुखं' इति प्रतिज्ञातमुच्यते 'अभ्यासात्' इति । तत्र "आत्मबुद्धि-प्रसादजं" इत्यस्य स्वमनःप्रसादजमित्यन्यथाप्रतीतिनिरासाय स्मृत्यैवार्थमाह **विष्णो-रिति** ॥ जातमिति शेषः । मनःप्रसादो नाम मनसः स्वतोऽपि प्रायो विषयागतिः ॥

गीता

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥**

*वि०वि०*— सर्वजीवानां गुणतस्त्रैविध्यमाह **न तदिति** । यत्सत्वं जीवजातम् । प्रकृतिजैरेभिस्त्रिभिर्गुणैर्मुक्तं स्यात् । तत्पृथिव्यादिषु नास्ति । मुक्तानां गुणातीतत्वात् । तद्व्यावृत्त्यर्थं 'पृथिव्यां दिवि देवेषु च' इत्युक्तम् । तदुक्तम्— "यथेष्टं सञ्चरन्तोऽपि मुक्ता भूम्यादिगा न तु । ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः ॥" इति ॥ ४० ॥

*सा०सं०*— सर्वजीवानां गुणत्रयबद्धत्वेन त्रैविध्यमाह **न तदस्तीति** । **यत् सत्वं** जीवजातम् । **प्रकृतिजैरेभिस्त्रिभिः** सत्त्वादिगुणैः । **मुक्तं स्यात्** । **तत् सत्वं पृथिव्यां दिवि देवेषु** वा । **पुनः** शब्दः समुच्चये । **नास्ति** । मुक्तव्यावृत्त्यर्थं पृथिव्यामित्याद्युक्तिः ।

तत्रायं विवेकः— सात्त्विकराजसतामसभेदेन जीवास्त्रिविधाः । सात्त्विकादयोऽपि प्रत्येकं त्रिविधाः । पितृगन्धर्वपूर्वकाः सात्त्विकतामसाः । मुनयः सात्त्विकराजसाः । देवाः सात्त्विकसात्त्विकाः । सात्त्विकसात्त्विकेष्वपि बृहस्पत्यादयः सात्त्विकसात्त्विकतामसाः । इन्द्रः सात्त्विकसात्त्विकराजसः । ब्रह्मादिरुद्रावसानाः सात्त्विकसात्त्विकसात्त्विकाः । तेष्वपि रुद्रः सात्त्विकसात्त्विकसात्त्विकतामसः । ब्रह्माणीभारत्यौ तादृग्राजस्यौ । ब्रह्मवायू तु सात्त्विकसात्त्विकसात्त्विकसात्त्विकावेवेति ।

मध्यमोत्तमनराः राजसाः । तेऽपि प्रत्येकं त्रिविधाः । तेषु विप्रादिपुल्कसान्ताः ये भागवताः ते राजससात्त्विकाः । राजससात्त्विकेष्वपि विप्रा राजससात्त्विकसात्त्विकाः । क्षत्रियास्तु स्वल्परजोयुक्ततया राजसराजससात्त्विकाः । वैश्यास्तु समसत्त्वरजोयुक्ततया राजसराजससात्त्विकाः । शूद्रास्तु तमसोऽल्पत्त्वेन रजोऽधिकेन युक्ततया तामसराजससात्त्विकाः ।

राजससात्त्विकसात्त्विकविप्रेष्वपि ये शुद्धसत्त्वात्मकाः ते परमहंसशब्दिताः शिखायज्ञोपवीतहीनाः एकदण्डिनः । किञ्चिद्रजोयुक्तसत्त्ववन्तो हंसशब्दिताः यज्ञोपवीतवन्तः एकदण्डिनः शिखाहीनाः । ततोऽधिकरजोयुक्तसत्त्ववन्तः त्रिदण्डिनः शिखायज्ञोपवीतवन्तो ग्रामैकरात्रिचराः बहूदकसंज्ञकाः । ततोऽप्यधिकरजोयुक्तसत्त्ववन्तस्त्रिदण्डिनः शिखायज्ञोपवीतवन्तो यावज्जीवं पुत्रदत्ताशनाः कुटीचकाः ।

*सा०सं०*— तामसा अपि सात्त्विकादिभेदेन त्रिविधाः । तत्र नराधमाः सात्त्विकतामसाः । दैत्यभृत्या राजसतामसाः । महादैत्यास्तामसतामसा इति ॥ ४० ॥

*अ०प्र०*— सर्वजीवानां गुणत्रैविध्यमाह **नेति** ।

हे पार्थ !, एभिः[१], प्रकृतिजैः[२], त्रिभिर्गुणैः[३], मुक्तं[४], सत्त्वं[५], यत्[६], स्यात्[७], तत्[८], पृथिव्यां वा[९], दिवि देवेषु वा[१०] पुनः तथा पाताले वा[११], नास्ति इत्यन्वयः ।

हे पार्थ !, एभिः = उक्तैः[१], प्रकृतिजैः = प्रकृतेः सकाशाज्जातैः[२], सत्त्वादिभिः = त्रिभिर्गुणैः[३], मुक्तं = त्यक्तं हीनं वा[४], सत्त्वं = दृश्यमानं प्राणिजातं[५], यत् स्यात् = भवेत्[७], तत् = सत्त्वजातं[८], पृथिव्यां वा मनुष्यलोकादिषु वा[९], दिवि देवेषु वा = स्वर्गादिलोकेषु ब्रह्मादिदेवयोनिषु वा[१०] पुनः तथा पाताले वा[११], क्वापि नास्ति[१२] । पृथिव्यादिषु नास्ति मुक्तानां गुणातीतत्वात् तद्व्यावृत्त्यर्थं पृथिव्यां दिवि वियति देवेषु वा इत्युक्तम् । यथेष्टं "सञ्चारतोऽपि मुक्ता भूम्यादिगा न तु। ग्रामस्था अपि न ग्राम्या वैलक्ष्यण्याद्धि सज्जनाः ॥" इति वचनात् ॥ ४० ॥

**गीता**

## ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
## कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

*वि०वि०*— इदानीं परमेश्वराराधनात्मकस्य कर्मणः फलं प्रतिपादयितुं ब्राह्मणाद्यधिकारिणां स्वभावानुबन्धि सत्वादिगुणभेदभिन्नवृत्या सह कर्तव्यकर्मस्वरूपमाह **ब्राह्मणेत्यादिना** । द्विजत्वाभावद्योतनार्थं शूद्राणां समासात्पृथक्करणम् ॥ ४१ ॥

*सा०सं०*— इदानीं ब्राह्मणाद्यधिकारिगुणकृतकर्माणि भिन्नानि सन्तीत्याह **ब्राह्मणेति** । त्रैवर्णिकानामिव द्विजन्मत्वं नेति द्योतनाय **शूद्राणाम्** इति पृथङ्निर्देशः । **स्वभावप्रभवैः** ब्राह्मणादितत्तत्स्वभावानुबन्धिभिः सत्त्वादिगुणैः **कर्माणि प्रविभक्तानि** तानि मे श्रुण्विति भावः ॥ ४१ ॥

*अ०प्र०*— ननु च यदि एवं सर्वमपि क्रियाकारकफलादिकं प्राणिजातं च त्रिगुणात्मकमेव । कथं मोक्षः ? इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनात् तत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं सङ्गृह्य दर्शयितुं प्रकरणान्तरमारभते । यद्वा, साम्प्रतं परमेश्वराराधनात्मकस्य स्वकर्मणा सात्त्विकस्य ज्ञानात्मकस्य स्वकर्मणस्सात्विकस्य ज्ञानादिफलं प्रतिपादयितुं ब्राह्मणादि-

सजीवानां स्वरूपसत्त्वादि-अनुबन्धिसत्त्वादिगुणभेदात् भिन्नवृत्त्या सह कर्तव्यकर्मस्वरूपमाह **ब्राह्मणेत्यादिना** ।

द्विजत्वाभावद्योतनाय शूद्राणां समासात् पृथक्कारणं स्वभावसात्त्विकत्वादिः प्रभवति प्रादुर्भवति येभ्यस्तैः स्वभावः प्रभवैः सात्त्विकादिस्वभावात् प्रादुर्भूतैरिति ॥

अथान्वयः— हे परंतप ![1], ब्राह्मणानां[2], क्षत्रियाणां[3], विशां = वैश्यानां[4], शूद्राणां च[5], स्वभावप्रभवैः[6], गुणैः[7], कर्माणि[8], प्रविभक्तानि[9], शृण्विति शेषः ।

हे परंतप = शत्रुतापन ![1], ब्राह्मणक्षत्रियविशां = ब्राह्मणाश्च क्षत्रियाश्च विशश्च वैश्याश्च ब्राह्मणक्षत्रियविशः तेषां तथा[2], शूद्राणां च[3], स्वभावप्रभवैः = स्वभावस्य व्यञ्जकैः प्रकृतेः सकाशात् प्रभवैः प्रकर्षेणोत्पन्नैः । यद्वा, स्वभावः = सात्त्विकादिः प्रभवति प्रादुर्भवति येभ्यः तैः स्वभावप्रभवैः स्वभावाख्यव्यञ्जकैः[4], गुणैः = सत्त्वादिगुणैः उपलक्षणभूतैः । यद्वा, स्वभावः पूर्वजन्मसंस्कारः । तस्मात्प्रादुर्भूतैः इत्यर्थः[4], कर्माणि = प्रविभक्तानि प्रकर्षेण विभक्तानि[5], विभागतो = विहितानि[6], शृणु इति शेषः ।

तत्र सत्त्वप्रधानाः ब्राह्मणाः क्षत्रियाः, राजसाः सत्त्वोपसर्जनरजःप्रधानाः, वैश्याः तम उपसर्जनरजःप्रधानाः, शूद्राः रजउपसर्जनतमप्रधाना इत्येवं विभागः ॥ ४१ ॥

**गीतातात्पर्यनिर्णयः**

**सत्त्वं जीवजातम् । मुक्तानां गुणातीतत्वात् "पृथिव्यां दिवि देवेषु च" इति विशेषः ।**

*प्रका०*— "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः" इत्यस्य अर्थमाह **सत्त्वं जीवजातमित्यादिना** ।

***न्या०दी०*— सर्वजीवानामपि गुणतस्त्रैविध्यमुच्यते 'न तत्' इति । तत्र सत्त्वस्यापि गुणविशेषत्वात् कथं गुणबद्धत्वमुच्यत इत्यत आह सत्त्वमिति ॥ ननु गुणातीतं सत्त्वं नास्तीत्येतावता पूर्णत्वात् पृथिव्यां दिवीति विशेषोक्तिः किमर्थेत्यत आह मुक्तानामिति ॥ मुक्तानां गुणबद्धत्वाभावात् गुणातीतं सत्त्वं नास्तीत्युक्ते तेषामपि तत्प्रसक्तेस्तद्व्यावृत्त्यर्थं पृथिव्यामित्यादिविशेषोक्तिर्युक्तेत्यर्थः ।**

**गीतातात्पर्यनिर्णयः**

**"यथेष्टं सञ्चरन्तोऽपि मुक्ता भूम्यादिगा न तु ।**
**ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः ॥**

**नराधमास्तामसेषु सात्त्विकास्तत्र राजसाः ।**
**दैत्यभृत्या महादैत्या मुख्यतामसतामसाः ॥**

**राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः ।**
**तत्रस्थशुद्धसत्त्वास्तु परहंसाः प्रकीर्तिताः ॥**

**हंसो बहूदकः कुटिजो वनस्थो नैष्ठिको गृही ।**
**क्रमाद् रजोऽधिका बाह्यं कर्मैषामधिकं यतः ॥**

*प्रका०*— अत्रमुक्तातिरिक्ता जीवाः सर्वे प्रकृतिगुणबद्धा इत्युच्यते । तत्र राजसतामसादिभेदेन बहुधा तान् विभज्य दर्शयति **नराधमा इत्यादिना** ।

*न्या०दी०*— "इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्यादेः मुक्तानामपि पृथिव्यादौ सञ्चरणात् कथमनेन तद्व्यावृत्तिरित्याशङ्कां परिहरन् वाक्यान्तरेण जीवानुगुणभेदतो बहुधा विभज्य दर्शयति **यथेष्टमिति** ॥ तद्गतदोषसम्बन्धाभावादिति शेषः । अतो भूम्यादिस्था एव गुणबद्धा इत्युक्ते तद्व्यावृत्तिः सिद्ध्यतीति चात्र द्रष्टव्यम् । अमुक्ताः कथं गुणबद्धा इत्यतस्तद्विभज्याह **नरेति** ॥ सात्त्विकराजसतामसास्त्रिविधा जीवाः । तेषु तामसाः त्रिविधाः । त उच्यन्ते 'नराधमाः' इति । तत्र तामसेषु तामसभेदमुक्त्वा राजसान् सामान्येनाह **राजसा इति** ॥ नरा उत्तमा मध्यमा अधमाश्चेति । तेऽपि त्रिविधाः । तत्र भागवता विप्रादिपुल्कसान्ताः राजससात्त्विकाः । वर्णभेदेन तेष्वपि अनेकविधतामाह **तत्रेति** ॥ तेषु राजससात्त्विकेष्वपि विप्रा राजससात्त्विकसात्त्विका इत्यर्थः । राजससात्त्विकसात्त्विकेषु विप्रेष्वप्याश्रमभेदेन अनेकविधतामाह **तत्रस्थेति** ॥ राजससात्त्विकसात्त्विकेषु शुद्धसात्त्विका इत्यर्थः । परमहंसाः शिखायज्ञोपवीतहीनाः एकदण्डिनः । यज्ञोपवीतवान् एकदण्डी शिखारहितो हंसः । त्रिदण्डी शिखायज्ञोपवीतवान् ग्रामैकरात्रिः बहूदः । त्रिदण्डी शिखायज्ञोपवीतवान् यावज्जीवं पुत्रदत्तान्नादः कुटीचकः । अधिकं क्रमादिति सम्बद्ध्यते ।

*भा०दी०*— 'कर्मैषामधिकं यत' इत्यत्र स्थायिकपदमनूद्य काङ्क्षितं पूरयति **अधिकं क्रमा-दिति सम्बध्यत** इति ॥

**गीतातात्पर्यनिर्णयः**

**धर्माः परमहंसानां बाह्या एव शमादिकाः ।**
**देवादेः कर्मबाहुल्यं न लिङ्गं रजसः क्वचित् ॥**
**न हि विष्णोश्चलेत् तेषां मनः कर्मकृतावपि ।**
**अन्येषां चलचित्तत्वात् प्रायः स्यात् कर्म राजसम् ।**
**यदि तत् स्मारकं विष्णोर्विद्यात् सात्त्विकमेव तत् ॥**

*प्रका०*— परमहंसा एकदण्डिनः । यज्ञोपवीतवानेकदण्डी । शिखारहितो हंसः । बहूदः दण्डी । यावज्जीवं पुत्रदत्तान्नादः त्रिदण्डी कुटीचकः । बाह्यकर्मापि त्रयादधिकमिति ज्ञातव्यम् । ब्राह्मा ब्रह्मकर्मस्वभावजमित्युक्ताः ।

*न्या०दी०*— तत् परमहंसानामपि समं किमित्यत आह **धर्मा इति** । शमो दम इत्यादौ ब्राह्मकर्मतयोक्ता इत्यर्थः । कर्मबाहुल्याद् हंसादीनां राजसत्त्वे देवादीनामपि तद्भावाद् राजसत्त्वं स्यादित्यत आह **देवादेरिति** ॥ कुतो नेत्यत आह **न हीति** ॥ कर्मणि मनश्चलतु मा वा, तथाप्यस्ति तावद् बहुलं कर्म । अतो हंसादिवद्राजसत्त्वमेव देवादे-रित्यत आह **अन्येषामिति** ॥ न हंसादिष्वपि कर्म स्वरूपत एव रजोऽनुमापकम् । किन्तु चित्तचलनहेतुत्वेनैव । देवादिकर्मणस्तु तदभावान्न राजसत्वे लिङ्गत्वमिति भावः । कर्मणः स्वरूपत एव रजोऽनुमापकत्वं किं न स्यादित्यत आह **यदीति** ॥ भगवत्स्मरणहेतुकर्मणः सत्त्वानुमापकत्वदर्शनान्न कर्म स्वरूपत एव राजसत्वानुमापकमिति भावः । अत एव प्रायः स्यादित्युक्तम् ।

*भा०दी०*— तदिति । कर्माधिक्यमित्यर्थः ॥ इत्यादाविति । अत्रैवोत्तरश्लोक इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**धर्मार्थहिंसनाऽग्निश्च विशेषो ब्रह्मचारिणः ।**
**पैतृकं चापि यतितो दारास्तु गृहिणस्ततः ॥**

**असर्गो ग्राम्यसन्त्यागः पश्वहिंसा गृहस्थतः ।**
**वनस्थस्य विशेषोऽयं सर्वेषामितरत् समम् ॥" इति च ।**

*प्रका०*— धर्मार्थाहिंसना समिदादिच्छेदनम् । दारास्तु गृहिणः । ततो ब्रह्मचारिविशेष इत्यर्थः । अपत्यानुत्पादनम् सर्गः । इतरत् स्वोचितं यज्ञादिकम् ।

***न्या०दी०***— परमहंसादर्वाग् गृहस्थान्तानां यत् क्रमेण कर्मबाहुल्यमुक्तं तल्लेशतो विभज्य दर्शयति **धर्मेति** ॥ हंसादिषु कर्मबाहुल्यक्रमोऽन्यतो द्रष्टव्यः । चतुर्विधयतितो ब्रह्मचारिणः समिदादिच्छेदनमग्निपूजाश्राद्धकरणमिति विशेषः । ब्रह्मचारितो गृहस्थस्य दारसङ्ग्रहो विशेषः । अपत्यानुत्पादनं, ग्रामभववस्तुसेवाभावः, पश्वहिंसेति गृहस्थाद् वनस्थस्य विशेष इत्यर्थः । ग्राम्यसन्त्यागोक्त्या वनस्थस्य ब्रह्मचारितोऽपि कर्माल्पत्वमुक्तं भवति । इतरत् स्वोचितं यज्ञादि ।

*भा०दी०*— गृहस्थान्तानामिति । नैष्ठिको गृहीत्युक्तगृहस्थान्तानामित्यर्थः । असर्ग इत्यादेरर्थः **अपत्यानुत्पादनमित्यादि** ॥

**गीतातात्पर्यनिर्णयः**

**"सात्त्विकाः स्वल्परजसः क्षत्रियाः सत्त्वराजसाः ।**
**वैश्याः शूद्रा अतिस्वल्पसत्त्वाधिक्येन तामसाः ॥**
**ये तु भागवता वर्णास्तेषां भेदोऽयमीरितः ।**
**सत्त्वाधिकः पुल्कसोऽपि यस्तु भागवतः सदा ॥**
**त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः ।**
**अन्याधिक्यं न मन्यन्ते श्रीशाद् राजसराजसाः ॥**
**अज्ञा विष्णौ द्वेषहीनाः सर्वे राजसतामसाः ।**
**पितृगन्धर्वपूर्वाश्च मुनयो देवता इति ॥**

*प्रका०*— मुनयः ऋषयः ।

***न्या०दी०***— राजससात्त्विकेषु भागवतेषु वर्णभेदेनानेकप्रकारेषु विप्रस्वरूपमुक्तम् । क्षत्रियादिस्वरूपं राजसराजसादिस्वरूपं च वाक्यान्तरेण दर्शयति **सात्त्विका इति** ॥

राजससात्त्विकेष्विति द्रष्टव्यम् । **सत्त्वराजसा इति** ॥ समसत्त्वराजसा इत्यर्थः । **अतिस्वल्पसत्त्वाधिक्येनेति** ॥ तमसोऽप्यतिस्वल्पतया सत्त्वमधिकं यथा तथैवेत्यर्थः । क्षत्रियादिमात्रस्यैवं स्थितिः किमित्यत आह **य इति** ॥ वर्णबाह्या भागवताश्चेत् किमित्यत आह **सत्त्वेति** ॥ यः पुल्कसोऽपि भागवतोऽसौ राजसेष्वपि सत्त्वाधिक इत्यर्थः । राजससात्त्विकानुक्त्वा राजसराजसादीनाह **त्रैविध्येति** ॥ कालतो भागवतान् जायमानान् व्यवच्छिनत्ति **त्रैविध्यमात्रा इति** ॥ **सर्वाधिक्य इति** ॥ सर्वप्रकारेणाधिक्ये इति गमयितव्यम् । सात्त्विकप्रभेदमाह **पितृगन्धर्वेति** ॥ श्रेष्ठा एवेत्यनेन पितृगन्धर्वपूर्वकाः सात्त्विकतामसाः, मुनयः सात्त्विकराजसाः, देवाः सात्त्विकसात्त्विका इत्युच्यन्ते ।

*भा०दी०*— **विप्रादिस्वरूपमुक्तमिति** । विप्रा राजससात्त्विका इत्यादिनेति भावः ॥ **इति गमयितव्यमिति** । अन्यथान्याधिक्यमित्याद्युत्तरवाक्यविरोधादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**सात्त्विकास्त्रिविधास्तत्र श्रेष्ठा एवोत्तरोत्तराः ।**
**देवा इन्द्रो विरिञ्चाद्या इति त्रेधैव देवताः ॥**
**क्रमोत्तराः शिवो वाणी ब्रह्मा चैवोत्तरोत्तराः ।**
**सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुखः ।**
**तस्माद् यावद् विमुक्तिः स्यान्मुक्तावेवं सुखक्रमः ॥" इति च ।**

*प्रका०*— सत्त्वसत्त्वानां देवानां मध्ये महासत्त्वा विरिञ्चाद्याः । तत्रापि सूक्ष्मसत्त्वश्चतुर्मुख इत्यर्थः ।

***न्या०दी०***— देवान् विभज्याह **देवा इति** ॥ **क्रमोत्तरा इति** ॥ सात्त्विकसात्त्विकेषु बृहस्पत्यादयस्तामसाः, इन्द्रः राजसः, ब्रह्मादिरुद्रावसानाः सात्त्विका इत्युच्यन्ते । विरिञ्चादीन् विभज्याह **शिव इति** ॥ **उत्तरोत्तरा इति** । सात्त्विकसात्त्विकेषु रुद्रस्य तामसत्वं, सरस्वत्या राजसत्वं, ब्रह्मणः सात्त्विकत्वमुक्तं भवति । एवं चेद्विरिञ्चः किमुच्यत इत्यत आह **सत्त्वेति** ॥ तस्मादुक्तरीत्या गुणनिबन्धनमेव तेषां तारतम्यं कियत्पर्यन्तमित्यत आह **यावदिति** ॥ तत्र गुणाभावात् साम्यं किमित्यत आह **मुक्ताविति** ॥ गुणाभावेऽप्युक्तप्रकारावसितसुखक्रमेणैव तारतम्योपपत्तिरिति भावः ।

*भा०दी०*— **गुणाभावादिति** । सत्त्वादिगुणाभावादित्यर्थः ॥ **उक्तप्रकारेति** । श्रेष्ठा एवोत्तरोत्तरा इत्यादावुक्तप्रकारावसितेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**विष्णौ किञ्चित्प्रीतियुक्तास्तामसमध्ये सात्त्विका नराधमा इत्यर्थः । राजसानां मध्ये सात्त्विका एव भागवता विप्रादयः । राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विकाः किञ्चिद्रजोयुक्तसात्त्विकाः समरजोयुक्तसात्त्विकाः सत्त्वात् किञ्चिदूनतमोयुक्तसात्त्विका इति वर्णभेदः । सत्त्वप्रधानत्वादेतानारभ्योत्तरोत्तरं सर्वेऽपि मोक्षयोग्याः ।**

*प्रका०*— राजसतामसेभ्यो मनुष्येभ्योऽन्ये तामससात्त्विकनराधमाः किंलक्षणा इत्यत आह **विष्णौ किञ्चिदिति** । समो वेत्येकप्रकारगुणत्रय इत्यर्थः ।

***न्या०दी०***— "नराधमास्तामसेषु सात्त्विकाः" इत्युक्तम् । ते कीदृशा इत्यतः तद्विवृणोति **विष्णाविति** ॥ "राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः" इत्युक्तम् । तत्र "ये तु भागवता वर्णाः" इति वचनान्तरबलेन राजससात्त्विकानां भागवतत्वं ग्राह्यमिति सूचयन् भागवतविप्राणां राजससात्त्विकत्वमेवेत्यन्यथाप्रतीतिनिरासाय अनुक्तं पूरयति **राजसानामिति** ॥ राजससात्त्विकेषु वाक्यद्वयेन उक्तं वर्णभेदं बुद्ध्यारोहार्थम् एकीकृत्य दर्शयति **राजसस्थेति** ॥ अनेन "विप्रा राजससात्त्विकाः" इत्यादि प्रागुक्तरीत्या विवृतं भवति ।

*भा०दी०*— **इत्युक्तमिति** । नराधमास्तामसेषु सात्त्विका इति पूर्वोक्तस्मृतावित्यर्थः ॥ **वाक्यद्वयेनोक्तमिति** । "राजसास्तु नरास्तत्रे"ति, "ये तु भागवता" इति च वाक्यद्वयेनेत्यर्थः ॥ **प्रागुक्तरीत्येति** । शुद्धसत्त्वास्तु परमहंसा इत्यादिनोक्तरीत्येत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"सत्त्वात् सञ्जायते ज्ञानम्" इत्यादेः ।**

***न्या०दी०***— राजससात्त्विका न साधारणविप्रादयः । अपि तु भागवता एवेति वाक्यान्तरानुसारेणोक्तं हेत्वन्तरं चाह **सत्त्वेति** ॥ राजससात्त्विकानारभ्य हिरण्यगर्भावसानाः सर्वेऽपि हि मोक्षयोग्याः । गुणान्तरापेक्षया येषु सत्त्वाधिक्यान्मोक्षयोग्यता च

भागवतानामेव । अतो राजससात्त्विकादयः सर्वेऽपि भागवता एवेति भावः । **सत्त्वप्रधानत्वेऽपि कुतो मोक्षयोग्यतेत्यत आह सत्त्वादिति ॥** "रजस्तमश्चाभिभूय सत्त्वं भवति" इत्यधिकगुणस्येतराभिभवेन स्वफलप्रदत्वस्योक्तत्वात् सत्त्वप्राधान्ये रजस्तमसोरभिभवेन मोक्षसाधनज्ञानस्य सम्भवात् सत्त्वाधिक्ये मोक्षो भवति । ज्ञानस्य सत्त्वफलताया उक्तत्वादिति भावः ।

*भा०दी०*— **वाक्यान्तरेति** । (ये तु) भागवतेति वाक्यान्तरेत्यर्थः ॥ **स्वफलप्रदत्वस्योक्तत्वादिति** । चतुर्दशेऽध्याये ॥

**गीतातात्पर्यनिर्णयः**

**"सत्त्वाधिको मोक्षयोग्यो योग्योऽन्धतमसस्तथा ।**
**तम उत्तरो रजोभूयान् समो वा सृतिपात्रकः ॥"**

**—इति ॥ ४०-४१ ॥**

*न्या०दी०*— **अत्र स्फुटार्थं वाक्यान्तरं चाह सत्त्वाधिक इति ॥ सत्त्वाधिको राजससात्त्विकादिः । तम उत्तरो नराधमादिः । रजोभूयान् त्रैविद्यः । समः एकप्रकारेण गुणत्रयोऽज्ञः ॥**

*भा०दी०*— **राजससात्त्विकादिरिति** । परमहंसादिरादिपदार्थः ॥ **नराधमादिरिति** । दैत्यादिरादिपदार्थः । **सम** इत्यनुवादः एकेत्यादि व्याख्या । फलितमाह **अज्ञ इति** । तत्त्वज्ञानमिथ्याज्ञानोभयहीन इत्यर्थः ॥

**गीता**

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

*वि०वि०*— शमो भगवन्निष्ठा । दम इन्द्रियनिग्रहः । तपो ब्रह्मचर्यादि । शौचं शुद्धिः । क्षान्तिः क्रोधासमुत्थितिः । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् । ज्ञानं सामान्यतः । विज्ञानं विशेषतः । आस्तिक्यं धर्मादावस्त्येव । अनेन प्रयोजनमिति भावः । एतत्स्वाभाविकं ब्राह्मणकर्म ॥ ४२ ॥

*सा०सं०*— तत्र चतुर्वर्णकर्माणि क्रमात् त्रिभिराह **शम** इत्यादिभिः । **शमो** भगवन्निष्ठा-बुद्धिः । **दम** इन्द्रियनिग्रहः । **तपो** ब्रह्मचर्यादि । **शौचं** बाह्याभ्यन्तरशुद्धिः । **क्षान्तिः** क्रोधानुत्पत्तिः **आर्जवं** मनोवाक्कायकर्मणामवैपरीत्यम् । **ज्ञानं** सामान्यतः । **विज्ञानं** विशेषतः । **आस्तिक्यं** धर्मादावस्त्यनेन प्रयोजनमिति भावना । एतत्सर्वं **स्वभावजं** सहजम् । **ब्राह्मं** ब्राह्मणसम्बन्धि कर्मेति ॥ ४२ ॥

*अ०प्र०*— तत्र ब्राह्मणस्य स्वाभाविकानि कर्मण्याह **शममिति** ।

सर्वेन्द्रियवृत्तीर्गृहीत्वा परमात्मनि बुद्धेरुपरमः शमः[१], दमः = बाह्येन्द्रियोपरमः बाह्येन्द्रियाणि विधिदण्डेनाधर्मप्रवर्तनान्नियम्य श्रीविष्णुभक्तिमार्गे योजनं सोऽयं शमस्य सहायो दमः । तदुक्तम्— "शमो मन्निष्ठता बुद्धिः दम इन्द्रियनिग्रहः"[२], तपः = पूर्वोक्तं ब्रह्मचर्यादि स्वधर्माचरणं[३], शौचं = तद्विविधं अतः भावशुद्धिः सर्वेन्द्रियैः सत्कर्माचरणं बहिःशुद्धिः[४], क्षान्तिः = पृथिवीवत्सर्वसहनम् । यद्वा, क्रोधाभावः[५], आर्जवं = विषमेषु प्राणिष्वपि ऋजुतया प्रवर्तनं सद्विषये मनोवाक्कायकर्मणां अवक्रतादिना एकप्रकारत्वं[६], ज्ञानं = शास्त्रोक्तशास्त्राचरणेन ब्रह्मज्ञानमिति विज्ञाय तत्र प्रवर्तनम् । यद्वा, विष्णुः गुणपरिपूर्णः इत्यादि सामान्यविषयकं[७], विज्ञानं = ज्ञानानन्दादिशक्त्यादिपूर्ण इत्यादि-विशेषकं ज्ञापनं च ग्राह्यं[८], आस्तिक्यं = शास्त्रोक्तं कर्मफलं मे भूयादेवेति बुद्ध्या विहितकर्मकरणं वा । अत्र वाक्यान्तरसिद्धं याजनाद्यपि ग्राह्यम् । यद्वा, अस्ति परलोक इति निश्चयः[९], ब्रह्मकर्म-स्वभावजं एवं शमादि नवगुणात्मकं ब्राह्मं ब्राह्मणसम्बन्धी स्वभावाज्जातं कर्म शृणु इति शेषः ॥ ॥ ४२ ॥

**गीतातात्पर्यनिर्णयः**

**"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥**

**एते गुणाः किञ्चिदूना विप्रात् क्षत्रिय एव च ।**
**अधिका वा ब्राह्मणेभ्यः केषुचिच्चक्रवर्तिषु ।**
**ऋषयस्त्वेव विज्ञेयाः कार्तवीर्यादयो नृपाः ॥" ॥ ४२ ॥**

*प्रका०*— "शमो दमः शौचमि"त्यादि भगवद्वचनार्थं निरूपयति **शमोदम** इत्यादिना । क्षत्रियादूनाः ब्राह्मगुणा शमादयो यस्यासौ क्षत्रियः न ब्रह्मगुणः ।

***न्या०दी०***— ब्राह्मणेत्युक्तं प्रपञ्च्यते 'शम' इति । तत्र शमादयो ब्राह्मणस्यैवेत्यन्यथाप्रतीतिनिरासाय तत् प्रमाणान्तरेण व्याचष्टे **शम इति** ॥ अनेन ब्राह्मणे तदुक्तिराधिक्यविवक्षयेत्युक्तं भवति । तपः ब्रह्मचर्यादि । शौचं शुद्धिः । क्षान्तिः क्रोधासमुत्थितिः । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् । ज्ञानं सामान्यतः । विज्ञानं विशेषतः । आस्तिक्यं धर्मादौ "अस्त्येवानेन मम प्रयोजनम्" इति भावः । कार्तवीर्यादिक्षत्रियेषु ब्राह्मणेभ्योऽप्याधिक्येनैतद्गुणदर्शनात् कथमेतदित्यत आह **अधिका वेति** ॥ सत्यं क्षत्रियेषु ब्राह्मणाधिकाः शमादयः सन्तीति, तथापि नोक्तविरोधः । तेषाम् ऋषित्वात् । तदितरक्षत्रियाणामत्र विवक्षितत्वादिति भावः ॥

***भा०दी०***— **प्रयोजनमिति भाव इति** । भावेनेत्यर्थः ॥ **तेषामिति** । येषु क्षत्रियेषु आधिक्यमुच्यते तेषामित्यर्थः ॥

**गीता**

## शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
## दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

***वि०वि०***— शौर्यमभीरुत्वम् । तेजःशरीरगतम् । धृतिः धैर्यम् । दाक्ष्यं पाटवम् । युद्धे चाप्यपलायनम् । भयादनिवर्तनम् । दानं वदान्यत्वम् । ईश्वरभावो दण्डादिकर्तृत्वम् । "प्रसह्य वित्ताहरणं शारीरो दण्ड एव च । अशिष्याणां शासनं च तथैवार्थविनाशनम् । एष ईश्वरभावः स्यान्न कार्यः क्षत्रियेतरैः ॥" इति वचनात् । एतत्स्वभावजं क्षात्रं कर्म ॥ ४३ ॥

***वा०ल०***— ईश्वरभावः समर्थत्वबुद्धिः ॥ ४३ ॥

***सा०सं०***— **शौर्यम्** अभीरुत्वम् । **तेजः** शरीरगतवर्चोविशेषः । **धृतिर्धैर्यम्** । **दाक्ष्यं** पाटवम् । **युद्धे चाप्यपलायनं** भीत्या युद्धादनिवर्तनम् । **दानं** गोभूतिलहिरण्यादेः पात्रे प्रतिपादनम् । **ईश्वरभावो** दण्डनादिकर्तृत्वम् । "प्रसह्य वित्ताहरणं शारीरो दण्ड एव च । अशिष्टानां शासनं च तथैवार्थविनाशनम् । एष ईश्वरभावः स्यान्न कार्यः क्षत्रियेतरैः" (व्यासस्मृतिः) इति स्मृतेः । एतत्सर्वं स्वभावजं क्षत्रियसम्बन्धि कर्मेत्यर्थः । अत्र ब्राह्मणधर्माः शमादयोऽपि तेभ्यः किञ्चिदूनाः क्षत्रधर्मेष्वपि ग्राह्याः । शमादेर्ब्राह्मणधर्मतोक्तिस्तु क्षत्रियधर्माद्यपेक्षयाऽऽधिक्यविवक्षयैव । येषु चक्रवर्तिषु विप्रेभ्योऽधिकशमादयः तेऽत्र न विवक्षिताः । किन्तु तदन्य एवेति ज्ञेयम् । क्षत्रधर्मा अपि विप्रादिषु क्रमादूना ज्ञेयाः ॥ ४३ ॥

*अ०प्र०*— क्षत्रियस्य स्वाभाविकं कर्म आह **शौर्यमिति** ।

शौर्यं = अभीरुत्वं पराक्रमो वा[२], तेजः = शरीरगततेजः[३], धृतिः = प्रागल्भ्यं वा सर्वप्राणिनां विस्मयं दत्वा स्वयं केनापि विस्मितो न भवति तत्प्रागल्भ्यरूपतेजः[३], । धृतिः = धैर्यं[३], आकाशे निपतितेऽपि मनोबुद्धीन्द्रियाणामचलनं[३], दाक्ष्यं = दाक्ष्यं दक्षपाटवकौशल्यं वा[४], युद्धे चाप्यपलायनम् = युद्धे भयादपराङ्मुखत्वं शत्रोः पुरतः सदैव सन्मुखं स्थातव्यमिति[५], दानं = औदार्यं याचकसङ्कल्पानुरूपं यथा किञ्चित्स्वशक्तितः श्रीकृष्णार्पणबुद्ध्या यद्दीयते तद्दानं[६], ईश्वरभावश्च = ईश्वरभावो नियमनशक्तिः दण्डादिकर्तृत्वम् । तदुक्तम्— "प्रसह्य वित्ताहरणं शरीरो दण्ड एव तु । अशिष्टानां शासनं च तथैवार्थविनाशनम् ॥ एवमीश्वरभावः स्यान्न कार्यः क्षत्रियेतरैः । सर्वे विधर्मिणः शास्या क्षत्रियैर्यत्नतः सदा" इति वचनात्[७], एतत् क्षत्रियस्य स्वभावजं कर्म शृण्विति ॥४३॥

**गीतातात्पर्यनिर्णयः**

**"शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षत्रियेऽन्ये गुणा अपि ॥" ॥ ४३ ॥**

***न्या०दी०*— शौर्यमभीरुत्वम् । तेजः शरीरगतम् । धृतिर्धैर्यम् । दाक्ष्यं पाटवम् ॥**

**गीता**

# कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
# परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

*वि०वि०*— कर्षणपशुपालनक्रियादि वैश्यस्य स्वाभाविकं कर्म । त्रिवर्णसेवात्मकं स्वाभाविकं शूद्रकर्म । एतैरेव गुणैर्ब्राह्मणादिजातिरवधारणीया । तदुक्तम्— "स्वाभाविको ब्राह्मणादिः शमादैरेव भिद्यते । योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम् ॥" इति । यद्यपि भगवदाराधनं सर्वाङ्गत्वात्क्षत्रियादीनां भाव्यम्, तथापि प्राचुर्याद्व्यपदेशः । एवं केनचिन्निमित्तेन पदानां यद्विषयत्वं तेन वा सर्वेषां सर्वधर्मत्त्वेऽपि प्राधान्येन असाधारण्योक्तिरित्यवधेयम् ॥ ४४ ॥

*सा०सं०*— **कृषिः** कर्षणेन जीवनम् । गवां पालनम् । **वाणिज्यं** वार्तया जीवनम् । अत्रापि क्षत्रियादूनाः शमादयोऽपि वैश्यकर्ममध्ये ग्राह्याः । **परिचर्यात्मकं** त्रैवर्णिकसेवारूपम् । अत्रापि वैश्यादूनशमादिकं च ग्राह्यम् ॥ ४४ ॥

*अ०प्र०*— कृषिः = भूमिबीजहलादिपदार्थाधारेण लाभार्जनं कृषिजीवनं[१], गोरक्षः = गाः रक्षतीति गोरक्षः[२], वाणिज्यं = वणिजः कर्म महार्घानि वस्तूनि गृहीत्वा समार्घेण विक्रयणं वाणिज्यं[३], वैश्यकर्मस्वभावजं = वैश्यजातेः कर्म स्वाभाविकमित्यर्थः[४] । परिचर्यात्मकं कर्म = त्रिवर्णसेवात्मकं त्रैवर्णिकसेवात्मकमित्यर्थः । एतादृशं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

**गीता**

## स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
## स्वकर्मनिरतः सिद्धिं यथा विन्दन्ति तच्छृणु ॥ ४५ ॥

*वि०वि०*— एवं ब्राह्मणादीनां कर्माभिधाय स्वविहिते कर्मण्यभिरतो भगवदाराधनं कुर्वन् मुच्यते नान्यथेत्याह **स्वे स्व इति** । एतदेव प्रतिज्ञापूर्वकमुपापदयति **स्वकर्मनिरत इत्यादिना** ॥ ॥ ४५ ॥

*सा०सं०*— अस्त्वेवं ब्राह्मणादिकर्म प्रविभक्तम् । ततः किमित्यत आह **स्वे स्व** इति । प्रागुक्तब्राह्मणादिस्वकीये **कर्मण्यभिरतः** स्वस्वकर्मणा भगवदाराधनं कुर्वन् **नरः संसिद्धिं** मुक्तिम् । ज्ञानद्वारा । **लभते** प्राप्नोति । एतदेव सम्यग्विशदयितुं प्रतिजानीते **स्वकर्मेति** । **विन्दति** लभते । तत् तं प्रकारं **शृणु** इति ॥ ४५ ॥

*अ०प्र०*— एवं ब्राह्मकर्मणो ज्ञानहेतुत्वमाह **स्वेति** ।

स्वे स्वे = स्वाधिकारविहिते[१], कर्मणि[२], अभिरतः = परिनिष्ठितः[३], नरः[४], संसिद्धिं = ज्ञानयोग्यतां[५], लभते[६], तदेव कर्मणा ज्ञानप्राप्तिप्रकारमाह **स्वकर्मेति** सार्धेन । स्वकर्मनिरतः = स्वकर्मे परिनिष्ठितः[७], यथा येन प्रकारेण[८], सिद्धिं = तत्त्वज्ञानं[९], विदन्ति = प्राप्नोति[१०] तत् = तत्प्रकारं[११], शृणु[१२] ॥ ४५ ॥

**गीता**

## यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
## स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

*वि०वि०*— स्वकर्मणा परमेश्वरस्य श्रद्धादिपूर्वकमर्चनेन सिद्धिर्भवति ॥ ४६ ॥

*सा०सं०*— **यतो** यस्मात् । भगवतो **भूतानां** प्राणिनां **प्रवृत्तिः** चेष्टा भवति । **येन च** भगवता । **इदं सर्वं** चराचरात्मकं जगत् । **ततं** व्याप्तम् । **तं** भगवन्तम् । **स्वकर्मणा** समभ्यर्च्य शमदमादिपूर्वकं पूजयित्वा । **सिद्धिं** मोक्षम् । **विन्दति** लभते । **मानवः** मनुष्यो ब्राह्मणादिरित्यर्थः ॥ ४६ ॥

*अ०प्र०*— मानवः[१], यतः[२], भूतानां[३], प्रवृत्तिः[४], येन[५], इदं[६], सर्वं[७], ततं[८], तं[९], स्वकर्मणा[१०] अभ्यर्च्य[११], सिद्धिं[१२], विन्दति[१३] ॥

मानवः = मनुष्यः[१], यतः = अन्तर्यामिणः परमेश्वरात्[२], भूतानां प्राणिनां[३], प्रवृत्तिः = चेष्टा[४], भवति येन च = कारणात्मना[५], इदं = पुरोवर्ति[६], सर्वं = दृश्यादृश्यमानं जगत्[७], ततं = व्याप्तं[८], तं = श्रीविष्णवाख्यं[९], स्ववर्णाश्रमोचितकर्मणा[१०] अभ्यर्च्य = पूजयित्वा[११], सिद्धिं = ज्ञानं मोक्षं वा[१२], विन्दति = प्राप्नोति ॥ ४६ ॥

**गीता**

## श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
## स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥

*वि०वि०*— परधर्मानुष्ठानात्स्वधर्मानुष्ठानस्य श्रेष्ठत्वात्स्वकर्मानुतिष्ठन् किल्बिषं नाप्नोति ॥ ॥ ४७ ॥

*सा०सं०*— स्वधर्मनिरतत्वमावश्यकमित्येतदुपपादयति **श्रेयानिति** । **विगुणो**ऽङ्गहीनोऽपि । **स्वधर्मः** । सम्यगनुष्ठितात् । **परधर्मात्** । **श्रेयान्** पुमर्थसाधनम् । **विगुणः** कथं श्रेयानित्यत आह **स्वभावेति** । **किल्बिषं** वैगुण्यकृतदोषम् । **नाप्नोति** । वैगुण्यशङ्कया स्वधर्मत्यागो न कार्यः ॥४७॥

*अ०प्र०*— हे पार्थ !, विगुणोऽपि[१], स्वधर्मः[२], स्वनुष्ठितात्[३], परधर्मात्[४], श्रेयान्[५], यतः[६], यतः स्वभावनियतं[७], कर्म कुर्वन् सन्[८], किल्बिषं[१०] नाप्नोति[११] ॥

हे पार्थ ! विगुणः = यद्यप्याचरणे कठिनः अङ्गहीनोऽपि वा[१], स्वधर्मः = स्वीयो धर्मः स्वस्य विहितं कर्म[२], स्वनुष्ठितात् = सुलभेनानुष्ठितात् यद्वा, साङ्गतयाऽनुष्ठितात्[३], परधर्मात् = परकीयधर्मात् यद्वा, परधर्मः = सुलभोऽपि नेषामेव विहितः सोऽन्येनानुष्ठितश्चेद्दोषभाग्भवति[४], श्रेयान् = प्रशस्यतरः श्रेष्ठ इत्यर्थः[५], यस्मात् परकीयो धर्मः स्वेन सम्यक् कृतोऽपि भयप्रद एव

भवतीति वाक्यशेषः । अनेन युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्म इति मन्तव्यम् । तस्मात् स्वभावनियतं = स्वस्य स्वातन्त्र्यस्य विष्णोः भावेन भक्त्या युतं नियतं वर्णादिविहितं सङ्गादेरतीतं स्वकर्मणा ईश्वरार्पणेनैव मुक्तो भवतीत्यभिप्रायः[७], एतादृशं कर्म[८], कुर्वन् सन्[९], किल्बिषं पापं[१०] नाप्नोति ॥ ४७ ॥

**गीता**

# सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
# सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥

***वि०वि०***— न च वैगुण्यशङ्कया स्वधर्मत्यागः । तस्य दोषस्य सर्वारम्भेष्वपि तुल्यत्वादित्यर्थः ॥ ४८ ॥

***सा०सं०***— वैगुण्यदोषस्य सर्वत्रावर्जनीयत्वादित्याह **सहजमिति** । **हि** यस्मात् । **सर्वारम्भाः** सर्वकर्माणि । **धूमेनाग्निरावृत इव** । **दोषेणावृता** एव । ततः । **सदोषमपि सहजं कर्म न त्यजेदि**ति ॥ ४८ ॥

***अ०प्र०***— यदि पुनः साङ्ख्यदृष्ट्या स्वधर्मे हिंसालक्षणदोषं मत्वा परधर्मं श्रेष्ठं मन्यसे तर्हि दोषत्वं परधर्मेऽपि तुल्यमित्याशयेनाह **सहजमिति** ।

हे कौन्तेय ![१], सदोषमपि[२], सहजं[३], कर्म[४], न त्यजेत्[५], हि यस्मात्[६], सर्वारम्भाः[७], दोषेण[८], धूमेन[९], अग्निरिव[१०] आवृताः[११] ॥

हे कौन्तेय[१], सदोषमपि = सायासमपि किञ्चिद्दोषयुक्तमिति वा[२], सहजं = स्वभावविहितं वर्णाश्रमोचितं[३], कर्म[४], न त्यजेत् = करणीयमेव[५], हि यस्मात्[६], सर्वारम्भाः = सर्वेऽप्यारम्भाः दृष्टादृष्टार्थानि सर्वाण्यपि कर्माणि सर्वकर्मणामारम्भाः[७], दोषेण = श्रमेण किञ्चिद्दोषेण वाऽऽवृताः[८], यथा धूमेन = सहजेन धूमेन[९], अग्निरिव[१०] आवृताः व्याप्ता इत्यर्थः[११], अतो यथाऽग्निं धूमरूपदोषमपावृत्त्य प्रताप एव तमः शीतादिनिवृत्तये सेव्यते तथा कर्मणोऽपि दोषांशं विहाय गुणांशमेव सत्त्वशुद्धये सेव्य इत्यर्थः ॥

ननु कथं क्रियमाणे कर्मणि दोषांशपरिबलात् विरुद्धभावस्तु हेयस्वाभाविको हि यः अनिसर्गोऽपि हि शुभौ वर्धनीयः प्रयत्नेन इति । किञ्च "याजनैश्वर्यपूर्वास्तु नान्यैः कार्याः शुभा अपि ।

अपलायनं च शूद्राणां विप्रक्षत्रार्थमिष्यते ॥ अङ्गाद्यहानिकृद्दण्डः शिष्येषु ब्राह्मणादिभिः । कार्यो देहेऽपि शिष्यश्च स्वामिना स्वेन वाऽर्पितः ॥ पुत्रानुजादयः सर्वे शिष्या एव निसर्गतः । गुरवश्चैव मित्राणि सखि सब्रह्मचारिणः ॥ सम्बन्धिनश्च सर्वेऽपि तत्तद्योग्यतयाऽखिलैः । शिक्षणीयेषु भावेषु शिक्षणीया प्रयत्नतः ॥ उन्मादे बन्धनाद्यैर्वा ताडनं न गुरोः क्वचित् । पापं चरन्तंस्त्वन्येऽपि सर्वे-दृष्टिपथं गताः ॥ शक्तितो वारणीयाः स्युर्देशकालानुसारतः । तदुत्तमविरोद्धारः सन्त्याज्या गुरवोऽपि तु ॥ यथाशक्त्यनुशास्यैव कालतोऽपि न चेच्छुभाः । विष्णौ परमभक्तस्तु न त्याज्यः शास्य एव तु ॥ शिक्षयंश्च गुरून् शिष्यो गुरुवन्नैव शिक्षयेत् । माहान्तो नानुशास्याश्च विरुद्धाचरिता अपि ॥ यदि च स्वाधिकानां ते विरोधं नैव कुर्वते । आपत्सु विप्रः क्षात्रं तु विशां वा धर्ममाचरेत् ॥ क्षात्रासिद्धौ न शूद्रस्तु विप्रक्षत्रिययोः क्वचित् । क्षत्रियो ब्राह्ममापत्सु तदापत्सु विशामपि ॥ क्षत्रियो विप्रधर्माऽपि नैव भैक्ष्यप्रतिग्रही । वैश्य आपत्सु शौद्रं तु धर्ममेकं न चापरम् ॥ शूद्र आपत्सु विड्धर्मा तदापत्सु च कारुकः । शूद्रस्तु वैश्यधर्माऽपि नैव वेदाक्षरो भवेत् ॥ अत्यापदि क्षत्रियोऽपि पादशुश्रूषणं विना । शौद्रधर्मं चरन् विप्रक्षत्रियेषु न दुष्यति ॥ येषु कर्मसु याच्यः स्यात् स्वामिनाऽपि न याचिता । शौद्राण्यपि स्वधर्मत्वे क्षत्रियस्यापदो यदि ॥ बाह्वोर्बलाधिको यश्च क्षत्रियो विद्ययाधिकः । विप्रो भागवतौ चैतौ सेषा लोकास्तयोरिमे ॥" इत्यादि तात्पर्यं ज्ञेयम् ॥

एवम्भूतस्य ब्राह्मणादिकर्मणः ज्ञानहेतुत्वमाह **स्व इति** । स्वीये विहिते अभितः सम्यक्-ज्ञानादिपूर्वमासक्तः संसिद्धिं ज्ञानं तद्द्वारा मोक्षं वा । तत्प्रकारं प्रतिज्ञामाह **स्वकर्मेति** सार्धेन । स्वविहितं कर्म कुर्वन् एवं प्रकारेण तत्तज्ज्ञानं प्राप्नोति तं शृणु । यतो विष्णोः प्राणिनां चेष्टादि-व्यापारो भवति येनेदं विश्वं ततम् ॥ ४८ ॥

**गीतातात्पर्यनिर्णयः**

**"क्षत्रियोनब्रह्मगुणो वैश्यः कृष्यादिजीवनः ।**
**तत ऊनः शमाद्यैर्यः शुश्रूषुः शूद्र उच्यते ॥**
**अधिकाश्चेद् गुणाः शूद्रे ब्राह्मणादिः स उच्यते ।**
**ब्राह्मणोऽप्यल्पगुणकः शूद्र एवेति कीर्तितः ।**
**नरोऽपि यो देवगुणो ज्ञेयो देवो नृतां गतः ॥" इति च ।**

***न्या०दी०*— क्षत्रियादूनाः ब्राह्मगुणाः शमादयो यस्यासौ तथोक्तः । ततो वैश्यात् ।** शुश्रूषुः शुश्रूषाजीवनः । नेयं नियतिर्युक्ता । शूद्रस्याप्यधिकगुणत्वदर्शनादित्यत आह

**अधिकाश्चेदिति** ॥ **ब्राह्मणादिरिति** । ब्राह्मणसमशमादिगुण इत्यादि द्रष्टव्यम् । शूद्र एवेत्युपलक्षणम् । तत्तत्समगुणोऽसाविति ज्ञातव्यम् । जातिमनपेक्ष्य गुणमात्रेण कथं ब्राह्मणत्वादिकल्पनेत्यत आह **नरोऽपीति** ॥ यथेति शेषः ।

*भा०दी०*— **इत्यादि द्रष्टव्यमिति** । क्षत्रियसमगुणश्चेत् क्षत्रिय इत्यादिरादिपदार्थः ॥ **तत्तदिति** । क्षत्रियसमगुणश्चेत् क्षत्रियः वैश्यसमगुणश्चेद्वैश्य इत्येवं द्रष्टव्यमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

"स्वकर्मणा तमभ्यर्च्य" इति वचनात् । क्षत्रियादिष्वपि शमाद्यनुवृत्तिर्ज्ञायते । न हि शमादिकं विना तस्याभितोऽर्चनं भवति । सम्यक् शमादिभिरर्चनं ह्यभ्यर्चनम् । न च शमादीन् विना सिद्धिं विन्दति ।

*न्या०दी०*— एवं प्रमाणान्तरेण क्षत्रियादिष्वपि शमाद्यनुवृत्तिरस्तीत्युक्त्वा वाक्यशेषबलेनाप्येतदुपपादयति **स्वकर्मणेति** ॥ अत्र सर्वेषां भगवदभ्यर्चनमेवोच्यते, न तु शमादिकमित्यत आह **न हीति** ॥ यदा सर्वेषां भगवदभ्यर्चनमेवोच्यते, तदा शमादिकमुक्तमेव । तद्विनाऽभितोऽर्चनस्यैवायोगादिति भावः । तत्कुत इत्यत आह **सम्यगिति** ॥ सम्यगर्चनं ह्यभितोऽर्चनं च शमादिभिरर्चनमेवेत्यर्थः । शमादिकं विनाऽपि साधनसम्पूर्त्या अर्चनमात्रमत्र विवक्षितं किं न स्यादित्यत आह **न चेति** ॥ शमादिभिरर्चनमेवात्राभ्यर्चनं विवक्षितम् । न तु शमादिकं विनाऽन्यत् । एतदभ्यर्चनस्य मोक्षफलत्वश्रवणात् । शमाद्यभावे तदयोगादिति भावः ।

**गीतातात्पर्यनिर्णयः**

"यज्ञदानतपःकर्म न त्याज्यम्" इत्युक्तत्वाच्च । "शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः" इति हि भागवते । न च क्षत्रियादिभिरपि शौचतपःशमादिभिर्हीनैर्भवितव्यमिति तत्तद्धर्मेषूच्यते । युक्ता ह्येतैः सर्वगुणैर्जनकतुलाधारादयः । अतो युद्धेऽप्यपलायनमैश्वर्यं च क्षत्रियस्य विशेषगुणौ । तौ च कृष्यादयः, जीवनार्थं शुश्रूषा, याजनं जीवनार्थं प्रतिग्रहश्चेत्येत एवान्येषां परधर्माः ।

*प्रका०*— "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति वाक्यशेषबलात् क्षत्रियादिष्वपि "ब्रह्मकर्म स्वभावजमि"त्युक्तशमाद्यनुच्छित्तिर्ज्ञायते चेत् स्वधर्मपरधर्मविवेकः कथमित्यत

आह **युद्धेति** । युद्धेऽपलायनमैश्वर्यं च क्षत्रियस्य स्वधर्मो यस्य यः स्वधर्मः विहितः स तदन्येषां परधर्मः इत्यर्थः ।

***न्या०दी०*— उपक्रमबलेन क्षत्रियादिषु ब्राह्मणधर्मानुवृत्तिर्ज्ञायत इत्याह यज्ञेति ॥ शमाद्यभावे कुतो मोक्षाभाव इत्यत आह शम इति ॥ भगवन्निष्ठादिकं हि शमादिकं नाम । भगवन्निष्ठाद्यभावे च मोक्षाभावः सुप्रसिद्ध इति भावः । निषेधाभावाच्च क्षत्रियादिषु शमाद्यङ्गीकार्यमित्याह न चेति ॥ निषेधश्च भवंस्तद्धर्मकथनस्थल एव भवतीति तत्तद्धर्मेष्वित्युक्तम् । इतोऽपि क्षत्रियादिषु शमाद्यङ्गीकार्यमित्याह युक्ता हीति ॥ तुलाधारो वैश्यः । आदिपदेन दण्डधारादिशूद्रसङ्ग्रहः । हीति भारतादिप्रसिद्धिं सूचयति । एवं चेत् स्वपरधर्मविवेकः कथमित्यत आह अत इति ॥ उक्तन्यायेनान्येषां साधारणत्वादित्यर्थः । एवं कृष्यादयो वैश्यस्य जीवनार्थम् । शुश्रूषा शूद्रस्य । याजनं जीवनार्थमध्यापनं प्रतिग्रहश्च विप्रस्येति द्रष्टव्यम् । परधर्मानाह तौ चेति ॥**

*भा०दी०*— **तद्धर्मकथनस्थल एवेति** । क्षत्रियधर्मकथनस्थल एव इत्यर्थः ॥ **उक्तन्यायेनेति** । एते गुणाः किञ्चिदूनाः विप्रादित्यादिना उक्तन्यायेनेत्यर्थः । यद्वा स्वकर्मणेत्यादिनोक्तन्यायेनेत्यर्थः । मूले क्षत्रियस्य विशेषधर्मा उक्ताः । अन्येषां स्वयमाह **एवं कृष्यादय इत्यादि** ।

**गीतातात्पर्यनिर्णयः**

"शौर्यं तेजो धृतिर्दाक्ष्यं दानं च क्षत्रियेऽधिकाः ।
तद्धीना ब्राह्मणे तस्माद् वैश्ये शूद्रे ततोऽल्पकाः ॥

अध्यापनं च शुश्रूषा जीवनार्थमृते सताम् ।
विप्रादिषु क्रमाज्ज्ञेयाः शूद्रस्याध्यापनं विना ॥

तस्माच्छूद्रोऽल्पशुश्रूषुः स्वभावाज्जीवनं विना ।
एते नैसर्गिकाः भावाः स्याद् भावोऽन्योऽपि च क्वचित् ॥

*प्रका०*— जीवनार्थमध्यापनं ब्राह्मणस्य स्वधर्मः । सतामध्यापनं (सज्जनार्थम्) विप्रक्षत्रियवैश्यानां क्रमेण धर्मः । सज्जनार्थे शुश्रूषाक्रमेण विप्रादिचतुर्वर्णस्येत्याह **अध्यापनमिति** । जीवनार्थत्वमन्तरेण शूद्रोऽल्पशुश्रूषुः सतां भवेदित्यर्थः ।

***न्या०दी०*— शमादीनां साधारणत्वेऽपि क्षत्रियस्य शौर्यादयः सर्वेऽपि विशेषधर्मा किं न स्युः ? ब्राह्मणस्याध्यापनादिमात्रं, शूद्रस्य शुश्रूषामात्रं च स्वधर्मः किं न स्यात् ? इत्यतस्तेषां साधारण्यं प्रमाणेन दर्शयति **शौर्यमिति** ॥ एतेन क्षत्रिये शौर्याद्युक्तिराधिक्य-विषयेति चोक्तं भवति । सतामध्यापनं च शुश्रूषेति सम्बन्धः । शूद्रस्याध्यापनं विना किमुक्तं भवतीत्यत आह **तस्मादिति** ॥ शुश्रूषायाः सर्वधर्मत्वादित्यर्थः । सतामिति सम्बद्ध्यते । शौर्यादीनां साधारणत्वे क्षत्रियादीनां के विशेषगुणा इत्यत आह **एत इति** । साधारणतयोक्तेभ्योऽन्ये युद्धेऽपलायनैश्वर्यादय इत्यर्थः । नैसर्गिका असाधारणाः । किमेते पुंसामसाधारणा एव धर्मा नियत्या भवन्तीत्यत आह **स्यादिति** ॥

*भा०दी०*— शुश्रूषायाः सर्वधर्मत्वादिति । "अध्यापनं च शुश्रूषे"त्युक्तदिशेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**बलाद् विरुद्धभावस्तु हेयः स्वाभाविकोऽपि यः ।<br>अनिसर्गोऽपि हि शुभो वर्धनीयः प्रयत्नतः ॥<br>याजनैश्वर्यपूर्वास्तु नान्यैः कार्याः शुभा अपि ।<br>अपलायनं च शूद्राणां ब्रह्मक्षत्रार्थमिष्यते ॥" इति च ।**

*प्रका०*— युद्धेऽपलायनमैश्वर्यमित्याद्युक्त्वा ते नैसर्गिका इत्युच्यन्ते । युद्धे चाप्यपलायनमिति क्षत्रियविहितं कर्म ब्रह्मक्षत्रनिमित्तं शूद्रस्याप्यस्तीत्याह **अपलायनमिति** ।

***न्या०दी०*— एतेषामसाधारणत्वादवश्यानुष्ठेयत्वमिति च नाशङ्कनीयमित्याह बला-दिति** ॥ यथा ब्राह्मणस्य जीवनार्थं याजनमित्यादि । एवमसाधारण्येनात्मीयत्वाभावेऽपि त्याज्यत्वं च न मन्तव्यमित्याह **अनिसर्ग इति** ॥ यथा ब्राह्मणस्य जीवनार्थमध्यापन-मित्यादि । उक्तस्यापवादमाह **याजनेति** ॥ अस्वाभाविकाः शुभा अपि साधारणा एव वर्धनीयाः । न तु विप्राद्यसाधारणा याजनादय इत्यर्थः । शौर्यादीनामसाधारणत्वोक्त्या युद्धेऽपलायनमैश्वर्यं च क्षत्रियस्य विशेषधर्मावित्युक्तम् ॥ तस्यापवादमाह **अपलायन-मिति** ॥ विप्रक्षत्रार्थमिति विशेषोक्त्या सामान्यतः क्षत्रियस्यैव सिद्ध्यति । ततो नोक्त-विरोधः ।

*भा०दी०*— **इत्यादीति** । क्षत्रियस्य भीत्या पलायनं वैश्यस्यापि यथान्यायातिक्रमणमित्यादीत्यर्थः ॥ **इत्यादीति** । क्षत्रियस्यापि धैर्येणापलायनम् । वैश्यस्य न्यायेन कृष्यादीत्येवं ध्येयमित्यर्थः ॥ **उक्तस्येति** । अनिसर्गोऽपीत्युक्तस्य इत्यर्थः ॥ **नोक्तविरोध इति** । क्षत्रियस्य विशेष इत्युक्तविरोधो नेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"प्रसह्य वित्ताहरणं शारीरो दण्ड एव च ।**
**अशिष्याणां शासनं च तथैवार्थविनाशनम् ॥**
**एष ईश्वरभावः स्यान्न कार्यः क्षत्रियेतरैः ।**
**सर्वे विधर्मिणः शास्याः क्षत्रियैर्यत्नतः सदा ॥**
**अङ्गाद्यहानिकृद् दण्डः शिष्येषु ब्राह्मणादिभिः ।**
**कार्यो देहेऽपि शिष्यश्च स्वामिना स्वेन वाऽर्पितः ॥**

*प्रका०*— दानमीश्वरभावश्चेति क्षत्रियधर्मत्वेन ईश्वरभाव उक्तः । तत्स्वरूपमाह **प्रसह्येत्यादिना** ।

*न्या०दी०*— यथा क्षत्रियैकधर्मतयोक्तं युद्धेऽपलायनं कारणविशेषादन्येषामपि स्यात् तथैवैश्वर्यमप्यन्यधर्मः स्यात् किम् ? इत्यतः तत्स्वरूपनिरूपणपूर्वकं तस्य क्षत्रियेतरेष्ववृत्तिं प्रमाणेन दर्शयति **प्रसह्येति** ॥ प्रसह्य वित्तहरणादि केषामित्यतः तद्वदनूनकार्यः क्षत्रियेतरैरित्यस्य व्यावर्त्यमाह **सर्व इति** ॥ तर्हि किं ब्राह्मणादिभिर्विधर्मिणां शासनमेव न कार्यमित्याह **अङ्गादीति** ॥ शिष्यो नाम कीदृश इत्यत आह **शिष्यश्चेति** ॥

*भा०दी०*— **इत्यस्य व्यावर्त्यमाहेति** । क्षत्रियैरेव कर्तव्यत्वरूपं व्यावर्त्यमाहेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**पुत्रानुजादयः सर्वे शिष्या एव निसर्गतः ।**
**गुरवश्चैव मित्राणि सखिसब्रह्मचारिणः ॥**
**सम्बन्धिनश्च सर्वेऽपि तत्तद्योग्यतयाऽखिलैः ।**
**शिक्षणीयेषु भावेषु शिक्षणीयाः प्रयत्नतः ॥**

उन्मादे बन्धनाद्यैर्वा ताडनं न गुरोः क्वचित् ।
पापं चरन्तस्त्वन्येऽपि सर्वे दृष्टिपथं गताः ॥

शक्तितो वारणीयाः स्युर्देशकालानुसारतः ।
तदुत्तमविरोद्धारः सन्त्याज्या गुरवोऽपि तु ॥

यथाशक्त्यनुशास्यैव कालतोऽपि न चेच्छुभाः ।
विष्णौ परमभक्तस्तु न त्याज्यः शास्य एव च ॥

शिक्षयंश्च गुरून् शिष्यो गुरुवन्नैव शिक्षयेत् ।
महान्तो नानुशास्याश्च विरुद्धाचरिता अपि ।
यदि च स्वाधिकानां ते विरोधं नैव कुर्वते ॥" इत्यादि च ।

***न्या०दी०***— तर्हि पुत्रादीनामशासनप्रसङ्ग इत्यत आह **पुत्रेति** ॥ अनिसर्गशिष्यस्वरूपं तदिति भावः । न केवलं ब्राह्मणाद्यैः शिष्या एव शास्याः किन्तु गुर्वादयोऽपीत्याह **गुरव इति** ॥ **शिक्षणीयेषु भावेष्विति** । शिक्षणीयार्थविषय इत्यर्थः । न केवलं गुर्वादय एव शास्याः, किन्त्वज्ञाता अपीत्याह **पापमिति** ॥ अत्र सर्वत्र अङ्गाद्यहानिकृद्दण्डः शिष्येषु गुरवश्च देशकालानुसारत इति विशेषोक्त्या क्षत्रियाद्विशेषो द्रष्टव्यः । पापं चरन्तो वारणीया इत्युक्तम् । यदि स्वोत्तमविरोधाख्यं महापापं कुर्युस्तर्हि किं कार्यमित्यत आह **तदिति** ॥ किं सहसा त्याज्या एवेत्यत आह **यथेति** ॥ स्वोत्तमविरोद्धारो गुर्वादयः किं सर्वथा त्याज्या एवेत्यत आह **विष्णाविति** ॥ तच्छिक्षाप्रकारमाह **शिक्षयन्निति** ॥ विष्णौ परमभक्तः स्वोत्तमविरोधेतरपापमाचरति चेत् किं कार्यमित्यत आह **महान्त इति** ॥

***भा०दी०***— ननु ब्राह्मणानामपि शिक्षाकर्तृत्वे क्षत्रियस्य विशेषाविति प्रागुक्तविरोध इत्यत आह **अत्र सर्वत्रेति** ।

**गीतातात्पर्यनिर्णयः**

"आपत्सु विप्रः क्षात्रं तु विशां वा धर्ममाचरेत् ।
क्षात्रासिद्धौ न शूद्रस्तु विप्रक्षत्रिययोः क्वचित् ॥

क्षत्रियो ब्राह्ममापत्सु तदापत्सु विशामपि ।
क्षत्रियो विप्रधर्मोऽपि नैव भैक्ष्यप्रतिग्रही ॥

वैश्य आपत्सु शौद्रं तु धर्ममेकं न चापरम् ।
शूद्र आपत्सु विड्धर्मा तदापत्सु च कारुकः ॥

*प्रका०*— आपत्सु क्षत्रियो विप्रवृत्तिमाचरन् भिक्षेतरहिरण्यादिपरिग्रहहीनः स्यादित्यात आह **नैव भैक्षप्रतिग्रहीति** । अत एव पाण्डवैः प्रथमवनवासे भैक्षवृत्तिराश्रिता ।

***न्या०दी०*— प्रसङ्गाद्विप्रादीनाम्** आपद्धर्मान् स्मृत्या दर्शयति **आपत्स्विति** ॥ क्षत्रियस्य विप्रधर्माचरणे विशेषमाह **क्षत्रिय इति** ॥ भिक्षेतरहिरण्यादिप्रतिग्राही स्यादित्यर्थः । शौद्रं तु धर्ममाचरेदिति सम्बद्ध्यते । न शूद्रस्तु विप्रक्षत्रिययोर्धर्ममाचरेदित्युक्तम् । तर्हि आपत्सु तेन को धर्म आश्रयणीय इत्यत आह **शूद्र इति** ॥

**गीतातात्पर्यनिर्णयः**

शूद्रस्तु वैश्यधर्माऽपि नैव वेदाक्षरो भवेत् ।
अत्यापदि क्षत्रियोऽपि पादशुश्रूषणं विना ।
शौद्रधर्मं चरन् विप्रक्षत्रियेषु न दुष्यति ॥

*प्रका०*— शौद्रं तु धर्ममाचरेदित्यनुषज्यते ।

***न्या०दी०*—** शूद्रस्य वैश्यधर्मत्वे विशेषमाह **शूद्र इति** ॥ वेदाक्षरादिश्रवणादिमान् न भवेदित्यर्थः । क्षत्रियो ब्राह्ममापत्सु, तदापत्सु विशां धर्ममाचरेदित्युक्तम् । ततोऽप्यापदि किं कार्यमित्यत आह **अत्यापदीति** ॥ विप्रक्षत्रियेषु शूद्रधर्मं शुश्रूषणं चरन्नित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

येषु कर्मसु याच्यः स्यात् स्वामिनाऽपि न याचिता ।
शौद्राण्यपि स्वधर्मत्वे क्षत्रियस्यापदो यदि ॥

आत्मनश्चेद् बलाधिक्यं सानुबन्धादपि प्रभोः ।
धर्मार्थं सेवतोऽर्थार्थं विप्रधर्माधिकाद्वरः ॥

**प्रभुणा याच्यवृत्तिस्तु विशेषेणापि धर्मभाक् ।**
**बाह्वोर्बलाधिको यः स्यात् क्षत्रियो विद्ययाऽधिकः ।**
**विप्रो भागवतौ चैतो सेशा लोकास्तयोरिमे ॥"**

**—इत्यादि व्याससमृतौ ॥ ४४-४८ ॥**

*प्रका०*— येषु कर्मस्वधिकृतं स्वामी याचते भक्ष्यभोज्यादिकं तानि शौद्राण्यपि कर्माणि स्वधर्मस्थितावापत्काले । समर्थस्य विप्रवैश्यवृत्त्युपजीवनाद्वरिष्ठो धर्मः । यद्यसौ क्षत्रियः स्वामिनः सानुबन्धाद्बलाधिकोऽपि तमनभिभूय धर्मनिमित्तं सेवते अर्थार्थमित्याह **येष्वित्यादिना** । अत एव भीमसेनेन विराटमाश्रित्य वृत्तिराश्रिता । अज्ञातवासेन च विराटोपजीवननिमित्तदोषस्तस्येत्यभिप्रायवानाह **बाह्वोरिति** ।

***न्या०दी०*— न केवलं क्षत्रियः शूद्रधर्मं चरन् न दुष्यतीत्येव, किं तर्हीत्यत आह येष्विति ॥ यदि क्षत्रियस्य स्वधर्मकृतावापदो भवन्ति तर्हि तस्य सानुबन्धात् स्वामिनो बलाधिक्येऽपि धर्मार्थं तमनभिभूय येषु कर्मसु नियुक्तः स्वामिनाऽपि याच्यः स्यान्न तु स्वयं याचिता । तानि शौद्राण्यपि कर्माण्यर्थाद्यर्थं सेवमानस्य विप्रादिधर्मोपजीवनादपि वरो धर्मो भवतीत्यर्थः । तत्र स्वाम्यनभिभवादपि स्वामिना याच्यत्वं विशेषेण धर्मकारणमित्याह प्रभुणेति ॥ विप्रधर्माद्याश्रयणे परोपजीवनाभावात् शूद्रधर्मे तद्भावात् कथं सानुबन्धात् प्रभोर्बलाधिक्यादौ सत्यपि ततोऽस्य वरत्वमित्यत आह बाह्वोरिति ॥ सर्वस्य तदीयत्वान्न परोपजीवनमिति भावः ॥**

*भा०दी०*— श्लोकद्वयं एकान्वयेन योजयति **यदि क्षत्रियस्येत्यादिना** ॥

**गीता**

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

*वि०वि०*— स्वकर्माभिरत्यासक्तिं संसिद्धिं प्राप्तावित्थंभावान्तरमाह **असक्तबुद्धिरिति** । नैष्कर्म्यसिद्धिं मोक्षार्थं योगसिद्धिं प्रारब्धातिरिक्तसर्वानिष्टकर्म नाशाख्यसिद्धिं वा ॥ ४९ ॥

*वा०ल०*— 'संन्यासेनाधिगच्छति' इत्यत्र, संन्यासेन हरिचरणे समर्पणेन । ज्ञानस्य या परा निष्ठा तां समासेन निबोधेति पूर्वेणान्वयः ॥ ४९ ॥

*सा०सं०*— 'स्वकर्मनिरतः सिद्धिं विन्दति' इत्यत्रापेक्षितधर्मान्तराण्याह **असक्तेति** । **सर्वत्र** शब्दादिविषयेषु । **असक्तबुद्धि**त्वे हेतुः **जितात्मा** इति । वशीकृतमनस्कः वैषयिकसुखे क्षुद्रा-मुष्मिकसुखे चापगतेच्छः । **परमां** सम्पूर्णाम् । **नैष्कर्म्यसिद्धिं** नैष्कर्म्याय मोक्षाय सिद्धिं उपाय-सिद्धिम् । प्रारब्धान्यसर्वानिष्टकर्मनाशाख्यां सिद्धिं वा । **संन्यासेन** काम्यकर्मत्यागेन । सर्वकर्मणां भगवति समर्पणेन वा । **अधिगच्छति** प्राप्नोति ॥ ४९ ॥

*अ०प्र०*— ननु कथं कर्माणि क्रियमाणे दोषांशप्रहाणेन गुणांश एव सम्पश्यति इत्यपेक्षाया-माह **असक्तेति** ।

सर्वत्र[१], असक्तबुद्धिः[२], जितात्मा[३], विगतस्पृहः[४], एवंभूतः सन् पुरुषः संन्यासेन[५], परमां[६], नैष्कर्म्यसिद्धिं[७], अधिगच्छति[८] ॥

सर्वत्र = देहकलत्रपुत्रवित्तादिषु विषप्रायेषु सर्वविषयजातेषु सर्वकर्मादौ[१], असक्तबुद्धिः = असक्ता मदीयमिति प्रीतिरहिता बुद्धिर्यस्य सः सर्वत्र सङ्गशून्या बुद्धिर्वा । एवं विषयेषु प्रतप्ता बुद्धिस्तान् विहाय प्रत्यङ्मुखी सती हृदयस्यैकान्ते प्रविशतीति भावः[२], जितात्मा = जितं निगृहीतं आत्माऽन्तःकरणं येन स जितात्मा नियतचित्तः । यद्वा, निरहङ्कारः[३], विगतस्पृहः = विगता फलविषया स्पृहा इच्छा यस्य सः । यद्वा, विगता विशेषेण गता इहपरलोकयोः विषयस्पृहेच्छा यस्य स तथा[४], एवम्भूतः सन् पुरुषः[४], संन्यासेन = स्वकृतकर्मणां कृष्णार्पणलक्षणेन संन्यासेन । यद्वा, 'स त्यागः शाश्वतो मत' इत्येवं पूर्वोक्तेन कर्मासक्तितत्फलयोः त्यागलक्षणेन संन्यासेन[५], परमां = अस्याः नैष्कर्म्यसिद्धेः परमभाविप्राप्तेर्न विद्यते तस्मात्सेयं परमा उत्कृष्टा तां परमाम् । यद्वा, पारमहंस्यापरपर्यायां[६], नैष्कर्म्यसिद्धिं = सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशीत्येवं-लक्षणाम् । यद्वा, नैष्कर्म्यमोक्षः तदर्थाङ्गसिद्धिं प्रारब्धातिरिक्तसर्वारिष्टनाशाख्यसिद्धिं वा यद्वा सत्त्व-शुद्धिं[७], यद्यपि सङ्गफलत्यागेन कर्मानुष्ठानमपि नैष्कर्म्यमेव कर्तृत्वाभिनिवेशाभावात् । तदुक्तम्— "नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् । ...." इत्यादि श्लोकचतुष्टयेन तथाप्यनेनोक्तलक्षणेन समासेन[७], अधिगच्छति = प्राप्नोति ॥ ४९ ॥

गीता

## असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
## नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

भाष्यम्

**नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम् ॥ ४९ ॥**

*प०टी०*— 'ब्रह्माप्नोति' इत्युत्तरत्र श्रवणात् न नैष्कर्म्यसिद्धिर्मोक्ष इत्याह **नैष्कर्म्येति** ॥४९॥

*प्र०दी०*— 'नैष्कर्म्यसिद्धिं मोक्षम्' इति केचित् । तदसत् । तदनन्तरं मां विशते इति वाक्य-शेषविरोधादिति भावेनान्यथा व्याचष्ट **नैष्कर्म्यसिद्धिमिति** । नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः । सा च योगस्येत्यर्थः ॥ ४९ ॥

*भा०दी०*— 'विशते तदनन्तरम्' इत्यस्य अन्वयमुखेन अनुवादः, तदनन्तरं **मां विशत इति** । ततो 'मां तत्त्वतो ज्ञात्वा विशते' इत्यत्र आङः प्रश्लेष इति भावः ॥ ४९ ॥

*भा०र०*— **नैष्कर्म्यसिद्धिमिति** । नैष्कर्म्यं च सा सिद्धिश्च नैष्कर्म्यसिद्धिः, तां = मोक्षमिति भावेन नैष्कर्म्यसिद्धिं मोक्षमित्युक्तम् । 'नैष्कर्म्यफलाम्' इति भाष्यघटनायाऽऽह **नैष्कर्म्यार्थेति** । नैष्कर्म्यम् अर्थः = प्रयोजनं = फलं यस्याः सा नैष्कर्म्यार्था, तां नैष्कर्म्यफलामिति गीता-भाष्ययोरेकार्थता । सा च सा सिद्धिः = ज्ञानं = अपरोक्षज्ञानम् । तद्धि नैष्कर्म्यशब्दितमोक्षफलकम् 'नैष्कर्म्यफलां सिद्धिम्' इत्येव भाषणीये यद् योगग्रहणं तत्तात्पर्यमाह **सा चेति** । नैष्कर्म्यार्थ-सिद्धिश्च । योगस्य सात्त्विकज्ञानकर्मादिलक्षणस्य अपरोक्षज्ञानोपायस्य सिद्धिः फलरूपा इति भावेन भाष्ये 'योगसिद्धिम्' इत्युक्तम् । तेन 'पुनः साधनप्रथनाय गुणभेदमाह' इति भाष्ये 'ज्ञानं कर्म च' इत्यादिप्रघट्टकस्य यन्मोक्षसाधनज्ञानाय परोक्षज्ञानोपायप्रपञ्चनपरत्वमुक्तं तद्विशदं भवतीत्याशयः ।

अत्र 'नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः' इति समासः । शाकपार्थिवादाविव मध्यमपदलोपी च । यद्वा नैष्कर्म्यं अस्याः फलत्वेनास्तीति नैष्कर्म्या, अर्शआदिभावेन मत्वर्थीयेऽच्प्रत्ययः । सा च सा सिद्धिश्च नैष्कर्म्यसिद्धिरिति कर्मधारयः । 'नैष्कर्म्या = नैष्कर्म्यफला सिद्धिः फलत्वेन यस्याः = परोक्षज्ञानकर्मादिलक्षणायाः साधनसामग्र्याः सा नैष्कर्म्यसिद्धिः' इति बहुव्रीहिश्च इति तन्त्रेण समासद्वयमभिसंहितम् । इदं च 'नैष्कर्म्यफलां योगसिद्धिम्' इति भाष्यवाक्यद्वयेन, 'नैष्कर्म्यार्था

सिद्धिः नैष्कर्म्यसिद्धिः' इति 'सा च योगस्य' इति टीकावाक्यद्वयेन चोन्नीयते । एवं समासद्वयानभिसन्धाने 'नैष्कर्म्यफलां सिद्धिम्' इति, 'नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः' इत्येवावक्ष्यदिति आहुः ॥ ४९ ॥

**गीतातात्पर्यनिर्णयः**

**"नैष्कर्म्यसिद्धिम्" अनिष्टसर्वकर्मनाशाख्यसिद्धिम् ॥ ४९ ॥**

*प्रका०*— "नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति । सिद्धिं प्राप्तो यथा ब्रह्म तथा नेति निबोध मे" इत्यस्यार्थमाह **नैष्कर्म्यमित्यादिना** ।

***न्या०दी०***— "**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते" इत्युक्तस्यैव इत्थम्भावान्तरमुच्यते 'असक्त' इति । तत्र नैष्कर्म्यसिद्धिपदस्य मोक्षार्थत्वप्रतीतिनिरासायार्थमाह नैष्कर्म्येति ॥ सर्वपदमप्रारब्धविषयम् ॥**

**गीता**

# सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
# समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

*वि०वि०*— प्रतिज्ञापूर्वकं नैष्कर्म्यसिद्धिसाधनं विवृण्वंस्तदनन्तरफलमाह **सिद्धिमित्यादिना** । या सिद्धिर्ज्ञानस्य परा निष्ठा । तां नैष्कर्म्यसिद्धिम् । येन प्रकारेण प्रवर्तमानः प्राप्तो भूत्वा परं ब्रह्म लक्ष्मीं चाप्नोति तं प्रकारं सङ्क्षेपतः मे निबोध ॥ ५० ॥

*सा०सं०*— प्रतिज्ञापूर्वं नैष्कर्म्यसिद्धिसाधनं विवृण्वन् तदनन्तरफलमाह **सिद्धिमिति** । **या** नैष्कर्म्याय सिद्धिः **ज्ञानस्य** परिनिष्ठा । **तां** नैष्कर्म्य**सिद्धिम्** । येन प्रकारेण प्रवर्तमानः । **प्राप्तो** भूत्वा । अपरं **ब्रह्म** लक्ष्मीमा**प्नोति** । तं प्रकारं सङ्क्षेपतो मे **निबोध** बुद्ध्यस्व ॥ ५० ॥

*अ०प्र०*— प्रतिज्ञापूर्वकं नैष्कर्म्यसिद्धेः साधनं विवृण्वन् तदनन्तरं फलमाह **सिद्धिमिति** षड्भिः ।

हे कौन्तेय ![1], या[2], ज्ञानस्य परा उत्कृष्टा[3], निष्ठा = अन्त्यावस्था यद्वा, पर्यवसानं यत्र तद्ब्रह्मनिष्ठा शब्दप्रयोगात् या परेत्युक्तम् । ज्ञानस्य पर्यवसानं परब्रह्मेत्यर्थः[4], तदुक्तं भागवते एकादशे— "वैशारद्येक्षया सङ्गः तथा विच्छिन्नसंशयः । प्रतिबुद्ध इव स्वप्ननानार्थाद्विनिवर्तते ॥"

यथा ता सिद्धिं नैष्कर्म्यसिद्धिं वैराग्यसिद्धिं वा[६], प्राप्तः सन्[७], यथा येन साधनप्रकारेण[८], ब्रह्म[९], आप्नोति = प्राप्नोति[१०] तथा = तं तत्साधनप्रकारं[११], समासेनैव = सङ्क्षेपेणैव यथाक्रमेण[१२], मद्वचनात्[१३], निबोध = अवधारय[१४] ॥ ५० ॥

**भाष्यम्**

**यथा येनोपायेन सिद्धिं प्राप्तो ब्रह्म (प्रा)आप्नोति तथा निबोध । या सिद्धिः ज्ञानस्य परा निष्ठा ॥ ५० ॥**

***प०टी०***— 'बुद्ध्या विशुद्धया इति' ज्ञानसाधनस्योक्तेः, 'यथा' इति ज्ञानोपाय एव ब्रह्मप्राप्त्युपाय इत्याह **यथेति** । 'या' इति ब्रह्मप्राप्तिपरामर्श इत्याह **येति** ॥ ५० ॥

***प्र०दी०***— 'सिद्धिं प्राप्तः' इति योगसिद्धिप्राप्त्यनन्तरं ब्रह्मप्राप्तावुपायकथनं प्रतिज्ञायते' इति अन्यथाप्रतीतिनिरासार्थं व्याचष्टे **यथेति** । 'ब्रह्माऽऽप्नोति' इत्यनुवादमात्रम् । **तथा** तमुपायम् ।

प्रतीत एवार्थः किं न स्यादिति चेन्न । सिद्धेः ज्ञाननिष्ठात्मकत्वेन अभिधानात् । ज्ञानस्य च ब्रह्मप्राप्तावनपेक्षत्वादिति भावेन 'निष्ठा' इत्येतद्व्याचष्टे **येति** ॥ ५० ॥

***भा०दी०***— तं इति शेषः, **उपायं इति** व्याख्या, 'उपायम्' इति वा शेषः । **अनपेक्षत्वादिति** । अन्यानपेक्षतया स्वस्यैवाहेतुत्वादित्यर्थः । **येतीति** । **या सिद्धिः ज्ञानस्य** परनिष्ठा नितरां स्थितिः तां **सिद्धिं प्राप्तः** इति भाष्ये गीतायां चान्वय इति भावः ॥ ५० ॥

***भा०र०***— 'यथा = येन' इति भाषणानुसारेण 'तथा' इति पदमनूद्यार्थमाह **तथा तमुपायमिति** । **प्रतीत एवार्थः** ब्रह्मप्राप्तौ उपायकथनप्रतिज्ञारूपः । **ज्ञाननिष्ठेति** । निश्चलापरोक्षज्ञानत्वेनेत्यर्थः । **ज्ञानस्य** अपरोक्षस्य **अनपेक्षत्वादिति** ज्ञानेन ब्रह्मप्राप्तौ जनयितव्यायां साधकनिष्ठसाधनान्तरानपेक्षत्वादित्यर्थः । 'न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' इति वचनादिति भावः ॥ ॥ ५० ॥

**गीता**

**बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

*वि०वि०*— बुद्ध्येत्याद्युक्तसाधनसम्पत्या नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ॥ ५१ ॥

*सा०सं०*— प्रतिज्ञातमाह **बुद्ध्येति**। **विशुद्धया** विषयेष्वसक्तया। **बुद्ध्या** युक्तः। **धृत्या** धैर्येण स्तम्भनशक्त्या। **आत्मानं** मनो**नियम्य** विषयेभ्यो निवर्त्य च। **शब्दादीन्** विषयान् त्यक्त्वा। तदनुभवेच्छां विहायेति यावत्। अस्य यद्रागद्वेषौ यौ रागद्वेषौ तौ च त्यक्त्वा। "व्युदस्य" इति पाठे तु न क्लेशः ॥ ५१ ॥

*अ०प्र०*— तदेवाह **बुद्ध्येति**।

अथान्वयः— विशुद्धया = सात्त्विकया यद्वा, श्रीगुरूक्तमार्गेण विवेकतीर्थे बुद्धेः देहादिविषयाणां सुखदुःखभोक्तृत्वनिश्चय एव देहाभिमानात्मकं मालिन्यं धूतं चेत् बुद्धिर्विशुद्धा भवति। तया विशुद्धया[१], बुद्ध्या = पूर्वोक्तप्रकारेण प्रवृत्तिं च निवृत्तिं चेत्यत्रोक्त्या उक्तप्रकारेण बुद्ध्या[२], युक्तः सन्[३], धृत्यात्मानं नियम्य च = धृत्या धैर्येण आत्मानं इन्द्रियवर्गं च नियम्य = निश्चलीकृत्य[६], शब्दादीन्[७], विषयान्[८], त्यक्त्वा[९], तद्विषयौ व्युदस्य च प्रारब्धकर्मणा इष्टानिष्टभोगौ सम्प्राप्तौ चेत् तत्र इष्टप्राप्तौ रागः साभिलाषो न भवति। अनिष्टे प्राप्ते द्वेषं न करोति एवमिष्टानिष्टयोः रागद्वेषौ कामक्रोधौ च[१०] व्युदस्य च = परित्यज्य च[११], बुद्ध्या विशुद्धया युक्त इत्यादीनां ब्रह्मभूयाय कल्पत इति तृतीयेणान्वयः ॥ ५१ ॥

**गीता**

## विविक्तसेवी लघ्वाशी यतवाक्कायमानसः।
## ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

*सा०सं०*— **विविक्तसेवी** जनसम्मर्दहीनदेशवासी। लघ्वाहारवान्। **यतवाक्कायमानसः** सद्विषय एव नियमितवागादिः। **नित्यं** ध्यानरूपोपायपरः। **वैराग्यं समुपाश्रितः** ॥ ५२ ॥

*अ०प्र०*— विविक्तसेवी = एकान्तदेशे अवस्थायी शुचिदेशे वा[१], लघ्वाशी मितभोजी लघ्वशनमेव शीलमस्येति तथा शरीरबलार्थं क्षुन्निवारणार्थं रसनाभिलाषापूरणार्थं वा न भुङ्क्ते देहव्यवहारमात्रसिद्ध्ये मिताशी भवति[२], यतवाक्कायमानसः = वाक् च कायश्च मानसं च यतानि नियमितानि येन सः। यद्वा, यतो नियमितः कायो देहो येन सः यतं नियमितं मानसं मनो येन सः यता नियमिता वाक्पाणी येन सः यद्वा, एतैरुपायैः संयतवाक् देहचित्तो भूत्वा[३], नित्यं = सर्वदा[४],

ध्यानयोगपरः सन् = ध्यानेन योगो ब्रह्मसंस्पर्शः तत्परः सन् ध्यानं च योगश्च ध्यानयोगौ तावेव परौ उत्कृष्टौ यस्य सः एतादृशः सन्[1], वैराग्यं समुपाश्रितः = ध्यानाविच्छेदार्थं पुनरपि दृढं वैराग्यं सम्यक् उपाश्रितः भूत्वा[2], ब्रह्मभूयाय कल्पते इति उत्तरेणान्वयः ॥ ५२ ॥

**गीतातात्पर्यनिर्णयः**

**वक्ष्यमाणप्रकारेण वर्तमानस्तदनन्तरं नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्माख्याया महालक्ष्म्याः सकाशं यथाऽऽप्नोति तथा निबोध ।**

***न्या०दी०*— असक्तेत्यादिना नैष्कर्म्यसिद्धिसाधनविवरणप्रतिज्ञापूर्वकं तदनन्तर-फलमुच्यते सिद्धिमिति । तत्र नैष्कर्म्यसिद्ध्यनन्तरं च येनोपायेन परं ब्रह्माप्नोति तं प्रकारं** निबोधेत्यन्यथाप्रतीतिनिरासायाह **वक्ष्यमाणेति** ॥ **अत्र यथा येन वक्ष्यमाणप्रकारेण वर्त-मानो नैष्कर्म्यसिद्धिं प्राप्तो** भूत्वा **महालक्ष्मीं प्राप्नोति तं प्रकारं निबोधेत्येवोच्यते । न तु नैष्कर्म्यसिद्ध्यनन्तरं परब्रह्मप्राप्तिसाधनं निबोधेत्यर्थः ।**

*भा०दी०*— **नैष्कर्म्यसिद्धिसाधनेति** । प्रारब्धेतरसर्वारिष्टकर्मनाशसाधनविवरणे(ने)त्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"मम योनिर्महद् ब्रह्म" "ब्रह्मणो हि प्रतिष्ठाऽहम्" इत्युक्तत्वात् ।**

**"ब्रह्मभूतः प्रसन्नात्मा" इत्युक्त्वा "मद्भक्तिं लभते पराम्" इति वक्ष्यमाण-त्वाच्च ।**

***प्रका०***— "बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य चे"त्याद्युक्तनैष्कर्म्यसिद्धिहेतुत्वात् वक्ष्यमाणप्रकारेण वर्तमानः तदनन्तरं नैष्कर्म्यसिद्धिं प्राप्त इत्युक्तम् । यथा ब्रह्माप्नोति (इति) ब्रह्म-शब्दः प्रयुज्यते तत्र ब्रह्मशब्दस्य अप्रसिद्धिशङ्कानिवृत्त्यर्थं प्रयोगं दर्शयति **मम योनिर्महद्ब्रह्मे-त्यादिना** ।

***न्या०दी०*— ब्रह्मशब्दस्य लक्ष्मीवाचकत्वमेव कुत इत्यत आह ममेति** ॥ अत्र **ब्रह्मपदेन परब्रह्मैव किं न स्यादित्यत** आह **ब्रह्मेति** ॥ एतद्ब्रह्मप्राप्त्यनन्तरमपि भक्त्यादि-**लाभश्रवणात् लक्ष्मीतत्त्वमेवेदं, न तु** परंब्रह्मेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

''सर्वपापक्षयाद् देहं त्यक्त्वा देवान् क्रमाद् व्रजन् ।
प्राप्य लक्ष्मीं तत्प्रसादात् पुनः स्वृद्धा हरौ यदा ॥

भक्तिस्तया पुनर्ज्ञाने स्वृद्धे विष्णुं प्रपद्यते ।
अपरोक्षदृशो विष्णोः शरीरेऽपि सतः पुरा ॥

त्यक्तदेहादिकस्यापि यावद् विष्णुं प्रपद्यते ।
तावद् गुणा विवर्धन्ते स्थिताः स्युः प्राप्य केशवम् ॥''

—इति महावराहे ॥ ५०-५२ ॥

*प्रका०*— ''ब्रह्मभूतः प्रसन्नात्मे''त्युक्त्वा ''मद्भक्तिं लभते परामि''त्यत्र अर्चिरादिमार्गेण लक्ष्मीं प्राप्य भगवद्भक्तिं परां लभते इति यद्देहत्यागानन्तरमपि विष्णुभक्त्यादिगुणवृद्धिवचनं तत् प्रमाणान्तरेण प्रपञ्चयति **सर्वेति** ।

*न्या०दी०*— भवेदेतद्यदि नैष्कर्म्यसिद्धिं प्राप्तस्य लक्ष्मीप्राप्त्यनन्तरमपि भक्त्यादिलाभोऽस्ति, न तु परब्रह्मप्राप्त्यनन्तरमिति सिद्ध्यति । तदेव कुत इत्यत आह **सर्वेति** ॥ पापपदम् अप्रारब्धानिष्टकर्मपरम् । ननु अपरोक्षज्ञानिनो हि नैष्कर्म्यसिद्धिः । तत्कथं तदनन्तरमपि ज्ञानादिलाभः ? तथात्वे मुक्तावपि तत्प्रसङ्गादित्यत आह **अपरोक्षेति** ॥ पुरा देहत्यागात् । अपरोक्षज्ञानानन्तरमपि ज्ञानादिवृद्धिर्भवेदेव । न च अतिप्रसङ्गः । प्रमाणानुगुणेन मुक्तौ तदभावोपपत्तेरिति भावः ॥

*भा०दी०*— न चातिप्रसङ्ग इति । मुक्तावपि ज्ञानवृद्धिप्रसङ्गरूपो न चेत्यर्थः ॥

**गीता**

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

*वि०वि०*— ब्रह्मभूयाय ब्रह्मनिष्ठायै ॥ ५३ ॥

*वा०ल०*— 'ब्रह्मभूयाय' इत्यत्र, 'स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि' इत्यभिधानात्, 'बृह वृद्धौ' इति धातुव्याख्यानाच्च ब्रह्मभूयाय ब्रह्मत्वाय स्वयोग्यसुखाद्यभिवृद्ध्यै । 'युजिर् योगे' इति धातोः नित्यसम्बन्धरूपब्रह्मसायुज्याय वा । यद्वा - 'या'धातोः भावार्थे औणादिके डप्रत्यये कृते यं गमनम्, ब्रह्मणो विष्णोः भूः स्थानं वैकुण्ठलोकः । तत्प्राप्तये कल्पते इत्यर्थः ॥ ॥ ५३ ॥

*सा०सं०*— **अहङ्कारं** स्वकर्तृत्वाभिमानम् । **बलं** स्वसमर्थताभिमानम् । **दर्पं** भीतिहेतोरदृष्टिम् । **कामं** विषयाभिलाषम् । **क्रोधं परिग्रहं** च विमुच्य । **निर्ममः** कर्मणि मदीयताबुद्धिहीनः । **शान्तः** हेतुभिरप्यनुत्थितकोपः । **ब्रह्मभूयाय** ब्रह्मणि स्थितिर्ब्रह्मभूयं तस्मै । सर्वदा ब्रह्ममनस्कत्वायेत्यर्थः । **कल्पते** समर्थो भवति ॥ ५३ ॥

*अ०प्र०*— किञ्च **अहमिति** ।

अहङ्कारं = ततश्च विरक्तोऽहमित्याद्यहङ्कारम् । यद्वा, त्वगादिसप्तधात्वात्मके देहे देहाभिमाननिगडे न देहिनं निबध्य अनेकजन्ममरणादिदुःखानि दत्वापि यो न मुच्यति सः देहाभिमानरूपोऽहङ्कारः तं देहाभिमानं[२], विमुच्य = सन्त्यज्य सञ्छिद्येत्यर्थः[३], बलं विमुच्य = दुराग्रहं यद्विषयसेवनेन विवर्धते यदाश्रयाद्विषयासक्ताः कुकर्माणि कुर्वन्ति यत्सर्वदोषाणां वरिष्ठं तद्बलं विमुच्य[३], दर्पं = योगबलाद् दुर्मार्गे प्रवृत्तिलक्षणं यद्वा, यः सन्मार्गं विस्मार्य अधर्मं कारयित्वा नरकादियातनां ददाति यो विश्वासरूपेण घातको भवति स दर्पः (तत्) विमुच्य[४], कामं = यस्य भयात् तपस्विनः कम्पन्ते यस्य परिपाकः[५], क्रोध एव महादोषः यः पूर्यमाणोऽपि रिक्तो न भवति स दुर्भरः कामस्तं क्रोधं = कामस्यापूर्तौ य उद्भवति तस्य नाशे यो नश्यति स क्रोधः तस्य काममूलत्वात् तं क्रोधं[६], परिग्रहं = यो विषयमोहात् परिभ्रामयितुं समर्थः शिष्यशास्त्रमठमुद्रादिनिमित्तैः पाशैर्निस्सङ्गिनमपि यो बध्नाति गृहे कुटुम्बपरिग्रहोऽस्त्येव । तदभावे वनगं तस्यापि तत्र वन्यो भूत्वा इदं ममेति वासनया वृणोति एवं नग्नस्यापि यः शरीरेणानुसरति स दुर्जयः परिग्रहस्तं सन्त्यज्य । यद्वा, कामक्रोधपरिग्रहं समस्तपदे कृते सति प्रारब्धवशात्प्राप्यमाणेष्वपि विषयेषु सत्सु कामवत्सु क्रोधपरिग्रहे च विमुच्य विशेषेण त्यक्त्वा[७], निर्ममः सन् = निर्गता ममेदमिति ममता यस्य सः । यद्वा, बलादापन्नेषु तदभिमानं त्यक्त्वा शरीरयात्रार्थं भुञ्जानः[८], शान्तः = प्रसन्नचित्तः यद्वा, परमां उपशान्तिं प्राप्तः नरः योगसंसिद्धिं प्राप्तो भूत्वा[९], ब्रह्मभूयाय कल्पते = ब्रह्मणि भावाय तन्निष्ठायै यद्वा, ब्रह्मसाक्षात्काराय[१०] कल्पते = योग्यो भवति समर्थो वा[११] ॥ ५३ ॥

**गीता**

## ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
## समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

***वि०वि०***— ब्रह्मणि स्थितः सर्वदा तन्मनस्कः, लक्ष्मीं प्राप्तो वा । प्रसन्नात्मा निर्मलचित्तः परमात्मानुग्रहवान् । सर्वदा प्रायेण । न शोचति न काङ्क्षति । ततः सर्वेषु भूतेषु समः परामुत्कृष्टां मद्भक्तिं लभते ॥ ५४ ॥

***वा०ल०***— ब्रह्मभूतः ब्रह्मणि भूतः, ब्रह्मभुवि ऊतः "ऊतं स्यूतमुतं चेति त्रितयं तन्तु-सन्ततौ" इत्यमरवचनात् ऊतः आश्रितः । परब्रह्मत्वं प्राप्त इत्यर्थस्तु "सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति" इत्युपक्रमेण, "मद्भक्तिं लभते पराम्" इति मध्येन, "ततो मां तत्त्वतो ज्ञात्वा विशते" इत्युपसंहारेण, "मम साधर्म्यमागताः" इति भगवतैव स्पष्टं स्थलान्तरे प्रोक्तफलेन च विरुद्धः ॥ ५४ ॥

***सा०सं०***— ततः किमित्यत आह **ब्रह्मभूत** इति । ब्रह्मणि स्थितमनस्कः । लक्ष्मीं प्राप्तः। **प्रसन्नात्मा** स्वत एव विषयेष्वप्रवृत्तमनाः । **न शोचति न काङ्क्षति । सर्वेषु भूतेषु समः** परां **भक्तिं लभते** ॥ ५४ ॥

***अ०प्र०***— ततः फलमाह **ब्रह्मेति** ।

एवं ब्रह्मभूतः = ब्रह्मण्येव स्थितमनस्कः लक्ष्मीं प्राप्तो वा[1], प्रसन्नात्मा = अनुग्रहवान् प्रसन्न-चित्तो वा श्रीविष्णुभक्तिपरिचर्यायां प्रसन्नं आत्माऽन्तःकरणं यस्य सः[2], न शोचति = नष्टं न शोचति न चिन्तयति[3], अप्राप्तं न काङ्क्षति = नेच्छति देहाद्यभिमानाभावात्[4], ततः सर्वेषु भूतेषु समः सन् = समत्वेन स्थितः सन् । षष्ठाध्यायोक्तरीत्या समबुद्धिः ज्ञानी रागद्वेषादिकृतविक्षेपा-भावत्वात्[7], परां = उत्कृष्टां[8], मद्भक्तिं श्रीविष्णुप्रसादेन ज्ञानभक्तिं[9], प्राप्नोति[10] अस्यायम्भावः— यदा प्रसन्नात्मा भूत्वा स्वेन सह सर्वभूतानि मदाधारेण तिष्ठन्तीति भक्तिं लभते इत्यर्थः ॥ ५४ ॥

**भाष्यम्**

**ब्रह्मभूयाय कल्पते** । ब्रह्मणि भावो ब्रह्मभूयं ब्रह्मणि स्थितिः । सर्वदा **तन्मनस्कतेत्यर्थः** ॥ ५३-५४ ॥

*प०टी०*— 'ब्रह्मभूय'शब्देन ब्रह्मत्वमिति । आह **ब्रह्मणीति** । 'मद्भक्तिं लभते' इत्यादिवाक्यशेषाद्ब्रह्मणि भावोऽपि न मोक्ष इत्याह **सर्वदेति** ॥ ५३-५४ ॥

*प्र०दी०*— 'ब्रह्मभूयाय ब्रह्मत्वाय' इति प्रतीतिनिरासार्थं व्याचष्टे **ब्रह्मेति** । 'इत्यर्थः' इति शेषः । 'भावो न जन्मादि' इत्याशयेन विवृणोति **ब्रह्मणीति** । इयमपि न मुक्तिः । 'ब्रह्मभूतः' इति पुनर्भक्त्यादिलाभश्रवणादिति भावेन आह **सर्वदेति** ॥ ५३-५४ ॥

*भा०दी०*— **ब्रह्मभूत इतीति** । 'ब्रह्मभूत' इति श्लोक इत्यर्थः ॥ ५३-५४ ॥

*भा०र०*— 'ब्रह्मभूयाय = ब्रह्मभावाय' इति *शङ्करोक्तेराह* **इति प्रतीतीति** । **इयमपि** ब्रह्मणि स्थितिरपि । **पुनः** ब्रह्मणि स्थित्यनन्तरमपि । **भक्तीति** । 'मद्भक्तिं लभते पराम्' इति श्रवणादित्यर्थः ॥ ५३-५४ ॥

**गीता**

# भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
# ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

*वि०वि०*— अहं यावान् यश्चास्मि तत्त्वतः तावन्तं मां योग्यतानुसारेण तया भक्त्या सम्यक् जानाति । तदनन्तरं समृद्धेन तेन ज्ञानेन मां प्रपद्यते । उक्तं च— "सर्वपापक्षयाद्देहं त्यक्त्वा देवान् क्रमाद् व्रजेत् । प्राप्य लक्ष्मीं तत्प्रसादात्पुनः स्वृद्धा हरौ यदा ॥ भक्तिस्तया पुनर्ज्ञाने वृद्धे विष्णुं प्रपद्यते ॥" इत्यादिना ॥ ५५ ॥

*सा०सं०*— ततश्च किमित्यत आह **भक्त्येति** । अहं **यावान्** देशकालगुणैर्यावान् व्याप्तोऽस्मि । **यश्च** यन्नामा यद्रूपश्चास्मि तादृशम् । **मां** प्रागुक्तया परमभक्त्या । **तत्त्वतः** । **अभि** स्वयोग्यतानुसारेण । **जानाति** । तेनापि किमित्यत आह **तत** इति । भक्तिबलात् । **तत्त्वतो मां ज्ञात्वा तदनन्तरं मां विशते** । मदनुप्रविष्टो भवति मुक्तो भवतीत्यर्थः ॥ ५५ ॥

*अ०प्र०*— ततश्च भक्त्या[१], मां[२], तत्त्वतः[३], यावान्यश्चास्मीति[४], अभिजानाति[५], ततः[६], मां[७], तत्त्वतः[८], ज्ञात्वा[९], तदनन्तरं[१०] विशते[११] ॥

ततश्च परया भक्त्या मां = परमात्मानं, तत्त्वतः = याथार्थ्येन यावान् = सर्वव्यापी यश्चास्मि = सच्चिदानन्दादिलक्षणः तथाभूत इति[२], अभिजानाति = पश्यतीति भावः[१] अनन्यया

भक्त्या अनन्यसिद्धया भक्त्या सर्वान्तर्यामित्वेन मां पश्यतीति भावः[1], ततश्च मां तत्त्वतः = सम्यक् स्वयोग्यतानुसारेण एवं[c], ज्ञात्वा[8], तदनन्तरं = जीवराशिभिन्नः परमेश्वरः । अहं जीवस्तदधीन इति दृढज्ञानानन्तरं[10] विशते = प्रपद्यते तदुक्तम्— "सर्वपापक्षयाद्देहं त्यक्त्वा देहान् क्रमाद् व्रजन् । प्राप्य लक्ष्मीं तत्प्रसादात् पुनः स्वृद्धा हरौ यदा ॥ भक्तिस्तया पुनर्ज्ञाने स्वृद्धे विष्णुं प्रपद्यते । अपरोक्षदृशो विष्णोः शरीरेऽपि सतः पुरा ॥ त्यक्तदेहादिकस्यापि यावद्विष्णुं प्रपद्यते । तावद्गुणा विवर्धन्ते स्थिता स्युः प्राप्य केशवम् ॥" इति वचनात् ॥ ५५ ॥

**गीतातात्पर्यनिर्णयः**

**"विमुच्य निर्ममः शान्तः" नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्मणि भूयाय भवतीत्यर्थः ॥ ५३-५५ ॥**

*प्रका०*— अत्र सर्वपापक्षयवत् तथाविधपुण्यस्याप्यनिष्टत्वात् । "अहङ्कारं बलं दर्पं कामक्रोधपरिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते" इत्यस्यार्थमाह **विमुच्येति** । सिद्धिं प्राप्तो यथा ब्रह्मेति नैष्कर्म्यसिद्धिं प्राप्तस्य लक्ष्मीप्राप्तेः प्रस्तुतत्वात् नैष्कर्म्यसिद्ध्यभावे लक्ष्मीप्राप्त्यभावात् च नैष्कर्म्यसिद्धिं प्राप्तो भूत्वेत्यर्थसिद्धिमुक्त्वा ब्रह्मणि भूयाय भवतीति व्याख्यातम् ।

***न्या०दी०*— यदुक्तं नैष्कर्म्यसिद्धिसाधनं निबोधेत्येवोच्यते, न तु तदनन्तरं ब्रह्मप्राप्तिसाधनमिति । तदयुक्तम् । बुद्ध्या विशुद्धयेत्यादिसाधनमुक्त्वा ब्रह्मभूयाय कल्पत इत्युक्तत्वात् । अन्यथा नैष्कर्म्यसिद्धिं प्राप्तो भूत्वेति वक्तव्यत्वादित्याशङ्कां परिहरन् ब्रह्मभूयपदस्यान्यथाप्रतीतिनिरासायार्थमाह विमुच्येति ॥ ज्ञानानन्तरं लक्ष्मीप्राप्तौ साधनानामनावश्यकत्वात् नैष्कर्म्यसिद्धिं प्राप्तो भूत्वेत्यत्राभिप्रेतमेवेति भावः ॥**

*भा०दी०*— **लक्ष्मीप्राप्ताविति** । एतेन ब्रह्मभूयाय इत्यस्य लक्ष्मीप्राप्त्यर्थमित्यर्थ उक्तो भवति । **ज्ञानानन्तरम्** इत्युक्त्या च नैष्कर्म्याय मोक्षाय सिद्धिं तदुपायज्ञानसिद्धिमित्यप्यर्थः सूचितः ॥

**गीता**

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥**

*वि०वि०*— यतः प्रवृत्तिरित्युक्तमेव विशिनष्टि **सर्वेति** । विहितानि सर्वकर्माण्यपि मद्व्यपाश्रयः मय्येव समर्पयन् सदा कुर्वाणो मत्प्रसादात् शाश्वतं शश्वदेकप्रकारम् अव्ययं नित्यं पदं परब्रह्मस्वरूपं अवाप्नोति । एकमपि कर्म तदाश्रयेण विना न कार्यमित्येवमर्थमपिशब्दः ॥ ५६ ॥

*सा०सं०*— पुनरन्तरङ्गसाधनान्युक्त्वा शास्त्रार्थमुपसंहरति **सर्वेति** । यद्वा, 'यतः प्रवृत्तिर्भूतानाम्' इत्यत्र 'स्वकर्मणा तमभ्यर्च्य' इत्युक्तम् । तत्र कर्मकरणे विशिष्य फलं व्यनक्ति **सर्वेति**। **मद्व्यपाश्रयः** मय्येव समर्पयन्नेव । **सर्वाणि** विहितानि **कर्माणि** । सदा **कुर्वाणः** । **मत्प्रसादात्** शाश्वतं पदम् । **अव्ययं** मत्स्वरूपम् । **अवाप्नोति** । **शाश्वतमव्ययम्** इति कूटस्थतयाऽऽद्यन्तहीनमित्यर्थः । अत्र **अपिशब्दो** नैकमपि कर्म अतदाश्रयेण कार्यमित्यर्थसूचनाय ॥ ५६ ॥

*अ०प्र०*— यतः प्रवृत्याद्युक्तं विवृणोति **सर्वकर्माणीति** ।

अथान्वयः— यः सदा[१], मद्व्यपाश्रयः सन्[२], सर्वकर्माण्यपि कुर्वाणः[३], मत्प्रसादात्[४], शाश्वतं[५], अव्ययं[६], पदं[७], अवाप्नोति[८] ॥

यः सदा = पूर्वोक्तक्रमेण सर्वदा[१], मद्व्यपाश्रयः सन् = अहमेव आश्रयणीयः न स्वर्गादि यस्य सः एतादृशः सन् । यद्वा, अहं विश्वप्रकाश आत्मा त्रिकरणैः व्यपाश्रयो यस्य स तथा । यद्वा, बुद्धिवाक्कायैः मां परमात्मानं अनुसृत्य मद्भिनाऽन्यं न जानातीति द्वितीयो भागः । एतादृशः सन्[२], सर्वकर्माण्यपि = नित्यनैमित्तिकानि काम्यानि च कर्माणि । यद्वा, स्वभावतो वर्णाश्रमोचितं नित्यनैमित्तिकाख्यनियतं कर्मैकं अन्यं तु कदाचित् जन्मसंस्कारवशात् अकृत्यं निषिद्धमेकं एवं न भवतीत्यनेकमिति न्यायेन सर्वकर्माणीत्युक्तम् । तेन कदाचित् निषिद्धकर्माणि कृतान्यपि मद्बोधेन शुभाशुभकर्माणि मदधीनानि भूत्वा साधकः मम लोकं प्राप्यते[३], कुर्वाणः = आचारः सन् पुरुषः[४], मत्प्रसादात् = मत्प्रसादेन ज्ञाननिष्ठां प्राप्य तया मद्भक्तिमासाद्य तया भक्त्या मयि अनन्यभक्तिः सन् सुखीभवतीत्येको भागः । अतो मत्प्रसादात्[५], शाश्वतं = अनादिं[६], अव्ययं = नित्यं सर्वोत्कृष्टं[७], पदं = मम धाम[८], अवाप्नोति = प्राप्नोति[९], तदुक्तम्— "शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः । हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया । भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी" ॥ ५६ ॥

**भाष्यम्**

**पुनरन्तरङ्गसाधनान्युक्त्वा उपसंहरति सर्वकर्माणीत्यादिना ॥ ५६ ॥**

*प०टी०*— उत्तरश्लोकसन्दर्भमवतारयति **पुनरिति** ॥ ५६ ॥

*प्र०दी०*— उत्तरग्रन्थस्य सङ्गतिं सूचयन् तात्पर्यमाह **पुनरिति** । **उपसंहरति** 'शास्त्रम्' इति शेषः ॥ ५६ ॥

*भा०र०*— प्रागपि साधनानामुक्तत्वात् भाष्ये 'पुनः' इत्युक्तमिति स्फुटत्वान्नोक्तम् ॥ ५६ ॥

**गीतातात्पर्यनिर्णयः**

**विहितानि सर्वकर्माण्यपि मद्व्यपाश्रयो भूत्वा सदा कुर्वाणः । न हि यथेष्टचरणे तात्पर्यमत्र । तथा सति विहिताकरणेऽपि समत्वात् "मामनुस्मर युध्य च", "ततः स्वधर्मं कीर्तिं च" इत्यादिप्रस्तुतविरोधः । अपिशब्दस्त्वेकमपि कर्मातदाश्रयेण न कार्यमित्यर्थे ॥ ५६ ॥**

*प्रका०*— "सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रय" इत्यस्यार्थमाह **विहितानीत्यादिना** । विहितमतिक्रम्य यथेष्टतः सर्वकर्मकरणे विहितस्याकर्तुमपि शक्यत्वात् । "अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि" इत्यादिप्रस्तुतविरोधः स्यात् । (न च वाच्यं) मद्व्यपाश्रयश्चेत् स्वच्छन्दतः सर्वं कर्माण्यपि कुर्वाणो मत्प्रसादादवाप्नोति शाश्वतं पदमक्षय एव सन् सदा कुर्वाणो न तु किञ्चिदपि कर्मन्यासमकुर्णाण इत्यर्थः ।

**न्या०दी०— "यतः प्रवृत्तिः" इत्युक्तमेव विशिष्यते सर्व इति । तत्र मद्व्यपाश्रयश्चेत् यथेष्टतो निषिद्धान्यनिषिद्धानि वा सर्वकर्माणि कुर्वाणः शाश्वतं पदं प्राप्नोतीत्यन्यथाप्रतीतिनिरासाय तद्व्याचष्टे विहितानीति ॥ मद्व्यपाश्रय इति । मय्येव समर्पयन्नित्यर्थः । प्रतीतार्थ एव किं न स्यादित्यत आह न हीति ॥ नात्र यथेष्टतो निषिद्धानिषिद्धकर्माचरणे तात्पर्यं कल्प्यम् । तथा सति भगवदाश्रयस्य विहिताकरणेऽप्यत्र तात्पर्यप्रसङ्गात् । निषिद्धकरणविहिताकरणयोः समानत्वादित्यर्थः । अत्र भगवदाश्रितस्य विहिताकरणेऽपि तात्पर्यं स्यादेवेत्यत आह मामिति ॥ यद्यप्यत्र भगवदाश्रितस्य विहिताकरणेऽपि तात्पर्यं तर्हि भगवदाश्रितस्यैवार्जुनस्य "मामनुस्मर युध्य च" इत्यादौ विहितयुद्धाकरणे "अथ चेत्त्वमिमं धर्म्यम्" इत्यादौ प्राक् प्रत्यवाय उक्तः । तद्विरोधः स्यादिति भावः । प्रतीतार्थानङ्गीकारेऽपिशब्दवैय्यर्थ्यमित्यत आह अपीति ॥**

*भा०दी०*— **विशिष्यत** इति । स्वकर्मणा तमभ्यर्च्येत्यत्र स्वकर्मकृतौ किञ्चिद्विशेषणमाहेत्यर्थः ॥ **इत्यादौ प्रागिति** । द्वितीयाध्याये ॥

गीता

# चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
# बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

*वि०वि०*— यदि भगवदाश्रयेण विहितकर्म कुर्वतो मुक्तिः, तर्हि त्रैविद्यस्यापि स्यात्तस्यापि विहितं कर्म कृत्वा भगवदर्पणसद्भावेन भगवदाश्रितत्वाविशेषादित्यत आह **चेतसेति** । स एव सर्वप्रकारेण सर्वस्मात्पर इति सदाभावो यस्येति मत्परः । मय्येव चेतसा सर्वकर्माणि संन्यस्य योगं प्रत्याहाराद्युपायम् आश्रित्य मयि निरुद्धं चित्तं यस्यासौ मच्चित्तः । भगवदाश्रितः विहिताशेषकर्माणि चेतसा भगवति संन्यस्य करोति न तथा त्रैविद्य इति तयोश्चेतसैव विशेष इति भावः ॥ ५७ ॥

*सा०सं०*— यदि भगवदाश्रयेण विहितकर्म कुर्वतो मुक्तिस्तर्हि त्रैविद्यस्यापि सा स्यात्, तस्यापि विहितकर्मकरणभगवदर्पणयोः सत्त्वेन भगवदाश्रयत्वादित्यत आह **चेतसेति** । **चेतसा सर्वाणि कर्माणि मयि संन्यस्य** समर्प्य । **मत्परः** अहमेव परः सर्वोत्तम इति भावो यस्य स मत्परः । **भव** । किञ्च **बुद्धियोगं** बुद्धेर्योगं प्रत्याहारादिरूपम् । उपायमाश्रित्य । **मच्चित्तः** मय्येव निरुद्धचित्तः । **सततं भव** इत्युक्त्या त्रैविद्यस्यैवंरूपत्वाभावान्न तस्य मुक्तिशङ्केति भावः ॥ ५७ ॥

*अ०प्र०*— यदि भगवदाश्रयेण विहितं कर्म कुर्वतो मुक्तिः तर्हि त्रैविद्यस्यापि स्यात् । तस्यापि विहितकर्म कृत्वा भगवत्समर्पणसद्भावेन भगवदाश्रितज्ञानविशेषादित्यत आह **चेतसेति** ।

हे भारत !, सर्वकर्माणि[१], चेतसा[२], मयि संन्यस्य[३], मत्परः सन्[४], बुद्धियोगं[५], उपाश्रित्य[६], सततं[७], मच्चित्तो भव[८] ॥

सर्वकर्माणि[१], चेतसा[२], मयि[३], संन्यस्य = समर्प्य[४], मत्परः = स एव सर्वप्रकारेण सर्वस्मात्परम इति भावो यस्य सदाऽस्ति स मत्परः । यद्वा, अहमेव परः प्राप्यः पुरुषार्थो यस्य सः । यद्वा, अहं जीवः हृदयस्थः परमात्मा परः प्रियतमो यस्य तम् । मत्पर इति चित्तवृत्तिः आत्मविवेकेन न्यस्तव्येति भावः[४], बुद्धियोगं = मयि परमात्मनि बुद्धेर्निवेशनं योगः तं बुद्धियोगं प्रत्याहाराद्युपायम् । यद्वा, व्यवसायात्मिकया बुद्ध्या योगं[५], उपाश्रित्य = अनुष्ठाय[६], सततं कर्मानुष्ठानकालेऽपि 'ब्रह्मार्पणं ब्रह्म हविः' इति न्यायेन सततं[७], मच्चित्तो भव = मय्येव चित्तं यस्य सः तथाभूतो भव । यद्वा, मद्गतचित्तो भव[८], यद्वा, सततं भव भागवतस्य सर्वसाधनादिषु सदा सच्चिन्ता नैवं त्रैविध्ये स्थितिरिति तयोर्विशेष इति भावः ॥ ५७ ॥

गीता

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥**

*वि०वि०*— भगवच्चित्तस्य फलमाह **मच्चित्त इति** । मद्गतचित्तः सन् सर्वाण्यपि दुर्गाणि दुस्तराणि दुःखानि मत्प्रसादात्तरिष्यसि । एवं स्वविहितवृत्त्या भक्त्या भगवदाराधनस्य परमधर्मत्वा-द्युद्धाख्यस्वविहितं कर्म भगवत्प्रीत्यर्थं कार्यमित्येतावता प्रबन्धेन प्रतिपादितम् । तदकरणेऽनिष्टमाह **अथ चेदिति** । अहं न योत्स्यामीत्यहङ्काराद्युद्धस्वेति मदीयं वचनं न श्रोष्यसि चेत् विनङ्क्ष्यसि पुरुषार्थाद् भ्रष्टो भविष्यसि ॥ ५८ ॥

*सा०सं०*— भगवच्चित्तस्य फलमाह **मच्चित्त** इति । **मच्चित्तो** मय्येव निरुद्धमनस्कः । **सर्वाणि दुर्गाणि** दुस्तराणि दुःखेन तर्तव्यानि कष्टानि । **मत्प्रसादात् तरिष्यसि** । एवं स्वविहित-वृत्त्या भगवदाराधनस्य परमधर्मत्वात् युद्धाख्यं स्वविहितकर्म भगवत्प्रीत्यर्थमेवावश्यं कार्यमित्ये-तावता प्रबन्धेन प्रतिपादितम् । तदकरणेऽनिष्टमाह **अथ चेदिति** । अर्थान्तरे **अथ**शब्दः । 'अहं न योत्स्यामि' इत्यहङ्कारात् 'युद्धयस्व' इति मदीयवचनं त्वं **न श्रोष्यसि** चेत्, श्रुत्वा न करोषि चेत् । **विनङ्क्ष्यसि** पुरुषार्थहीनो भविष्यसि । मद्वचनाकरणे विनाश इत्यभ्युपेत्योक्तम् ॥ ५८ ॥

*अ०प्र०*— भगवच्चित्तस्य फलमाह **मच्चित्त इति** ।

मच्चित्तः = मद्गतचित्तः सन्[1], मत्प्रसादात् = एवमुक्तप्रकारेणानन्यया भक्त्या चित्तं मय्येव परिपूरितं यदा भवति तदा मत्प्रसादः तेन ब्रह्मज्ञानं भवतीति भावः । तस्मात् = मत्प्रसादात्, सर्वदुर्गाणि = सर्वाण्यपि दुस्तराणि दुःखास्पदानि जन्ममृत्युरूपाणि संसारदुर्गमानि दुःखगम्यानि[3], तरिष्यसि = तान्येव सुगमानि भवन्ति[4], एवं स्वविहितवृत्त्या भक्त्या भगवदाराधनस्य परमधर्मत्वा-द्युद्धाख्यं विहितं कर्म भगवत्प्रीत्यर्थं कार्यमिति प्रमेयमेतावता प्रबन्धेन प्रतिपादितं तदकरणे दोषमाह **अथ चेदिति** । अथ चेत् त्वं यदि पुनस्त्वं[1], अहङ्कारात् = ज्ञातृत्वाभिमानात् युध्यस्वेति मदुक्तं[3], न श्रोष्यसि = मनसा कर्णाभ्यां न गृह्णासि[2], तर्हि विनङ्क्ष्यसि = विशेषेण नाशं गमिष्यसि पुरुषार्थभ्रष्टो नरकमनुभविष्यसि देहाभिमानसम्बन्धात् घातितो भवसीत्यर्थः ॥ ५८ ॥

**गीतातात्पर्यनिर्णयः**

**भगवत्संश्रितस्य त्रैविद्यस्य च मनसैव विशेष इत्याह चेतसा सर्वकर्माणि इति । स एव सर्वस्मात् परम इति भावोऽस्येति मत्परः । तत्र चित्तवृत्तिनिरोधोऽपि । बुद्धियोगः प्रत्याहारादिः ॥ ५७-५८ ॥**

*प्रका०*— "चेतसा सर्वकर्मणि मयि संन्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भवे"त्यनेन बुद्धियोगमुपाश्रित्येत्यस्यार्थमाह **भगवत्संश्रितस्येत्यादिना** । चेतसा वर्णाश्रमविहित सर्वकर्मणि भगवति संन्यस्य भगवदाश्रयः करोति । त्रैविद्यास्तानि न तथा चेतस तस्मिन् अर्पयितुं जानन्ति विहितकर्मानुल्लङ्घनमुभयोऽप्यविशिष्टं "मच्चितः सततं भवे"त्यनेन बुद्धियोगमुपाश्रित्येत्यस्य पौनरुक्त्यं परिहरति **तत्रेति** । बुद्धियोगः प्रत्याहारादिः ।

*न्या०दी०*— **यदि भगवदाश्रिततया विहितकर्म कुर्वतो मुक्तिस्तर्हि त्रैविद्यस्यापि स्यात् । तस्यापि विहितकर्माणि कृत्वा भगवदर्पणसद्भावेन भगवदाश्रिताविशिष्टत्वादित्याशङ्कापरिहाराय श्लोकमवतारयति भगवदिति ॥ भगवदाश्रितत्रैविद्ययोर्विहितकरणादिसाम्येऽपि मोक्षभावाभावावुपपद्येते । विहिताशेषकर्माणि चेतसा भगवति संन्यस्य भगवदाश्रितः करोति । न तथा त्रैविद्य इति तयोश्चेतसैव विशेषसद्भावादिति भावः । मत्पर इति त्रैविद्याद्भागवतस्य विशेष उच्यते । तत्र भगवति तात्पर्यवानित्यर्थाङ्गीकारे तत् त्रैविद्यस्यापि समम् । अहं परः सर्वोत्तमो यस्येत्यभ्युपगमे वा वस्तुनि विकल्पायोगात् तदपि त्रैविद्ये सममित्यत आह स एवेति ॥ परः सर्वप्रकारेणेति शेषः । भावः सर्वदेति च द्रष्टव्यम् । एवं चेन्मच्चित्त इति पुनरुक्तिः स्यात् । न हि भगवत्सर्वोत्तमत्वभावादन्यत् तच्चित्तत्वमस्तीत्याशङ्कापरिहाराय तदर्थमाह तत्रेति ॥ तत्र भगवति । त्रैविद्याद् भागवतस्य विशेष इति शेषः । तर्हि बुद्धियोगमुपाश्रित्येति पुनरुक्तिः स्यात् । भगवति बुद्धेर्योगो हि बुद्धियोग इत्यत आह बुद्धीति ॥ बुद्धेर्ज्ञानस्य योगः प्रत्याहाराद्युपाय इत्यर्थः । अथ चेत्त्वमहङ्कारादित्यभ्युपगम्योक्तम् ॥**

*भा०दी०*— **वस्तुनि विकल्पायोगादिति** । भागवतस्य सर्वोत्तमत्वं त्रैविद्यस्य तु नेति वस्तुनि हरौ विकल्पायोगादित्यर्थः ॥ **तदपीति** । भगवत्सर्वोत्तमत्वमपीत्यर्थः ॥ **भाव इति** । भावनेत्यर्थः ॥

**गीता**

## यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
## मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

***वि०वि०***— एतच्चाभ्युपगम्योक्तं वस्तुतस्त्वशक्यं च तवोक्ताकरणमित्याह **यदिति** । अहङ्कारमाश्रित्य न योत्स्य इति मन्यसे । एष ते व्यवसायः मिथ्या यतस्त्वां प्रकृतिर्युद्धे नियोक्ष्यति वर्तयिष्यति । प्रकृतिरीश्वरेच्छा । 'प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति वचनात् ॥ ५९ ॥

***वा०ल०***— 'मिथ्यैष व्यवसायः' इत्यत्र, एष व्यवसायः मिथ्या वृथा ॥ ५९ ॥

***सा०सं०***— मदुक्ताकरणमशक्यं च तवेत्याह **यदिति** । **मिथ्यैव** वृथैव । ते **व्यवसायः** निश्चयः । कुतः ? **प्रकृति**रितीश्वरेच्छा । **त्वां नियोक्ष्यति** प्रेरयति ॥ ५९ ॥

***अ०प्र०***— मदुक्तमनादृत्य केवलमहङ्कारमवलब्य युद्धं न करिष्यामीति त्वं मन्यसे अध्यवस्यसि एष तेऽध्यवसायो मिथ्यैव अस्वतन्त्रत्वात् तव तदेवाह **यदेति** ।

पूर्वार्धस्यान्वयः स्पष्टः— मन्यसे तर्हि एषः[७], ते[८], व्यवसायः[९], मिथ्या[१०] त्वां[११], प्रकृतिः[१२], नियोक्ष्यति[१३] ॥

त्वं यत्[१], अहङ्कारं[२], आश्रित्य अवलम्ब्य[३], न योत्स्य इति = युद्धं न करिष्यामीति[४], मन्यसे = अध्यवस्यसि[६], तर्हि एषः[७], ते = तव[८], व्यवसायः = अध्यवसायः[९], मिथ्या = वृथा[१०] तव अस्वातन्त्र्यात् अतः त्वां[११], प्रकृतिः = क्षात्रस्वभावः रजोगुणरूपेण परिणता सती[१२], नियोक्ष्यति = युद्धे प्रवर्तयिष्यत्येव । क्षात्रकर्मणि प्रवर्तयतीत्यर्थः ॥ ५९ ॥

**गीता**

## स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
## कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

***वि०वि०***— ईश्वरेच्छया जीवनियोगे निमित्तं स्वभावादिकं दर्शयन्नुक्तं विवृणोति **स्वभावजेति** । स्वभावः संस्कारः तज्जन्येन स्वेन कर्मणा निबद्धो नियन्त्रितः मोहात्कर्म कर्तुं नेच्छसि । अवशोऽपि तत्कर्म करिष्यसीत्येव ॥ ६० ॥

*वा०ल०*— अवशः विष्णुवशः ॥ ६० ॥

*सा०सं०*— ईश्वरेच्छया जीवनियमे निमित्तत्वादिकं दर्शयन्नुक्तं विवृणोति **स्वभावजेनेति**। स्वभावः संस्कारस्तज्जातेन। **स्वेन कर्मणा निबद्धः**। हे **कौन्तेय**! यत् कर्म। मोहाद्बन्धुस्नेहमोहात्। **कर्तुं नेच्छसि**। **तत् कर्म**। **अवशोऽपि** स्वानधीनोऽपि। भगवदिच्छाधीनोऽपि सन् **करिष्यसि** ॥ ६० ॥

*अ०प्र०*— ईश्वरेच्छया जीवनियमे स्वभावादिकं निमित्तं दर्शयन् उक्तं विवृणोति **स्वभावजेनेति**।

हे कौन्तेय ![1], स्वभावजेन[2], स्वेन कर्मणा[3], त्वं निबद्धः[4], यन्मोहात्[5], कर्तुं[6], नेच्छसि[7], तत्[8], अवशोऽपि[9], करिष्यस्येव[10]।

हे कौन्तेय ![1], स्वभावजेन = स्वभावक्षत्रियत्वहेतुः स्वभावः पूर्वजन्मसंस्कारः तज्जन्येन[2], स्वेन कर्मणा = शौर्यादि स्वकीयेन कर्मणा[3], त्वं निबद्धः = नियन्त्रितः कुतः क्षात्रसंस्कारसिद्धप्रकृत्या त्वमुत्पन्नोऽसि[4], यन्मोहात् = यत् युद्धं कर्ममोहादेव जन्ममूलाविचारात् अविवेकात्[5], कर्तुं[6], नेच्छसि[7], तदा = तत् युद्धं[8], अवशोऽपि प्रकृत्या अस्वतन्त्रोऽपि अत्रेश्वरेच्छादीनां अवशोऽपि सन् तत्करिष्यस्येव ॥ ६० ॥

**गीतातात्पर्यनिर्णयः**

**प्रकृतिः ईश्वरेच्छा।**

**"प्रकृतिर्वासनेत्युक्तं तवेच्छानन्त कथ्यते ॥" इत्यादिवचनात्।**

**एषा तु "प्रकृत्यैव च कर्माणि" इत्यादिष्वपि युज्यते। तस्या एव हि मुख्यतो नियोक्तृत्वं स्वभावकर्मादिभिर्बद्ध्वा ॥ ५९-६० ॥**

*प्रका०*— "प्रकृतिस्त्वां नियोक्ष्यति", "स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा", "कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्" इत्यस्यार्थमाह **प्रकृतिरित्यादिना**। बद्ध्वा जीवमिति शेषः। अयमेवार्थः स्पष्टयते "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इत्यनेन। "महामाये त्वविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते" इत्यनेन वचनेनात्र मायाशब्दार्थो ज्ञातव्यः।

*न्या०दी०*— तदुक्ताकरणमशक्यं च तवेत्युच्यते 'यदि' इति । तत्र प्रकृतिपदेन स्वभावाद्युच्यत इत्यन्यथाप्रतीतिनिरासायाह **प्रकृतिरिति** ॥ ईश्वरेच्छायाः प्रकृतिशब्द-वाच्यत्वं कुत इत्यत आह **प्रकृतिरिति** ॥ प्रसङ्गादत्रोक्तार्थमन्यत्राप्यतिदिशति **एषेति** ॥ अत्र प्रकृतिशब्दः परमेश्वरेच्छावाची कुतः ? स्वभावाद्यर्थ एव किं न स्यादित्यत आह **तस्या एवेति** ॥ प्रकृतिस्त्वां नियोक्ष्यतीत्यत्र प्रकृतेः जीवनियोक्तृत्वमुच्यते । तच्चेश्वरेच्छाया एव मुख्यमिति सैवात्रोच्यत इति भावः । ननु स्वभावजेनेत्येतद्विवरणात्मकोत्तरश्लोके प्रकृतिशब्दस्य स्वभावार्थत्वग्रहणात् कथं नेत्यत आह **स्वभावेति** ॥ जीवमिति शेषः । नेयं प्रकृतिरुत्तरत्र स्वभावपदेनोच्यते, किन्त्वस्या जीवनियोगे साधनतया स्वभावाद्युत्तरत्र उच्यत इति भावः ॥

**गीता**

## ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
## भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

*वि०वि०*— नन्विछायाः प्रवर्तकत्त्वे ईश्वरः प्रवर्तकोऽपि न स्यादित्याशङ्कां ईश्वरस्वरूपं दर्शयन्नेव परिहरति **ईश्वर इति** । सर्वेषां भूतानां हृद्देशे ईश्वरो नियन्ता । यन्त्राणि शरीराण्यारूढानि सर्वाणि भूतानि जीवान् मायया स्वरूपभूतया स्वेच्छया भ्रामयन् कर्माणि प्रवर्तयन् तिष्ठति ॥६१॥

*वा०ल०*— तदेव स्पष्टयति **ईश्वर इति** । भ्रामयन् 'भ्रमु अनवस्थाने' इति धातोः इतस्ततः प्रवर्तयन् मायया स्वेच्छया तिष्ठति । अन्यथा यन्त्रारूढप्रतिमादृष्टान्तो विरुद्धः स्यात् ॥ ६१ ॥

*सा०सं०*— नन्वीश्वरेच्छायाः प्रवर्तकत्वे ईश्वरः प्रवर्तको नेति शङ्काम् ईश्वरस्वरूपं दर्शयन् परिहरति **ईश्वर** इति । **ईश्वरः यन्त्रारूढानि** यन्त्राणि शरीराणि तदारूढानि तत्रस्थानि । **भूतानि** प्राणिनः । **मायया** स्वरूपभूतेच्छया । **भ्रामयन्** नानाकर्मसु प्रवर्तयन् । सर्वभूतानां हृद्देशे **तिष्ठति** ॥ ६१ ॥

*अ०प्र०*— ननु इच्छायाः आवर्तकत्वे ईश्वरः प्रवर्तको न स्यात् इत्याशङ्कां ईश्वरस्वरूपं दर्शयन्नेव परिहरति **ईश्वर इति** । अनेन स्वमतं दर्शयति द्वाभ्याम् ।

अथान्वयः— हे अर्जुन ![२], ईश्वरः[२], सर्वभूतानां[३], हृद्देशे[४], तिष्ठति[१], किं कुर्वन् मायया[६], सर्वभूतानि[७], यन्त्रारूढानीव[८], भ्रामयन् तिष्ठतीत्यन्वयः[९] ।

हे अर्जुन ![१], ईश्वरः = अन्तर्यामी[२], सर्वभूतानां = ब्रह्मादिपिपीलिकान्तानां[३], हृद्देशे तिष्ठति = हृदयकर्णिकारे नियामकत्वेन श्रीविष्णुस्तिष्ठतीत्यर्थः[४], किं कुर्वन् मायया = निजशक्त्या स्वरूपभूतया स्वेच्छया[५], सर्वभूतानि[६], यन्त्रारूढानि = यथा दारुयन्त्रमारूढानि कृत्रिमानि भूतानि सूत्रधारी लोके भ्रामयति तद्वत् । यद्वा, यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान्[७], भ्रामयन् = प्रारब्धकर्मानुरूपेण देहव्यवहारे तथा स्वर्गसंसारनरके च प्रवर्तयन् सन् तिष्ठति इत्यर्थः[८], 'आत्मनि तिष्ठन् य आत्मानमन्तरो यमयती'ति श्रुतेः । तथा च श्वेताश्वतराणां मन्त्रः— "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥" इति । "अन्तर्यामी ब्रह्माणं च य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति यमात्मानं वेद यस्यात्मा शरीरं एष आत्मान्तर्याम्यमृत" इत्यादि ॥ ६१ ॥

**गीतातात्पर्यनिर्णयः**

**तदेवाह ईश्वरः सर्वभूतानामिति ।**

***न्या०दी०*— इतोऽप्यत्रेश्वरेच्छैव प्रकृतिशब्दार्थ इत्याह तदेवेति ॥ एतद्विवरणात्मकोत्तरश्लोके भगवदिच्छाया एव सर्वनियोक्तृत्वस्योक्तत्वाच्च अत्र प्रकृतिपदं तदर्थमिति भावः । मायेतीश्वरेच्छैवोच्यते ॥**

**गीतातात्पर्यनिर्णयः**

**"निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः ।<br>उच्यते विष्णुना यद्वत् तद् ब्रह्मेत्यादि कथ्यते ॥"**

**—इति शब्दनिर्णये ।**

**मन्मनाः इत्युपसंहाराच्च ॥ ६१ ॥**

*प्रका०*— सर्वभूतानां हृद्देशे अहम् तिष्ठामीत्यनुपदिश्य ईश्वरस्तिष्ठति इत्युपदेशे कारणमाह निश्चितार्थ इति ।

***न्या०दी०*— ईश्वरः सर्वभूतानामित्यादौ भगवतेश्वरस्य पारोक्ष्येण निर्दिष्टत्वादयमीश्वरो भगवतोऽन्य इति प्रतीतिनिरासायाह निश्चितेति ॥ पारोक्ष्येणोक्तेः अन्यथाऽप्युपपत्तेर्न तन्मात्रेणेश्वरस्य भगवदतिरिक्तत्वं कल्प्यमिति भावः । इतश्च तन्न कल्प्य-**

मित्याह **मदिति** ॥ अत्र "तमेव शरणं गच्छ" इत्यन्यव्यावृत्त्या ईश्वरशरणप्राप्तिमुद्दिश्योपसंहारे "मन्मना भव" इत्यादिना स्वशरणप्राप्त्युपदेशाच्च न भगवदितरोऽयमीश्वरः । अन्यथा व्याहतेरिति भावः ॥

**गीता**

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥**

***वि०वि०***— यस्मादेवमीश्वर एव स्वतन्त्रः, जीवास्तदधीनास्तस्मादहङ्कारं परित्यज्य तमेव सर्वप्रकारेणाश्रयेत्याह **तमेवेति** । "सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् ॥ अखण्डा त्रिविधा पूजा तद्वत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ॥ शरणागतिरेषा स्यात् विष्णौ मोक्षफलप्रदा ।" इत्युक्ता शरणागतिः । तथा तस्येश्वरस्य प्रसादात् । परां शान्तिं बुद्धेर्भगवन्निष्ठाम् । शाश्वतं स्थानम् । "श्रीरेव लोकरूपेण विष्णोस्तिष्ठति सर्वदा । अतो हि वैष्णवा लोका नित्यास्ते चेतना अपि ॥" इत्यादिना नित्यत्त्वेन सिद्धं वैकुण्ठादिस्थानं प्राप्स्यसि । भगवत ईश्वरत्वस्य निश्चितत्वात् 'मामेकं शरणं व्रज' इति प्रत्यभिज्ञानाच्च 'ईश्वरस्तिष्ठति । तमेव शरणं गच्छ । तत्प्रसादात्' इति परोक्षवचनम् । उक्तं च— "निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते विष्णुना यद्वत्तद्ब्रह्मेत्यादि कथ्यते ॥" इति ॥ ६२ ॥

***सा०सं०***— यस्मादेवमीश्वर एव स्वतन्त्रः जीवास्तदधीनास्तस्मादहङ्कारमुत्सृज्य तमेवेश्वरं सर्वभावेन सर्वप्रकारेण **शरणं गच्छ** याहि । मां शरणं याहीति वक्तव्ये ईश्वरस्तिष्ठति तं शरणं याहीति परोक्षनिर्देशः कृष्णस्येश्वरत्वनिश्चयार्थत्वाभिप्रायेण । 'निश्चयार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते' इति स्मृतेः । **तत्प्रसादात्** ईश्वरप्रसादात् **परां शातिं** बुद्धेर्भगवन्निष्ठताम् । **शाश्वतं स्थानं** वैकुण्ठादिलोकम् । प्राप्स्यसीति । वैकुण्ठादिस्थानस्य शाश्वतत्वं च चित्प्रकृत्यात्मकत्वात् । 'श्रीरेव लोकरूपेण विष्णोरस्तिष्ठति' इत्यादेः ॥ ६२ ॥

***अ०प्र०***— यस्मादेवं सर्वे जीवा परमेश्वरतन्त्राः तस्मात् **तमेव इति** ।

हे भारत ![१], सर्वभावेन[२], तमेव शरणं गच्छ[३], तत्प्रसादात्[४], परां[५], शान्तिं प्राप्स्यसि[६], शाश्वतं[७], स्थानं[८], प्राप्स्यसि[९] ।

हे भारत ![१], तस्मादहङ्कारं परित्यज्य सर्वभावेन सर्वप्रकारेण[२], तं यः हृद्देशे तिष्ठति तं ईश्वरमेव शरणं गच्छ तमेवाश्रयेत्यर्थः[३], ततः तत्प्रसादात् = तस्यैव प्रसादात्[४], परां शान्तिं = परमा-

मुपशान्तिं बुद्धेर्भगवन्निष्ठां शाश्वतं नित्यं[७], स्थानं = परमेश्वरलोकं लक्ष्मीं[८], प्राप्स्यसि[९] । तदुक्तम्—
''श्रीरिव लोकरूपेण विष्णोस्तिष्ठति सर्वदा । अतो हि वैष्णवा लोका नित्यास्ते चेतना अपि ॥''
इत्यादिना नित्यं वैकुण्ठादिस्थानं भगवत एव ईश्वरत्वेऽपि ईश्वरस्तिष्ठति तमेव शरणं गच्छ तत्प्रसादादिति परोक्षवचनं स्वस्यैवेश्वरत्वनिश्चयार्थं मामेकं शरणं व्रजेति उत्तरत्र प्रत्यभिज्ञानाच्च । तदुक्तम्–
''निश्चितार्थः सतो ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते विष्णुना यद्वत् तद्ब्रह्मेत्यादि कथ्यते ॥'' इति वचनात् ॥ ६२ ॥

**भाष्यम्**

**परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् ॥ ६१-६२ ॥**

***प०टी०***— 'ईश्वरः सर्वभूतानाम्' इति परोक्षवचनेऽपि न कृष्णस्यानीश्वरत्वमित्याह **परोक्षेति** ॥ ६१-६२ ॥

***प्र०दी०***— 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति', 'तमेव शरणं गच्छ', 'तत्प्रसादात्' इत्यादिरूपात् परोक्षवचनात् कृष्णस्यानीश्वरत्वं प्रतीयते । तन्निराकर्तुमाह **परोक्षेति** । निश्चितार्थत्वाभिप्रायेण । 'अन्यथा सिद्धम्' इति शेषः ॥ ६१-६२ ॥

***भा०र०***— भाष्ये 'भीमवचनवत्' इत्यत्र 'यदि त्वं शत्रुमात्मानं मन्यसे तत्तथाऽस्त्विह । एष ते सदृशं कर्म शत्रौ भीमः करिष्यति ॥' इति द्रोणपर्वणि द्रोणं प्रति भीमवचनवदित्यर्थः । 'भीमवचनवत्' इत्यनन्तरं शेषमाह **निश्चितेति** । 'निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते .....' इति तात्पर्यनिर्णयोदाहृतवचनात् निश्चितार्थाभिप्रायेण परोक्षवचनं अन्यथासिद्धमिति न तत् कृष्णस्यानीश्वरत्वं प्रत्याययितुं शक्यमिति भावः ॥ ६१-६२ ॥

**गीता**

**इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥**

***वि०वि०***— एवं भगवानर्जुनस्य गुह्यादप्यतिगुह्यतमं ज्ञानमाख्याय तदनुवादेनोपदेष्टुर्मम गुरुत्वान्मद्वचनोल्लङ्घनं विचार्यमाणे तव श्रेयस्करं न भवतीत्याक्षिपन्नाह **इतीति** ॥ ६३ ॥

***सा०सं०***— एवं भगवानर्जुनस्यातिगोप्यं तत्त्वमुपदिश्य तदनुवादपूर्वं तूर्ष्णीं स्थितं अर्जुन-माक्षिपति **इतीति** । **गुह्याद्गुह्यतरम्** अतिगोप्यम् । **इति** प्रागुक्तप्रकारेण । **ज्ञानं** ज्ञेयम् । **ते** तुभ्यम् । **मया आख्यातम्** । **एतत्** । **अशेषेण विमृश्य** विचार्य । **यथेच्छसि तथा कुर्वि**त्याक्षेपः ॥६३॥

***अ०प्र०***— एवं भगवताऽर्जुनस्य ज्ञानोपदेशं कृत्वा तदुपसंहरन् तदुपदेष्टुर्मम गुरुत्वात् मम वचनोल्लङ्घनं विचार्यमाणं तव श्रेयस्करं न भवतीत्याक्षिपन्निव इतीत्यनेन सर्वगीतार्थमुपसंहरन्नाह **इतीति** ।

हे भारत !, इति[१], ते[२], मया[३], गुह्याद्गुह्यतरं[४], ज्ञानं[५], आख्यातं[६], एतत् अशेषेण[८], विमृश्य[९], पश्चात् यथेच्छसि तथा कुरु इत्यन्वयः ।

हे भारत !, इति = एतत् यद्गीतानाम्ना विख्यातं सर्ववेदार्थमथितं येनाऽऽत्मा हस्तगतो भवति तदिदं ब्रह्मज्ञानं गोप्याद्गोप्यतरं गोप्यस्य ममापि गुप्तधनमित्यर्थः । एतादृशं ते = तव[२], मया = सर्वज्ञेन परमकारुणिकेन[३], गुह्याद्गुह्यतरं = गुह्यात् गोप्यात् रहस्ययोगादिज्ञानं[५], आख्यातं = मयोपदिष्टं गीताशास्त्रं अत्यन्तं दयया कथितमित्यर्थः[६], एतत् अशेषेण = अशेषतः[८], विमृश्य = विचार्य पर्यालोच्य निर्धार्य[९], पश्चात् यथेच्छसि तथा कुरु = एतस्मिन् पर्यालोचिते सति तव मोहो अशेषतो निवर्त्तिष्यत इति भावः । यथावदेवेच्छसि इति वा अतिगम्भीरं गीताशास्त्रं अशेषतः पर्यालोचयितुमशक्तस्य कृपया भगवान् स्वयमेव ज्ञेयसारं निष्कृष्य 'द्वाविमौ पुरुषावि'त्यत्र प्रदर्शितवान् ॥ ६३ ॥

**गीतातात्पर्यनिर्णयः**

**शाश्वतं स्थानं वैकुण्ठादि ।**

**"श्रीरेव लोकरूपेण विष्णोस्तिष्ठति सर्वदा ।**
**अतो हि वैष्णवा लोका नित्यास्ते चेतना अपि ॥" इत्याग्नेये ।**

**"न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च" इत्याद्युक्तं च ॥ ६२-६३ ॥**

***प्रका०***— "ईश्वरः सर्वभूताना"मित्युपक्रम्य "तमेव शरणं गच्छ सर्वभावेन भारतेति" स्वस्मादन्यमीश्वरं कञ्चित् शरणं गच्छेत्यर्जुनं प्रत्युपदिष्टं श्रीकृष्णेनेति न वाच्यम् । "मन्मना भव मद्भक्तः" इत्यादि वाक्यशेषविरोधात् । "स्थानं प्राप्स्यसि शाश्वत"मित्युक्तस्थानस्वरूपं निर्दिशति

**शाश्वतं स्थानं वैकुण्ठादि । श्रीरिति ।** "न वर्तते यत्र रजस्तम" इत्यनेन अप्राकृतत्वेनोक्तत्वात् युक्तं शाश्वतत्वं वैकुण्ठादेरित्यर्थः ।

***न्या०दी०*— "स्थानं प्राप्स्यसि शाश्वतं" इत्युक्तं शाश्वतस्थानं किमित्यत आह शाश्वतमिति ॥ सर्वस्थानानां प्रलये विनाशात् कथं वैकुण्ठादेः शाश्वतत्वमित्यत आह श्रीरेवेति ॥**

**गीता**

## सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
## इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

***वि०वि०*—** भगवान् भक्तानुकम्पया 'द्वाविमौ पुरुषौ' इत्यत्र तत्वसारं निष्कृष्य दर्शितवान् । इदानीं साधनसारं निष्कृष्य सुखग्रहणार्थं दर्शयन्नाह **सर्वेति** । त्वं मे दृढमतीव इष्ट इति ततस्ते हितं वक्ष्यामि । तत्सर्वं गुह्यतमं परमं वचः शृणु मन्मना इत्यादेः पूर्वमेवोक्तत्वाद्भूय इति ॥ ६४ ॥

***सा०सं०*—** तत्त्वसारमुपसंहृत्य साधनसारकथनमुपसंहर्तुं प्रतिजानीते **सर्वेति** । चतुर्दशादौ साधनसारस्योक्तत्वात् **भूय** इत्युक्तम् । पुनरित्यर्थः । सर्वसाधनेषु गोप्यतमं **मे परमं वचः शृणु मे इष्टोऽसि । दृढमिति** निश्चयः । **ततः । ते हितं वक्ष्यामि** । उपसंहाररूपेण कथयिष्यामीत्यर्थः ॥ ६४ ॥

***अ०प्र०*—** इदानीं साधनसारं निष्कृष्य सुखग्रहणार्थं दर्शयन्नाह **सर्वेति** त्रिभिः । तत्रादौ **सर्वेति** ।

हे भारत ! सर्वगुह्यतमं[१], परमं[२], मे[३], वचः[४], भूयः[५], शृणु[६], कुतः ? दृढः[७], मे[८], इष्टोऽसीति[१०] ततः[१२], ते हितं[१३], वक्ष्यामि[१४] ।

हे भारत !, सर्वगुह्यतमं = सर्वेभ्योऽपि गुह्येभ्योऽपि गुह्यतमं सर्वगुह्यानां श्रेष्ठं[१], परमं = सर्वगुह्यतमेभ्योऽपि उत्तमं[२], मे = मम[३], वचः[४], भूयः = तत्रतत्रोक्तमपि पुनरपि वक्ष्यमाणं[५], शृणु[६], कुतः ? पुनःपुनः कथने हेतुमाह दृढमतिः = मयि दृढा मतिर्यस्य तव तथा । यद्वा, दृढं अति अत्यन्तं त्वं[७], मे = मम[८], इष्टोऽसीति = प्रियोऽसीति मत्वा[१०] ततः = एव हेतोः[११], ते = तव[१२], हितं[१३], वक्ष्यामि[१४], यद्वा, त्वं मम इष्टोऽसि मया वक्ष्यमाणं च दृढं सर्वप्रमाणोपेतं इति निश्चित्य ततस्ते वक्ष्यामीत्यर्थः । दृढमतिरिति केचित् पठन्ति ॥ ६४ ॥

गीता

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

*वि०वि०*— तदेव हितं वचो वक्ति **मन्मना इति** । मन्मनस्त्वादिसाधनेन मत्प्राप्तिरित्येतत्सत्यं नात्र संशयः । यतस्त्वं प्रियोऽसि अतः सत्यं प्रतिजाने ॥ ६५ ॥

*सा०सं०*— तदाह **मन्मना इति** । यतो मे **प्रियोऽसि** । अतो मन्मनस्त्वादिसाधनसारचतुष्टयेन **मामेवैष्यसि** प्राप्स्यसि । **ते सत्यं प्रतिजाने** । अवश्यं मत्प्राप्तिर्भवतीति प्रतिज्ञां करोमि। नात्र सन्देहः कार्य इति भावः ॥ ६५ ॥

*अ०प्र०*— मन्मना भव[१], मद्याजी भव[२], मद्भक्तो भव[३], मामेव[४], नमस्कुरु[५], एवं मन्मन आदिमत्वेन वर्तमानः त्वं मत्प्रसादात् लब्धज्ञानेन मामेवैष्यसि[७], सत्यं[८], त्वं मे प्रियोऽसि[९], ते[१०] प्रतिजाने[११], स्वसत्यमेव ज्ञापयामीत्यर्थः ।

मन्मना भव = मच्चित्तो भव, यद्वा, मयि मनो यस्य स त्वं[१], मद्भक्तो भव = मनोबुद्ध्यादीनां अन्तःक्रियाणां बाह्येन्द्रियव्यापाराणां च सर्वव्यापकं सर्वान्तर्यामिणं मां विषयीकरणं भक्तिः । ममैव भक्तो भव । सर्वाः क्रियाः मदर्थं कुर्विति भावः[२], मद्याजी भव = मद्यजनशीलो भव । यद्वा, स्वीयेषु परकीयेषु च मदर्थं यद्ददासि स एव यज्ञः । तेन यज्ञेन मद्यजनशीलो भव[३], मामेव[४], नमस्कुरु वस्तुतोऽहं विश्वरूपः परमात्मा, त्वं जीवः मदधीनः एवं दास्यदासभावत्वेन त्वया सेव्य इति मत्त्वा सर्वत्र मां अन्तर्यामिणं नमस्कुरु । एवं मन्मन आदिमत्वेन वर्तमानस्त्वं मत्प्रसादात् लब्धज्ञानः सन् अनेन साधनेन भूतद्वेषोऽपगतो भवति । ततः मामेव एष्यसि = मामेवाप्नोषि । यद्वा, ममाश्रयमात्यन्तिकं प्राप्स्यसि[७], तदुक्तं भागवते— ""नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतो चिरात् । स्पर्धाऽऽसूयातिरस्काराः साहङ्कारा वियन्ति हि ॥ विसर्जनस्य यमान् स्वान् दृशं व्रीडा च दैहिकीम् । प्रणमेद्दण्डवद्भूमौ अश्वचाण्डालगोखरः ॥ यावत्सर्वेषु भूतेषु मद्भावो नोपजायते । तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ सर्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषया । परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥" इति वचनात् मामेव प्राप्नोषि । अत्र संशयं मा कार्षीः[७], त्वं मे प्रियोऽसि अतः[८], सत्यं = सत्यं यथा भवत्येवं शपथं[९], ते = तुभ्यमहं[१०] प्रतिजाने = प्रतिज्ञां करोमि स्वसत्यमेव ज्ञापयामीत्यर्थः[११], अस्मदुक्तं भवति न भवतीति संशयो न कर्तव्यः । अन्यथा चेत् स्वशपथोऽस्तीति भावः ॥ ६५ ॥

**गीतातात्पर्यनिर्णयः**

तत्त्वसारकथनं "द्वाविमौ पुरुषौ" इत्यत्रैवोपसंहृतम् । तत्त्वप्रशंसार्थमेव तद्बुद्धिप्रशंसा कृता । अत्र तु साधनसारोपसंहारः **सर्वगुह्यतममिति** । "मन्मनाः" इत्यादेः पूर्वमेवोक्तत्वात् **भूय इति** । अर्थतस्तु अत्रापि विष्णवाधिक्यमेव उक्तं भवति ॥ ६४-६५ ॥

*प्रका०*— "द्वाविमौ पुरुषा"वित्युपक्रम्य "यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत । इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारते"त्युक्तं गुह्यतमं स्पष्टयित्वा "सर्वगुह्यतमं भूयः शृणु मे परमं वचः । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजे"त्युक्तं सर्वगुह्यतमं स्पष्टयति **तत्त्वसार इत्यादिना** ।

*न्या०दी०*— "इदं तु ते गुह्यतमं" इति प्रतिज्ञाय यज्ज्ञानादिपदोदितं गुह्यतमं तत्त्वमुक्तं तदेवात्र "सर्वगुह्यतमं" इति पुनरुच्यत इत्यन्यथाप्रतीतिनिरासायाह **तत्त्वेति** ॥ नात्र "इदं तु ते गुह्यतमं" इत्यादिनोक्तं गुह्यतमं ज्ञेयमुच्यते । तत्कथनस्य द्वाविमावित्यत्रैव उपसंहृतत्वादित्यर्थः । "इति गुह्यतमं" इति वाक्यशेषादुपसंहृतत्वं ज्ञातव्यम् । तर्हि किमत्र गुह्यतममुच्यत इत्यत आह **अत्रेति** ॥ ननु "एतद्बुद्ध्वा बुद्धिमान् स्यात्" इति साधनसारस्योपसंहृतत्वात् कथमत्र तदुक्तिरित्यत उक्तम् **तत्त्वेति** ॥ न तत्र साधन-सारस्योपसंहाररूपेण भगवत्सर्वोत्तमत्वज्ञानप्रशंसा कृता । किन्तु तज्ज्ञानमात्रेण मोक्ष-सद्भावात् किमस्य महिमा वर्णनीय इति भगवत्प्रशंसार्थमेवेति भावः । तत्रोक्तगुह्यतम-स्यात्रानुक्तत्वे भूय इति व्यर्थमित्यत आह **मन्मना इति** ॥ साधनसारस्य प्रागुक्तत्वात् तदपेक्षया भूय इत्युपपद्यत इति भावः । तर्हि पुनरुक्तिः स्यादित्यतः साधनसारोपसंहार इत्युक्तम् । ननु "मन्मना भव" इत्यादिना अन्यव्यावृत्तिपूर्वकं स्वभजनस्यात्रोपदिष्टत्वेन भगवत्सर्वोत्तमत्वमेवोक्तमिति कथं तत्त्वसारकथनं नेत्यत आह **अर्थत इति** ॥ सत्यमत्र विष्णवाधिक्यमुक्तमिति । तथाप्यन्यभजननिरासपूर्वकं स्वभजनोपदेशान्यथानुपपत्त्यैव उक्तम् । न तु मुखतः । अतो नात्र तत्त्वसारकथनमिति भावः ॥

*भा०दी०*— **प्रतिज्ञायेति** । नवमेऽध्याये । द्वाविमावित्यत्रोपसंहारो न दृश्यत इत्यत आह **इति वाक्यशेषादिति** ॥ **प्रागुक्तत्वादिति** । चतुर्दशाध्यायादौ इत्यर्थः ॥ **साधनोपसंहार इति** । बुद्ध्यारोहाय सङ्क्षिप्य कीर्तनं व्यर्थमित्यर्थः ॥

गीता

## सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
## अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

*वि०वि०*— किं फलापेक्षया त्वन्मनस्त्वादिकं नेत्याह **सर्वधर्मानिति** । तत्फलमुपलक्ष्यते । सर्वकर्मफलानि परित्यज्येत्यर्थः । न तु सर्वकर्मत्यागः । युद्धविधानात् । यस्तु कर्मफलत्यागी इत्युक्तत्वाच्च । मन्मना इत्यादेर्व्याख्यानं मामेकं शरणं व्रजेत्यादि मदाश्रयणे । अहं त्वां सर्वेभ्यः पापेभ्यः अनादिजन्मकृतेभ्यो मोक्षयिष्यामि । एतादृशस्य भगवत्प्रसादात्प्रीतिः स्यात्ते पापप्रसक्त्यभावात् । अतः संसारभयात् मा शोकं कार्षीरित्यर्थः । अथवा, किमन्यमनस्त्वादिना त्वन्मनस्त्वादिकं कार्यमिति नेत्याह **सर्वधर्मानिति** । अवैष्णवधर्मान्परित्यज्येत्यर्थः । शेषं पूर्ववत् ॥६६॥

*वा०ल०*— 'सर्वधर्मान् परित्यज्य' इत्यत्र, सर्वधर्मान् कृत्वा फलाशां परित्यज्येत्यर्थः । अन्यथा, नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात् तस्य परित्यागस्तामसः परिकीर्तितः इति स्ववचनविरोधः ॥ ६६ ॥

*सा०सं०*— कथं मन्मनस्त्वादिकमित्यत उक्तम् **सर्वधर्मानिति** । अन्यसर्वधर्मान् परित्यज्य मन्मना मद्भक्तो मद्याजीत्येवम् । पूर्वशेषोऽयम् । 'मन्मना भव' इत्यादिना किमुक्तं भवतीत्यतस्तस्योपसंहाररूपेण व्याख्या क्रियते **मामेकं शरणं व्रजेति** । मन्मनस्त्वादेरेव शरणागतिरूपत्वात् । उक्तं हि— "सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् । अखण्डा त्रिविधा पूजा तद्वत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः । शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदा ॥" (महाविष्णुपुराणम्) इति । यद्वा, 'सर्वधर्मान् परित्यज्य' इति सर्वधर्मफलानि परित्यज्येत्यर्थः । अन्यथा युद्धविधिविरोधः स्यात् । यद्वा, अवैष्णवसर्वधर्मान् परित्यज्येत्यर्थः । अनादिजन्मकृतप्रतिबन्धकसत्वात् कथं मामेवैष्यसीत्युक्तिरित्यत आह **अहं त्वा** इति । **त्वा** त्वाम् । अनादिजन्मकृतपापेभ्यः । **मोक्षयिष्यामि** विनिर्मुक्तं करिष्यामि । **मा शुचः** संसारभयाच्छोकं मा कार्षीः ॥ ६६ ॥

*अ०प्र०*— सर्वधर्मान् परित्यज्य = सर्वे च ते धर्माश्च सर्वधर्माः । तान् तथा धर्मपदेन तत्फलं लक्ष्यते । सर्वधर्मफलानि परित्यज्येत्यर्थः । यद्वा, सर्वान् अवैष्णवधर्मान्परित्यज्येति, न तु सर्वधर्मत्यागः । युद्धादिवैष्णवधर्मस्य विधानात् । यस्तु कर्मफलत्यागी स त्यागीत्युक्तत्वात् च ।

यद्वा, भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्यं त्यक्त्वा इत्युक्तं[२], मामेकं शरणं व्रज = मदेकशरणो भव । मन्मना भवेत्यादेर्व्याख्यानं मामेकं शरणं व्रजेत्यादि 'विष्णुस्सर्वोत्तमः एकः, अहं जीवस्तदधीनः' इति दृढचित्तेन मामेकं परमात्मानं शरणमाश्रयं व्रज = गच्छेति भावः । तदुक्तम्— "सर्वोत्तमत्वं विज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् ॥ अखण्डा त्रिविधा पूजा तद्वत्यैव स्वभावतः । रक्षतीत्येव विश्वासः तदीयोऽहमिति स्मृतिः ॥ शरणागतिरेषा स्याद्विष्णौ मोक्षे फलप्रदा ॥" इति[४], अहं = मदाश्रयेण चाहं[५], त्वां = यतस्त्वां मदेकशरणं[६], सर्वपापेभ्यः = अनादिकालतोऽनन्तजन्मकृतेभ्यो सर्वेभ्यः पापेभ्यः[७], मोक्षयिष्यामि = मोचयिष्यामि[८], मा शुचः = एवंविधवर्तमानस्य ते मत्प्रसादात् प्राप्तप्रसक्त्यभावात् कर्मत्यागनिमित्तं पापं स्यादिति सम्भारभयात् मा शोकं कार्षीः । यद्वा, कथं मुक्तो भवामीति चिन्तां मा कार्षीः । सर्वजीवान्त-र्यामित्वेन भगवद्रूपमेकमेवेति ज्ञात्वा शरणं व्रजेति तात्पर्यार्थः ॥ ६६ ॥

**भाष्यम्**

**धर्मत्यागः = फलत्यागः । कथमन्यथा युद्धविधिः ? "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" इति चोक्तम् ॥ ६६ ॥**

*प०टी०*— 'सर्वधर्मान्' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे **धर्मेति** । धर्मत्याग एवार्थः किं न स्यात् ? इत्यत आह **कथमिति** । धर्मत्यागपदेन कथं फलत्याग उच्यते ? इत्यत आह **यस्त्विति** ॥ ६६ ॥

नमो जलदनीलाय वल्लवीवल्लभाय ते ।
रमाकरसमाराध्यचरणाय मुरद्विषे ॥ १ ॥

श्रीमन्मध्वमहाचार्यपदपद्मैकसद्मनाम् ।
अणूनां महतां चापि भवतात् करुणा मयि ॥ २ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां अष्टादशोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

*प्र०दी०*— 'सर्वधर्मान् परित्यज्य' इति वर्णाश्रमविहितानामपि **सर्वधर्माणां** परित्यागो विधी-यते इत्यन्यथाप्रतीतिनिरासार्थमाह **धर्मेति** । प्रतीत एवार्थः किं न स्यादित्यत आह **कथमिति** ।

'अस्मिन् शास्त्रे क्रियते' इति शेषः । अशाब्दोऽयमर्थ इति चेन्न, धर्मशब्दस्य स्वकार्यफलोपलक्षणत्वात् । एवमेव भगवता व्याख्यातत्वाच्च इत्याह **यस्त्विति** ॥ ६६ ॥

**भाष्यम्**

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभो ॥**

**पूर्णादोषमहाविष्णोर्गीतामाश्रित्य लेशतः ।**
**निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं***
***श्रीमद्भगवद्गीताभाष्यं समाप्तम् ॥***

***प्र०दी०—*** इदानीं समापितभाष्यो भगवानाचार्यो भाष्यनिर्माणस्य फलं भगवत्प्रीतिमेव आशास्ते **पूर्णेति** । एतत् 'गीताम्' इत्यनेन 'निरूपणम्' इत्यनेन च सम्बध्यते । 'तेन' इति श्रवणात् 'यत्' इति लभ्यते ।

***भा०दी०—* समापितभाष्येति** । बहुव्रीहिः । स्वस्य चेत्यर्थः । **एतदिति** । पूर्णादोषमहाविष्णोः इत्येतदित्यर्थः ।

***प्र०दी०—***

करतलकलितामलकमिव प्रभुणा येनेदमवगतं विश्वम् ।
स जयति जनकसुतायाः कान्तः श्रीरघुनन्दनो देवः ॥ १ ॥

नमामि व्यासदासस्य पूर्णबुद्धेः पदाम्बुजे ।
नतामरशिरोरत्नराजिनीराजिते सदा ॥ २ ॥

अक्षोभ्यतीर्थगुरुणा शुकवच्छिक्षितस्य मे ।
वचोभिरमृतप्रायैः प्रीयन्तां सततं बुधाः ॥ ३ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां अष्टादशोऽध्यायः ॥*

***भा०दी०*— जयति** । सर्वोत्कृष्टो वर्तते । **ननेति** । नमनं कुर्वताम् अमराणां देवानां शिरोरत्नराजैः **नीराजिते** आरार्तितेत्यर्थः । **बुधाः** विद्वांसः । अमृतैर्विबुधाः देवाः यथा प्रीयन्ते तथा **मे वचोभिः** अमृतकल्पैः मूलार्थं स्पष्टं प्रकाशयद्भिः वचोभिः विद्वांसः प्रीयन्ताम् इत्यर्थः ॥

कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥ १ ॥

श्रीमद्गीताभाष्यटीकाभावदीपः कृतो मया ।
राघवेन्द्रेण यतिना प्रीत्यै माधवमध्वयोः ॥ २ ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां श्रीराघवेन्द्रयतिकृतायां भावदीपे अष्टादशोऽध्यायः ॥*

***भा०र०*—** 'फलत्यागः' इति भाष्यपदस्य 'धर्मफलाभिसन्धित्यागः' इत्यर्थः । **उपलक्षणत्वादिति** ॥ अन्यथा 'गङ्गायां घोषः' इत्यादौ तीरादिबोधः शाब्दो न स्यादिति भावः । एवमेव धर्मत्यागो नाम धर्मफलत्याग एव, इत्येवं शास्त्रे शास्त्रीयप्रसिद्धिरेव ग्राह्या, अन्तरङ्गत्वादिति भावः ॥ ६६ ॥

**भगवत्प्रीतिमेव** न त्वन्यद् यत्किञ्चिद् एकान्तभक्तिशिखामणित्वादिति भावः । **एतत्** 'पूर्णादोषमहाविष्णोः' इति विशेषणम् । तथा च पूर्णः = सर्वैरानन्दादिगुणैः परिपूर्णः, न दोषाः = चिन्तासन्तापादयो यस्य सोऽदोषः । अत एव महान् यो विष्णुः तस्य भगवतो गीतामाश्रित्य = व्याख्यायत्वेनोपादाय तस्याः बह्वर्थत्वात् मन्दान् प्रति लेशेनैव प्रतिपाद्यस्य पूर्णादोषमहाविष्णोः स्वरूपस्य यत् निरूपणं कृतं तेन 'विभुर्मे प्रीयताम्' इत्यर्थो योग्यतया सम्पद्यत इति भावः ।

समापितगीताभाष्यव्याख्यानो जयतीर्थाचार्यवर्यः ग्रन्थान्तेऽपि शिष्यान् ग्राहयितुमपि मङ्गलमाचरति **करतलकलितेति** । करतलमिलितामलकफलमिवेत्यर्थः । 'प्रभुणा' इति वदता भाष्यगतविभुशब्दो व्याख्यातः ॥ १ ॥

पूर्णबुद्धेः = सर्वज्ञाचार्यस्य नताः, नमेः कर्तरि क्तः, नतवन्तः, ते चामराः, तेषां शिरोरत्नानां राज्या = पङ्क्त्या नीराजिते = आरार्तिते ॥ २ ॥

अक्षोभ्यतीर्थश्चासौ गुरुश्च तेन शुकवत् = शुकस्येव बुधाः = सन्तः ॥ ३ ॥

*गीताक्षरार्थस्तु—*

सात्त्विकज्ञानादिरूपमोक्षसाधनं अनुष्ठानाय प्रपञ्चयितुं पुनः प्रतिज्ञापूर्वं सत्त्वादिगुणनिमित्ता ज्ञानभेदा उच्यन्ते **ज्ञानमित्यादिना** । **गुणभेदतः** सत्त्वादिगुणभेदेन **ज्ञानं कर्म च कर्ता च त्रिधा गुणसङ्ख्याने** गुणाः सङ्ख्यायन्ते = गण्यन्तेऽस्मिन्निति गुणसङ्ख्यानं = गुणगणनप्रकरणं = परमसाङ्ख्यशास्त्रं अस्मिन् प्रोच्यते । **तान्यपि** तानि च **यथावत्** तत्त्वं **शृणु** श्रुत्वा तत्र निष्ठां कुरु ॥ ॥ १९ ॥

एवं तत्र परिज्ञातं ज्ञानत्रैविध्यमुच्यते **सर्वभूतेष्वित्यादिना** । **विभक्तेषु** परस्परम्, परमेश्वराच्च भिन्नेषु **सर्वभूतेषु** चेतनाचेतनेषु **अविभक्तं** स्वगतभेदवर्जितम्, तेषां व्ययेऽपि **अव्ययम्** । **एकं भावं** सर्वोत्तमं पदार्थं = विष्णुं **येन** ज्ञानेन **ईक्षते** विषयीकरोति **तज्ज्ञानं सात्त्विकं विद्धि** इति विष्णुतत्त्वविनिर्णयटीका ॥ २० ॥

**यत्तु सर्वेषु भूतेषु** जीवेषु **पृथक्त्वेन** भिन्नत्वेन **ज्ञानं** यच्च **नानाभावान्** नानाप्रकारान् पदार्थान्, जडानिति यावत् **पृथग्विधान्** प्रत्येकं भिन्नस्वरूपान् **वेत्ति** विषयीकरोति **तज्ज्ञानं राजसं विद्धि** । विष्णोरन्यस्य प्रपञ्चस्य याथात्म्यं अवगाहमानं सर्वभूतेषु विद्यमानं विष्णुमेकत्वेन अनवगाहमानं भगवत्स्वरूपं सन्दिग्धतयाऽवगाहमानं च ज्ञानं राजसमिति यावत् । 'सर्वभूतेषु पृथक्त्वेन यज्ज्ञानम्' इत्यस्य व्याख्या 'नानाभावान्' इत्यादि तु उत्तरप्रस्थाने ॥ २१ ॥

**यत्त्विति** । अत्र कार्यशब्दो जीवपरः । स्वरूपतः शुद्धस्य जीवस्य संसारित्वेन, संसारिणो मुक्तत्वेन, मुक्तियोग्यत्वेन नित्यसंसारित्वेन तमोयोग्यत्वेन चेत्यादिनानाप्रकारेण कर्तुं योग्यत्वात् । कृत्स्नशब्दश्चाकार्यत्वादिनानाप्रकारगुणपूर्णब्रह्मवचनः, अखिलजगत्परश्च । **एतस्मिन् कार्ये** जीवे **कृत्स्नवत्** ब्रह्मणीव **सक्तम्**, ब्रह्म यथा स्वात्मानं 'ब्रह्म' इति विषयीकरोति तथा विषयीकुर्यात्, जीवे ब्रह्माभेदमवगाहमानमिति यावत् । तथा एकस्मिन् **कार्ये** जीवे **कृत्स्नवत्** अखिले जगतीव **सक्तं** जीवं जगदात्मकत्वेन विषयीकुर्वदिति यावत् । तथा एकस्मिन् **कार्ये** जीवे **कृत्स्नवत्** अखिले जगतीव **सक्तं** एकजीवकल्पितं अखिलं जगत् इति विषयीकुर्वदिति यावत् । **यत्** ज्ञानम् इति त्रेधाऽर्थः । **अहैतुकं** स्वगोचरेऽर्थे वेदाद्यनुकूलयुक्तिसहितम् **अतत्त्वार्थवत्** न तत्त्वम् = अनारोपितं रूपं यस्य स अतत्त्वः, स चासौ अर्थश्च, तद्वत् । यथा स्थिताकराद् विपरीताकारावगाहि सदसद्वैलक्षण्याद्यविद्यमानाकारकल्पनायुक्तमिति यावत् । **अल्पं** अधिष्ठानादिमात्रविषयकाल्पसम्यग्ज्ञानयुक्तं **तद्** ज्ञानं **तामसम्** । अत्र विशेष उत्तरप्रस्थानतोऽवगन्तव्यः ॥ २२ ॥

गुणभेदेन कर्मत्रैविध्यमुच्यते **नियतमित्यादिना** । विष्णोः सर्वोत्तमत्त्वादिज्ञानपूर्वकं तद्भक्त्या तदर्पणबुद्ध्या क्रियमाणं स्ववर्णाश्रमोचितं कर्म **नियतं** अत्र गृह्यते । **सङ्गरहितं** कर्तृत्वासक्तिवर्जितम् । **अरागद्वेषतः कृतं** पुत्रकीर्त्यादिरागेण शत्रुद्वेषेण वा यत्कृतं न भवति तत्तथा, फलं प्राप्तुमिच्छतीति फलप्रेप्सुः, न फलप्रेप्सुः, तेन = फलाभिसन्धिहीनेन **यत्** कृतं **कर्म** तत् **सात्त्विकमुच्यते** ॥ २३ ॥

**यत्तु कामेति** । तुशब्दः पूर्वस्माद् विशेषद्योतनार्थः । **यत्तु कामेप्सुना** काम्यत इति कामः = फलम्, तत् प्राप्तुमिच्छता **साहङ्कारेण** कर्तृत्वाभिमानवता, वाशब्दः चशब्दार्थः । **क्रियते** यच्च **पुनर्बहुलायासं** बहुवित्तव्ययादिनिबन्धनमानसादिक्लेशयुक्तं **कर्म तद्राजसमुदाहृतम्** ॥ २४ ॥

**अनुबन्धमिति** । अनुबध्यत इति अनुबन्धः = तत् पश्चाद्भाविशुभाशुभं **क्षयं** वित्तस्य, **हिंसां** परपीडां **पौरुषं** पुरुषसामर्थ्यं च **अनवेक्ष्य** अपर्यालोच्य **मोहाद्** 'अहमेव कर्ता' इति मिथ्याज्ञानाद् **यत् कर्मारभ्यते तत्तामसमुच्यते** ॥ २५ ॥

अत्र गुणभेदकृतकर्तृत्रैविध्यमुच्यते **मुक्तसङ्ग इत्यादिभिस्त्रिभिः** । **मुक्तसङ्गः** परित्यक्तः फल-स्नेहो येन स तथा । **अनहंवादी** सर्वस्य स्वगतकर्तृत्वादेः भगवदधीनत्वनिश्चयादेव 'अहं कर्ता' इति वेदितुं शीलं यस्य नास्ति स तथोच्यते । **धृतिः** = कर्मण्यवर्जनीयदुःखसहनम्, **उत्साहः** = उन्नाहः, ताभ्यां **समन्वितः सिद्ध्यसिद्ध्योः** कर्मफलस्य सिद्धौ असिद्धौ च **निर्विकारः** हर्षविषादलक्षणविकाररहितो यः **कर्ता** कर्मणः स **सात्त्विक उच्यते** ॥ २६ ॥

**रागीति** । **रागी** विषयाभिलाषवान् कीर्त्यादिकामो वा **कर्मफलप्रेप्सुः** उद्दिष्टकर्मफलप्राप्तीच्छावान् **लुब्धः** कमपिक्षितद्रव्यव्यये लोभयुक्तः, परद्रव्येषु सञ्जाततृष्णः, तीर्थादौ च द्रव्यापरित्यागीति **आहुः** । **हिंसात्मकः** परपीडास्वभावः **अशुचिः** बाह्याभ्यन्तरशौचरहितः **हर्षशोकान्वितः** इष्टप्राप्तौ हर्षः, अनिष्टप्राप्तौ इष्टवियोगे च शोकः, ताभ्यां समन्वितो यः **कर्ता** कर्मणः स **राजसः परिकीर्तितः** अभियुक्तैः ॥ २७ ॥

**अयुक्त इति** । **अयुक्तो** भगवदर्पणादियोगरहितः, 'भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतः ...' उच्यते । **स्तब्धो** नाम असम्भावनया क्वाप्यनम्रः **शठो** गूढद्वेषी **नैकृतिको** नीचकर्मा **अलसः** प्राप्तकाले कर्मण्युदासीनः **विषादी** अवसादनशीलः, सर्वव्यापारोपरमहेतुमनोदौर्बल्यशील इति *स्वामिनः* उपद्रवहेतुत्वात् सूचनायोग्यं चिरातीतकृतं परकृतं दोषं यः सूचयति स **दीर्घसूत्री** एतादृशश्च **कर्ता तामस उच्यते** प्राज्ञैः ॥ २८ ॥

इदानीं बुद्धेर्धृतेश्च गुणकृतो भेदः श्रावयितुं प्रतिज्ञायते **बुद्धेरिति** । **धनञ्जय** अर्जुनो हि दिग्विजयकाले प्रभूतं धनं जितवान्, तेनासौ धनञ्जयः, तत्सम्बुद्धिः, **बुद्धेः धृतेश्च गुणतः** सत्त्वादिगुणतः प्राप्तं त्रिविधं भेदं **अशेषेण** निरवशेषतः यथावदिति यावत् **पृथक्त्वेन** विभागेन मयैव **प्रोच्यमानं शृणु** इति ॥ २९ ॥

प्रतिज्ञातमुच्यते **प्रवृत्तिमित्यादिभिस्त्रिभिः** । **प्रवृत्तिं** संसारप्रवृत्तिहेतुभूतं धर्मं **निवृत्तिं** तन्निवृत्तिहेतुभूतं भागवतधर्मं **कार्याकार्ये** कर्तव्याकर्तव्ये **भयाभये** कार्याकार्यनिबन्धनौ अर्थानर्थौ **बन्धं मोक्षं** तदतिप्रकारं **च या बुद्धिः वेत्ति** जानाति, अवान्तरक्रियास्वातन्त्र्यविवक्षया 'वेत्ति' इत्युक्तिः विषयीकरोतीत्यर्थः, **सा सात्त्विकी** ॥ ३० ॥

**ययेति** । पुमान् **यया** बुद्ध्या **धर्मं अधर्मं कार्यं च अकार्यं च** कर्तव्यं चाकर्तव्यं च **अयथावत् प्रतिजानाति** इत्यस्य यथार्थज्ञानजनननियमाभावे तात्पर्यम् । प्रतीतार्थ एव किं न स्यात् इति चेन्न । तथात्वे राजस्या बुद्धेः तामसबुद्धितो भेदाभावप्रसङ्गाद् इत्याकरे स्फुटम् ॥३१॥

**अधर्ममिति** । **या** बुद्धिः **अधर्मं** वेदप्रतिषिद्धं **धर्मं** वेदविहितं **इति** मन्यते इत्यत्र धर्मशब्दो नपुंसकलिङ्गः 'स्याद्धर्ममस्त्रियाम्' इत्यभिधानात् । तथा च ततः 'इति'शब्दो नानुचितः । किञ्च **तमसाऽऽवृता** सती **सर्वार्थान् विपरीतान्** स्वाकारविपरीताकारान् **मन्यते सा बुद्धिः तामसी** । अत्र बुद्धिः अन्तःकरणम्, पूर्वोक्तज्ञानं तु तद्वृत्तिः । तेन मन आदीनां इन्द्रियाणामपि त्रैविध्यमुक्तप्रायमिति मन्तव्यमिति **विवृतिकृतः** ॥ ३२ ॥

इदानीं धृतेः त्रैविध्यमुच्यते **धृत्येत्यादिभिः त्रिभिः** । **योगेन** वैष्णवभक्तियोगेन युक्तया **अव्यभिचारिण्या यया धृत्या** मनःप्राणेन्द्रियाणां क्रियाः उच्छास्त्रमार्गप्रवृत्तेः **धारयते** निवारयति पुमान् सा **धृतिः सात्त्विकी** । **केचित्तु** मनः = अन्तरिन्द्रियम्, प्राणान् = पञ्चप्राणान्, इन्द्रियाणि = दशेन्द्रियाणि, क्रियाः = कर्माणि च, धारयते = धरतीति व्याख्यातवन्तः ॥ ३३ ॥

**यया त्विति** । **फलाकाङ्क्षी** स्वर्गादिफलाभिलाषी पुरुषः **प्रसङ्गेन** कर्मणि मदीयतास्नेहलक्षणेन प्रकृष्टेन सङ्गेन **यया धृत्या धर्मकामार्थान् धारयते** मनसि नित्यमेव कर्तव्यरूपान् अवधारयति तस्य **सा धृतिः राजसी** ॥ ३४ ॥

**ययेति** । **दुर्मेधाः** दुष्टविवेकपरिभूता मेधा = प्रज्ञा यस्य स तथा । 'नित्यमसिच् प्रजामेधयोः' इत्यसुच्प्रत्ययः, पुमान् **यया स्वप्नं** निद्रां **भयं** त्रासं **शोकं** दुःखं विषादं सर्वव्यापारोपरमहेतुं

मनोदौर्बल्यं **मदं** विषयसेवां च, उपलक्षणमिदं स्वप्नादिग्रहणं भगवद्द्वेषादिसर्वनिषिद्धस्य, **न विमुञ्चति** प्रत्युताचरति, तस्य **सा** धृतिः **तामसी** ॥ ३५ ॥

प्रतिज्ञापूर्वकं गुणतः सुखस्य त्रैविध्यमुच्यते **सुखस्त्वेत्यादिना** । हे **भरतर्षभ मे** मम सकाशात् **शृणु** । **यत्र** यस्मिन् **अभ्यासात्** चिरकाले परिचयात् **रमते** निरतिशयां रतिं प्रतिपद्यते, यस्मिन् रममाणश्च दुःखस्य अन्तं = नाशं **निगच्छति** नितरां गच्छति ॥ ३६ ॥

तदेव विशिष्यते **यदिति** । **यत्** प्रसिद्धं सुखं **अग्रे** पूर्वं **विषमिव** बह्वायासपूर्वकत्वात्, **परिणामे** विपाके **अमृतोपमं** अमृतसदृशं **आत्मबुद्धिप्रसादजं** आत्मनः = विष्णोः बुद्धेः अन्तःकरणस्य च प्रसादात् = अनुग्रहात्, प्रायो विषयेषु स्वतोऽप्रवृत्तिलक्षणायाश्च प्रसन्नताया जातं **तत्सुखं सात्त्विकं प्रोक्तं** विद्वद्भिः ॥ ३७ ॥

**विषयेति** । विषयाणां = शब्दादीनां इन्द्रियाणां = श्रोत्रादीनां च 'जातम्' इति शेषः **अग्रे** प्रथमसन्निपाते **अमृतोपमं परिणामे** परिपाककाले दुःखोदर्कतया **विषमिव तत्सुखं राजसं स्मृतम्** ॥ ३८ ॥

**यदग्र इति** । **यद् अग्रे** समुपनतिसमये **अनुबन्धे च** पश्चादपि विपाककाले **आत्मनो मोहनं** मोहकरं निद्राऽऽलस्यप्रमादेभ्यः समुत्तिष्ठतीति **निद्राऽऽलस्यप्रमादोत्थं तत्सुखं तामसमुदाहृतम्** ॥ ३९ ॥

सर्वजीवानामपि गुणतस्त्रैविध्यमुच्यते **न तदिति** । **यत्सत्त्वं** जीवजातं **एभिः** प्रकृतैः **प्रकृतिजैः** प्रकृतिकार्यैः **त्रिभिर्गुणैः** सत्त्वादिभिः **मुक्तं** परित्यक्तं स्यात् **तत्सत्त्वं पृथिव्यां** मनुष्यादिषु **दिवि देवेषु वा पुनर्नास्ति** । 'पुनः' इत्यन्तरिक्ष इति समुच्चीयत इति **एके** ।

ननु 'गुणातीतं सत्त्वं नास्ति' इत्येतावता पूर्णत्वात् 'पृथिव्यां दिवि' इति विशेषोक्तिः किमर्था ? इति चेदुच्यते मुक्तानां गुणबद्धत्वाभावात् 'गुणातीतं सत्त्वं नास्ति' इत्युक्ते तेषामपि तत्प्रसक्तेः, तद्व्यावृत्त्यर्थं 'पृथिव्याम्' इत्यादिविशेषोक्तिरर्थवती इत्याद्युत्तरप्रस्थाने स्फुटम् । अनेन जीवाः सात्त्विका राजसाः तामसाश्चेति त्रिविधा इति विभावितं भवति ॥ ४० ॥

इदानीं भगवदाराधनात्मकस्य कर्मणः 'स्वे स्वे कर्मणि' इति कर्म, 'यतः प्रवृत्तिः' इत्यत्र च ज्ञानलक्षणं फलं प्रतिपादयितुं ब्राह्मणाद्यधिकारिजीवानां स्वभावानुबन्धिसत्त्वादिगुणभेदभिन्नवृत्त्या सह कर्तव्यकर्मस्वरूपमुच्यते **ब्राह्मणेत्यादिना** । हे **परन्तप** ! शक्तिसम्पन्न ! ब्राह्मणानां क्षत्रियाणां

विशां = वैश्यानाम्, द्विजत्वाभावद्योतनार्थं 'शूद्राणां च' इति समासात् पृथक्करणम् । **कर्माणि प्रविभक्तानि** प्रकर्षेण विभागतो विहितानि । केन निमित्तेन ? **स्वभावप्रभवैः गुणैः** स्वभावः = सत्त्वप्रधानत्वादिलक्षणः, ब्राह्मणत्वादिलक्षणः, योग्यतालक्षणो वा प्रभवति = प्रादुर्भवति = व्यक्तीभवति येभ्यस्ते स्वभावप्रभवाः, तैः गुणैः सत्त्वादिभिः तानि च शृणु इति योज्यम् ॥४१॥

तत्र ब्राह्मणस्य नैसर्गिककर्माण्युच्यन्ते **शमो दम इति** । **शमः** बुद्धेर्भगवन्निष्ठता **दम** इन्द्रिय-निग्रहः **तपः** ब्रह्मचर्यादि **शौचं** शुद्धिः बाह्या आन्तरी च **शान्तिः** क्रोधानुत्थितिः **आर्जवं** मनो-वाक्कायकर्मणां अवैपरीत्यं **ज्ञानं** सामान्यतः **विज्ञानं** विशेषतः **आस्तिक्यं** धर्मादौ 'अस्त्येवानेन प्रयोजनम्' इति भावः – एतत्सर्वं **ब्राह्मं** ब्रह्म = ब्राह्मणजातिः, तस्य सम्बन्धि **कर्म** तच्च **स्वभावजं** सहजं 'ब्रह्मकर्म' इति कचित् गीतापाठः । तत्र ब्रह्मणः ब्राह्मणजातेः कर्मेत्यर्थः ॥४२॥

क्षत्रियकर्मोच्यते **शौर्यमिति** । **शौर्यं** अभीरुत्वं **तेजः** शरीरगतं वर्चः **धृतिः** धैर्यं **दाक्ष्यं** पाटवं **युद्धेऽप्यपलायनं च दानं** औदार्यं **ईश्वरभावः** 'प्रसह्य वित्ताहरणं शारीरो दण्ड एव च । अशिष्याणां शासनं च तथैवार्थविनाशनम् । एष ईश्वरभावः स्यात्......' इति शास्त्रवेदितं प्रभु-शक्तिप्रकटीकरणं **क्षात्रं** क्षत्रजातेर्विहितं **स्वभावजं** क्षत्रजात्यसाधारणं कर्म ॥ ४३ ॥

वैश्यशूद्रयोः कर्मणी उच्येते पूर्वोत्तरार्धाभ्याम् **कृषिगोरक्षवाणिज्यमिति** । कृषिगोरक्षवाणि-ज्यम्— कृषिः = भूमे विलेखनम्, गाः रक्षतीति गोरक्षः, तस्य भावः गौरक्ष्यम् = पाशुपाल्यम्, वाणिज्यं = वणिक्कर्म क्रयविक्रयादि, कृषिगौरक्ष्यवाणिज्यम्, इति द्वन्द्वैकवद्भावः । **वैश्यं कर्म** वैश्यजातेर्विहितं कर्म । **स्वभावजम्** । **परिचर्यात्मकं** त्रैवर्णिकशुश्रूषारूपं **कर्म शूद्रस्यापि स्वभावजम्** ।

अत्र ब्राह्मणधर्माः शमादयः । तेभ्यः किञ्चिन्न्यूनाः क्षत्रियेषु । क्षत्रियेभ्यः किञ्चिदूना वैश्येषु । वैश्येभ्यः किञ्चिदूना शूद्रेषु ज्ञातव्या इत्यादिविशेष उत्तरप्रस्थानतोऽवगन्तव्यः ॥ ४४ ॥

अस्त्वेवं ब्राह्मणादीनां कर्माणि विभक्तानीति । ततः किम् ? इत्यत उच्यते **स्वे स्वे कर्मणीति** । 'पूर्वादिभ्यो नवभ्यो वा' इति स्मिनो विकल्पितत्वात् 'स्वे' इति प्रयुक्तम् । **स्वे स्वे** स्वस्वाधिकारविहिते **कर्मणि अभिरतः** परिनिष्ठितो **नरः** स्वस्वकर्मणा भगवन्तमाराधयन्निति यावत्, **संसिद्धिं** समीचीनं ज्ञानम्, तद्द्वारकं मोक्षं वा **लभते** । स प्रकार एव प्रतिज्ञापूर्वकं विविच्यते **स्वकर्मेति** । **यथा** येन प्रकारेण **सिद्धिं विन्दति** लभते **तत्** तत्प्रकारं **शृणु** ॥ ४५ ॥

**यतः** यस्माद् भगवतो **भूतानां** प्राणिनां **प्रवृत्तिः** चेष्टा भवति, **येन च इदं सर्वं** चराचरात्मकं जगत् **ततं** व्याप्तं तं भगवन्तं **स्वकर्मणा** ब्रह्मचर्यशमदमादिपूर्वकं सम्यक् पूजयित्वा **मानवो** मनुष्यो ब्राह्मणादिः **सिद्धिं विन्दति** लभते ॥ ४६ ॥

स्वविहितकर्मनिरतत्वं अत्यावश्यकमित्येतदुपपाद्यते **श्रेयानिति** । **विगुणो** वैगुण्यलक्षणदोषयुक्तोऽपि **स्वधर्मः** स्वविहितधर्मः **परधर्मात्** क्षत्रियजातिविहिताद्धर्मात् **स्वनुष्ठितात्** साधुकृतात् **श्रेयान्** प्रशस्यतरः । पुमर्थसाधने विगुणः कथं श्रेयस्साधनं स्यात् ? इत्यत उच्यते **स्वभावेति**। स्वस्य = ब्राह्मणादेर्भावो = वर्णाश्रमादिलक्षणः तन्निमित्तीकृत्य विहितं **स्वभावनियतं कर्म कुर्वन् किल्बिषं** वैगुण्यकृतदोषं **नाप्नोति** ॥ ४७ ॥

वैगुण्यशङ्कया स्वविहितकर्मत्यागो न शङ्कनीयः । वैगुण्यस्य सर्वथाऽवर्जनीयत्वादित्युच्यते **सहजमिति** । **सहजं** स्वभावनियतं **कर्म सदोषं** किञ्चिद्वैगुण्यादिदोषसहितमपि **न त्यजेत्** । **हि** यस्मात् **सर्वारम्भाः** सर्वाण्यपि कर्माणि **दोषेण** केनचिद् **आवृता** व्याप्ता एव, **धूमेन** सहजेन **अग्निरिव** ॥ ४८ ॥

कर्मनिरतस्य सिद्धिरुक्ता । तदनुष्ठाने इत्थम्भाव उच्यते **असक्तेति** । **सर्वत्र** कर्म तदङ्गाद्यनुष्ठाने असक्ता = कर्तृत्वाभिमानहीना बुद्धिः यस्य स तथा **जितात्मा** वशीकृतचित्तः, विगता = निःशेषेण निवृत्ता स्पृहा = फलाभिलाषो यस्मात् स तथा । एवम्भूतः साधकः **परमां** उत्तमां **नैष्कर्म्यसिद्धिं** नैष्कर्म्यार्था = मोक्षार्था सिद्धिः नैष्कर्म्यसिद्धिरिति समासो मध्यमपदलोपी । यद्वा 'नैष्कर्म्यं अस्याः फलत्वेनास्ति' इत्यत्र अर्श आदिलक्षणे मत्वर्थीयेऽच्प्रत्यये नैष्कर्म्यार्था = मोक्षफला च सा सिद्धिश्च नैष्कर्म्यसिद्धिरिति कर्मधारयः । नैष्कर्म्या = नैष्कर्म्यफला सिद्धिः फलत्वेन यस्याः परोक्षज्ञानकर्मादिलक्षणायाः साधनसामग्र्याः सा नैष्कर्म्यसिद्धिरिति बहुव्रीहिः, तां **नैष्कर्म्यसिद्धिं संन्यासेन** सर्वकर्मणां भगवति समर्पणलक्षणेन **अधिगच्छति** प्राप्नोति ॥ ४९ ॥

प्रतिज्ञापूर्वकं नैष्कर्म्यसिद्धिसाधनं विवृण्वता तदनन्तरभावि फलमुच्यते **सिद्धिमिति** । हे **कौन्तेय यया** येनोपायेन **सिद्धिं प्राप्तो ब्रह्म आप्नोति तथा** तमुपायं **समासेन** सङ्क्षेपेण **मे** सकाशात् **निबोध** नितरामवधारय । **या** सिद्धिः **ज्ञानस्य परा निष्ठा** पर्यवसितिः तां सिद्धिं नैष्कर्म्यसिद्धिमित्यन्वयः ॥ ५० ॥

प्रतिज्ञातमुच्यते **बुद्ध्येति** । **विशुद्धया** विषयसङ्गादिदोषपरिहृतया **बुद्ध्या युक्तः धृत्या** धैर्येण **आत्मानं** मनो **नियम्य** विषयेभ्यो विनिवर्त्य **च शब्दादीन्** इन्द्रियविषयान् **त्यक्त्वा** तदनुभवेच्छां विहाय तदनुषङ्गिणौ **रागद्वेषौ व्युदस्य च** ॥ ५१ ॥

**विविक्तसेवी** दुर्जनसङ्गहीनदेशसेवाशीलः **लघ्वाशी** मिताहारशीलः यतने = निगृहीतानि वाक्कायमानसानि यस्य स **यतवाक्कायमानसः नित्यं ध्यानयोगपरः** ध्यानम् = भगवदनुचिन्तनम्, तदेव योगः = उपायः तत्परः = तत्रासक्तः **वैराग्यं** दृष्टादृष्टविषयेषु वैतृष्ण्यं **नित्यमेव समुपाश्रितः** ॥ ५२ ॥

**अहङ्कारं** स्वस्य कर्तृत्वाभिमानं **बलं** समर्थता अभिमानं **दर्पं** मदात् समुपनतभीतिहेतोरदर्शनं **कामं** अभिलाषं **क्रोधं** द्वेषं **परिग्रहं** देहधारणमात्रानुकूलपरिग्रहाद् अधिकं **विमुच्य** विशेषेण मुक्त्वा **निर्ममः** 'ममेदं कर्म' इति ममताभिमानहीनः **शान्तो** भगवन्निष्ठबुद्धिः, हेतुभिरपि अनुत्थितकोपः इति **स्वामिनः** । **ब्रह्मभूयाय** ब्रह्मणि भावः ब्रह्मभूयम् = ब्रह्मणि स्थितिः = सर्वदा तन्मनस्कतेति यावत्, **कल्पते** ॥ ५३ ॥

ततः किम् ? इत्यत उच्यते **ब्रह्मभूत इति** । ब्रह्मणि सर्वदा समालग्नमनाः **प्रसन्नात्मा** अलौकिकसुन्दरविषयलाभेन प्रसादयुक्ततया स्वत एव विषयेष्वप्रवृत्तमनाः, प्रसन्न आत्मा = परमात्मा यस्य स इति वा, प्रायेण नष्टं **न शोचति न** वा अप्राप्तं **काङ्क्षति सर्वभूतेषु समः** षष्ठाध्यायोक्तरीत्या समबुद्धिः सन् **पराम्** उत्कृष्टां **मद्भक्तिं** मयि भक्तिं **लभते** ॥ ५४ ॥

ततश्च किम् ? इत्यत उच्यते **भक्त्येति** । **यावान्** अहं यत्परिमाणः देशकालगुणैर्व्याप्तो **यश्च** यन्नामा यद्रूपश्च **अस्मि** तावन्तं च **मां तत्त्वतः** स्वस्वयोग्यतानुसारेणेति यावत्, तथा **भक्त्या मामभिजानाति** सम्यगवबुद्ध्यते **ततो** भक्तिप्राप्त्यनन्तरं स्वगतभेदरहितं **तद्** वैदिकवेद्यत्वहेतुना तच्छब्दवाच्यं ब्रह्म **मां विशते** प्रविशति = प्रपद्यत इत्यर्थः ॥ ५५ ॥

पुनरन्तरङ्गज्ञानसाधनान्युपदिशता शास्त्रमुपसंह्रियते **सर्वकर्मणीत्यादिना** । **सर्वकर्माणि** विहितान्येव सर्वाणि कर्माणि, अपिशब्दस्तु 'एकमपि कर्म तदानश्रयणेन न कार्यम्' इत्यर्थे । **मद्व्यपाश्रयः** अहमेव व्यपाश्रयः = सम्यगाश्रयः यस्य स तथा 'मय्येव समर्पयन्' इति यावत् । **सदा कुर्वाणः मत्प्रसादात्** ममानुग्रहात् **शाश्वतं** शश्वदेकप्रकारकं **अव्ययं** नित्यं **पदं** परब्रह्मस्वरूपं **अवाप्नोति** ॥ ५६ ॥

यदि भगवदाश्रयतया विहितकर्म कुर्वतो मुक्तिः तर्हि त्रैविध्यस्यापि स स्यात् ? तस्यापि विहितकर्माणि कृत्वा भगवदर्पणसद्भावेन भगवदाश्रितत्वाविशेषात्, इत्यत उच्यते **चेतसेति** । **सर्व-कर्माणि** विहितानि सर्वाणि **चेतसा मयि** भगवति **संन्यस्य** समर्प्य **मत्परः** अहमेव सर्वस्मात् सर्वप्रकारेण सर्वदा परः = उत्तमः इति भावो यस्य स तथा **बुद्धियोगं** बुद्धेः = ज्ञानस्य योगः = प्रत्याहाराद्युपायः, तं **उपाश्रित्य** अनन्यविषयतया समाश्रयणं = उपाश्रयः, तत् कृत्वा **सततं मच्चित्तः** मयि चित्तं निरुद्धं यस्य स तथा **भव** ।

अत्र भगवदाश्रित-त्रैविध्ययोः विहितकरणादिसाम्येऽपि मोक्षभावाभावौ उपपद्येते । विहिता-शेषकर्माणि चेतसा भगवति संन्यस्य भगवदाश्रितः करोति, न तथा त्रैविद्य इति तयोः चेतसैव विशेषसद्भावादिति भावयितुं 'चेतसा' इत्युक्तम् । 'मत्परः' इत्यत्र त्रैविद्यात् भागवतस्य विशेष उच्यते— 'सर्वदा सर्वप्रकारेण सर्वस्माद् भगवान् परः' इति भावो हि मत्परत्वम् । अस्ति चेदं भागवते, न तु त्रैविद्ये, इति तेनापि विशेषेण तयोर्विशेष इति न त्रैविद्य-भागवतयोः साम्यमिति ज्ञायते । भगवति चित्तवृत्तिनिरोधोऽपि त्रैविद्याद् भागवतस्य विशेष इति भावेन 'मच्चित्तः' इत्युक्तम् ॥ ५७ ॥

भगवति निरुद्धचित्तस्य फलमुच्यते **मच्चित्त इति** । **मच्चित्तः** सर्वाणि दुर्गाणि = दुस्तराणि मोक्षप्रतिबन्धकपापानि **मत्प्रसादात् तरिष्यति** अतिक्रमिष्यति इति । स्वोक्ताकरणेऽनिष्टमुच्यते **अथ चेदिति** । **अथ चेत्** यदि पुनः **त्वं अहङ्कारात्** पण्डितोऽहमित्यभिमानात् 'युद्ध्यस्व' इति मदुक्तं **न श्रोष्यसि** श्रुत्वा तत्र निष्ठां न करिष्यसि तर्हि **विनङ्क्ष्यसि** विनाशं गमिष्यसि = पुरुषार्थभ्रष्टो भविष्यसि इति यावत् ॥ ५८ ॥

'अथ चेत्त्वमहङ्काराद्' इत्यभ्युपगम्योक्तम् । उक्ताकरणं अशक्यं च तवेत्युच्यते **यदिति** । **यद्** यदि **अहङ्कारमाश्रित्य** 'स्वविहितमपि युद्धं न करिष्यामि' इति **मन्यसे** अध्यवस्यसि तर्हि **ते** तव एव **व्यवसायः** युद्धाकरणनिश्चयो **मिथ्यैव** षण्ड एव । यतः **प्रकृतिः** ईश्वरेच्छा **नियोक्ष्यति** प्रेरयिष्यति ॥ ५९ ॥

ईश्वरेच्छाया जीवनियोगे साधनतया स्वभावाद्युच्यते **स्वभावजेनेति** । स्वभावः = संस्कारः, तज्जनितेन **स्वेन** स्वकीयेन = स्वस्य विहितेन **कर्मणा निबद्धो** नियन्त्रितः त्वं **मोहाद् यद्** कर्म युद्धलक्षणं **कर्तुं नेच्छसि अवशोऽपि** स्वानधीनो भगवदिच्छाधीनो वाऽपि **तत्** कर्म **करिष्यसि एव** ॥ ६० ॥

ननु प्रकृतिशब्दितेच्छाया एव नियोक्तृत्वे ईश्वरो नियोक्ता न स्यात् ? इति शङ्का ईश्वर-स्वरूपमुपदिशता निराक्रियते **ईश्वर इति** । सर्वेषां भूतानां = जीवानां **हृद्देशे ईश्वरः** अन्तर्यामी **तिष्ठति** । तदवस्थितप्रयोजनं सूच्यते **यन्त्रारूढानीति** ॥ यन्त्रशब्दः शरीरार्थः, तानि आरूढानि = अधिष्ठितानि भूतानि शरीराभिमानिनो जीवान् **मायया** स्वरूपभीतया इच्छया **भ्रामयन्** स्वस्वकर्मसु नियोजयन् सन्निति । *केचित्तु* 'यन्त्रारूढानि' इत्यत्र इवशब्दं संयोज्य, यथा दारुयन्त्रारूढानि कृत्रिमाणि भूतानि सूत्रधारी लोके भ्रामयति, तथेश्वरो मायया भ्रामयन् तिष्ठतीति व्याचक्षते ॥ ६१ ॥

यस्मादेवं ईश्वर एव स्वतन्त्रः, त्वदादिजीवाश्च तदधीनाः, तस्मात् मिथ्याध्यवसायं परित्यज्य तमेवाश्रय इत्युच्यते **तमेवेति** । **सर्वभावेन** सर्वप्रकारेण **तं** ईश्वरमेव **शरणं गच्छ** । **तत्प्रसादात्** तस्य = ईश्वरस्यानुग्रहात् **परां** उत्तमां **शान्तिं** बुद्धेर्भगवति निष्ठां **प्राप्स्यसि**, ततश्च शाश्वतस्थानं वैकुण्ठादि **प्राप्स्यसि** । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, तमेव शरणं गच्छ तत्प्रसादात्' इत्यादिरूपात् परोक्षवचनात् भगवतः श्रीकृष्णस्य ईश्वरादन्यत्वमिति शङ्का 'परोक्षवचनं तु द्रोणं प्रति भीमवचनमिव निश्चितार्थत्वाभिप्रायेणान्यथासिद्धम्' इत्यादिनाऽऽकारे एव परिहृता ॥ ६२ ॥

एवं भगवता तत्त्वमुपदिशता उक्तानुवादपूर्वकं साभिप्रायं अर्जुन आक्षिप्यते **इतीति** ॥ 'ते' इति श्रवणाद् 'भारत' इति लभ्यते । **गुह्यात्** गोप्यात् **गुह्यतरं** अतिशयेन गोप्यं रहस्यं **ते** त्वां प्रति **इति** प्रागुक्तप्रकारेण **ज्ञानं** ज्ञातव्यं तत्त्वम् **आख्यातम्** । **एतदशेषेण विमृश्य** पर्यालोच्य **यथेच्छसि तथा कुरु** ॥ ६३ ॥

साधनसारोपदेशोपसंहाराय प्रतिज्ञायते **सर्वं गुह्यतममिति** । भगवति मनोनिवेशनादेः प्रागुक्तत्वात् 'भूयः' इत्युक्तम् । **सर्वगुह्यतमं** सर्वसाधनेषु अतिशयेन गोप्यम्, अत एव **परमं मे वचः शृणु** । त्वं **मे दृढं** अतीव **इष्ट इति** कृत्वा **ततः ते हितं** श्रेयस्करं **वक्ष्यामि** ॥ ६४ ॥

तदेवोच्यते **मन्मना इति** । मयि मनो यस्य स तथा, मम भक्तो **भव** । **मद्याजी** मद्यजनशीलो भव । **मां** एव **नमस्कुरु** । एवं वर्तमानस्त्वं मत्प्रसादाल्लब्धज्ञानेन **मामेवैष्यसि** । अत्र च संशयं मा कार्षीः । **सत्यं** यथा तथैव **ते** तुभ्यं **प्रतिजाने** प्रतिज्ञां करोमि, यतस्त्वं **मे प्रियोऽसि** ॥ ६५ ॥

'मन्मना भव' इत्युक्तभगवन्मनस्त्वं विस्पष्टं व्याख्यातुं तत्रेत्थम्भाव उच्यते **सर्वधर्मानिति** । धर्मशब्देन धर्मकार्यफलानि लक्ष्यन्ते 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' इति धर्मपरित्याग-

शब्दस्य तत्फलपरित्यागार्थकत्वस्य भगवतैवाभिहितत्वात् सर्वधर्मफलान्यभिसन्धाय **मामेकं शरणं व्रज** गच्छ = प्राप्नुहि ।

यदुक्तं 'मन्मना भव' इति तद्व्याख्यायते— 'मामेकं शरणं व्रज' इति निगमात्मना । ननु बहुतरपापसद्भावात् 'मामेवैष्यसि सत्यम्' इति कथमुक्तम् ? कथञ्चित् त्वां प्राप्तस्यापि नाकं प्राप्तस्येव कर्मशेषात् पुनः पाते संसारपरिक्लेशोऽवर्जनीयः ? इति शङ्काद्वयं परिहर्तुमुच्यते **अहमिति** । **अहं त्वां** त्वां त्वदुपलक्षितसाधुवर्गं **सर्वपापेभ्यः** अनादिजन्मकृतसर्वपापेभ्यः **मोक्षयिष्यामि** मोचयिष्यामि = विनिर्मुक्तं करिष्यामि । ततो **मा शुचः** शोकं ना कार्षीरिति कृतशङ्काद्वयशङ्कुरुद्धृतः ॥ ६६ ॥

**गीतातात्पर्यनिर्णयः**

**''अन्यसर्वधर्मान् परित्यज्येत्युक्तशेषत्वेनैव सर्वधर्मानिति वचनम् । ''मामेकं शरणं व्रज'' इत्यपि ''मन्मनाः'' इत्याद्युक्तनिगमनात्मना तद्व्याख्यानम् ।**

*प्रका०*— अर्थतरस्त्वत्रापि विष्णवाधिक्यमेवोक्तं भवतीत्येतत्प्रकटयति । अन्यसर्वधर्मान्परित्यज्येऽपि इत्युक्तशेषत्वेन **सर्वधर्मानिति** । **वचनमिति** । विष्णोराधिक्याभावे सर्वधर्मान् अन्यविषयान् परित्यज्य ''मन्मना भव मद्भक्त'' इत्यादि विधानं न स्यात् । न च ''मन्मना भव मद्भक्तो मद्याजी''त्युक्तधर्मान्सर्वान्परित्यज्य ''मामेव शरणं व्रजन्ति'' विधीयत इति वाच्यम् । व्याहतिप्रसङ्गात् । न ह्यविष्णुभक्तो विष्णुं शरणागत इति वक्तुं शक्यते । तस्मान्मामेकं शरणं व्रजेति मन्मना भवेत्याद्युक्तं निगमनात्मना तद्व्याख्यानमित्यङ्गीकर्तव्यम् । यदुक्तम् ''मन्मना भव मद्भक्त इत्यादिना सा शरणागतिरित्यर्थः ।

**न्या०दी०— अन्यभजननिरासस्यात्र अकृतत्वात् कथमर्थतोऽपि विष्णवाधिक्यमुक्तमित्यत आह अन्येति ॥ अन्यधर्मान् सर्वान् परित्यज्य मन्मना भवेत्येवंप्रकारेण सर्वधर्मान् परित्यज्येति वचनं मन्मना इत्याद्युक्तशेषत्वेन हि वर्तते । अतोऽन्यव्यावृत्तिपूर्वकं स्वभजनमत्रोपदिष्टमेवेति भावः । नन्वत्र मन्मना इत्याद्युक्तसर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेत्युपदिश्यत इति किं न स्यादित्यत आह मामिति ॥ ''मामेकं शरणं व्रज'' इत्यनेनापि मन्मना इत्याद्युक्तस्यैव व्याख्यायमानत्वादन्यथाऽर्थकल्पने मन्मनस्त्वादिकं परित्यज्यानुतिष्ठस्व चेति व्याहतोक्तिः स्यादिति भावः । व्यर्थमिदमुक्तव्याख्यान-**

**मित्यतो निगमनात्मनेत्युक्तम् । मन्मना भवेत्यादिना किमुक्तं भवति ? मामेकं शरणं व्रज इति व्याख्यानत्वं द्रष्टव्यम् ।**

*भा०दी०*— **अन्यथाऽर्थकल्पन इति** । मन्मनस्त्वादिधर्मान् परित्यज्येति व्याख्यान इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा ।**
**सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् ॥**
**अखण्डा त्रिविधा पूजा तद्रत्यैव स्वभावतः ।**
**रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ।**
**शरणागतिरेषा स्याद् विष्णौ मोक्षफलप्रदा ।"**

**—इति महाविष्णुपुराणे ।**

*प्रका०*— सैव स्पष्टयते— **सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदेति** । कायेन वाचा मनसा कार्या पूजा त्रिविधेति ज्ञेयम् । युद्धस्य विहितत्वेनात्र प्राप्त्यभावात् ।

***न्या०दी०*— भवेदेतद्यदि भगवन्मनस्त्वादिकं शरणागतिः स्यात्, तदेव कुत इत्यत** आह **सर्वोत्तमत्वेति** ॥ **अत्र यथासम्भवं मन्मना इत्याद्युक्तार्थेनैकार्थत्वं द्रष्टव्यम् । त्रिविधा मनोवचनशरीरभवा । स्वभावतः न फलान्तरापेक्षया । मोक्षफलप्रदेत्यनेन मामेवैष्यसी-त्युक्तार्थं भवति । मामेकमिति सर्वधर्मानित्यस्य व्याख्यानं द्रष्टव्यम् ।**

*भा०दी०*— **एकार्थत्वमिति** । सदेत्यन्तेन तन्मनस्त्वस्य सर्वाधिकत्वे प्रेमयुक्तमित्यनेन मद्भक्त इत्यस्य सर्वत्र समर्पणमित्यनेन मद्याजीत्यस्य अखण्डा त्रिविधा पूजेत्यादिना मां नमस्कुर्वित्यस्य एकार्थ्यं व्यक्तमिति द्रष्टव्यमित्युक्तम् ॥

**गीतातात्पर्यनिर्णयः**

**अनादिजन्मकृतसर्वपापेभ्यः । अत्र प्राप्त्यभावात् । धर्मपरित्यागे पापपरि-त्यागस्य कैमुत्येनैव सिद्धत्वात् ॥ ६६ ॥**

*प्रका०*— "अहं त्वां सर्वपापेभ्यो मोचयिष्यामि मा शुच" इत्येतदुक्तं घटत इत्यत आह **अनादीति** । तदेव समर्थयति धर्मपरित्यागे पापपरित्यागस्य कैमुत्येनैव **सिद्धत्वादिति** । यस्त्वर्जुनोन्यधर्मान् परित्यज्य विष्णुं शरणं गतवान सः पापानि परित्यज्य गतवानिति किमु वर्णनीयम् । अनादिजन्मकृतसर्वपापेभ्योऽर्जुनं मोचयति भगवानित्यर्थः ।

***न्या०दी०*— "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" इत्यस्य युद्धनिमित्तपापेभ्य इत्यन्यथाप्रतीतिनिरासायार्थमाह अनादीति ॥ अत्रत्यपापान्येव विवक्षितानि किं न स्युः इत्यत आह अत्रेति ॥ पापानामिति** शेषः । **कुतोऽत्र न पापप्राप्तिः ? भविष्यद्युद्धस्यैव तत्प्रापकत्वादित्यत आह धर्मेति ॥** यदा भगवान् **अतिशुद्धधर्मवैपरीत्यादन्यधर्मत्यागं बोधयति तदा किमु वाच्यं पापपरित्यागं** बोधयतीति । **तथाऽर्जुनश्च यदा अन्यधर्मत्यागं कुर्यात् तदा किमु वाच्यं पापपरित्यागं कुर्यादिति । ताभ्यां च युद्धस्य बोध्यमानत्वात्, करिष्यमाणत्वाच्च न पापप्रापकतेति** भावः ॥

**गीता**

## इदं ते नातपस्काय नाभक्ताय कदाचन ।
## न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

*वि०वि०*— गीताशास्त्रेऽनधिकारिनिरासेनाधिकारिणं लक्षयति **इदमिति** । इदं गीताशास्त्रम् अतपस्काय न वाच्यम् । तस्मादप्यशुश्रूषवे विशेषतो न वाच्यम् । 'समुच्चये तथाधिक्ये न्यूनत्वे च प्रयुज्यत' इत्यभिधानात् । चशब्देन दोषाधिक्यावगमात् । 'अशुश्रूषोरभक्ताय न च वाच्यं कदाचन' इत्युक्तेः । कदाचिदल्पतपसोऽल्पशुश्रूषोरपि भक्त्याधिक्येन वाच्यं भवतीति कदाचनेति विशेषः । 'यो मामभ्यसूयति तस्मादभक्तादपि न वाच्यम् । अभक्तादपि पापः स्यादसूयुर्दोषदृग्यत' इति वचनात् ॥ ६७ ॥

*सा०सं०*— गीताशास्त्रेऽनधिकारिनिरासेन लक्षणयाऽधिकारिणमाह **इदमिति** । **इदं** गीताशास्त्रम् । तपोहीनाय । **ते** त्वया । **न वाच्यम्** । **अशुश्रूषवे** सेवामकुर्वते न वाच्यम् । तपोहीनोपदेशादप्यशुश्रूषोरुपदेशो महादोषकर इति सूचनायात्र **चशब्दः** । 'समुच्चयेऽथवाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते' (शब्दनिर्णये) इत्युक्तेः । चश्चकारः इत्यर्थः । अशुश्रूषूपदेशादप्यभक्ताय कदाचन कदापि न वाच्यमित्युक्तिः । अल्पमात्रतपःशुश्रूषावतो भक्तिमतः कदाचिदुपदेशोऽपि भक्ति-

हीनायोपदेशे महान् दोष इति सूचनाय । **मां योऽभ्यसूयति** तस्मै । **न वाच्यमि**त्यत्रापि **च**शब्दः तपोहीनादित्रितयोपदेशादप्यसूयावत उपदेशे दोषाधिक्यज्ञापनार्थः । एतेन तपःप्रभृतिगुणयुक्तोऽधिकारीति सूचितम् ॥ ६७ ॥

***अ०प्र०***— एवं गीतार्थतत्त्वमुपदिश्य तत्सम्प्रदायप्रवर्तननियममाह । यद्वा, गीताशास्त्रे अनधिकारनिरासेनाधिकारिणं लक्षयति **इदमिति** ।

हे अर्जुन !, इदं = गीताशास्त्रं गीतातत्त्वं वा[१], ते = तव मया यदुक्तं तत् त्वया श्रद्धया श्रुतमित्यर्थः[२], अतपस्काय = धर्मानुष्ठानहीनाय[३], न वाच्यं = तपोहीनाय न वाच्यं[४], अभक्ताय = गुरौ ईश्वरे च भक्तिशून्याय[५], कदाचन = कदापि[६], न वाच्यं[७], न चाशुश्रूषवे = गुर्वादि-परिचर्यामकुर्वते । यद्वा, तपस्वी चेदपि गुरुभक्तश्चेदपि अशुश्रूषुः अश्रवणेच्छुश्चेत् श्रवणाय योग्यो न भवति तस्मात्तस्मै अशुश्रूषवे च श्रोतुमनिच्छते[८], न वाच्यं[१०] मां यः अभ्यसूयति = मां यदि तपस्वी भक्तः श्रवणाऽऽसक्तश्चेदपि गीताशास्त्रनिर्मातारं सकल-लोकशास्तारं मां मद्भजकानां च यः[११], पुरुषः[१२], अभ्यसूयति मनुदृष्ट्या दोषारोपणादिकं करोति ते न निन्दन्ति । यद्वा, असूयां कुरुते स श्रवणाय योग्यो न भवति[१३], तस्मै न च वाच्यं = तस्मै सर्वथा न वाच्यमित्यर्थः । 'समुच्चये तथाऽधिक्ये न्यूनत्वे च प्रयुज्यते'ति वचनात् शब्देन तु आधिक्यमाह अभक्ताय च । गुरुदेवतयोर्भक्तिशून्याय कदापि न वाच्यमिति । 'अभक्तादपि पापः स्यादसूयादोषदृक् यतः' इत्युक्तेः । अनेनेतैर्दोषैः रहितेभ्यो गीताशास्त्रं वक्तव्यमिति सूचितम् ॥ ६७ ॥

**गीतातात्पर्यनिर्णयः**

**अतपस्कायैव न वाच्यम् । अशुश्रूषवे पुनश्चेति दोषाधिक्यमशुश्रूषोर्दर्शयितुं चशब्दः । एवमभक्ताय कदाऽपि न वाच्यम् । कदाचिदल्पतपसोऽल्पशुश्रूषोरपि भक्त्याधिक्ये वाच्यं भवतीति कदाचनेति शेषः । अभक्ताच्च न वाच्यमसूयोरिति तत्रापि चशब्दः ।**

***प्रका०***— "इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति" इत्यस्यार्थमाह **अतपस्कायेत्यादिना** ।

***न्या०दी०***— **गीतास्वनधिकारिनिरासेनाधिकारी लक्ष्यते 'इदं' इति । तत्रातपस्कादीनां चतुर्णामप्यनधिकारित्वं किं सममित्यतो गीतापदैरेव तत्तारतम्यं दर्शयति अतप-**

**स्कायेति** ॥ यथाऽतपस्कादतिशयेन अशुश्रूषोर्न वाच्यं, एवमशुश्रूषोरप्यतिशयेन अभक्ताय न वाच्यमिति कदाचनेत्यनेन ज्ञायत इत्यर्थः । नन्वतपस्कादीनामपि कदाचनावाच्यमेव । अतः कदाचनेति विशिष्यात्रोक्त्या कथमस्य दोषाधिक्यं सूच्यत इत्यत आह **कदाचिदिति** ॥ विशेषो दोषाधिक्यसूचको भवतीति शेषः । अभक्ताच्चातिशयेनेत्यर्थः । इति सूचयितुमिति शेषः ।

*भा०दी०*— **लक्ष्यत इति** । लक्षणया प्रतिपाद्यते, तपःप्रभृतिगुणयुक्तः अधिकारीत्युच्यत इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

"समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते ॥"

—इति शब्दनिर्णये ।

"अभक्तादपि पापः स्यादसूयुर्दोषदृग् यतः ॥"

—इति च पाद्मे ॥ ६७ ॥

*न्या०दी०*— चशब्दस्य दोषाधिक्यसूचकत्वं कुत इत्यत आह **समुच्चय इति** ॥ अभक्ताच्च न वाच्यमसूयोरित्यत्र स्मृतिं चाह **अभक्तादपीति** ॥ ६७ ॥

**गीता**

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

*वि०वि०*— गीताव्याख्यानफलकथनेन प्रशंसति **य इदमित्यादिना** । मयि परां भक्तिं कृत्वा भक्तिपूर्वकं मद्भक्तेषु मद्भक्तेभ्यः इदं ज्ञानं योऽभ्यधास्यति स मामेष्यति । नात्र संशयः ॥ ६८ ॥

*सा०सं०*— गीताशास्त्रस्य व्याख्यानं फलोक्त्या प्रशंसति **य** इत्यादिद्वाभ्याम् । **परमं गुह्यम्** अतिगोप्यम् । **इदं** गीताशास्त्रम् । योऽधिकारी **मद्भक्तेषु** मम भक्तेभ्यः । **अभिधास्यति** उपदेक्ष्यति । स इति योज्यम् । **मयि परां भक्तिं कृत्वा मामेवैष्यति** । प्राप्स्यति । **असंशयः** नास्ति संशयः ॥ ६८ ॥

*अ०प्र०*— गीताशास्त्रफलकथनं प्रशंसति **इदमित्यादिना** ।

यः = पुरुषः[१], इदं = गीताशास्त्रं[२], यद्वा, वाङ्मयमूर्तिं श्रीगीतारत्नेश्वरं प्रतिष्ठाय[२], परमं[३], उत्कृष्टं[४], गुह्यं = गोप्यतमं[५], मद्भक्तेषु = मद्भक्तेभ्यो[६], अभिधास्यति = कथयिष्यति उपदेक्ष्यति[७], सः = पुरुषः[८], मयि परां[८], भक्तिं[९], कृत्वा = करोति[१०] ततः असंशयः = निरसंशयः सन्[११], मामेव[१३], एष्यति = प्राप्नोति[१४] ॥ ६८ ॥

**गीता**

## न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
## भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

*वि०वि०*— मनुष्येषु तस्माद्व्याख्यातुरन्यः कश्चिन्मे प्रियकृत्तमः अतिशयेन प्रियकारी नास्ति तस्मादन्यः प्रियतमो न भविता नास्त्येवेत्यर्थः ॥ ६९ ॥

*सा०सं०*— **तस्मात्** गीताव्याख्यातुः । **मनुष्येषु कश्चित् मे प्रियकृत्तमः न चास्ति** नैवास्ति । **तस्मात् अन्यः** मे प्रियतमः **भविता च न** । नाभूदिति च ज्ञेयम् । अत्र 'मनुष्येषु' इत्युक्त्या देवानां फलाधिक्यं सूचयति ॥ ६९ ॥

*अ०प्र०*— किञ्च **नेति** ।

भुवि[१], मनुष्येषु[२], तस्मात्[३], अन्यः[४], कश्चित् नरः[५], प्रियकृत्तमः[६], मे = मम[७], न = नास्ति[८], तस्मात्[९], अन्योऽपि[१०] प्रियतरः[११], न च[१२], भविता[१३], मे[१४], न च[१५] ॥

भुवि = भूलोके[१], मनुष्येषु = तत्रापि मनुष्येषु मध्ये तप आदि कर्मठेषु ज्ञानिषु मध्ये[२], तस्मात् गीताशास्त्रस्य व्याख्यातुः तदपेक्षया[३], अन्यः[४], कश्चित्पुरुषः[५], प्रियकृत्तमः = प्रियकृत्सु अतिशयेन प्रियं करोतीति प्रियकृत्तमः अतिशयेन प्रियकारी[६], मे = मम[७], न नास्ति = स एव प्रीतिविषयः[८], भक्तिं मयि परां कृत्वा = पूर्वश्लोकपदं अन्यफलापेक्षां विहाय मयि परमात्मन्येव भक्तिं उत्कृष्टां कृत्वा गीतामक्षोभेन पठतीति शेषः । तस्मात्प्रियतरो नास्तीत्युक्तं[८], तस्मात् = तत्सदृशो प्रियतरः मे[१०] अन्यः[११], भविता = कालान्तरे भविष्यति[१२], न = न भविष्यत्येव[१३], कालान्तरेऽपि मम न भविष्यत्येव[१४] ।

श्लोकार्थः— यद्वा मतान्तरम्— तस्मात् मद्भक्तेभ्यो गीताशास्त्रस्य व्याख्यातुः प्रियतरः अद्य भुवि तावन्नास्ति न च कालान्तरे भविता भविष्यति अत्यन्तं परितोषकर्ता नास्ति । न च काला-

न्तरे भविष्यति ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति । न च कालान्तरे भविता भविष्यतीत्यर्थः ॥ ६९ ॥

**गीता**

## अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
## ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

***वि०वि०***— आवयोस्तव मम च धर्म्यं संवादं योऽध्येष्यते पठिष्यति तेनाध्येत्रा ज्ञानयज्ञेनाहमिष्टः स्यामिति मे मतिः निश्चयः ॥ ७० ॥

***वा०ल०***— 'अध्येष्यते च य इमम्' इत्यत्र, अध्येष्यते वेदाध्ययनवत् पठति ॥ ७० ॥

***सा०सं०***— गीताध्ययनमपि फलकथनेन प्रशंसति **अध्येष्यते चेति** । **धर्म्यं** धारकत्वाद्धर्मो भगवान्, तदीयं धर्म्यं धर्मसाधनमिति वा । **इमम्** । **आवयोः संवादम्** । गीताप्रबन्धम् । **यः अध्येष्यते च** पठिष्यति च । **तेन** पुंसा । **ज्ञानयज्ञेन** ज्ञानाख्ययज्ञेन । **अहमिष्टः** पूजितः । **स्यां** भवेयम् । **इति मे मतिः** ॥ ७० ॥

***अ०प्र०***— पठनफलमाह **अध्येष्यत इति** ।

यः[१], आवयोः[२], इमं[३], धर्म्यं[४], संवादं[५], अध्येष्यते[६], तेन[७], ज्ञानयज्ञेन[८], अहं[९], इष्टः स्याम्[१०] इति मे मतिः[११] ।

हे भारत ! यः = पुरुषः[१], आवयोः = तव मम च[२], इमं गीताशास्त्रं[३], धर्म्यं = धर्मादनपेतं धर्म्यं धर्मसाधनम् । यद्वा, धर्मो नाम सकलधर्माणां वरिष्ठो मोक्षधर्मः सोऽस्मिन्वर्तत इति धर्म्यं[४], संवादं = प्रश्नोत्तररूपेण प्रवर्धमानम् । यद्वा, तद्रूपं शास्त्रं[५], अध्येष्यते च = गुरूक्तार्थचिन्तनरूपेण पठति जयरूपेण पठिष्यति वा । यद्वा, चकारेण पदभेदमकृत्वा पाठेन पठतीति भावः[६], तेन = गीतापाठकेन पुंसा[७], ज्ञानयज्ञेन = सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेन । यद्वा, प्रदीप्ते ज्ञानानले मूलाविद्याहोमो ज्ञानयज्ञः । यद्वा, तेन ज्ञानयज्ञेनेति वा समस्तपदं[८], अहं = परमकारुणिको परमात्मा[९], इष्टः स्याम् = परितुष्टो भवेयं[१०] इति मे मतिः = निश्चयः[११], यद्यसौ गीताशास्त्रार्थमबुध्यमान एव केवलं जपति तथापि मम तावत् शृण्वतो मामेवास्ते प्रकाशयतीति बुद्धिर्भवतीति यथा लोके यदृच्छयापि कदाचित् कस्यचिन्नाम गृह्णाति तदाऽसौ मामेव यातीति मत्त्वा तत्पार्श्वमागच्छति ।

*अ०प्र०*— गीताशास्त्रफलकथनं प्रशंसति **इदमित्यादिना** ।

यः = पुरुषः[१], इदं = गीताशास्त्रं[२], यद्वा, वाङ्मयमूर्तिं श्रीगीतारत्नेश्वरं प्रतिष्ठाय[२], परमं[३], उत्कृष्टं[४], गुह्यं = गोप्यतमं[५], मद्भक्तेषु = मद्भक्तेभ्यो[६], अभिधास्यति = कथयिष्यति उपदेक्ष्यति[७], सः = पुरुषः[८], मयि परां[९], भक्तिं[९], कृत्वा = करोति[१०] ततः असंशयः = निस्संशयः सन्[११], मामेव[१३], एष्यति = प्राप्नोति[१४] ॥ ६८ ॥

**गीता**

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

*वि०वि०*— मनुष्येषु तस्माद्व्याख्यातुरन्यः कश्चिन्मे प्रियकृत्तमः अतिशयेन प्रियकारी नास्ति तस्मादन्यः प्रियतमो न भविता नास्त्येवेत्यर्थः ॥ ६९ ॥

*सा०सं०*— **तस्मात्** गीताव्याख्यातुः । **मनुष्येषु कश्चित् मे प्रियकृत्तमः न चास्ति** नैवास्ति । **तस्मात् अन्यः** मे प्रियतमः **भविता च न** । नाभूदिति च ज्ञेयम् । अत्र 'मनुष्येषु' इत्युक्त्या देवानां फलाधिक्यं सूचयति ॥ ६९ ॥

*अ०प्र०*— किञ्च **नेति** ।

भुवि[१], मनुष्येषु[२], तस्मात्[३], अन्यः[४], कश्चित् नरः[५], प्रियकृत्तमः[६], मे = मम[७], न = नास्ति[८], तस्मात्[९], अन्योऽपि[१०] प्रियतरः[११], न च[१२], भविता[१३], मे[१४], न च[१५] ॥

भुवि = भूलोके[१], मनुष्येषु = तत्रापि मनुष्येषु मध्ये तप आदि कर्मठेषु ज्ञानिषु मध्ये[२], तस्मात् गीताशास्त्रस्य व्याख्यातुः तदपेक्षया[३], अन्यः[४], कश्चित्पुरुषः[५], प्रियकृत्तमः = प्रियकृत्सु अतिशयेन प्रियं करोतीति प्रियकृत्तमः अतिशयेन प्रियकारी[६], मे = मम[७], न नास्ति = स एव प्रीतिविषयः[८], भक्तिं मयि परां कृत्वा = पूर्वश्लोकपदं अन्यफलापेक्षां विहाय मयि परमात्मन्येव भक्तिं उत्कृष्टां कृत्वा गीतामक्षोभेन पठतीति शेषः । तस्मात्प्रियतरो नास्तीत्युक्तं[८], तस्मात् = तत्सदृशो प्रियतरः मे[१०] अन्यः[११], भविता = कालान्तरे भविष्यति[१२], न = न भविष्यत्येव[१३], कालान्तरेऽपि मम न भविष्यत्येव[१५] ।

श्लोकार्थः— यद्वा मतान्तरम्— तस्मात् मद्भक्तेभ्यो गीताशास्त्रस्य व्याख्यातुः प्रियतरः अद्य भुवि तावन्नास्ति न च कालान्तरे भविता भविष्यति अत्यन्तं परितोषकर्ता नास्ति । न च काला-

न्तरे भविष्यति ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति । न च कालान्तरे भविता भविष्यतीत्यर्थः ॥ ६९ ॥

**गीता**

## अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
## ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

***वि०वि०*—** आवयोस्तव मम च धर्म्यं संवादं योऽध्येष्यते पठिष्यति तेनाध्येत्रा ज्ञानयज्ञेनाहमिष्टः स्यामिति मे मतिः निश्चयः ॥ ७० ॥

***वा०ल०*—** 'अध्येष्यते च य इमम्' इत्यत्र, अध्येष्यते वेदाध्ययनवत् पठति ॥ ७० ॥

***सा०सं०*—** गीताध्ययनमपि फलकथनेन प्रशंसति **अध्येष्यते चेति** । **धर्म्यं** धारकत्वाद्धर्मो भगवान्, तदीयं धर्म्यं धर्मसाधनमिति वा । **इमम्** । **आवयोः संवादम्** । गीताप्रबन्धम् । **यः अध्येष्यते च** पठिष्यति च । **तेन** पुंसा । **ज्ञानयज्ञेन** ज्ञानाख्ययज्ञेन । **अहमिष्टः** पूजितः । **स्यां** भवेयम् । **इति मे मतिः** ॥ ७० ॥

***अ०प्र०*—** पठनफलमाह **अध्येष्यत इति** ।

यः[1], आवयोः[2], इमं[3], धर्म्यं[4], संवादं[5], अध्येष्यते[6], तेन[7], ज्ञानयज्ञेन[8], अहं[9], इष्टः स्याम्[10] इति मे मतिः[11] ।

हे भारत ! यः = पुरुषः[1], आवयोः = तव मम च[2], इमं गीताशास्त्रं[3], धर्म्यं = धर्मादनपेतं धर्म्यं धर्मसाधनम् । यद्वा, धर्मो नाम सकलधर्माणां वरिष्ठो मोक्षधर्मः सोऽस्मिन्वर्तत इति धर्म्यं[4], संवादं = प्रश्नोत्तररूपेण प्रवर्धमानम् । यद्वा, तद्रूपं शास्त्रं[5], अध्येष्यते च = गुरूक्तार्थचिन्तनरूपेण पठति जयरूपेण पठिष्यति वा । यद्वा, चकारेण पदभेदमकृत्वा पाठेन पठतीति भावः[6], तेन = गीतापाठकेन पुंसा[7], ज्ञानयज्ञेन = सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेन । यद्वा, प्रदीप्ते ज्ञानानले मूलाविद्याहोमो ज्ञानयज्ञः । यद्वा, तेन ज्ञानयज्ञेनेति वा समस्तपदं[8], अहं = परमकारुणिको परमात्मा[9], इष्टः स्याम् = परितुष्टो भवेयं[10] इति मे मतिः = निश्चयः[11], यद्यसौ गीताशास्त्रार्थमबुध्यमान एव केवलं जपति तथापि मम तावत् शृण्वतो मामेवास्ते प्रकाशयतीति बुद्धिर्भवतीति यथा लोके यदृच्छयापि कदाचित् कस्यचिन्नाम गृह्णाति तदाऽसौ मामेव यातीति मत्त्वा तत्पार्श्वमागच्छति ।

तथाऽहमपि तस्य सन्निहितो भवेयम् । अत एव अजामिलक्षत्रबन्धुप्रमुखानां कथञ्चिन्नामोच्चारण-मात्रेण प्रसन्नोऽस्मि तथैव तस्यापि प्रसन्नो भवेयमिति भावः ॥ ७० ॥

**गीता**

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

*वि०वि०*— योऽपि नरः श्रद्धया युक्तो दोषदृष्टिरहितः शृणुयात् सोऽपि पापैर्मुक्तः पुण्यकर्मणां शुभान् लोकान् प्राप्नुयात् । अत्र सोऽपि मुक्तः । 'न च तस्मान्मनुष्येष्वि'त्युक्तेश्च । मुक्तौ महत्तारतम्यं ज्ञायते । मनुष्येष्विति विशेषणात्तत्रापि देवानामाधिक्यं च । तदुक्तम्— "मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् । मुक्तौ सुखं तत्पठतस्ततोऽप्यधिकमिष्यते ॥ व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् । ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यतः ॥" इति ॥ ॥ ७१ ॥

*सा०सं०*— गीताश्रवणमपि फलोक्त्या प्रशंसति **श्रद्धावानिति** । अस्मादस्ति मे फल-मित्यास्तिक्यबुद्धिमान् । **अनसूयः** असूयादिदोषरहितश्च । **नरः** । **इममावयोः संवादं शृणुयाच्चेदपि** । **सोऽपि मुक्तः** सन् । **पुण्यकर्मणां शुभान् लोकान**वाप्नुयात् । अत्र सोऽपि श्रवणं कुर्वन्नपि मुक्तः । किमु तदध्येतेत्युक्त्या श्रवणं कुर्वतोऽपि तदध्येतुर्मुक्तावधिकसुखमिति सूचितम् । तथा तस्मादपि व्याख्यातुर्मनुष्यस्याधिकं सुखम् । ततो देवानामिति ज्ञातव्यम् ॥ ७१ ॥

*अ०प्र०*— अन्यस्य जपतो कश्चित् शृणोति तस्यापि फलमाह **श्रद्धावानिति** ।

श्रद्धावान्[१], अनसूयश्च[२], यो नरः[३], शृणुयात्[४], अपि[५], सोऽपि[६], मुक्तः सन्[७], पुण्यकर्मणां[८], शुभान्[९], लोकान्[१०] प्राप्नुयात्[११] ॥

श्रद्धावान् = आस्तिक्यबुद्धि श्रद्धा गीताश्रवणे शुद्धास्थावानित्यर्थः । श्रद्धावान् कश्चित्[१], अनसूयश्च = असूयारहितत्वं नाम गीताशास्त्रं किमर्थमुच्चैः पठसि ? मे शिरो व्यथते । अशुद्धं च यः पठत्ययं वैधवेय इत्यादि अशुद्धं जपतीति वा दोषदृष्टिं हरिभक्ताय करोति तद्व्यावृत्त्यर्थमाह अनसूयश्च असूयारहितोऽपि सर्वमार्गे निन्दां परित्यज्य गीताश्रवणे श्रद्धावांश्च यः नरः[३], शृणुयात् = यावद्गीताक्षराणि श्रुतानि तावत् आकल्पानेकजन्मार्जितपाप-निचयानि विनश्यन्ति[४], अपि = शब्द-स्यार्थः यावद्गीताक्षराणि कर्णे प्रविशन्ति तावत् सम्पूर्णाश्वमेधाधिकफलं भवति[५], एतादृशभक्तः सोऽपि[६], मुक्तः सन्[७], पुण्यकर्मणां = पुण्यं कर्म येषां प्रेरणया जायते तेषां पुण्यकृतां[८], शुभान्[९],

लोकान्[10] प्राप्नुयात् = आप्नुयात् मुक्तः सन् मामेव प्राप्नोतीत्यर्थः । 'न च तस्मान्मनुष्येषु' इत्युक्तेश्च मुक्तानां महातारतम्यं ज्ञायते । तदुक्तम्– "मुक्तिर्ज्ञात्वाऽपि विष्णुं स्यात् शास्त्रं श्रुत्वा ततोऽधिकम्। मुक्तौ सुखं तत्पठतः ततोऽप्यधिकमिष्यते ॥ व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् । ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यतः ॥" लिङ्गदेहं त्यक्त्वा स्वरूपव्याख्यातॄणां प्रेरकत्वात् मनुष्येष्विति विशेषणात् अत्रापि देवाधिक्यं ज्ञायते ।

देहेन युक्ता मुक्ताः यथेदानीं तथाऽहमिति स्वात्मगुणादिकमनुभूय ईश्वरेच्छोत्पन्नविषया-श्चानुभूयाऽहं सुखीत्याद्यनुसन्धत्ते तदपि सुखमिदानीमिव मनुष्यमारभ्य ब्रह्मपर्यन्तं साधनतारत-म्यात्तारतम्येन स्थितमित्यत्र प्रमाणमन्यत्राप्याचार्यैरुदाहृतम् । तथादृष्टनातपस्कायेत्यादिना 'तानहं द्विषत' इत्यादिना सर्वार्थान्विपरीतांश्चेति अतत्वार्थवदिति अन्यथापि दुःखे च सुखमानिन इत्यादीनां अन्धन्तमस्वपि तारतम्येन दुःखं तद्विषयं मोहादिकं च द्वेषिणामस्ति इति ज्ञायते । यथा लोके उन्मत्ताः सत्त्वमुख्याः आसवं मदिरां पीत्वा निद्रालस्यप्रमादोत्थं सुखाभासं सुखमत्यनुभवति, यथा वा सर्षपरसं पीत्वा दुःखमनुभन्नेवाहं सुखीति भ्रमन्ति, यथा कदन्नं दुःखकारं भुक्त्वा दुर्जनोऽहमेव सुखी न मत्सदृशः सुखीति मन्यते, यथा च वत्सनाभि-कृम्यादिदुःखमनुभूय सुखत्वेन भ्रमन् वर्तते एवमेव दैत्या दुःखसाधनं सुखसाधनत्वेनापि भ्राम्यं दुःखमपि सुखत्वेनानुभवन्ति सदा ज्ञानदुःखादि-स्वस्वरूपोऽहं ज्ञानी सुखीत्यादि भ्रमन्ति ईश्वरादौ जीवाभेदादिना भ्रमन्ति एवं मिथ्याज्ञानाद् दुःखादिस्वरूपात्मानं विषयाश्चानुभूय दुःखिनोऽपि वयं सुखी न सर्वज्ञा ईश्वरा एवेति मन्यन्ते । नन्वेवं तर्हि तेषां यथाकथञ्चित् सुखानुसन्धानात् तथा तमसोऽपि सुखत्वात् पुमर्थं च स्यादिति चेत् नैवम् । तेषामपि किञ्चिद्दुःखज्ञानात् तज्जनोदाद्यस्य मूर्च्छायामिव तात्कालिकस्याङ्गीकारात् । अतत्त्वार्थवदल्पञ्चेत्युक्तत्वात् पश्चाद्दुःखे सुखत्वाभिमानरूपभ्रमाङ्गीकारात् । न च तस्याबाधितत्वात् कथं भ्रमत्वमिति वाच्यम् ? सज्जनानां प्रत्यक्षेणानुमानाभ्यां च तेषां दुःखित्वस्य प्रमितत्वात् । तथा लोकेऽनुपसञ्जातबाधभ्रमो नरो भ्रान्त उच्यते । यथा विष्ठादिस्थः कृम्यादिः कथमयं दुःखमनुभवति हाहेस्यति कृपास्पदो भवति, यच्चोन्मत्तसन्निपातरोगिणं वा दृष्ट्वा कथमयं स्वात्मानुमन्यश्चानुबुध्यैव जन्मान्तरीयकर्मफलं दुःखमनुभवतीति सज्जनो व्यवहरति ॥ ७१ ॥

**गीता**

**कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥ ७२ ॥**

*वि०वि०*— उपदेशोऽयमरण्यरुदितवन्माभूदित्याशयवानाह **कश्चिदिति** । अज्ञानोत्थः सम्मोहः ॥ ७२ ॥

***सा०सं०***— एतावानुपदेशः अरण्यरुदितवज्जातो न भवति किलेति भावेन पृच्छति **कच्चि-दिति** । किमित्यर्थेऽव्ययमेतत् । हे **पार्थ** ! **त्वयैकाग्रेण चेतसा एतत्** मदुक्तं गीताप्रमेयम् । **श्रुतं** किम् । अज्ञानोत्थः **सम्मोहः कच्चित्ते प्रणष्टः** ॥ ७२ ॥

***अ०प्र०***— किञ्च तथैवेत्यवैहि माहिषस्य गानश्रवणेनैव त्वमुपदेशेनैव ज्ञानमुत्पत्तौ पुनरप्युप-देक्ष्यामि इति आशयेन, यद्वा, सम्यक् बोधानुपपत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह **कच्चिदिति** ।

अथान्वयः— हे पार्थ ![1], एकाग्रेण[2], चेतसा[3], त्वया[4], एतत्[5], श्रुतं[6], कच्चित्[7], हे धन-ञ्जय ![8], ते[9], अज्ञानसंमोहः[10] प्रनष्टः[11], कच्चित्[12] ।

हे पार्थ ![1], एकाग्रेण = निश्चलेन श्रवणाधिष्ठितेन[2], चेतसा[3], त्वया पार्थेन[4], एतत् = गीता-शास्त्रं[5], श्रुतं = अवधारितं[6], कच्चित्[7], हे धनञ्जय ![8], ते = तव[9], अज्ञानसम्मोहः = स्वाज्ञान-जनितसम्मोहः । यद्वा, अज्ञानं भावरूपं तज्जन्यसम्मोहो विपर्ययः । अज्ञानविपरीतज्ञानेति द्वन्द्वैकव-द्भावो वा । यद्वा, तत्त्वज्ञानकृतो विपर्ययः[10] प्रनष्टः = कच्चित् प्रकर्षेण नाशं गतः कच्चित्[12], कच्चिदिति प्रश्नार्थे अव्ययमेतत् ॥ ७२ ॥

### गीतातात्पर्यनिर्णयः

**"सोऽपि मुक्तः", "न च तस्मान्मनुष्येषु" इत्युक्तेर्मुक्तानां महत् तारतम्यं ज्ञायते । "मनुष्येषु" इति विशेषणात् तत्रापि देवानामाधिक्यं च ।**

***प्रका०***— "य इमं परमं गुह्यं मद्भक्तेऽष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवेष्य-त्यसंशयः । न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता न च मे तस्मादन्यः प्रियतमो भुवि । अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः । श्रद्धावाननसूयश्च शृणुयादपि यो नरः । सोऽपि मुक्तः शुभांल्लोकान् प्राप्नुयात्पुण्यकर्मणाम्" इत्यस्य अर्थमाह **सोऽपि मुक्त इत्यादिना** ।

***न्या०दी०***— **गीताव्याख्यानादि फलकथनेन स्तूयते 'यः' इति । तत्र व्याख्यात्रा-दीनामुक्तो मोक्षः किमेकप्रकार इत्यतो गीतावाक्यैरेव तत्तारतम्यं दर्शयति सोऽपीति ॥**

मुक्तानां व्याख्यात्रादीनामिति शेषः । एवं चेत् किं व्याख्यातुरेव सर्वाधिक्यमित्यत आह **मनुष्येष्विति** ॥ **तत्र मुक्तेष्वपि** ।

*भा०दी०*— **गीताव्याख्यानादीति** । आदिपदेनाध्ययनश्रवणयोर्ग्रहः ॥

**गीतातात्पर्यनिर्णयः**

"मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् ।
मुक्तौ सुखं तत् पठतस्ततोऽप्यधिकमिष्यते ॥
व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यतः ॥"

—इति च ॥ ६८-७२ ॥

*प्रका०*— अत्र भगवद्गीतोपलक्षितशास्त्रश्रोतुर्यो मोक्षस्ततोधिकस्तदध्येतुस्तदध्येतृमोक्षादधिकस्तदभिधायकस्य मोक्षादधिको देवमोक्ष इति यदुक्तं तद्वचनेन दर्शयति **मुक्तिरिति** ।

*न्या०दी०*— एतदेव प्रमाणान्तरेण द्रढयति **मुक्तिरिति** ॥ **मुख्यव्याख्याकृत इति** । **अन्येषां व्याख्यातृत्वे मुख्यकारणभूता इत्यर्थः** ।

*भा०दी०*— **कारणभूता इति** । सर्वेन्द्रियप्रेरकत्वात् देवानामिति भावः ॥ **तत्रेति** । गीतायां तात्पर्यनिर्णयाख्यग्रन्थे वा प्रतिपादितगुणपूर्णत्वनिर्दोषानन्ददायित्वज्ञानिश्रेष्ठस्वप्रियतमत्वप्रकारमित्यर्थः ॥

**गीता**

## अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥**

*वि०वि०*— नेदमरण्यरूदितम् । किन्तु, त्वदनुग्रहात् ममाज्ञानं विनष्टम् । बुद्धिर्जाता इदानीं सन्देहं त्यक्त्वा युद्धार्थं व्यवस्थितोऽस्मीत्यर्जुन उवाच **नष्ट इति** । यथेच्छसि तत्कुर्वित्याक्षेपपरिहाराय भगवन्तमनुसरति **करिष्ये वचनं तवेति** ॥ ७३ ॥

*सा०सं०*— इति पृष्टस्योत्तरमाहार्जुनः **नष्ट इति** । **नष्टो मोहः** प्रथमाध्यायोक्तो विपरीत-ज्ञानलक्षणो मोहो नष्टः । **त्वत्प्रसादात् मया स्मृतिर्लब्धा** । नारायणद्विट्तदनुबन्धिनिग्रहः परमो धर्मोऽवश्यं कार्य एवेत्यादिस्मृतिर्मम जाताऽस्ति । **गतसन्देहः** युद्धे **स्थितोऽस्मि** । 'यथेच्छसि तथा कुरु' इति भगवत्कृताक्षेपपरिहाराय भगवन्तमनुसरति **करिष्ये वचनं तव** इति ॥ ७३ ॥

*अ०प्र०*— नायं त्वदुपदेशोऽरण्यरोदनादिवत् व्यर्थः । किन्तु ज्ञानोत्पादक इत्याह अर्जुनः **नष्टेति** ।

अन्वयः—हे अच्युत ![१], त्वत्प्रसादात्[२], मम मोहः[३], नष्टः[४], मया[५], स्मृतिः ते वचनात्[६], लब्धा[७], अहं[८], गतसन्देहः सन्[९], स्थितोऽस्मि[१०] तव[११], वचनं[१२], करिष्ये[१३], ॥

हे अच्युत = ईश्वरावतार ![१], त्वत्प्रसादात् = त्वदनुग्रहात्[२], मम मोहः = स्वतन्त्रा-स्वतन्त्रविषयो अज्ञानसंशयविपर्ययोः नष्टः मया[५], परिवारेण ममतादिकार्येण सह प्रनष्टा स्मृतिः श्रीविष्णुः स्वतन्त्रः, अहं जीवस्तदधीन इत्यादि स्मृतिः । यद्वा, श्रुतपूर्वविषयिणी प्रत्यभिज्ञाते वचनात्[६], लब्धा = जाता धारणावतो दृढा बुद्धिर्वा[७], एतद्विषये अहं[८], गतसन्देहः = मम देहादिकं समीचीनमिति येनाऽहङ्कारेण मन्यते सोऽहङ्कारः सन्देहः स गतो यस्य सः गतसन्देहः । एतादृशः सन्[९], स्थितोऽस्मीत्युक्त्वा अहङ्कारत्वादिना स्थितः स्वस्थोऽहं[१०] तव वचनं = युद्धयस्वेत्युक्तं त्वद्वचनं[१२], करिष्ये = तव आज्ञां करिष्याम्येवेति[१३], 'यथेच्छसि तथा कुरु' इत्याक्षेपपरिहाय भगवन्तमनुसरति 'करिष्ये वचनं तव' इति ॥ ७३ ॥

**गीता**

## सञ्जय उवाच—

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

*वि०वि०*— तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादमुक्त्वा प्रवृत्तां कथामनुसरन् संजय उवाच **इत्यहमित्यादिना** । रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानस्मि ॥ ७४ ॥

*सा०सं०*— एकान्ते सञ्जातः कृष्णार्जुनसंवादः कथं त्वया ज्ञात इति धृतराष्ट्रहृद्गतशङ्कां निराह सञ्जय इत्याह **इत्यहमिति** । **इतिपदेन** प्रथमाध्यायाद्युक्तस्य सर्वस्य परामर्शः । महानात्मा

मनो यस्य तस्य **महात्मनः** । **अद्भुतं** प्राक् कुत्रापि न श्रुतं आश्चर्यम् । **रोमहर्षणं** रोमाञ्चकरम् ॥ ॥ ७४ ॥

***अ०प्र०***— एवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादरूपं गीताशास्त्रं कथयित्वा प्रस्तुतां कथां अनुसरति सञ्जय इत्याह **इत्यहं** इत्यादिना ।

अर्जुनेन यदुक्तं तद्भगवतः प्रियमासीत् इत्येवं[१], महात्मनः[२], वासुदेवस्य[३], पार्थस्य च[४], रोमहर्षणं[५], अद्भुतं[६], इमं[७], संवादं[८], अहं[९], अश्रौषम्[१०] ॥

इत्येवं = सप्तदशाध्यायसहित अष्टादशाध्यायैरुक्तं[१], महात्मनः = वासुदेवस्य महात्मा महान् जगदन्तर्यामित्वेन आत्माऽन्तःकरणं यस्य स महात्मा श्रीकृष्णः । तस्य महात्मनः वासुदेवस्य[३], पार्थस्य च = श्रीकृष्णप्रसादेनार्जुनस्य चकारेण स्वामिभृत्यन्यायप्रतीतिमत्त्वात् तयोर्महात्मनो इमं गीताशास्त्रं इत्यर्थः[४], रोमहर्षणं = आश्चर्यत्वाद्देहे रोमाञ्चकरं अत्र रोमहर्षणमित्युपलक्षणम् । वस्तुतः सात्त्विकाद्यष्टभावोद्भवकरमित्यर्थः[५], अद्भुतं = विस्मयकरं[६], इमं = गीताख्यं संवादं[८], अहं = सञ्जयः[९], श्रुतवान् = आश्रौषम् व्यासप्रसादादिति उत्तरेणान्वयः ॥ ७४ ॥

**गीता**

**व्यासप्रसादात् श्रुतवानेतद्गुह्यमहं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

***वि०वि०***— व्यासप्रसादादित्यनेन आत्मनस्तच्छ्रवणे सम्भावना दर्शिता । व्यासेन हि दिव्यचक्षुः श्रोत्रादि तस्मै दत्तम् । योगसामर्थ्यं स्वयमेव कथयतः कृष्णात्साक्षादव्यवधानेनैतद्गुह्यं श्रुतवान् ॥ ७५ ॥

***सा०सं०***— व्यासेन हि सञ्जयस्य कुरुक्षेत्रे युद्धसमाप्तिपर्यन्तं तत्र प्रवृत्तस्य सर्वस्यापि दर्शनश्रवणे तव स्यातामिति दिव्यदृष्टिदानात् **व्यासप्रसादादित्युक्तम्** । **योगं** पुमर्थोपायम् । **योगेश्वरात्** सर्वोपायानामीश्वरात् । **स्वयमेव कथयतः कृष्णात्** । **साक्षात्** अन्याव्यवधानेन । **श्रुतवान्** इत्यन्वयः ॥ ७५ ॥

***अ०प्र०***— आत्मनस्तच्छ्रवणे सम्भावनामाह **व्यासप्रसादादिति** ।

अथान्वयः— हे धृतराष्ट्र ! अहं = सञ्जयः[१], व्यासप्रसादात्[२], योगेश्वरात्[३], साक्षात्[४], कृष्णात्[५], स्वयं[६], कथयतः[७], एतत्[८], परं[९], गुह्यं[१०] योगं श्रुतवान्[१२] ।

अहं = सञ्जयः मया[१], व्यासप्रसादात् = भगवता व्यासेन दिव्यं चक्षुः श्रोत्रादि मह्यं यद्दत्तं एवं चक्षुराद्यनेकप्रसादात् मया[२], योगीश्वरात् = योगिनां ईश्वरः तस्मात् योगानामीश्वरः नियन्ता स तथा तस्मात्[३], साक्षात्[४], कृष्णात्[५], स्वयं[६], कथयतः[७], एतत् = गीताशास्त्रं[८], परं उत्कृष्टं[९], गुह्यं = अतिगोप्यं यदुपनिषद्भिर्न ज्ञायते तद्गोप्यं[१०] योगं = योगो नाम जीवो स्वतन्त्रः परमात्माधीनः अकिञ्चिज्ज्ञः श्रीकृष्णः सर्वोत्पादकः सर्वतन्त्रस्वतन्त्रः सर्वज्ञ इत्यादि ज्ञानरूपो योगः तं योगं योगरूपगीताशास्त्रमित्यर्थः । यद्वा, परं योगं सामर्थ्यं ज्ञानकर्मयोगं वा[११], श्रुतवान् दृष्टवांश्चास्मि ॥ ॥ ७५ ॥

**गीता**

**राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

***वि०वि०***— हे राजन् ! कृष्णार्जुनसंवादं स्मरतो मम हर्षो जायते ॥ ७६ ॥

***सा०सं०***— तच्छ्रवणेन स्वस्य जातं तात्कालिकं फलमाह **राजन्निति** । हे **राजन्** इति धृतराष्ट्रस्य सम्बोधनम् । **पुण्यं** पारत्रिकसुखहेतुत्वदृष्टकरम् ॥ ७६ ॥

***अ०प्र०***— किञ्च **राजन्निति** ।

अथान्वयः— हे राजन् ![१], पुण्यं[२], अत एतत् अद्भुतं[३], केशवार्जुनयोः[४], इमं[५], संवादं[६], संस्मृत्य[७], संस्मृत्य[८], मुहुर्मुहुः[१०] हृष्यामि च[११] ॥

हे राजन् ![१], पुण्यं = पापरूपदेहस्मृतिविनाशकरं पुण्यकरं[२], अत एव अद्भुतं = आनन्दावहं[३], केशवार्जुनयोः = श्रीकृष्णार्जुनयोः[४], इमं = गीताख्यं[५], संवादं[६], संस्मृत्य संस्मृत्य = अश्चर्यसंवादं स्मारं स्मारं पुनः पुनश्चिन्तयित्वा[८], मुहुर्मुहुः = वारं वारं[१०] हृष्यामि = रोमाञ्चितो भवामि क्रिया-समभिहारेण हर्षं प्राप्नोमीति वा ॥ ७६ ॥

**गीता**

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥**

*वि०वि०*— विशेषतो विश्वरूपस्मरणेन हर्षो विस्मयश्च जायते ॥ ७७ ॥

*सा०सं०*— **तच्च** रूपम् । विश्वरूपम् ॥ ७७ ॥

*अ०प्र०*— तत्रापि श्रुतार्थस्य स्मरणादपि दृष्टार्थस्मरणात् महासन्तोषो भवतीत्याह **तच्चेति** ।

हे महाराजन् ![१], हरेः[२], तत्[३], अत्यद्भुतं[४], रूपं मया दृष्टं इदानीं तच्च रूपं[५], संस्मृत्य संस्मृत्य[६], विस्मयो[७], मे जायते[८], पुनः[१०] हृष्यामि च[११] ॥

हे महाराजन् ![१], हरेः = हरेरित्याश्चर्यं यद्वा हरेः भगवतः[२], अत्यद्भुतं = स्वातन्त्र्यादियुक्तं[३], तत् = विश्वव्याप्तं श्रुत्यादिसिद्धं[४], रूपं मया दृष्टं इदानीं तच्च रूपं[५], संस्मृत्य संस्मृत्य = स्मारं स्मारं[६], मे = मम विस्मयो जायते । यद्वा, स्वरूपदर्शनाज्जातो विस्मयः आश्चर्यं महान् अभूत् तस्मात्[९], पुनः पुनः = वारंवारं पुनःपुनरिति द्विरुक्तयोः एकं उक्तं द्वितीयं पुनःपुनरपि[१०] हृष्यामि च = पुनरपि स्मृत्वा हृष्यामीति[११], यत एवं ईश्वरः यदिष्टः तत्प्रेरितः तत्सहितश्चार्जुनयोः सह त्वत्पुत्राः युद्धार्थमवस्थिताः अतो मे महान् विस्मय इति ॥ ७७ ॥

**गीता**

## यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
## तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

### *इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नाम अष्टादशोऽध्यायः ॥*

*वि०वि०*— किञ्च, यत्र येषां पक्षे योगस्याचिन्त्यशक्तेरीश्वरः कृष्णो वर्तते, यत्र पार्थो गाण्डीवधन्वा तिष्ठति, तत्र श्रीः राजलक्ष्मीः विजयो भूतिः उत्तरोत्तरवृद्धिः, नीतिर्न्यायः, ध्रुवा निश्चलेति सर्वत्र सम्बन्धः । इति मे मतिः । अतस्त्वं सतनयः कृष्णं शरणमुपेत्यैव पाण्डवान् प्रसाद्य तेभ्यः सर्वस्वं दत्वा स्वपुत्रान् पालय इति भावः ॥ ७८ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां अष्टादशोऽध्यायः ॥*

***वा०ल०***— 'यत्र योगेश्वरः कृष्णः' इत्यत्र, श्रीः धनकनकादिसम्पत् । विभूतिः 'विभूतिर्भूतिरैश्वर्यम्' इत्यभिधानात् भूतिः राज्यैश्वर्यम् ॥ ७८ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे अष्टादशोऽध्यायः ॥*

***सा०सं०***— युद्धकरणनिश्चयं श्रुतवतो राज्ञः कुत्र जयादिरिति हृद्गतशङ्कां निराह सञ्जयः **यत्रेति** । **यत्र** सेनायां **योगेश्वरः** सर्वोपायवतां स्वामी । **तत्र श्रीः** राज्यलक्ष्मीः । **भूतिः** सम्पत् । **नीतिर्न्यायः** । **ध्रुवा** निश्चला । इति **मम मतिः** निश्चय इत्यर्थः ॥ ७८ ॥

अशेषगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥

इति श्रीकृष्णगीताया भाष्याद्युक्तार्थसङ्ग्रहः ।
राघवेन्द्रेण यतिना कृतः सज्जनसंविदे ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे अष्टादशोऽध्यायः ॥ १८ ॥*

***अ०प्र०***— अतस्त्वं स्वपुत्राणां राज्यं भविष्यतीति शङ्कां परित्यजेत्याशयेनाह **यत्रेति** ।

अथान्वयः— हे धृतराष्ट्र ! यत्र[१], योगेश्वरः[२], कृष्णः[३], यत्र[४], धनुर्धरः[५], पार्थः[६], तत्रैव[७], श्रीः[८], तत्रैव विजयः[९], तत्रैव विभूतिः[१०] तत्रैव नीतिः[११], इति ध्रुवा[१२], मे = मम[१३], मतिः[१४] ॥

हे धृतराष्ट्र ! यत्र = येषां पक्षे[१], योगेश्वरः = योगानां ईश्वरः योगिनां ईश्वर इत्यपि पाठः[१२], कृष्णः = योगानां सकलपुरुषार्थानां प्रदातृत्वादीश्वरः श्रीकृष्णः[३], यत्र = येषां सैन्ये[४], धनुर्धरः = गाण्डीवधनुर्धारी[५], पार्थः = अर्जुनः[६], तत्रैव श्रीः = राज्यलक्ष्मीः[८], तत्रैव विजयः = विशेषेण जयस्तत्रैव[९], तत्रैव विभूतिः = उत्तरोत्तराभिवृद्धिश्च तत्रैव[१०] तत्रैव नीतिः = न्यायोऽपि तत्रैव[११], इति ध्रुवा निश्चितेति सर्वत्र सम्बध्यते । यद्वा, ध्रुवा = सत्यं प्रतिज्ञां करोमीति भावः[१२], इति मम[१३], मतिः = निश्चयः[१४], फलितमाह हे राजन् ! यतः एवं अतः इदानीमपि तावत् त्वं सपुत्रस्तं श्रीकृष्णं शरणमुपेत्य पाण्डवान् प्रसाद्य स्वपुत्राणां प्राणरक्षणादिकं कुर्विति धृतराष्ट्रं प्रति सञ्जय आह इत्याह भगवान् व्यासः इति ॥ ७८ ॥

यद्वा, मतान्तरम्— भगवद्भक्तियुक्तस्य तत्प्रसादात् श्रीविष्णुसर्वोत्तमज्ञानम् । तथा हि— 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।', 'शक्य एवंविधो द्रष्टुं', 'अहमेवंविधोऽर्जुन' इत्यादौ

भगवद्भक्तेर्मोक्षं प्रति साधकतमत्यश्रवणात्तदेकाग्रभक्तिरेव तत्प्रसादाद्विष्णुः सर्वोत्तमज्ञानावान्तर-व्यापारमात्रयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते । ज्ञानस्य भक्त्याऽवान्तरव्यापारत्वमेवमुक्तम् । 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।', 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यादिवचनात् न ज्ञानमेव भक्तिरिति युक्तम् । 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥' इत्यादौ भेदेन निर्देशात्[1], न चैवं सति 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिविरोधः शङ्कनीयः । भक्तेरवान्तर-व्यापारत्वात् ज्ञानस्य न हि काष्ठैव पचति इत्युक्तेः । ज्वाला नाम साधनत्वमुक्तं भवति । 'यस्य देवे पराभक्तिर्यथादेवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः', देहान्ते देवः परंब्रह्म तारकं व्याचष्टे । 'यमेवैष वृणुते तेन लभ्य' इत्यादि श्रुतिपुराणवचनान्येव सन्ति । समञ्जसानि भवन्ति तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धम् ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां अष्टादशोऽध्यायः ॥*

सकलगुणसमुद्रः शङ्खचक्रादिमुद्रः
सकलविबुधगेयो नित्यविध्वस्तहेयः ।
तमिममवनिजातो रक्षसां यो निहन्ता
नृहरिरमणं मे नौमि व्यासं च कृष्णम् ॥ १ ॥

यतो विश्वस्य जन्मादि पूर्णशक्तेर्महात्मनः ।
सम्मतं मत्कृतं हन्तुं कृष्णे भक्तिप्रियो ह्यति ॥ २ ॥

गीताया भाष्यतात्पर्ये तट्टीकाविवृतीरपि ।
अनन्तकृष्णप्रभृति गुरुभिश्च कृपाबलात् ॥ ३ ॥

श्रुत्वा मत्वा च वरदृक् गीतासाराख्यसङ्ग्रहम् ।
यस्तस्मै तेन कृष्णो नृहर्याख्याश्च मध्वगः ॥ ४ ॥

नृसिंहरूपः प्रीतोऽस्तु तत्तज्ज्ञानसुभक्तितः ।
भ्रान्तेश्चेतनधर्मत्वात्सज्ज्ञानादेरथापि वा ॥ ५ ॥

अत्र वेद्यं भवेत्किञ्चित् शोधयन्तु विचक्षणाः ।
यथा पिता बालवाक्यं अबद्धमपि च क्षमे ।
तथा सन्तोऽपि तद्वाक्यं क्षान्त्वा सन्तोषमाप्नुयुः ॥ ६ ॥

तेनैव दत्तया भक्त्या तद्गीताविवृतिः कृता ।
स एव परमानन्दस्तं मां प्रीणातु माधवः ॥

*ॐ तत्सदिति महाभारते भीष्मपर्वणि भगवद्गीतासु*
*गीतासाराख्यसङ्ग्रहाख्ये व्याख्याने श्रीमध्वमतानुसरिणी गीताविवरणे अन्वयप्रकाशिकायां*
*राघवेन्द्रयतिभिः विरचितायां सर्वशास्त्रार्थसङ्क्षेपो गीताविवृतिः ॥*

***भा०र०—*** *गीताक्षरार्थस्तु—*

गीताशास्त्रेऽनधिकारिनिरासेन अधिकारी लक्ष्यते **इदमिति** ॥ **इदं** गीताशास्त्रार्थवत्त्वं **अतपस्काय** न विद्यते तपः = ब्रह्मचर्यादिः यस्य सोऽतपस्कः, तस्मै त्वया त्वदुपलक्षितसज्जनेन **न वाच्यम्** । **अशुश्रूषवे** परिचर्यामकुर्वते पुनश्च न वाच्यं इति अतपस्कादपि अशुश्रूषोः दोषाधिक्यं दर्शयितुं चशब्दः । एवं अशुश्रूषोरपि अतिशयेन अभक्ताय न वाच्यं इत्यर्थद्योतनाय 'कदाचन' इत्युक्तम् । अभक्तादपि अतिशयेन न वाच्यं **यो मामभ्यसूयति** तस्मै । 'समुच्चये तथाऽधिक्ये न्यूनत्वे चः प्रयुज्यते' इति वचनात् चकारस्य अतिशयाख्याधिक्यार्थत्वम् । अनेन तपःप्रभृतिधर्मयुक्तोऽत्राधिकारीति विभावितं भवति ॥ ६७ ॥

गीताव्याख्यानमध्ययनं श्रवणं च फलकथनेन स्तूयते **य इत्यादिना** । **यः** साधकः **परमं गुह्यं** अतिगोप्यं **इमं** आवयोः संवादरूपं ग्रन्थं **मद्भक्तेष्वभिधास्यति** व्याख्यास्यति स **मयि परां भक्तिं** कृत्वा **मामेवैष्यति** इत्यत्र **असंशयः** संशयाभावः । '....असन्देहः प्रयोजनम्' इत्यत्रेव 'असंशयः' इति प्रयोगः । 'यः' इत्यस्य 'असंशयः' इत्येतद्विशेषणमिति **आहुः** ॥ ६८ ॥

किञ्च **तस्मात्** गीताशास्त्रव्याख्यातुः **अन्यो मनुष्येषु मे** मम **प्रियकृत्तमः** अतिशयेन प्रियं कुर्वन् अस्ति आगामिनि कालेऽपि । तस्माद् व्याख्यातुरन्यः प्रियतरो **न भविता** न भविष्यति । 'नासीत्' इत्यपि द्रष्टव्यमिति *स्वामिनः* । अत्र 'मनुष्येषु' इत्युक्त्या मनुष्याणां व्याख्यातृत्वे कारणभूतानां देवानां इतोऽपि भगवत्प्रियत्वमस्तीति ज्ञायते ॥ ६९ ॥

पठतः फलमुच्यते **अध्येष्यत इति** । **य आवयोरिमं धर्म्यं** धारकत्वाद्धर्मो भगवान्, तद्विषयो धर्म्यः तम्, धर्मादनपेतं वा **संवादं** प्रश्नोत्तररूपं ग्रन्थं **अध्येष्यते** पठिष्यति, तेन पुरुषेण तेन सर्वयज्ञेषु श्रेष्ठतया प्रसिद्धेन **ज्ञानयज्ञेन अहमिष्टः** पूजितः **स्यां** इति **मे मतिः** निश्चयः ॥ ७० ॥

श्रोतुः फलमुच्यते **श्रद्धावानिति** । **योऽपि नरः श्रद्धावान्** अत्रोक्तमस्ति, अनेन मम प्रयोजनमस्तीति मतिः श्रद्धा, तद्वान् **अनसूयः** असूयादिश्रोतृदोषहीनः **च** इमं संवादं **शृणुयात्**

**सोऽपि मुक्तः** पापेभ्यः **शुभान्** विमलान् समस्तान् **पुण्यकर्मणां** अग्निहोत्रादिकर्मकारिणां **लोकान् प्राप्नुयात्** प्रतिपद्यते ॥ ७१ ॥

एतावन्तं कालं मदुपदेशो न हि ननु भवति ऽवत्यरण्यरुदितायितमिति भगवता अर्जुनः सम्बोध्यते **कच्चिदिति** । कामप्रवेदने 'कच्चित्' इत्यव्ययम् । हे **पार्थ ! एतत्** मयोक्तं **त्वयैकाग्रेण चेतसा** अनन्यविषयेण चित्तेन, सचित्ताभिनिवेशमिति यावत् **श्रुतं कच्चित्** श्रवणेनावधारितं ननु ? इति इष्टपरिप्रश्नः । **अज्ञानसम्मोहः** अज्ञाननिमित्तः सम्मोहः **प्रणष्टः कच्चित्** । कियदर्थोऽयं शास्त्र-श्रवणाय आयातस्तव, मम चोपदेष्टृत्वायासः प्रवृत्तः ॥ ७२ ॥

तत्रोत्तरम् **अर्जुन इति । अर्जुन उवाच** । नेदमरण्यरुदितम्, किन्तु **त्वत्प्रसादात् मोहः** बान्धवस्नेहः, 'न योत्स्ये' इति मिथ्याऽध्यवसायो वा **नष्टः, स्मृतिः** 'नारायणद्विट् - तदनुबन्धि-निग्रहः परमो धर्मोऽवश्यं कर्तव्य एव' इत्येवंरूपाऽनुस्मृतिः **लब्धा** । अथेदानीं **गतसन्देहः** त्वच्छासनेन **स्थितो** युद्धे सन्नद्धः **अस्मि** । 'यथेच्छसि तथा कुरु' इत्याक्षेपपरिहाराय 'करिष्ये वचनं तव' इत्यनुसरन्ति भगवन्तं परिसमाप्तशास्त्रार्थः ॥ ७३ ॥

अथेदानीं कथासम्बन्धप्रदर्शनार्थमुच्यते **सञ्जय उवाचेति । इति** पूर्वोक्तप्रकारेण **महात्मनो** महान् = उत्तमश्चासौ आत्मा, तस्य **वासुदेवस्य** महान् आत्मा = सुशिक्षितं मनो यस्य तस्य महात्मनः **पार्थस्य च इमं** यथोक्तं **संवादमश्रोषं** श्रुतवानस्मि । कीदृशम् ? **अद्भुतं** अत्यन्त-विस्मयकरं अन्तर्बहिः **रोमहर्षणं** रोमाञ्चकरम् ॥ ७४ ॥

गीताशास्त्रस्य युद्धरङ्गे रहसि समुपदिष्टस्य श्रवणं तव कथं स्यात् ? इत्याशङ्कापरिहारायोच्यते **व्यासप्रसादादिति** । भगवता व्यासेन मह्यं कुरुक्षेत्रे यावद्युद्धसमाप्ति तत्र तत्र प्रवृत्तस्य सर्वस्यापि व्यापारस्य दर्शनश्रवणे स्यातामिति हि दिव्यं चक्षुर्दत्तम् । अतो **व्यासप्रसादात् परं गुह्यं एतत् श्रुतवान्** । कस्माच्च ? इत्यपेक्षायामुच्यते **योगं योगेश्वरादिति । योगं** ज्ञानोपायः, तत्प्रतिपादक-त्वाच्छास्त्रमपि योगः, तं योगानामीश्वराद् **योगेश्वरात् साक्षाद्** अव्यवधानेन **स्वयं** आत्मना, नापरचोदनाय । 'अर्जुनं प्रति कथयतः कृष्णात् श्रुतवान्' इत्यनेन (१) रहसि वृत्तं तव करणपथं कथं गतम् ? (२) किं तच्छ्रुतवान् ? (३) कस्माच्च ? इति कृतशङ्कात्रयं परिहृतं भवति ॥ ॥ ७५ ॥

किञ्च हे **राजन् !** धृतराष्ट्र ! **केशवार्जुनयोः पुण्यं** श्रवणमात्रेण पापहरं **इमं** गीताशास्त्ररूपं **संवादं संस्मृत्य संस्मृत्य** सम्यक् श्रुत्वा **मुहुर्मुहुश्च हृष्यामि** हर्षं प्राप्नोमि ॥ ७६ ॥

किञ्च श्रुतार्थस्मरणजनितहर्षादपि दृष्टार्थस्मरणजन्यो हर्षो ह्यतिशयितः, तं चानुभवामीत्युच्यते **तच्चेति** । हरेः श्रीकृष्णस्य **अत्यद्भुतं** अत्याश्चर्यकरं **तद्** विश्वरूपसन्दर्शनकाले स्वयोग्यताऽनुसारेण दृष्टं **रूपं च संस्मृत्य** हे **राजन्** ! धृतराष्ट्र ! **मे** मम **महान् विस्मयः** अनुभूयते । ततो मुहुर्मुहुः **हृष्यामि** ॥ ७७ ॥

एवं सर्वार्थान् सम्यगेवावजातः तव समुपनतसेनाद्वये जयाजयविवेकः कथं भासते ? इत्यत उच्यते **यत्रेति** । **यत्र** यस्मिन् पक्षे **योगेश्वरः** सर्वोपायानामीश्वरः = स्वामी कृष्णो वर्तते **यत्र** च **धनुर्धरो** गाण्डीवधन्वा **पार्थः** अर्जुनः **तत्र** एव **श्रीः विजयो भूतिः ध्रुवा नीतिः** चेति **मम मतिः** अतिनिश्चय इति सञ्जयवचनम् । तत्र ध्रुवा = निश्चला नीतिः = न्यायः । ततो ध्रुवा भूतिः = उत्तरोत्तराभिवृद्धैश्वर्यम् । ततः सर्वतो विजयः । ततश्च श्रीः = महाराज्यलक्ष्मीः इति ॥ ७८ ॥

श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
कृष्णाय कृष्णारमणप्रियायास्तु नमो नमः ॥

नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमो नारसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

भूरिगमीषागमचितकरणान् श्रीजयतीर्थयतिकृतशरणान् ।
सन्ततमीडे सुचरितचरणान् वेङ्कटनारायणगुरुचरणान् ॥

*॥ श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां*
*प्रमेयदीपिकाव्याख्यायां भावरत्नकोषसमाख्यायां*
*अष्टादशोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**गीतातात्पर्यनिर्णयः**

**"यथेच्छसि तथा कुरु" इत्याक्षेपपरिहाराय "करिष्ये वचनं तव" इत्यनुसरति भगवन्तम् ॥ ७३-७८ ॥**

***न्या०दी०***— नन्वर्जुनेन स्वोक्तमद्यापि नाङ्गीकृतम् । तत्कथं भगवता तद्बोधनं समाप्यत इत्याशङ्क्यां "यथेच्छसि तथा कुरु" इति यथेष्टाचरणमनुज्ञायत इत्यन्यथाप्रतीतिं पराकुर्वन् परिहरति **यथेति** ॥ भगवदुक्तानुसरणमर्जुनेन कृतमित्यत्रैवोक्तत्वात् ततः प्रागेव तज्ज्ञस्य भगवतः तद्बोधनोपरमो युक्त इति भावः ॥ ७३-७८ ॥

**गीतातात्पर्यनिर्णयः**

**नमस्ते वासुदेवाय प्रेयसां मे प्रियोत्तम ।**
**समस्तगुणसम्पूर्णनिर्दोषानन्ददायिने ॥**

***प्रका०***— यत्प्रणम्य यत्प्रसादाद्गीतातात्पर्यनिर्णयाख्यं ग्रन्थं कृतवान् तमनु पुनः प्रणमति **नमस्त** इति ।

***न्या०दी०***— अथ समापितग्रन्थोऽयं भगवान् आचार्यः स्वप्रतिपादितप्रकारमेव वासुदेवं नमति **नम इति** ॥

**गीतातात्पर्यनिर्णयः**

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥**

***प्रका०***— समस्तगुणसम्पूर्णं सर्वदोषविवर्जितं नारायणसिद्ध्यर्थं गीतातात्पर्यनिर्णयाख्यं स्वकृतं ग्रन्थं स्वात्मानमाख्याय केशवे समर्पयति **यस्येति** ।

***न्या०दी०***— स्वस्वरूपपरिज्ञानस्यापि कैवल्याद्यखिलपुरुषार्थहेतुत्वात् स्वकृतां ग्रन्थनिर्माणरूपपरिचर्यां केशवे समर्पयन् तदाह **यस्येति** ॥

***भा०दी०***— **तदाहेति** । वायोस्तृतीयावताररूपं स्वस्वरूपमाहेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

निःशेषदोषरहित कल्याणाखिलसद्गुण ।
भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम् ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये अष्टादशोऽध्यायः ॥*

*प्रका०—* लक्ष्मीविरिञ्चिशर्वेन्द्रप्रमुखामरवन्दितम् ।
आनन्दतीर्थाख्ययतिवरवर्णितमच्युतम् ॥ ६ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां अष्टादशोऽध्यायः ॥*

॥ श्रीमध्वान्तर्गतकृष्णार्पणमस्तु ॥

***न्या०दी०—*** **अथ तमेव हरिमादरविशेषात् पुनः स्तौति निःशेषेति ॥ भूतिः महालक्ष्मीः ।**

**श्रीमदानन्दतीर्थार्यहृदयामलमन्दिरः ।**
**इन्दिरारमणः प्रीतिं यातु दीनदयापरः ॥**

***इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां अष्टादशोऽध्यायः ॥***

***भा०दी०—*** **तमेवेति** । स्वग्रन्थे प्रतिपादितप्रकारमेव हरिमित्यर्थः ॥

अशेषदोषदूराय गुणपूर्णाय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते अष्टादशोऽध्यायः ॥*

**॥ समाप्तोऽयं ग्रन्थः ॥**

★ ★ ★

